# BENARES SANSKRIT SERIES;

A

## COLLECTION OF SANSKRIT WORKS:

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, PH. D.

*Nos. 5, 7, 16, 23, 27, 29, 32, 34, 36, 39, 60, 62, & 72.*

---

# तन्त्रवार्तिकम्

नाम

**मीमांसासूत्रीयशाबरभाष्यटीका, भट्टश्रीकुमारिलस्वामि-**

**विरचिता ।**

# (THE TANTRAVÂRTIKA,)

## A GLOSS ON ŜABARA SVÂMÎ'S COMMENTARY ON THE MÎMÂMSÂ SÛTRAS,

## (BY BHATTA KUMÂRILA.)

EDITED BY

MAHÂMAHOPÂDHYÂYA PANDIT GANGÂDHARA ŜÂSTRÎ, C. I. E.

PROFESSOR OF LITERATURE, SANSKRIT COLLEGE, BENARES.


BENARES.

***Published by the Proprietors Messrs. Braj B. Das & Co.***

AND SOLD BY H. D. GUPTA,

*Secretary, Chowkhamba Sanskrit Book Depot.*

---

**Printed at the Benares Printing Press & the Vidya vilas Press,**

BENARES.

1903.

# तन्त्रवार्त्तिकस्योपसंहारः ।



ईश्वरकृपया समाप्तं किल मुद्रणमेतस्य चिरेण मुद्रयितुमारब्ध-
चरस्य मीमांसाद्वादशलक्षण्याः प्रथमाध्यायद्वितीयपादादितृतीया-
ध्यायान्तशाबरभाष्यीयव्याख्याऽऽत्मकस्य तन्त्रवार्त्तिकस्याद्य ।

अयं खलु निबन्धः पुरा श्रीयुतथिबोसाहेबमहाशयाज्ञया धर्मा-
धिकारिश्रीढुण्ढिराजपन्तेन शोधनाय गृहीतः शोधितश्च द्वि-
त्रपुटकान्तम् । अथादृष्टपारवश्याद्दिवमुपगते शोधके श्रीमन्निरुक्तम-
हाशयैरेवामेतनग्रन्थशोधनायाज्ञप्तेन पाठनाद्यावश्यकभूरिकार्यसं-
पादनानधिगतापेक्षितावसरप्रसरेण मया ऽङ्गीकृते ऽस्मिन् निबन्धे त-
थाकरणाय, दशमपुटकान्तं विहितसंशोधने च, प्रकाशकालस्याद्यन्त-
रायकलुषिततया सुतरां तादवस्थ्यं भजमाने, व्यतियन्ति स्म बहूनि
वर्षाणि ।

एवमेतादृशग्रन्थरत्नापरिपूर्णताखेदेनोद्योजितेन "चौखंभासं-
स्कृतसीरीज़" संपादकेन श्रीयुतबाबूहरिदासगुप्तेन समारब्धवि-
च्छिन्नशोधनस्यास्य समापनाय भृशं विज्ञापितो ऽहमवशिष्टमप्येतदी-
यांशं विषयसूचीशुद्धिपत्रनिवेशनपूर्वकं समशूशुधम् ।

इत्थं परिनिष्ठिते ऽस्मिन् कार्ये, मीमांसाभाष्यचतुर्थाद्यध्यायनव-
कस्य संक्षिप्ते टुप्टीकाऽऽख्ये व्याख्याने ऽपि मुद्रिते, नूनमेतद्दर्शनाक-
रीयसमस्तव्याख्यानावलोकनोत्थप्रमोदमाप्नुयुः पूर्वतन्त्ररहस्यमा-
र्मिका इत्युत्प्रेक्ष्यैषो ऽपि निबन्धः समुपक्रान्तो मुद्रयित्वा प्रकाशयितु-
म् । परन्तु मुद्रणाश्रयीभूतस्य पुस्तकस्यैकस्यैव तत्राप्यशुद्धस्या ऽद्या-
वध्युपलब्धतया सायासं निर्वहणीये ऽत्र कार्ये सौकर्यसंपादनाय
यतेरंश्चेत्के चनोदाराशया मुद्र्यमाणैतद्ग्रन्थपुस्तकप्रेषणेन, वक्ष्यामस्तर्हि
भृशमुपकारमेषां सौजन्यशेवधीनामिति विज्ञापयति ।

सं० १९६० आषाढवदि ७ बुधे । — महामहोपाध्यायो गङ्गाधरशास्त्री

# तन्त्रवार्तिकधृतसूत्राणां वर्णक्रमानुसारि

## सूचीपत्रम्।

---

### अ.

## द.



## न.

## फ.



## ब.



## भ.



## म.



## य.

## ह.



इति।



# तन्त्रवार्तिकधृतश्लोकानां वर्णक्रमानुसारि

# सूचीपत्रम्।

---

## अ.

## आ.

ऐ.



क.

## च.



## ज.

## प.

## श.

## ह.

इति ।



श्रीगणेशाय नमः ।

तन्त्रवार्त्तिकम् ।

# आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥१॥

सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वशः ।
विध्यर्थवादमन्त्राणामुपयोगो ऽधुनोच्यते ॥

सामान्यतः प्रामाण्ये सिद्धे ऽधुना विभज्य विनियोगः प्रतिपाद्यते । अवधृतप्रामाण्यस्य वा वेदस्येदानीं समस्तस्य विध्यर्थवादमन्त्रनामधेयात्मकस्य यथाविभागं धर्मं प्रत्युपयोगः प्रतिपाद्यते। तत्र पूर्वपक्षवाद्यभिप्रायः। चोदनालक्षणो ऽर्थो धर्म इत्युपक्रमात्तस्य ज्ञानमुपदेश इति परामर्शात्तत्कृतानां क्रियार्थेन समाम्नाय इत्युपसंहाराद्विधिप्रतिषेधयोरेव प्रामाण्यं प्रतिपादितं न च तद्व्यतिरिक्तशब्दगम्यत्वं धर्माधर्मयोः नाप्यनधिगतार्थबोधनं मुक्त्वा ऽन्यः शब्दस्य व्यापारो ऽस्तीत्युक्तमेव। अतश्च यावन्त्यत्र साध्यसाधनेतिकर्त्तव्यतावाचित्वेन विधिप्रतिषेधान्तर्गतानि (१) तेषां भवतु प्रामाण्यं यानि त्वतिरिक्तार्थान्यर्थवादमन्त्रनामधेयानुपातीनि सोरोदीदिषेत्वोर्जेत्वोद्भिदेत्येवमादीनि तानि सत्यप्यपौरुषेयत्वे ऽर्थाभिधानसामर्थ्ये च धर्माधर्मयोरप्रमाणमतदर्थत्वात् । यथाश्रुतगृहीतानां तावत्प्रतीत्यनुपलब्धेः प्रसिद्धमेवातदर्थत्वम् । अथ कया चिच्छब्दवृत्त्या तादर्थ्यं

(१) त्वेन पदानि विधिप्र० इति पाठः 'क' पुस्तके ।

कल्प्येत । एवमपि व्यवस्थाहेत्वभावान्न धर्माधर्मयोरवधारणं स्यात् । यदेव हि वाक्यं गृहीतं तदेवाध्याहारविपरिणामादिभिर्यथेष्टं कल्पयितुं शक्यते । तद्यथा सोऽरोदीदित्येवमेव तावद्वाक्यं विशिष्टपुरुषाचरितोपन्यासद्वारा रोदनकर्तव्यतापरम् । अथ वा महतामप्येवंविधाः प्रमादाः संभवन्ति, तस्मात्प्रयत्नेन वर्जयितव्यमिति । अतो विधिप्रतिषेधयोरस्फुटत्वाद्धर्माधर्मत्वेन निर्णये शक्त्यभावः । शास्त्रदृष्टविरोधादयश्च स्थिता एव । यत्तु भूतान्वाख्यानमात्रं यथावस्थितैः प्रतिपाद्यते तत्र यद्यपि सत्यत्वमस्त्येव तथापि न तेन प्रयोजनमित्यानर्थक्यम् । अपि च । धूम एवाग्नेर्दिवे (१) त्यादीनां स्वार्थे ऽप्यप्रामाण्यं वक्ष्यते । विध्येकवाक्यत्ववशेनैव तेषां रूपभङ्गः क्रियते न च तस्यापि किं चित्प्रमाणमस्ति । भिन्नैरपि हि तैः किं चित्प्रतिपादयितुं शक्यमेव । न च तत्प्रतिपादयतां निष्प्रयोजनतेत्यविज्ञायमानप्रयोजनवदर्थान्तरकल्पना शक्या । न हि लोष्टं पश्यतस्तद्दर्शनं निष्प्रयोजनमिति सुवर्णदर्शनता कल्प्यते (२) सर्वाण्येव च प्रमाणान्युपयुज्यमानमनुपयुज्यमानं वार्थमात्मगोचरतापन्नं गमयन्ति । तेनैव चैषां हानोपादानोपेक्षाबुद्धयः फलत्वेन वर्ण्यन्ते । अन्यथा ह्युपादानमेवैकं फलं स्यात् । अपि च । प्रमाणोत्पत्त्युत्तरकालं प्रयोजनवत्त्वमप्रयोजनवत्त्वं वा विज्ञायते न तु तद्वशेन प्रमाणोद्भूतिः । तस्माद्यो यद्रूपो ऽर्थः प्रतीयते स तथैव प्रयोजनवत्त्वमप्रयोजनवत्त्वं वा प्रतिपद्यते । न हि प्रयोजनवदेव प्रमातव्यमिति कश्चिन्नियमहेतुरस्ति ।

(१) एवाग्नेरिति पाठः 'ख' पुस्तके ।

(२) कल्प्येत इति पाठः 'ख' पुस्तके ।

यत्रापि तावत्स्वाधीनः प्रमाणविनियोगस्तत्राप्येतद्दुर्लभं किमु-ताबुद्धिपूर्वनित्यावस्थितवेदोत्थापितज्ञानग्राह्ये। न च वेदस्य प्रयोजनवदर्थाभिधानशक्तिः प्रथममवधृता। अयमेव हि परी-क्षाकालो वर्तते कीदृशं पुनर्ब्रवीतीति (१) तच्च विदित्वा यथानु-रूपमनुष्ठातुं क्षमा वयं न तु वेदं पर्यनुयोक्तुं किमयं निष्प्रयो-जनमभिदधाति तदा अभिदधत्किमर्थं प्रयत्नेन धार्यतइति। सर्वपुरुषाणां केवलं प्रतिपत्तृत्वेन पारतन्त्र्याद्वेदग्रहणोत्तरकालं च परीक्षावसरात्। न ह्यनधीतवेद एव आदौ परीक्षितुं क्षमः। पश्चात् परीक्षमाणस्य तु नाबुद्धिपूर्वनिर्वृत्तमध्ययनं प्रकरण-गतन्यायेन निश्चयहेतुर्भवति। तस्माद्यथैवाग्निहोत्रादिवा-क्यानां गम्यमानप्रयोजनवत्त्वादानर्थक्यं निष्प्रमाणकमिति ना-श्रीयते तथैवैषां प्रयोजनवत्त्वं नाश्रयितव्यम्। न हि यथाव-गताभ्युपगमादन्यत् किं चित्स्वाधीयः परीक्षकाणाम्। यो ऽपि च क्लेशेन स्तुतिनिन्दात्मको ऽर्थः कल्प्येत स भावनयांशत्रया-नन्तःपातित्वान्न (२) गृह्यते। तया चागृहीतं न विधिप्रतिषे-धावाश्रयतः। तदनाश्रितं च दूरे पुरुषार्थाद्भवतीति। अपि च। एवंविधेषु स्तुतिनिन्दाकल्पनायां इतरेतराश्रयप्रसङ्गः। स्तु-तिनिन्दात्मकत्वेन (३) ह्येकवाक्यता तया चानुन्मीलितस्तुति-निन्दोत्प्रेक्षाश्रयणम्। न चान्यतरमूलप्रसिद्धिरस्ति यतो ऽव-तिष्ठेत। तस्मात्पृथगवस्थितानां दृष्टत्वादानर्थक्यमेवोपपन्नतर-मिति। स एष वाक्यैकदेशस्येति। विध्युद्देशातिरिक्तस्य सिद्धा-न्ताभिप्रायेणैकदेशत्वं न तु पूर्वपक्षे ऽभिन्नवाक्यत्वाभ्युपगमात्।

(१) इति पदरहितः पाठो 'ग' पुस्तके।

(२) भावनांशत्रयान-तःपातित्वादिति पाठो 'गङ' पुस्तकयोः। अयमेव च युक्तः।

(३) नैवेति 'घ' पुस्तके।

अथ वा वाक्यानां मध्ये एकदेशाक्षेपः कतिपयानामित्यर्थः । तत्र यानि तावत्केवलविधियुक्तानि तेषु नैवाशङ्का । यान्यपि लिङादिमन्ति प्रागर्थवादेभ्यो विधिसमर्थानि तैः संयुज्यार्थान्तरे स्तुतिस्तुत्यसम्बन्धे वर्तन्ते तेषामर्थवादाभावे तन्मात्रमेव हीयते न तु विधित्वेन पुरुषार्थतापि । यानि तु वर्तमानापदेशयुक्तानि स्तुतिनिरपेक्षविध्यसमर्थानि यथा यस्य खादिरः स्रुवो भवति स च्छन्दसामेव रसेनावद्यतीत्येवमादीनि तान्येकदेशद्वारेण समस्तान्याक्षिप्यन्ते ॥

## शास्त्रदृष्टविरोधाच्च ॥ २ ॥

वाङ्मनसयोर्विद्यमानमविद्यमानं वा स्तेयानृतवदनमुच्यमानं धर्मे स्वार्थे ऽपि वा न प्रामाण्यं प्रतिपद्यते । अथ त्वध्याहारादिभिरेवं कल्प्येत वाङ्मनसयोः सर्वशरीरेषु चेष्टाः प्रति(१) प्राधान्यादितरभूतेन्द्रियैरपि तच्चरितमनुवर्त्तितव्यमिति ततः शास्त्रविरोधः । तत्रैतत्स्यात् । विहितप्रतिषिद्धत्वात्षोडशिग्रहणाग्रहणवद्विकल्प इति । इतरस्तु कल्पनीयक्लृप्तत्वेन वैषम्यमाह । ननु चात्यन्तदुर्बलो ऽपि विधिस्तदधीनात्मलाभेन प्रतिषेधेन तुल्यबलो भवतीति प्रतिषेधः प्रदेशे ऽनारभ्य विधाने चेत्यत्र वक्ष्यते । सत्यम् । यस्य शास्त्रमन्तरेणाप्राप्तिरस्ति तत्रैतदेवम् । यत्पुनरर्थप्राप्तं निषिध्यते तत्र विध्यनभ्यनुज्ञयैव लब्धात्मानः प्रतिषेधा बलीयांसो भवन्तीति तत्रैव वक्ष्यते ऽर्थप्राप्तवदिति चेदिति स्तेयानृतवादयोश्च विनैव शास्त्रेण प्रवृत्तयोर्विधिनिरपेक्षोवस्थितः प्रतिषेध इति कल्प्यं विधिं बाधते तस्मादानर्थक्यम् । अतः परं स्वार्थेनैवानर्थक्यं प्रतिपादयति ।

(१) चेष्टां प्रतीति 'ख' 'ग' 'घ' 'ङ' पुस्तकेषु ।

रात्रिंदिवं धूमार्चिषोरपि दर्शनात् धूम एवार्चिरेवेति चैतद्द्वयमपि प्रत्यक्षविरोधादवधारणं न संभवति । अथ वा यदनेन प्रतिपाद्यते दिवाग्निरादित्यमनुप्रविशति रात्रावादित्यमिति तदवधारणं नोपपद्यते । पूर्वोक्तस्य हेतोरसिद्धत्वात् । ततश्चाग्निसूर्ययोर्नक्तंदिवं व्यवस्थितज्योतिष्ट्वप्रतिपादनाय स्तुतिरप्यसत्यत्वान्नावकल्पतइत्येषा वानवधारणा । अथ वा सूर्यो ज्योतिरिति प्रातरयं मन्त्रो ऽग्निर्ज्योतिरित्येष सायमित्येषा मन्त्रयोरवधारणा न सिद्ध्यत्यथ वा समस्तो वेदः प्रमाणमित्येषावधारणा न सिद्ध्यतीत्यभिप्रायः । शास्त्रविरोधो दृष्टविरोधद्वयं पुनः शास्त्रदृष्टविरोध इति यत्सदृशन्यायानि सन्ति क्रमभेदेन चोद्यते तत्परिहारसूत्रक्रमभेदानुरोधेन । न चैतद्विद्म इत्यार्षेयवरणाशेषो ऽभिमतः । स चायं क्रियातत्सम्बन्धानभिधानात्तद्विषयत्वेनाप्रमाणम् । न हि ब्राह्मणत्वाज्ञानसन्देहविपर्ययाः केनचिदंशेन कर्म्मण्युपयुज्यन्ते । न च प्रत्यक्षविरुद्धा स्तुतिः संभवति । न च स्वतन्त्रब्राह्मणत्वाज्ञानप्रतिपादनेन प्रामाण्यम् । कथं पुनरयं दृष्टविरोधो यदा समानाकारेषु पिण्डेषु ब्राह्मणत्वादिविभागः शास्त्रेणैव निश्चीयते । नायं शास्त्रविषयो लोकप्रसिद्धत्वाद्वृक्षत्वादिवत् । कथं पुनरिदं लोकस्य प्रसिद्धम् । प्रत्यक्षेणेति ब्रूमः । कस्मात्पुनर्मातापितृसम्बन्धानभिज्ञाश्चक्षुःसंनिकृष्टेषु मनुष्येषु अनाख्यातं न प्रतिपद्यन्ते । शक्त्यभावात् यथा वृक्षत्वं प्रागभिधानव्युत्पत्तेः । नैतत्तुल्यं वृक्षत्वं प्रागभिधायकव्यापाराज्जात्यन्तरव्यवच्छिन्नं स्वव्यक्तिष्वनुगतं शाखादिमद्रूपेण दृश्यते । न तु ब्राह्मणत्वम् । अपि च । व्युत्पन्नशब्दो ऽपि निमित्तान्तरादृते नैव प्रतिपद्यते । न चोपवीताध्ययनादि निमित्तं

वर्णत्रयसाधारणत्वात्। अध्यापनाद्यपि भिन्नाचारक्षत्रियवैश्य-
प्रतियोगित्वात्संदिग्धम्। सर्वं च दुष्टशूद्रेषु संभाव्यमानत्वाद-
निश्चितम्। यस्त्वविचारितसिद्धमेव प्रतिपद्येत स शुक्तिकामपि
रजतं मन्यमानः क्रीणीयात्। नैष दोषः। क्वचिद्धि काचि-
ज्जातिग्रहणे इतिकर्त्तव्यता भवतीति वर्णितमेतत्। तेन यथै-
वालोकेन्द्रियानेकपिण्डानुस्यूतिशब्दस्मरणशक्तिमहत्त्वसंनिक-
र्षाकारविशेषादयोऽन्यजातिग्रहणे कारणं तथैवात्मोत्पादक-
जातिस्मरणम्। अयं चोत्पाद्योत्पादकसम्बन्धो मातुरेव प्रत्य-
क्षः अन्येषां त्वनुमानाप्तोपदेशाद्यवगतः कारणं भवति। न चा-
वश्यं प्रत्यक्षावगतमेव प्रत्यक्षनिमित्तं भवति। चक्षुरादेरनवग-
तस्यापि निमित्तत्वदर्शनात्। आन्तरालिकस्मृतिव्यवहितमपि
चेन्द्रियसम्बन्धानुसारि प्रत्यक्षमित्येतत्साधितम्। न च यत्सह-
सा सर्वस्य प्रत्यक्षं न भवति तन्निपुणतोऽपि पश्यतां न प्रत्य-
क्षमित्येतदप्युक्तमेव। स्त्र्यपराधात्तु दुर्ज्ञानोऽयं सम्बन्ध इति
स्वयमेव वक्ष्यति। न च तावन्मात्रेण प्रत्यक्षता हीयते। न हि
यद्गिरिशृङ्गमारुह्य गृह्यते तदप्रत्यक्षम्। न च स्त्रीणां क्वचिद्व्य-
भिचारदर्शनात्सर्वत्रैव कल्पना युक्ता लोकविरुद्धानुमानासं-
भवात्। विशिष्टेन हि प्रयत्नेन महाकुलीनाः परिरक्षन्त्यात्मान-
मनेनैव हेतुना राजभिर्ब्राह्मणैश्च स्वपितृपितामहादिपारम्पर्या-
विस्मरणार्थं समूहलेख्यानि (१) प्रवर्त्तितानि। तथा च प्रति-
कुलं गुणदोषस्मरणात्तदनुरूपाः प्रवृत्तिनिवृत्तयो दृश्यन्ते।
न च भर्तृव्यतिरेककृतेन वर्णसंकरोऽपराधेन जायते। दृश्य-

(१) मूलपुरुषप्रभृतिवर्तमानपुरुषपर्यन्तानां सम्बन्धप्रदर्शनपुरःसरं नामोल्लेखाव रचितो वंशवृक्षः।

ते ह्यपराधिनीनामपि स्वभर्तृनिमित्तः प्रसवः । तदपराधनिमित्तस्तु तासामशुभफलोपभोगो भवेद् न त्वपत्यानां वर्णसंकरः । न च नियोगतो वर्णान्तरैरेव सह प्रमादः । सवर्णेन चोत्पादितस्य नैव वर्णान्तरत्वापत्तिः । संकरजातानामपि च पुनरुत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वान्यतरवर्णापत्तिः स्मर्यते । तत्र त्वेतावन्मात्रमागमिकं प्रत्येतव्यम् । न ह्ययं पुरुषेयत्तानियमो लौकिकप्रमाणगम्यः । तस्मात्सत्यपि सारूप्ये यथा केन चिन्निमित्तेन स्त्रीपुंस्कोकिलादिविभागज्ञानं तथैव दर्शनस्मरणपारम्पर्यानुगृहीतप्रत्यक्षगम्यानि ब्राह्मणत्वादीनि इति भवत्यज्ञानवचनस्य प्रत्यक्षविरोधः । येषामप्याचारनिमित्ता ब्राह्मणत्वादयस्तेषामपि दृष्टविरोधस्तावदस्त्येव न त्वाचारनिमित्तवर्णविभागे प्रमाणं किं चित् । सिद्धानां हि ब्राह्मणादीनामाचारा विधीयन्ते, तत्रेतरेतराश्रयता भवेत् । ब्राह्मणादीनामाचारस्तद्दर्शनेन ब्राह्मणादय इति । स एव शुभाचारकाले ब्राह्मणः पुनरशुभाचारकाले शूद्र इत्यनवस्थितत्वम् । तथैकेनैव प्रयत्नेन परपीडानुग्रहादि कुर्वतो युगपद्ब्राह्मणत्वाब्राह्मणत्वविरोधः । एताभिरुपपत्तिभिस्त्वयं प्रतिपाद्यते । न तपआदीनां समुदायो ब्राह्मण्यम् । न तज्जनितः संस्कारः । न तदभिव्यङ्ग्या जातिः । किं तर्हि मातापितृजातिज्ञानाभिव्यङ्ग्या प्रत्यक्षसमधिगम्या । तस्मात्पूर्वेणैव न्यायेन वर्णविभागे व्यवस्थिते मासेन शूद्रो भवतीत्येवमादीनि कर्मनिन्दावचनान्यथ वा वर्णत्रयकर्महानिप्रतिपादनार्थानीति वक्तव्यम् । पूर्ववच्चात्रापि क्लृप्तत्वात्प्रत्यक्षस्य कल्प्येनाज्ञानविधिना सह विकल्पो न संभवति । अपि च । तत्वानुष्ठानात्मकत्वाद्भवेदपि न त्वत्र वस्तुरूपाणामैकात्म्येना-

विकल्प्यत्वात्। को हि तद्वेदेति पूर्ववदेवाज्ञानसंशयविपर्यया-णामनैापयिकत्वादानर्थक्यम्। निश्चितवेदप्रामाण्यैश्च त्रैविद्य-वृद्धैर्विज्ञायमानत्वात्स्वार्थेऽप्यानर्थक्यम्। विकल्पाभावश्चानन्त-रोक्तवत् ॥

## तथा फलाभावात् ॥ ३ ॥

यदि तावद्गर्गत्रिरात्रब्राह्मणवेदानुमन्त्रणज्ञानकाले विद्य-मानयोरेव मुखशोभावाजिजन्मनोः संकीर्तनं न धर्मं प्रति प्रमाण्यम्।(१) अथ त्वविद्यमानयोस्ततः स्वार्थेऽपि। वर्तमा-नापदेशाच्च प्रत्यक्षानुपलब्धिविरोधः कर्मानुष्ठानयोग्यपुरुष-करणाद्विद्यासंस्कारस्य दीक्षिततीर्थस्नानादिवन्निराकाङ्क्षत्वात् फलविधित्वं निराकरिष्यते। पौनरुक्त्यात्तच्चैव न विचारयित-व्यमत आह तेन फलविधित्वान्निराकृतस्येहानर्थक्यार्थवाद-त्वविचार इति। स्तुत्यर्थतापि चासत्यस्य नास्तीति व्यवस्थितमेव॥

## अन्यानर्थक्यात् ॥ ४ ॥

अनन्तरेणैव पूर्णाहुत्यादिफलवचनानि व्याख्यातानि वि-धित्वाभ्युपेत्यवादेन तु दोषान्तरमभिधीयते। पूर्णाहुतेरग्निसं-स्कारत्वात्पशुबन्धस्य च ज्योतिष्टोमोपकारकत्वादश्वमेधज्ञान-स्य च संस्कारत्वान्न तावत्फलविधित्वावसरः। यदि पुनरिष्यते ततोऽन्यानर्थक्यम्। समानफलान्यपि कर्माणि यानि परस्प-रानपेक्षाणि क्रियन्ते तेषां यथारुच्यनुष्ठानान्नान्यानर्थक्यकर-त्वम्। पूर्णाहुतिपशुबन्धयोस्त्वकृतयोरितरकर्मानधिकारात्। प्रथमं वा नियम्येतेत्यनेन न्यायेनावाप्ते फलेनोत्तरकर्मानुष्ठा-

(१) कीर्तनं धर्मं प्रत्यप्रामाण्यम्। इति 'ख ग' पुस्तकयोः।

नप्रयोजनमस्तीति तद्विध्यानर्थक्यम् । तथा च दृष्टान्तो ऽपि ते-
नैव पथा मध्वर्थिन इति यत्रान्यः पन्थाः पर्वतस्य तत्र गच्छेयुर-
पि न तु तेनैव गच्छन्ति । तस्माद्भूयसां क्लृप्तानां विधीनामनुग्र-
हाय वरं कल्प्यानामेवानर्थकत्वम् । न च फलविशेषार्थिनः प-
राणि कर्माण्यविशेषश्रवणात् । न हि समानायां श्रुतावप्रत्यक्षः
सन् फलविशेषः कर्मविशेषेभ्यः शक्यः कल्पयितुम् । न च स्तुति-
रसत्यत्वादिति स्थितमेव ॥

## अभागिप्रतिषेधात् ॥ ५ ॥

त्रीण्यपि पृथिव्यादिवचनानि अप्रतिषेधभागिनमर्थं प्रतिषे-
धन्ति । अन्तरिक्षे दिवि च तावदप्राप्तत्वात्प्रतिषेधाविषयत्वम् ।
अतश्च पर्युदसितव्याभावान्न पर्युदासः । अनन्तरिक्षे (१) द्युदिवि
च पृथिव्यां नित्यं चयनं प्राप्तमिति तद्विधिरनर्थको ऽथापि
नित्यानुवादस्तथाप्यक्रियार्थत्वमेव । पृथिवीचयनप्रतिषेधपर्युदा-
सौ तु चयनविध्यबाधेनाशक्यौ । बाधे च विध्यानर्थक्यम् । विक-
ल्पे ऽपि पक्षे बाधः । कामसंयोगाच्चाग्नेरस्त्येव पाक्षिकत्वम् ।
दुर्बलश्च प्रतिषेधः । पृथिवीपरत्वे सति चयने कल्प्यत्वात् ।
एतदेवास्य स्वयमाकुलत्वम् । विध्यनन्तरमेव हिरण्यं निधाय चे-
तव्यमिष्टकाभिरग्निं चिनुतएतच्चाकुलयेत् । प्ररोचनाबुद्धिस्तु
नैवोत्पद्यते ॥

## अनित्यसंयोगात् ॥ ६ ॥

सर्वोपाख्यानेष्वन्यपरत्वासंभावात्स्वरूपप्रतिपादनादनित्यसं
योगः । स च समस्तवेदप्रामाण्ये सति कथं चिदन्यथा नेये-

(१) अनन्तरिक्षे एवेति पाठः 'ख ग' पुस्तकयोः ।

त । यदा तु यथैव प्रमाणानां मध्ये शब्दस्तत्रापि च वेदः प्रमाणं तथैव वेदे ऽपि विधिमात्रं युक्त्या कल्प्यते तदेतरैकदेशवदनित्यार्थैकदेशाप्रामाण्यं यथाश्रुतार्थग्रहणादापन्नं किं निवार्यते । तस्मादेवमादीनामनपेक्ष्यार्थमध्ययनमात्रादेव फलं कल्प्यम् । अथ वा यथैतान्युपेक्षाफलानि तथा तद्विषयं प्रत्यक्षमपि प्रतिपत्तव्यम् । अथ कस्मान्मन्त्रवद्यथाप्रकरणं प्रयोगकाले न प्रयुज्यते । प्रयोगरूपसामर्थ्याभावात् । न हि मन्त्राणां पाठमात्रेण विनियोगः किं तर्हि तत्सामर्थ्यात् । न चात्र तदस्ति । अथ वा यथा तेषां पूर्वपक्षे कार्यान्तराभावाद्रूपमात्रं गृहीष्यते तथात्राप्यस्तु । यत्तु वृत्तिकारेणानित्यत्वमुक्तं तत्प्राप्यापेक्षया नाप्रयोज्यतया ॥

## विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः ॥ ७ ॥

पूर्वपक्षोदाहृतेष्वेव वाक्येषु सिद्धान्ते ऽभिधातव्ये किमर्थं वायव्यवाक्यमुपन्यस्यते । केचिदाहुः । समानन्यायत्वादिदमपि तत्र तान्यपि चेहोदाहृतानि द्रष्टव्यानीति । यद्यप्येवं तथाप्यपूर्वोदाहरणमभिप्रायान्तरमाकाङ्क्षति । तदभिधीयते । पूर्वोदाहृतेषु सर्वत्र स्वार्थासत्यत्वमप्याशङ्क्यते । तत्र कः प्रथममेव तत्प्रतिपादनक्लेशमङ्गीकुर्यादिति प्रसिद्धस्वार्थसत्यत्वानां स्तुतिद्वारैकवाक्यभावेन धर्मप्रमाणशेषत्वमात्रप्रतिपत्तिसौकर्यार्थं वायव्यवाक्योपन्यासः । तत्र भाष्यकाराः प्रसिद्धेनैवैकवाक्यत्वेन स्तुत्यर्थोपयोगं वदन्ति । एतावत्त्वत्र प्रथमं वक्तव्यम् । किमर्थं रूपभङ्गो न बलादेकवाक्यता पुरुषार्थत्वं वा वेदस्योच्यत इति । लौकि-

कवाक्येतु दृष्टत्वादिति यद्युच्येत तत्राभिधीयते । युक्तं लोके वाक्यार्थस्य प्रमाणान्तरगम्यत्वादन्यथापि कल्पनमिह त्वत्यन्ता-तीन्द्रियत्वाद्यथाश्रुतादोषदप्यन्यथात्वे पौरुषेयत्वमापद्येत । लोके ऽपि च यानि प्रमाणान्तरानवगतार्थानि आप्तप्रत्ययमा-त्रेण श्रोतॄणां प्रमाणानि भवन्ति तेषां नैवान्यथात्वकल्पनं ल-भ्यते । तत्र केचिद्वदन्ति । तुल्यं च सांप्रदायिकमिति यद्वक्ष्य-ति तेन समस्तो वेदः पुरुषार्थ इति साध्यते । न ह्यात्मानुप-कारिणः सन्तमेनं बुद्धिपूर्वकारिणः पुरुषाः प्रयत्नेन धारयेयुः । यद्यपि च केषांचिदज्ञानं भवेत्तथा प्यस्मत्पूर्वातिक्रान्तानेकप-रीक्षकप्रमादकल्पना निष्प्रमाणिका । तस्माद्यथायथा पुरुषा-र्थता भवति तथातथा भङ्क्त्वापि रूपं व्याख्यायतइति । न त्वेतद्यु-क्तमिव । कुतः पुरुषाधीनप्रामाण्यप्रसङ्गात् । यदि ह्यस्मरानुपा-त्तो ऽप्यर्थो ऽस्मदादिभिरेवं कल्प्यते । यस्मादयं प्रयत्नेन धारयाम-स्तस्मादस्य पुषार्थतेति । तथासत्यात्मचेष्टितवशेन प्रामाण्यमभ्यु-पगतं स्यात् । अथ पुरुषान्तरधारणमुच्येत एवमपि तद्वशेन तैरप्येवमन्यवशेनेत्यनादित्वेपि सत्यन्धपरंपरान्यायेन सर्वेषां पर-प्रत्ययान्न क्वचित्प्रामाण्यावस्थानम् । सर्वत्र ह्येवमयं पुरुषो वेदेति प्रत्ययो नैवमयमर्थ इति । तेन यद्यपि तेषु तेष्वध्येतृषु नूनं पुरुषार्थं वेदं मन्यन्तइत्यभिप्रायो ऽनुमीयते । तथापि निर्मूलत्वात्तन्मात्रे-णासिद्धिः । अतो यावद्वेद एव पुरुषार्थतया सकलमात्मानं न प्रति-पादयति तावदप्रमाणम् । तदुच्यते । सकलस्य तावद्वेदस्य स्वा-ध्यायो ऽध्येतव्य इत्यध्ययनभावना विधीयते । तत्र किं भावयेदि-त्यपेक्षायामध्ययनमित्यागतमपि पुरुषप्रवर्त्तनाशक्तियुक्तेन विधा-यकेनापुरुषार्थसाध्यायां भावनायां प्रवर्त्तनाशक्तिप्रसक्तेस्तदंशा-

न्निराक्रियते । ततस्वाध्ययनेनेत्यविरोधात्संनिधेश्च करणांशे नि-
विशते । तेन किमित्यपेक्षिते यच्छक्यतइत्युपबन्धादक्षरग्रहणा-
मित्यापतति । तस्याप्यपुरुषार्थत्वात्तेन किमिति पदावधारणमि-
त्युपतिष्ठते तेनापि पदार्थज्ञानं तेन वाक्यार्थज्ञानं तेन चानुष्ठा-
नमनुष्ठानेन स्वर्गादिफलप्राप्तिरित्येतावति प्राप्ते निराकाङ्क्षी भव-
ति । एवं सर्वविधीनां प्राक् पुरुषार्थलाभादपर्यवसानम् । न च स-
र्वस्यैव विधिदर्शनात्स्वर्गाद्येव फलं कल्प्यते । योग्यतया हि यस्य
यत्रानन्तरभाविनि व्यापारो लक्ष्यते तदेव तस्य कार्यमित्यवधा-
र्यते । तत्र यदि तावत्तदनुसारेणैव क्रियत्यप्यध्वनि फलमा-
साद्यते ततो नान्तराकल्पनमर्हति । पारंपर्यप्रयोजनेनापि श्रु-
तविध्युपपत्त्या ऽन्यथानुपपत्तिलक्षणार्थापत्त्यनुत्पादात् । यत्र
त्वनन्तरं दृष्टं कार्यं न स्वयं पुरुषार्थो नापि पारंपर्येण तमा-
प्नोति यथा होमस्याहवनीयप्राप्तिर्भस्मसाद्भावो वा तत्र तदति-
क्रमेण साक्षात्कर्मण एवादृष्टकल्पना । सर्वत्र चैतल्लक्षयितव्यम् ।
यत्र तु विहिते फलाकाङ्क्षिणि तदनात्मककार्यपरंपरायां स-
त्यामान्तरालिकं किं चित्क्रतवे पुरुषार्थाय वा चोद्यते तत्र
तदेव तत्साधनं पूर्वस्य तु विधेस्तदुपकारार्थतया पर्यवसानम् ।
यानि तूत्तरविधेः कार्याणि प्राक्तानि साध्यसाधनभावेनाचो-
दितत्वात् नान्तरीयकत्वेन काष्ठादीनामिव ज्वलनादीनि पूर्व-
विहितकर्मस्वव्यापारमात्रतया मन्तव्यानि । यत्र तु पारंपर्य-
जन्यं न किं चिदन्तरा विधीयते तत्र सर्वाणि स्वव्यापारीकृत्य वि-
धेयस्यैव स्वयं फलसाधनता । तत्र यानि तावत्क्लृप्तकल्पयिष्यमा-
णपुरुषार्थसाधनविधिवाक्यानि तानि तत्प्रतिपादनं यावत्स्वाध्या-
याध्ययनविधिना नीयन्ते परतस्तु फलवत्त्वं ज्ञातमेवेति न त-

ध्यावत्प्राप्यन्ते। यानि तु तत्प्रकरणे पठ्यन्ते तान्यपि तथैवाक्ष-रग्रहणादिक्रमेण स्वार्थावबोधनं यावद्गतानि न साक्षात्क्रत्व-ङ्गं भवन्ति। कुतः। कथमित्यदृष्टोपायापेक्षेण क्रतुना दृष्टार्थत्वा-दक्षरादिष्वनवसज्जता तद्विहितं कर्ममात्रमेव हि प्रयोजनद्वा-रेणोपादीयते नान्यत्। अतः प्रधानवाक्यतुल्यान्यङ्गानि भव-न्ति। तद्वाक्यानि तु बाह्यतराण्यध्ययनादिवत्। एवं प्रोक्षणादि-वाक्यानां व्रीह्यादिसंस्कारमात्रफलावसितानां तन्दुलपिष्टपुरो-डाशङ्कवदानादिभिर्व्यवहिततरः प्रधानसंबन्धः। एवमेवानार-भ्याधीताराद्दुपकारकसामवायिकाङ्गवाक्यानि योजयितव्यानि। तत्र त्वेतावान्विशेषः। यदप्रकरणस्थत्वादक्षराण्यस्पृशन् प्रधा-नमर्थैरेव संबध्यते। यानि त्वाधानादिवाक्यानि तान्यपि फल-वत्क्रत्वङ्गाहवनीयादिसंस्कारप्रतिपादनावसायीनि दूरस्थेनैव फलेन निराकाङ्क्षीक्रियन्ते। एतेन क्रत्वर्थकर्तृप्रतिपादनद्वारेणो-पनिषदां नैराकाङ्क्ष्यं व्याख्यातम्। मन्त्रनामधेययोस्तु स्वा-धिकारे योजना वक्ष्यते। तेन सर्वेषां भावनान्तर्गतिरुपप-न्ना। यत्त्वर्थवादानां भावनांशत्रयानन्तःपातित्वादग्रहणमिति। तत्राभिधीयते। सत्यमतिरिक्तं न गृह्यते। अस्ति त्वन्तर्गतिः। कथ-म्। इह हि लिङादियुक्तेषु वाक्येषु द्वे भावने गम्येते। शब्दात्मि-का चार्थात्मिका च। तत्रार्थात्मिकयाऽर्थवादा नापेक्ष्यन्ते शब्दा-त्मिकया तु गृहीष्यन्ते। सा ह्येवं प्रवर्त्तते। स्वाध्यायाध्ययनवि-धिनेतरे सर्वे विधायकाः स्वाध्यायपदोपात्तशात्मा नियुज्यते भावयेदिति। तत्र लिङादीनां प्रयोजककर्तृत्वं पुरुषः प्रयोज्यः तेन किमित्यपेक्षायां पुरुषप्रवर्त्तनमिति संबध्यते। अथ तु योग्य-तयैव लिङादिविषया क्रियोच्यते प्रवर्त्तयेदिति ततः किमित्यपे-

क्षिते पुरुषमित्येव संबध्यते । यद्यपि चाचेतनत्वाल्लिङादिष्वेवंविधं प्रयोजकत्वं न संभवति तथापि पुरुषस्य प्रयोज्यस्य प्रयोजकत्वानुपपत्तेस्तद्गतचैतन्यद्वारेण विधायकानां प्रयोजकता । यदि चैवं न कल्प्येत नैवैषां विधायकत्वव्यपदेशो भवेत् । अथ केनेत्यपेक्षिते पूर्वसंबन्धानुभवापेक्षेण विधिविज्ञानेनेति सम्बध्यते । कथमिति प्राशस्त्यज्ञानानुगृहीतेनेति । कुत एतत् । बुद्धिपूर्वकारिणो हि पुरुषा यावत्प्रशस्तो ऽयमिति नावबुध्यन्ते तावन्न प्रवर्त्तन्ते । तत्र(१) विधिविभक्तिरवसीदति तां प्राशस्त्यज्ञानमुत्तम्भाति । तच्च पुरुषार्थात्मके फलांशे सर्वस्य स्वयमेवानुष्ठानं भवतीति प्रसिद्धत्वान्न वेदादुत्पद्यमानमपेक्ष्यते । साधनेतिकर्त्तव्यतयोस्तु प्रवृत्तपुरुषनियोगाच्छास्त्रमेव प्राशस्त्यप्रतिपादनायाकाङ्क्ष्यते । तत्पुनः केन क्रियेतेति साधनापेक्षायां यदि वा फलपदेन निवर्त्येत प्रशस्तो ऽयं भूतिफलत्वात् । अथ वा विधिनैव सर्वदोषाशङ्काविनिर्मुक्तवेदविहितत्वादिति । अथ वा विशिष्टद्रव्यदेवतेतिकर्त्तव्यतायुक्तत्वादिति । तत्र फलपदादीनामर्थान्तरोपयोगात्पुनरन्यत्राप्युपयोगो न युज्यते । विध्युत्तरकाला चेयमाकाङ्क्षा पूर्वं च फलपदादिनिवेशः । तस्मादपि न तैर्निवर्त्यते । लक्षणया चैतेभ्यः कल्प्यते । न च श्रौतार्थसंभवे सा युक्ता । युगपच्चोभयवृत्तिविरोधात्प्राशस्त्यपरत्वे फलादीनि न स्युः न ह्यन्यशास्त्रे सत्युपायमात्रत्वेनोपात्तानामेकान्तेन पारमार्थिकत्वमिति वक्ष्यते । अत एव चार्थाद्गम्यमानमन्यपरत्वाच्छब्दानां न प्राशस्त्यं प्रयोजनं भवति । न हि यद्यत्प्रतीयते तत्तच्छास्त्रफलमवसीयते । यथा पूर्वो धावतीत्युक्ते यद्यप्यपरो गम्यते तथापि न कार्येण युज्यते तद्वत्प्ररोचना गम्यमा-

(१) विधिशक्तिरवसीदति इति पा० कपुस्तके ।

नापि न कार्यान्तरोपयुक्तशास्त्रार्थत्वेनावतिष्ठते । अन्यथानुप-
पत्त्या चेयं तेभ्यः कल्प्येत । सर्वप्रमाणप्रत्यस्तमये चान्यथानुपपत्ति-
र्भवति । प्रमाणाभावश्च यः सर्वप्रकारं प्रयतमानस्य स प्रमाणम् ।
तद्यदि केन चिदुपदेशेन वातिदेशेन वा न लप्स्यामहे ततो
दर्विहोमन्यायेन विध्युद्देशस्यैव द्वे शक्ती कल्पयिष्यामः । अथ
तु केन चिद् दूरस्थेनापि लप्स्यते ततस्तदनुसारस्तावत्कर्त्तव्य
इत्येवं साकाङ्क्षो विधिरास्ते । तथा वायुर्वै क्षेपिष्ठा देवतेत्येव-
माद्यपि स्वाध्यायाध्ययनविधिना पुरुषार्थतयोपनीतं यच्छक्यते
तत्कुर्यादित्युपबन्धाच्च सहसैव तेनासंबध्यमानमपुरुषार्थत्वेन च
पूर्ववदक्षरादिष्वपर्यवस्यद्भूतान्वाख्यानवाक्यार्थं यावद्भूतम् । त-
त्रापि तु साकाङ्क्षमेवेति यस्तेन लक्ष्यमाणः साधनानुरूपसाध्यो-
त्पत्तिद्वारेण क्षिप्रदेवतासाध्यं कर्म क्षिप्रमेव फलं दास्यतीति
प्राशस्त्यरूपोऽर्थः सोनन्तरप्रवृत्तविध्युद्देशाकाङ्क्षितत्वात्पुरुषार्थे
द्वारतां शक्नोति प्रतिपत्तुमिति परिगृह्यते । सोयं नष्टाश्वदग्ध-
रथवत्संप्रयोगः । एवं च न प्ररोचनान्यक्रतो कर्माङ्गम् । न चार्थ-
वादपदैः प्रयोजनान्तरं साधनीयमित्याम्नानसामर्थ्यादुभयो-
र्नियमः । एतेन प्रतिषेधापेक्षितद्वेषसिद्ध्यर्थं निन्दापदसङ्गतिर्व्या-
ख्याता । तत्रापि हि नद्वेषादृते विद्वान्निवर्त्तते । द्वेषश्चाप्रशस्तप्र-
त्ययाधीनोत्पत्तिः । न चाप्रशस्तज्ञानं नकारादिभिः पदैः प्रश-
स्ताप्रशस्तानभिधानेन निषेधतत्फलेतिकर्त्तव्यतामात्रपर्यवसितैः
शक्यमवलम्बितुमित्यनन्यप्रयोजननिन्दावाक्यगम्यमेव भवति ।
अतस्यैकवाक्यत्वसिद्धिः । नित्यं च विधिप्रतिषेधयोः क्रमेण वा-
क्यशेषाः स्तुतिनिन्दानिर्णयहेतवो भवन्ति । न हि स्तुतिनिन्दे-
नाम व्यवस्थिते निन्दारूपासु स्तुतिषु स्तुतिरूपास्वपि च नि-

न्दासु विपर्ययदर्शनात्। यथा वक्ष्यति नहि निन्दा निन्द्यं निन्दितुं प्रवर्त्तते अपि तु विधेयं स्तोतुमिति । तथा त्रैयम्बकवाक्येषु यदभिघारयेत्तद्रुद्रायास्ये पशून्निदध्यादिति स्तुतमप्यनभिघारणं नाश्रयिष्यते निन्दितमपि चान्ते विधिदर्शनादभिघारणमेव प्रशस्तं भविष्यति। सन्दिग्धस्तुतिनिन्दानामपि च प्रक्रमादेव निर्णयो, यथा वक्ष्यति न वयं निन्दितानिन्दितान्वा ऽसुरान्विद्मः। कदा चिद्धि यस्मादसुरानप्येषा वशीकृत्यानयति क्रिया तस्मान्नूनं प्रशस्तेति स्तुतिः स्यात्। अथ वा विध्वंसकासुरागमननिमित्तत्वादशोभनेति निन्दा। तत्रान्ते सामविधानात्तत्प्रशंसार्थमृचां निन्देति गम्यते। सर्वत्र च किं चित्पदं स्तौति निन्दति चेतराणि त्वेकवाक्यतया तादर्थ्यं प्रतिपद्यन्ते। यत्रापि तादृशं पदं न स्यात्तत्रापि लक्षणा लक्षितलक्षणा वा ऽन्यथानुपपत्तेराश्रयणीया । विधिप्रतिषेधयोश्च स्तुतिनिन्दाभ्यामविनाभावादन्यतरदर्शनेनेतरदनुमाय वाक्यं पूरयितव्यम्। एवं भारतादिवाक्यानि व्याख्येयानि। तेषामपि हि श्रावयेच्चतुरो वर्णानित्येवमादिविध्यनुसारेण पुरुषार्थत्वान्वेषणादक्षरादिव्यतिक्रम्य धर्मार्थकाममोक्षा धर्मानर्थदुःखसंसारसाध्यसाधनं प्रतिपत्तिरूपादानपरित्यागाङ्गभूता फलम्। तत्रापि तु दानराजमोक्षधर्मादिषु के चित् साक्षाद्विधयः के चित्पुनः परकृतिपुराकल्परूपेणार्थवादाः। सर्वोपाख्यानेषु च तात्पर्ये सति श्रावयेदिति विधेरानर्थक्यात्कथं चिद्गम्यमानस्तुतिनिन्दापरिग्रहः । तत्परत्वाच्च नातीवोपाख्यानेषु तत्त्वाभिनिवेशः कार्यः। वेदप्रस्थानाभ्यासेन हि वाल्मीकिद्वैपायनप्रभृतिभिस्तथैव स्ववाक्यानि प्रणीतानि । प्रतिपाद्यानां च विचित्रबुद्धित्वाद्युक्तमेवैतत्। इह के चिद्विधिमा-

त्रेण प्रतिपद्यन्ते । अपरे सार्थवादेन अपरे ऽल्पेनार्थवादेनापरे महता । सर्वेषां च चित्तं ग्रहीतव्यमित्येवमारम्भः । तत्र तु केचिद्विधिप्रतिषेधाः श्रुतिमूलाः केचिदर्थसुखादिषु लोकमूलास्तथार्थवादाः केचिद्वैदिका एव केचिल्लौकिका एव केचित्तु स्वयमेव काव्यन्यायेन रचिताः । सर्वे च स्तुत्यर्थेन प्रमाणम् । येतु वाक्यशेषत्वं न प्रतिपद्यन्ते ते ऽपि केचित्स्वयमेव श्रूयमाणमन्धमादनादिवर्णकप्रभृतयः प्रीतिं जनयन्ति । ये तु युद्धवर्णकास्ते सर्वेषां शूराणां भीरूणां चोत्साहकराः पार्थिवानामुपयुज्यन्ते । यत्र तु न किं चिद्दृष्टमुपलभ्यते तत्र विशिष्टदेवतादिस्तुतिद्वारमदृष्टं कल्पनीयमित्येषा दिक् । विध्युद्देशेनैकवाक्यत्वादिति । केचिदाहुः । किमर्था स्तुतिरिति चेत् कथं रोचेत ततो ऽनुष्ठीयेतेत्येवं स्तुतिनिन्दाभ्यां प्रवृत्तिनिवृत्तिप्रतिपादनं लिङादिभिश्चाभिधानमतस्तुल्यार्थत्वम् । न च तुल्यार्थानां समुच्चयः । तत्र ये तावदर्थवादरहिता लिङादयस्तद्रहिताश्चार्थवादास्तेषां यथाविषयं व्यवस्थितं निवर्तकत्वं प्रवर्त्तकत्वमविरुद्धम् । यत्र तु द्वयसंनिपातस्तत्रान्यतरेण कृतार्थत्वादवश्यावद्धेये ऽन्यतरस्मिन्भूयसामनुग्रहो युक्तः । त्यजेदेकं कुलस्यार्थ इतिवद्विधिप्रत्ययः परित्यज्यते । केवलप्रकृतिप्रयोगाभावात् तदनुग्रहार्थप्ररोचनालब्धविधित्वानुवादेन प्रवर्त्तते । यथा सत्रादुदवसायपृष्ठशमनीयेन यजेरन्निति त्क्ताप्रत्ययसिद्धप्रवृत्त्यनुवादकत्वं वक्ष्यते । तस्मादायव्यश्वेतालम्भ इत्येतावन्मात्रं विवक्षितम् । स एव च विध्युद्देशः फलादिसंबन्धोत्तरकालं वायव्यं श्वेतमालभेत भूतिकाम इत्येवमन्तो विध्युद्देश इत्यनेन कथ्यते । अन्यथा पुनरुद्देशग्रहणमनर्थकमेव स्यात् । सूत्रोक्तेन तु विधिनैकवाक्यत्वं न संभवतीत्यतिक्रम्य



3682

तद्विषयः परिगृह्यते। तथा चाह नायमभिसंबन्ध इति। विधिविधेयसंबन्धनिषेधेन स्तुतिस्तुत्यसंबन्धं विवक्षितं वदति यतस्ततो भूतिरिति। सैव च भूतिनिमित्तस्य योजना। भिन्नाविमाविति पूर्वोक्तौ संबन्धावभिधत्ते। किमर्था स्तुतिरिति चेदिति। प्रत्ययश्चेदुत्पन्नस्तेनाविधीयमानस्य किं स्तुत्येति। अथ वा यदनया साध्यते तत्प्रत्ययेनैव सेत्स्यतीति मनसि कृत्वा वदति। आचार्यस्तूत्पन्ने ऽपि प्रत्यये ऽर्थवादादेव तदर्थावाप्तिमुभयसंभवे चार्थवादानुग्रहं मत्वाह कथं रोचत इति। इतरः प्रश्नाभिप्रायं विवृणोति। प्रागेव सिद्धेः स्तुतिवचनमनर्थकमिति। न हीति ग्रन्थच्छेदः। सर्वत्रावान्तरवाक्यानि महावाक्येष्वप्रमाणं महासङ्ख्यास्विवान्तरसङ्ख्या भवन्ति। तान्येव तु यदा केवलानि प्रयुज्यन्ते तदा निरपेक्षत्वाद्भवन्ति प्रमाणम्। यथा पटो भवतीति। न च कदा चिदेतावन्मात्रेण समाप्तेर्नैराकाङ्क्ष्यदर्शनात्सर्वत्र नैराकाङ्क्ष्यम्। योग्यपदान्तरानुच्चारणेन हि सर्ववाक्यानि पर्यवस्यन्ति। इतरथा पुनः श्रुतपदातिरेकेणापि निपुणदृष्टां भवत्येवापेक्षा। सा चानुपलब्ध्या निवर्त्तते। तथा च यत्रोपलप्स्यन्ते तत्रैकवाक्यता गमयिष्यन्ते। अन्यथा ह्यसौ तदुच्चारणे ऽपि न स्यात्तदिह महावाक्येन विना ऽवान्तरवाक्यं प्रमाणं तत्सद्भावे तु नेत्येतदाह। यदा न स्तुतिपदानीति। नन्वेवं सतीति। यत्र महावाक्यावान्तरवाक्ययोः फलं भिद्यते यथा पटभवनरागभवने तत्रैवं युक्तं इह त्वनतिरिक्तार्थस्य सतः किमवान्तरवाक्यनिराकरणमेव महावाक्यस्य युक्तं फलम्। तदेतदाह। यस्मिन् सत्यविधायकमवान्तरवाक्यं भवति माभूत्तन्महावाक्यमिति। सत्यं विना ऽपि तेनेति। यो नाम वेदस्य कर्त्ता स्यात्स एवं पर्यनुयुज्येत लघुनोपायेन

सिद्धे किं महावाक्यमाश्रयसीति । तदभावान्न पर्यनुयोगः । परिहारपथग्रामगमनवच्च श्रमातिरेकमात्रं स्यान्नार्थानवाप्तिः । दृष्टं चैवंजातीयकेषु गौरवाश्रयणम् । यथा तमेवार्थं खमित्येतावता सिद्धमन्तमाकाशप्रभृतिभिरभिलपन्ति न च जाड्यं लभन्ते तथाऽत्र लिङ्गादिभिरपि सिद्धमन्तमर्थवादेभ्यो गृह्णन्त इति । शक्यते चेदमिह वक्तुं यथैवानेकोपायप्रसङ्गे मन्त्रेण स्मृतं क्रियमाणमभ्युदयकारि भवति तथा ऽन्येनापि विधिसिद्धावर्थवादप्रतिपादितविधिविहितमिति । ननु सत्स्वपि स्तुतिपदेष्विति । यत्र लघुमुपायमनुपादाय गुरूपाय आश्रीयते तत्र तथापि भवेदत्र तु पूर्वमेव लघुतर आश्रितः समर्थतरस्य तस्माद्यथैव प्रयुक्ते खशब्दे नाकाशादयस्तदानीमेव प्रयुज्यन्ते तथा ऽत्र विधौ सति स्तुतिर्नाश्रयितव्येति । तत्रोत्तरसाकाङ्क्षत्वात्स्तुतिपदान्यनर्थकानि स्युरिति । भवन्त्विति चेत् । नोक्तेन न्यायेनार्थवत्त्वादविवक्षितार्थता युक्तेति । द्वयसंभवे हि प्रत्यक्षादेकवाक्यत्वादर्थवादानुग्रहो युक्त इति । ननु सत्स्वपीत्यनेन गतार्थत्वाद् ननु निरपेक्षादित्यवक्तव्यम् । तदुच्यते । तत्रार्थवादपरित्यागायोक्तमिदानीं तु भवन्तु नाम स्तुतिसंबन्धः समस्तस्य पूर्वस्यापि तु स्वरूपावगतो विधिसंबन्धो न बाधितव्यः । अथास्य क्व चिदपि शक्तिरपह्नियते ततः प्रतिप्रसवहेत्वभावात् सर्वत्राशक्तत्वप्रसङ्ग इति । तदभिधीयते । भवतु पूर्वस्य विधिशक्तिर्न त्वियं क्व चिद्बाधितेत्यन्यत्रापि बाध्यते । कदा चिदाविर्भूतेति सर्वत्राविर्भवति । यत्र त्वर्थान्तरस्तुत्यादिनोपादीयते (१) तत्राविर्भूता शक्तिः कार्यमारभते । यत्र त्वपवादभूतशक्त्यन्तराभिव्यक्तिस्तत्र

(१) तत्रानभिभूता शक्तिरिति पाठः 'क' 'ख'पुस्तकयोः ।

वाक्यभेदप्रसङ्गात्पूर्वं निरोधीयते। प्रश्नोत्तरत्वेनायं पूर्वोक्त एव वाक्यभेदः परामृश्यते। तस्मादैकार्थ्यात्प्ररोचनयैवात्र विधिरिति। प्ररोचयमाना अनुष्ठातॄणामिति। "रुच्यर्थानां प्रीयमाणः" इति सम्प्रदानत्वं कस्मान्न भवति। प्ररोचयतेः प्रकृत्यन्तरत्वादिति चेन्न। तत्रापि रुचिसंबन्धानपह्नवात्। अथ सामान्यविवक्षया षष्ठ्युच्यते साप्युपात्ते विशेषे दुर्लभा। तस्मादनुष्ठातॄणां क्रियाया इति सम्बन्धः केभ्यः प्ररोचयमाना इत्यपेक्षिते ऽर्थात्तेभ्य एवेति गम्यते। अथ चानुष्ठातॄणामुपकरिष्यन्तीति सम्बन्धः। क्रियाया इति पञ्चमी क्रियातो ऽपि हि तएव प्ररोचका इति। अथ वा क्रियार्थमिति षष्ठ्यर्थः कल्प्यः। कं चिदर्थं स्तुवन्तीति शत्रन्तं कं चिदिति विधेयं तत्सम्बन्धिनं वा कं चिद्वा विदधति क्रियां तत्सम्बन्धिनं वा तच्च स्तुतिद्वारेणोत्युपपन्नं (१) प्रत्ययोद्वारेणार्थवादप्रामाण्यम्। इदं तु व्याख्यानं नानुमन्यन्ते। यदि हि प्रत्ययोत्पत्तिः स्यात्ततः केन स्तुतिराकाङ्क्ष्येत न तावच्छब्दभावना कथंभावो ऽस्ति। या ऽपि कस्मादित्यपेक्षा कल्प्येत सापि विधीतिकर्त्तव्यताविषयैव तदनुग्रहार्थत्वात्। शब्दान्तरव्यपदेशमात्रं तु भिद्यते। सापि च नियुज्यमानस्यैव पुरुषस्य भवति न क्रियामात्रश्रवणात्। न हि वायव्यश्वेतालम्भ इत्युक्ते कर्त्तव्यताऽकर्त्तव्यतोक्तेः प्राक् प्रशस्तो ऽप्रशस्त इति वा ऽपेक्ष्यते। तदनपेक्षितं च श्रुतिमात्रेणैव वदन्तो नार्थवादाः प्रतिपादयन्ति। न च धात्वर्थेन सह कस्य चित्सम्बन्धो ऽपेक्षा वा विद्यते। सर्वस्य भावनागामित्वात्। भावना तु प्रत्ययोद्वारेणापनीता किमपेक्षेत। तस्मात्तद्गतांशत्रयोच्छेदात्न भूतिः फलं न यागः करणं न वेति-

(१) प्रत्ययत्यागेनार्थवादप्रामाण्यम् इति पाठः 'ग' पुस्तके।

कर्त्तव्यता का चिन्त्यात्। उक्ते ऽपि च प्राशस्त्ये कस्मादित्यनपे-
क्षितत्वात्प्रशस्तो ऽयमित्येतावन्मात्रे ऽवधृते प्रशस्तत्वादित्यनुच्य-
माने कर्त्तव्यताबुद्धिर्नैव स्यात्। भवन्ती वा तन्निष्ठा भवेत्प्र-
शस्तो ऽयं कर्त्तव्यः पटो रक्तः कर्त्तव्य इतिवत्। अकल्पिते वि-
धावानर्थक्यमेव स्यात्। प्रत्यक्षं च विधिमुत्सृज्य पारम्पर्यलक्षणा-
थार्थवादेभ्यः परिगृह्यत इत्यपूर्वा वाचोयुक्तिः। न चैतत्कल्पना-
वसरो ऽस्त्यन्यतः सिद्धत्वात्। अनुक्तो हि सन्नर्थवादादेव विधिः
कल्प्येत यद्यन्यथा नोपपद्येत। प्रत्ययस्य प्रत्ययेनोपपन्नत्वान्नान्यथा-
नुपपत्तिस्तथार्थवादो ऽपि यद्युपाख्यानादिष्विव प्ररोचनायां
निष्प्रयोजनः स्यात्ततो दूरं नीयेत। यथोक्तेन तु न्यायेन प्ररोच-
नोपयोगान्नान्यत्र गच्छतीत्यवश्यकर्त्तव्या च प्ररोचना यद्यन्यतः
सिद्ध्येत्ततो ऽर्थवादान्नापेक्षेत। सापि त्वनन्यगतिकत्वात्तमेवा-
श्रयति। सर्वत्र च वैदिके ऽर्थे ऽर्थापत्त्या शब्दः कल्प्येत ततो
ऽर्थसिद्धिस्तेन प्ररोचनया विधिशब्दः कल्प्येत नार्थः तत्कल्पनावे-
लायां च यथैन्द्रवायवादिवाक्येषु सोमेन यजेतेत्यस्मिन्नुपतिष्ठ-
मानेनान्ययजिकल्पना तथैवालभेतेत्यनेनान्यानुमानप्रतिबन्धः।
तुल्यार्थयोश्च बाधविकल्पौ भवतः। प्रत्ययार्थवादयोः पुनरत्य-
न्तभिन्नानुग्राह्यानुग्राहकार्थविषयत्वेनार्थभेदात्समुच्चय इत्येक-
वाक्यता। यदि च प्रत्ययोत्पत्तिः स्यात्ततः कर्तृसंख्योपग्रहवि-
शेषावगतक्रियाफलस्वार्थपरार्थत्वाद्युच्छेदप्रसङ्गः। स्यादेतत्।
विधित्वमात्रमविवक्षयित्वाशेषविवक्षया कर्तृसंख्यादिलाभ इ-
ति। एतच्चाशक्यं यतस्तदर्थमप्युपात्तः। प्रत्ययः सामर्थ्यादवि-
धित्वं वदत्येव। प्रतीतस्य च दृष्ट्येवाविवक्षा विध्यसंस्पर्शो वा ग्र-
हैकत्ववदनुवादकत्वं वेन्द्रकामहोमवत्। न तावद्विधेरविधित्वं

नाम किं चित्। नाप्यनुवादस्तस्यामवस्थायामप्राप्तेः न ह्येवं सम्भवति यो ऽयं वायव्यश्वेतालम्भः कर्त्तव्यः स प्रशस्त इति। भवति त्वेवं कर्त्तव्यः प्रशस्तत्वादिति। यत्तूदवसानीयवदिति तत्रापि स्तावशेन विधिप्रतिषेधावनपेक्ष्य क्रियामात्राक्षेपाद् विधित्वमाश्रितमेवेत्यदृष्टान्तता। यदि च विध्यविवक्षा स्यात्ततः प्रत्यासत्तेर्धात्वर्थ एव साध्यांशे निपतेदिति निष्फलत्वं स्यात्। तस्मात्सूत्राविःनाशेनैव विधिनैकवाक्यत्वम्। तथा च भाष्यकारः। सविधिकमेव भूतिकाम इत्येवमन्तो विध्युद्देश इत्याह। अन्यथा धात्वर्थ इत्येवावच्यत्। तत्रास्य क्रियामात्रतया विध्युद्देशत्वं शक्यते वक्तुम्। तस्मात्प्रत्यय एव विध्यविधायित्वाद्विध्युद्देशः। विध्यर्थेन त्वेकवाक्यत्वासम्भवात्सूत्रातिरेकेणोद्देशग्रहणम्। भूतिकाम इत्येवमन्त इति च फलादिसंगत्युत्तरकालं स्तुत्यवसरप्रदर्शनार्थम्। नन्वेवं सति वर्त्तमानापदेशेष्वनाकाङ्क्षणादर्थवादा न सम्बध्येरन्। एवमेवैतत्तथापि तु प्रमाणान्तरप्राप्त्यभावात्क्व चित्प्रयोगवचनेन क्व चित्पञ्चमलकारेण। अथ वा श्रुतवर्त्तमानान्यथानुपपत्त्या कल्पिते विधित्वे ऽर्थवादसंगतिः। यत्रापि केवलार्थवाददर्शनादेव विधित्वं तत्राप्यन्यथानुपपत्तिमात्रं शरणम्। सम्भवन्त्यां तु गतौ नातिगौरवं युक्तमिति। यस्त्वस्मिन्पक्षे वाक्यभेदः सम्बन्धद्वयाश्रयणादिति स आलभेत प्रशस्तत्वादित्येकप्रसरोपपत्तेः परिहृतः। विधीयमानस्यैव हि स्तुत्याकाङ्क्षत्येवैरूप्यादुपपन्नं तन्त्रत्वम्। यदि चैवं विधेः सम्बन्धभेदैर्वाक्यं भिद्येत ततः साध्यसाधनेतिकर्त्तव्यतासम्बन्धैरपि भिद्येत तस्मान्नायमभिसम्बन्धो विवक्षित इत्यादिभाष्यमेवं नेतव्यम्। न पूर्वत्रैव साङ्गविधिपर्यवसानं विवक्षितम्। विधित्वादिद्वारप्ररोचना-

कल्पनायामतिगौरवनिमित्ताद्वाक्यभेदात् । किमर्था स्तुतिरिति । पूर्वेणैव प्ररोचनापि सिद्धेत्यभिमानात्कथं रोचनेति विध्यनुग्राहककथनम् । ननु प्रागिति पूर्वाभिप्रायविवरणम् । न ह्येति । स्तुत्यभावे तस्य शक्तिद्वयमगत्याश्रीयते न सम्भवन्त्यामपीत्येतन्न तदा भूतिकामस्य विधिः समाप्यतइत्याह । यथा पट इति । गतार्थम् । विधिशब्देन तदा प्ररोचनेति विवृतं कार्यनानात्वं विधिस्तुत्योः । नन्वेवमिति । अस्ति चेत्प्ररोचयितुमपि शक्तिः कस्मादन्यदपेक्ष्यतइति । सत्यमिति तस्माद्विद्यमाने तस्मिन्नाविद्यमाने यो ऽर्थः स गम्यते । कश्चासौ । स्तुतिः प्रयोजनं तयोर्न तस्यैव पूर्वस्यापीत्यर्थः । स्तुतिविषयोपकल्पनाच्च विधेरपि स्तुतिप्रयोजनव्यपदेशो न हि निर्विषया स्तुतिरुपपद्यते । अर्थवादाभावे त्वगत्या केवलो ऽपि गौरवमङ्गीकरिष्यति । ननु सत्स्वपीति । पूर्ववदेव व्याख्येयम् । अतो ऽस्माद्विधेरिति । इदानीं षष्ठीवाक्यशेषसम्बन्धादित एवास्य स्तुतिमवगच्छामो न स्वत इत्यर्थः । ननु निरपेक्षादपीति । यदि क्वचिदनितिकर्त्तव्यता कस्य विधेः प्रवर्त्तनशक्तिः कस्मादन्यदपेक्षते तेन सत्स्वप्यनादरः स्यात् । आचार्यस्तु सोपद्यासमाह यत्रासौ केवलः प्रयुज्यमानो निरपेक्षस्तत्र भवतु न कश्चिद्विरोधः । इह तु न तत्संभवः साकाङ्क्षैः पदान्तरैराक्षिप्तत्वात् । वाक्यं ह्येकमेकस्यैव संबन्धस्य विधायकं तत्र यदि द्वौ विध्युद्देशएव कुर्यात्तथा सति भिद्येत । विध्युद्देशोत्थापितानामेवैष (१) हि गुणो भवतीति प्ररोचनां दर्शयति । तस्माद्विधिनैकवाक्यत्वात्तदनुग्रहेणार्थवन्तो ऽर्थवादा इति ॥

## तुल्यं च साम्प्रदायिकम् ॥८॥

(१) तानेवैष इति 'घ' पुस्तके ।

चशब्दव्याख्यानार्थं परिचोदनोपन्यस्ता । आनर्थक्यमेवास्त्विति तन्नैव । कुतः । पूर्वोक्तेन न्यायेनार्थस्यावगम्यमानत्वात् । अथ वा तन्नेत्यवच्छिद्यैवमर्थावगमादित्युक्तप्रकारपरामर्शः । किं च तुल्यं चेति योजना । संप्रदायानुग्रहार्थं धर्मजातम् । तत्संबन्धस्मरणात् । स्वर्गाद्यसंयोगाच्च । न चास्य प्रयोजनवत्संनिहिताध्ययनपरित्यागेनान्यार्थत्वे प्रमाणमस्ति संप्रदायाङ्गत्वेऽपि चाविघ्नस्याकाङ्क्षितत्वात् । तादर्थ्यस्मरणाच्चाविघ्नार्थत्वम् । न ह्यन्यत्कल्प्यमानं स्वाध्यायेतिकर्तव्यतानुगुणं भवति । यदि तावत्स्वर्गः कल्प्येत ततः पुरुषार्थत्वमेवापद्यते । अथ पुनः क्रतुफलसिद्धिरेवं पठिते वेदे भवतीति । एवमपि दूरस्थोपकारित्वैव । तस्मात्संप्रदायस्याश्रग्रहणं साधयतो नियमजातमनुग्राहकम् । न च निष्प्रयोजनस्याविघ्नेन कार्यं वरं तादृशस्य विघ्नमेवोत्पन्नं येन क्लेशोऽपि तावन्न स्यात् । यतस्त सप्रयोजनैर्विधिवाक्यैस्तुल्यमेवाद्रियन्ते । तेनावश्यं तद्वदेव प्रयोजनवन्त्यपीति । नियमस्मृतेश्च वेदमूलत्वाद्वेदकृत एवायमादरः । स च प्रयोजनवत्त्वादृते नोपपद्यतइति प्रयोजनवत्त्वमपि सामान्येनानुमायार्थाद्वा कल्पनैकदेशत्वादिति । सामर्थ्यतोऽर्थवादानां स्तुतिर्नाम प्रयोजनविशेषो लभ्यते । स्मरणं च दृढमित्येतदेवाह । अथ वा यदेवेदं ग्रन्थस्मरणं परिपालनात्मकं तेनाध्येतृपुरुषप्रयोजनवत्त्वाभिप्रायप्रतिपत्तिपूर्वकं प्रयोजनवत्त्वानुमानम् । संभाव्यते च कुतश्चिद्वाक्यादियं प्रतिपत्तिरिति नाप्रमाणम् । अन्यथा हि निष्प्रयोजनान्येतानीति केचित्परित्यज्यार्थवादान्विधिमात्रं प्रतिपद्येरन् । तच्च दृढस्मरणमेतेषु न स्यात् । अस्ति तु तत् । तस्मान्न प्रमादपाठः । ततस्सार्थवन्त इति । तुल्यं

च साम्प्रदायिकमित्यस्यापरा व्याख्या । संप्रदायः प्रयोजनं यस्य वाक्यस्य येन प्रवर्त्तितः संप्रदायस्तस्मात्स्वाध्यायो ऽध्येतव्य इत्येतत्स्वाध्यायत्वाविशेषाद्विध्यर्थवादयोस्तुल्यमतः प्रागुक्तेन न्यायेन प्राक् पुरुषार्थसिद्धेरवस्थातुं न लभ्यतइति शक्त्यनुसारेण स्थितमर्थवादानां स्तुत्यर्थमिति ॥

## अप्राप्ता चानुपपत्तिः(१)प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत ॥ ९ ॥

उक्तदोषपरिहारो ऽतः परम् । शास्त्रदृष्टविरोधिका यात्रानुपपत्तिर्विधिकल्पनायामुक्ता तामस्मत्पक्षप्राप्तां (२) मन्यामहे । अथ वेदं स्तुतिव्याख्यानं तामनुपपत्तिमप्राप्तमिति व्याख्येयं येषां ह्रस्वः पाठः । प्रयोगे ह्यनुष्ठाने रोदनवपोत्खननदिङ्मोहस्तेयानृतवादादीनां कल्प्यमाने विरोधः स्यात् । अस्माकं तु पुनर्य एषां शब्दानां श्रौतो ऽर्थः स नैव विवक्षितः । न चाध्याहारादिभिर्विधिः किं तर्हि स्तुतिमात्रं विवक्षितम् । न च तद्विरुध्यते तस्मादुपपद्येत । अथ वा शब्दार्थस्त्विति विधायकशब्दानुग्रहार्थः सन्नयमर्थवादो न स्वार्थानुष्ठानेन संबध्यते प्रयोगमप्राप्तो ऽप्रयोगभूतस्तस्मादुपपद्येत । त्रयो ऽत्र पाठाः । अप्राप्तां चानुपपत्तिमित्यत्र मन्यामहइति वाक्यशेषः । अप्राप्तं चानुपपत्तिमित्यपरस्तत्रास्मद्व्याख्यानमित्यध्याहारः । अप्राप्ता चानुपपत्तिरित्यपरस्तत्रास्मत्पक्षे विज्ञेयेति ॥

---

(१) अप्राप्तां चानुपपत्तिमिति पाठो 'ङ' पुस्तके ।

(२) तां स्तुतिपदामप्राप्तामिति 'ख ग घ' पुस्तकेषु ।

# गुणवादस्तु ॥ १० ॥

यत्र तावद्विधिस्तुत्योरेकविषयता तत्रोपपद्यतां नाम सं-बन्धो विषयनानात्वे तु कथमिति । गुणादित्याह । यत्क्रियायाः संबन्धिनि स्तोतव्ये तत्संबन्ध्यन्तरं स्तूयते अथ वा यद्विकारे प्रकृतिसंबन्धिनि विधानार्थं स्तोतव्ये तत्संबन्ध्यन्तरं प्रकृतिः स्तूयते तत्र तद्द्वारेणापि लोके वेदे च स्तुतिसिद्धेः प्रकारान्त-रता । तस्माददोषः । एतस्यास्तु स्तुतेरर्थमुपरिष्टाद्वक्ष्यति । शा-न्ताभिरद्भिः सम्बद्धो विकारः शान्तिहेतुर्भवन्यजमानस्य कष्टं शमयतीति । गुणवादसूत्रेण प्राधान्येन तावद्रोदनाद्युदाहरणत्रय-परिहारः । शेषसूत्राण्यप्येतदुक्तोपपादनार्थतया सम्बध्यन्ते । तत्रोदाहृतानां गौणतानिमित्तं किं चिदिहैव वक्ष्यते परं तु तत्सिद्धिसूत्रे । सोऽरोदीदिति साकाङ्क्षत्वेनैकवाक्यताविधिस्तुत्योः प्रत्ययवयवं कथ्यते । स इति प्रकृतापेक्षः । कुतः । तत्प्रत्ययात् । तद्धि प्रकृतं प्रतीयते । अथ वा तच्छब्दस्य प्रकृतग्राहित्वं प्रसिद्धम् । स इत्युक्ते तच्छब्दप्रत्ययात् स एवार्थः । एवं तस्य यदश्रु तद्रजतमिति सम्बन्धः । सर्वाचेयमुपरितनस्य निन्दाग्रन्थस्योपपत्तिरिति तदनन्तरं तदभिधानमुपपद्यते । को ऽसौ ग्रन्थस्तं दर्शयति । यो बर्हिषि रजतं दद्यात्पुराऽस्य संवत्सराद्गृहे रोदनं भवेदिति । केन हेतुना तदेवं भवतीति तदुपपाद्यते कारणानुरूपत्वात्का-र्यस्य रोदनप्रभवरजतदानाद्रोदनोत्पत्तिस्तस्मान्न देयमिति सकलमदानस्योपपत्तिरिति । निन्दया तच्छेषत्वमर्थवत् । गुण-वादस्तु शब्दालम्बनं रुद्रशब्दोत्थापितविज्ञानवशेन रोदनसा-मान्यतो ऽदृष्टकल्पना । अश्रुणश्च शौक्ल्याद्यदि नामैतत्कठिनं भवेत्ततो रजतसदृशं भवेदित्युत्प्रेक्ष्य तत्प्रभवनिन्दा । धनत्या-

गेनात्यन्तोदारस्यापि गृहजनः पीड्यतइति तत्सामान्याद्वा रोदनोपन्यासः। एवं येन केन चिदालम्बनेन निन्दाविज्ञानोत्पत्तिः प्रतिषेधोपकारिणीति मुख्यार्थाभावे ऽप्यदोषः।एवं वपोत्खननादिवाक्ययोजना। स्वात्मवपोत्कर्त्तनेनापि हि विशिष्टप्रयोजनार्थं कर्माणि क्रियन्ते किमुत बाह्यधनत्यागेनेति स्तुतिः। यथा नेत्रमप्युद्धृत्यायं ददातीति लोके ऽपि त्यागिनं स्तुवन्तीति। वृत्तान्तपर्यवसायी च वेदस्तत्र प्रामाण्यमप्रतिपद्यमानस्तुतौ सत्यत्वान्नान्यत्रान्वेषणमर्हतीति निष्प्रयोजनोपाख्यानसत्यतया नार्थः। शब्दभावनाङ्गं वार्थवादाः। सा च प्रवृत्तिविज्ञानमात्रेणैवोपयुज्यते नार्थेन। अर्थात्मिकायां तु सर्वत्राविसंवादः सिद्ध एव। अथोच्येत, असदन्वाख्यानेन स्तुतिनिन्दात्वमिति सुतरां तत्र प्रतीयते। कामं परमार्थे वक्तारो भवन्ति कात्र स्तुतिर्निन्दा वा सत्यमेवैतदिति। असत्ये तु यस्मादन्यत्र दृष्टमप्यवधृतमिह गुणावन्तमिति ब्रवीत्यतो नूनं मे प्ररोचयति तथा गुणवन्तं सन्तं निन्दति निवर्त्तयितुमिति। ततश्चैवं विदित्वा यो यस्यानतिक्रमणीयस्तदनुरोधेन स तथा प्रवर्त्तते। वेदश्च प्रमाणमिति स्थितम्। तेन प्रवृत्तिनिवृत्त्यनुग्रहणीये स्वसंवेद्ये ऽर्थे पुंसः प्रशस्ताप्रशस्तज्ञाने भवतः। इह ते वेदेनोत्पादिते। तस्मात्तदनुरूपं व्यवहर्त्तव्यमिति लोके ऽपि यां क्रियां फलान्तरयुक्तां मेधादिहेतुत्वेनाप्तां मन्यन्ते तस्यां कं चित्प्रवर्त्तयन्तस्तदभिप्रेतं सौभाग्यादिफलमसत्यमप्युपन्यस्य नियुञ्जते। तत्प्रवृत्तश्चेतरो ऽपि क्रियाश्रयं फलं प्राप्नोति। यद्यपि च प्रतिपत्ता जानाति नैतदत्र पारमार्थिकं फलं मदभिप्रायानुसारेणैते(१)रुपन्यस्तं सर्वथा त्वपुरुषार्थे मां न प्रवर्त्तयन्ति

(१) णैवेतैरिति 'ग' पुस्तके।

तदसत्यं नामैतत्किमप्यन्यद्वाप्स्यामीति ज्ञात्वा ऽनुतिष्ठति। एवं वेदे ऽपि विधिना तावत्फलमवगमितमर्थवादास्त्वसत्येन नाम प्ररोचयन्तु न तद्गते सत्यासत्यत्वे किं चिद्दूषयतः प्रवर्त्तनमात्रोपकारित्वात्। यत्तु परस्ताद्भविष्यति तद्विधेरुपरि गतमिति निश्चित्य नैव विद्वांसो न प्रवर्त्तन्ते तस्मादुपाख्यानासत्यत्वमतन्त्रम्(१)। न हि शुक्तिकादृष्टसत्यरजतो यदि रजतान्तरं तद्देशे लभते ततो ऽभिसन्धीयते। शुक्तिकावत्तु किं चिदालम्बनं श्रुतिसामान्यमात्रेण सर्वत्र योजनीयम्। यथेह महाभूतानि प्रजाः पान्तीति प्रजापतित्वेनोच्यन्ते। वाय्वादीनां यथासंख्येन मध्यवर्त्तिनः साराङ्कुर्ण्यादयो वपास्तामग्नाविति तेनैव क्रमेण वैद्युते वृष्टिमार्वसि शरीरान्तर्वर्त्तिनि वायुमन्तश्चरत्वसामान्याद्रश्मिं लौकिके तदाप्यायनात्तस्य। ततो ऽज इति बीजादीनां सामान्येनानादित्वादजत्वप्रसिद्धेः। तमालभ्य प्राप्य प्रजाः पशूनाप्नोति। सर्वप्रजानां व्रीह्यादिपरिणामप्रभवत्वादित्यालम्बनम्। एतस्मिंस्तु प्रक्रमे सत्यं सालम्बनता किं तु स्तुतित्वमेव चीयते। अतः स्तुतित्वात्यागेनैव स्वार्थसत्यतां वर्णयामः। मन्त्रार्थवादेतिहासप्रामाण्यात्सृष्टिप्रलयाविष्येते तत्र सृष्ट्यादौ प्रजापतिरेव योगी तस्मिन्काले पुण्यकर्मोद्भवाभ्युपगमेन पशूनामभावात्स्वमाहात्म्येनात्मन एव पशुरूपमभिनिर्माय वपोत्खननादिक्रतवांस्ततो ऽसमाप्त एव कर्मणि तूपरः पशुरुत्थितः इतीदृशमिदं कर्म प्रत्यासन्नफलम्। एवं च महता यत्नेन प्रजापतिना चरितमिति सर्वं सत्यमेव। प्रतिसृष्टि चतुर्लिङ्गन्यायेन तुल्यनामप्रभावव्यापारवस्तूत्पत्तेर्नानित्यताप्रसङ्ग इति। कर्मसु कौशलेन दीव्यन्तीति देवा

(१) तस्मादुपाख्यानानां सत्यत्वमिति 'घ' पुस्तके।

ऋत्विजः ते देवयजनाध्यवसानानन्तरं दर्शपूर्णमासयोरनभ्यस्तं सौमिकं कर्मराशिमालोक्य कथमविदितं करिष्याम इत्याकुली-भावसामान्याद्दिङ्मोहाभिधानम् तथा च लोके कर्त्तव्यतासु दिशो मे परिभ्रमन्तीति वक्तारो भवन्ति । तत्र तद्धृदासेनादि-तियागः प्रशस्यते कथं तु तद्धृदसनावधारणावकाशदानात् । यावद्धि प्रायणीयायां प्राकृतानि समभ्यस्तानि कर्माणि क्रियन्ते तावदितरेषु भविष्यत्सु प्रणिधानं भवति अन्यथा सर्वस्मिन्न प्राकृते निरवकाशत्वादनवधारणं स्यात् । तेनादित्येनैवैतज्ज्ञा-पितमिति मोहापनयेन स्तुतिः ॥

## रूपात्प्रायात् ॥ ११ ॥

इह सर्वं क्रियमाणं मनसा सङ्कल्प्य वाचा चाभिधाय क्रियते तदत्यन्तान्तरङ्गभूतयोरप्यनयोर्दूरेण हिरण्यादूनत्वं स्तेयानृत-वादयोगादिति । या निन्दा तन्मात्रपर्यवसायिनी सा निषेधफला भवति । विधिपरा तु स्तुत्यर्था जायते तदुपपादनस्य दृष्टार्थ-त्वात् । यथा वक्ष्यति न चेदन्यं प्रकल्पयेत्प्रक्लृप्तावर्थवादः स्या-दिति ॥

## दूरभूयस्त्वात् ॥ १२ ॥

तस्माद्धूम एवेति (१) दिवाग्निरादित्यं गच्छतीत्यस्योपपत्तित्वे-न । तदिदं किमर्थमुच्यते । मिश्रलिङ्गाग्निहोत्रमन्त्रविधिस्तुत्य-र्थम् । कथं पुनरग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्यो-तिः सूर्यः स्वाहेत्यनयोर्मिश्रलिङ्गत्वम् । यदा (२) विविक्तावेवा-ग्निसूर्यौ देवतात्वेनोपलभ्येते । क चिदाह्नः । अग्निर्ज्योतिरित्यत्र

(१) एवेत्यादि इति 'ग' पुस्तके ।

(२) यत इति 'ग' पुस्तके ।

ज्योतिःशब्दः सूर्यवाची सूर्योज्योतिरिति पुनरग्निवाची तेनोभौ मिश्रलिङ्गाविति । तदयुक्तम् । ज्योतिःश्रुतेस्तेजःसामान्यवाचित्वेनोभयत्र सामानाधिकरण्येनोपपत्तेः । अन्यतरपर्यायस्य सन्नितरत्र न प्रयुज्येत । न हि यो यत्पर्यायः स तेनैव सह प्रयुज्यते । सूर्यवाची सन्प्रातर्मन्त्रे न प्राप्नोति । अग्निवाची सायंमन्त्रे । तस्मादुदाहरणं भ्रान्तिलिखितमितीमावुदाहर्त्तव्यावग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहा सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति । तद्विधेस्य स्तुतिः प्रथमविहितकेवलदैवत्यमन्त्रपर्युदासेन मिश्रलिङ्गविधानोपपत्तिरियमुच्यते । यदनयोर्मिश्रत्वं दिवाग्नेरनुप्रवेशान्नक्तं चादित्यस्येति केवलेज्या न युक्तेति । अस्मिन्नपि तु व्याख्याने पर्युदसनीयत्वेनैव पूर्वमन्त्रोदाहरणम् । इतरौ तु स्तुतिभागिनौ मिश्रलिङ्गाभिधानादेव ज्ञास्येते इति नोच्चारिताविति भाष्यं नेयम् । अथ वोभयोः केवलमिश्रलिङ्गयोर्मध्ये पठितोऽयमर्थवादः । तत्र उभयदैवत्योरन्या प्रशंसा इतरयोः पुनरियं यस्माद्दिवाग्निरादित्यं गच्छति तस्मात्सूर्य एव तदा ज्योतिः । एवं नक्तमग्निरतस्तौ व्यवस्थितावेव यष्टव्याविति स्तुतिः । कथं तु धूम एवेत्यवधारणा । दूरस्थैर्भूम्ना दिवा धूम एव गृह्यते रात्रावर्चिरिति केन चिदंशेन स्तुत्यालम्बनम् ॥

## स्वयपराधात्कर्त्तुश्च पुत्रदर्शनम् ॥ १३ ॥

प्रवरे प्रव्रियमाणे यजमानो वदेद्देवाः पितर इत्यादि । तत्प्रशंसार्थमुक्तमब्राह्मणोऽपि ब्राह्मणो भवति प्रवरानुमन्त्रणेनेति । तत्र प्रसिद्धब्राह्मणत्वानामेव ब्राह्मण्यलाभो निष्प्रयोजन इति तदुपपत्त्यर्थमुक्तं न चैतद्विद्म इति । ज्ञायमाने त्वज्ञानवचनं दुर्ज्ञानत्वात् । यत्सुखेनाज्ञानं तदज्ञानमेव । तच्च स्वपराधनि-

मित्तम्। सत्यपि च स्व्यपराधे यदि मातुरेव क्षत्रिणो वा पुत्रः स्यात्ततस्तयोः प्रसिद्धजातित्वान्नैव दर्शनता भवेत्। तयोरप्येवमेवं तत्पूर्वजयोरित्यनादिन्यायेन जातिरवधार्य्यैव। यतस्तु माता भस्त्रा पितुः पुत्र इति स्मर्तॄणां दर्शनम्। जनयितुश्च नानाजातित्वोपपत्तिस्तेन वर्णसङ्करः। वेदे ऽपि चाप्रमत्ता रक्षत तन्तुमेनमिति जातिविच्छेददर्शनं स्त्र्यपराधकर्त्तृपुत्रनिमित्तमेवोपपद्यते। अन्यथा ह्यपरिरक्ष्यमाणे ऽपि नैव स्वजातितन्तुविच्छेदो भवेत्। तेनास्ति प्रशंसावकाश इति। निरूढब्राह्मण्यप्रवरसङ्कीर्त्तनात्तत्प्रभवो ऽयमिति ज्ञानाद्ब्राह्मणः कृतो भवतीति स्तुतिः॥

## आकालिके ऽसा ॥ १४ ॥

यत्तदानीमेवोत्पद्यते तदाकालिकम्। तच्च सर्वलोकस्याभिमतं न यच्चिरभावि। तस्मात्प्रवर्ग्यकाले दिव्यतीकाशकरणं प्राग्वंशस्य प्रशस्यते। तद्धि सद्यःफलं धूमक्लेशाननुभवात्। इतरत्तु कर्मजन्यं सत्कदा चिद्भविष्यति। कस्तद्वेद शास्त्रमात्रगम्यं हि तदिदं तु सर्वप्रत्यक्षम्। तदपेक्षया च ज्ञायमाने ऽप्यज्ञायमानवचनमितरप्रशंसार्थम्। पाठान्तरमाकालिकडाद्यन्तवचन इति। अकालिकमिति वा पाठः काल इति लोके विप्रकर्ष उच्यते। तत्र भवं कालाट्ठञिति ठञि कालिकं न कालिकमकालिकम्॥

## विद्याप्रशंसा ॥ १५ ॥

अध्ययनविधिशेषत्वादफलविधिः सन् यथा विज्ञातमुखशोभा वाजिमत्त्वानुवादो (१) विज्ञायते न चैक एव प्रकारो मुखशोभायाः संस्थानं रमणीयता लावण्यं चेति। स्त्रीविषयं ह्येतत्।

(१) वाजिजन्मानुवाद इतिपाठो 'ग' पुस्तके ।

विदुषां पुनः पदवाक्यन्यायोद्गारि मुखं शोभते तेनात्मना मुख्ययैव वृत्त्या शोभते । पुत्रश्च वाजवान्ब्रह्मवर्चसद्वारेण । अथापि गौणता तथापि स्तुतिपरत्वाददोषः ॥

## सर्वत्वमाधिकारिकम् ॥१६॥

संस्कारकर्मत्वान्न फलविधिः । स्तुतेस्त्वालम्बनं निमित्ते नैमित्तिकवदुपचारात् । सर्वकामनिमित्तानां कर्मणां सामान्यसाधनभूतानग्नीनवाप्नोतीत्यर्थः । सूत्रं चैवं योज्यते । सर्वकामनिमित्तैः कर्मभिराहिताग्नित्वादिदानीमधिकृत इति वक्तव्ये सत्याधिकारिकं सर्वत्वं स्तोतुमवाप्तावुपचरितम् । ननु चाकाशगमनसुरकन्यालाभादयोत्यन्तासन्तः सर्वशब्देन वैदिकेषु कर्मसु निमित्तद्वारेणापि न शक्यन्ते ऽनुवदितुमतः पुनः सूत्रमुच्यते । यथैवौदनादिषु सर्वशब्दो ऽधिकृतापेक्षत्वान्न त्रैलोक्यं गृह्णाति तथात्राग्निकर्माधिकृतफलग्राही भविष्यतीत्यदोषः ॥

## फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात् ॥१७॥

तच्चैतत्समानस्वर्गादिफलेष्वग्निहोत्रादिषूपयोच्यतइत्युपन्यस्तं साधनानुरूपत्वात्साध्यानाम् । सर्वे हि कामाः पूर्णाहुत्यावाप्यमानाः स्तोकस्तोकाः प्राप्यन्ते तत्र फलभूमार्थिनः कर्मान्तरविधिरर्थवान् भविष्यतीति स्थिते चोद्यते । युक्तं लोके कृष्यादिफलानां प्रत्यक्षावगतत्वात्साधनानुरूपं जन्म । पूर्णाहुत्यादिषु त्वत्यन्तशास्त्राधीनत्वादविशेषश्रुते फले किंमूला विशेषकल्पना । न ह्यग्निहोत्रज्योतिष्टोमस्वर्गयोः कश्चिद्विशेषः श्रूयते । न चानुमानमीदृशे विषये समर्थम् । तदभिधीयते । विधि-

सामर्थ्यादेवेदं सिद्धम्। कथम्। यदि ह्यल्पान्महतश्च कर्मणः समं फलं जायेत ततोऽर्के चेन्मधु विन्देतेत्यनेनैव न्यायेनाल्पेन सिद्धे महति न कश्चित्प्रवर्त्तेत। तत्र विधिशक्तिबाधः स्यात्। अविहत-शक्तिस्तु सन् अर्थाद्वा कल्पनैकदेशत्वादिति विधिरेव फलाधि-क्यमङ्गीकरोति। अतो यथा विश्वजिदादौ फलसद्भावः प्रमाण-वानेवमिह तद्विशेष इति। किं च ॥

कर्मणामल्पमहतां फलानां च स्वगोचरः।
विभागः स्थानसामान्यादविशेषेऽपि चोदिते ॥

यथैव क्रमाम्नातानामङ्गाङ्गिनां प्रथमस्य प्रथमं द्वितीयस्य द्वि-तीयमिति विनियोगव्यवस्था तथैव कर्मगोचरेऽल्पस्य कर्मणः परिमाणसामान्येन फलगोचरेऽल्पमेवोपतिष्ठते। मध्यमस्य मध्यमं महतो महदिति स्थानमेव विनियोजकम्। स्मरणम-प्येवमेव। चातुर्मास्यसोमेषु च फलार्थवादो यदाग्निहोत्रं जुहो-त्यथ दश गृहमेधिन आप्नोत्येकया रात्रियेत्यारभ्य न्यूनाग्निहो-त्रदशसंवत्सरप्रयोगादिभिरेकदर्शपूर्णमासादिप्रयोगावाप्तिवच-नं कर्माल्पत्वमहत्त्वकृतं फलभेदं दर्शयति ॥

## अन्त्ययोर्यथोक्तम् ॥ १८ ॥

यथैव वाङ्मनसयोर्निन्दा हिरण्यस्तुत्यर्था तथा शुद्धपृथिवी-निषेधः प्रकृतार्थवादः स्यादित्येवं हिरण्यनिधानस्तुत्यर्थो न प्रतिषेधमात्रफलः। नान्तरिक्षे न दिवीत्यग्निश्चित्येन शुद्धपृथिवी-निषेधसमर्थनायैव यथान्तरिक्षे दिवि वा चयनं न प्रसिद्धं तथा हिरण्यरहितायां पृथिव्यामिति स्तवनम्। अनित्यसंयोगो ग-तार्थः। परं तु श्रुतिसामान्यमिति। प्रयोजनं रात्रिसत्रे पूर्वपक्षे स्वर्गः फलं स्यादिति सिद्धान्ते त्वर्थवादस्थमेव फलम् ॥

## विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १९ ॥

एवमानार्थक्योपाख्यानादिप्रतियोगिष्वर्थवादेषु व्याख्यातेषु इदानीं विधिप्रतियोगिनो विचार्यन्ते। कुतः संशयः। पूर्वत्र हि स्वार्थानुपयोगित्वेन दूरलक्षितस्तुतिग्रहणमङ्गीकृतम्। तत्संभवे तु स्तुतिरप्यनर्थकतुल्या ऽऽपद्यते। विध्यंशश्च न कथं च नान्यस्मात्सिद्ध्यति। प्ररोचना पुनः कथं चिद्विध्युद्देशादप्युपपद्यते इत्युक्तं पुरस्तात्। अपि च प्रधानं विधिरङ्गं स्तुतिस्तत्र प्रधानविशेषणसंभविनस्तद्ग्राहित्वमेव युक्तम्। समाप्ते च विध्युद्देशे ऽर्थवादः प्रवर्त्तते तत्प्रक्रमावस्थायामेव तु भावनांशाः सन्निपतन्ति। विशेषेण तु फलं प्राथम्यप्राधान्याभ्यामित्यादि मन्वानो ऽपूर्वत्वादिति वदिति। तदपेक्षया च स्तुतिमात्रमनर्थकं मन्यते। ननु चैवंजातीयकः फलविधिः फलार्थवादविचारश्चतुर्थे ऽपि द्रव्यसंस्कारकर्मस्विति भविष्यति। अतो नेह प्रस्तोतव्यः। तत्र केचिदाहुः। अनेन गतार्थत्वात् तत्रैवैष पर्यनुयोगो युज्यते न त्विदं पुनरुक्तमिति। सत्यमेवं यदि तु तत्कालप्रतीक्षणात्किं चित्परिहारान्तरं लभ्यते ऽतस्तत्रान्विच्छेम। अथ पुनरिहैव शक्यते वक्तुं तथा सतीदानीमप्युच्यमाने मन्दो दोष इति। अत्रापरे वदन्ति तेन फलविधित्वनिराकरणमात्रमिह त्वर्थवादनाय त्वर्थवादः स्यादिति तत्र वक्ष्यति तद्विधित्वनिराकरणमात्रपरमेव प्रष्टव्यम्। तदयुक्तम्। यतस्तेन फलविधित्वात्प्रत्याविनानामानर्थक्यप्रसक्तौ पूर्वाधिकरणेनैव स्तुत्यर्थता साधिता। तथा च दर्शितं शोभते ऽस्य मुखमित्यादिषु। केचित्पुनराहुः। युक्तं वायुर्वै क्षेपिष्ठेत्यादीनां

स्तुतित्वम् । ऊर्जो ऽवरुध्या इति पुनर्यथा फलविधित्वात्प्रत्याख्या-
ते तथैव विसंवादेन स्तुतित्वादपीति कामं विधिर्भवतु येन का-
लान्तरभावित्वेन कथं चिद्विसंवादो निवर्त्तत इत्यारम्भः । तद-
प्ययुक्तम् । अपि च वेदे व्यक्तमसंवाद इति ह्यत्युच्चयहेतुरपुन-
रुक्तः स्यात् । अधिकरणशरीरं तु तदेव । विसंवादो ऽपि च
गुणवादस्त्वित्यनेन न कश्चिदपरिहृतः । पुनरपि च तावन्मात्रमे-
वोत्तरं भविष्यति । तस्माद्विधिर्वा स्यादित्यविशेषोपादानाच्चतुर्थे
च फलश्रुतिग्रहणादिहाशेषद्रव्यगुणक्रियादिविधिसरूपास्तत्र
फलविधिसरूपा एवोदाहरणमित्यपरे । तथा च विधिश्चानर्थकः
क चित्प्रकरणे च सम्भवन्निति चाप्सुयोनिर्वा अश्वो ऽप्सुजो वे-
तसो यो विदग्ध इति चोदाह्रियते । अन्यथा फलविधिमात्रो-
पन्यासे तदसंबद्धमेव स्यात् । इहापि तस्य तावद्विशेषविषयत्वा-
दिदमगतार्थं भवेत् । अनेन तु सामान्यतः सर्वविषयावरोधिना
तत्पुनरुक्तमेवेति व्यवस्थया के चिदुदाहरन्ति । अत्र द्रव्यादि-
विधीनेव तत्र फलविधीनेव भाष्यकारोदाहरणमतन्त्रीकृत्योदा-
हरणान्तरं दातव्यमिति । अत्र वदामः । किमधिकरणद्वयमव-
श्यारब्धव्यं येनैवमुदाहरणव्यवस्थाश्रीयते न ह्युदाहरणभेदा-
दधिकरणं भिद्यते । मा भूद्यथाव्यवस्थिते ऽपि खादिरौदुम्बरत्व-
भेदादपौनरुक्त्यम् । न्यायविषयत्वेन त्वधिकरणानां तद्भेद एवा-
पौनरुक्त्ये हेतुः । द्रव्यादिविधयो ऽपि न सर्वे विचारिताः । के चि-
त्तावद्विह सूत्रे । के चिन्निवीताद्यधिकरणेषु । परकृतिपुराकल्प-
द्वारेणान्ये षष्ठे । यद्दचा स्तुवत इत्यादयो ऽर्थैकत्वाद्विकल्प इति
नवमे । जर्त्तिल(१)गवीधुकविधिसरूपा दशमे । अतश्च न पुनरु-

(१) वन्यातिलाः ।

ज्ञाता महान्दोष इत्येव वक्तव्यम्। अथ वैकस्यैव न्यायस्य क्व चित्कश्चिदंशः शोध्यत इति पुनरारम्भः। स्पष्टं वा विषयनानात्वमेवं वर्णनीयम्। सर्वविधिसरूपाणां केवलं विधित्वनिराकरणेनार्थवादत्वमिह सिद्धम्। यस्तु चतुर्थे पुनरारम्भः सो ऽर्थवादकल्पिते विधौ फलाकाङ्क्षावेलायामन्यार्थोपात्तमपि क्रतुप्रयोगवचनात्तदेव संनिचिततरं क्रतुसंबन्धस्य च विशेषमात्रं सुकरम्। इतरथा संबन्धस्तद्विशेषस्योपकारकत्वं कल्पनीयमिति रात्रिसत्रप्रतिष्ठादिवत्फलविधित्वमपीति पूर्वपक्षाभिप्रायः। कथं चित्प्रयोजनान्तरे लभ्यमाने नैकस्यानेकार्थता युक्ता तस्मादर्थवादत्वमेवेति सिद्धान्तः। एतेन निवीतावधिकरणानि व्याख्यातानि। अथ वौदुम्बराधिकरणपूर्वपक्षं कृत्वा चिंतास्ताः प्रत्येतव्याः। विधित्वाभ्युपगमेन हि कस्य शेषः क्रतोः पुरुषस्य वेत्यादि विचार्येह सिद्धेनार्थवादत्वेनोपसंहारः। तथा परकृतिपुराकल्पयोः किं तद्गोत्राणामुत सर्वपुंसामिति चिन्तितम्। एवमूहबाधप्रसङ्गेन नवमदशमगता चिन्ता तत्सिद्धिसूत्रे ऽनुगुणवादनिमित्तमात्रकथनम्। अथ वा फलविधावेव यत्र भेदेन स्तुतिफलपदानि भवन्ति तदिहोदाहरणम्। यथा त्रैवोर्गुदुम्बर ऊर्कपशव इत्येतैरेव स्तुतिः। ऊर्जोवरुद्ध्या इत्यनेन फलमिति। यत्र पुनस्तावन्मात्रेणैव फलं वा स्तुतिर्वा वक्तव्येति भवति ते चतुर्थ इति। अथवा तत्र परार्थत्वादिति हेतुव्यपदेशात्प्रसिद्धेन च हेतुना व्यवहाराद्ये विज्ञातपारार्थ्यास्तउदाहरणं यथा यस्य पर्णमयी जुहूरिति। अत्र ह्यवश्यं जुह्वनुवादेन पर्णमयीत्वं विधातव्यं स्वातन्त्र्येण फलसंबन्धाशक्तेः। सर्वत्र हि गुणः फलाय चोद्यमानः कं चिदाश्रयमपेक्षते। न च प्रकरणमन्तरेणाश्रयप्राप्तिः। तदिह यदि पर्णम-

योत्वेन फलं भावयेदिति वचनं व्यज्येत किमाश्रितेनेत्यपेक्षायां किं संबध्यताम् । जुह्वरिति चेन्न । वाक्यभेदप्रसङ्गात् । सापि च प्राक्क्रियालाभान्नैव निराकाङ्क्षा भवति । न च क्रियासम्बन्धे प्रमाणमस्ति । तस्मादनिर्वहणादेतद्वचनव्यक्तिपरित्यागेनेतराश्रयणम् । तत्र च जुह्वा जुहोतीत्यस्याः प्रकरणे निर्ज्ञातप्रयोजनात्वादविच्छिन्नजातिविशेषायास्तदाकाङ्क्षायां सत्यां यावदेवपर्णत्वजातिरूपनीता तावदविज्ञातप्रयोजनावस्थत्वादङ्गतां प्रतिपद्यते । ततश्च निराकाङ्क्षीभूतायास्तस्मिन्नेव वाक्ये फलकल्पनानिमित्तं नास्तीति युक्तमर्थवादत्वम् । इह पुनर्वैकृतपशुप्रकरणे श्रूयमाणमौदुम्बरत्वमदाक्रियते । न च तस्य प्रसिद्धं पारार्थ्यं येन चतुर्थाधिकरणविषयता भवेत् । कथम् । अत्र हि न तावदप्राप्ते यूपे जातिविधानं शक्यम् । तत्प्राप्तिश्चेदवश्यं क्लृप्तोपकारप्रकृतखादिरत्वादिनैव निराकाङ्क्षेण भवितव्यम् । तत्कुतो जात्यन्तरस्य तादर्थ्येन विधिरतः फले विधानम् । यापि चाश्रयापेक्षा सापि प्राकृतकर्मसम्बन्धिचोदकप्राप्तयूपग्रहणान्निवर्त्तत इत्यविघातः । तेन प्रागेव पारार्थ्यात्फलसम्बन्धप्रसक्तिरवश्यं न्यायान्तरेण निराकर्त्तव्येत्येतदधिकरणारम्भः । इदमपरं मतम् । औदुम्बरवाक्यं जुह्वादिवाक्यं चोभयमुभयत्रोदाहरणम् । कथं भावनांशान्तरविचारादपौनरुक्त्यम् । साध्यसाधनसम्बन्धस्तावद्द्वयोरपि योग्यत्वेनोपात्तयोरवकल्पते नान्यथा । तत्र चतुर्थे साधनांशयोग्यविचारमनादृत्याभ्युपेत्य वा केवलसाध्यांशविचारः । किमीदृशेन कामशब्दोपबन्धरहितेन वर्त्तमानफलं सम्बन्धाभिधायिताफलत्वं शक्यते गमयितुं न वेति विचारः । इह पुनः साध्यांशमनादृत्याभ्युपेत्य वा केवलसाधनांशविचारः । किमीदृशेन विधिविभ-

क्तिरहितेन द्रव्यगुणक्रियाः कं चित्प्रति साधनत्वेन प्रतिपाद्य-न्ते नेति । यच्च यदात्मना प्रतिपादितं भवति तत्प्रतियोगिविशे-षापेक्षं सत्पदान्तराद्युपात्तेन तेन सम्बध्यते । तत्र साध्यमित्यव-धृते परिशेषादवशिष्टं साधनं गम्यते । एवं साधनावधारणेपीति द्वावप्यंशौ स्वरूपेण निरूपयितव्यौ । तदिह साधनांशे विचार्य-माणे यो नाम फलांशस्य संस्पर्शः स चतुर्थे सिद्धः प्रसङ्गाद्धेतु-त्वेनेति मन्तव्यः । तथा यस्तत्र साधनांशपरामर्शः स इह सिद्ध-स्तत्र प्रसङ्गादित्यपुनरुक्तम् । नन्वेवं सति विध्युद्देशचिन्तेयमि-त्यर्थवादाधिकरणेन न सम्बध्यते । नैष दोषः । तद्दशेनैवार्थपरि-च्छेदात् । यदि ह्यसौ विधीयमानतया पूर्वेणावगतस्ततोनार्थवा-दत्वमथ स्तुत्यर्थतया ततो ऽर्थवादत्वमिति । तत्र पूर्वपक्षाभिप्रा-यः । सर्वथा साध्यसंनिधाने यदुच्चरितं तदाकाङ्क्षावशेन तादूप्ये-णानुपात्तमपि साधनं भवति यथैव यागेनेत्यनुदितं सम्बध्यते त-थैवोदुम्बरेणेति । तत्र विधिः किं कुर्यात्पुरुषं प्रवर्त्तयेत् । स च फ-लार्थितयैव प्रवृत्त इति किं विधिना । अथ वा प्रयोगवचनविहि-तस्य फलसम्बन्धमात्रमनेन क्रियते । पञ्चमो वा लकारो विधा-स्यति । अर्थवादैकदेशो वेत्युक्तमेव तस्मादूर्जोवरुद्ध्या इति ता-दर्थ्यचतुर्थ्यैवैवं कामशब्दादपि स्फुटतरं फलमुपात्तमिति तस्मि-न्नौदुम्बरताविधिः । ननु फलस्य विधानमिति ग्रहीतव्यं भावार्था-धिकरणे फलविधिनिषेधात् । ऊगुदुम्बर इत्यतः स्तुतिरित्यवि-रोधः । तस्मान्मुख्यविधिसम्भवे लक्षणया न स्तुतिः प्रतिपत्तव्येति ॥

## लोकवदिति चेत् ॥ २० ॥

लोके तावद्बुद्धिपूर्वकारिणः पुरुषा मात्रामपि न निष्प्रयोजनां प्रयुञ्जते तत्र च क्रेतव्येति विहिते बहुक्षीरादिभिर्गुणैः स्तुतिः ।

प्रवृत्तिविशेषनिमित्तत्वेनाश्रीयते । न च चोरादयः फलविषयः प्रत्यक्षविषयत्वादतः स्तुतिः । एवं वेदेपि । श्रुत्यसंभवाच्च लक्षणापरिग्रह इत्यदोषः ॥

## न पूर्वत्वात् ॥ २१ ॥

नायं दृष्टान्तः स्तुतेः प्रमाणान्तरावगत्यपेक्षत्वाल्लोके तत्संभवादुपपत्तिः । वेदे त्वविदितवादत्वान्न श्रद्दधीरन् । अथ वा लोक एव यद्यविदितं कश्चिद्वदेत्तदा नैव श्रद्दधीरन् । पूर्ववचनादिवेति विध्युद्देशादि वा । अथ वा वैधर्म्योपमा । यथाधिगतपूर्ववचने श्रद्दधन्ते नैवमविदितवादे । न चोक्तिमात्रेणैते वक्रश्चोरादयः प्ररोचयन्ते किं तर्हि विदितत्वादेव । वेदे त्वर्थवादासत्यत्वेन विधौ जाताशङ्को न प्रवर्त्तेत । अथ वा यो विधिमुत्क्रम्यार्थवादं प्रार्थयते नूनमस्य विधावविश्रमः । तत्र चेदनाश्वासो ऽर्थवादे कुतः प्रत्यय इति । अपि च वेदे व्यक्तमसंवादो वर्त्तमानेनोर्जोवरोधनेनेयं स्तुतिर्न च तदस्ति । तत्राविद्यमानवक्रचोरसङ्कीर्त्तनवदेतत्स्यात् । स्वरूपतस्तावदुदुम्बरे ऽन्नत्वं पक्षधर्मेणाप्रसिद्धं अन्वयाप्रसिद्धेश्च हेतुत्वाप्रसिद्धिः । न हि यद्यदन्नं स स यूप इति लोके वेदे वा प्रसिद्धमित्यसम्बद्धं तस्मादसंवादाद्वरं विधिरेव किं स्तुत्या संवादापेक्षिण्येति ॥

## उक्तं तु वाक्यशेषत्वम् ॥ २२ ॥

ऊर्गुदुम्बरइत्यादि तावदूर्जोवरुद्ध्या इत्यस्योपपत्तितयैकवाक्यभूतं न विच्छिन्नं स्तावकम् । न ह्यन्नमुदुम्बर इत्युक्ते पुरुषं प्रति प्रशस्तता गम्यते । ऊर्जोवरुद्ध्या इति तु प्ररोचयति । तदुपपत्तिरितरेति सङ्गच्छते । तस्मात्कृत्स्नेन फलं प्ररोचना वा । तत्र यद्य-

पि तावल्लिङ्गादिः स्यात् तथापि सुतरामर्थवादतया गृह्णीयात्। किमुत वर्त्तमानापदेशो यो विधिसिद्ध्यर्थमेव। प्रकरणाच्च यागोपकारि प्रयोजने लभ्यमाने किमित्यवाचकात्फलं कल्पयिष्यामः। प्रकरणं वाक्येन बाध्यत इति चेन्न। अविरोधात्। यदि ह्याकाङ्क्षाग्राहित्वेन वाक्यप्रकरणे सन्निपतेतां तथा सति बाधः स्यात्। इह तु प्रकरणमौदुम्बरताविधिं गृह्णाति सोप्यूर्गुदुम्बर इत्यादिलभ्यां प्ररोचनां तत्र तद्विशिष्टौदुम्बरत्वग्राहिणः प्रकरणस्य को विरोधः। तस्मात्फलविधिसामर्थ्याभावात्प्रकरणाबाधेन निवेशसम्भवो नातिक्रमितव्यः। प्ररोचनापि च वाक्यशेषादुपपद्यमानार्थापत्त्या विध्युद्देशादेव कल्पिता भविष्यति अन्यत्र विधिरपि हि तावत्तां कल्पयेत्। इह तु स स्वयमेव दुःस्थितः किं प्ररोचनया करिष्यतीति। न च स्तुत्युपयुक्तस्य पुनः फलेपि प्रतिष्ठादाविव व्यापारो युज्यते। रात्रिसत्राणां ह्यनन्यपरत्वाद्गुर्व्यपि कल्पनाश्रीयते। अत्र तु प्रकरणादस्ति प्रयोजनसिद्धिरित्युक्तम्। जातिविशेषस्य च योग्यतयैव काष्ठाङ्गत्वं प्रसिद्धं न फलार्थता। यूपशब्दोऽपि च कर्माविष्टकाष्ठवचन इत्युपनीतमात्रमेव गृह्णाति। अतस्य प्रसिद्धे पारार्थ्येऽर्थवादता। यत्तु यूपे निराकाङ्क्षो जातिं प्रतीति शरवद्बाधो भविष्यतीति न चाबाधप्रकारोऽस्ति। काम्यपक्षेऽपि तदभ्युपगमात्। एतावांस्तु विशेषः। तव पुरुषार्थत्वाद्भिन्नविषयेण सता कथं नित्यसङ्गलभ्यसमानाश्रयत्वेन मम तूभयोः क्रत्वर्थत्वात्समानविषयेणेति। न चात्र जातौ फलाय विधीयमानायां दध्न इव होम आश्रयो मनसि विपरिवर्त्तते। यो हि पशुयागः प्रकृतः स तावदयोग्यः पशुनियोजनं च यूपद्वारेण योग्यं तदपि [illegible] यूपेनाप्रकृतम्। [illegible] पर्णमयत्वादङ्गेष्विति प्रधानादवतीर्य

तदङ्गमाश्रीयते। यो हि प्रधानोपकारित्वेन श्रूयते स तदङ्गे ऽपि स्थित उपकरोतीत्येवं कल्प्यते। न त्विह तथा ऽत्र हि प्राधान्या-भाजा गुणेनाश्रयः प्रार्थ्यते तत्र प्रधानं सन्निहितं तद्यदि न यो-ग्यं ततो वचनव्यक्त्यन्तरमाश्रीयताम्। न चावतरणं संभवति। न चानेनैव वाक्येनाश्रयो दीयते। वाक्यभेदप्रसङ्गात्। द्वौ हि सम्ब-न्धौ तदा स्याताम् गुणफलसम्बन्धस्तदाश्रयसम्बन्धश्चेति। यु-गपच्चौदुम्बरताफलयूपौ प्रत्युपादीयमानोद्दिश्यमाना विरूपा स्यात्। अथोभयोद्देशेन विधीयते तथा ऽपि फलाननुरक्ता यूपेन सम्बध्यते यूपाननुरक्ता च फलेन। यत्तु विनैव विधायकात्स्वेच्छ-यैव प्रवर्त्तिष्यामहइति स्वच्छन्देन सह नास्ति विधिवादः। पुरु-षार्थफलत्वं तु न प्राग्विधेः सिध्यति संनिहिततरौदुम्बरत्वादिसा-ध्यांशावरोधात्। यत्तु प्रयोगवचनो विधास्यतीति न पुरुषार्थेषु तस्य शक्तिरसंयुक्तं प्रकरणादिति वक्ष्यति। यदि तु तेन विधीयते सिद्धं कर्मार्थत्वम्। पञ्चमलकाररूपं तु वर्त्तमानापदेशेन सन्दि-ग्धम्। तस्माद्वर्तमानफलाभिधायित्वाच्चतुर्थे चैवंकामशब्दरहि-तस्य फलविधित्वनिराकरणात्प्रधानफलमेवेदं प्ररोचनायै सङ्की-र्त्त्यतइति युक्तम्। सर्वत्र च स्तुतिपरत्वात्तदुपायेषु सत्यासत्या-न्वेषणं व्यर्थम्। शब्दमात्रोपयिकत्वात्। गुणवादेन च संवादात्। साधनत्वे ऽपि च प्रीतिसाधनत्वेन हृष्टिहेतुत्वेन वा संवादः॥

## विधिश्चानर्थकः क्वचित्तस्मात्स्तु-तिः प्रतीयेत तत्सामान्यादि-तरेषु तथात्वम् ॥ २३ ॥

यदि चैवञ्जातीयका विषयो भवेयुस्ततः पूर्वोदाहृताः सर्वए-व द्रव्यगुणक्रियाविषयो भवेयुः । वायुः क्षेपिष्ठा देवता कर्त्तव्या अप्सुयोनिरश्वः कर्त्तव्यः । अप्सुजो वेतसो ऽवकाश्च कर्त्तव्याः । आपः शान्ताः ऊर्गुदुम्बर इत्यादि । तत्र यद्यपि के चित्क्रिया-दिविषयः शक्यन्ते कर्तुम् । एते त्वशक्याः स्वभावसिद्धेः प्रय-त्नेनापि चानिष्पत्तेः । वायुवेतसावकादिषु स्वभावसिद्धिः । अ-श्वोदुम्बरादीनामशक्यता । कीदृशी स्तुतिस्तां दर्शयति । शम-यित्रीभिरद्भिरित्यादि । तत्रासङ्गतेरयग्रन्थ इति व्याख्यातारः स-मर्थयन्ते । यस्मादिहावकानत्सम्बन्धयोः शमयितृत्वस्य च नैवो-पन्यासः कृतः वेतस उपन्यस्तः सो ऽपि स्तुतिवेलायां न प्रदर्शित इति तत्र त्वियं गमनिका । वेतसोदाहरणेनैव तुल्यत्वादवका-दीन्यप्युदाहृतानि । न चायमश्वावकयोः परस्परेण सम्बन्धः क-थ्यते । केन तर्ह्यद्भिः । तावता तु न स्तुतिः का चिदुन्मीलिते-त्यर्थवादान्तरापेक्षाप्रवृत्तां तां दर्शयति । आपो वै शान्ता इति । अनेन हि विधित्वात्प्रच्युतेनापां शान्तत्वमुच्यते तत्र कस्य चि-त्प्रसिद्धापसम्बन्धस्य तन्मात्रसङ्कीर्त्तनादेव स्तुतिर्भवति । अन्येषां तु सम्बन्धिसम्बन्धात्सम्बन्धः कीर्त्त्यते । प्रसिद्धशान्तत्वसम्बन्धा-भिरद्भिः सम्बन्धाद् अश्वादिरपि शान्तात्मकस्तत्सम्बद्धेन च क-र्मणा यजमानस्य कष्टं शाम्यतीत्येवंविधशान्तत्वज्ञापनार्थम् । एवं क्षिप्रदैवतेन शीघ्रं फलप्राप्तिरन्नमयेन च यूपेनान्नप्राप्तिरि-ति स्तुतित्वे सिद्धे तत्समानन्यायानामप्येवमात्मकत्वम् ॥

**प्रकरणे च सम्भवन्नपकर्षो न कल्प्ये-त विध्यानर्थक्यं हि तं प्रति ॥ २४ ॥**

विधिपक्षे चायमपरो दोषो यदि तावद्यथावस्थितवाक्यग्रहणं ततः प्रकरणगतविदग्धोद्देशेन देवतान्तरविधानादुत्पत्तिवाक्यशिष्टदेवतापकर्षणं स्यात् इयं वा तामप्यकर्षतीत्यपकर्षः। तच्च नैमित्तिकत्वात् अभ्युदितेष्टिवद्बाधोपि कल्प्येत यद्यन्यथा न सम्भवेत् सति तु सम्भवे न युक्तमेतत्। अथैतद्दोषभीतैरर्थलभ्यैवचनव्यक्त्यन्तरं व्यवच्छिन्नकल्पनयाश्रीयेत। यो नैर्ऋतः स विदग्धः कर्त्तव्य इति। ततः प्रकरणे नैर्ऋताभावाद्यत्रासौ विच्छिन्नस्तत्र विदग्धता नीयेत तत्र प्रकरणं बाध्येत। न चाबाधसम्भवे तद्युक्तमतो ऽर्थवादत्वादनपकर्ष इति॥

## विधौ च वाक्यभेदः स्यात् ॥२५॥

स्तुतित्वेन विधिविभक्तिमुपजनय्य पुनस्तेनैव फलकल्पनायां वाक्यभेदस्तस्मादर्थवाद एवेति॥

## हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम्॥२६॥

इह ये हेतुवन्निगद्यन्ते हि शब्दादिभिर्न च परमार्थहेतवस्तउदाहरणम्। तत्र यदि तावद्धेतुत्वं विधीयते ततः पूर्वेणैव गतम्। यदिह हेतुत्वं तच्छूर्पहोमसम्बन्धं प्रति न चाविच्छिनो ऽसावस्तीति कस्य हेतुरुच्यते। अथ भूतानुवादमात्रं सत्तु वायुक्षेपिष्ठत्ववद्गतमित्यनारभ्यमेतत्। उच्यते। न तावदनेनैव वाक्येन हेतुत्वं विधीयते न च भूतानुवादमात्रं किं तर्हि हेतोः प्रसिद्धिपूर्वकत्वात्सिद्धवदुपदिष्टस्य यावत्यसिद्ध्याशङ्का तत्रार्थापत्तिलभ्याद्वचनात्सिद्धिः। यापि चार्थवादाकाङ्क्षा कस्मादिति साप्यनेनैव हेतुना निवर्त्त्यत इति मन्यते। अथाप्यर्थवादत्वं तथापि तदन्तनिर्णीतहेतुत्वमेवेति सर्वान्नकरणविषयं विज्ञायते ततश्च हेतुरप्य-

ष्विति पूर्वः पक्षः । सम्बन्धस्य च विधेयत्वात्तद्गतमेव हेतुत्वं होमस्येति वदन्ति । नन्वप्रसिद्धे कार्यकारणभावइति । केचिदाहुः । कार्यकारणयोरेवानुमानम् । तथा च दर्श्नेन्द्रियकामस्येत्यत्रापि वक्ष्यति । तत्त्वयुक्तम् । कार्यकारणभूतानामपि कृत्तिकादीनामचिरोद्गतरोहिण्यादिप्रतिपत्तिहेतुत्वदर्शनात् । अतो गम्यगमकत्वमेव कार्यकारणभावं मन्यते । ननु सोप्यनुमानोत्तरकालीनत्वादनङ्गम् । सत्यम् । अन्यस्मिन्नेव तु सम्बन्धे सति पश्चात्प्रसिद्ध्यन्तमेनमनुमानव्यवहारोपलक्षणत्वेनोपन्यस्यति । यद्वा शास्त्र्यभिप्रायं ययोरेव हि व्याप्तिग्रहणकाले गम्यगमकसामर्थ्यात्मना कार्यकारणभावित्वेन सावधृता तत्रैव हेतुता । अथ वोदाहृतविषयहेतुलक्षणमेतत् । अविनाभावो ह्यनेककार्यकारणस्वस्वामिसहचरभावादिप्रभेदभिन्नस्तत्रान्नकरणता होमे हेतुत्वेनोच्यमानसम्बन्धान्तराभावात्कारणत्वेन स्यात् । तच्चाप्रसिद्धं तस्मान्न हेत्वपदेशः । सत्यं लोके हेतुव्यवहारकालात्प्रथमं प्रमाणान्तरेण सम्बन्धप्रसिद्धिरपेक्ष्यते वेदे तु हि शब्दप्रतिपादितहेतुत्वान्यथानुपपत्त्या सम्बन्धाभिधायि दृष्टान्तवचनं कल्प्येत यद्यदन्नकरणं तेन तेन जुहोतीति तेन चोपपन्नं हेतुत्वम् । किं प्रयोजनमिति यदि च हेतुरवतिष्ठेतेत्यनेनाभिप्रायेण । अपरस्त्वाह व्याप्तौ सिद्धायां सर्वान्नसाधनसाधनको होमः सिद्धो भवति । कुत इति । स एव सिद्धान्ताभिप्रायः । अथ वा कुतो दर्विपिठरादेः साधकतमत्वम् । इतरस्त्वाहान्नक्रियायां तावत्तस्याश्चैवास्ति तावन्मात्रं वाश्रयिष्यते । शक्यते च तेनापीत्युपपत्तिशब्दस्यार्थः । पूर्वेण तु समानार्थता गम्यते । तेन विवक्षा । शास्त्र्यभिप्रायमेतत् । यदेव हि तदुपयोगिमात्रं तदेव शक्यते कथं चि-

त्साधकतमत्वेन विवक्षितुम् । अथ वार्थवत्त्वं करणविभक्तिनिर्द्दे-
शालम्बनमुपपत्त्या पुनर्वर्त्तमानान्नक्रियस्य हेतुत्वाभिधानात्ता-
दृशस्य होमं प्रत्यनुपपत्त्या शङ्कयोपपत्तिं वदन्ति, शक्यते च तेने-
ति । तत्र चोदयति । एतद्धि क्रियतइत्युच्यते तत्कथं शक्यतइ-
त्यभिधीयते । वर्त्तमानक्रियस्यासम्भवादित्युत्तरम् । यद्वा स्वय-
मेवाशङ्का परिहरति । यदि च न दर्विपिठरादीत्युभयोः पराम-
र्शः साधकतमत्ववर्त्तमानत्वे चेत्तत्र न विद्येते शूर्पेऽपि तथैवेति
स्तुतिर्न स्यात् । तेन यथा तव स्तुत्यर्थः कथं चिद्विद्यते तथा मम
हेत्वर्थ इत्यविशेषः । हेतौ च श्रुतिरित्याद्यसम्बद्धवाक्यसम्बन्धि-
दोषादन्ते द्रष्टव्यम् । स्तुतौ लक्षणोत्पन्नकरणत्वेन सर्वजनाभि-
मतेन प्राशस्त्यं लक्ष्यते । शूर्पेणेति चास्मिन्पक्षे नित्यानुवादोऽन्न-
करणसामान्येनैव प्राप्तस्य । इत्थं वा सूत्रगमनिका तत्रार्थवत्त्वं
तावदर्थवादात्प्रयोजनवत्तरत्वमुपपत्तिरित्यप्रसिद्धं सम्बन्धोऽपि-
काल्पनिकवाक्याश्रयणात् तस्माद्धेतुः ॥

## स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य ॥ २७ ॥

शूर्पेणेति तावत्करणविभक्तिश्रुत्यैवावरुद्धो होमो नानुमा-
निकैर्दर्विपिठरादिभिः सह बाधविकल्पसमुच्चयान्प्रतिपद्यते ।
होमस्य तेन निराकाङ्क्षीभूतो नान्यत्प्रार्थयते । अनुत्थितायामेव
च दर्विपिठरादिश्रुतौ शूर्पं प्राप्नुवत् श्रुत्यनुमानं प्रतिबध्नाति । ते-
न शवीत्यचोदना च तस्येति । हेत्वपदेशस्य स्तुत्यैवोपपद्यमानः
सन्नाश्रुतदृष्टान्तकल्पनायै प्रभवति । शूर्पश्रुतिस्य विद्युद्देशपाति-
न्यनन्यप्रयोजना विशिष्टा च सती परित्यक्तुं न युज्यते । तस्माद्य-

द्वान्नकरणत्वादित्येष कर्त्तव्य इत्यनेनापेक्षितत्वान्नक्षणायैतत्प्रतिपादयति प्रशस्तत्वादिति । अथ वान्तःकरणत्वादिति श्रुतिवृत्तमेव। तत्र यथाश्रुतं विज्ञुद्देशे हेतुतामप्रतिपद्यमानं तदनन्तराकाङ्क्षितार्थोपस्थितहेत्वपेक्षप्राशस्त्यहेतुरवधार्यते अन्नकरणत्वात्प्रशस्त इति । कल्पनादये ऽपि च लोकप्रसिद्धदृष्टान्तलाभान्नाश्रुतवाक्यानुमानप्रसङ्गो भविष्यति सिद्धं हि प्रशस्तानां कर्त्तव्यंत्वमन्तःकरणानां च प्रशस्तत्वमिति । अचोदना च तस्येति व्याख्यान्तरम् । तव हि यद्यदन्नकरणं तच्चोद्यते न च दर्विपिठरादीनां करणता साधकतमस्य पाकादेः करणत्वात् । एवं चोत्तरसूत्रमापतति ॥

## व्यर्थे स्तुतिरन्याय्येति चेत् ॥ २८ ॥

यत्पुनः शूर्पे ऽप्यन्नकरणत्वानुपपत्तेः स्तुतिर्न प्राप्नोतीत्युक्तं किं तत्राभिधीयते ॥

## अर्थस्तु विधिशेषत्वाद्यथा लोके ॥२९॥

अस्मात्पक्षे ऽर्थोऽस्ति स्तुत्यालम्बनमन्नकरणत्वं नाम वाक्यशेषो हि भवत्पारतन्त्र्याद्गौणत्वाद्यपि प्रतिपद्यते तदा च विधेयान्तरवशादवश्यमनुवादेन भवितव्यमनुवादस्य यथाविज्ञातस्य भवत्यतः शब्देनैवाभ्यनुज्ञातं यादृशं वयमन्नकरणत्वं शूर्पे पश्यामस्तादृशमिदं सङ्कीर्त्त्यतइति । अनेन वर्त्तमानापदेशो व्याख्यातः । तत्रापि हि कृतं वा करिष्यमाणं वा स्तोतुं क्रियतइत्युच्यते । कथं स्तुतिः सर्वलोकस्य भूतभविष्यदनादरेण वर्त्तमानोपकारानुरागाद् वर्त्तमानालोचनेनैव च कालान्तरे ऽपि तत्र प्रीतिरिति क्रियतएवानेनान्नमित्युच्यते । अथ वान्नक्रिया-

शक्तेर्वर्त्तमानतामन्नक्रियायामेवोपचर्य स्तौति । तत्रापि जनानां शक्त्यतिक्रमेणाभिव्यक्तिप्रियत्वात्क्रियतइत्युक्ते स्तुतिर्भवति । न । शक्त्यभिधानात् । तत्र तु विधिवादित्वान्मुख्यान्नकरणत्ववर्त्तमानत्वयोरग्रहणे दोषः । किं कारणम् । विधानं ह्यत्यन्तानवगतार्थविषयम् । तत्र यथाश्रुतादन्यथाग्रहणं निष्प्रमाणकम् । एतदेवाह । विधौ हि न परशब्दार्थः प्रयोजनमिति परशब्दार्थो हि लक्षणासु प्रयोजनम् । तदिह भूतभविष्यत्क्रियावाचिनः शक्तिवर्त्तमानतावाचिना वा स्वार्थे वर्त्तमानान्नक्रियावाची शब्दः कल्पनीयः । तन्निमित्तमात्रे शब्दार्थे साधकतमत्ववाचिनी तृतीया । नचैवं भूतत्वं कुतश्चित्सिद्धमित्यप्रमाणकम् । अथ मुख्यार्थपरिग्रहः । तत्रोच्यते । न च वर्त्तमानं साधकतमं वोपदिशन्वेदः शक्यमर्थं विदध्यात् । न हि वर्त्तमानान्नक्रियेण शूर्पादिना साधकतमेन वा पाकेन होतुं शक्यते । तस्मादुभयथापि विप्रतिषिद्धम् । अस्मत्पक्षे त्वनुवादत्वात्परशब्दार्थग्रहणम । यथा लोके बलवान्देवदत्त इति भूम्न्यतिशायने वा मतुप्प्रवृत्तिर्न च विशेष उपात्तोऽमुष्मात्प्रकृष्टबल इति । तत्र सर्वसत्त्वेभ्यः प्रकर्षे मुख्यः शब्दः न च तथा सम्भवति सिंहादीनां बलवत्तरत्वादिति देवदत्तान्न्यूनतरबलानपेक्ष्यैवमभिधीयते तथात्र विप्रकृष्टतरान्नसाधनलाङ्गलाद्यपेक्षया शूर्पं साधकतममित्युच्यते । नन्वेवमापेक्षिकप्रवृत्तेर्मुख्यत्वमेव स्यात् तथा च देवदत्ते बलवच्छब्दप्रवृत्तिं नैव गौणीं मन्यते । सत्यमेवं यदा तावन्न्यूनमात्रापेक्षयैव प्रयुज्यते यदा त्वविशेषप्रवृत्तेस्तदधिकबलेष्वपि बलवद्बुद्धिर्जाता तदा स एव शब्दः कुतश्चिदपि न्यूनबले वर्त्तमानो गौणः सम्पद्यते । तथा यदि विध्युद्देशोपात्ते शूर्पे ऽन्नकरणत्वमनूद्यते ततस्तन्न्यूनमात्रापेक्ष-

या वा मुख्यत्वं न्यूनानुपादानाद्वा सामान्यतः प्रवृत्तस्य सर्वप्रकृष्टगामित्वमबुद्ध्वा सत्यां गौणता । भवतस्त्वपूर्वविधानादत्यन्तसाधकतमत्ववर्त्तमानत्वयोः क्रियां प्रत्युपादानान्न्यूनापेक्षागौणत्वयोर्निमित्तं नास्तीत्यतिक्रमः स्यादित्यसमानम् ॥

## यदि च हेतुरवतिष्ठेत निर्देशात्सामान्यादिति चेदव्यवस्था विधीनां स्यात् ॥ ३० ॥

अभ्युपेत्य वादो ऽयम् । यद्यपि हेतुविधानं तथापि न दर्विपिठरादेः प्रसङ्गः । कुतः शूर्पं हि विधायान्तकरणं हेतुरुच्यते । सो ऽपि च न लोके प्रसिद्धः शब्दमेव दृष्टान्तवाचिनमनुमाय साधयितव्यः । तदनुमाने च श्रुतहेतुत्वान्यथानुपपत्तिः प्रमाणं सा च यावत्येव हेतुत्वमुपपन्नं ततो ऽधिककल्पनायै न प्रभवति । शूर्पं च होमसम्बन्धित्वेन प्रतिज्ञाते ऽन्यधर्मस्याहेतुत्वादवश्यं तद्गतमेवान्तकरणत्वं वक्तव्यम् । संनिधेश्च तवदच्छिन्नमेव तद्गम्यते । लोके ऽपि च यं धर्मिणं प्रतिज्ञाय यो हेतुरुपदिश्यते स प्रथमं तावत्तद्गतविशेषात्मनैव प्रतीयते । तदात्मकस्य तु साध्यांशानुगमाभावात्सामान्यमात्रं विवक्षितमिति दृष्टान्तप्रयोगवेलायामेवावधार्यते वेदहेतूनां पुनर्न सामान्यात्मना साध्यसम्बन्धो ऽवगतो न विशेषात्मना सो ऽधुनैवार्थापत्त्या कल्पनीयः । तत्र विशेषस्योपादानात्सामान्यप्रसिद्धेश्च तत्परित्यागनिमित्तस्यासम्भवादुपात्तविशेषमात्रोपसंहृतान्यथानुपपत्तिस्तद्गतमेव दृष्टान्तवचनं कल्पयति । तदकल्पने हि हेतुनिर्देशः श्रुतो विरुध्यते । यदि तु दर्विपिठरादिगतान्तकरणत्वहोमस-

स्तदन्यथाविनाभावो न कल्प्यते । न किं चिच्छ्रुतं दृष्टं वा नावकल्प्यते तस्मादीदृशं दृष्टान्तवचनं कल्प्यं यच्छूर्पमन्नकरणं तेन तेन जुहोतीति । तदेतद्विशेषदृष्टमनुमानम् । लोके ऽपि तृणधूमदर्शनात्तृणाग्निरेवानुमीयते नाग्निमात्रम् । यथा च गमनं गोशब्दव्युत्पत्तिनिमित्तत्वेनोपादीयमानं सास्नादिमत्सामान्यप्रत्ययोत्तरकालं तद्गतमेव निमित्तत्वं प्रतिपद्यते न गन्तृमात्रविषयमिति गोशब्दव्यवस्था तथा शूर्पगतान्नकरणहेतुत्वपदेशान्नान्यगतहेतुत्वप्रसङ्गः । तत्रैतावानर्थः स्यात् । यद्यदन्नकरणसमर्थं शूर्पं तेन तेन होतव्यं न दर्विपिठरादिग्रहणम् । यथा बलवदुपध्माते ऽग्नौ दहनहेतुत्वेनोक्ते स एवानुपध्मातो न दहेद्, न तु शङ्खादयो बलवदुपध्माता दहन्ति । तस्माद्व्यवस्था । यदि पुनः शूर्पगतान्नकरणव्यतिरेकेण सत्तासामान्यं विवक्ष्यते ततो यद्गृहीतं तस्य तस्य का चिदन्ननिमित्तता विद्यत इत्यव्यवस्थितत्वाद्धोमाक्षिप्तद्रव्यमात्रानुवादः सन्ननर्थको ऽन्नकरणशब्दस्तस्मादन्नहेतुत्वेन स्तुतित्वमेव वरमिति ॥

## तदर्थशास्त्रात् ॥ ३१ ॥

इहानर्थक्यश्रवणात्के चिदेवं सन्देहमुपन्यस्यन्ति किमर्थवन्तो मन्त्रा उतानर्थका इति । तदयुक्तम् । स्पष्टे शब्दात्प्रतीते ऽर्थे नानर्थक्यं हि शङ्क्यते । अग्नौ दहति दृष्टे वा दग्धृत्वं किं विचार्यते । सर्वत्र हि कार्यदर्शनाच्छब्दानां शक्तयः कल्प्यन्ते । तच्चार्थप्रत्यायनं मन्त्रेष्वप्युच्चार्यमाणेषूपलभ्यते । न चाविशिष्टस्तुवाक्यार्थ इत्येवमादिप्रतिज्ञामात्रसाध्योत्तराः पूर्वपक्षा भवन्ति । तस्मादयुक्तो ऽयमुपन्यास इति मत्वाह । किं विवक्षितवचना मन्त्रा

उताविवक्षितवचना इति । नन्वनेनैव हेतुनेदमपि न विचारणी-
यम् । नैष दोषः । अर्थवतामपि वाक्यानां द्वैविध्यदर्शनात् । उ-
च्चारणार्थप्रत्यायने ह्यविनाभूते तत्रान्यतरविवक्षया प्रयुज्यमा-
ने ऽपि किं चिन्नान्तरीयकं भवति । यद्यर्थप्रत्यायनं विवक्ष्यते त-
दोच्चारणमर्थादथोच्चारणविवक्षा ततो ऽर्थप्रत्यायनमनुषङ्गात् ।
यथा जपेषु विषविद्यासु चेत्यस्ति विचारावसरः । कथं पुनरस्य
प्रमाणलक्षणेन सम्बन्धः । पूर्वमेवोक्तमेतत् । यथाम्नायस्य क्रिया-
र्थत्वादित्ययमेवात्र पूर्वपक्ष इति तदुत्तरेणैव च निराकाङ्क्षत्वान्न
पुनरभिहितम् । एवं हि मन्यते यत्र सो ऽरोदीदित्येवमादेः कथं
चित्सम्बन्धापादनं, तत्र मन्त्रेषु कः सन्देहस्तस्मादुपयोगविशेष
एव चिन्तनीय इति । तत्र विधिस्तुतित्वे तावत्स्वयमेव निराकरि-
ष्यति अविधिस्वरूपत्वात् । प्रदेशान्तरविहितस्तुत्यसम्भवाच्चाप-
रिशेषात्स्वरूपप्रयोगे सत्यर्थोच्चारणयोः किं विवक्षितमिति वि-
चार्यते । सामसु तु वाचकत्वाभावादात्मप्रयोगमात्राक्षराभिव्य-
क्तिपरत्वगतसन्देहः । कथं पुनः पूर्वपक्षवादिनः श्रुत्यसंयुक्ता-
नां केषां चिन्मन्त्राणां प्रयोगसिद्धिः । के चिदाहुः । अप्रयोगार्थ-
मेवासावविवक्षितार्थत्वे यतते । न ह्यनाश्रितार्थान्मन्त्रान् कश्चि-
दपि प्रयुङ्क्ते । अतो यच्च किमुच्चारणमात्रेणोपकुर्वन्तीति सि-
द्धवत्प्रयोगाभिधानं नैतदस्यैव द्रष्टव्यम् । अयं हि तत्र दुष्टो ऽ-
भिप्रायः । यदि नामोच्चारणमात्रोपकारं वक्ष्यति । तत्र शक्ष्या-
म्यस्याप्रयोगं वक्तुमिति । यदपि प्रयोजनकथने बर्हिर्देवसदनं
दामीत्ययं बर्हिर्लवनात्प्रच्याव्यते तदनेन प्रकारेण प्रयोगप्रच्याव-
नमेव द्रष्टव्यम् । अथ वा याज्ञिकदर्शनेनाविगानात्प्रयोगसिद्धि-
मविचार्येतरो विचारः । किमर्थं तु याज्ञिकप्रसिद्धिरुपेक्षिता य-

तः सैव तावद्युक्तायुक्तत्वेन न विचार्यते। तत्रायमभिप्रायः। सर्वथा तावद् दृढमेषां स्मृतिन्यायेन प्रयोगित्वमवस्थितं तत्र शक्यं बाधितुं तस्यैव त्विदं मूलं निरूप्यते। तद्यदि पूर्वपक्षो भविष्यति ततोऽन्यप्रमाणाभावाद्विनियोजकश्रुत्यनुमानेन मूलं कल्पयिष्यामः। सिद्धान्ते तु लिङ्गप्रकरणयोरेव मूलत्वाध्यवसानम्। अथ वैवं पूर्वपक्षोऽपि प्रयोगः। स्वाध्यायाध्ययनविधिनैव मन्त्राः पुरुषार्थाय नीयन्ते। तथा हि। दर्शपूर्णमासादिभिः क्रमप्रकरणाभ्यां यावत्संस्पृश्यते तत्सर्वमुपकारकत्वेन स्वी क्रियते। प्रयाजादिवाक्यानि मन्त्ररूपमपि च। तत्र प्रयाजादिवाक्यान्यर्थं समर्प्य चरितार्थानि स्वरूपसंस्पर्शे सत्यपि प्रयोज्यतां न प्रतिपद्यन्ते। मन्त्राः पुनः कर्मानैपयिकार्थाभिधायित्वात्तेनांशेनानपेक्षिताः स्तुतिविधिस्मृतीनां तु प्रकारान्तरेण सिद्धिरिति प्रयोगवचनेनैषां रूपमेवाङ्गीक्रियते। स्वाध्यायाध्ययनचोदनापि प्रत्यासन्नतरमन्त्रस्वरूपमेव समर्प्य चरितार्थत्वान्न विप्रकृष्टमर्थाभिधानं यावद्गच्छति। प्रयाजादिवाक्येष्वपि तावद्रूपग्रहणमेव प्रसक्तमासीत्त्वभिप्रेतार्थदानेन युक्तं न त्विह तथा किं चित्। शब्दे च कार्यस्यासम्भवादर्थे कार्यं विज्ञायते। मन्त्राणां तु शब्दएव सम्भवति। अवश्यं ह्यर्थप्राधान्यपक्षेऽपि पुरुषः शब्दे नियोक्तव्यः। तद्व्यापारोत्तरकालत्वादर्थाभिधानस्य। तस्माद्रूपमेवाङ्गं तथा च तदर्थशाखादीन्युच्यन्ते। परिहारसूत्रक्रमानुरोधेन विपर्यस्तान्युदाहरणान्यभ्यादानात्प्रभृति दातव्यानि। भाष्यकारस्तु यथातथोदाहृतैरपि कार्यसिद्धिं मत्वैवमुपन्यस्तवान्। उरुप्रथा उरुप्रथस्वेत्यादि। यथासाक्ष इति (१) नीत्तीरोगाद्युपहतेन्द्रियस्य च-

(१) यथा साक्षः पुरुषः परेण नेनीयत इति पाठः 'ख'पुस्तके।

श्रुतस्येवेति परैर्दृश्यते, परेण तु नीयमानमुपलभ्य न पश्यतीति ज्ञायते, तथा मन्त्ररूपमालोचयतामर्थप्रकाशनशक्तिबुद्धिर्यद्यपि भवति तथापि परेण विनियोगं दृष्ट्वा स्वयं विनियोजकशक्तिर्नास्तीति गम्यते। ततस्त्वार्थतन्त्रत्वम्। अन्यथा स्वयमेव विनियुज्येत। नन्वर्थवादार्थमिति लिङ्गप्रकरणानुमितमन्त्रविधिस्तुत्यभिप्रायम्। न ह्येति च्छेदः। विधिनैकवाक्यतया अर्थवादाः स्तुत्यर्थाः कल्पिताः। प्रदेशान्तरस्थस्य तु प्रत्यक्षस्यानुमानिकस्य वा विधेरात्मनः समीपे ऽर्थवादमपश्यतः स्वयं प्ररोचनाशक्त्याविर्भावेन व्यावृत्तापेक्षत्वान्न दूरस्थया स्तुत्या कार्यम्। तथा ऽभ्यादाने रूपादेव प्राप्तत्वान्मन्त्राणां तां चतुर्भिरादत्त इत्यनर्थकं वचनम्। चतुःसङ्ख्यामपि ब्रुवदेतन्मन्त्रगतामेव ब्रूयान्न क्रियागताम्। न ह्यन्यगुणो ऽन्यगामी भवति। न च निष्क्रियत्वात्कर्माङ्गत्वेनोपदेष्टुं शक्यते। तेनैवं वाक्यं भवेद्यएते चत्वारस्तैरभ्यादानं कुर्यात्ते च प्रागेव वचनाच्चत्वार इत्यानर्थक्यम्। क्रियानङ्गत्वादेव च सङ्ख्यायाः समुच्चयशब्दाभावाच्च प्रत्येकं च सामर्थ्याद्विकल्पः प्रसज्यमानो न शक्यो वारयितुम्। अस्मत्पक्षे पुनर्वचनगम्यत्वाददृष्टस्य न चतुर्भ्यः प्रागस्तित्वे प्रमाणमिति युक्तः समुच्चयः। उभयोरपि तावद्रशनयोरश्वगर्दभबन्धनार्थमादानमर्थप्राप्तत्वान्न विधीयते। यदि मन्त्रो ऽपि रूपात्प्राप्तो ऽनर्थकं वचनम्। परिसङ्ख्येति। परवर्जनार्थत्वात्तद्विषया बुद्धिरभिधीयते सापि गर्दभरशनाया आदाने वा स्यात् मन्त्रे वा। उभयथा च त्रिदोषी। विधिपरः सन्न गृह्णातीति स्वार्थं जह्यात्। परस्य च वाक्यस्य गर्दभरशनां नेत्यस्यार्थं कल्पेत। प्राप्तं च रूपादर्थाद्वा मन्त्रमादानं वा बाधेत। अदृष्टार्थत्वे त्वभ्यन्यायेन यत्रैव नीयते

तत्रैव वर्णयिष्यते । यदि चास्याभिधानीमिति सम्बन्धः स्यात्ततः परिसङ्ख्यैतापि । न त्वसावस्ति । कारकाणां क्रियापरिहारेणान्योन्यसम्बन्धाभावात् । तेन वाक्यमपि क्रिययैव सम्बध्नीयात् । एका च सा । प्रकरणापूर्वसंयोगश्चाविशिष्टस्तस्मान्न परिसङ्ख्याप्रयोजनं कथयति । अतो न प्रमाणं बर्हिरित्यादि । तदा हि मन्त्राप्रयोगवचनेन सर्वे मन्त्राः केवलप्रधानार्थास्तत्प्रयोगाबहिर्भावबृत्तयो नाङ्गैः सम्बध्येरन् । पाठक्रमानुरोधात्तु तदापि नैव व्युत्क्रमेण प्रयोगः कर्माण्यनादृत्य सकृदेवानुवाकमध्यायं वा पठित्वा ऽनुष्ठीयते ॥

## वाक्यनियमात् ॥ ३२ ॥

अग्निर्मूर्द्धेति यो ऽर्थः प्रतीयते स मूर्द्धाग्निरित्यनेनापीत्यनर्थको नियमः । यस्य त्वदृष्टार्थता तस्य क्रमान्यत्वे तदुच्चारणजन्यादृष्टप्रमाणाभावात् क्रमान्यत्वं न युक्तमिति नियमार्थवत्ता । अथ नियतप्रत्यायनाददृष्टं कल्प्येत तदुच्चारणादेवोपपद्यते तदधीनत्वान्नियतप्रतीतेः । यस्तु दृष्टार्थेषु प्रकृतिप्रत्ययसमासेषु नियमो दृश्यते । यथेन्द्राग्नी नीलोत्पलं राजपुरुषश्चित्रगुर्निष्कौशाम्बिरिति । युक्तं तत्र विपर्यये ऽपशब्दार्थान्यत्वानर्थक्यप्रसङ्गात् । अजाद्यदन्तविशेषण(१)त्वादिनिमित्तो हि तत्र नियतः पूर्वनिपातः स्मर्यते । तेनाग्नीन्द्रावित्यसाधुत्वं पुरुषराज इत्यर्थान्यत्वं कौशाम्बिनिरित्यनर्थकत्वम् । यस्त्वग्नीन्द्राविति क्वचित्प्रयोगः स च्छान्दसो ग्नेर्वा ऽभ्यर्हितत्वस्य विवक्षयेति मन्तव्यम् । तुल्यकक्षार्थप्रतीताविन्द्राग्नीपदमेव व्यवस्थितम् । नन्विहापि क्रमान्यत्वाद-

(१) आजाद्यदन्तोपसर्जनेति पाठः 'ख'पुस्तके ।

मन्त्रत्वं स्यात् । तद्देवार्थपरत्वे सति तदविनाशे तु किं निमित्त-मिति न विद्मः । तेन मन्त्रप्रसिद्धौ वाक्यनियमादित्यपि सूत्रम् । अथ वा ऽस्वप्रकरणाधीतवाक्यनियमात् । न ह्यर्थाभिधाने ऽन्य-दीयस्यात्मीयस्य च विशेषः । अथ वा मन्त्रपौरुषेयवाक्ययोस्तु-ल्ये ऽर्थाभिधानसामर्थ्ये मन्त्रवाक्यनियमो ऽदृष्टार्थः । अथ वा ऽनेकध्यानादिस्मरणोपायप्रसङ्गे वाक्यनियमात् । न हि दृष्टे ऽर्थे मन्त्रस्य ध्यानादेर्वा कश्चिद्विशेष इत्यदृष्टार्थता ॥

## बुद्धशास्त्रात् ॥ ३३ ॥

न ह्यविद्वान्विहितो ऽस्तीत्यवश्यं तावदशेषात्मीयाः पदा-र्थाः प्रागेव कर्मप्रक्रमादवगन्तव्याः । तत्र प्रैषः पिष्टपेषणन्या-येनार्थं ज्ञापयितुमशक्नुवन्नदृष्टार्थो भवति । अथ स्मारको म-न्त्र इत्युच्यते । तदपि नास्ति । ब्राह्मणज्ञानाभ्यासपाटवनिमित्त-संस्कारादेव तत्सिद्धेः संस्काराभिव्यक्तिहेतुरपि पूर्वपदार्थसमा-प्तिर्ब्राह्मणमेव वा भविष्यति नार्थो मन्त्रैस्तत्र यदुच्यते संस्का-रविशेषो भविष्यतीति नासावदृष्टादन्यः सम्भवत्यतः पूर्वपक्षाप-त्तिः । यदि हि प्रतीतो ऽप्यर्थो नैव दृष्टं साधयति ततो यत्तद्दूर-मपि गत्वा ऽवश्यं कल्पनीयं तदुच्चारणादेव वरमिति ॥

## अविद्यमानवचनात् ॥ ३४ ॥

न चतुःशृङ्गादि किं चित्कर्म तत्सम्बन्धि वा प्रकृतौ विकृतौ वा विद्यते । यद्यपि च गुणवादेन किं चित्स्यात्तथापि तदनुष्ठा-नाभावान्न तत्स्मृत्या कार्यम् । न च ज्ञायते क्व प्रदेशे प्रयुज्य-तामिति । तत्र मन्त्रपाठक्रमानुरोधेनोच्चारणमापततीति सि-द्धः पूर्वः पक्षः । मा मा हिंसीर्मा मा सन्तापमित्यादीनि वेदिह-

विद्वानादिविषयत्वादचेतनार्थबन्धनादित्यत्राप्युदाहरणम् । इह त्वप्रसक्तायां हिंसायां प्रतिषेधानर्थक्यम् ॥

## अचेतनार्थबन्धनात्(१) ॥ ३५ ॥

ओषधे त्रायस्व शृणोत ग्रावाण इति च सम्बोधनं कार्यनियोगाभिमुख्यकरणार्थम् । न चाचेतनस्याभिमुख्यं सम्भवति । न च पशुत्राणे प्रातरनुवाकश्रवणे वा प्रैषेण प्रवृत्तिरुपपद्यत इत्यानर्थक्यमर्थविवक्षायाम् ॥

## अर्थविप्रतिषेधात् ॥ ३६ ॥

द्युत्वमन्तरिक्षत्वं चादितेरेकानेकत्वं च रुद्रस्य विप्रतिषिद्धम् । न चैष विप्रतिषिद्धोऽर्थः कर्मौपयिकः । कथं वादितिर्देवता अन्तरिक्षं द्यौर्वा भवेत् । न च स्तुत्यर्थतयापि हेतुद्वयं परिहर्तुं शक्यं ब्राह्मणे हि विधिशेषभूताः स्तुतयोऽर्थवत्यो भवन्ति । मन्त्रस्तुतिस्त्वप्रयोजनत्वान्नादर्त्तव्या ॥

## स्वाध्यायवदवचनात् ॥ ३७ ॥

स्वाध्यायाध्ययनस्य कर्मार्थत्वाद्यत्कर्मण्युपयोक्ष्यते तदभ्यसितव्यं तच्चैवं विद्वांसः सन्तो वृद्धाः शिष्यानक्षरावधारणएव प्रवर्त्तयन्ति सन्निहितेऽप्यर्थे न तद्वचनाभ्यासे तेनावश्यं तेषामुच्चारणमेवाङ्गत्वेनाभिप्रेतमिति ॥

## अविज्ञेयात् ॥ ३८ ॥

केचित्पदार्था ज्ञानेनाविज्ञेयाः । केषां चित्तु वाक्यार्थ एव न ज्ञायते । न च मन्त्रार्थः सत्तामात्रेणोपकरोति क्रियावेलायाम-

(१) अचेतने ऽर्थबन्धनाद् इति पाठः 'ख' 'घ' पुस्तकयोः ।

श्रयमाण इति यदेकान्तेनाशक्यं कर्तुमुच्चारणं तदेव कार्यमित्यवधार्यते ॥

## अनित्यसंयोगात् ॥ ३९ ॥

अर्थप्रकाशनपक्षे यस्य यो ऽर्थः स एव तेन प्रकाशयितव्यः । केचिच्चानित्यैरकर्माङ्गभूतैश्चार्थैरर्थवन्तो मन्त्रा लक्ष्यन्ते । यथा । किं ते कृण्वन्ति कीकटेषु गाव इति (१) । अयं हि इढेनाध्येतृणां स्मरणेन विश्वामित्रस्यर्षं गम्यते । तेन किल कर्मार्थं धनं प्रार्थ्यमानेनेन्द्रो ऽभिहितः । त्रैलोक्याधिपते याः कीकटेषु जनपदेषु गावस्तास्तव किं कुर्वन्ति । ते हि नास्तिकाः किं क्रतुनेति वदन्तो न किं चित्कर्मानुतिष्ठन्ति । अतस्ता न क्षरं सोमसंस्कारार्थं दुह्रते न घर्मं तपन्ति । न घर्मतपने पयोदानेन साधनी भवन्ति । तस्मात्प्रमगन्दस्य कीकटाधिपतेर्यद्वेदो धनं तदस्माकं नैचाशाखं नगरमाभर । हृग्रहोर्भश्छन्दसीति भकारः । अथ वा ऽस्मान्प्रति तद्विभृहि धारय पोषय चेत्येतन्नो मघवन् रन्धय साधय अस्माकमिति । छान्दसं दीर्घत्वम् । यद्येतद्विवक्षितं तथा सत्यादिमदर्थाभिधानाद्वेदस्य कृत्रिमत्वेनाप्रामाण्यं प्रसज्यते । न चान्यो मन्त्रार्थः शक्यते वक्तुमप्रतीतेः । अतो ऽर्थसदसद्भावावचनादृत्याक्षरोच्चारणं फलवदाश्रयणीयमिति ॥

## अविशिष्टस्तु वाक्यार्थः ॥ ४० ॥

मन्त्रोच्चारणं तावदक्षरग्रहणेन निराकाङ्क्षीकृतं न साक्षात्क्रत्वङ्गत्वं प्रतिपद्यते । अक्षराणां च द्रव्यवदनितिकर्तव्यतात्म-

(१) किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम् । आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धया नः ॥ ऋग्वेदे अष्ट. ३ अ. ३ व. २१ ॥

त्वात्प्रकरणेनाग्रहणम्। एवं पदार्थज्ञानस्य वाक्यार्थप्रत्ययेन नैराकाङ्क्ष्यादग्रहणम्। वाक्यार्थप्रत्ययस्त्वकृतार्थः प्रकरणे विपरिवर्त्तमानः क्रियात्मकत्वात्प्रयोगवचनाकाङ्क्षितः कर्मसमवेतानुष्ठास्यमानार्थस्मृतिफलत्वेनेतिकर्त्तव्यता भवति। तत्रादृष्टकल्पनानिमित्ताभावः समाम्नानान्यथानुपपत्त्या हि तत्कल्प्येत नोपपन्ने ऽर्थवत्त्वे। यद्यपि च तत्कल्पनावसरो भवेत् तथापि कामं वाक्यार्थप्रत्ययादेव न त्वौपयिकार्थप्रतीतिनिराकाङ्क्षादावक्यात्। अवश्यं च दृष्टादृष्टयोर्विनियुज्यमानस्य प्रमाणमुपन्यसितव्यमिह च प्रकरणाददृष्टार्थता लिङ्गाच्च दृष्टार्थता। न च प्रकरणमशक्ये ऽर्थे विनियोक्तुमर्हतीत्येकान्तेनैतदापतति यच्छक्नुयात्तन्मन्त्रेण कुर्यादिति। न चासावदृष्टं शक्नोतीति लौकिकं वैदिकं वा प्रमाणं विद्यते। तस्मादुभयोर्लिङ्गप्रकरणयोर्दृष्टार्थप्रयोगेणैकवाक्यता। एवं च सति याज्ञिकप्रयोगप्रसिद्धेर्न मन्त्रान्तरकल्पनाक्लेशो भविष्यति। अतः स्वाभाविकमेवार्थप्राधान्यमवस्थितम्। नैवमिति। न दृष्टो ऽर्थो निर्वृत्त इत्येतावतैव तादर्थ्यमवसीयते। पुरुषार्थानुपयोगेन स्वाध्यायाध्ययनविधेरानर्थक्यात्। न च बहुशाखाविद्यमानवचनाचेतनार्थबन्धनाच्चमन्त्रार्थोपयोगः। तच्च यदि दूरे ऽप्यदृष्टकल्पनातो न मुच्यामहे ततो ऽतिक्रमकारणाभावादुच्चारणादेव कल्पनीयम्। उभयवादिसिद्धत्वादुच्चारणकर्त्तव्यतायास्तत्प्रभवत्वाच्चादृष्टकल्पनस्य। तत्रोच्यते। यच्च यस्याङ्गप्रकाशनमेव प्रयोजनमिति। यद्यपि लोकवर्त्मना संव्यवहारस्तथापि तत्स्वरूपप्रकाशनमात्रमेवानुष्ठातॄणामुपकरिष्यति। अतश्च यावन्मात्रमेवानौपयिकं सम्बोधनादि कामं तत्र विवक्ष्येत न तु तद्वशेन सर्वमेव त्यक्तव्यं न ह्यैकरूप्यं नाम केन

चिन्नियतम् । तस्माद्यथादर्शनाभ्युपगमाद्बर्हिर्देवसदनं दामीत्येवमादीनां तावदविच्छतमर्थप्राधान्यम् । तां चतुर्भिरादत्त इत्यत्रापि वदामः ॥

## गुणार्थेन पुनः श्रुतिः ॥ ४१ ॥

यद्यपि मन्त्राः प्राप्ताः सामर्थ्येन तथापि चतुःसंख्यामादाने विधास्यति । तत्रारुणैकहायनीन्यायेन परस्परनियमे सति मन्त्रगतचतुःसंख्याविशिष्टमादानं चोदितं समुच्चयादृते कर्त्तुं न शक्यत इत्यर्थात्समुच्चयफलम् । अथ वा यावल्लिङ्गानुमिताः श्रुतयः प्रतिमन्त्रं कल्पयितुमारभ्यन्ते तावदनेन प्रत्यक्षवचनेन चतुःसंख्याविशिष्टास्ते विहितास्तेनाप्राप्तविधिरेव वचनम् । तत्र तु विनाप्येतेन मन्त्रेष्वर्थात्प्राप्तवत्सु तत्परत्वे मन्दं फलमित्यनन्यलभ्यचतुःसंख्यार्थं तस्योपदेशः ॥

## परिसंख्या ॥ ४२ ॥

यावद्धि मन्त्राम्नानमनवगतप्रयोजनं प्रकरणे चाकृतायस्तावद्यत्तल्लिङ्गार्थं कल्प्यते तत्सर्वं वैदिकं भवति । नैराकाङ्क्ष्योत्तरकालं तु कल्पितमपि पौरुषेयत्वादप्रमाणं स्यात् । न च श्रुतिमकल्पयित्वा लिङ्गादेः स्वातन्त्र्येण प्रामाण्यमिति वक्ष्यते । तदेतदाह । सति च वाक्ये लिङ्गं वियोजकं तच्चास्य नास्तीति । यदैव हि प्रकरणादनेन यजेत रशनां वा गृह्णीयादिति कल्पयितुमिष्यते तदैवाश्वाभिधानीमित्यनेनापहारो मन्त्रस्य । यदपि नैव संबन्ध इत्यादत्त इति कथं तर्ह्यीत्यश्वाभिधानीमिति तत्कारकसंबन्धासंभवात्क्रिययैव सह न सामान्याभिप्रायेण द्रष्टव्यम् । तस्मादादानमात्रे विधीयते किं तर्ह्यश्वाभिधानीविशिष्टे । अथ वा

फलतः पश्चात्तनकारकसंबन्ध उपन्यस्यते। सर्वथा दृष्टार्थता
नास्ति। यदि हि यदेव मन्त्रवचनात्प्राप्नुयात्तदेव प्रत्यक्षवचनेनो-
च्यते ततो वयमुपालभ्येमहि। नन्वेवमप्राप्तविधिरेवायं संजात
इति न वक्तव्यं परिसंख्येति फलेनैवमभिधानाददोषः। सर्वत्र
हि परिसंख्याशब्दादेवकाराद्वा विना न श्रुत्या परिसंख्यानिय-
मौ वोच्यते विधिरेव त्वेवं जातीयकस्य फलेनैवं व्यपदेशः। क-
स्तर्हि विधिनियमपरिसंख्यानां भेदः। उच्यते। विधिरत्यन्तम-
प्राप्ते नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्ते परिसंख्येति
कीर्त्यते। विधिरेव हि केन चिद्विशेषेणैवं भिद्यते। तत्र यो ऽत्य-
न्तमप्राप्तो न च प्राप्स्यति प्रागवचनादित्यवगम्यते तत्र नियोगः
शुद्ध एव विधिर्यथा व्रीहीन्प्रोक्षतीति। यत्र तु प्रागवचनात्पाक्षि-
की प्राप्तिः सम्भाव्यते तत्राप्राप्तिपक्षं पूरयन्यो विधिः प्रवर्त्तते
स नियन्तृत्वान्नियम इत्युच्यते। यथा व्रीहीनवहन्तीति। तन्दु-
लनिष्पत्त्यर्थाक्षेपादेव तत्सिद्धेर्न तत्प्राप्तिमात्रं विधेः फलं किं त-
स्याप्राप्तांशपूरणम्। तदप्राप्तिपक्षे च तण्डुलैरुपायान्तराण्याक्षि-
प्येरन् पूरणे तु सति या तेषां निवृत्तिरसाववर्थान्न वाक्यात्। न
च तद्वारणं नियमः। परिसङ्ख्या हि तथा स्यात्। प्रत्यासन्नां वाव-
हन्तिनियततामुत्सृज्य नान्यनिवृत्तिफलकल्पनावसरः। तत्प्र-
सक्तिद्वारा त्ववहन्तेरनियतिरासीदिति नियमान्तर्गतैवार्था-
न्निवृत्तिर्गम्यते। न च प्राप्ते सति विधिरयं प्रवृत्तो येनास्यान्य-
वृत्त्यर्थता कल्प्येत। प्रागेव तु प्रवर्त्तमानेनार्थस्य प्रापकशक्ति-
निरोधादन्याप्राप्तिः कृता सा चार्थलभ्येति न तयैव व्यपदिश्य-
ते। यः पुनः प्राग्विधियोगात्तत्र चान्यत्र च प्राप्नुयादिति सम्भाव्य-
ते यत्र वा यत्रान्यत्र सा परिसङ्ख्या। यथा ऽत्रैवोदाहृते। तथा

च गृहमेधीये पञ्चमे पक्षे । अत्रापि च न प्राप्ते सत्येषा प्रवर्त्तते प्रापकस्य शाखस्याननुमितत्वात्कथं तर्हि यद्येतद्वाक्यं नाभविष्यत्तत एनं प्राप्स्यदिति । सर्वस्य प्रत्यक्षस्य वाक्यस्य नानुमानिकवाक्यप्रतिबन्धमात्रं फलमिष्यते । किं हि तेन पठितेन यस्यान्यतोऽप्यर्थः सिद्ध्यति तदर्थं गर्द्दभरशनानिवृत्तिः फलं कल्प्यते । तेनैवं कल्प्यते क्त्वाचिन्तान्यायेन यदि नामैवं वाक्यं न भवेत्ततः कीदृशमनुष्ठानं स्यात् । तत्र मन्त्रप्राप्तिस्तावदेकान्तेन सिद्ध्येदश्वाभिधान्यां तद्वदेव तु गर्द्दभरशनायामपि प्रसज्येत । यदा त्वनेन वाक्येन प्रत्यक्षेण नैराकाङ्क्ष्याद विशेषविनियोगसमर्थवाक्यानुमानं निषिद्धं तदा केवलाश्वाभिधानीविषयत्वसिद्धिरित्यपौनरुक्त्यादर्थवद्वाक्यम् ॥

## अर्थवादो वा ॥ ४३ ॥

यद्यपि प्रदेशान्तरस्थत्वान्मन्त्रविधानं न लक्ष्यते तथापि प्रथमविधानात्तत्प्ररोचनया च सकलं वाक्यमर्थवत्तस्य ह्येतद्देवोत्पत्तिवाक्यम् । ननु च पुरोडाशान्यथानुपपत्तिप्राप्तत्वात्प्रथनं न विधातव्यम् । नैतन्नियोगतः प्राप्नोति द्रुततरं हि पिष्टमप्रथितमपि प्रथेत । विधाने तु सति तादृशं कर्त्तव्यं येन प्रथयितव्यं भवति । एवं चाध्वर्युकर्तृकताऽपि सिद्ध्यति । पद्यमानं ह्याध्वर्यवसमाख्यां लब्ध्वा कर्तृविशेषं नियच्छति । अर्थप्राप्तं त्वसमाख्यातत्वान्न नियामकं स्यात् । एवमर्थं च यद्यप्येकान्ततोऽर्थात्प्राप्नुयात्तथापि वाक्येनैव प्रापयितव्यम् । तस्मादुपपन्ना प्रथनस्तुतिः । एवमपि यज्ञपतिमेव तत्प्रथयतीत्यनेन स्तुतौ सिद्धायां मन्त्रग्रहणमनर्थकम् । नामन्त्रस्यैव स्तुत्यर्थमुपादानात्प्रथनं क-

र्थ्यं, तस्य हि क्रियमाणस्यायं मन्त्रः साधनं भवति तत्र चोक्तं ते यज्ञपतिः प्रथतामिति एतान्यक्षराणि प्रयुज्यन्ते तथा सति यज्ञपतिः प्रथितो भवति इति गुणो लभ्यते। किमेतदेवास्य फल-मिति नेत्याह। स्तुत्यर्थमेव तद् द्रव्यसंस्कारकर्मस्विति न्याया-त्। यद्यप्यत्र करणमन्त्राभिहितत्वात्फलं कल्प्यते तथापि ब्रा-ह्मणे तावत्तत्संकीर्त्तनमेकान्तेन स्तावकम्। मन्त्रोपि तु लिङ्ग-विनियोज्यो न फलकल्पनायै प्रभवति। करणविभक्तिविनियु-क्तानां हि सकलोपयोगान्यथानुपपत्त्या फलसाधनता युक्ता लिङ्गानुमिता पुनः श्रुतिराकाङ्क्षावशेन क्रियाप्रकाशनमात्रवि-नियोगायैव ज्ञायते। तेनैवंजातीयको मन्त्रोऽपि प्रधानफल-सङ्कीर्त्तनात्मिका स्तुतिरेवाभ्युपगन्तव्या। कथमसति प्रथनइ-ति कस्यायं प्रश्नः किं विध्युद्देशवर्त्तिनः पुरोडाशप्रथनस्याथार्थ-वादगतस्य यज्ञपतिप्रथनस्येति। द्विधाऽपि चायुक्तं पुरोडाश-प्रथनं तावद्विधीयमानत्वादेव न प्रष्टव्यम्। न च मन्त्राभिधाना-त्तस्यास्तित्वं किं तर्हि स्वरूपसद्भावादित्युत्तरमप्यसंबद्धम्। अथ पुनरितरार्थवादन्यायेन कथमस्तीतिवत्प्रश्नः। तथाप्युत्तर-मसंबद्धम्। मन्त्रेणाध्वर्युः पुरोडाशमिति पुरोडाशेन संबध्यते न यजमानेन। तस्मादग्रन्थ इति केचित्। उभयथाऽपि त्विदम-दुष्टम्। अस्तु तावत्पुरोडाशप्रथने। तत्र हि याज्ञिकानां केषां-चिदयं मन्त्रः कृत्वा प्रथनमभिमर्शने प्रयुज्यते सोयं स्वसिद्धान्तेन पृच्छति कथमसति वृत्ते प्रथने प्रयुज्यमानेनानेन प्रथयतीति। तत्राभ्युपेत्यवादेनोत्तरं मन्त्राभिधानादिति। यद्यपि प्रथनं प्रथ-मकृतत्वान्नास्ति मन्त्रेण नु सत्तयोच्यतइत्युपपन्नः शब्दार्थः। अथ वा सर्वप्रयोजकव्यापाराणां प्रयोज्यव्यापारपूर्वकत्वमर्थकृ-

पेण स्थितमिति शब्दैरपि तथैव प्रवर्त्तितव्यम् । इह च स्तुतिवि-षयसिद्ध्यर्थं प्रथयतीत्येतद्विधीयत इत्युक्तम् । तत्राह । नायं वि-धिः संभवति विषयानुपपत्तेः । प्रयोजकव्यापारो हि प्रतीयमान-स्तद्गोचरः स्यात् । स चानुपात्तप्रयोज्यव्यापारत्वान्न प्रतीयते तेन यथा यजेतेत्यनुक्ते याजयतीति नोच्यते तथेह प्रथेतेत्यनुक्ते प्र-थयतीति न वाच्यम् । न चेह पुरोडाशः प्रथेत तेन वा प्रथितव्य-मित्युपादानमस्ति । तस्मिन्नसति प्रथयतीत्यनुपपन्नम् । तदुपपा-दयति मन्त्राभिधानादिति प्रतीकगृहीतमन्त्रोपात्तप्रयोज्यव्या-पारं हि ब्राह्मणं प्रथयतीति विधत्ते । यज्ञ प्रथस्वेति ब्रूतइत्यनेन पुरोडाशकर्तृकां क्रियामध्वर्युः प्रेष्यतीत्येतद्दर्शयति । यद्यपि च संभाव्यमानक्रियाणां प्रयोज्यानामनुपादायापि व्यापारं शब्दे-नप्रयोजकव्यापारः सिद्ध्यतीत्येतदप्युत्तरं संभवति तथापि तूत्त-रविभवादुपादानपूर्वकतैवोक्ता । अथ वा ऽस्तु यजमानप्रथने क-थमसतीति सर्वस्तुतीनां किं चिच्छब्दगतमर्थगतं वालम्बनमुक्त-म् । तदत्र किं निबन्धना स्तुतिरिति । तदभिधीयते । मन्त्रोक्त-मर्थमाश्रित्य स्तुतिः प्रवर्त्तिष्यते । मन्त्रेणाध्वर्युः पुरोडाशं ब्रूत-इति न पुरोडाशप्रथनोपादानाभिप्रायं किं तर्हि पुरोडाशं ब्र-वीत्युक्ते यज्ञपतिः प्रथतामिति प्रथस्वेत्यपीतिकरणः प्रभृत्यर्थो न शब्दपदार्थतायै यज्ञ प्रथस्वेति ब्रूतइत्यपि तदाद्यर्थ एवाप्रथ-तामिति ब्रूतइत्यर्थः । यस्त्वेवं ब्रूते स प्रथयत्यनेनैव गुणवादात् । अथ वा तदाचष्टइत्येवं मुख्यमेव प्रथयतीत्यर्थमाश्रित्य प्रथन-वत्त्वा सिद्धा स्तुतिः ॥

अविरुद्धं परम् ॥ ४४ ॥

अदृष्टार्थोच्चारणवादिनो ऽपि तन्नियमाद्दपरमवश्यं कल्पनीयमदृष्टं तन्ममापि प्रत्यायननियमाद्भविष्यतीत्यविरोधः । एतेन मन्त्रत्वादिनियमः प्रत्युक्तः । सत्स्वप्युपायान्तरेषु विशिष्टानुपूर्वीकमन्त्रविशेषाम्नानादुपायान्तरनिवृत्तौ नियमादृष्टमात्रकल्पनया सिद्धमर्थाभिधानम् ॥

## संप्रैषे कर्मगर्हानुपालम्भः संस्कारत्वात् ॥ ४५ ॥

येयं संप्रैषे अग्नीदग्नीनित्यत्र बुद्धबोधनासंभवादभिधानकर्म्मगर्हाभिहिता सा ऽप्यनुपालम्भस्मरणसंस्कारार्थत्वात् । बुद्धीनां हि क्षणिकत्वात्स्वाध्यायकालोत्पन्नानां न प्रयोगकालं यावदवस्थानं तत्रावश्यं केन चिद्ध्यानादिना ऽनुसंधाने कर्त्तव्ये मन्त्रो नियम्यते । अथ वा संस्कारत्वादिति । यदि हि बोध एवावतिष्ठेत ततो ऽनवाकाशत्वं भवेदिह तु तदीयसंस्कारमात्रावस्थानात्तदभिव्यक्तिद्वारेणास्ति ज्ञानोत्पत्त्यवसर इति न मन्त्रानर्थक्यम् ॥

## अभिधाने ऽर्थवादः ॥ ४६ ॥

चत्वारि शृङ्गेति रूपकद्वारेण यागस्तुतिः कर्मकाल उत्साहं करोति । सौत्रे त्वयं विषुवति होतुराज्ये विनियुक्तः । तस्य चाग्नेयत्वादग्न्यादित्यदैवतत्वसंस्तवादादित्यरूपेणाग्निस्तुतिरूपवर्ण्यते । तत्र चत्वारि शृङ्गेति दिवसयामानां ग्रहणम् । त्रयो अस्य पादा इति शीतोष्णवर्षकालाः । द्वे शीर्षे इति अयनाभिप्रायम् । सप्त हस्ता इत्यश्वस्तुतिः । त्रिधा बद्ध इति सवनाभिप्रायेण । वृषभ इति वृष्टिहेतुत्वेन स्तुतिः । रोरवीति स्तनयित्नुना । सर्वलोकप्रसि-

र्मशास्त्रदेवो मर्त्त्यानामविवेकेऽप्युत्साहकरणोपकारेण सर्वपुरुषहृदयानुप्रवेशात् । एवमनेन मार्गेणास्ति तावद्धर्मसाधनस्मृतिः ॥

## गुणादविप्रतिषेधः स्यात् ॥ ४७ ॥

अदितिर्द्यौरदितिरिरिति । नाऽत्र द्युत्वादीनि विवक्षितानि किंतर्ह्यदितौ प्रकाशयितव्यायामविद्यमानविप्रतिषिद्धधर्मोपादानं स्तुत्यर्थम् । गुणवादेन त्वौदुम्बराधिकरणवत्संवादो योजयितव्यः ॥

## विद्याऽवचनमसंयोगात् ॥ ४८ ॥

यद्यपि पूर्वपक्षे ऽयमभिप्रायो नोपन्यस्तस्तथापि संभवादुपन्यस्यते । यदि हि स्वाध्यायकाले ऽर्थवचनमुपयुज्येत ततस्तदाश्रीयेत न त्वेवमस्ति कर्मभिरसंयोगात् । तदनभ्यासस्तु प्रोक्षणादिवत्सौकर्यात् ॥

## सतः परमविज्ञानम् ॥ ४९ ॥

यत्तु परं कारणमविज्ञेयत्वमुक्तं तदयुक्तम् । सत एवार्थस्य पुरुषापराधेनाविज्ञानात् । तत्र चार्थप्रकरणसूक्तदैवतार्षनिगमनिरुक्तव्याकरणज्ञानान्यधिगमोपायाः । तेषां ह्येवमर्थमेव परिपालनम् । यथैव च व्याकरणेन नित्यपदान्वाख्याने क्रियमाणे लोपविकारादीनामुपायत्वेनोपादानमव्युत्पन्नास्तु तैरेव पदोत्पादनमिव मन्यन्ते । तथाऽत्र नित्यवाक्यार्थप्रतिपत्तावार्षोपाख्यानमनित्यवदाभासमानमुपायत्वं प्रतिपद्यते । तत्र यथा कश्चिद्ग्रावाणः पदतदवयवादीनां चेतनत्वमिवाध्यस्य विशेषबाधादिव्यापारं निरूपयत्यतेनैवमुक्तो ऽयमेवं प्रत्याहेति । यथा च पूर्वपक्षोत्तरपक्षवादिनौ व्यवहारार्थं कल्पितावेवमृष्यार्षेयवि-

यथा कल्पना । अथ वा परमार्थे नैवेदमृषिभिस्तथोक्तं न तु स
मन्त्रस्तैरेव कृतस्तदानीं वा पुरुषान्तरेष्वसन्नेव तेषामाविर्भू-
तः । किं तर्हि यथा ऽद्यत्वे ऽपि कश्चित्प्रकृतार्थविवक्षायां तदर्थं
वाक्यमुपादित्समानस्तदर्थसरूपं मन्त्रं श्लोकं वा ऽन्यदीयं स्मृत्वा
स्ववाक्यस्थाने प्रयुङ्क्ते तत्प्रत्ययेन चान्ये तदर्थमवधारयन्त्येवमि-
हापि वेदार्थविद्भिस्तद्वासितान्तःकरणैर्भृग्वादिभिरात्मीयव्यव-
हारेषु श्रुतिसामान्यरूपेण विशिष्टार्थप्रत्यायनार्थं मन्त्राः प्रयु-
क्तास्तद्बलेन चास्मदादीनां तदनुरूपानित्यार्थप्रतिपत्तिर्भवति ।
प्रत्ययदृढत्वार्थमेव चार्षस्मरणम् । तत्रैवमुपाख्यानं स्मरन्ति ।
यथा किल भूतांशो नाम कश्चिदृषिर्जरामरणनिराकरणार्थी
सृण्येवेत्येवमादिना सूक्तेनाश्विनौ स्तुतवान् । भूतांशो अश्विनोः
काममप्रा इति चान्ते संकीर्त्तनात्तस्यार्षमाश्विनं सूक्तमिति च
द्योतितम् । तत्र सृणिरङ्कुशः सरणसाधनत्वात्तमर्हन्तौ तत्र वा
साधू इति सृण्यावर्थात्कुञ्जरौ । आकारश्छन्दसि द्विवचनादे-
शः । ताविवात्यर्थं जृम्भमाणावष्टाङ्गप्रहरणव्यापृतौ जर्भरी । तु-
र्फरी तु हिंसन्तौ । नितोशतिर्वधकर्मा तत्कारिणौ नैतोशौ
योद्धारौ ताविव तुर्फरी त्वरमाणौ हिंसकाविति वा । पर्फरीका
शोभायुक्तौ । उदन्यतिः पिपासार्थः तत्र जातौ उदन्यजौ प्रावृ-
षिजौ चातकौ । जेमनावुदकवन्तौ जेमशब्दात्पामादिविहितो
मत्वर्थीयो नप्रत्ययः । तौ यथोदकलाभेन मत्तौ भवतः तथा यौ
मदेरू तौ मे जरायु मरायु जरामरणधर्मकमर्थाच्छरीरमजर-
ममरं च कुरुतामिति वाक्यशेषः । तेनैवं वाक्यार्थः यावङ्कुशचो-
दिताविव कुञ्जरौ सर्वतो जृम्भमाणौ शत्रूणां निहन्तारौ भव-
तो हिंसाविव च हिंसनव्यापृतौ दार्ढ्येण च शोभेते चातकाविव

चोदकलाभेन मदात्मीयेते तावुभावपि जरामरणयोः क्षपिता-विवाजरत्वस्यामरत्वस्य वा प्रीतावजरममरं मे शरीरं विधत्ता-मिति। अम्यक् सातइत्यगस्त्यार्षं तेन किलेन्द्रो ऽमरत्वं धनं प्रार्थितः तथा चोपरितन्याम्टचि त्वं तू न इन्द्र तं रयिं दा इति श्रूयते। तदेवास्यामृच्यनुषङ्गेण द्रष्टव्यम्। इयं च छन्दोमद्वितीये ऽहनि मरुत्वतीये शस्त्रे विनियुक्ता। तत्राम्यगिति अमाशब्दो ऽव्ययं साहित्यवाची यतोमात्य इति भवति सद्दाञ्चतीत्यम्यक्सा ते इन्द्रऋष्टिरायुधविशेषः पाणिश्लेष्यः अस्मे इति अस्माकं सनेमि पुराणम्। अच्चतो ऽयं महतो जुनन्ति चिपन्ति। अग्निश्चिदित्युपमार्थो हि स्म अतसे शुष्कतृणे शुशुक्कान् दीप्तवान् आप इव द्वीपं दधति प्रयांस्यन्नाद्यानि। वाक्यार्थे तु प्रथमतृतीययोर्द्वितीयचतुर्थयोश्च पदानां संबन्धः। तत्र सेत्येतदाक्षिप्तो यच्छब्दस्तृतीयपादे कल्प्यते। शुष्कतृणे दिप्तो ऽग्निरिव या लच्यते तव सहचारिणी नित्यमृष्टिस्तव वल्लभा सा तावत्त्वत्प्रसादेनास्माकमेव। ये ऽप्यमी पुराणं जलं वृष्टिरूपेण विचिपन्त आप इव द्वीपमन्नाद्यानि धारयन्ति तव प्रियसखास्ते ऽप्यस्माकमेव सत्त्वमेवं साधारणद्रव्यः सन्नमरत्वं न केवलं देहि एकया प्रतिधा ऽपिबदितीन्द्रस्यैव स्तुतिः। एकेन प्रयत्नेनापिबत्साकं यौगपद्येन सरांसि पात्राणि सोमस्य पूर्णानि इन्द्रः काणुका कामयमानः कामुकशब्दस्य छान्दसो वर्णव्यत्ययः। आकारस्तु विभक्त्यादेशः। अथ वा कान्तकानीत्यादयो निरुक्तोक्ताः काणुकाशब्दविकल्पा योजनीयाः। तदेवं सर्वत्र केन चित्प्रकारेणाभियुक्तानामर्थोत्प्रेक्षोपपत्तेः प्रसिद्धतरार्थाभावे ऽपि वेदस्य तदभ्युपगमात्सिद्धमर्थवत्त्वम्॥

## उक्तश्चानित्यसंयोगः ॥५०॥

परं तु श्रुतिसामान्यमात्रमिति । यजमानस्तावत्प्रार्थयिता इन्द्रश्च प्रार्थ्यमानः सर्वदास्ति। कीकटा नाम यद्यपि जनपदास्तथापि नित्याः। अथ वा सर्वलोकस्थाः कृपणाः कीकटाः प्रमगन्दः कुसीदवृत्तिः स हि प्रभूततरमागमिष्यतीत्येवं ददाति । नीचाशाखः षण्ढस्तदीयं धनं नैचाशाखम् । तच्च सर्वमयज्ञाङ्गभूतं तेषां कर्मण्यप्रवृत्तेस्तदस्माकमाहरेति । शेषं गतार्थम् ॥

## लिङ्गोपदेशश्च तदर्थवत् ॥५१॥

आग्नेय्येत्यग्निना देवतया लिङ्गेन तदभिधानसामर्थ्येन वा य उपदेशः स तदर्थार्चितां मन्त्रस्य द्योतयति । देवतातद्धितो ह्येष स्मर्यते यं चार्थप्राधान्येन मन्त्रः प्रकाशयति सा तस्य देवता नाभिधानमात्रेण एकदैवत्ये ऽपि मन्त्रे ऽनेकदेवतान्तरपदप्रयोगे सति तद्दैवत्यव्यपदेशाभावात् । प्राधान्याभिधानं च नार्थपरत्वेन विनोपपद्यते ॥

## ऊहः ॥ ५२ ॥

ऊहदर्शनं न माता वर्द्धत इत्यर्थे च पुत्र्यादिवृद्धेः प्रत्यक्षत्वात्प्रतिषेधासंभवादानर्थक्यात्तदङ्गेष्विति शब्दे विज्ञायते । तत्रापि स्थौल्यादिवृद्ध्यसंभवादधिकार्थवाचित्वेन द्विवचनबहुवचनयोः प्रतिषेधः स चार्थपरत्वे सर्वपशुविशेषणमात्राद्युपादित्सायां सत्यामवकल्पते। या चान्यपदवृद्धिसद्भावप्रतीतिरियं च। यद्यपि मातृप्रभृतीनां पारार्थ्यात्संबन्धिभेदादेव च भेदसिद्धेरनूद्यत्वं सदेवानुवदति तथापि न्यायावगतानूद्यसंकीर्त्तनाक्न्यायत-

च्छितेषूच्चसंप्रत्ययात्प्रकृतौ विवक्षितार्थता विज्ञायते । अन्यथा तु तददृष्टमविकृतैरेव साध्येत । तथा यद्यप्यन्यदैवत्यः पशुराग्नेय्येव मनोता कार्येत्यूहप्राप्तिदर्शनमेवमुस्राणां मेषाणामित्येवमादीनां यथार्थमूहितानामेवाम्नानमपि विवक्षितार्थं भविष्यति । इतरथा प्राकृतपदत्यागे ऽन्यकल्पने च दृष्टद्वयं कल्प्येत ॥

## विधिशब्दश्च ॥ ५३ ॥

विधिरेव च ब्राह्मणाभिधस्तत्र तत्र पर्यायैरवयवान्वाख्याननिर्वचनादिभिस्स्वार्थप्रकाशनपरत्वं दर्शयति ॥ अर्थानाश्रयणे हि सर्वं तदनर्थकं स्यात् । तस्माद्विवक्षितवचना मन्त्रा इति सिद्धम् ॥

इति श्रीमद्भट्टकुमारिलस्वामिविरचिते मीमांसाभाष्यव्याख्याने तन्त्रवार्त्तिके प्रथमस्याध्यायस्य द्वितीयः पादः ॥

---

## तन्त्रवार्तिके।

### प्रथमाध्यायस्य तृतीयः पादः।

---

## धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् ॥ १ ॥

एवं तावद्विध्यर्थवादमन्त्रनामधेयात्मकस्य वेदस्य धर्मं प्रत्युपयोगः साधितः। इदानीं पौरुषेयीषु स्मर्यमाणार्थविधिषु मन्वादिप्रणीतनिबन्धनासु स्मृतिष्वनिबद्धेषु चाचारेषु चिन्ता। तत्र किं चिदुदाहृत्य विचारः कर्तव्य इत्यष्टकादिस्मरणानि मन्वादिस्थानि। तद्ग्रन्थसमर्पितानि प्रमाणाप्रमाणविचारविषयत्वेनोदाह्रियन्ते। सन्देहहेतुश्चाभिधीयते॥

पारतन्त्र्यात्स्वतो नैषां प्रमाणत्वावधारणा।
अप्रामाण्यविकल्पस्तु द्रढिम्नैव विहन्यते॥

मन्वादिवचनं स्मृत्यपेक्षं स्मृतिश्च मूलप्रमाणापेक्षिणीति नैकस्यापि वेदवन्निरपेक्षप्रामाण्यनिश्चयः। यतस्तु वेदवादिनामेवाविगानेनाविच्छिन्नपारम्पर्यपरिग्रहदार्ढ्यमतो नाप्रामाण्याध्यवसानमिति युक्तः सन्देहस्तत्र पूर्वपक्षवादी वदति नैषां प्रामाण्यमेवापेक्षितव्यमिति। कुतः॥

पूर्वविज्ञानविषयं विज्ञानं स्मृतिरुच्यते।
पूर्वज्ञानाद्विना तस्याः प्रामाण्यं नावधार्यते॥

सर्वस्मरणानि हि प्रत्यक्षाद्यवगते ऽर्थे तदानुरूप्येणोपजाय-

मानान्यर्थं समर्थयन्ति । तदिहाष्टकादीनां स्वर्गादिसाध्यसा-
धनभावं प्रत्यक्षादीनि तावन्न गृह्णन्तीति साधितम् । शब्दो ऽपि
यथाग्निहोत्रादिषु प्रत्यक्षेणोपलभ्यते नैवं मन्वाः ॥

प्रत्यक्षानुपलब्धे च शब्दे सद्भावकल्पना ।
धर्म्मास्तित्वप्रमाणाद्धि विप्रकृष्टतरा भवेत् ॥

शब्दस्य तावदेकमेव प्रत्यक्षं प्रमाणम् । स चेत्तेनानवगम्य-
मानो ऽप्यस्तीत्युच्यते ततो वरं धर्म्मास्तित्वमेव निष्प्रमाणकम-
भ्युपगतमिति । न चानुमानमप्यस्मिन्नष्टकाश्रुतिकल्पने । न हि
स्मृतिस्तया व्याप्ता दृष्टा ऽन्यद्वानुमापकम् । यथैव धर्म्मे सम्ब-
न्धादर्शनान्न किं चिल्लिङ्गं क्रमते तथाष्टकादिश्रुतावपि ॥

न चागमेन तद्बोधो नित्येन कृतकेन वा ।
विस्रम्भः कृतके नास्ति नित्यो नैवोपपद्यते ॥

यद्यप्यैन्द्रियकत्वादष्टकादिश्रुतीनां पौरुषेयागमगम्यत्वं स-
म्भवति । तथापि विप्रलम्भभूयिष्ठत्वादश्रद्धेयवचनेषु पुरुषेष्वन-
ध्यवसानम् । दृश्यन्ते ह्यनागमिकानप्यर्थानागमिकत्वाध्यारो-
पेण के चिद्वदन्तो ऽप्यभिदधानाः । तेन मन्वादिभिरपि किमष्ट-
काश्रुतीरुपलभ्य वेदमूलत्वं स्वनिबन्धनानां प्रतिज्ञातमुतानुप-
लभ्यैव श्रद्धेयवाक्यत्वार्थमिति दुष्टपरुषाकुलितचेतसां भवति स-
न्देहः । तावता च प्रामाण्यविघातः । नित्यस्य वचनस्यादिमत्स्म-
रणमूलप्रतिपादने व्यापार एव नास्ति । न च मन्त्रलिङ्गानि स्व-
यं मूलत्वं प्रतिपद्यन्ते । विधिशून्यत्वान्न च मूलान्तरं न्यायागतं
सूचयन्त्यन्यपरत्वात् । न च सर्वेषां स्मृतिप्रणयिनामविगानं येन
पौरुषेयागमबलादुपलब्धपूर्वश्रुतिमूलत्वं स्यात् ॥

न च विज्ञायते वाक्यं कीदृशं तैर्निरूपितम् ।

अर्थवादादिरूपाद्धि पश्यामो भ्राम्यतो बहून् ॥

यदि ह्येतदेकान्तेन गम्येत यथाविधि वाक्यान्येव मन्वादिभिरुपलब्धानीति । ततः क्वापि कल्पना स्यादद्यत्वे ऽप्यन्यपरार्थवादादिवचनेभ्यो ऽपि भ्राम्यन्तः पुरुषा दृश्यन्ते । तेन तेष्वप्याशङ्का भवति । म्हतसाक्षिकव्यवहारवच्च प्रलीनशाखामूलत्वकल्पनायां यस्मै यद्रोचते स तत्प्रमाणी कुर्य्यात् । तस्मान्नागमेनापि मूलोपलब्धिः ॥

उपमानं त्वदृष्टे ऽर्थे सदृशे चानिरूपिते ।
नैवेष्टमिति तेनापि न मूलश्रुतिसाधनम् ॥
अर्थापत्त्यापि यत्किं चिन्मूलमित्यवगम्यते ।
तच्चाप्रमाणपक्षे ऽपि भ्रान्त्यादि न विरुध्यते ॥

यदि हि श्रुतिकल्पनेन विना स्मृतिर्नोपपद्यते ततः सम्यङ्मूला स्यात् । संभवति तु स्वप्नमूलत्वेन तेनानैकान्त्यादर्थापत्तेः सामान्यतो दृष्टस्य वानवकाशः । तस्मादनुपलब्धिगोचरापन्नायां श्रुतौ सत्स्वपि मूलान्तरेष्वभिप्रेतमूलाभावान्निर्मूलत्वाभिधानम् । ननु ये विदुरेवमितिकर्त्तव्यताक एवंफलकश्चासौ पदार्थः कर्त्तव्य इति । अथ वा ये कर्त्तव्यो ऽसावितीत्थं विदुस्ते तथा विजानन्तस्तादृशाः कथमिवास्मान्विप्रलब्धुं न कर्त्तव्यो ऽसाविति वदेयुः । नन्वन्ये एवं वदन्ति कर्त्तव्य इत्यन्ये न वा कर्त्तव्य इत्याहुः(१) । कथमन्यत्वं यदा तेषामप्येवमयं स्मर्य्यतइति कथिते भवत्येवं प्रतिपत्तिः । अथ वा ये मन्वादयो विदुरकर्त्तव्यो ऽयं पदार्थ इति । कथमिव ते विनापराधेन लोकं वञ्चयितुं वदिष्यन्ति कर्त्तव्य एवायमिति । स्मरणानुपपत्त्येति । ये तावन्मन्वादिभ्यो ऽर्वा-

(१) इत्यप्याहुरिति पाठान्तरम् ।

ततश्च तुल्यकक्षापि यदि नाम स्मृतिर्भवेत् ।
तथापि नैव दोषोऽस्ति श्रुत्यर्थमनुतिष्ठताम् ॥

यानि स्मृतिवचनान्यर्थमात्रमेव प्रतिपाद्य मूलभूताः श्रुतीरनुदाहृत्य निवृत्तव्यापाराणि तेषु श्रुत्यनुमानव्याजसापेक्षप्रामाण्येषु सत्सु वेदवचनमनपेक्षत्वात्प्रमाणतरत्वेन सुतरां विस्रम्भणीयमिति श्रद्धाविशेषेण ग्राह्यतरार्थं विज्ञायते । सूत्रार्थोऽप्येवं योजयितव्यः । श्रौतस्मार्त्तविज्ञानविरोधे यदनपेक्षमपेक्षावर्जितं यच्च वापेक्षणीयमन्यत्रास्तीत्येवं पाठद्वयेऽपि पूर्वसूत्रात्प्रमाणशब्दमनुषङ्गेण संबन्ध्य यदनपेक्षं तत्तावत्प्रमाणं स्यादिति तदानींतनव्यवहारमात्रप्रतिपत्त्यर्थमेवोच्यते । ततश्च न तावच्छाखान्तरीयविद्यमानश्रुतिमूलत्वाशङ्कायां सत्यामेवात्यन्तनिराकरणपक्षः परिगृह्यते । न च प्रत्यक्षश्रुत्यर्थानुष्ठानहानिः । यदा तु क्वचिच्छाखान्तरे स्मरणमूलं श्रुतिरपि प्रत्यक्षी भविष्यति तदोभयोस्तुल्यबलत्वाद्विकल्पो भविष्यत्येव । नन्वनेनैव न्यायेन स्वशाखाविहितविरुद्धं शाखान्तरगतमप्यग्राह्यं स्यात् । सत्यम् ॥

वार्त्तामात्रेण तद्यावत्तावन्नैव ग्रहीष्यते ।
यदा तु श्रवणं प्राप्तं तदास्मान्न विशिष्यते ॥
अतश्चैवं श्रुतिस्मृत्योर्विशेषोऽनेन दर्श्यते ।
नात्यन्तमेव बाध्यत्वं न चाप्यत्यन्ततुल्यता ॥

यदा यान्येतानि त्रयीविद्भिर्न परिगृहीतानि किंचिन्मिश्रधर्मकञ्चुकच्छायापतितानि लोकोपसंग्रहलाभपूजाख्यातिप्रयोजनपराणि त्रयीविपरीतासम्बद्धदृष्टशोभादिप्रत्यक्षानुमानोपमानार्थापत्तिप्राययुक्तिमूलोपनिबद्धानि सांख्ययोगपाञ्चरात्रपाशुपतशाक्यनिर्ग्रन्थपरिगृहीतधर्माधर्मनिबन्धनानि विषचि-

कित्वावशीकरणोच्चाटनोन्मादनादिसमर्थकतिपयमन्त्रौषधिका-
दाचित्कसिद्धिनिदर्शनबलेनाहिंसासत्यवचनदमदानदयादिश्रु-
तिस्मृतिसंवादिस्तोकार्थगन्धवासितजीविकाप्रायार्थान्तरोपदे-
शीनि यानि च बाह्यतराणि म्लेच्छाचारमिश्रकभोजनाचरणनि-
बन्धनानि तेषामेवैतच्छ्रुतिविरोधहेतुदर्शनाभ्यामनपेक्षणीयत्वं
प्रतिपाद्यते । न चैतत्क्वचिदधिकरणान्तरे निरूपितं न चावक्त-
व्यमेव गाव्यादिशब्दवाचकत्वबुद्धिवदतिप्रसिद्धत्वात् ॥

यदि ह्यनादरेणैषां न कल्प्येताप्रमाणता ।
अशक्यैवेति मत्वान्ये भवेयुः समदृष्टयः ॥
शोभासौकर्यहेतूक्तिकलिकालवशेन वा ।
यज्ञोक्तपशुहिंसादित्यागभ्रान्तिमवाप्नुयुः ॥

ब्राह्मणक्षत्रियप्रणीतत्वाविशेषेण वा मानवादिवदेव श्रुतिमू-
लत्वमाश्रित्य सचेतसोऽपि श्रुतिविहितैः सह विकल्पमेव प्रति-
पद्येरन् ॥

तेन यद्यपि लभ्येत स्मृतिः का चिद्विरोधिनी ।
मन्वाद्युक्ता तथाप्यस्मिन्नेतदेवोपयुज्यते ॥
त्रयीमार्गस्य सिद्धस्य ये ह्यत्यन्तविरोधिनः ।
अनिराकृत्य तान् सर्वान्धर्मशुद्धिर्न लभ्यते ॥
महाजनगृहीतत्वं पित्राद्यनुगमादि च ।
तेऽपि द्वीपान्तरापेक्षं वदन्त्येव स्वदर्शने ॥

तत्र श्रद्धामात्रमेवैकं व्यवस्थानिमित्तं सर्वेषां स्वपितृपिता-
महादिचरितानुयायित्वात् । यैश्च मानवादिस्मृतीनामप्युत्सन्न-
वेदशाखामूलत्वमभ्युपगतं तान्प्रति सुतरां शाक्यादिभिरपि श-
क्यं तन्मूलत्वमेव वक्तुम् । को हि मन्वाद्युक्तानां शाक्यविषये

यत्तानियमं कर्त्तुम् । ततश्च यावत्किं चित्कियन्तमपि कालं कै-
श्चिदाद्रियमाणं प्रसिद्धिं गतं तत्प्रत्यक्षशाखाविसंवादे ऽप्युत्सन्न-
शाखामूलत्वावस्थानमनुभवत्प्रत्यक्षशनया प्रतिभायात् । अत
आह, विरोधे त्वनपेक्ष्यं स्यादिति । पारतन्त्र्यं तावदेषां स्मर्यमा-
णपुरुषविशेषप्रणीतत्वात्तैरेव प्रतिपन्नं शब्दकृतकत्वादिप्रतिपा-
दनादराच्च पार्श्वस्थैरपि ज्ञायते । वेदमूलत्वं पुनस्ते तुल्यकक्ष-
मूलत्वाश्मयैव लज्जया च मातापितृद्वेषिदुष्टपुत्रवन्नाभ्युपग-
च्छन्ति । अन्यच्च स्मृतिवाक्यमेकमेकेन श्रुतिवचनेन विरुध्येत ।
शाक्यादिवचनानि तु कतिपयदमदानादिवचनवर्ज्जं सर्वाण्येव
समस्तचतुर्दशविद्यास्थानविरुद्धानि त्रयीमार्गव्युत्थितविरुद्धाच-
रणैश्च बुद्धादिभिः प्रणीतानि । त्रयीबाह्येभ्यश्चतुर्थवर्णनिरवसि-
तप्रायेभ्यो व्यामूढेभ्यः समर्पितानीति न वेदमूलत्वेन संभाव्य-
न्ते । स्वधर्म्मातिक्रमेण च येन क्षत्रियेण सता प्रवक्तृत्वप्रतिग्रहौ प्र-
तिपन्नौ स धर्म्ममविप्लुतमुपदेक्ष्यतीति कः समाश्वासः । उक्तं च ॥

परलोकविरुद्धानि कुर्वाणं दूरतस्त्यजेत् ।
आत्मानं यो ऽतिसंधत्ते सो ऽन्यस्मै स्यात्कथं हित इति ॥

बुद्धादेः पुनरयमेव व्यतिक्रमो ऽलङ्कारबुद्धौ स्थितः । येनैवमाह ।

कलिकलुषकृतानि यानि लोके
मयि निपतन्तु विमुच्यतां तु लोक इति ।

स किल लोकहितार्थं क्षत्रियधर्म्ममतिक्रम्य ब्राह्मणवृत्तं प्र-
वक्तृत्वं प्रतिपद्य प्रतिषेधातिक्रमासमर्थैर्ब्राह्मणैरननुशिष्टं धर्म्मं
बाह्यजनाननुशासद्धर्म्मपीडामप्यात्मनो ऽङ्गीकृत्य परानुग्रहं कृ-
तवानिति, एवंविधैरेव गुणैः स्तूयते तदनु शिष्टानुसारिणश्च
सर्वएव श्रुतिस्मृतिविहितधर्म्मातिक्रमेण व्यवहरन्तो विरुद्धा-

चारत्वेन ज्ञायन्ते ॥

तेन प्रत्यक्षया श्रुत्या विरोधे ग्रन्थकारिणाम् ।
ग्रहीत्राचरितॄणां च ग्रन्थप्रामाण्यबाधनम् ॥

न ह्येषां पूर्वोक्तेन न्यायेन श्रुतिप्रतिबद्धानां स्वमूलश्रुत्यनुमानसामर्थ्यमस्ति ॥

न च शाखान्तरोच्छेदः कदा चिदपि विद्यते ।
प्रागुक्ताद्वेदनित्यत्वान्न चैषां दृष्टमूलता ॥

न हि यथोपनयनादिस्मृतीनां शाखान्तरदृष्टश्रुतिसंवादः । एवं चैत्यकरणतद्वन्दनशूद्रसंप्रदानकदानादीनां संवादः सम्भवति मूलान्तरकल्पनं च प्रागेव प्रत्याख्यातम् ॥

लोभादिकारणं चात्र बह्वेवान्यत्प्रतीयते ।
यस्मिन् सन्निहिते दृष्टे नास्ति मूलान्तरानुमा ॥
शाक्यादयश्च सर्वत्र कुर्वाणा धर्मदेशनाम् ।
हेतुजालविनिर्मुक्तां न कदा चन कुर्वते ॥
न च तैर्वेदमूलत्वमुच्यते गौतमादिवत् ।
हेतवश्चाभिधीयन्ते ये धर्माद् दूरतः स्थिताः ॥
एतएव च ते येषां वाङ्मात्रेणापि नार्चनम् ।
पाखण्डिनो विकर्मस्था हैतुकाश्चैतएव हि ॥

एतदीया ग्रन्थाःएव च मन्वादिभिः परिहार्यत्वेनोक्ताः ।

या वेदबाह्याः स्मृतयो याश्च काश्चित्कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥

तस्मादिमं प्रति त्रयीबाह्यमेवंजातीयकं प्रामाण्येनानपेक्ष्यं स्यादिति सिद्धम् ॥

## शिष्टाकोपे विरुद्धमिति चेत् ॥ ५ ॥

एवं तावत्पुरुषार्थस्मृतीनामविरोधे विरोधे च प्रमाणत्वाप्रमाणत्वे निरूपिते संप्रति तु क्रत्वर्थानां यज्ञोपवीतोदकाचमनदक्षिणहस्ताचरणस्मृतीनां बहुश्रुत्यर्थमध्यपातिनीनां विरोधाविरोधमात्रमेव विचार्य्यते । तन्निर्णये तु कृते पूर्वाधिकरणाभ्यां प्रमाणत्वाप्रमाणत्वसिद्धिः ॥

कथं पुनर्विरुद्धत्वं कथं वा न विरुद्धता ।
श्रुत्यर्थविगुणत्वेन तदभावेन चेष्यते ॥

यदि यज्ञोपवीतादीनि क्रतुमनुप्रवेश्यमानानि चोदकप्रयोगवचनाभ्यां न परिगृह्यन्ते निराक्रियन्ते वा ततो विरोधः । यदि पुनरानुगुण्यात्प्रकरणादिपठितवत्स्मृत्यनुमितवाक्यसंयोगेन क्रतुमनुप्रविशन्ति न च पूर्वगृहीतं किंचिद्बाधन्ते ततो न विरुद्धानीति । अन्यत्तु दर्शनं सत्यपि विरोधे प्रमाणप्रमेयबलाबलविसंवादात्संदेहः । तथा हि ।

श्रुतिस्मृत्योर्विरुद्धत्वे ज्ञातमेव बलाबलम् ।
धर्मधर्मिविरोधे च धर्मिणो बलवत्तराः ॥

वक्ष्यति ह्यङ्गगुणविरोधे च तादर्थ्यादिति । न चेह स्मार्त्तः कस्य चिदपि श्रौतस्य पदार्थस्य बाध आशङ्क्यते क्रमकालपरिमाणानि तु समस्तपदार्थधर्मत्वेन निश्चितानि । तत्र यदि प्रमाणबलाबलं बलीयस्ततो बलवच्छ्रुतिप्रमेयत्वाद्दुर्बलस्वभावैरपि क्रमादिभिराचमनादीनां बाधः प्रमेयबलाबलबलीयस्त्वे तु पदार्थधर्मेभ्यः क्रमादिभ्यः पदार्थत्वेनाचमनादयो बलीयांस इति सत्यपि स्मृत्याख्यप्रमाणे दुर्बलत्वे बलवदाश्रयानपि स्वरूपेण दु-

र्थत्वान् क्रमादीनेव बाधिष्यन्ते ॥

किं युक्तमविरुद्धत्वं क्रत्वर्थाङ्गस्मृतेरपि ।
न तदर्थक्रियायां हि श्रुतं किं च न हीयते ॥

यथैव विज्ञानबलाबलैरपि श्रुत्यादिभिः समाख्यापर्य्यन्तैर्यावन्तः शेषाः प्रमीयन्ते ते सर्वे शेषिकथंभावेन प्रार्थिता इत्थंभावेन सन्तानारभ्यवादाधीतैर्गृह्यन्ते ॥

स्मृत्या तथैव सप्तम्या शिष्टाचारेण चार्थिताः ।
गृह्यन्ते भावनाभाव्यैरपूर्वैः साधनांशवत् ॥

कथंभावापेक्षितापूर्वोपकारस्याज्ञातपरिमाणाङ्गसाध्यत्वाद् यावत्किं चिद्येन केन चिदपि प्रमाणेन न प्राप्नोति तत्सर्वमङ्गं भवति । तस्मादाचमनादीन्यपि यज्ञप्रयोगाङ्गानीत्युपन्यस्तेऽभिधीयते ॥

"न शास्त्रपरिमाणत्वात्" ॥ ६ ॥ पदार्थो ऽभ्यधिको भवेत् ।
शास्त्रितं परिमाणं हि को ऽतिक्रमितुमर्हति ॥
शास्त्रेण हि पदार्थानां परिमाणं त्रिधागतम् ।
क्रमेयत्ताप्रधानिर्म्माणरूपं तदिह बाध्यते ॥
द्वाभ्यां श्रुत्यादिषट्काभ्यां कालेयत्ताक्रमास्थितान् ।
पदार्थाः प्रविशन्तो हि बाधेरन् स्मार्त्तलौकिकाः ॥

सर्वे हि पदार्थाः प्रधानकालात्र विप्रकृष्टव्या इति प्रयोगवचनेन प्रतिपादितं तत्र स्मार्त्तशिष्टलोकाचारप्रमाणकपदार्थानुष्ठानविक्षेपाद्व्यग्रैकचस्ताधीनविलम्बितानुष्ठानाच्च प्रधानप्रत्यासत्तिबाधप्रसङ्गः ॥

समस्तप्रयोगकालश्च पूर्वाह्णमध्यन्दिनादयो ऽतिक्राम्येरन् ।
क्रमश्च यः श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिवत्क्रमैरवगतः स च

वैदिकपदार्थोद्दढतया विज्ञाताश्रयप्रमाणपरिमाणः सन्नन्यथा-त्वं सुतादिनिमित्ताचमनव्यवधानात्प्रतिपाद्येत। एवमायासस्र-स्तोपवीतपुनःकरणव्यवधाने ऽपि योजनीयम्॥

यो ऽत्यन्तमावन्तस्मार्त्तः पदार्थः क्रियते तदा।
तस्य क्रमप्रमाणं हि न श्रुत्याद्यवगम्यते॥

उक्तपरिमाणस्य क्रमस्य नान्यदपि किं चित्प्रमाणमवकल्पते। तथा श्रुत्याद्यवगतप्रचयशिष्टपदार्थपरिमाणमवश्यमध्वर्य्वादि-भिरविस्मृतसमस्तपदार्थनिर्म्माणायावधारणीयम्। ततश्च प्रथ-मापरिकल्पितपश्चादागतस्मार्त्तपदार्थानुष्ठाने पूर्वावधारणभ्रं-शात् समस्तकृताकृतानिरूपणादनिवृत्तवैगुण्याशङ्कस्य सम्यक्कृ-तत्वदार्ढ्यनिमित्तसंस्कारपाटवाभावादपूर्वदौर्बल्येन न्यूनफल-लाभप्रसङ्गः॥

तच्चातिशयवत्सर्वं सार्थवादाद्विधेर्गतम्।
न्यूनत्वाक्षमयावश्यं विरुद्धां बाधते स्मृतिम्॥

परिमितश्रुत्याद्युपदेशातिदेशात्मकाङ्गशास्त्रपरिमाणत्वाद्वा न तद्व्यतिरिक्ताङ्गशास्त्रावकाशः। सद्यःकर्त्तव्यापगतेषु च पदा-र्थेषु सर्वात्मना त्वरमाणस्य यावानेवात्यन्ताशक्त्या कालविप्र-कर्षो भवति तावन्मात्रमेव प्रयोगवचनो ऽनुमन्यते। शक्तस्तु क्ष-णमात्रमपि यदि विक्षेपं कुर्यात् तदस्य प्रयोगवचनविधिर्न्न स-हेत। तस्मात्त्रिविधस्यापि शास्त्रपरिमाणस्यान्यथा करणान्नाच-मनादिरुद्धमिति। उच्यते॥

## अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्निति ॥७॥

नेच्छद्दर्शनाद्विरोधस्येति वा समाप्तिः । अनन्तरसूत्रे विप्रतिपत्त्युपात्तविरोधाभावोक्तेरनुपयुज्यमानत्वादिह च प्रक्रान्तविरोधाभावस्यावश्यवचनीयत्वात् । उपयोगसद्भावेपि च काकाक्षिवदनुषङ्गेण तन्त्रेण चोभयसम्बन्धात् ॥

अपि वा कारणं दृष्टं यस्मादेषु न गृह्यते ।
तस्मान्नाचमनादीनां क्रतुश्रुतिविरुद्धता ॥

विरोधत्याजितश्रुतिविरुद्धता । विरोधत्याजितश्रुतिमूलस्य हि स्मरणस्य यस्य मूलान्तरमिदं नामेत्येवं संभवदुत्प्रेक्षामात्रेण उपप्लवते तत्राल्पेनैव प्रयासेन निराशङ्कमप्रमाणत्वं निश्चीयते ॥

यत्र तूत्प्रेक्षया ऽप्यन्यत्कारणं नावलम्ब्यते ।
अत्यन्तानन्यमूलत्वाच्छ्रुतितस्तत्प्रमाणता ॥

न वा ऽऽचमनादिस्मृतेः कामक्रोधलोभद्वेषमानलज्जादिकारणं किं चित्सम्भाव्यते यन्मूलत्वेन श्रुतिमूलत्वमपक्रुयेत ॥

अनन्यमूलिकायां च श्रुतौ मूले ऽवधारिते ।
विरोधे ऽपि प्रमाणत्वं स्मृतेः श्रुत्या न वार्य्यते ॥

इयत्ताक्रमकालाश्च श्रौतत्वाद्बलवत्तराः ।
पदार्थधर्मभावात्तु दुर्बलत्वादबाधकाः ॥

ननु पूर्वभावित्वात्प्रमाणबलाबलमेव प्रमेयबलाबलाज्ज्यायस्त्वेन प्रतिभाति ॥

उच्यते ।

नैव तावच्छ्रुतिस्मृत्योः स्वरूपेण विरुद्धता ।
बलाबलपरीक्षा वा प्रमेयद्वारिका हि सा ॥

प्रमेयगतं हि विरोधमालोच्य प्रमाणविरोधबुद्धिर्भवति ।
तयोस्तामेव वेलायां विरोधो दृश्यते तयोः ।

प्रमेययोः स्वरूपस्थं तस्यामेव बलाबलम्।
येषां पदार्थधर्मत्वाद्दौर्बल्यं पूर्वनिश्चितम्।
न तेषां श्रुत्यवष्टम्भात् सत्यस्माद्दपगच्छति ॥
पदार्थत्वेन येषां च बलीयस्त्वं निरूपितम्।
न स्मृतेर्दुर्बलत्वेन पुनस्तदपनीयते ॥
नित्यमेवाप्रमाणं यत्तदेवं बाधमर्हति।
आपेक्षिकाप्रमाणं तु स्यात्प्रमाणमपेक्षया ॥
न च प्रमेयदौर्बल्यबलीयस्त्वनिबन्धनम्।
प्राप्तं स्मृतिप्रमाणत्वं प्रमाणस्थेन बाध्यते ॥
न च प्रमेयदौर्बल्ये सत्यपि श्रुतिबाधनम्।
तावता मन्दतेजस्त्वात्स्मृतिस्तां नैव बाधते ॥
एतदेव श्रुतेः पार्श्वाद्दक्ष यत्र स्मृतिर्वृथा।
मत्वास्मृत्यापि या काचिन्न शक्या बाधितुं श्रुतिः ॥
युगपत्प्राप्तिहेतुश्च विरोधस्तुल्यकार्य्ययोः।
इह तु द्वयमप्येतन्नास्ति तेनाविरुद्धता ॥
कालेयत्ताक्रमाणां हि सर्वान्ते प्राप्तिरिष्यते।
सुजघन्यप्रमाणोऽपि पदार्थः पूर्वमश्नुते ॥
प्राप्तेषु हि पदार्थेषु क्रमः पश्चादपेक्षते।
यदा प्राप्तेष्वसौ क्लृप्तः केन पश्चाद्विरुध्यते ॥
परिमाणमपि त्वार्थमविस्मरणसिद्धये।
स्वयमालोच्यते प्राज्ञैः स्मार्त्तैः सह तदिष्यते ॥

न केनचित्प्रमाणेन पदार्थेयत्ता परिच्छिद्यते। तत्र यदि तेन विनाऽन्ये समस्तपदार्थस्मृतिहेतवो न स्युस्तत एतदप्येकं कारणमिति परिमाणमपि स्याप्येत। तस्यामपि त्ववस्थायां यथा श्रौ-

तमाचपरिमाणमसमाप्य समाख्यापर्य्यन्तप्रापितपदार्थगतपरि-
माणावधारणमाश्रीयते। तथा स्मृत्याचारपर्य्यन्तावगतपरिमाण-
माश्रयिष्यतइति निर्द्दोषम् ॥

कालो ऽपि च प्रयोगाङ्गं सर्वान्ते सोपि गृह्यते।
स्मार्त्तैः सह समाचित्यमाप्नुत्वं वा प्रपद्यते ॥
कालो ह्ययं प्रधानस्य सर्वाङ्गसहितस्य यः ।
अङ्गैरविप्रकृष्टत्वमीदृशस्यैव चोद्यते ॥

तस्माद्यत्किंचनप्रमाणकसर्वपदार्थप्राप्त्युत्तरकालापेक्षितस-
म्बन्धः कालो ऽपि नैव सर्वोपसंहारविरोधीति तेषु क्रमका-
लपरिमाणेष्वदर्शनाद्विरोधस्येत्युच्यते । यद्वा । तेष्वाचमनादिषु
क्रियमाणेष्वदर्शनाद्विरोधस्येति सूत्रार्थयोजना । अपि च ॥

शौचयज्ञोपवीतादेर्न स्वतन्त्रपदार्थता ।
सर्वं ह्यङ्गप्रधानार्थं तेन न व्यवधायकम् ॥

अतदङ्गेन हि तुल्यकक्षेण व्यवधाने भवति न सर्वप्राणेन ॥

वेदं कृत्वा यदा वेदिमकृत्वा ऽऽचामति स्तुते ।
वेदिमेव करोतीति स वक्तुं शक्यते तदा ॥
वेदिरेव ह्यनाचम्य कुर्वतो विगुणा भवेत् ।
तामेव सगुणां कर्त्तुं शुद्ध्या न व्यवधास्यते ॥

इममेवार्थमभिप्रेत्य भाष्यकारेणोक्तं न चैवञ्जातीयका अर्थाः
पदार्थानां व्यवधातारो भवन्तीति । इतरथा ह्यङ्गप्रधानार्थत्वे
ऽनाश्रीयमाणे शून्यहृदयवचनमेवैतत्स्यात् ॥

तस्मादाचमनादीनां क्रतुभिः सङ्गते सति ।
पश्चात्प्राप्तक्रमेयत्ताकालशास्त्राविरोधिता ॥

ननु च यज्ञोपवीतमुदाहर्त्तव्यं दर्शपूर्णमासादिषूपव्ययते

देवत्वमेव तत्कृतम् इति क्त्वाप्रत्ययविधानात् । तथा काठके चानारभ्यवादविधिना सर्वयज्ञगतयजनयाजनसम्बन्धोध्यापनाध्ययनसम्बन्धश्च श्रूयते । प्रसृतेन वै यज्ञेन देवाः स्वर्गं लोकमायन्नप्रसृतेनासुरान्पराभावयन् । प्रसृतो ह वै यज्ञोपवीतिनो यज्ञो ऽप्रसृतो ऽनुपवीतिनो यद्दै किं च ब्राह्मणो यज्ञोपवीत्यधीते यजतएव तत्तस्माद् यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा यज्ञस्य प्रसृत्या इति । तथा ऽऽचमनविधिरपि दक्षिणात उपवीयोपविश्य हस्तावविनिज्य त्रिराचम्य द्विः परिमृज्य दर्भाणां महदुपस्तीर्य्य उपस्थं (१) कृत्वा प्राङ्मुख उपविश्य स्वाध्यायमधीयीतेति, यद्यपि ब्रह्मयज्ञप्रकरणे श्रूयते तथापि वेदोच्चारणसम्बन्धात्तदङ्गत्वेनापि तावज्ज्ञायमानं सर्वयज्ञानां मन्त्रवत्प्रयोगित्वात् तदङ्गं भवति । तथा च न सोमेनोच्छिष्टा भवन्तीति प्राप्ताचमनप्रतिषेधार्थमेवावधार्यते । दक्षिणाचारत्वं तु ॥

> यत्राहत्य विधानेन स्यात्सव्याञ्जलिचोदना ।
> तस्मादेव निवर्त्तेत नान्यत्राशङ्क्यते ऽपि तत् ॥

यथा वै दक्षिणः पाणिरेवं देवयजनमिति प्रागुदक्प्रवणविधिपरे वाक्ये देवयजनवद्यज्ञाङ्गत्वौचित्यादुपमानमवकल्पते तेन नात्रैकमपि विरोधबाधाशङ्कायोग्यमित्यनुदाहरणानि । तस्मान्नैवैतदधिकरणान्तरम् । सूत्राणि तु पूर्वाधिकरणाक्षेपपरिहारसूत्रत्वेनैव व्याख्यातव्यानि । यत्तर्हि वेदविहितं न बाधते शिष्टाश्चा वेदविदो न कोपयन्ति विहारारामपङ्क्तकरणवैराग्यध्यानाभ्यासाहिंसासत्यवचनदमदानदयादितन्महादिभा-

(१) उपस्थं जानु ।

षितं प्रमाणेनाविरुद्धमिति चेन्न । शास्त्रपरिमाणत्वात् ॥

परिमितान्येव हि चतुर्द्दशाष्टादश वा विद्यास्थानानि धर्म्मप्रमाणत्वेन शिष्टैः परिगृहीतानि वेदोपवेदाङ्गोपाङ्गाष्टादशधर्म्मसंहितापुराणशास्त्रशिक्षादण्डनीति संज्ञकानि न च तेषां मध्ये बौद्धार्हतादिग्रन्थाः स्मृता गृहीता वा ॥

प्रतिकञ्चुकरूपेण पूर्वशास्त्रार्थगोचरम् ।
यदन्यत्क्रीयते तस्य धर्म्मं प्रत्यप्रमाणता ॥

तथा च प्रायश्चित्तादिदानकाले यो वाक्यमात्मीयमन्यकविकृतं वा श्लोकं सूत्रं वोच्चार्य्य मानवादिप्रायश्चित्तं दद्यान्न कश्चिदपि धर्मार्थं प्रतिपद्येत ॥

वेदेनैवाभ्यनुज्ञाता येषामेव प्रवक्तृता ।
नित्यानामभिधेयानां मन्वन्तरयुगादिषु ॥
तेषां विपरिवर्त्तेषु कुर्वतां धर्म्मसंहिताः ।
वचनानि प्रमाणानि नान्येषामिति निश्चयः ॥

तथा च मनोर्ऋचः सामिधेन्यो भवन्तीत्यस्य विधेर्वाक्यशेषे श्रूयते । मनुर्वै यत्किं चिदवदत्तद्भेषजं भेषजताया इति प्रायश्चित्ताद्युपदेशवचनं पापव्याधेर्भेषजम् ॥

न चैतच्छ्रुतिसामान्यमात्रं नित्येऽपि संभवात् ।
यज्ञेऽध्वर्युरिव ह्यस्ति मनुर्म्मन्वन्तरे सदा ॥
प्रतिमन्वन्तरं चैवं स्मृतिरन्या विधीयते ।
स्थिताश्च मनवो नित्यं कल्पे कल्पे चतुर्द्दश ॥
तेन तद्वाक्यचेष्टानां सर्वदैवास्ति संभवः ।
तदुक्तिज्ञापनाद्वेदो नानित्योऽतो भविष्यति ॥
प्रशिष्यन्ते भवन्त्यन्ये सर्वदा षोडशर्त्विजः ।

आदिमत्त्वं च वेदस्य न तच्चरितबन्धनात् ॥

उक्तं च ।

यथर्त्तावृतुलिङ्गानि नानारूपाणि पर्य्यये ।
दृश्यन्ते तानि तान्येव तथा भाति युगादिष्विति ॥

इतिहासपुराणं च कृत्रिमत्वेन निश्चितं ।
तथाप्यकृत्रिमे वेदे तद्विद्यात्वेन सम्मतम् ॥

एवं ह्युपनिषत्सूक्तम् । ऋग्वेदं भगवो ऽध्येमि यजुर्वेदं सामवेदमथर्ववेदं चतुर्थमितिहासं पुराणं पञ्चममिति । तेन प्रतिकल्पमन्वन्तरयुगनियतनित्यऋषिनामाभिधेयकृत्रिमविद्यास्थानकारा ये वेदे ऽपि मन्त्रार्थवादेषु श्रूयन्ते तत्प्रणीतान्येव विद्यास्थानानि धर्म्मज्ञानाङ्गत्वेन संमतानि । तथा च ऋग्वेदादिविहितयज्ञाङ्गभ्रेषप्रायश्चित्तविशेषानभिधाय यद्यविज्ञातइति प्रायश्चित्तान्तरं विदधत् त्रैविद्यवृद्धस्मृतिविहितविनष्टोद्देशेनैव विदधातीति गम्यते । अन्यथा हि प्रत्यक्षवेदविहितं सर्वं विज्ञातमूलविशेषत्वाद् अविज्ञातमूलत्वेनानभिधेयमेव स्यात् । यदि च स्मर्य्यमाणवेदमूलग्रन्थनिबन्धनानामविज्ञातवेदविशेषपूर्वकत्वेनापि स्थितानां प्रामाण्यं नाश्रीयेत तथा सति नैवाविज्ञातमूलं किं चिद्यज्ञे क्रियतइति तद्विनष्टप्रायश्चित्तविधिर्नैवोपपद्येत ॥

तस्माद्यान्येव शास्त्राणि वेदमूलानतिक्रमात् ।
अवस्थितानि तैरेव ज्ञातो धर्म्मः फलप्रदः ॥

यथैवान्यायविज्ञाताद्वेदाल्लेख्यादिपूर्वकात् ।
शूद्रेणाधिगताद्वापि धर्मज्ञानं न संमतम् ॥

तथातिक्रान्तवेदोक्तमर्यादा व्यवहारिणाम् ।
संवादिष्वपि वाक्येषु नेष्यते धर्महेतुता ॥

स्मर्य्यन्ते च पुराणेषु धर्म्मविप्लुतिहेतवः।
कलौ शाक्यादयस्तेषां को वाक्यं श्रोतुमर्हति॥
यथा कुनककर्पूरसुवर्णादिषु दीयते।
यद्बीजं तदपि व्यक्तमग्राह्यत्वात्प्रलीयते॥

तेन कर्म्मानुरूप्यसामान्यतो दृष्टार्थापत्तिबलात्तदभिप्रायकल्पितधर्म्माभासमध्यपतितं सन्मूलमप्यहिंसादिश्वदृति(१)निक्षिप्तक्षीरवद् अनुपयोग्यविस्रम्भणीयञ्च तन्मात्रोपलब्धं भवतीत्यवश्यं यावत्परिगणितधर्मशास्त्रेभ्यो नोपलभ्यते तावदग्राह्यं भवति॥

यदा शास्त्रान्तरेणैव सोऽर्थः स्पष्टोऽवधार्य्यते।
तदा तेनैव सिद्धत्वादितरत्स्यादनर्थकम्॥

तस्माद्यावत्परिगणितवेदादिशास्त्रव्यतिरिक्तनिबन्धनं तद्धर्म्मप्रमाणत्वेन नापेक्षितव्यमिति। यत्त्वेतदपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्निति सूत्रम्। अत्र सदाचारानुदाहृत्य त्रिवर्गसिद्ध्यर्थं विचार्य्यते। तद्विपरीतसङ्कीर्णव्यवहारिषु शिष्टेष्वपथ्यकारिवैद्यातुरवद्विस्रम्भणीयचरितत्वात्सम्भाव्यमानवेदमूलत्वाच्च धर्म्मसंशयं दर्शयित्वा धर्म्मस्य शब्दमूलत्वाद् अशब्दमनपेक्ष्यमिति पूर्वः पक्षः क्वचिच्च विरोधे त्वनपेक्ष्यमित्येतन्न्यायानुसारेण। सदाचारेषु हि दृष्टो धर्म्मव्यतिक्रमः साहसं च महतां प्रजापतीन्द्रवसिष्ठविश्वामित्रयुधिष्ठिरकृष्णद्वैपायनभीष्मधृतराष्ट्रवासुदेवार्ज्जुनप्रभृतीनां बहूनामद्यतनानां च। प्रजापतेस्तावत्। प्रजापतिरुषसमभ्यैत्स्वां दुहितरमिति अगम्यागमनरूपादधर्म्माचरणाद्धर्म्मव्यतिक्रमः। इन्द्रस्यापि। तत्पदस्थस्य

(१) भन्नमं।

च नहुषस्य परदाराभियोगाद्धर्मव्यतिक्रमः । तथा वसिष्ठस्य पुत्रशोकार्त्तस्य जलप्रवेशात्मत्यागसाहसम् । विश्वामित्रस्य चाण्डालयाजनम् । वसिष्ठवत्पुरूरवसः प्रयोगः । कृष्णद्वैपायनस्य गृहीतनैष्ठिकब्रह्मचर्यस्य विचित्रवीर्यदारेष्वपत्योत्पादनप्रसङ्गः । भीष्मस्य च सर्वाश्रमधर्मव्यतिरेकेणावस्थानम् । अपत्नीकस्यच रामवत् क्रतुप्रयोगः । तथान्धस्य धृतराष्ट्रस्येज्या पाण्डुर्ज्जितैर्द्धनैरित्यनधिकृतक्रिया । तथा युधिष्ठिरस्य कनीयोर्ज्जितभ्रातृजायापरिणयनमाचार्यब्राह्मणवधार्थमनृतभाषणं च । वासुदेवार्ज्जुनयोः प्रतिषिद्धमातुलदुहितृरुक्मिणीसुभद्रापरिणयनमुभौ मध्वासवक्षीवाविति सुरापानाचरणम् । आद्यत्वे ऽप्यहिच्छत्रमथुरानिवासिब्राह्मणीनां सुरापानम् । केसर्यश्वाश्वतरखरोष्ट्रोभयतोदद्दानप्रतिग्रहविक्रयव्यवहारभार्य्यापत्यमित्रसहभोजनाद्युदीच्यानाम् । मातुलदुहितृदाहासन्दीस्थभोजनादीनि दाक्षिणात्यानाम् । मित्रस्वजनोच्छिष्टस्पृष्टभोजनं सर्ववर्णपरस्परस्पृष्टताम्बूलादनतद्वसानानाचमननिर्णेजकधौतगर्द्दभारूढवस्त्रपरिधानब्रह्महत्यातिरिक्तमहापातककार्य्यपरिहरणादीन्युभयेषाम् । अतिस्थूलानि प्रतिपुरुषजातिकुलावस्थितसूक्ष्मस्वधर्म्मव्यतिक्रमणानि त्वनन्तभेदानि सर्वत्र विगानहेतुदर्शनानि च प्रायेणैव सम्भवन्तीति नैवञ्जातीयकमिश्रसदाचारधर्मत्वाध्यवसानसम्भवः । किं च ॥

के शिष्टा ये सदाचाराः सदाचाराश्च तत्कृताः ।
इतीतरेतराधीननिर्णयत्वादनिर्णयः ॥

ननु ।

सदाचारप्रमाणत्वं मन्वादिभिरपि स्मृतम् ।

आत्मतुष्टिः स्मृता ऽन्या तैर्द्दर्मे सा चानवस्थिता ॥

यथाभ्यासं ह्याशयवैचित्र्येण शुभाशुभोभयहीनक्रियानुष्ठायिनामात्मतुष्टिरपि विचित्रैव भवति । तथा हि ॥

कस्य चिज्जायते तुष्टिरशुभे ऽपि हि कर्म्मणि ।
शाक्यस्येव कुहेतूक्तिर्वेदब्राह्मणदूषणे ॥

तथा हि ॥

पशुहिंसादिसम्बन्धे यज्ञे तुष्यन्ति हि द्विजाः ।
तेभ्य एव हि यज्ञेभ्यः शाक्याः क्रुध्यन्ति पीडिताः ॥

तथा ॥

शूद्रान्नभोजनेनापि तुष्यन्त्यन्ये द्विजातयः ।
स्वमातुलसुतां प्राप्य दाक्षिणात्यस्तु तुष्यति ॥
अन्ये तु सव्यलीकेन मनसा तच्च कुर्वते ।

ततश्चानवस्थितत्वाद्यथैवात्मनस्तुष्टिरेव चेत्येतन्मनुवचनं कथमप्यन्यथा नेतव्यमेवमाचारश्चैव साधूनामित्येतदपीति ॥

स्वयमज्ञातमूलाश्च शिष्टाचारप्रमाणताम् ।
वदन्तो ऽपि न शोभन्ते स्मृतिकारास्ततो ऽधिकाः ॥

स्मृतिकारवचनार्थो हि शिष्टैराचरितव्यः शिष्टत्वायान्यथा हि तदनपेक्षाः स्वातन्त्र्येण व्यवहरमाणा दुष्टा भवेयुर्न शिष्टाः ॥

न च तेषां श्रुतिर्म्मूलं व्यवहारस्य दृश्यते ।
यदि च स्यात्परोक्षापि स्मर्येतैव ह्यसौ ध्रुवम् ॥

तस्मान्निर्म्मूलत्वादनपेक्ष्याणि शिष्टाचरणानीति प्राप्ते ऽभिधीयते ॥

"अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्निति"
दृष्टकारणहीनानि यानि कर्म्माणि साधुभिः ।

प्रयुक्तानि प्रतीयेरन्धर्म्मत्वेनेह तान्यपि ॥
शरीरस्थितये यानि सुखार्थं वा प्रयुञ्जते ।
अर्थार्थं वा न तेष्वस्ति शिष्टानामेव धर्म्मधीः ॥
धर्म्मत्वेन प्रपन्नानि शिष्टैर्यानि तु कानि चित् ।
वैदिकैः कर्तृसामान्यात्तेषां धर्म्मत्वमिष्यते ॥
प्रदानानि जपो होमो मातृयज्ञादयस्तथा ।
शक्रध्वजमहोयात्रा देवतायतनेषु च ॥
कन्यकानां च सर्वासां चतुर्थ्याद्युपवासकाः ।
प्रदीपप्रतिपद्दानमोदकापूपपायसाः ॥

अनग्निपक्कमाघमप्तमीपौर्णमासीफाल्गुनीप्रतिपद्वसन्तोत्सवादीनां नियमक्रियाप्रमाणं न शाखादृते किं चिदस्ति । स्मृतिकाराश्चाचारस्यैव साधूनां देशजातिकुलधर्म्माश्चाम्नायैरविरुद्धाः प्रमाणमिति वेदाविरुद्धानामाचाराणां सामान्यतः प्रामाण्यमनुमन्यन्ते । तथानध्यायाधिकारे ऊर्ध्वं भोजनादुत्सव इति देशनगरोत्सवप्रामाण्याश्रयणम् । वेदे ऽपि च महाव्रते प्रेङ्खमारुह्य होता शंसतीत्येतद्वाक्यशेषे श्रूयते, यदा वै प्रजा मह आविशन्ति प्रेङ्खं तर्ह्यारोहन्तीति महःशब्दवाच्योत्सवप्रसिद्धिरनूदिता । यत्तु परिमितशाखप्रमेयत्वाद् धर्म्माधर्म्मयोरिह च तदसम्भवादित्युक्तं तद्वेदमूलत्वानुमानात् पूर्ववदेव प्रत्याख्येयम् । न च स्मृतिर्निर्म्मूला विस्तरवचनानामपि प्रपाठकमात्रेणोपसंहारात्किमुत संक्षेपवचनस्य । शक्यं च स्मृत्यनुरूपमेव वेदवचनमनुमातुम् । तथाहि ॥

शिष्टैराचार्यमाणानां सतां गोदोहनादिवत् ।
फलसंबन्धमप्राप्तं बोधयच्छास्त्रमर्थवत् ॥

न हि तदेवैकं शास्त्रप्रमाणकं यस्य स्वरूपमपि तत एवावगन्तव्यम्। अनेकाकारस्य हि प्रमेयस्य कश्चिदेवाकारः केन चित्प्रमाणेन प्रमीयते। तत्र प्रत्यक्षाद्यवगते ऽप्याचारस्वरूपे दधिगोदोहनादिवत् फलसंबन्धः शास्त्रेणावगम्यते। यागादिष्वपि च नैव स्वरूपज्ञानेन शास्त्रमपेक्षितम्। फलसंबन्धमात्रस्यैवातीन्द्रियत्वेन तदपेक्षितत्वादतो न नामोपलक्षणान्तरेण शास्त्रं प्रवृत्तमुपलभ्य शिष्टाः प्रवृत्ताः सर्वकालं तु शिष्टव्यवहारशास्त्रयोरवियोगाद् व्यवहारादेवापोद्धृत्य के चित्स्वर्गादिसाधनत्वेन नियम्यमानाः कादाचित्कत्वपरित्यागेन नित्यप्रयोज्या विज्ञायन्ते। तेषां चार्य्यावर्त्तनिवासिशिष्टप्रयोज्यत्वमेवोपलक्षणं वेदेनापि सरस्वतीविनशनप्लक्षप्रस्रवणादिवदुपात्तमिति शक्यमनुमातुम्॥

ननु शास्त्रार्थकारित्वाच्छिष्टत्वं गम्यते यदा।
शिष्टत्वेन च शास्त्रोक्तिरित्यन्योन्याश्रयं भवेत्॥
नैव तेषां सदाचारनिमित्ता शिष्टता मता।
साम्प्रादिविहितकारित्वाच्छिष्टत्वे सति तद्वचः॥

प्रत्यक्षवेदविहितधर्मक्रियया हि लब्धशिष्टत्वव्यपदेशाः यत्परम्पराप्राप्तमन्यदपि धर्मबुद्ध्या कुर्वन्ति तदपि स्वर्ग्यत्वाद्धर्मरूपमेव॥

तद्यथा शुश्रुवान् विद्वाननूचानश्च वैदिकः।
पुनस्तल्लक्षितो वेदे तेनैवाध्ययनादिषु॥

तेनाहोराचपौर्वापर्य्यवदनादित्वाद्वेदतदर्थानामितरेतराश्रयत्वाप्रसङ्गः। स्मृतिरप्याचारं वेदवचनं चोपलभ्याभ्यनुज्ञानायैव प्रवृत्तेत्यदोषः॥

यत्तु हेत्वन्तरं दृष्ट्वा वेदमूलनिवारणम्।

प्रत्यक्षवेदमूले ऽपि तद्दृष्टेस्तदकारणम् ॥

वेदे ऽपि हि बहून्येव दृष्टार्थगन्धस्पृष्टानि विधीयन्तइति न तावता वेदमूलत्वाभावः ॥

यानि तु म्लेच्छादिसमानानि नियतानियतक्रियाण्यर्थसुख-साधनकृषिसेवावाणिज्यादीनि मिष्टान्नपानमृदुशयनासनरमणीयगृहोद्यानालेख्यगीतनृत्यगन्धपुष्पादिकर्माणि प्रसिद्धानि तेषु नैव कस्य चिद्धर्मत्वाशङ्कास्तीति न तत्सामान्यतो दृष्टेनेतरनिराक्रियोपपत्तिः केषां चिद्वा धर्मत्वाभ्युपगमान्न सर्वेषामेव तत्प्रसङ्गः । किं तु ॥

देवब्राह्मणपूजादि यत्तेषामपि किं चन ।
तत्रेष्टमेव धर्मत्वं शिष्टाचारमतं हि तत् ॥
लोके हि कश्चिदाचारः शिष्टत्वेन विशिष्यते ।
कश्चित्तु प्राणिसामान्यप्राप्तस्तैरपि सङ्गतः ॥
तत्र यः कार्यरूपेण शिष्टानेवानुवर्त्तते ।
स एव केवलो धर्मो नेतरः प्राणिमात्रगः ॥
एतेन वैदिकानन्तधर्मधीसंस्कृतात्मनाम् ।
आत्मतुष्टेः प्रमाणत्वं प्रसिद्धं धर्मशुद्धये ॥

तथैव बहुकालाभ्यस्तवेदतदर्थज्ञानाहितसंस्काराणां वेदनियतमार्गानुसारिप्रतिभानां नोन्मार्गेण प्रतिभानं सम्भवतीत्याश्रित्योच्यते । यदेव किं चनानूचानो ऽभ्यूहत्यार्षं तद्भवतीति । वैदिकवासनाजनितत्वाद्वेद एव स भवति ॥

तथाहि ॥

यथा रुमायां लवणाकरेषु मेरौ यथा वोल्वणरुक्मभूमौ ।
यज्जायते तन्मयमेव तत्स्यात् तथा भवेद्वेदविदात्मतुष्टिः ॥

एवं च विद्वद्वचनादिनिर्गतं प्रसिद्धरूपं कविभिर्निरूपितम्।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तय इति॥

बह्वदिनाभ्यस्तधर्मव्याप्तात्मनो हि न कथं चिद्धर्मकरणरूपात्मतुष्टिरन्यत्र सम्भवतीति धर्मत्वेनाभ्यनुज्ञायते॥

यद्वा शिष्टात्मतुष्टीनां वचनादेव धर्मता।
पुण्यकृज्ज्ञानवत्तस्मादाचारेष्वपि सा तथा॥
यथा वा वरदानादौ देवताराधनोद्भवे।
यद्वक्ष्यसि स मन्त्रस्ते विषघ्न इति मन्त्रिते॥
लोकः स्मरति तं मन्त्रं विषापहरणादिषु।
यथा वा सर्पसिद्धान्ते नकुलो यां किलौषधिम्॥
दन्तैर्गृह्णाति तामाहुः समस्तविषहारिणीम्॥
यथा वा यां भुवं कश्चिदध्यावसति पुण्यकृत्।
तत्संपर्कपवित्रत्वात्सेव्यते पुण्यकारणम्॥
तथाचारात्मतुष्ट्यादि धर्म्यं धर्ममयात्मनाम्।
वेदोक्तमिति निश्चित्य ग्राह्यं धर्मबुभुत्सुभिरिति॥

यत्तु प्रजापतिरुषसमभ्यैत्स्वां दुहितरमहल्यायां मैत्रेय्यां इन्द्रो जार आसीदित्येवमादिदर्शनादितिहासदर्शनाच्च शिष्टाचारेषु धर्मातिक्रमं पश्यद्भिः शिष्टाचारप्रामाण्यं दुरध्यवसानमिति। तत्रोच्यते॥

श्रुतिसामान्यमात्राद्वा न दोषोऽत्र भविष्यति।
मनुष्यप्रतिषेधाद्वा तेजोबलवशेन वा॥
यथा वा न विरुद्धत्वं तथा तद्गमयिष्यति॥

प्रजापतिस्तावत्प्रजापालनाधिकारादादित्य एवोच्यते। स चारुणोदयवेलायामुषसमुद्यन्नभ्यैत् सा तदागमनादेवोपजा-

यत इति तद्दुहितृत्वेन व्यपदिश्यते तस्यां चारुणकिरणाख्यबी-
जनिक्षेपात् स्त्रीपुरुषयोगवदुपचारः । एवं समस्ततेजाः परमैश्वर्य्य-
निमित्तेन्द्रशब्दवाच्यः सवितैवाहनि लीयमानतया रात्रेरहल्या-
शब्दवाच्यायाः क्षयात्मकजरणहेतुत्वाज्जीर्यत्यस्मादनेनेवोदितेने-
त्यादित्य एवाहल्याजार इत्युच्यते न तु परस्त्रीव्यभिचारात् । न-
हुषेण पुनः परस्त्रीप्रार्थनमित्तानन्तरकालाजगरत्वप्राप्त्यैवात्म-
नो दुराचारत्वं प्रख्यापितम् । शच्याश्च पतिभक्तिनिमित्तपुण्या-
तिशयजनिततन्निराकरणावाप्तप्रभावलाभः ख्यात एव ॥

वसिष्ठस्यापि यत्पुत्रशोकव्यामोहचेष्टितम् ।
तस्याप्यान्यनिमित्तत्वान्नैव धर्मत्वसंशयः ॥

यो हि सदाचारः पुण्यबुद्ध्या क्रियते स धर्म्मादर्शत्वं प्रतिप-
द्येत यस्तु कामक्रोधलोभमोहशोकादिहेतुत्वेनोपलभ्यते स
यथाविधिप्रतिषेधं वर्त्तिष्यते । तेन विश्वामित्रस्यापि यद्रागद्वेष-
पूर्वकमपि तपोबलारूढस्य चरितं तत्सर्वं बलवतः पथ्यमित्यने-
न न्यायेन महान्ति च तपांसि कृत्वा तानि क्षयं नयत उत्तर-
काले वा पापविशुद्धिं प्रायश्चित्तैः प्रतिकुर्वाणस्य जीर्यत्यपि ।
मन्दतपसां गजैरिव महावटकाष्ठादिभक्षणमात्मविनाशायैव
स्यात् । द्वैपायनस्यापि गुरुनियोगादपतिरपत्यलिप्सुर्द्देवराद्गुरु-
प्रेरितादृतुमतीयादित्येवमागमान्मातृसंबन्धभ्रातृजायापुत्रजन-
नं प्राक्कृतपश्चात्करिष्यमाणतपोबलेन नातिदुष्करम् । अन्यो
ऽपि यस्तादृक्तपोबलो निर्वहेत्स कुर्यादेव । रामभीष्मयोस्तु
स्नेहपितृभक्तिवशात् । विद्यमानधर्मसाचार्थदारयोरेव साक्षा-
द्व्यवहितापत्यकृतपित्रानृण्ययोर्य्यागसिद्धिः हिरण्मयसीताकर-

१ लोकापवादभिया त्यक्तसीतागतानृशंस्याभावाशङ्कानि-

वृत्त्यर्थम्। भीष्मश्च॥

भ्रातृणामेकजातानामेकश्चेत्पुत्रवान्भवेत।
सर्वे तेनैव पुत्रेण पुत्रिणो मनुरब्रवीत्॥

इत्येवं विचित्रवीर्यक्षेत्रजपुत्रलब्धपितृनृणत्वः केवलयज्ञार्थपत्नीसंबन्ध आसीदित्यर्थापत्त्यानुक्तमपि गम्यते॥

यो वा पिण्डं पितुः पाणौ विज्ञाते ऽपि न दत्तवान्।
शास्त्रार्थातिक्रमाद्भीतो यजेतैकाकसौ कथम्॥

धृतराष्ट्रो ऽपि। व्यासानुग्रहादाश्चर्यपर्वणि पुत्रदर्शनवलक्रतुकाले ऽपि दृष्टवानेव। शापानुग्रहसमर्था महर्षयः श्रूयन्ते। तद्यथैव तद्वचनादभावन्धो जातो विज्ञायते तथा यज्ञानुष्ठानवचनात्तावति काले दृष्टवानित्यर्थापत्त्या सुज्ञानम्। यद्वा, यजदेवपूजासङ्गतिकरणदानेष्विति दानार्थ एवायं यजिर्भविष्यति। क्रतुफलसमानि च दानतपश्चरणादीन्यपि श्रूयन्ते तत्कारणात्क्रतुक्रियोपचारः॥

या चोक्ता पाण्डुपुत्राणामेकपत्नीविरुद्धता।
सापि द्वैपायनेनैव व्युत्पाद्य प्रतिपादिता॥
यौवनस्थैव कृष्णा हि वेदिमध्यात्समुत्थिता।
सा च श्रीः श्रीश्च भूयोभिर्भुज्यमाना न दुष्यति॥

अत एव चोक्तम्।

इदं च तत्राद्भुतरूपमुत्तमं
जगाद विप्रर्षिरतीतमानुषः।
महानुभावा किल सा सुमध्यमा
बभूव कन्यैव गते गते ऽहनीति॥

न हि मानुषीष्वेवमुपपद्यते। तेनातीतमानुषमित्युक्तम्। अ-

त एव वासुदेवेन कर्णं उक्तः "षष्ठे च त्वामहनि द्रौपदीपर्य्युपस्थास्यती"ति । इतरथा हि कथं प्रमाणभूतः सन्नेवं वदेत् । अथ वा बह्व्य एव ताः सदृशरूपा द्रौपद्य एकत्वेनोपचरिता इति व्यवहारार्थापत्त्या गम्यते ॥

यद्वा, नार्य्यर्जुनस्यैव केवलस्य भविष्यति ।

साधारणा प्रसिद्धिस्तु निरश्छिद्रत्वाय दर्शिता ॥

यथा युधिष्ठिरोपदेशात्सभामध्यमानीयमाना सहसैव रजस्वलावेषं सपुत्रकस्य धृतराष्ट्रस्यायश उत्पादयितुमात्मानं प्रख्यापयितुं द्रौपदी कृतवती तथैव केवलार्जुनभार्य्याया एव सत्याः श्लोत्वं च जनेनाविदितं परस्परं संघाताविश्रयं च भेदप्रयोगानवकाशार्थं दर्शयितुं साधारण्यप्रख्यापनमित्येवमादिविकल्पैः सुपरिहरत्वाद्रागलोभकृतव्यवहारस्य च शिष्टैरेव धर्म्मत्वेनापरिग्रहस्योक्तत्वादनुपालम्भः ॥

तथा च द्रोणवधाङ्गभूतानृतवादप्रायश्चित्तं कामकृतेप्येकहत्येवमन्त्येऽप्यश्वमेधः प्रायश्चित्तत्वेन कृत एवेति न तस्य सदाचारत्वाभ्युपगमः । यत्तु वासुदेवार्ज्जुनयोर्म्मद्यपानमातुलदुहितृपरिणयनं स्मृतिविरुद्धमुपन्यस्य तत्रान्नविकारसुरामात्रस्य त्रैवर्णिकानां प्रतिषेधः ॥

सुरा वै मलमन्नानां पाप्मा च मलमुच्यते ।

तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदिति ॥

मधुसीध्वोस्तु क्षत्रियवैश्ययोर्नैव प्रतिषेधः केवलब्राह्मणविषयत्वा"न्मद्यं नित्यं ब्राह्मणस्ये"ति वचनात् ॥

यदप्येतद्,

गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।

यथैवैका तथा सर्वा न पेया ब्रह्मवादिभिरिति ॥

एतदपि ब्रह्मवादिशब्दस्य तच्छीलतद्धर्मतत्साधुकारित्वनिमित्तत्वात् प्रवचनाश्रयणेन ब्रूञ्वदत्योरेकार्थत्वात् प्रब्रूयाद्ब्राह्मणस्त्वेषामिति नियमाद्यस्यैव प्रवचनं स एव तच्छीलस्तद्धर्मास्तत्साधुकारी वा भवति तस्माद्ब्राह्मणा एव ब्रह्मवादिनः । तथा च मद्यसामान्यप्रतिषेधाङ्गनिन्दार्थवादेऽभिहितम् ॥

अकार्य्यमन्यत्कुर्य्याद्धि ब्राह्मणो मदमोहित इति ॥

तस्मादेतदुक्तं भवति यथैवैकाऽन्नसुरा त्रयाणामप्यपेया तथा सर्वा ब्रह्मवादिभिरपेयेति । इतरथा यथैवैकेति च ब्रह्मवादिभिरिति चोभयमप्यनर्थकमेव स्यात् । श्लोकान्तरनिर्देशेनैव वर्णत्रयसंबन्धलाभात् । ततोभौ मध्वासवक्षीबावित्यविरुद्धम् । तथा चान्यार्थदर्शनमभ्यनुज्ञानवचनम् । यन्मान्यमासीत्तत्यस्मात्यैच्छत सुरा वै मान्यं ततो राजन्यमसृजत तस्माज्ज्यायांश्च स्नुषा च श्वशुरश्च सुरां पीत्वा विलपन्तश्चासते पाप्मा वै मान्यं तस्माद्ब्राह्मणः सुरां न पिबेत् पाप्मना न संसृज्या इति तदेतदेतत् क्षत्रियो ब्राह्मणं ब्रूयान्नैनं सुरा पीता हिनस्ति य एवं विद्वान्सुरां पिबतीति । मधुसीधुविषयैतत् । यत्तु मातुलदुहितृपरिणयनं तयोस्तन्मातृस्वस्रीयादिसंबन्धव्यवधानेऽपि भ्रात्रादिव्यवहारादविरुद्धम् । यद्यपि वासुदेवस्वसेति सुभद्राख्याता तथाप्युत्पत्तौ बलदेववासुदेवयोरेकानंशायाश्च निजत्वान्वाख्यानान्मातृस्वस्रीया वा सुभद्रा तस्य मातृपितृस्वस्रीया दुहिता वेति परिणयनाभ्यनुज्ञानाद्विज्ञायते ॥

वसुदेवाङ्गजाता च कौन्तेयस्य विरुध्यते ।
न तु व्यवेतसंबन्धप्रभवे तद्विरुद्धता ॥

येन ह्यन्यत्रैवमुक्तम् ॥

मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्वशः ॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनु वर्त्तत इति ॥

स कथं सर्वलोकादर्शभूतः सन् विरुद्धाचारं प्रवर्त्तयिष्यत्येतेन रुक्मिणीपरिणयनं व्याख्यातम् । यत्त्वद्यतनानामहिच्छत्रकमाथुरब्राह्मणीनां सुरापानादि दाक्षिणात्यानां मातुलदुहितृविवाहादि स्मृतिविरुद्धमुपन्यस्तम् । तत्र केचित्तावदाहुः । स्मृत्याचारयोरितरेतरनिरपेक्षवेदमूलत्वेन तुल्यबलत्वाद्व्रीहितप्रतिषिद्धविकल्पानुष्ठानाश्रयणाददोष इति तत्तु वक्ष्यमाणबलाबलविभागादयुक्तम् । अन्ये त्वेवमाहुः ॥

सर्वेषामेवमादीनां प्रतिदेशं व्यवस्थया ।
आपस्तम्बेन संहृत्य दुष्टादुष्टत्वमाश्रितम् ॥
येषां परंपराप्राप्ताः पूर्वजैरप्यनुष्ठिताः ।
तएव तैर्न दुष्येयुराचारैर्नेतरे पुनः ॥

तथा मनुनाप्युक्तम् ॥

येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति ॥

येषां तु यः पित्रादिभिरेवार्थो नाचरितः स्मृत्यन्तरप्रतिषिद्धश्च ते तं परिहरन्त्येव । अपरिहरन्तो वा स्वजनादिभिः परिह्रियन्ते । ननु गौतमेनाम्नायविरुद्धानामाचाराणामप्रामाण्यमुक्तम् । आह ॥

यदि वेदविरोधः स्यादिष्यतैवाप्रमाणता ।
स्मृतिराम्नायशब्देन न त वेदवदुच्यते ॥

न त्वेतदपि युक्तं स्मृतिग्रन्थेऽप्याम्नायशब्दप्रयोगात् । स्मार्त्तधर्म्माधिकारे हि । शङ्खलिखिताभ्यामुक्तमाम्नायः स्मृतिधारक इति । ग्रन्थकारगतायाः स्मृतेस्तत्कृतग्रन्थाम्नायः स्मृतिग्रन्थाध्यायिनां स्मृतिधारणार्थत्वेनोक्तस्ततश्च मन्वादिवाक्यप्रतिषिद्धाचाराणां प्रामाण्यमशक्यमभ्युपगन्तुम् । आपस्तम्बवचनं तु बौधायनेन स्मृतिविरुद्धदुष्टाचारोदाहरणान्येव प्रयच्छता निराकृतम् । अष्टकामादिहेत्वन्तरदर्शनान्न विरुद्धाचाराणामापस्तम्बवचनस्य वा श्रुतिमूलत्वोपपत्तिः । आह । केन वा ब्राह्मणीनां सुरापानं प्रतिषिद्धम् ॥

उच्यते ॥

तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदित्यनेन ॥

ननु पुल्लिङ्गनिर्देशात्स्त्रीणां न प्रतिषिध्यते ।
सुरापानमतो नात्र स्मृत्याचारविरुद्धता ॥

उच्यते ॥

हननप्रतिषेधेपि भवेत्पुंस्त्वं विवक्षितम् ।
तथा पुंस्त्ववदेकत्वविवक्षापि प्रसज्यते ॥
अहत्वा कं चिदेवैकं ततश्च स्यात् कृतार्थता ।
एकेन च सुरापानेऽवर्जिते पूर्ववद्भवेत् ॥
आह यत्तावदेकत्वविवक्षागतमुच्यते ।
प्रत्येकव्यक्तिसंबन्धाज्जातेर्वा तन्न दुष्यति ॥

एकैकस्या एव हि ब्राह्मणव्यक्तेर्यथाप्रसक्तवधपानयोः प्रतिषेधात् । विवक्ष्यमाणमपि तावदनूद्यमानत्वाद् न क्रियाविशेषणं वा संभवति किमुत यदा जातिगतैकत्वानुवाद एवायं विज्ञायते । आह । हननप्रतिषेधे कर्मभूतस्य ब्राह्मणस्योद्दिश्यमा-

मत्वात्सुरापाने च कर्तृत्वेनोपादीयमानत्वात्स्वर्गकामौदुम्बरीसंमानार्थयजमानवत्तुल्यविवक्षाविवक्षयोरप्रसङ्गादुदाहरणवैषम्यम् । तथाहि ॥

यो ब्राह्मण इति ह्युक्ते हननप्रतिषेधतः ।
ब्राह्मणे प्रतिषेधे वा लिङ्गं नान्यद्विधीयते ॥

प्रतिषेधविधिपरो हि विधायकः शुद्धवधप्रतिषेधासंभवाद्ब्राह्मणजातिमात्रविशिष्टवधप्रतिषेधं विधाय निवृत्तव्यापारो यदि लिङ्गमपरं ब्राह्मणे वधे प्रतिषेधं वा विदध्यात् ततः प्रत्ययावृत्तिलक्षणावाक्यभेदप्रसङ्गः । येषां तु विधिप्रतिषेधौ नामात्यन्तभिन्नौ वेदवाक्यार्थौ तेषां प्रत्ययसम्बन्धानुगृहीतशक्तिरभावमात्राभिधानाद् अभ्यधिकलब्धव्यापारो नञ्विध्यर्थमपि द्वेषाद्यर्थप्राप्तं पूर्वोक्तन्यायविवक्षितब्राह्मणविशिष्टहननविशिष्टं चानूदितं प्रतिषिध्य चरितार्थो न लिङ्गमपरं ब्राह्मणवधविधिषु शक्नोत्यनावर्तमानः प्रतिषेद्धुमिति श्रूयमाणमपि लिङ्गप्रतिषेधं प्रत्यनुपयुज्यमानत्वादविवक्षितं भवति । एषा ह्यत्र वचनव्यक्तिर्यत् क्रोधादिवशेन ब्राह्मणं हन्याद् ब्राह्मणो वा हन्तव्यस्तन्नेति । विध्येकत्वपक्षे पुनरीदृशी वाक्ययोजना यद् ब्राह्मणहननं तन्न कुर्यादिति यो वा ब्राह्मणस्तं न हन्याद् इति ब्राह्मणविशिष्टहननप्रतिषेधविधिः शुद्धोद्दिष्टब्राह्मणविषयवधप्रतिषेधविधिर्वेति ॥

सर्वथा ब्राह्मणोद्देशाद् नेह मुच्यामहे वयम् ।
न चोद्दिष्टस्य शक्येते लिङ्गसंख्ये विवक्षितुम् ॥

ब्राह्मणः सुरां न पिबेत् न पेया ब्रह्मवादिभिरिति निमित्तदेशकालफलसंस्कार्यानुपादेयपक्षव्यतिरेकादेकत्वाख्यातप्र-

त्ययोपात्तगुणाभूतोपादीयमानसंख्यापरिच्छेद्यत्वयोरयसाध-नांशविशेषणत्वेनोपादानादितरत्र च तृतीयाविभक्तिश्रुतिवचनं विवक्षितलिङ्गस्यैव प्रतिषेधकमिति दर्शयितव्यम् ॥

अतश्चाप्रतिषिद्धत्वान्नैव स्त्रीणां विरुध्यते ।
सुरापाणमहिच्छत्रब्राह्मण्यस्तेन कुर्वते ॥
नैतदेवमिहाप्येतत्पुंस्त्वं नैव विवक्ष्यते ।
ब्राह्मणस्यानुवाद्यत्वात्तद्वधप्रतिषेधवत् ॥
नोपादेयत्वमेवैकं कारणत्वेन संमतम् ।
विशेषणविवक्षायाः कारणं हि मदुविधिः ॥
अनूद्यमानः सर्वो हि यथाप्राप्तमनूद्यते ।
तत्रानाकाङ्क्षितं नान्यद्विधेयेभ्यो विधीयते ॥

यदि हि ब्राह्मणः सुरां पिबेदित्ययमवान्तरवाक्यार्थः प्राक्प्रतिषेधसम्बन्धाद्विधिबुद्धिमवस्थापयेत्ततो गुणत्वोपादेयत्वविधि-समवायान्न ब्राह्मणपदे किं चिदविवक्षितं नाम स्यात् ॥

यतस्तु रागमोहादेः सुरापाणं प्रसज्यते ।
ब्राह्मणादेरतस्तस्मिन्न कश्चिद्विधिसंभवः ॥
प्रतिषेधोपसंहारिमहावाक्यतिरस्कृता ।
नावान्तरविधेः शक्तिः प्रादुरस्ति कथं च न ॥

तेनेहापि यत्सुरां ब्राह्मणः पिबेत्तन्नेति वा वचनं व्यज्यते यो ब्राह्मणः स न सुरां पिबेदिति वा सुराविशिष्टपानप्रतिषेधेन प्रतिषेधविधिना वा प्रत्यवायव्यावृत्त्या ब्राह्मणो ऽनुगृह्यत इति नास्य पानं प्रतिषेधं वा प्रतिविधेयत्वोपपत्तिः ॥

लोके चैतद्यथाप्राप्तं पानं स्त्रीपुंसकर्तृकम् ।
प्रतिषेधपरे वाक्ये तदवस्थमनूद्यते ॥

न च यो ब्राह्मणः पिबेदित्यनूदित स च पुमानिति विधिव्यापारादिना लिङ्गविवक्षा ऽवकल्पते ॥

न चास्य लिङ्गसंबन्धः केवलः सन्निधीयते ।
न पानप्रतिषेधाद्धि विधिरन्यत्र गच्छति ॥

ततस्तोभयत्राप्यविवक्षितलिङ्गसंख्यत्वं सिद्धम् । नन्वेवं सति ब्राह्मणस्त्रीवधे ऽपि पुंब्राह्मणवधवद्ब्रह्महत्यास्तीति यदात्रेय्यामेव केवलायां भ्रूणहत्याप्रायश्चित्तविधानं तन्नोपपद्यते ॥

उच्यते ॥

ब्राह्मणस्त्रीवधे को वा ब्रह्महत्यां निषेधति ।
प्रायश्चित्तान्तरे तस्याः स्त्रीत्वमात्रनिबन्धनम् ॥

न च प्रायश्चित्ताल्पत्वेन निमित्तस्य ब्रह्महत्यात्वमपनीयते पुंवधे ऽपि लघुतरप्रायश्चित्तविधिदर्शनेन ब्रह्महत्यादोषाभावप्रसङ्गात्तस्मान्न वाचनिकप्रायश्चित्ताल्पत्वेन ब्राह्मणीवधप्रतिषेध एव नास्तीत्याशङ्कितव्यम् । सुरापाने पुनः प्रायश्चित्तविशेषो ऽपि न कश्चिदाम्नात इति दूरादपाकृतत्वादस्यैवास्य स्मृत्या सह विरोधः । यापि चापस्तम्बस्मृतिवचनात्तुल्यबलत्वाशङ्का भवेत् सापि तस्माद्ब्राह्मणः सुरां न पिबतीत्येतेन प्रत्यक्षश्रुतिविधिना निराकृतेति नैवंविधाचारप्रामाण्यमाशङ्कितव्यम् । अथ वा सदाचारप्रमाणत्वप्रतिपादनार्थं सूत्रद्वयेनाप्येतदेकमधिकरणं व्याख्यातव्यम् । इह यावन्ति कृष्णमृगसञ्चरणोपलक्षितार्य्यावर्त्तनिवासिचातुर्वर्ण्याचरणानि तान्युदाहृत्य चिन्त्यते ॥

धर्म्मबुद्ध्या यदार्य्याणां चरित्रमुपलभ्यते ।
किं तथैव प्रमाणं तदथ वा निष्प्रमाणकमिति ॥

कुतः संशयः ॥

उच्यते ॥

स्मृतिवत्कर्तृसामान्यात्प्रमाणत्वेन गम्यते ।
अनिबन्धनतायास्तु भवेदप्यप्रमाणकम् ॥

ननु च स्मृतिकारैरेवैतत्प्रामाण्यमभ्युपगतं तद्विदां च स्मृतिशीले आचारश्चैव साधूनां यस्मिन्देशे य आचारः स सदाचार उच्यते । अतश्च तत्प्रामाण्यादेव सिद्धम् । नामूलाभावाद्वेतुदर्शनातिरेकात् । शाखान्तरगतवेदवाक्यदर्शनमूला न हि स्मरणोपनिबन्धनानि प्रमाणत्वेनाधिगतानि । ननु सदाचारदर्शनात्तन्मूलमात्रप्रवृत्तस्मरणानां मूलान्तरानुमानसंभवः ॥

यथैव च वयं तेषां द्रष्टारः केवलं तथा ।
स्मृतिकारास्ततो नैषां गम्यते मूलदर्शनम् ॥

यदि हि तैर्मूलान्यश्रोष्यन्त ततो यथैवान्यानि स्मरणानि निबद्धानि तथैवैतान्यपि निबन्धान्येवाभविष्यन्यतस्तु स्वयमुपलब्धानुरूपमनिबद्ध्य परप्रत्ययेनैव सदाचाराः प्रमाणमित्याहुः । अतो न दृष्टमूलत्वेनाध्यवसातुं शक्यमिति विचार्यते । तत्र पूर्वाधिकरणद्वयबलेन प्रामाण्यं प्रतिज्ञायते कर्तृसामान्याद्विधिस्मृतिविरोधरहितत्वाच्च ॥

नहि केचित्सदाचाराः श्रौतस्मार्त्तविरोधिनः ।
अतस्तत्तुल्यकारित्वात्प्रामाण्येनावधारिताः ॥
स्मृतिकाराभ्यनुज्ञानं महदन्यच्च कारणम् ।
तेषामज्ञातमूलानां नह्यनुज्ञोपपद्यतइति ॥

तदपाकुर्वन्नाह ।

न शास्त्रपरिमाणत्वाद्धर्म्माधर्म्मस्थितेरमी ।
शिष्टाचाराः प्रमाणत्वं लभन्ते शब्दवर्ज्जिताः ॥

शास्त्रपरिमेयत्वं तावत्परिमाणशब्दवाच्यं धर्म्माधर्म्मयोरव-स्थितं परिमितानि च शास्त्राणि वेदोपवेदादीनि न च तेषां मध्ये सदाचारशास्त्रं किं चिदस्ति। न च सदाचारः स्वयमेव शास्त्रं नापि तद्दर्शनमनुष्ठानं वात्यन्तपरायत्तत्वात्प्रमेयत्वाच्च। स्मृते-स्त्वेतद्विषयाया निर्म्मूलत्वमुक्तमेव ॥

किं च मूलं भवेदेकमनेकमिति चिन्त्यते।
नैव द्विविधमित्येतदनुमातुं हि शक्यते ॥

न तावद्देशजातिकुलभेदाद्भिन्नानामपरिमितस्वरूपाणामेकश्रु-तिमूलत्वम् ॥

न ह्येदृशी श्रुतिर्य्यैतान् सर्वाचारान् ग्रहीष्यति।
शब्दाभिधेययोस्तेषां व्यक्त्याकृत्योरसम्भवात् ॥

यावदाचारं हि वेदवाक्यानि कल्पयता वेद एवैकः कल्पयि-तव्यः। एकस्य तु वाक्यस्य नैकस्य चिदपरिमिताचारविषयित्व-मवकल्पते यत आचाराः प्रवर्त्तेरन्न च धर्म्मसूत्रकारैस्तदेव दृष्ट्वा ऽऽचारप्रामाण्यमुपनिबद्धम्। शेषधर्म्मस्मृतिवाक्यतुल्यनिबन्धनप्र-सङ्गान्न चाचारदर्शनोत्तरकालप्रवृत्ता स्मृतिस्तेषां मूलं भवति मूलमूलिवत्वावत्वविपर्य्ययप्रसङ्गात् ॥

अतः परिमितं शास्त्रमनुमातुं यतो ऽर्हति।
नाचाराणां च तन्मूलं बहूनामित्यमूलता ॥
न च स्मृतिस्वरूपापि श्रुतिरत्रानुमीयते।
आचाराणामतत्पूर्वप्रसङ्गात्स्वविपर्य्ययात् ॥

शिष्टाचारः प्रमाणमिति हि श्रुतावनुमीयमानायामाचारः प्र-थमं सिद्धो भवेत्तत्पूर्विका श्रुतिः ॥

न त्वाचारस्य सा मूलमिति निर्म्मूलता पुनः।

शास्त्रपरिमाणत्वादिति वा परिमिते ह्यर्थे शास्त्रं प्रवर्त्तते। अपरिमितत्वाद् आचाराणामुच्छास्त्रत्वमिति । परिमितार्थविषयत्वाद्वा शास्त्रस्य, अप्राप्ते शास्त्रमर्थवदिति ॥

दृश्यमानान्यहेतुत्वान्नात्र शास्त्रप्रमाणता ।
तस्मादर्थसुखाङ्गत्वान्नाचारेष्वस्ति धर्मता ॥
वेश्यानां सेवकानां वा वैद्यानां नगरेषु वा ।
चरित्राणां यथा चार्थ(१)सुखाङ्गत्वं तथाऽखिलम् ॥
तस्माच्छ्रुतिस्मृती एव प्रमाणे धर्मगोचरे ।
शीलाचारात्मतुष्टीनां गोष्ठीवाक्यादितुल्यता ॥

यद्वा सूत्रत्रयेणापि एतदेवाधिकरणं व्याख्यातव्यम् । इहार्यावर्त्तनिवासिशिष्टाचारानेवोदाहृत्य पूर्ववत्प्रामाण्याप्रामाण्यसंदेहे शिष्टाकोपेऽविरुद्धमिति सिद्धान्तस्तावदुपक्रम्यते। तथाहि ॥

शिष्टं यावच्छ्रुतिस्मृत्योस्तेन यन्न विरुध्यते ।
तच्छिष्टाचरणं धर्मे प्रमाणत्वेन गम्यते ॥
यदि शिष्टस्य कोपः स्याद्विरुध्येत प्रमाणता ।
तदकोपात्तु नाचारप्रमाणत्वं विरुध्यते ॥

## समा विप्रतिपत्तिः स्यात् ॥ ८ ॥

तेष्वदर्शनाद्विरोधस्येत्येवमुपक्रमं वा सूत्रम् । शब्दार्थविषयप्रयोगशिष्टाचारविप्रतिपत्तौ संदेहः ॥

एकशब्दमनेकार्थं शिष्टैराचर्यते यदा ।
विगानेन तदा तत्र कोऽर्थः स्यात्पारमार्थिकः ॥

यववराहवेतसशब्दाः प्रियङ्गुवायसजम्बूष्वपि क्वचित्क्वापि दे-

---

(१) यथैवार्थेति पाठान्तरम् ।

शान्तरे प्रयुज्यन्ते ॥

तेन तद्वचनत्वे हि सन्देह उपजायते ।
अनिरूपिततत्त्वानां यावद्दृष्टानुसारिणाम् ॥
तत्राह नैव संदेहः कर्त्तव्यो ऽत्र मनागपि ।
प्रयोगं प्रति तुल्यत्वात्सर्वलोकप्रयोगिणाम् ॥
यत्र देशे हि यः शब्दो यस्मिन्नर्थे प्रयुज्यते ।
शक्तिस्तद्गोचरा तस्य वाचिकाख्या प्रमीयते ॥
तस्याश्च सर्वगामित्वं तन्न्यायत्वात्प्रमीयते ।
नैकेषामेव सा ह्यस्ति केषां चिद्वा न विद्यते ॥
ज्ञाताज्ञातविभागस्तु ज्ञातृभेदे ऽवकल्पते ।
तस्मादार्यैरपि न ज्ञाता यच्छब्दार्थस्य वाच्यता ॥
तैरप्यभ्युपगन्तव्या स्वप्रसिद्धिसमा हि सा ॥
न चाल्पत्वबहुत्वाभ्यां प्रयोक्तॄणां विशिष्यते ।
वाच्यवाचकभावो ऽयमश्वपादादिशब्दवत् ॥
बिभीतके ऽक्षशब्दो हि यद्यप्यल्पैः प्रयुज्यते ।
तथापि वाचकस्तस्य ज्ञायते शकटाक्षवत् ॥

तथा चोक्तं शवतिगतिकर्म्मा कम्बोजेष्वेव दृष्टो विकारापन्नमार्याः प्रयुञ्जते शवमिति मृतशरीराभिधानादित्यादि बहव एव हि धातवो नामशब्दाश्च प्रतिदेशमर्थभेदेषु व्यवस्थिता दृश्यन्ते तस्मात्समेयमभिधाने विप्रतिपत्तिः स्यादेवं च विकृतिषु केषां चिदर्थानां साधारणशब्दवाच्यत्वात्प्रकृताविवाविकृतप्रयोगादार्षं चोदको ऽनुग्रहीष्यते । नेष्वदर्शनादिरोधस्येत्यत्रैव चैतद्व्याख्येयम् । इतरत्र विप्रतिपत्त्यविरोधयोरघटमानत्वात् । तस्मादाचारविप्रतिपत्तेः समत्वाद्विकल्प इति प्राप्ते ऽभिधीयते ॥

शास्त्रस्था तन्निमित्तत्वात्प्रतिपत्तिर्बलीयसी ।
लौकिकी प्रतिपत्तिर्हि गौणत्वेनापि नीयते ॥
नानाविप्रतिपत्तौ हि न लोकस्येह सत्यता ।
या शास्त्रानुगुणा सैव प्रामाण्येनावधार्य्यते ॥
लौकिकत्वे समाने ऽपि शास्त्रेणाभ्यधिका हि सा ।
शास्त्रस्थाः पुरुषा ये वा प्रतिपत्तिस्तदाश्रया ॥
प्रमाणत्वेन मन्तव्या सप्रत्ययतरा हि ते ।
शास्त्रार्थेष्वभियुक्तानां पुरुषाणां हि सर्वदा ॥
स्तोकेनाप्यन्यथात्वेन शास्त्रार्थो निष्फलो भवेत् ।
लौकिकस्त्वन्यथात्वे ऽपि नार्थो ऽतीव विरुध्यते ॥
रसवीर्य्यविपाकानां भेदाद्वैद्यैर्यवादयः ।
निर्द्धार्याः स्वार्थतत्त्वेन धर्म्मसिद्ध्यैव याज्ञिकैः ॥
तस्माद्ये याज्ञिकैर्य्येषां वैद्यैर्वार्था निरूपिताः ।
तेषां तएव शब्दानामर्था मुख्या हि नेतरे ॥
अनवस्थितशब्दार्थसंबन्धः सति संभवे ।
विकल्पस्याष्टदोषत्वान्न कथं चन युज्यते ॥
अविप्लुतस्य शब्दार्थो यो वेदेषूपलभ्यते ।
तत्रत्यनिर्णयात्तस्माल्लोके भवति निर्णयः ॥

एवमतोभिरद्भिरौदुम्बर्य्याः प्रोक्षणे विधीयमाने वाक्यशेषो ऽयं यत्रान्या ओषधयो म्लायन्ते ऽथैते मोदमानास्तिष्ठन्तीति बह्वीषु शाखासु श्रूयते । भाष्यकारेण वारुणप्राघासिकयवमयकरम्भपात्रवाक्यशेषत्वेनोपलब्धो यः स मन्दप्रयोजनत्वात् तथा नामास्तु ॥

फाल्गुने ऽन्यौषधीनां तु जायते पत्रशातनम् ।

मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः ॥
प्रियङ्गवः शरत्पक्वास्तावद्गच्छन्ति हि क्षयम् ।
यदा वर्षासु मोदन्ते सम्यग्जाताः प्रियङ्गवः ॥
तदा नान्यौषधिम्लानिः सर्वासामेव मोदनात् ॥

एवं वराहवेतसशब्दा अपि शास्त्रस्थप्रयोगादेव निश्चीयन्ते ॥
नन्वेतान्युदाहरणानि लोकप्रसिद्धेरेव व्यवस्थितत्वादयुक्तानि ॥
तथाहि ॥

नैवोच्यन्ते क्व चिद्देशे यवशब्दात्प्रियङ्गवः ।
जम्बूं न वेतसं प्राहुर्वराहं नापि वायसम् ॥
अध्यारोप्य विचारेण किं मुधा खिद्यते मनः ।
संदिग्धेषु च सर्वेषु वाक्यशेषेण निर्णयम् ॥
वक्ष्यत्येव न तेनापि पृथक्कार्य्या विचारणा ।

यद्यपि तत्राभिधेयसन्देहमनुदाहृत्योपादानसंदेहनिर्णयोपा- यव्याख्यानं करिष्यति यावद्वाक्यशेषमेव च स निर्णयो नान्य- त्रायं त्वभिधेयनिर्णय एकत्र च कृतः सर्वत्र च कृत एव भविष्य- तीत्येवमपुनरुक्तत्वमापद्यते ॥

तथापि न्यायतुल्यत्वाद्यथा धूतपरिग्रहः ।
वाक्यशेषात्तथैव स्याद्यवाद्यर्थविनिर्णयः ॥

तत्सिद्धिसूत्रे च सारूप्यादीनां गौणवृत्तिनिमित्तानामनुक्रम- णादेतससहशजम्बूप्रत्ययसिद्धिरशब्दार्थत्वे ऽपि विज्ञायतएवेति नेषोदाहृतेन कार्य्यम् ॥

तस्मादन्यदुदाहृत्य विचार्यमिदमीदृशम् ।
यत्र विप्रतिपत्तिः स्यादार्य्यम्लेच्छप्रयोगजा ॥
तत्र किं तुल्यता यद्वा किमेकैव बलीयसी ।

समा विप्रतिपत्तिः स्याद्दृष्टार्थव्यवहारिणाम्॥
आर्य्यास्तावद्विशिष्येरन् अदृष्टार्थेषु कर्म्मसु।
दृष्टार्थेषु तु तुल्यत्वमार्य्यम्लेच्छप्रयोगिणाम्॥

सर्वो हि शब्दो ऽर्थप्रत्यायनार्थं प्रयुज्यते, अर्थस्य संव्यवहार-प्रसिध्यर्थमभिधीयते॥

तत्र यस्य विशिष्टस्य म्लेच्छेष्वर्थान्तराभिधा।
तत्रापि तस्य सामर्थ्यमनाद्येव प्रतीयते॥
यथैव ह्यार्यगम्ये ऽर्थे संबन्धानादिता मतिः।
म्लेच्छगम्ये तथैव स्यादविशिष्टं हि कारणम्॥
न प्रयोगावधिस्तस्य म्लेच्छेष्वपि हि दृश्यते।
अनाद्योरर्थशब्दयोस्तु विशेषो गम्यतां कथम्॥
यथा च म्लेच्छदेशे ऽपि धूमो ऽग्नेरवबोधकः।
एवं स्वार्थे प्रयोगात्तैरिष्टः शब्दो ऽपि वाचकः॥
तस्मात्पील्वादिशब्दानां वृक्षहस्त्यादिबोधने।
समा विप्रतिपत्तिः स्यादार्यम्लेच्छप्रयोगतः॥

इति प्राप्ते ऽभिधीयते। शास्त्रस्था वेति पूर्ववदेव सकलसूत्रव्याख्या योजनीया। किं च।

यथा साध्वनुरूपत्वात्प्रमादाशक्तिजेष्वपि।
जायते वाचकभ्रान्तिस्तथैव म्लेच्छभाषिते॥

शब्दापभ्रंशवदेव गौणभ्रान्त्यादिप्रयोगनिमित्ता अर्थापभ्रंशा भवन्ति ते शास्त्रस्थैरेवाविप्लुतार्थक्रियानिमित्तपुण्यार्थिभिः शक्यन्ते साध्वसाधुकार्षापणमध्यादिव तत्परीक्षिभिर्विवेक्तुमभियुक्तानभियुक्तज्ञानयोश्चाभियुक्तज्ञानं बलवदितरस्य सुलभापवादत्वात्॥

अतः शास्त्राभियुक्तत्वादार्य्यावर्त्तनिवासिनाम् ।
या मतिः सैव धर्म्माङ्गं शब्दार्थत्वप्रमा(१) मता ॥
एतेनार्य्यावर्त्तनिवासिमध्ये ऽपि ।
अभियुक्ततरा ये ये बहुशास्त्रार्थवेदिनः ।
ते ते यत्र प्रयुञ्जीरन् स सोऽर्थस्तत्त्वतो भवेत् ॥
स्मृत्याचारविरोधे वा साम्यवैषम्यसंशये ।
समा विप्रतिपत्तिः स्यान्मूलसाम्याद्द्वयोरपि ॥
यथैव श्रुतिमूलत्वात्स्मरणानां प्रमाणता ।
आचाराणां तथैवेति न विशेषो बलाबले ॥
यद्वाचारबलीयस्त्वं फलस्थत्वात्प्रतीयते ।
फलाद्वियुज्यमानं हि प्रमाणं दुर्बलं भवेत् ॥
श्रुतिराचारमूलं या फलस्था सोपलभ्यते ।
यावद्धि स्मरणं दृष्ट्वा श्रुतिरन्यानुमास्यते ॥
तावल्लब्धात्मकः पूर्वमाचारः प्रतितिष्ठति ।
प्रतिष्ठितस्य बाधस्य कीदृशः परिकल्प्यताम् ॥
तेनाचारबलीयस्त्वं समत्वं वेह युज्यते ।
स्मृतीनां वा बलीयस्त्वं शास्त्रस्था वेति वर्ण्यते ॥
उभयोः श्रुतिमूलत्वं न स्मृत्याचारयोः समम् ।
सप्रत्ययप्रणीता हि स्मृतिः सोपनिबन्धना ॥
तथा श्रुत्यनुमानं हि निर्विघ्नमुपजायते ।
आचारात्तु स्मृतिं ज्ञात्वा श्रुतिर्विज्ञायते ततः ॥
तेन ह्यन्तरितं तस्य प्रामाण्यं विप्रकृष्यते ।
न ह्येकैव श्रुतिः काचिदाचाराणां प्रवर्त्तिका ॥

(१) धर्माङ्गशब्दार्थत्वप्रमेति पाठान्तरम् ।

भिन्नाभिर्विप्रकीर्णत्वान्नास्मृताभिः प्रवर्त्तनम् ।
नैकप्रपाठकेनैव ह्याचाराणां निधिस्थितिः ॥
क चित्प्रकरणे कश्चित् कथं चिदुपलभ्यते ।

तद्यथा ऽग्निप्रकरणे यत्सप्तद्शवतीमुपदधात्यन्नमेवोभयतो दधाति तस्मादुभाभ्यां हस्ताभ्यां परिगृह्य पुरुषो ऽन्नमत्तीति सत्यपि हेतुवन्निगदत्वे प्रसिद्धिरहिते हेत्वसंभवात्। विधायिष्यते तु वेदे वचनेनेत्यनेन न्यायेन विध्यनुमानं न चैतन्नियोगतो ऽर्थतः प्राप्तं येन तस्मात्प्रजा दश मासान् गर्भं धृत्वा एकादशमनु प्रजायन्ते तस्मादश्वतर्यो प्रजा इति वत् स्वभावप्राप्तत्वेनार्थप्राप्तत्वेन वा तस्मादुत्तरे वयसि पुत्रान् पितोपजीवतीतिवदनूद्येतेत्यन्यार्थो(१)त्पुरुषधर्म्मविधिः । एवमन्नमेव तद्दक्षिणतो दधाति तस्माद्दक्षिणेन हस्तेन पुरुषोन्नमत्तीति तथा दीक्षितो नयनं दक्षिणं प्रथममङ्क्ते सव्यं हि मनुष्याः पूर्वमञ्जते विधृत्याइति, तथा यूपैकादशिन्यां द्वे द्वे रशने यूपमृच्छतस्तस्मात् स्त्रियः पुंसो-ऽतिरिक्तास्तस्मादुतैको बह्वीर्ज्जाया विन्दते नैका बहून् पतीनिति । तथा दर्शपूर्णमासप्रकरणे ऽग्नीषोमीयविधिसंबन्धलङ्घनेन त्वाष्ट्रवधनिमित्तेन्द्रगतब्रह्महत्यातुरीयविभागप्रतिग्रहप्रस्तावागतरजस्वलाव्रतानां भूमिशयनास्नानामांसभक्षणानभ्यङ्गानञ्जनाविलेखनाकर्त्तनादन्तधावनानखच्छेदनारज्जुसंसर्ज्जनादीनां त्रिरात्रविषयाणां प्रकरणातिरिक्तस्त्रीधर्म्मत्वावधारणम् ॥

एवं च विप्रकीर्णानामशक्यैकत्र संहृतिः ।
स्मृतिमेव दृढां मुक्त्वा तस्मादस्त्यन्तरा स्मृतिः ॥
तेनाचारः स्मृतिं यावदनुमातुं प्रवर्तते ।

(१) अनूद्येतेत्यतो न्यायादिति पाठान्तरम् ।

स्मृतिर्मूलश्रुतिस्तावद्धर्ममेवावधारयेत् ॥
तस्मादाचारेभ्यः स्मृतिर्बलीयसी सन्निबन्धनेति ॥
त्रिवृच्चर्वश्ववालादेर्लोके ऽन्यो ऽर्थः प्रतीयते ।
वेदे तदभियुक्तैस्तु तस्मादन्यो विलक्षणः ॥
तत्र किं तुल्यकल्पत्वात्पदार्थे लोकवेदयोः ।
समा विप्रतिपत्तिः स्यादथ वैका बलीयसी ॥
लोके तावत्त्रिवृच्छब्दस्त्रिगुणत्वस्य वाचकः ।
त्रिशृद्रज्जुस्त्रिवृद्ग्रन्थिर्वेदे तु नवके स्थितः ॥
त्रिवृद्वहिष्पवमानमित्युक्त्वा त्यृचत्रयमनुक्रान्तमिति स्तोत्री-यानवकवचन एव त्रिवृच्छब्दो विज्ञायते ॥
तथायं चरुशब्दो ऽपि लोके स्थालीनिबन्धनः ।
याज्ञिकानां च वेदे च प्रसिद्धस्त्वोदनं प्रति ॥
अनवस्रावितान्तरूष्मपक्वौदनवचनो हि याज्ञिकानां चरुश-ब्दः प्रसिद्धस्तथा वेदेप्यादित्यः प्रायणीयस्य चरुरिति विहिते पश्चा-दुक्तमदितिमोदनेनेति वचनाच्चौदनवचनत्वं ज्ञानमेवमाश्ववा-लः प्रस्तर इति अश्वजातीयवालमयः प्रस्तरो लोकप्रसिद्ध्या विज्ञायते। वैदिकवाक्यशेषात्तु काशेष्वश्ववालप्रसिद्धिः। एवं हि श्रूयते यज्ञो वै देवेभ्यो ऽश्वो भूत्वा ऽपाक्रामत्सो ऽपः प्राविशत्।
स वालधौ गृहीतः स(१) वालान्मुक्त्वा विवेश च ।
ते वालाः काशतां प्राप्ताः कार्यो ऽतः प्रस्तरस्तु तैः ॥
ऐतव्यौ विधृती ये च ते इक्षवयवात्मिके ।
लोके सिद्धे तथा वेदे काशानामेव मूलके ॥
एवमादिषु सर्वेषु प्रतिपत्तिविपर्यये ।

(१) सन्निति पाठान्तरम् ।

प्रतिपत्तेः समानत्वादिकल्पो हि प्रसज्यते॥

ननु च लोकप्रसिद्धेरियं प्रत्यनङ्गत्वाद्वेदप्रसिद्धिरेव ज्यायसी॥

नैतदेवं पदार्थेषु न हि वेदो विशिष्यते।

अदृष्टहेतुवाक्यार्थे लोकात्स ह्यतिरिच्यते॥

तस्मादुभय्यपि त्वेषा प्रतिपत्तिः समा भवेत्।

यदि वा पूर्वभावित्वाल्लौकिक्येव बलीयसी॥

वेदनिरपेक्षा हि लोकप्रसिद्धिरात्मानं लभते वैदिकी पुनः।

लोकप्रसिद्धपदान्तरसामानाधिकरण्येन सिद्ध्येत्॥

तत्र लोकाविरुद्धा या वैदिकी सैव गृह्यते।

लोकसिद्धिं व्यतिक्रम्य सात्मानं नैव विन्दति॥

तेष्वदर्शनाद्विरोधस्येति च तेषु लौकिकेषु पदार्थेषु अदर्शनाद्विरोधस्यार्थवादानां चान्यपरत्वेन गुणवादप्रायत्वात्। आदित्ययूपयजमानप्रस्तरस्वर्गाहवनीयादिवचनवत्कथमपि प्ररोचनाशेषत्वात् संज्ञासंज्ञिसम्बन्धकरणव्युत्पादनव्यापाररहितत्वाच्च न पदार्थप्रतिपत्त्यङ्गत्वमध्यवसीयते तदाश्रयणे च विधिविरोधप्रसङ्गात्तेष्वेव वादर्शनाद्विरोधस्येत्यभिप्रायः। तथा शास्त्रस्थमन्त्रादिप्रसिद्धिरप्यस्मत्पक्षानुगुणैव। यथाह॥

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत्।

त्रिवृता ग्रन्थिनैकेनेति॥

तस्मात्समापि तावद्भवत्विति प्राप्तेऽभिधीयते।

शास्त्रस्था प्रतिपत्तिर्या सैवात्र ज्यायसी भवेत्।

धर्मस्य तन्निमित्तत्वात्साधनफलात्मनः॥

अर्थवादकृतात्पर्यप्रतिपत्तिर्बलीयसी।

तदङ्गत्वाद्दते नान्यत्तस्या ह्यस्ति प्रयोजनम्॥

गौणो वा यदि वा मुख्यो वेदेनाश्रीयते हि यः ।
स धर्म्मसाधनत्वेन पदार्थो ऽध्यवसीयते ॥
त्रिवृच्छब्दः प्रयुक्तो यस्तोत्रीयानवकं प्रति ।
कस्तं शक्तस्ततो ऽन्यत्र नेतुं जन्मशतैरपि ॥

येन यत्र त्रिवृदग्निष्टोम इति श्रूयते तत्र तेनैवार्थेन भवितव्यमेवं स्तोमशब्दो यद्यपि ब्राह्मणस्तोम इत्यादिषु समुदायमात्रवचनत्वेन प्रसिद्धस्तथापि त्रिवृदेव स्तोमो भवति पञ्चदश स्तोमो भवतीति वेदे श्रवणात् । स्तुतेश्च मानं स्तोम इति याज्ञिकस्मरणात्तथा स्तोमे डविधिः पञ्चदशाद्यर्थ इति व्याकरणशास्त्रप्रसिद्धेः । अवश्यमेव त्रिवृदादिषु लोकप्रसिद्धिरतिक्रमणीया । यत्तु मनुवचनं तदुभयाश्रयत्वात् समत्वेनापि युज्यते । यद्वा तत्रापि नवतन्तुकमेव त्रिवृच्छब्दात्प्रत्येष्यते तथा रशनात्रिवृत्त्वमपीति । यद्वा यथैवायं नवके दृष्टस्तथायं स्तोत्रीयागते ऽपीति यत्रैव तत्संभवस्तत्रैव तत्प्रसिद्ध्यनुपाती भवति । यत्र तु संख्येयान्तरविषयत्वं तत्र वैदिको ऽर्थो गौणो गृह्यतां लौकिको वा मुख्य इति तादृशे विषये मुख्यार्थत्वाल्लौकिकप्रसिद्धिरेव ग्रहीतव्येत्युत्तरसूत्रे वक्ष्यामः । चोदितं तु प्रतीयेताविरोधादिति । तथा चरुशब्दोऽप्यन्याय्यानेकार्थाभिधानप्रतिबद्धशक्तित्वाद् एकत्र नियम्यमानो याज्ञिकवेदप्रसिद्धिभ्यामोदनविषय एव भवति । आश्ववालप्रस्तवीशब्दौ तु यदि तावद्वैदिकप्रयोगलब्धसमुदायप्रसिद्धित्वेन लौकिकीमवयवप्रसिद्धिं जहीतः । ततः सिद्धमेव शास्त्रस्थप्रतिपत्तिबलीयस्त्वम् । अथापि श्येनजात्युपमितप्रसिद्धश्येनयागे गौणत्वद्वारा वा ऽऽशप्रसिद्धिः (१) समानमितरच् श्येनेनेत्यादि-

(१) प्रसिद्धेरिति पठान्तरम् ॥

ष्विवाश्रीयते । तथापि शास्त्रकल्पितत्वाद्धर्मं प्रति बलीयस्त्वम् ॥

अथापि शब्दगौणत्वं तथापि बलवत्तरम् ।
स्वतन्त्रस्य हि वेदस्य दृष्टं चेन्न निवार्यते ॥
गौणं लाक्षणिकं वापि वाक्यभेदेन वा स्वयम् ।
वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् ॥

न चात्र सन्दिग्धेषु वाक्यशेषादित्येतेन तुल्यार्थत्वं, प्रतिपत्तिद्वयस्याप्यसन्दिग्धत्वात् ॥

लौकिकी प्रतिपत्तिर्हि स्वार्थे निःसंशया स्थिता ।
वैदिक्यपि तथा स्वार्थे बाधते ऽतो विपर्ययात् ॥
तस्माच्छास्त्रस्थितैवैका प्रतिपत्तिर्बलीयसी ।
न समा मुक्तकाचारैर्विप्रकृष्टैः ससङ्करैरिति ॥

## चोदितं तु प्रतीयेताविरोधात्प्रमाणेन ॥ ९ ॥

ये शब्दा न प्रसिद्धाः स्युरार्यावर्त्तनिवासिनाम् ।
तेषां म्लेच्छप्रसिद्धो ऽर्थो ग्राह्यो नेति विचिन्त्यते ॥

तथा ॥

निरुक्तव्याक्रियाद्वारा प्रसिद्धिः किं बलीयसी ।
समुदायप्रसिद्धिर्वा म्लेच्छस्यैवाथ वा भवेत् ॥

म्लेच्छप्रसिद्धिव्यवहर्तृदौर्बल्ये ऽपि समुदायरूढिबलेन स्वरूपगतेन ज्यायसी प्रतिभाति ॥

तत्र प्रयोक्तृदौर्बल्यस्वरूपबलवत्तयोः ।
किं तु न्याय्यतरं युक्तं ज्ञातुमित्यत्र चिन्त्यते ॥

तथा ॥

निरुक्तव्याक्रियाद्वारा किं शास्त्रस्था बलीयसी ।
किं वाक्यवविक्षेपजननात्सैव दुर्बला ॥
एवं नानोपपत्तित्वात् संदेहे तावदुच्यते ।
निरुक्तव्याक्रियाद्वारा प्रतिपत्तिर्बलीयसी ॥
शास्त्रस्था वेद्यनेनासौ कल्प्यापि हि बलीयसी ।
सन्मूलस्य प्रमाणत्वं साध्यस्यापि वरं श्रितम् ॥
न सिद्धमप्यसन्मूलमाश्रयेण हि दूषितम् ।
कथं वेदगतैः शब्दैर्म्लेच्छस्थो ऽर्थः प्रतीयते ॥
येषां दर्शनमात्रे ऽपि वेद एव न पश्यते ।
सम्भाषापि च न म्लेच्छैः सदार्यावर्त्तवासिनाम् ॥
तत्र तेषु प्रसिद्धो ऽर्थः कथमार्यैः प्रतीयताम् ।
एवं च सति यस्यापि प्रसिद्धिर्नोपलभ्यते ॥
तस्यापि म्लेच्छदेशेषु सर्वेष्वन्वेष्यतां व्रजेत् ।
ततश्च निगमादीनां न कश्चिद्विषयो भवेत् ॥
अनन्तम्लेच्छदेशांश्च कः सर्वो ऽनुपलप्स्यते (१) ।
य एव स्यादनन्विष्टस्तत्र शङ्का प्रसज्यते ॥
अनन्तेषु हि देशेषु कः सिद्धः क्वेति गम्यताम् ।
निगमादिवशाच्चाद्य धातुतो ऽर्थः प्रकल्पितः ॥
द्वित्रेष्वहःसु बाध्येत प्रयोगान्म्लेच्छचोदितात् ।
म्लेच्छाचाराप्रमाणत्वमथ वाध्यवसीयते ॥
आर्यावर्त्ते ततः शक्या प्रसिद्ध्यन्वेषणक्रिया ।
तस्मात्स्वाल्पेन कालेन सदसद्भावनिर्णयः ॥
ततश्च निगमादीनां सुज्ञातः स्वार्थगोचरः ।

(१) सर्वोनुपलप्स्यतइति युक्तः पाठः ॥

तस्मात्तदर्थवत्त्वाय म्लेच्छाचाराप्रमाणता ॥
धर्मे चानादरात् तेषां भ्रश्येतार्थोऽपि शब्दवत् ।
न चास्ति संस्कृतः शब्दः कश्चिन् म्लेच्छापभाषणे ॥
संस्कृतप्रतिरूपा हि तद्भाषार्थान्तरे स्थिता ।
न चावाचकरूपाणां वाचकत्वं कथं च न ॥
आर्य्याश्च म्लेच्छभाषाभ्यः कल्पयन्तः स्वकं पदम् ।
पदान्तराक्षरोपेतं कल्पयन्ति कदा च न ॥
न्यूनाक्षरं कदाचिच्च प्रक्षिपन्त्यधिकाक्षरम् ।

तद्यथा द्राविडादिभाषायामेव तावद्व्यञ्जनान्तभाषापदेषु स्वरान्तविभक्तिस्त्रीप्रत्ययादिकल्पनाभिः स्वभाषानुरूपानर्थान्प्रतिपद्यमाना दृश्यन्ते । तद्यथोदनं चोरित्युक्ते चोरपदवाच्यं कल्पयन्ति । पन्थानमतरित्युक्ते अतर इति कल्पयित्वाहुः । सत्यं दुस्तरत्वादतर एव पन्था इति । तथा पाप्शब्दं पकारान्तं सर्पवचनं अकारान्तं कल्पयित्वा सत्यं पाप एवासाविति वदन्ति । एवं माल्शब्दं स्त्रीवचनं मालेति कल्पयित्वा सत्यमित्याहुः । वैर्शब्दं च रैफान्तं उदरवचनवैरिशब्देन प्रत्याम्नायं वदन्ति । सत्यं सर्वस्य क्षुधितस्याकार्ये प्रवर्तनादुदरं वैरिकार्ये प्रवर्तत इति । तद्यदा द्रविडादिभाषायामीदृशी स्वच्छन्दकल्पना तदा पारसीबर्बरयवनरौमकादिभाषासु किं विकल्प्य किं प्रतिपत्स्यन्तइति न विद्मः ॥

तस्मान् म्लेच्छप्रसिद्धं यत्पदमार्यैर्विकल्प्यते ।
न कश्चित्तत्र विश्वासो युक्तः पदपदार्थयोः ॥
निरुक्तव्याक्रियाद्वारा यस्त्वर्थः परिगम्यते ।
पिकनेमादिशब्दानां स एवार्थो भविष्यतीति प्राप्तम् ॥

एवं प्राप्ते वदामो ऽत्र पदं निपुणदृष्टिभिः ।
विज्ञायेताविनष्टं यत्तत्तदर्थं भविष्यति ॥

देशभाषापभ्रंशपदानि हि विप्लुतिभूयिष्ठानि न शक्यन्ते विवेक्तुम् ॥

यत्तु वेदे तदङ्गेषु पदं दृष्टमविप्लुतम् ।
म्लेच्छभाषासु तद्रूपमर्थे क्व च न चोदितम् ॥
तत् तथैव प्रतीयेत प्रमाणेनाविरोधतः ।
पिकनेमादि तच्चैवं निपुणैरवधारितम् ॥
चोदितं ह्युपदिष्टं वा प्रयुक्तं वा क्रियागतम् ।
म्लेच्छैरवधृतं पश्चादार्यैर्दैभाषिकैः क्व चित् ॥
तादृशं तु प्रतीयेत प्रामाण्येनेति निश्चितम् ।
न तद्धर्मप्रमाणेन वेदाख्येन विरुध्यते ॥

अपि च ॥

पदार्थपदसंबन्धज्ञानापेक्षप्रवर्तनात् ।
प्रसिद्धिर्यत्र तत्रस्था वाक्यार्थायानुगम्यते ॥
पिकादिशब्दवाच्यं वा म्लेच्छैर्यदवधारितम् ।
अविरोधात्प्रमाणेन तद्विद्याद्वेदनोदितम् ॥
चोदितं वा प्रमाणेन वेदेनेत्यस्य सङ्गतिः ।
आर्यैः सदाविरुद्धत्वात् तस्य तैरप्यपेक्षणात् ॥

यथैव लोमादयः पश्ववयवा वेदे चोदिताः सन्तो ऽध्वर्य्वादिभिः स्वयमज्ञायमानार्थत्वाद्दो नित्यं प्राणिवधाभियुक्तास्तेभ्य एवावधार्य विनियुज्यन्ते । यथा च निषादेष्ट्यां कूटं दक्षिणेति विहिते य एवैते न व्यवहरन्ति तेभ्य एवार्थतत्त्वं ज्ञात्वा दीयते । तथेह पिकनेमतामरसादिचोदितं सद्वेदादार्यावर्तनिवासिभ्य-

स्याप्रतीयमानं म्लेच्छेभ्यो ऽपि प्रतीयेत लोकावगम्यनित्यशब्दार्थाभ्युपगमाविरोधात् स्वेनैव प्रमाणेन प्रतीयेतेति। यत्तु शास्त्रबलीयस्त्वादेतदग्रहणमिति। तन्न। अविरोधे दुर्बलस्यापि ग्राह्यत्वाद्यदेवात्यन्तं प्रमाणाभासमेव मृगतृष्णाज्ञानवद्भवति तत्सर्वदैव परिहर्त्तव्यं, यत्पुनर्बलवद्विरोधापेक्षमप्रमाणं भवति तद्विरोधाभावात्तत्प्रमाणमेवेत्यवधारणीयम्। न चैवमादि विरुध्यते। विपरीतार्थप्रसिद्ध्यन्तराभावात्। अत एव वैदिकवाक्यार्थस्वविषयप्रयुक्तपदार्थमात्राभियुक्ततरार्यप्रसिद्धिबलीयस्त्वाश्रयणम्॥

प्रसिद्धौ विद्यमानायां तद्बलीयस्त्वमिष्यते।
असत्यां तु बलीयस्त्वं वन्ध्यासुतबलोपमम्॥

अष्टकादिषु ह्यदृष्टार्थेषु समूलकेषु स्मर्य्यमाणेषु गवादिपदस्वरूपतदर्थज्ञानेषु च सत्यमार्य्याणामाप्ततरत्वाभियुक्ततरत्वे विद्येते। पिकादिषु त्वार्य्यबलेनैवावगतस्वरूपमात्रवाचकत्वेषु वाच्यविशेषज्ञानरहितत्वेनार्य्येषु निर्व्यापारीभूतेषु पदवदृष्टार्थप्रतिपत्त्यर्थानादिशब्दप्रयोगलब्धसंबन्धप्रसिद्धिम्लेच्छप्रयोगेभ्यो ऽर्थनिर्णये सति न किं चिद्विरुद्धमाकाङ्क्षितपदार्थज्ञानं च सेत्स्यति। निगमनिरुक्तव्याकरणैरपि न चैवमादीनामर्थान्तरं किं चिदुदाहृतं यत्प्राप्य कृतार्थाः सन्त इतरेषां प्रसिद्धिं परित्यजेम॥

काल्पनिक्याः प्रसिद्धेस्तु या क्लृप्ता सा बलीयसी।
तस्यां सत्यं हि नात्मानमितरा लब्धुमर्हति॥
आश्रयाणां च दौर्बल्यं धर्म्मं प्रति निरूपितम्।
दृष्टार्थव्यवहारेषु कृष्यादाविव तुल्यताम्॥
तस्माद्यथैव सेवादौ गृहादिषु च कौशलम्।

म्लेच्छानामधिकं तद्वदभिधेयार्थनिर्णये ॥

शब्दस्वरूपं तावत्तेनाभियुक्तत्वात् चिरविनष्टाविनष्टत्वेन न विविञ्चीरन् यस्तु कथमप्यविनष्ट एव शब्दस्तेषामपि प्रयोगविषयमापन्नस्तस्य चार्य्यवद्देवानादिवृद्धव्यवहारपरंपरयार्थं जानन्ति तत्किं तेषां निराकर्त्तुं शक्यते ॥

पत्त्रोर्ण(१)वारवाणादि (२)यच्च तद्देशसम्भवम् ।
तैरेवाकथितं नाम तच्च को वेदितुं क्षमः ॥

तस्मान्न तेषां व्यवहारप्रसिद्धौ दौर्बल्यम् ।

निरुक्तादेश्च सिद्धेऽर्थे तन्निमित्तादिमात्रके ।
व्यापारो न च पूर्वार्थप्रतिपत्तौ स्वरूपतः ॥

निरुक्ते न तावल्लोकव्यवहारप्रसिद्धान्येव पदानि तद्गतक्रियानिमित्तशब्दप्रयोगभाक्त्वेन निरुच्यते । व्याकरणेनापि प्रसिद्धार्थानामेवाविनष्टस्वरूपान्वाख्यानमात्रं क्रियते तत्र प्रासङ्गिकमेव क्रियदप्यर्थनिरूपणम् तानि स्वविषयादन्यत्र दुर्बलानामपि न बाधकानि ॥

यस्य चान्विष्यमाणापि प्रसिद्धिर्न्न भविष्यति ।
कामं प्रदर्शितद्वारा तत्र कल्पाश्रयिष्यते ॥
विक्षिप्ता बहुरूपा च या सन्देहप्रदायिनी ।
अनन्योपायतामात्रे क्वचिदेव ग्रहीष्यते ॥
न चार्थप्रत्ययानङ्गनिरुक्ताद्यप्यनर्थकम् ।
षडङ्गवेदविज्ञानपूर्वकर्म्मक्रियाफलात् ॥

यथा महाभारतनिर्वचनान्वाख्याने द्वैपायनेनोक्तम् ।

(१) पत्त्रोर्णं धौतकौशेयं बहुमूल्यं महाधनमित्यमरः ॥
(२) कञ्चुको वारवाणो ऽस्त्रीत्यमरः ॥

महत्त्वाद्भारतत्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥

इत्येवं निरुक्तव्याकरणाद्यङ्गानुगृहीतवेदाध्ययनजनितकर्मावबोधपूर्वकानुष्ठानायत्तत्वात् स्वर्गादिसिद्ध्यर्थापूर्वसिद्धेरव्युत्पन्नरूपे च ज्ञाते ऽपि निरुक्तावगतधात्वर्थपूर्वकनामार्थज्ञानद्वारवाक्यार्थप्रतिपत्तिपूर्वकानुष्ठानादेवादृष्टसिद्धिरिति म्लेच्छसिद्धपिकाद्यर्थग्रहणे ऽपि निरुक्तादीनामर्थवत्ता सिद्धेति ॥

## प्रयोगशास्त्रमिति चेत् ॥१०॥

कल्पसूत्राण्युदाहृत्य संप्रत्येतद्विचार्यते ।
किमेतेषां स्वतन्त्राणां प्रामाण्यं वेदवद्भवेत् ॥
किं वा वेदत्वमेवैषां मन्त्रब्राह्मणवन्मतम् ।
वैदिकार्थप्रबन्धाद्धि नैतेषां स्मृतितुल्यता ॥
आह । के पुनः कल्पाः कानि सूत्राणीति उच्यते ।
सिद्धरूपः प्रयोगो यैः कर्मणामनुगम्यते ॥
ते कल्पा लक्षणार्थानि सूत्राणीति प्रचक्षते ।
कल्पनाद्धि प्रयोगाणां कल्पो ऽनुष्ठानसाधनम् ॥
सूत्रं तु सूचनात्तेषां स्वयं कल्प्यप्रयोगकम् ।
कल्पाः पठितसिद्धा हि प्रयोगाणां प्रतिक्रतु ॥
बौधायनीयवाराहमाशकादिप्रबन्धवत् ।
स्वसंज्ञापरिभाषाभिर्यदुत्सर्गापवादनम् ॥
हेतुदृष्टान्तवत्सूत्रं तस्माच्चयव्यापि लक्षणम् ।
आश्वलायनकं सूत्रं बैजवापिकृतं तथा ॥
द्राह्यायणीयलाटीयकात्यायनकृतानि च ।

तत्र सकलप्रत्यक्षवदप्रतिपाद्यक्रतुप्रयोगोपनिबन्धनादन्तर्हि-तविप्रकीर्णानुमेयप्रायश्रुतिमूलस्मृतिनिबन्धनेभ्यो महानेव कल्प-सूत्राणां विशेषो ऽस्तीति न तत्तद्गतन्यायं व्यवस्थाप्य प्रामाण्यानि विज्ञायन्ते ॥

अप्रामाण्यं स्मृतीनां च यदशब्दतयोदितम् ।
पूर्वपक्षे न तद्वक्तुं कल्पसूत्रेषु शक्यते ॥
प्रत्यक्षवेदशब्दत्वात्तद्युक्ता नापशब्दता ।
न ह्यत्यन्तानृतं वक्तुं शक्यते पूर्वपक्षिणा ॥

स्मृत्यधिकरणे चाप्रमाणत्वं मूलानुपपत्त्या पूर्वपक्षे ऽभिधाय सिद्धान्ते ऽनुमितश्रुतिमूलत्वेन प्रामाण्यं स्थापितम् । एतानि च न तत्रोदाहृतानि पूर्वपक्षहेतुत्वसंभवात् । न चैषामिह प्रामाण्याप्र-तिपादनमतिरिक्तप्रामाण्यापवादप्रतिपादनार्थत्वादधिकरणस्य ॥

यद्वा भवतु नामैषां तस्मिन्नपि विचारणा ।
तेषां चात्रापि सर्वेषामिति प्रामाण्यवारणा ॥

यदि धर्म्मं प्रति स्मृतीनां प्रामाण्यमभ्युपगम्यते । तथा सति ।

तासामपि हि वेदत्वे तैर्वा तुल्यप्रमाणता ।
स्वातन्त्र्याच्छक्यते वक्तुं न तु मूलानुमानतः ॥
यद्वा प्रयोगशास्त्रत्वमङ्गानामभिधीयते ।
वेदत्वं वा षडङ्गे ऽपि वेदत्वस्मृतिरस्ति हि ॥

मन्त्रब्राह्मणयोर्वेद इति नामधेयं षडङ्गमेकद्ति । अङ्गान्य-पि वेदशब्दवाच्यानि स्मर्य्यन्ते ॥

तस्मात्तान्यपि वेदो वा प्रमाणानि स्वतो ऽथ वा ।
प्रतिभान्तीति कर्त्तव्यमन्यथा प्रतिपादनम् ॥
यद्वा शाक्यादिशास्त्राणां स्मृतिशास्त्रत्ववारणात् ।

वेदशाखासमानत्वमाशङ्क्येह निवार्यते ॥

शाक्यादयो ऽपि ह्येवं वदन्त्येव । यथोत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवेयं धर्म्मनित्यतेति ॥

ततश्च वेदवन्नित्यास्तेपि चेदागमा मताः ।
चोदनालक्षणो धर्म्मस्तदुक्तो ऽपि प्रसज्यते ॥
कामं न प्रविशेद्ग्रामं वारितो दण्डपाणिभिः ।
स्पष्टं महापथेनैव सम्प्रति प्रविविक्षति ॥

एवमेतानि चत्वार्य्यपि विचारस्थानान्येकमार्गपतितानि कल्पसूत्रविचारेणैव गतप्रायाणि भविष्यन्तीति मन्वानेन तदुपन्यासमात्रमेव क्रियते ॥

का गतिः कल्पसूत्राणामित्यस्मिन् संशये सति ।
प्रयोगशास्त्रतां तावत् प्राह स्म त्यक्तसंशयम् ॥
वेदत्वं कल्पसूत्राणां न मोक्तव्यं मनागपि ।
यदि वा वेदतुल्यत्वं स्वतन्त्राणां प्रतीयताम् ॥
वेदेनैवाभ्यनुज्ञाता धर्म्मे तेषां प्रमाणता ।
वेदत्वमेव वा सिद्धं संवादादिप्रमाणकम् ॥
ननु च पौरुषेयत्वादेषामेतदुभयमप्यनुपपन्नम् ।
नैतेषां पौरुषेयत्वं भविष्यति हि वेदवत् ।
माशकादिसमाख्या हि प्रोक्तत्वात्काठकादिवत् ॥

यथैव कठादिप्रोक्ताः शाखाः काठकादिसमाख्ययाभिधीयन्तइत्यकृत्रिमास्थापितास्तथैव वेदसमाम्नातमशकादिसमाख्यातग्रन्थनियतापि प्रत्येतव्या । यथा सामसूक्तानामिदमस्यार्षमिदमस्येति सत्यामपि तन्निमित्तायां समाख्यायां न नित्यत्वप्रतीघातः एवं प्रख्यातर्षिप्रकल्पसूत्रग्रन्थानामपि । तथाहि ॥

न तावदृषिः कश्चित्स्मर्यते कल्पसूत्रकृत् ।
कर्तृत्वं यदृषीणां तु तत्सर्वं मन्त्रकृत्समम् ॥

यथा ह्येवं भवति शिशुर्वा आङ्गिरसो मन्त्रकृतां मन्त्रकृदासीदित्यत्र मन्त्रकृच्छब्दः प्रयोक्तरि प्रयुक्त एवं तस्य तस्य कल्पस्य सूत्रस्य वा प्रयोक्तारस्तत्कारित्वेन व्यपदिश्यन्ते । ब्रह्मयज्ञविधाने च एवं विद्वान् स्वाध्यायमधीत इत्युक्त्वा तत्प्रपञ्चे यदृचो ऽधीते यद्यजूंषि यत्सामानि यद्ब्राह्मणानि यदितिहासपुराणानि यत्कल्पानिति तज्जप्यमानत्वेन विधानादार्षत्वमेव विज्ञायते । पुरुषकृतानां जपनिमित्तधर्म्महेतुत्वेन नित्यविधिविषयत्वासंभवात् । अरुणपराशरशाखाब्राह्मणस्य च कल्परूपत्वात्सर्वशाखिकैश्च स्वशाखाधीतव्यतिरिक्तकल्पसूत्रकारोपन्यस्तपक्षतुल्यत्वाध्यवसानात्कल्पजमन्त्राणां चेतरसमाम्नायाधीतवत् क्रतुविनियोगाश्रयणात् तुल्यत्वम् ॥

आर्षेयवचनं नित्यपर्यायत्वेन गम्यते ।
आर्षेयत्वप्रसिद्धिश्च कल्पसूत्रेष्ववस्थिता ॥

लाटद्राह्यायणसूत्रकाराभ्यामपि च दृढकल्पप्रामाण्यापेक्षयेदं माशकमपेक्ष्य तत्प्रत्यक्षविहितं चार्षकल्पेन तत्रानुमानं न विद्यत इति ब्राह्मणविहितादप्यार्षकल्पविहितगरीयस्त्वमङ्गीकृत्योक्तम् । कात्यायनेन च कृताश्रणसूत्रप्रणयनप्रक्रमे ऽभिहितं यज्ञविषयब्राह्मणगतस्तोत्रविधिवाक्यशेषे यथा माशकं तत्प्रामाण्यात्करिष्यते न तन्निरपेक्षशुद्धब्राह्मणप्रामाण्यादिति । तथा च प्रायणीयाग्निष्टोमसाम्नि यज्ञायज्ञीयेन सह वैकल्पिकं जरायबोधीयमग्निष्टोमसाम कार्य्यमिति पञ्चविंशब्राह्मणे ऽभिहितमपि माशकानुवृत्त्या कात्यायनेनार्भवीयगायत्रतीयत्वेन

रासादिति लक्षितम्। आर्भवीयगायत्रीगतगायत्रानन्तरसाम्नो हि तेन समिति संज्ञा कृता तस्माच्च परत्वेन पदैकदेशप्रयोगेण जरावोधीयमुक्तं ढशब्देन च ज्योतिष्टोमिकाग्निष्टोमसामसंज्ञाभूतेन यज्ञायज्ञीयमेवाग्निष्टोमसामत्वेन नियतम्। यदि च कस्माद्ब्राह्मणमतिरिक्तं कात्यायनो ऽमंस्यत ततः प्रत्यक्षब्राह्मणदृष्टं विकल्पमेवावक्ष्यत्॥

बह्वेदगतन्यायविवेकज्ञो यदब्रवीत्।
कात्यायनो न तद्वाच्यमन्याय्यमिति मादृशैः॥
आचार्यवचनानां च प्रामाण्यं श्रूयते श्रुतौ।
अङ्गानां च प्रणेतार आचार्या ऋषयो मताः॥
यथा च सर्वशाखानां संवादात्तुल्यकल्पना।
तथैव कल्पसूत्राणामिति प्रामाण्यतुल्यता॥

यान्यप्रत्ययितपुरुषवचनानि प्रमाणान्तरसंगतार्थानि भवन्ति तान्यपि सत्यत्वेनावधार्यन्ते किमङ्ग पुनः सत्यवाचां वचनानि॥

सत्यवाचां च वाक्यानि वैदिकैः संगतानि च।
ज्ञातसत्यानि तान्येवं को ऽन्यथा कल्पयिष्यति॥

अपि च॥

वेदाहते ऽपि कुर्वन्ति कल्पैः कर्माणि याज्ञिकाः।
न तु कल्पैर्विना केचित् मन्त्रब्राह्मणमात्रकात्॥

तुल्यं च सांप्रदायिकं स्वाध्यायाध्ययनविधिवचनं प्रागदर्शितं कल्पग्रहणात्॥

अथ वा स्मर्तृणामध्येतृणां च यादृशः।
मन्त्रब्राह्मणयोरर्थः कल्पसूत्रेषु तादृशः॥

अनुयोगेषु वेदानां घटिका मार्गवृत्तिषु ।
न कल्पसूत्रहीनानां लभ्यते कृत्स्नवेदता ॥
तस्मात्कर्मप्रयोगाणां शास्त्रमेतदतिस्फुटम् ।
वेदो वा वेदतुल्यं वा कल्पसूत्राद्यसंशयम् ॥
एतेन धर्मशास्त्राणामङ्गानां चापि देवता ।
तत्तुल्यतापि वा वाच्या सर्वेषां सर्वहेतुभिः ॥
धर्मशास्त्रपदं येषु सर्वकालं प्रयुज्यते ।
प्रयोगशास्त्रतां तेषां वेदज्ञः को हरिष्यति ॥
अपि चाङ्गानि वेदाश्च धर्मशास्त्रं च तुल्यवत् ।
विद्यास्थानानि गण्यन्ते सर्वदा वेदवादिभिः ॥

किं च ॥

कर्मणां ब्राह्मणोक्तानां यथा मन्त्राः प्रकाशकाः ।
अष्टकापार्वणादीनां दृश्यन्ते ते तथैव हि ॥
तथावकीर्णियागादि कृच्छ्रचान्द्रायणादि वा ।
वेदमन्त्रप्रकाश्यं सत्स्वयं कथमवैदिकम् ॥
सिद्धवह्निशिखत्वादि यच्चमन्त्रैरनूद्यते ।
चौलोपनयनप्राप्तं तत् स्यात कथमवैदिकम् ॥
एवं च वेदमूलत्वं किमेषामनुमीयते ।
सम्भवत्येव वेदत्वे नित्यत्वे चापि तत्समे ॥
वेदं हि कल्पयित्वैभ्यः पुनस्तस्यापि नित्यता ।
वक्तव्यैव वरं तेन सा तेष्वेवावधारिता ॥
सिद्धानां नित्यतैवैका सुबोधा वेदतापि वा ।
असंशयितवेदार्थविषयत्वात् प्रकल्प्यते ॥
तस्माद्वर्षसहस्रेऽपि यस्य न ज्ञायतेऽवधिः ।

न तत्कृतकता लब्ध्वा लभते नित्यमूलताम् ॥
यान्येव धर्मशास्त्राणां मूलवाक्यानि मन्यसे ।
तान्येवैतानि पश्यन्तइत्येतत्कल्पितं वरम् ॥
मन्वादिभिरवश्यं च स्वग्रन्थप्रतिपादने ।
तान्युपन्यसनीयानि शिष्याणां वेदवादिनाम् ॥
तेन तान्येव तैरेभ्यः सम्प्रत्तानीति गम्यते ।
के चित्तेषूपलब्धेषु गृह्णीयुः प्रतिकञ्चुकान् ॥
यथा च धर्मशास्त्राणां नाद्यत्वे प्रतिकञ्चुकाः ।
शाखास्तथा पुराप्यासन्न वेदप्रतिकञ्चुकाः ॥
सम्प्रदायविनाशाच्चेङ्गोतेस्तदसमर्प्पणम् ।
मन्वादिष्वनुमीयेत स्वग्रन्थाकरणं तथा ॥
वेदवाक्यार्प्पणं येषां खण्डशो नाभिसंमतम् ।
स्वग्रन्थकरणं तेषां वेदस्थाने कथं भवेत् ॥
वेदादेव च विज्ञातो वेदार्थः साधयेत्फलम् ।
नान्यस्मात्पुरुषग्रन्थान्मन्त्राभासात् स्मृतो यथा ॥
कृता मन्वादिभिर्य्यद्वन्न मन्त्रप्रतिकञ्चुकाः ।
न ह्येतेन स्मृतं कर्म सिद्ध्यतीत्यवधारणात् ॥
तथैव तैर्न्न कर्त्तव्या ब्राह्मणप्रतिकञ्चुकाः ।
नावेदविहितं कर्म फलतीति हि निश्चितम् ॥
न चैभिर्भिन्नदेशस्थवेदवाक्यसमुच्चयः ।
कृत इत्यवगन्तव्यमीदृक् ग्रन्थावधारणात् ॥
ईदृगेवं क्रमश्चायं वेदग्रन्थ इतीदृशी ।
युज्यते हि मतिः कस्मिंश्चिन्न मूलान्तरकल्पना ॥
तेन प्रयोगशास्त्रत्वं तदैवापतितं बलात् ।

धर्मं प्रत्यप्रमाणत्वं यद्वेषां न संमतम् ॥
चोदनालक्षणे धर्मे पूर्वमेवावधारिते ।
अवेदस्य प्रमाणत्वं ब्राह्मणस्यापि नेष्यते ॥
तेनैषां धर्मशास्त्राणां न वा धर्मोपयोगिता ।
वेदता वाऽभ्युपेतव्या गतिर्नास्त्यान्तरालिकी ॥
वदन्ति धर्ममेतानि चोदना गमयन्ति च ।
अशक्यमीदृशं वक्तुं यावदुक्तप्रमाणकैः ॥
उक्तमर्थं परित्यज्य यदनुक्तं प्रतीयते ।
अनुक्तेन च सोऽप्यर्थ इति किं नोपपद्यते ॥
तस्माद्धर्मप्रयोगस्य साक्षादुक्तस्य तत्त्वयम् ।
प्रमाणं धर्मशास्त्रं स्यान्न वेदव्यवधानवत् (१) ॥
शाक्यादिनिर्मिते धर्मशास्त्राभासे निराकृते ।
धर्मप्रयोगशास्त्रत्वं तस्य वेदभिहोच्यते ॥
येनैवाकृतकत्वं हि वेदस्य प्रतिपाद्यते ।
न्यायेन तेन शाक्यादिग्रन्थस्यापि भविष्यति ॥
बोधकत्वात् प्रमाणत्वं स्वतस्तस्यापि लभ्यते ।
न च सन्दिह्यते बुद्धिर्न विपर्ययते क्वचित् ॥
अकर्तृकतया नापि कर्तृदोषेण दुष्यति ।
वेदवद्बुद्धशाक्यादिकर्तृस्मरणवर्ज्जनात् ॥
बुद्धवाक्यसमाख्यापि प्रवक्तृत्वनिबन्धना ।
तद्दृष्टत्वनिमित्ता वा काठकाङ्गिरसादिवत् ॥
यावद्वेदोदितं किंचिद्वेदप्रामाण्यसिद्धये ।
तत्सर्वं बुद्धवाक्यानामतिदेशेन गम्यते ॥

(१) व्यवधानत इति पा० ॥

तेन प्रयोगशाश्वत्वं यथा वेदस्य संमतम् ।
तथैव बुद्धशास्त्रादेर्वक्तुं मीमांसको ऽर्हतीति ॥
एवं प्राप्ते वदामो ऽत्र तत्रासंनियमादिति ।
असंनिबन्धनं ह्येतत्पूर्वोक्तं सर्वमीक्ष्यते ॥
इष्टैका परमार्थेन बुद्धिरर्थेषु जायते ।
अन्या भ्रान्तिरजातापि त्वन्या जातापि दुष्यति ॥
परेण सह केषां चिद्वाक्ये वाक्यानि जल्पताम् ।
उक्तयः प्रातिभासिक्यो जायन्ते परवाक्यतः ॥
स्वसंवेद्यं च सिद्धान्तमात्मीयमपि जानताम् ।
छायां तथापि रक्षन्तो जल्पन्ति प्रतिशब्दकैः ॥
यथा मीमांसकत्रस्ताः शाक्यवैशेषिकादयः ।
नित्य एवागमो ऽस्माकमित्याहुः शून्यचेतनम् ॥
प्रद्वेषाद्वेदपूर्वत्वमनिच्छन्तः कथं चन ।
तन्मात्रे ऽपि च भूयिष्ठामिच्छन्तः सत्यवादिताम् ।
पूर्वसां वेदबाह्यत्वाद्बुद्धादिवचसाममी ॥
अहिंसाद्यप्यतत्पूर्वमित्याहुस्तर्कमानिनः ।
ततस्य पौरुषेयत्वादप्रामाण्यमतीन्द्रिये ॥
प्रागुक्तैर्वेदनित्यत्ववागाभासैर्विमोह्यते ॥

यादृशतादृशमीमांसकैरप्यतीन्द्रियविषयपुरुषवचनप्रामाण्यनिराकरणादपौरुषेयत्वाध्यवसायनिराकृतकारणदोषाशङ्कनिरपवादप्रामाण्यसिद्धिं प्रतिहन्तुमशक्यां मन्यमाना निरुत्तरीभूता बालानुकरणवाक्यसदृशैः स्ववाक्यैर्व्यवच्छिद्यमानहृदयाः सन्तोपि प्रक्षीणकुहेतुवचनजालाः कन्यावरणार्थागतमूर्खवरगोत्रप्रश्नोत्तरवत् ॥

यदेव भवतां गोत्रं तदस्माकमपीतिवत् ।
आहुः स्वागमनित्यत्वं परवाक्यानुकारिणः ॥
अस्मदीयमिदं वाक्यं भवतामिति चोदिताः ।
जल्पन्त्यस्माकमेवैतच्छ्रुत्वा मीमांसकेरितम् ॥
त्यक्तलज्जं ब्रुवाणो हि वाचोयुक्तिमनर्थिकाम् ।
कुर्वन् परातिसंधानमश्रान्तः को ऽव सीदति ॥
तत्र शाक्यैः प्रसिद्धा ऽपि सर्वक्षणिकवादिता ।
त्यज्यते वेदसिद्धान्ताज्जल्पद्भिर्नित्यमागमम् ॥
धर्मस्तेनोपदिष्टो ऽयमनित्यं सर्वसंस्कृतम् ।
क्षणिकाः सर्वसंस्कारा अस्थिराणां कुतः क्रिया ॥
बुद्धिबोध्यं त्रयादन्यत्संस्कृतं क्षणिकं च तत् ।

तथा शब्दे ऽपि बुद्धेर्नियमान्नाभिव्यक्तिर्देधापि दोषादित्येवमादिभिः सर्वदा पदार्थसम्बन्धानित्यत्वप्रतिपादनात्तद्विपरीतमागमनित्यत्वमभ्युपगम्यमानं लोकोपहासास्पदमात्रमेव भवेत् ॥

तथाहि ।

यस्तन्तूननुपादाय तुरीमात्रपरिग्रहात् ।
पटं कर्त्तुं समीहेत स हन्याद्व्योम मुष्टिभिः ॥
यावदागमनित्यत्वं वेश्मदारूपकल्पिते ।
हेत्वाभासाग्निनिर्दग्धे तस्मिन्तद्वेश्म दुष्करम् ॥

व्यवहारनित्यता शब्दस्य क्रियानित्यत्वपर्यायः तद्यस्य शब्दार्थसंबन्धानामनित्यत्वं तस्य तदाश्रयव्यवहारनित्यत्वं किमाधारं भविष्यतीत्यतिदुःसंपादम् ॥

न च शब्दार्थसंबन्धकूटस्थत्वमनिच्छताम् ।

नित्यता व्यवहारस्य निराधाराऽवकल्पते ॥
शब्दादिषु विनश्यत्सु व्यवहारः क्व वर्त्तताम्।
स्थितैषा धर्म्मतेत्येतदर्थशून्यमतो वचः ॥
एषेत्यपि न निर्द्देष्टुं शक्या क्षणविनाशिनी।
किमुत स्थितया साकं एषेत्यस्यैकवाक्यता ॥
तेनानित्यशब्दवादिनामागमनित्यत्वानुपपत्तेः।

अतिन्द्रियविषयस्य च वाक्यस्य प्रयोगशास्त्रत्वाभावान्नासन्नियमादित्युच्यते ॥

असाधुशब्दभूयिष्ठाः शाक्यजैनागमादयः।
असन्निबन्धनत्वाच्च शास्त्रत्वं न प्रतीयते ॥

मागधदाक्षिणात्यतदपभ्रंशप्राया साधुशब्दनिबन्धना हि ते। मम विहिभिक्खवे कम्मवच्च इसो सवे। तथा उक्खित्ते लोडम्मि उव्वे अत्थि कारणं पडणे णत्थि कारणम्। अणुभवे कारणं इमे संकडाधर्म्मा संभवन्ति सकारणा अकारणा विणसन्ति ॥

अणुप्पत्तिकारणमित्येवमादयः ॥
ततश्चासत्यशब्देषु कुतस्तेष्वर्थसत्यता।
दृष्टापभ्रष्टरूपेषु कथं वा स्यादनादिता ॥

वेदे हि तावदेव पदवाक्यसंघातात्मकत्वादिहेत्वाभासैः कृतकत्वभ्रान्तिर्भवति ॥

या तदस्थिरवस्थानाद्वेदरूपं न दृश्यते।
ऋक्सामादिस्वरूपे तु दृष्टेर्भ्रान्तिर्न्निवर्त्तते ॥
आदिमात्रमपि श्रुत्वा वेदानां पौरुषेयता।
न शक्याध्यवसातुं हि मनागपि सचेतनैः ॥

दृष्टार्थव्यवहारेषु वाक्यैर्लोकानुसारिभिः ।
पदैश्च तद्विधैरेव नराः काव्यानि कुर्वते ॥
प्रपाठकचतुःषष्टिनियतस्वरकैः पदैः ।
लोकेष्वप्यश्रुतप्रायैर्ऋग्वेदं कः करिष्यति ॥
अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातममित्येतन्नृवचः कथम् ॥
किमालोच्य क्व वा दृष्ट्वा वाक्प्रतिच्छन्दमीदृशम् ।
रचयेत्पुरुषो वाक्यं किं चोद्दिश्य प्रयोजनम् ॥
अग्नेः पुरोहितत्वं च क्व दृष्टं येन कीर्त्त्यते ।
इळेशब्दप्रयोगस्य क्व दृष्टस्तोत्रगोचरः ॥
देवत्वं चास्य यज्ञस्य विहितं क्वोपलक्षितम् ।
विधिनैव हि देवत्वं प्रतिकर्म्मावधार्य्यते ॥
न जात्या देवतात्वं हि क्व चिदस्ति व्यवस्थितम् ।
होतृत्वमपि यज्ञस्य देवताज्ञानहेतुकम् ॥
रत्नधायितमत्वं च तन्नरैर्ज्ञायते कथम् ।
अविज्ञातगुणानां च कल्पते स्तवनं न तु ॥
स्वतन्त्रो वेद एवैतत्केवलो वक्तुमर्हति ।
इषे त्वेत्ययमप्यर्थः पुरुषेणोच्यता कथम् ॥
शाखाच्छेदोपयोगस्य पुंभिरुत्प्रेक्ष्यता कुतः ।
एवमूर्जेत्ययं मन्त्रः केन शाखानुमार्ज्जने ॥
वक्तुं शक्यो नियोक्तुं वा बुद्धिपूर्वककारिणा ।
वायवः स्थेत्ययं मन्त्रो वत्सापाकरणं प्रति ॥
एकशो विनियोक्तव्य इति कः कथयिष्यति ।

वायुशब्देन बहुवचनान्तेन मातुर्वियोज्यमान एकैको वत्सो

ऽभिधीयतइति । नैतद्बुद्धिपूर्वकारिणा चिन्तितुं शक्यम् ॥

सामवेदे यदौग्राईप्रभृतीनां प्रयुज्यते ।
रूपं तत्रापि पौंस्त्वे नाभिप्रायोऽस्ति कश्चन ॥

को नाम बुद्धिपूर्वकारी पुरुषोऽर्थाभिधानपराणामृगक्षराणां लोकव्याकरणादिष्वनवगतपूर्वमग्नइत्यस्य पदस्याकारमोङ्कारेण प्लुतेन विकुर्य्यात् ॥

तथा वीतय इत्यस्मिन्नीकारस्यापि विक्रियाम् ।
तशब्दस्य च तोशब्दं येशब्दस्यापि रूपताम् ॥
को मूढो बुद्धिपूर्वो वा नियमात्कल्पयिष्यति ।
तेन वेदस्वतन्त्रत्वं रूपादेवावगम्यते ॥
किंचिदेव तु तद्वाक्यं सदृशं लौकिकेन यत् ।
तत्रापि च्छान्दसी मुद्रा दृश्यते सूक्ष्मदर्शिभिः ॥

एवं च यदाध्येतारोऽध्यापयितारः पार्श्वस्था वा वेदपदवाक्यतदर्थरूपाण्यालोचयन्ति तदा स्वसंवेद्यमेवापौरुषेयत्वमध्यवस्यन्ति ॥

तावता तु बाह्यतार्किकाणां प्रतीतिभावना नोत्पद्यतइति तत्प्रतिपादनक्षमवेदोत्थापितन्यायोपनिबन्धनान्मीमांसकैः केवलं यश एव पीतम् ॥

शाक्यादिग्रन्थेषु पुनर्य्यदपि किंचित्साधुशब्दाभिप्रायेणाविनष्टबुद्ध्या प्रयुक्तं तत्रापि प्रज्ञप्तिविज्ञप्तिपश्यतातिष्ठतादिप्रायप्रयोगात्किंचिदेवाविप्लुतं लभ्यते ॥

किमुत यानि प्रसिद्धापभ्रष्टदेशभाषाभ्योऽपि अपभ्रष्टतराणि भिक्खवे इत्येवमादीनि द्वितीयाबहुवचनस्थाने ह्योकारान्तं प्राकृतं पदं दृष्टं न प्रथमाबहुवचने संबोधनेऽपि संस्कृतशब्दस्थाने

चकारद्वयसंयोगो ऽनुस्वारलोपः ऋवर्णाकारापत्तिमात्रमेव प्राकृतापभ्रंशेषु दृष्टं न डकारापत्तिरपि। सो ऽयं संस्कृता धर्म्मा इत्यस्य सर्वकालं स्वयमेव प्रतिषिद्धो ऽपि विनाशः कृत इति अ-साधुशब्दनिबन्धनत्वादित्यन्तेन हेतुना वेदत्वाकृतकशास्त्रान्त-रशङ्कानिवृत्तिः। यावांश्चाकृतको विनष्टः शब्दराशिस्तस्य व्या-करणमेवैकमुपलक्षणं तदुपलक्षितरूपाणि च ॥

वेदे यथोपलभ्यन्ते नैवं शाक्यादिभाषिते।
प्रयोगनियमाभावादतोप्यस्य न शाश्वता ॥

असंनियमादिति च व्याकरणोक्तनियमाभावादित्यर्थः ॥

क्षणिकत्वनिराकृतनित्यत्वसिद्धानित्यत्वात्यन्ताविद्यमानग्रन्थ-नियमाभ्युपगमाभिप्रायेण वा ऽसंनियमादित्युक्तम् ॥

असतां वा क्षणभङ्गशून्यवादानात्मकत्वादीनामसद्धेतुभिर्वा प्रतिपादननियमात्तदेकर्तृकधर्म्मवचनानामप्यप्रामाण्यम् ॥

कर्तृस्मरणदार्ढ्याच्च नैषामकृतता मता।
तेनाकृतकगम्ये ऽर्थे स्वातन्त्र्यान्न प्रमाणता ॥
एवं समस्तवेदाङ्गधर्म्मशास्त्रेष्वपीदृशात्।
कर्तृस्मृतिदृढिम्नः स्यान्न स्वातन्त्र्येण शाश्वता ॥
अनेन कल्पसूत्राणां प्रत्याख्याता स्वतन्त्रता।
कर्तृस्मृत्या दृढं ज्ञाता तेषामप्यमतां क्रिया ॥
येन न्यायेन वेदानां साधितानादिता पुरा।
दृढकर्तृस्मृतेस्तस्य कल्पसूत्रेषु बाधनम् ॥

यथैव हि कल्पसूत्रग्रन्थानितराङ्गस्मृतिनिबन्धनानि चाध्ये-अध्यापयितारः स्मरन्ति तथाश्वलायनबौधायनापस्तम्बकात्या-यनप्रभृतीन् ग्रन्थकारत्वेन ॥

ततश्च प्रागवस्थायामसतामेव बन्धनात् ।
कुतः प्रयोगशास्त्रत्वं वेदवद्वेदनैव वा ॥
न चैषां समाख्यामात्रबलादेव कर्तृत्वमुच्यते ।
येनाख्या प्रवचनादित्युत्तरमुच्यते ॥

पुरुषपरंपरयैव हि स्मृतेषु कर्तृषु समाख्याभ्युच्चयहेतुत्वेन ज्ञायते यथा च कठादिचरणैरनादिभिः प्रोच्यमानानां अनादिवेदशाखानामनादिसमाख्यासम्भवो नैवं नित्यावस्थितमाशकादिगोत्रचरणप्रवचननिमित्तसमाख्योपपत्तिः । माशकबौधायनापस्तम्बादिशब्दा ह्यादिमदेकद्रव्योपदेशिन इति न तेभ्यः प्रकृतिभूतेभ्यो ऽनादिग्रन्थविषयसमाख्याव्युत्पादनसंभवः । अतश्च माशकादिसमाख्याप्यविद्यमानग्रन्थनियमनादेव प्रवृत्तेत्यपि हेत्वर्थयोजना । वेदरूपनियमाविद्यमानत्वादिति वात्र हेतुव्याख्या । कामं तु वेदाङ्गानिति अनध्यायनियमाभावादिति वा योज्यम् । यत्तु भाष्यकारेण स्वराभावादित्यन्तं नियमार्थं व्याख्यानं कृतम् ॥

तन्मन्त्रेष्वप्यवेदत्वं कल्पाधीनेषु साधयेत् ।
तथा गृह्योपदिष्टेषु छान्दोग्यब्राह्मणेषु च ॥
ब्राह्मणानि हि यान्यष्टौ सरहस्यान्यधीयते ।
छन्दोगास्तेषु सर्वेषु न कश्चिन्नियतस्वरः ॥
तेन तेष्वप्यवेदत्वं स्वराभावात्प्रसज्यते ।
तस्मादुक्तस्वसंवेद्यरूपाभावो ऽत्रकारणम् ॥
स्वरो ऽपि त्वस्ति रूपांशो नत्वसावेव केवलः ।
अतश्च वाक्यशेषो ऽपि तस्मिन्नेवोपयुज्यते ॥
बहवो वाक्यशेषा हि येषां लोकेष्वसंभवः ।

अबुद्धिपूर्वतासिद्धिस्तेन वेदस्य तैरपि ॥

बृहस्पतिर्वै देवानामुदगायदिन्द्रो बृत्रमहन्प्रजापतिर्वपामात्मन उदखिदन् । गावो वा एतत्सत्त्रमासत तासां दशसु मास्सु शृङ्गाण्यजायन्तेत्यादयः कथमिव बुद्धिपूर्वकारिणार्थवादाः प्रणीयेरन् ॥

नित्यत्वे सति येषां हि क्रमेण विधियोजना ।
तान् कृत्वाध्यापयन् कर्त्ता सुसमत्वं व्यजेञ्जडैः ॥

न च तादृशवाक्यशेषमुद्रापि कल्पसूत्रादिग्रन्थेषु काचिदस्ति यद्बलेनाकृतकत्वमेषामवसीयेत ॥

विधिशून्यतया चैषां विच्छिनाख्यानरूपता ।
गम्यते न त्वपूर्वार्थप्रतिपादनशक्तता ॥

वर्त्तमानापदेशो ऽपि त्वर्थवादप्ररोचितः ।
विधित्वं लभते ऽन्यत्र कल्पसूत्रेषु नास्ति सः ॥

पञ्चमेन लकारेण विधिर्य्यश्छन्दसि स्मृतः ।
मन्त्रब्राह्मणभिन्नत्वात्सो ऽप्येतेषु न युज्यते ॥

यद्यपि षडङ्गमेक इत्यनेन कल्पसूत्राणां वेदत्वं भवेत् ।
तथापि तर्कवत्तेषां छन्दस्त्वं नोपपद्यते ।
मन्त्रब्राह्मणयोरेव छान्दसा विधयः स्थिताः ॥

यथैव विधिर्विधेयस्तर्कश्च वेद इत्येतस्मिन्दर्शने सति समवैदिकतर्कोपसंहारात्मिका मीमांसापि वेदशब्दवाच्या भवति तत्त्वमन्त्रब्राह्मणरूपत्वाच्छन्दोनिबन्धनानि कार्य्याणि लभते तथा कल्पसूत्राण्यपीति विधिपर्य्यायप्रयोगशाखत्वाभावः ॥

इतिहासपुराणाभ्यां सा त्वनैकान्तिकी स्मृता ।
या त्वेषां ब्रह्मयज्ञे ऽपि विधानान्नित्यतोदिता ॥

इतिहासपुराणानि कल्पानिति हि सा श्रुतिः ।
तस्मात्कृत्रिममप्यत्र विद्यास्थानं ग्रहीष्यते ॥

वेदार्थोपसंहारस्य कल्पसूत्रानपेक्षैः कर्तुमशक्यत्वादवश्यं च यावद्वेदं यावत्कर्मप्रयोगं च क्रियमाणैरपि विद्यास्थानाशून्यतार्थं कैरपि कल्पसूत्रैर्भवितव्यम् ॥

वेदार्थकल्पनात्कल्पो नित्ययैवाख्ययोच्यते ।
जपे च नित्यकर्त्तव्ये नित्यमेव विधीयते ॥
कर्माभ्यासाभिसंधानं विध्यर्थस्तत्र गम्यते ।
सचार्थोनित्य एवेति नापतेद्ग्रन्थनित्यता ॥
यः पुनर्वेदसंवादः स तत्पूर्वतयेष्यते ।
तदर्थानुगमाच्चैषां न स्वतन्त्रप्रमाणता ॥
वेदशब्दाभिधेयत्वं नैषामध्येतृषु स्थितम् ।
षडङ्गमेकइत्येतत्त च सिद्धान्तभाषितम् ॥
संवादत्वानुवादत्वमेकस्यैकान्तनिश्चितम् ।
ऐकान्तिकविधित्वाच्च ब्राह्मणे तन्न युज्यते ॥
कल्पादावनुवादत्वमापन्नं परिशेषतः ।
न च शाखान्तरन्यायस्तुल्याध्येतृकतावशात् ॥
सर्वशाखाविधित्वं हि सिद्धमध्येतृभेदतः ।
प्रतिशाखं नु ये कल्पास्तदर्थप्रतिपादकाः ॥
समानाध्येतृकत्वात्ते न कदा चिद्विधिक्षमाः ।
विप्रलम्भस्य दृश्यन्ते हेतुभिर्ब्राह्मणोत्थितैः ॥
कल्पकारास्ततोऽप्येषां नैव ब्राह्मणतुल्यता ।
अन्यार्थैर्ब्राह्मणैस्तान्याऽऽज्ञापयन्त्यर्थनिर्णयान् ॥
तस्मादपि स्वतन्त्रत्वं कल्पानां नोपपद्यते ।

अर्थैकत्वेन केषां चिदक्षराणां च साम्यतः ॥
सादृश्याद्ब्राह्मणभ्रान्तिर्ज्ञातैवमपनीयते ।
आचार्य्यवचसां यच्च प्रमाणत्वं श्रुतौ श्रुतम् ॥
श्रुतिसामान्यमात्रत्वात्तस्याप्यन्यार्थतोदिता ।
व्याचक्षाणस्य वेदार्थाश्चेदांश्च वदतः स्वयम् ॥
शिष्यानप्रत्ययाभावात्स्यादाचार्य्योक्तिप्रमाणता ॥
आचार्य्यशब्दस्यार्थो मन्वादिभिरेवं व्याख्यातः ॥
उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः ।
साङ्गं च सरहस्यं च तमाचार्यं प्रचक्षत इति ॥

वेदसंप्रदानकाले च शिष्यास्तद्वचस्सु कथं नाम श्रद्दधीरन् इत्येवमर्थमाचार्य्यवचनं प्रमाणमित्युक्तं न कल्पसूत्रकारवचनविषयम् ॥

न च पुंवचनं सर्वं सत्यत्वेनावगम्यते ।
वागिह श्रूयते यस्मात्प्रायादनृतवादिनी ॥

तथान्यत्राप्युक्तम् । तस्माद्द्वयं वाचा वदति सत्यं चानृतं च पाप्मना ह्येषा विद्धेति ॥

वेदादेवानृतत्वं च तद्वाचामवगम्यते ।
विसंवादो हि भूयिष्ठस्तन्न्याये न च दृश्यते ॥
सर्वत्र च प्रयुक्तत्वादित्यनेन निदर्श्यते ।
सन्निधानाच्च शाखस्य विसंवादः स्फुटः स्फुटः ॥

तत्र यद्वृत्तिकारेणोदाहरणं पार्वणस्थालीपाकविषयगृह्यकारवचनश्रवणाद्दर्शपूर्णमासचरककल्पसूत्रकारवचनाध्यारोपेण दत्तं तदत्यन्ताध्यारोपाभिभवाभिप्रायप्रयुक्तमित्यनादृतम् । गृह्यकारवचनं ह्येतदस्तहोमे तावदासायमाहुतेः प्रातराहुति

न्नोत्येत्याप्रातराहुतेः सायमाहुतिरित्यतश्च यथैवैतदग्निहोत्र-विषयत्वेन न कल्प्यते तथैवैतदपि आपौर्णमास्या अमावास्या नात्येति आमावास्यायाः पौर्णमासीत्येतदपि दर्शपूर्णमासवि-षयं न कल्पनीयमिति । तस्मादन्यदुदाहार्य्यम् ॥

## अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥ ११ ॥

देशधर्म्मानुदाहृत्य संप्रत्येतद्विचार्य्यते ॥
किं व्यवस्थितमूलास्ते किं वैषां सर्वधर्म्मता ।
विध्यर्थप्रतिषेधार्थाः क्रियावर्जनचिह्निताः ॥
इह सर्वउदाहार्य्याः विचार्य्याश्च विभागशः ।
प्राच्या याननुतिष्ठन्ति वर्ज्जयन्ति च साधवः ॥
तेषामेवोपदिष्टास्ते सर्वेषां वेति चिन्त्यते ।
एवं ये दाक्षिणात्यानां प्रतीच्यानां च के चन ॥
उदीच्यानां तथाचारा विचार्य्याः सर्वएव ते ।
आद्यं सूत्रद्वयं यावदिदमप्यत्र चिन्त्यताम् ।
गृह्यगौतमसूत्रादिव्यवस्थासर्वगामिते ॥

पुराणमानवेतिहासव्यतिरिक्तगौतमवशिष्ठशङ्खलिखितहा-रीतापस्तम्बबौधायनादिप्रणीतधर्म्मशास्त्राणां गृह्यग्रन्थानां च प्रातिशाख्यलक्षणवत्प्रतिचरणं पाठव्यवस्थोपलभ्यते । तद्यथा गौ-तमीयगोभिलीये छन्दोगैरेव च परिगृहीते । वासिष्ठं बह्वृचैरेव शङ्खलिखितोक्तं च वाजसनेयिभिः । आपस्तम्बीयबौधायनीये तैत्तिरीयैरेव प्रतिपन्ने इत्येवं तत्र तत्र गृह्यव्यवस्थाभ्युपगमादि दर्शयित्वा विचारयितव्यम् । किं तानि तेषामेव प्रमाणान्युत स-

र्णानि सर्वेषामिति ॥

किं तावत्प्रतिपत्तव्यं व्यवस्थैवेति पाठतः ।

न ह्यन्यत्र स्थिताल्लिङ्गाल्लिङ्ग्यन्यत्रानुमीयते ॥

अनुमीयते ऽनेनेत्यनुमानं लिङ्गमेवोच्यते ॥

तच्च व्यवस्थितं दृष्ट्वा लिङ्गी तत्रैव गम्यताम् ।

विधिर्वा प्रतिषेधो वा न हि सो ऽन्यत्र लिङ्ग्यते ॥

तत्र ग्रन्थात्मकादाचारात्मकाद्वा लिङ्गाल्लिङ्गिनौ विधिप्रतिषेधौ अनुमीयमानौ तद्विषयावेवानुमातुं शक्येते नान्यगतौ । कुतः ॥

अन्यवेश्मस्थिताद्धूमान्न वेश्मान्तरमग्निमत् ।

प्रमीयते न चादृष्टधूमैरिति हि निश्चितम् ॥

यथोपनयनं येषामाधानं च विधीयते ।

तेषामेवाग्निहोत्रादिविधिरप्यवगम्यते ॥

यथा च जातितद्भेदकुलधर्मा व्यवस्थिताः ।

तथैव देशधर्मादिव्यवस्थापि भविष्यति ॥

यदि स्यात्सर्वगामित्वं विधानप्रतिषेधयोः ।

आचारो ऽपि तथैव स्याद्व्यवस्थाहेत्वसंभवात् ॥

सर्वविषयशास्त्रप्रणीतो ह्याचारः सर्वदेशगतशक्तिमत्पुरुषैरग्निहोत्रवदेवानुष्ठीयेत ॥

यस्तु तं विनियोगेन कुरुते तद्व्यवस्थितम् ।

तेन नूनं श्रुतिः कापि तेषामेवं विधायिका ॥

अन्यथानुपपत्त्या च श्रुतिरत्र प्रतीयते ।

तन्मात्रानुपपत्त्या च सा तत्रैवावधार्यते ॥

यस्मादयं देशाचारो ऽयं वा गृह्यादिग्रन्थो ऽन्यथा नोपपद्यते यदि श्रुतिमूलकत्वं नास्तीत्यनयोपपत्त्या मूलकल्पना तस्माद्ध-

वस्थितविषयैव साध्यवसातव्या । तथा चोक्तम् । यदि च हेतु-रवतिष्ठेत निर्देशादिति ॥

यद्यन्नकरणं हेतुः शूर्पहोमे विधीयते ।
तन्मात्रगतमेवासौ दृष्टान्तमपि कल्पयेत् ॥
यदन्नकरणं शूर्पं तेन तेनैव हूयते ।
ततश्चातिप्रसङ्गः स्यान्न दर्विपिठरादिषु ॥
एवं व्यवस्थितान् दृष्ट्वा देशाचारान् समंततः ।
तन्मात्रविषया युक्ता तन्मूलश्रुतिकल्पना ॥
अनुमानव्यवस्थानाद्देशादिनियमादतः ।
तत्संयुक्तं प्रमाणं स्याद्यद्वाक्यमनुमीयते ॥
अपि वा सर्वधर्मं स्यादित्यत्रोत्तरमुच्यते ।
तन्न्यायत्वाद्विधानस्य शक्तमात्राधिकारिणः ॥

इह स्मृतीराचारांश्चोपलभ्य मूलश्रुतिष्वनुमीयमानासु कार-णानुविधायिकार्यन्यायेनावश्यमुपलभ्यमानकार्य्यानुरूपकारणा-नुमानैर्भवितव्यमिति भावनानामविशेषव्यवच्छिन्नयागदानहो-मोपवासादिधात्वर्थविशेषस्वर्गादिफलकारकेतिकर्तव्यताविध-यस्तावदनुमातव्याः एवं वर्ज्जनीयेष्वपि देहेन्द्रियमनोद्वारव्य-वहारेषु प्रतिषेध्यक्रियाकारकं नरकाद्यनिष्टफलप्रतिषेधकश-ब्दानुमानमवश्यंभावितावता च योग्यत्वमात्रविषयत्वान्न दि-ग्देशपरिच्छिन्नकर्तृविशेषाधिकारनियतप्रतिपत्तिलाभः कुतः ॥

त्रिधैव ज्ञायते कर्त्ता विशेषेण प्रतिक्रियम् ।
योग्यत्वाप्रतिषिद्धत्वविशेषोपपदान्वयैः ॥

तदिह विहितानुष्ठानयोग्यता तावत्समस्तार्य्यावर्त्तनिवासि-वर्णाश्रमाणां अन्धबधिरजडमूकादिवर्ज्जमविशिष्टा । वर्ज्जनीय-

योग्यत्वमपि यथोपलभ्यमानं द्वित्रिचतुर्वर्णाश्रममात्रसंबद्धं वा तदभ्यधिकदर्शनानुमितसमस्तम्लेच्छादिविषयं वा विज्ञायते ॥

न त्वत्रोपपदं किं चिद्यथाचारानुसारि यत् ।
अनुमीयेत देशस्थदृष्टकर्तृविशेषणम् ॥
ये ऽपि च प्रतिषिध्येरन्देशान्तरनिवासिनः ।
तद्वाच्यपि पदं किं चिदनुमातुं न शक्यते ॥

योग्यत्वेनाविशेषप्रवृत्तो ऽप्यधिकारः केनचित्कर्तृविशेषणपदेन राजा राजसूयेन वैश्यो वैश्यस्तोमेनेत्यादिवद्विशेष्येत न चात्र दृश्यमानाचरितृवाचि किं चिदेकमनेकं संभावयितुं शक्यम् । कुतः ॥

सर्वं नामपदं तावद्व्यक्त्याकृतिनिबन्धनम् ।
यद्यदेवानुमीयेत नैकार्थमपि तद्भवेत् ॥

न तावत्प्राच्यत्वदाक्षिणात्यत्वादिजातिः प्रतीच्योदीच्यादिव्यक्तिव्यावृत्ता सर्वप्राच्यादिव्यक्तिष्वनुगता का चिदुपपद्यते । यद्वचनमुपपदं होलाकाद्यधिकारं विशिंष्यात् । यास्तु मनुष्यत्वब्राह्मणत्वादिजातयस्तेषु विद्यन्ते ताः सर्वदेशवासिव्यक्तिष्वविशिष्टा इति नाचारानुरूपविशेषणसमर्थत्वेन ज्ञायन्ते ॥

व्यक्तिवाचितु यन्नाम तदेकत्रैव वर्त्तते ।
देवदत्तादिवत्तेन न सिध्येत् कर्त्रनेकता ॥

न ह्यनन्तभेदानां प्राच्यादिपुरुषव्यक्तीनां व्यस्तसमस्तानां सबन्धानुभवासंभवादेकमभिधानमवकल्पते । एतेन गुणक्रियाजातिविशिष्टपुरुषव्यक्तिवचनत्वं प्रत्युक्तम् । न हि काश्चिदपि गुणक्रियाजातिव्यक्तयः प्रतिदेशव्यवस्थितपुरुषव्यक्त्युपलक्षणयो-

ग्याः संभाव्यन्ते । सर्वत्र तत्रापि व्यावृत्त्य(१)विशेषात् ॥

व्यक्त्याकृतिविनिर्मुक्तः पदार्थो न च विद्यते ।
यमाश्रित्यप्रवृत्तं स्यादधिकारिविशेषणम् ॥

एतदेव प्रतिपादयन् भाष्यकार आह । शक्तमात्रपुरुषाधिकारप्रवृत्तविधानविशेषणं येनोपपदेनानुमीयमानेन क्रियते न तस्याकृतिवचनता न्याय्या न व्यक्तिवचनतेति । न ह्येते होलाकाद्याचाराः कां चिदाकृतिमनुविधीयन्ते न व्यक्तिं न हि यावत्सु पुरुषेष्वेते अवस्थितास्तावतामेकेनापि व्यपदेशेनोपसंग्रहः संभवति । केषांचित्तस्याकृतिवचनता न्याय्या न व्यक्तिवचनतेति ग्रन्थस्तेषामभिप्रायः । यथैव जातिं तु बादरायणोऽविशेषादिति सूत्रकारः स्वर्गकामपदं यौगिकमप्युद्दिश्यमानपुंस्त्वविशेषणासंभवात्फलार्थिमात्रमनुष्यजातिविषयोपपत्तेश्च सामर्थ्याल्लिङ्गजातिमात्राधिकारं वक्ष्यति ॥

तथेहापि फलार्थित्वकर्तृशक्त्यावबोधनात् ।
देशधर्म्मेषु सर्वेषु नरजातेरधिक्रिया ॥

कश्चित्पुनराख्यातशब्दार्थमुपवर्णयन्निमं ग्रन्थपाठं दूषयित्वापूर्वमेव समर्थयमानः सूत्रगतयावच्छ्रुतविधानशब्दजनितभ्रान्तिर्विधिभावनयोश्च भेदमपश्यन्नुभयस्वरूपनिरूपणपर्य्यनुयोगत्रासान्नावार्थाधिकरणसिद्धान्तं विनाशयन्नेवमाह भाव इति वानाख्येयः स्वधर्म्मेणान्यदतः शब्दज्ञानात्कारकवदिति ॥

तेन यः कश्चिदाख्यातप्रत्ययार्थतत्त्वं जिज्ञासमानः पृच्छति कः पुनरयं भावो भावना चेति तं प्रत्यनन्यशब्दाख्येयत्वात् केवलप्रत्ययप्रयोगदर्शनाभावाच्च सर्वधात्वर्थसामान्यवचनकरो-

(१) व्यावृत्त्य व्यावृत्त्येति पा० ।

तिपरलिङाद्युच्चारणमात्रेणैवोत्तरं दास्यते कुर्याच्छब्द इत्यर्थः सर्वस्याख्यायमानो ऽर्थ आकृतिरूपेण वाख्यायेत व्यक्त्याकृति-गोचरातिक्रान्तिस्य क्रियाख्यातशब्देनोपायरहितत्वादनाख्ये-यो ऽस्यार्थ इति । तदेव क्रियानेनापि ग्रन्थेनोक्तं भाष्यका-रेण। न तस्याकृतिवचनता न्याय्या न व्यक्तिवचनतेति । विधा-नशब्दो हि सूत्रे पूर्वं प्रकृतस्तमेव तच्छब्देन निर्द्दिश्य व्यक्त्याकृ-तिवचनत्वादपनयति ॥

कुर्य्यादित्युच्यमानो हि करोमीति प्रपद्यते ।
न विधेर्भावना या वा सामान्यव्यक्तिरूपताम् ॥

तदिदमसंबद्धमेवानुपपत्तिकं च श्रुतिसामान्यमात्रेणान्यार्थ-मेव सचतुःशृङ्गादिमन्त्रवद्भाष्यकाराभिप्रेतार्थत्यागेन स्वप्रज्ञा-विलसितं प्रकाशयतान्यस्मिन्नेवार्थे योजितम् ॥

देशाचारसर्वधर्मोपपत्तिविचारणार्थो ऽयं ग्रन्थ स यदि पू-र्वकृतया व्याख्यया उपपदनिराकरणविषयत्वेन वर्ण्यते तत एत-त्सूत्रव्याख्यानेन संबध्यते यथोक्तन्यायमार्गेण यदि तु तत्परित्या-गेनाख्यातप्रत्ययार्थानामनाख्येयत्वापत्तिमेव व्यक्त्याकृतिरहि-तार्थत्वेन वर्णयेत् ततोत्यन्तासंबन्धानुपयुज्यमाननिरूपपत्ति-कार्थत्वेन हेय एव स्यात् ॥

तथाहि ॥

यस्मादाख्यातशब्दस्य न व्यक्त्याकृतिवाचिता ।
तस्मात्तद्विहितं कर्म्म सर्वार्थमिति विस्मयः ॥

यदि नाम लिङादिप्रत्ययो भावनायाः विधेर्वा व्यक्तिमाकृतिं वा वदेत्ततो होलाकादयः प्रतिनियतदेशधर्म्माणो भवेयुः यत-स्तु व्यक्त्याकृतिविनिर्म्मुक्तो ऽव्यपदेश्यो ऽर्थस्तस्मात्तद्विहितधा-

त्वर्थविषयः सर्वपुरुषधर्म्म इत्येवं नीयमानमसंबद्धोदाहरणे ज्येष्ठमेव स्यात् ॥

अनाख्येयत्वमुक्त्वा च पर्य्यायैः स्वविकल्पितैः ।
अन्वाख्यानं कृतं तच्च पूर्वोक्तेन विरुध्यते ॥

विध्युपदेशकर्त्तव्यताभावनाशब्दानां ह्यत्यन्ताभूतमेव बहुभाषित्वप्रख्यापनापरपर्यायत्वमध्यारोप्याचक्षाणेन स्वयमनाख्येयत्वमतीव स्थापितम् । यद्यपि तावदाख्यातप्रत्ययः कर्तृशक्तितदाधारद्रव्यमात्रं वा वदेत्तथापि ब्राह्मणो यजमान इतिवदुपपदाधीनविशेषावस्थानत्वात्तदधीनजात्यादिवृत्तित्वमनुरुध्यमानो न स्वगतव्यक्त्याकृतिवचनत्वविचाराधीनाधिकारित्वनिर्णयः स्यात्किमुत यदा कर्त्रभिधाननिरपेक्षविधिर्भावनादिमात्रवाचित्वमेवावस्थास्यते । यदि चैतावन्मात्रमेव सर्वधर्म्मत्वकारणं भवेत् । ततो राजसूयाश्वमेधवैश्यस्तोमादीनामप्येवमात्मकाख्यातप्रत्ययविधेयत्वाविशेषात्सर्वधर्म्मत्वप्रसङ्गः । अथ तेषामनिर्द्दिश्यार्थप्रत्ययविहितानामपि राजाद्युपपदवशादसर्वधर्म्मत्वम् । एवं तत्राप्यसर्वधर्म्मत्ववादिना तदेवोपन्यसनीयम् । सर्वधर्म्मत्ववादिना च निराकर्त्तव्यम् । तच्चाचारानुरूपव्यक्त्याकृतिवचनत्वासंभवात्सामर्थ्यलभ्यमनुष्याकृतिमात्राधिकारप्रतिपत्तेर्वा निराकृतमेव । तद्यथा चोत्तरसूत्राणि लिङ्गाभावाच्च नित्यस्याख्या हि देशसंयोगादित्येवमादीनि उपपदोपन्यासप्रत्याख्यानार्थानि सङ्गंस्यन्ते । तस्मात्सर्वाधिकारन्यायत्वाद्विधानस्य व्यवस्थितदेशाचारगृह्यधर्म्मसूत्रनिबद्धधर्म्माणामपि सर्वधर्म्मत्वम् ॥

## दर्शनाद्विनियोगः स्यात् ॥ १२ ॥

यस्तु जातिकुलगोत्रधर्म्मवद्व्यवस्थितविध्यनुमानमिति ॥

तत्रैकशब्दवाच्यानां जात्यादीनां व्यवस्थया ।
दर्शनादिनियोगः स्यात्पञ्चावत्तादिधर्म्मवत् ॥

यथैव पञ्चावत्तं तु भृगूणां वसिष्ठशुनकात्रिवध्र्यश्वकाण्वसंकृतिराजन्यानां नाराशंसो द्वितीयः प्रयाजः तनूनपादन्येषामिति अन्वयतो व्यतिरेकतश्चोपलक्षणसंभवाद्व्यवस्थितविध्यवसानं तथैव प्रतिजातिगोत्रनियतत्रिशिखैकशिखादिकल्पव्यवस्थितविधिविशेषानुमानोपपत्तिरस्तीति दृष्टान्तदार्ष्टान्तिकवैषम्यम् ॥

# लिङ्गाभावाच्च नित्यस्य ॥ १३ ॥

व्यक्त्याकृत्यभिधेये ऽर्थे प्रत्याख्याते विशेषणे ।
लोहिताक्षादिचिह्नानामधुनान्या निराक्रिया ॥

जातिव्यक्तिवाच्युपपदाभावे ऽपि कर्तृगतसंस्थानवर्णादिगुणविशेषोपलक्षणेन कृष्णकेशाधानवदधिकारनियमः सेत्स्यतीत्याशङ्क्य निराक्रियते ॥

लिङ्गाभावाच्च नित्यस्य नास्ति कर्त्तुर्विशेषणम् ।
नियतेन हि लिङ्गेन नित्यः कर्त्तोपलक्ष्यते ॥
यच्चिह्नं दाक्षिणात्यानां लोहिताक्षादि कल्प्यते ।
अन्येषामपि तद्दृष्टं तदनाचरतामपि ॥
दृष्टमाचरणं चैतत्तच्चिह्नरहितेष्वपि ।
तस्माद्व्यवस्थितैश्चिह्नैर्नाधिकारो विशेष्यते ॥

यस्तु लिङ्गविशेषणं नित्यशब्दं मन्यते तस्योपसर्ज्जनीभूतलिङ्गसापेक्षत्वादसमर्थसमासप्रसङ्गः । ननु लिङ्गशब्दस्य नित्यसापेक्षत्वात्स्वार्थाक्षिप्तसंबन्ध्यन्तरत्वेन सामर्थ्यविघाताभावाद्भवितव्य-

मेवेह समासेन देवदत्तस्य गुरुकुलमिति यथा ॥

नैतत्तुल्यमनेनेष्टमपेक्षान्तरसङ्गतेः ।

नित्यं नापेक्षते लिङ्गं देवदत्तं यथा गुरुः ॥

गुरुशब्दस्य हि शिष्यापेक्ष एवात्मलाभ इति देवदत्तशब्दोपात्तशिष्यसंबन्धानतिरेकान्तर्णीतस्वार्थत्वान्नाभ्यधिकापेक्षाकृतस्सामर्थ्यप्रतिबन्धप्रसङ्गः ॥

इह लिङ्गस्य लिङ्गत्वं गम्यते लिङ्ग्यपेक्षया ।

न च लिङ्ग्यभिधाय्येतन्नित्यस्येति पदं मतम् ॥

यद्यपि चैष गम्यगमकसंबन्धे सति लिङ्गशब्दः प्रवर्त्तते तथापि गुरुशिष्यपितापुत्रादिसंबन्धवन्नास्य तदपेक्षप्रवृत्तिनिमित्तसंबन्धिशब्दत्वप्रसिद्धिः ॥

लिङ्गी यौगिकशब्दत्वात्सदा लिङ्गमपेक्षते ।

लिङ्गशब्दस्तु धात्वर्थं मुक्त्वा नान्यदपेक्षते ॥

लिङ्ग्यतेऽनेनेति हि क्रियायोगनिमित्तो यद्यपि लिङ्गशब्द इति न संबन्धिशब्दत्वेनोच्यते तथापि तु क्रियागतकारकान्तरापेक्षां न मुञ्चतीति कामं लिङ्गिनो लिङ्गदर्शनमित्यादौ भवेदप्यसामर्थ्यपरिहारः । नित्यत्वं पुनर्लब्धस्वार्थलिङ्गापेक्षितं तद्धर्मतया षष्ठ्योपनीयतइति तत्संबन्धापेक्षायामपरिहार्य्योऽसामर्थ्यप्रसङ्गः । तस्मान्नित्यस्येति नियतचिह्नोपलक्ष्यकर्तृविशेषणमेवाधिकारविशेषणं वा नियतस्य कर्त्तुर्नित्यस्याधिकारस्य वा न प्रतिपादकं किं चिच्चिह्नमस्तीति न तदभिधाय्युपपदविशेषितव्यवस्थितदीक्षाकादिविधानोपपत्तिः ॥

## आख्या हि देशसंयोगात् ॥ १४ ॥

इदानीं तु यदाचारमत्यन्तमनुवर्त्तते ।
तत्प्राच्यादिसमाख्याख्यमुपन्यस्तं विशेषणम् ॥

सर्वे हि देशाचाराः प्राच्यदाक्षिणात्यादिसमाख्यातैः पुरुषैः क्रियन्ते समाख्यावर्जितेषु च नोपलभ्यन्ते । तस्मात्समाख्याविशिष्टविध्यनुमानात्तत्संयुक्तप्रमाणपक्ष एव ज्यायानिति । तत्र समाधिः ॥

आख्या हि देशसंयोगाद्यस्मात्कर्तृषु वर्त्तते ।
आचाराणामतः प्राप्तो विधिर्देशविशेषणः ॥
देशश्च दिग्विशिष्टः स्याद्दिग्रूपं चानवस्थितम् ।
न च तद्देशसंबन्धादनाचारोऽनुवर्त्तते ॥
निर्गतेष्वपि दृष्टत्वात्तद्गतेष्वप्यदर्शनात् ।

समाख्यायास्तावन्न देशादन्यन्निमित्तमस्ति तद्विशिष्टविधिविहिताश्चाचाराः केवलमेव तद्देशसंबन्धमनुवर्त्तेरन् । उभयथापि तु व्यभिचारान्न देशनिमित्तसमाख्या विशिष्टविधानकल्पना घटते । अपरस्त्वनयैवोपपत्त्या लब्धात्मीयपक्षोपपत्तिः प्रत्यवतिष्ठमान आह ॥

## न स्याद्देशान्तरेष्विति चेदिति ॥१५॥

यदि देशनिमित्तत्वात्समाख्या दूषिता त्वया ।
शक्यमन्यनिमित्तत्वं वक्तुमस्या मया पुनः ॥
सति देशनिमित्तत्वे न स्याद्देशान्तरेष्वियम् ।
तस्मात्किमपि जात्यादि ध्रुवमस्या निबन्धनम् ॥
अस्तु वा निर्निमित्तैव विशेष्यति तथापि तु ।
लब्धाचारनिमित्तानां किन्निमित्तान्तरेण नः ॥

तस्माद्निमित्तया समाख्ययैवाधिकारविशेषसिद्धेर्न्न व्यभि-चारिदेशनिमित्तत्वमस्याः कल्पयितव्यमित्युक्ते ऽभिधीयते ॥

## स्याद्योगाख्या हि माथुरवत् ॥१६॥

संबन्धैर्बहुभिर्देशसमाख्या हि प्रवर्त्तते।
निवासभवजातत्वतदागमनहेतुभिः॥

सो ऽस्य निवासस्तत्र भवस्तत्र जातस्तत आगत इति एवमा-दिनिमित्तपरित्यागेन न कदाचित्प्राच्यादिसमाख्या वर्त्तते न चैषा देशसंयोगं व्यभिचरति न चैनामाचारो ऽनुवर्त्तते तन्निवा-सिनामपि केषां चिदनाचरणाच्चिरनिर्गतपुत्रपौत्रादीनां च देशान्तरेष्वप्याचरणादिति न समाख्यया नियतविधिसिद्धिः। यत्तु मथुरामभिप्रस्थितो माथुर इति भाष्यकारेणोक्तं तत्तद्ग-च्छति पथि दूतयोरिति वा दूतविषयं कल्पयितव्यमप्रत्ययितोक्त-त्वादोपेक्षितव्यम्। सर्वस्मिन्नपि प्रस्थिते तद्धितस्मरणाभावात्। इदानीं कर्तृविशेषविशिष्टविध्यनुमानात्प्रतिहतः कर्म्माङ्गभूतप्रा-ग्देशादिविध्यनुमानसंभवं मन्यमान आह ॥

## कर्म्मधर्म्मो वा प्रवणवदिति ॥१७॥

प्रागुदक्प्रवणो यद्वत्प्राचीनप्रवणो ऽपि वा।
देशो भवति कर्म्माङ्गं प्राग्देशादिस्तथा भवेदिति ॥
तुल्यं तु कर्तृधर्म्मेण तच्चिह्नमनवस्थितम्।
दिक्कृष्णमृत्तिकाप्रायप्रभृतिव्यभिचारतः॥
प्राग्देशो यो हि केषां चित्सो ऽन्येषां दक्षिणापथः।
तथोदक्प्रत्यगित्येवं नैकरूप्येण गम्यते ॥

म्लेच्छिकाद्यपि यच्चिह्नं तत्रान्यत्र च तत्समम् ।
होलाकादिविधिस्तस्मान्न तेनापि विशेष्यते ॥
पुरुषापेक्षयाचारस्तस्मिन्नपि न दृश्यते ।
अन्यस्मिन्नपि दृष्टश्च तस्माद्देशो ऽप्यकारणमिति ॥

## प्रयोगोत्पत्त्यशास्त्रत्वादिति ॥ २८ ॥

एकस्मात्पदात्प्रयोगनानात्वदर्शनादनेकार्थप्रतिभाने सति विकल्पदोषभयादनेकादृष्टशक्तिकल्पनाप्रसङ्गाच्च गौणमुख्यविभागमाश्रित्य व्यवस्थितशास्त्रप्रयोगबलेनाव्यवस्थिते लौकिकप्रयोगबाधाद्यववराहादिशब्दानामर्थनिर्णयः प्रतिपादितः । एवं पुनरेकस्मिन् गवादावर्थे गोगाव्यादयो बहवः शब्दाः प्रयुज्यन्ते तत्र वृद्धव्यवहारावगतप्रतिशब्दसमवायिवाचकशक्तिभेदोपपत्तेः शास्त्रस्थसर्वशब्दप्रयोगाणां च लौकिकशब्दैरविरोधात्पदपूर्वकत्वाच्च वाक्यात्मकशास्त्रव्यापारसिद्धेर्न पदगतसाध्वसाधुत्वप्रतिपादने व्यापारो भवति इतरेतराश्रयत्वप्रसङ्गात् । तथाहि ॥

लोकप्रसिद्धशब्दार्थवशं शास्त्रं प्रवर्त्तते ।
अतो न लौकिकेष्वस्मात्साध्वसाधुत्वनिर्णयः ॥

वाक्यार्थेषु हि श्रुतिस्मृत्याचारविरोधदर्शनाद्बलाबलमानुपूर्व्येणावधृतमिह तु न विपरीतक्रमत्वात् ॥

लोकादेवाधिगन्तव्या शब्दानां साध्वसाधुता ।
वाचकावाचकत्वेन सा च नित्यं व्यवस्थिता ॥
ध्वनिमात्राण्यसाधूनि वर्णा वा केवलात्मनाम् ।
संघातो ऽर्थानपेक्षो वा मातृकाद्युपदेशवत् ॥

तेन भेरीशङ्खादिशब्दा गकारककारादयः प्रत्येकं तद्वर्गा वा

ऽनर्थकत्वादपशब्दा इति लोकव्यवहारादेवार्थं न साधयन्तीत्यसाधवो गम्यन्ते। गाव्यादयः पुनर्गवादिवदेव साधयन्त्यर्थं तेभ्यो ऽपि वा शीघ्रतरं प्रसिद्धतरत्वादर्थप्रतीतिमुत्पादयन्तीति सत्यप्येकविषयानेकशब्दत्वे हस्तकरपाण्यादिशब्दवदर्थसाधनत्वात्साधुत्वेनावधार्य्यन्ते॥

ततश्चावाचकत्वेन यच्चासाधुत्वमुच्यते।
तस्य लोकविरुद्धत्वान्नग्राह्यत्वं प्रतीयते॥
अदृष्टविषया चेत्स्यादेतेषां साध्वसाधुता।
वेदवाक्यैरनिर्द्दिष्टा न सास्त्यन्यप्रमाणिका॥

प्रत्यक्षेण तावदुभयत्राप्यविशेषेण वर्णाः शुद्धाः प्रतीयन्ते। न तद्गते तत्समुदायगते वा साधुत्वासाधुत्वे। न वाननुभूतसंबन्धादनुमीयेते। तन्निराकरणाच्च तत्पूर्वकपरुषवचननिराक्रियापि सिद्धा वेदवचनं पुनर्वस्तुस्वरूपतद्गतगुणदोषान्वाख्यानपरं विधिप्रतिषेधानपेक्षं नैव किंचित्प्रमाणत्वेन संभवति। साधुत्वासाधुत्वयोरननुष्ठानात्मकत्वाद्विधिप्रतिषेधविषयत्वम्। अभिधाभावनाकरणभूतयोर्विधेयत्वप्रतिषेध्यत्वसंभव इति चेन्न। प्रतिशब्दमनन्तविधिप्रतिषेधवाक्यानुमानकल्पनानुपपत्तेः॥

यो हि प्रतिपदं पाठं साधूनां नाध्यवस्यति।
विधिवाक्यानि तावन्ति स कथं प्रतिपत्स्यते॥
अपशब्दाश्च शब्देभ्यो भूयस्त्वेन व्यवस्थिताः।
न कलञ्जादिवत्तेषां प्रतिषेध्यत्वसंभवः॥

व्रीह्यादीनि हि कलञ्जादीनि च नियतजातिगुणादिरूपेण परिज्ञायमानपरिमाणत्वाद्विधिप्रतिषेधगोचरीभवन्ति न तु गवादिगाव्यादीनां जातिरूपेण व्यक्तिरूपेण वा विधिप्रतिषेधा-

वुपपद्येते । न तावत्साध्वसाधुत्वे जातिगुणाद्यात्मकसामान्यरूपेण सर्वव्यक्त्यनुगते विज्ञायेते यदालम्बनौ द्वावेव विधिप्रतिषेधावनुमीयेयातां साधुभिर्भाषेत नासाधुभिरिति ॥

अविभक्ता हि शब्दत्वजातिः शब्दापशब्दयोः ।

न त्ववान्तरसामान्ये केचिद्वर्गद्वयस्थिते ॥

तेन यद्येकैका व्यक्तिर्विधीयेत प्रतिषिध्येत वा ततो यावत्पदं वाक्यान्यनुमिमानः त्रैलोक्यपूरणादप्यधिकानि स्मृतिमूलभूतानि वेदवाक्यान्यनुमिमीते । न च तावतां कोटिशतभागोऽप्याम्नातुं शक्यते । न चानाम्नातस्य स्मृतिमूलत्वं नित्यानुमेयश्रुतिमूलप्रतिषेधात् । न च वाचकत्वावाचकत्वनिबन्धनौ विधिप्रतिषेधौ संभवतः । सर्वेषां वाचकत्वात् ॥

वाचकैर्भाषितव्यं हि प्राप्तत्वान्न विधीयते ।

अवाचकनिषेधश्च नाप्राप्तेरवकल्पते ॥

न ह्युदकं पिबेदग्निं न पिबेदिति च विधिप्रतिषेधौ संभवतः । अवश्यं च व्याकरणस्मृतिमूलभूतसाधुविधिश्रुतिरसाधुप्रतिषेधश्रुतिरुभयं वा संयोगपृथक्त्वात् कल्पनीयम् । त्रिष्वपि च पक्षेषु साध्वनुशासनमात्रमेव सौकर्य्यादाश्रितम् । यदि ह्यपशब्दप्रतिषेधमूलं व्याकरणं ततस्तेषां बहुत्वादव्यवस्थितरूपत्वाच्च न स्वरूपमवगन्तुं शक्यतइति पञ्च पञ्चनखा भक्ष्या इति स्मृतिन्यायेनानुगतविपरीतभाषणप्रतिषेधोर्थापत्तिसिद्धः स्मर्य्यते । साधुविधिपक्षे तु तएव स्मर्त्तव्याः । उभयपक्षे तु तदनुगमादेवेतरसिद्धेः प्रतिषेधविषयज्ञानोपपत्तिः । स एष व्याकरणस्य पक्षत्रयेप्येकानुगमनिबन्धनत्वात्कथं चित्संक्षेपोऽवकल्पते । ननु प्रतिशब्दं विधिप्रतिषेधावक्लृप्तिः । अनन्तवाक्यपाठासंभवादिष्टासंभ-

वप्रदर्शनार्थमेव चोलाकाधिकरणे ऽभिहितम् । न तस्याकृति-
वचनता न्याय्या न व्यक्तिवचननेति । तस्मादसंभवन्मूलत्वादप-
स्मृतिः ॥

अथ प्राप्तश्च योर्थः स्यान्न स शास्त्रस्य गोचरः ।
सिद्धः शब्दप्रयोगश्च लोकादेवार्थलक्षणः ॥

अथार्थलक्षणत्वेपि शास्त्रेण धर्माय प्रयोगनियमात्प्रयोगोत्प-
त्तिशास्त्रत्वं स्यादिति । तदनुपपन्नम् । नियम (१) विषयासंभ-
वात् ।

यस्य ह्यनियता प्राप्तिस्तच्छास्त्रेण नियम्यते ।
नित्यप्राप्तप्रयोगस्तु न शब्दो नियमास्पदम् ॥
यस्याप्यत्यन्तमप्राप्तिस्ततो ऽन्यो न नियम्यते ।
तव चात्यन्तमप्राप्तिर्गाव्यादेः प्राप्तता मम ॥

तेन पक्षद्वयेपि नियमानुपपत्तिः । कीदृशश्चात्र नियमः क-
ल्प्येत । किं साधुभिरेव भाषितव्यमुत साधुभिर्भाषितव्यमेवे-
ति ।

यदि साधुभिरेवेति नासाधोरप्रसङ्गतः ।
नियतं भाषितव्यं चेत् मौने दोषः प्रसज्यते ॥

यदि लोकार्थाः साध्वसाधवो विकल्पेन प्राप्नुयुस्ततः साधु
नियमावकाशः स्यात् । त्वन्मते तु पुनः ।

अत्यन्तावाचकत्वात्तु नैवासाधुः प्रसज्यते ।
यस्मिन्वृत्तिफलः साधोर्नियमो ऽस्यार्थवान्भवेत् ॥

अथ प्रमादाशक्तिभूत (२) प्रसङ्गनिवृत्तिर्नियमं प्रयुञ्जीत ।

(१) प्रयोगनियमेति पा० ॥
(२) शक्तिकृतेति पाठान्तरम् ॥

मद्दृष्टम् ।

नहि शास्त्रशतेनापि प्रमादाशक्तिकारिताम् ।
निवर्त्यन्ते प्रयोक्तारः प्रयोगादिति दृश्यते ॥

दृष्टोपशब्दानामर्थाभिधाने प्रयोग इति चेत् । उच्यते ।

अन्योप्यशक्तिनिकोचादेः प्रयोगो ऽर्थेषु दृश्यते ।
तन्निवृत्तिफलः कश्चिन्नियमो न च दृश्यते ॥

न च नियमानां प्रतिपत्तनिवृत्तिः प्रयोजनम् । परिसंख्या-प्रयोजनत्वान्न चायं परिसंख्याविषयो युज्यते । युगपत्प्राप्त्य-भावात् ॥

न वा दृष्टार्थतैवास्य प्रयोगस्योपपद्यते ।
नहि दृष्टनिराकाङ्क्षाददृष्टमपि गम्यते ॥

नहि तादृशेष्वदृष्टकल्पनायामर्थापत्तिः प्रभवति । परार्थत्वा-च्च फलश्रुतेरर्थवादत्वम् । न चासति फले शक्यमपूर्वं कल्प-यितुम् ॥

न चेदं नियमापूर्वमाश्रितं क्वेति गम्यते ।
शब्दार्थश्रोतृतद्बुद्धिवक्तृच्चारणगोचरे ॥

शब्दस्य तावदत्यन्तपरार्थदृष्टार्थत्वात् नापूर्वेण कश्चिदुप-कारः । सत्यपि चाभिधानकर्मत्वेनार्थस्य प्राधान्ये दृष्टार्थेषु लो-कव्यवहारेषु विनाप्यपूर्वेणाङ्गभावात् । अपूर्वोपकारानुपयोगः । श्रोतुः पुनर्नियमविधिसंस्पर्शानन्तर्गतत्वादेवासंस्कार्यत्वम् । बुद्धेश्च क्षणिकत्वान्न कालान्तरावस्थाय्यपूर्वाधारत्वोपपत्तिः ।

वक्ता कुभाषणे सर्वो गुणभूतो विधीयते ।
न तस्य नियमापूर्वसंस्कार्यत्वनिरूपणम् ॥

न प्रधानपदं चात्र विद्यते स्वर्गकामवत् ।

न च षष्ठ्युक्तसंबन्धात्स्वामित्वेन प्रधानता ॥
यत्तु दिङ्नियमापूर्वं भोजनादिषु कल्पितम् ।
पुरुषार्थक्रियाद्वारं तदर्थं तत्प्रतीयते ॥

न चैतदुच्चारणमुच्चारयितव्यं येन भोजनादिसमत्वं प्रतिपद्येत । स्वरूपेण पुनर्मङ्गलत्वाद्वृद्धिवदेवासंस्कारार्थम् ॥

एवं चावेदमूलत्वान्न धर्म्मनियमार्थता ।
युक्ता शब्दस्मृतेर्वक्तुं न चास्याः शास्त्रता स्वयम् ॥
तदुक्तं प्रयोगशास्त्रमिति चेन्नासंनियमादिति ।
नहि व्याकरणादीनां वेदत्वेन स्वतन्त्रता ।
पुरुषाधीनवृत्तेश्च सापेक्षस्याप्रमाणता ॥

सर्वत्र हि पौरुषेयाद्वचनादेवमयं पुरुषो वेदेति प्रत्ययस्तेन कर्त्रभिप्रायप्रकाशनमात्रोपयुक्तत्वाद्व्याकरणान्नैव शब्दगतसाध्वसाधुविभागः प्रतीयते ॥

न च स्मृत्यन्तरं किंचिद्दृष्टं तत्कार्य्यगोचरम् ।
दृढं श्रुत्यनुमानं स्याद्येनोपनयनादिवत् ॥

प्रायेण मनुगौतमवसिष्ठादिप्रणीताः समानेष्वर्थेषु धर्म्मसंहिता वर्तन्ते । तेनाविगानात्ताभ्य एव श्रुतयः स्वनुमानाः । न च व्याकरणस्य ताभिः समानार्थत्वम् ।

परस्परेण चाचार्य्या विगीतवचनाः स्थिताः ।
सूत्रवार्त्तिकभाष्येषु किं तत्राध्यवसीयताम् ॥
न तावत्सूत्रकारेण किंचिदुक्तं प्रयोजनम् ।
कथं चैतावति ग्रन्थे स्यात्प्रयोजनविस्मृतिः ॥

येष्वपि तद्ग्रन्थेषु विस्पष्टान्यादित एवारभ्य प्रयोजनानि श्रूयन्ते । न चैषां श्रवणग्रहणधारणेषु महान्खेदस्तेष्वपि जि-

शासूत्रमात्रार्थं पूर्वं प्रयोजनान्येव निबध्नन्ति, धर्मं व्याख्यास्यामो, यज्ञं व्याख्यास्याम, इत्येवमादिभिरिह पुनरत्यन्तकष्टं व्याकरणं प्रणयता सूत्रकारेण धर्म्मार्थकाममोक्षाणां न कस्यचित्प्रयोजनत्वमाश्रितम् । न च सर्वप्रधाने वस्तुन्यनादरो युक्तः । सुज्ञातत्वं पुनरीदृशं येनाद्यापि विवदन्ते ॥

धर्म्मश्च फलसम्बद्धं कर्म्म यागादि वर्ण्यते ।
न च व्याकरणे किं चित्ताद्दृक्कर्म्मोपदिश्यते ॥
धर्म्मत्वं यच्च विज्ञानशास्त्रपूर्वप्रयोगयोः ।
यथेष्टं वर्णितं तच्च न शास्त्रसदृशं मतम् ॥

शास्त्रार्थो हि निरूपितरूपो भवति । इह च ज्ञानधर्म्मत्वमुपन्यस्य अधर्म्मप्रसङ्गभीतेन शास्त्रपूर्वप्रयोगे ऽभ्युदय इति वार्त्तिककारेणोक्तम् । भाष्यकार आह । अथ वा पुनरस्तु ज्ञाने धर्म्म इति न चैवमनियमेन धर्मत्वावधारणमुक्तम् ॥

सम्बद्धयोश्च धर्म्मत्वं यदेकस्यावधार्यते ।
तदेतरत्तदर्थत्वान्न धर्म्मत्वेन गम्यते ॥

तदिह यदि तावज्ज्ञानमेव धर्मत्वेनावधारितम् । ततो लोकप्रसिद्धस्यैव प्रयोगस्य ज्ञानात्तु निष्पादितत्वेन सत्यामप्युपकारनिर्वृत्तौ वाजिनादिवत्प्रयोजकत्वाभावः । शास्त्रपूर्वकप्रयोगपक्षे तु ज्ञानस्य तदङ्गत्वेन निराकाङ्क्षभूतत्वात् । असत्यां प्रयोजनान्तराकाङ्क्षायां यद्यपि का चित्फले श्रुतिर्भवेत्सापि द्रव्यसंस्कारकर्म्मस्वित्यनेन न्यायेनार्थवादतया ज्ञायते । न हि समानाध्वनोः परस्मिन्फलवति ज्ञाते पूर्वस्यापि फलवत्ता ज्ञायत इति वर्णितमेतत् । "यो ऽश्वमेधेन यजते य उ चैनमेवं वेद"-ति । किं च ।

आदिमत्त्वाच्च धर्मत्वं नैव ज्ञानप्रयोगयोः ।
न हि व्याकरणापेक्षा वर्त्तते वैदिकी श्रुतिः ॥

यन्नाम ज्ञानं नित्येन वेदेनैव क्रियते नच तत्पूर्वकप्रयोगविधानं फलायोपपद्यते । व्याकरणज्ञानं तु पौरुषेयं ग्रन्थाधीनत्वान्मन्त्रार्थवादगता नित्यसंयोगपरिहारन्यायेनानादिवेदविषयत्वेन नावधार्यते ॥

न च व्याकरणं नित्यं कथं चिदवगम्यते ।
कर्तृस्मृतिदृढिम्ना हि नित्यपक्षनिराक्रिया ॥

अथापि व्यवहारनित्यतान्यायेन पौरुषेयव्याकरणपरंपरानादिः कल्प्येत, तथाप्युक्तान्तुशब्दपूर्वत्वमित्यस्य न्यायस्य स्थितत्वात् । अनेकपुरुषकृतमपि सत् व्याकरणं वेदालम्बनत्वं न प्रतिपद्यते ॥

न च व्याकरणत्वाख्या जातिः का चिद्व्यवस्थिता ।
अनित्ये वाक्यसंघाते सा जातिः क्वावतिष्ठताम् ॥

अथ लक्ष्यलक्षणे व्याकरणमिति सत्यपि लक्षणांशकृत्रिमत्वे लक्ष्यांशेन नित्येन नित्यो विधिरुपपत्स्यतइति । तदनुपपन्नम् । कुतः ।

अत्यन्तभिन्नरूपत्वाल्लक्ष्याणां लक्षणादिना ।
नैकमालम्बनं किं चिद्विधेरस्तीत्युदाहृतम् ॥

ननु वेदे एव व्याकरणनित्यत्वं दृश्यते । यथाह तस्मादेषा व्याकृता वागुद्यतइति । नैतदस्ति ।

व्याकृता संप्रदायेन वाणी नित्यैव वैदिकी ।
अनूदितोच्यमानेयं कर्मस्वाध्यायकालयोः ॥

अव्याकृताया हि लौकिक्या वाचः शिष्याचार्यसम्बन्धेन स-

रवर्णमात्राक्रमैरविप्लुतस्वरूपैर्निरूपिताकारैरेव वैदिकी व्याकृतेत्युच्यते । तस्याश्च मन्त्रब्राह्मणात्मिकायाः कर्मसु ज्ञाने प्रयोगे च धर्मो ऽस्त्येव । यदपि चैकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवतीति । तदपि स्वाध्यायप्रशंसाशेषभूतमेव । अहरहः स्वाध्यायमधीतइत्यत्र अप्येकामृचं यजुः साम वेत्येतदवश्यकर्तव्यतानियमार्थमुक्तम् ॥

यो ऽपि मन्त्रं समस्तं हि नाधीयीताप्यशक्तितः ।
तस्य शास्त्रान्वितः शब्द एको ऽपि स्वर्गकामधुक् ॥

शास्त्रान्वित इति च यथा स्वाध्यायमनुगत इत्यर्थः । सम्यक्प्रयुक्त इति चोपनयनोपसदनगुरुशुश्रूषादर्भपवित्रपाणित्वादीतिकर्त्तव्यतोपपन्नत्वाश्रयणेनोक्तम् । यदपि च "तस्माद् ब्राह्मणेन न म्लेच्छितवै" "नापभाषितवा"इति "म्लेच्छो ह वा एष यदपशब्द" इति, तत्संप्रदायागतवैदिकशब्दविनाशप्रतिषेधार्थमेव । वैदिकाच्चापेतत्वाल्लौकिकस्यापशब्दत्वं सम्भवति । सुज्ञानं च । न च लौकिकादप्यपेतो ऽपशब्दो नाम कश्चिदस्ति । गाव्यादीनामपि शब्दानां श्रोत्रग्राह्यत्वेन शब्दशब्दवाच्यत्वशब्दबुद्धिग्राह्यत्वशब्दत्वानुगमदर्शनात् । अथाप्यवश्यं लौकिकादप्यपेतो ऽपशब्द आश्रयणीयः । तथापि "न म्लेच्छभाषां शिक्षेते"त्येवमादिस्मृत्यनुसरणेन हिमवद्विन्ध्यान्तरालकृष्णमृगसंचरणाद्युपलक्षितधर्म्माधिकृतार्यावर्त्तनिवासिव्यतिरिक्तबर्बरादिभाषागतस्य म्लेच्छितत्वसमानाधिकरणापशब्दत्वस्यानार्येण भाषणं प्रतिषिध्यते । युक्तं च तस्याशेषतदीयाचरणवत्परिहरणीयत्वं न त्वार्य्यावर्त्तनिवासिप्रयुक्तेषु गाव्यादिषु म्लेच्छतिधात्वर्थानुगमः कश्चित् । येन तदनाचरितत्वेनापत्रपणवदपशब्दत्वं निरूप्यते ।

यदपि च "हिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेदि"ति तदप्यनृतवादवैदिकशब्दविनाशम्लेच्छभाषाप्रयोगाश्रयमेव वेदितव्यं न तु व्याकरणानुगतव्यतिरिक्तशब्दप्रयोगविषयम् । तथाहि ।

कथं नामेदृशात्कार्य्यात्सर्वएवाहिताग्नयः ।
प्रव्यकेरन्कथं चान्यैर्न निन्द्येरन्नशिष्टवत् ॥

प्रायेण हि शिष्टानां धर्म्माचारप्रणिहितचेतसां कश्चिदेव प्रमादादल्पो ऽनाचारो भवति । गाव्यादिशब्दप्रयोगेषु पुनर्न केषां चिदप्यनाचारबुद्धिः । न च कलञ्जादिभक्षणवच्चिकित्सा गर्हा वा दृश्यते । न चाहिताग्निसहस्रे ऽप्येकस्त्वदभिमतसाधुशब्दैरेव व्यवहरमाणो दृश्यते ॥

कल्पसूत्रस्मृतिग्रन्थमीमांसागृह्यकारिणः ।
शिष्टा दृष्टाः प्रयुञ्जाना अपशब्दाननेकशः ॥

समानमितरच्छ्येनेनेत्यादितकारान्तप्रथमान्तनपुंसकप्रयोगेषु मशकेन तत्र तत्र प्रयुक्तं, "समानमितरं ज्योतिष्टोमेन" "समानमितरं गवा एकाहिकेनेति" सूत्रकारेणाप्यभिहितम् । "अहीने बहिष्पवमानैः सदसि स्तुवीरन्नि"ति कर्त्रभिप्रायक्रियाफलवर्जितेऽपि त्वृत्विक्कर्तृके स्तवने "यजन्ति याजका" इतिवत्परस्मैपदे प्रयोक्तव्ये व्याकरणमनपेक्ष्यात्मनेपदं प्रयुक्तम् । तथाश्वलायनेन "प्रत्यसित्वा प्रायश्चित्तं जुहुयुरि"ति समासे ऽपि ल्यबन्न प्रयुक्तः । आज्येनाक्षिणी आज्येत्यसमासे ऽपि प्रयुक्तः । तथा शिक्षायां नारदेन "प्रत्यूषे ब्रह्म चिन्तयेदि"ति गाव्यादिशब्दतुल्य एव प्रयुक्तः । तथा मनुनापि "ज्ञातारः सन्ति मेत्युक्त्वे"त्यत्र सन्ति मइत्युक्त्वेति वक्तव्ये व्याकरणमनपेक्ष्यैव

संज्ञिता कृता । तथा मीमांसायामपि गव्यस्य च तदादिष्विति गोर्विकारावयवविषयसाधुप्रयोगयोग्यः शब्दो ऽन्यत्रैव गवामयने प्रयुक्तः । तथा द्यावोस्तथेति चेदिति द्यावापृथिव्योरिति वक्तव्ये लक्षणाद्धीनमेव बहु प्रयुक्तम् । तथा गृह्यकारेण मूर्धन्यभिघ्राणमिति वक्तव्ये मूर्धन्यभिजिघ्राणमित्यविषये जिघ्रादेशः प्रयुक्तः । कार्त्स्न्ये ऽपि व्याकरणस्यापि निरुक्ते हीनलक्षणाः प्रयोगो बहवो यद्ब्राह्मणो ब्रवणादिति । संवत्सरं ब्रुवाना इत्येतन्मन्त्रगतमण्डूकविषयब्राह्मणशब्दनिर्वचने क्रियमाणे वचनशीलत्वनिमित्ततां दर्शयता ब्रुवो वचिरिति वच्यादेशमकृत्वैव ब्रवणादिति प्रयुक्तम् ॥

> अतो नास्त्यपशब्दानामितिहासपुराणयोः ।
> तथोभाभ्यो द्विरूपाणां हस्तिशिक्षादिकारिणाम् ॥

युगपदुभाभ्यां दन्ताभ्यां यः प्रहारः स उभाभ्य इति सर्वैः पालकाप्यराजपुत्रादिभिर्व्याकरणानपेक्षमेव प्रयुक्तम् ॥

> वेदेष्वपि प्रयोगास्ते भूयांसो ऽध्येतृसंमताः ।
> सामान्यं छान्दसं वापि येषां नास्त्येव लक्षणम् ॥

न हि ते सुप्तिङुपग्रहादिव्यत्ययेन नापि कतिपयाधिकारदृष्टेन बहुलं छन्दसीत्यनेन सिद्ध्यन्ति । तद्यथा मध्ये आपस्य तिष्ठति । नीचीनवारं वरुणः कबन्धमिति । न ह्यपामित्यस्य नित्यस्त्रीलिङ्गबहुवचनविषयव्यञ्जनान्तप्रातिपदिकपरषष्ठ्यान्वाख्यानादापस्येत्येतद्रूपं लक्षणानुगतं दृश्यते । नापि द्वारशब्दस्य स्थाने लाटभाषातो ऽन्यत्र वारशब्दः सम्भवति । तेनानारभ्य एवायं विषयव्याप्त्यसंभवात् ।

> शब्दानुगमरूपो ऽर्थो यत्र व्याकरणं कृतम् ।

ये ऽपि व्याकरणस्यैव परे पारे प्रतिष्ठिताः ।
सुतरां ते ऽपि गाव्यादितुल्यानेव प्रयुञ्जते ॥
सूत्रवार्त्तिकभाष्येषु दृश्यते चापशब्दनम् ।
अस्माद्दृढाः कथं चाशक्तान्विस्मरेयुः सचेतनाः ॥

सूत्रे तावज्जनिकर्त्तुः प्रकृतिरित्यत्र हि द्वावपशब्दौ जनिशब्देन स्त्रीविशतपी धातुनिर्देशइत्यनेन लक्षणेनान्वितौ धातुरेव निर्दिश्यते । न च जनिकर्तुः प्रकृतिरित्यत्र हि (१) कर्त्तुः प्रकृतेरपादानसंज्ञेष्यते । जायमानस्य पुनरर्थस्य जनिशब्दो वाचकतया नैव लक्षणेनानुगतः । तेनायं दरिद्र इवाशक्तशब्दो जनिमात्रवाचित्वात्तदर्थं प्रत्ययसाधुरेव विज्ञायते । तथा तृजकाभ्यां कर्त्तरि चेति प्रतिषिद्धषष्ठीसमासप्रयोगाद्व्याकरणफलपरित्यागः । एवं तत्प्रयोजकइति प्रतिषिद्ध एव समासः । तथा वार्त्तिके ऽपि दृम्भेर्हलग्रहणस्य जातिवाचकत्वात्सिद्धमिति । तथा आन्यभाव्यं तु कालशब्दव्यवायादिति । अत्र क्रोशेन समासं कल्पयित्वा ततः समाससंज्ञया गुणवचनसंज्ञायां बाधितायां (२) गुणवचनब्राह्मणादिभ्य इति लक्षणेनासंस्पृष्ट एव ष्यञ्प्रयुक्तः । भाष्ये ऽप्यविरविकन्यायेनेति द्वन्द्वगर्भे तत्पुरुषे पूर्वसमासपूर्वपदस्थायाः सुपः सुपो धातुप्रातिपदिकयोरिति प्रत्यक्षोपदिष्टो ऽपि लुङ् कृतः । तथान्यथा कृत्वा चोदितमन्यथा कृत्वा परिहार इति । अन्यथैवं कथमित्यन्वाख्यानसाधुत्वो ऽपि णमुल् न प्रयुक्तः । न चैषां निपातनैः साधुत्वसिद्धिः । कुतः ॥

येषामनुगमो नास्ति ते सिद्ध्येयुर्निपातनैः ।

(१) नचेत्यादिहीत्यन्तस्य स्थाने "न च तस्य" इति पुस्तकान्तरे ।
(२) बाधितायामिति पुस्तकान्तरे नास्ति स पाठो ऽयुक्त इति भाति ।

अन्यथानुगतानां तु प्रयोगं बाधते स्मृतिः ॥

स्मृत्याचारविरोधे हि स्मृतिरेव बलीयसी ।

प्रत्यक्षप्रतिषेधाच्च जनिकर्त्त्राद्यसाधुता ॥

प्रत्यक्षस्मृतिविरोधे तु लक्षणरहितस्यापि प्रयोगादेव शिष्टाचारभूतादवयवानुगमस्मृतिमनुमाय निपातनात्साधुत्वसिद्धिः । न च लक्षणशब्दानां स्वात्मनि क्रियाविरोधादात्मार्थत्वाभावाद्वा लक्षणानुगतिरनादरणीया ॥

प्रदेशान्तरसिद्धेन लक्षणेनानुगम्यते ।

देशान्तरस्थितः शब्दो लक्ष्यभूतो ऽन्यशब्दवत् ॥

तथा च कुत्वं कस्मान्न भवति [illegible]षिरिति । कोयं शब्द इत्यादिषु लक्षणानुगमादरः सर्वत्राश्रितः । यदि च लक्षणशब्देषु लक्षणं न प्रवर्त्तेत, ततः सर्वं व्याकरणमपशब्दैरेव निबद्धं स्यात् । अर्द्धवैशसदर्शनात्तु प्रमाणत्वहानिः । अथोच्येत यज्ञप्रयोगविषय एव साधुभाषणनियमो न सूत्रकारव्याख्यानादिक्रियास्विति । तदसत् । स्वर्गे लोके कामधुगिति फलवत्त्वोपन्यासात् । सारस्वतीविधावाहिताग्निग्रहणार्थवत्त्वाद् । इतरथा ह्याहिताग्निरेव यज्ञेष्वधिक्रियतइति तद्गोचरे ऽपशब्दप्रयोगे निःप्रयोजनमेवाहिताग्निग्रहणं भवेत् । यो ऽपि च ज्योतिष्टोमप्रकरणे वाजसनेयिनां "तस्माद्ब्राह्मणो न म्लेच्छे"दिति प्रतिषेधः कर्म्माङ्गत्वेन ज्ञायते सो ऽपि गुरुसंप्रदायक्रमागतमन्त्रप्रयोगविनाशविषय एव, म्लेच्छभाषाप्रतिषेधार्थो वेति पूर्ववदेव नेतव्यः । यदपि च केषां शब्दानामिति प्रश्नानन्तरं लौकिकानां वैदिकानां चेति विवेककथनं तदपि बहूनां तावत्प्रत्यक्षप्रत्यभिज्ञानाल्लोकवेदयोरभेदे सति स्तोकप्रविभागापेक्षं नैवेदमत्यन्तभेदाश्रय-

सदृशमभिधीयमानं शोभते। न च लौकिकमध्ये गौरश्वः पुरुषो हस्तीत्येवमादयः सर्वे वेदसाधारणा वेदादेव वोद्धृत्य लोकेन प्रयुक्ता उदाहर्त्तुं न्याय्याः। एवं हि भाषायामित्येव स्मर्य्यन्ते, न च क्व चिदपि वेदे दृष्टपूर्वा इत्येवं संभावयितुं शक्यन्ते तएवो-दाहर्त्तव्याः। वैदिकोदाहरणेष्वपि च लोकप्रसिद्धा एव शमादय उदाहृताः। न च वाक्योदाहरणेन लौकिकेभ्यो भिद्यन्ते। वाक्यानां व्याकरणेनानन्वाख्यानात्। अतश्छान्दसान्येव कानि चित् "गृभ्णामि" "दत्वा याथे"त्येवमादीन्युदाहर्त्तुं योग्यानि न "शन्नो देवी"रित्येवमादीनि। छान्दसोदाहरणं च कुतः सिद्धे लोकत इत्यनेन प्रत्यासन्नेनैव व्याहन्येत। यदि च लौ-किकानामन्वाख्यानं क्रियेत, ततः सुतरां गाव्यादय एवान्वाख्ये-यास्तेषां व्यवस्थितं लौकिकत्वं वेदेष्वप्रयोगात्। गवादयः पुन-रध्येतृभिर्वेदादेवोद्धृत्योद्धृत्य प्रयुक्ता इति शक्यं वक्तुम्। तथा च मनुनाप्युक्तम्। वेदशब्देभ्य एवादौ पृथक् संस्था विनिर्म्ममे-इति। दृश्यन्ते चाद्यत्वेऽपि श्रोत्रिया लौकिकेऽप्यर्थे विवक्षिते तद्भाषासमानार्थान्मन्त्रमन्त्रानप्युदाहरन्तः किमङ्ग पुनः पादा-न्पदानि वा। न चाश्रितप्रतिपदपाठानां वैदिकानां लक्षणेन कार्य्यम्। न चैषां गुरुमुखात्साधीयो लक्षणमस्ति दृष्टानुवि-धित्वाच्छन्दस इति स्वयमेव लक्षणस्याम्नानाधीनत्वेन मन्दप्र-योजनत्वमुक्तम्॥

यथैव लोकसिद्धत्वात्कृष्यादेर्लक्षणं वृथा।
तथैव वेदसिद्धानां शब्दानां लक्षणं वृथा॥
रक्षाद्यपि यदत्रोक्तमन्वाख्यानप्रयोजनम्।
न तदप्यन्यतः सिद्धेरुपसिद्धेस्ततोऽपि वा॥

शिष्याचार्यसंबन्धो हि मत्वाच्छेदरत्वाद्धेतुर्व्याकरणमधीन-स्यापि वेदक्रमस्याध्ययनेनैव रक्ष्यमाणत्वात् । तद्विनाशे ऽपि च विशिष्टतरदोषप्रसङ्गात् । उक्तं च ।

निराकाङ्क्षी भवेल्लक्ष्यं येन तन्नाम लक्षणम् ।
शतांशमात्रसिद्धौ तु तेन मन्दं प्रयोजनम् ॥
समाम्नायप्रसिद्धे ऽपि सामवेदे ऽस्ति लक्षणम् ।
तद्युक्तं कृत्स्नसिद्धित्वात्कर्त्तव्यार्थेन चार्थवत् ॥

औक्थिक्ये हि सर्वाणि सामपर्वाणि यथाक्रमं लक्षणेनानुग-तानि ततश्च समस्तसामरूपसिद्धेः निराकाङ्क्षत्वं भवति । आ-म्नाणविधिवशेन च ऋगन्तरसंचारणायां प्रस्तावादिपञ्चधावि-भागेन लक्षणोपयोगः । पदानुगममात्रनिवृत्तव्यापारेण तु व्या-करणेन विशिष्टपदरचनात्मकवाक्यसंघातरूपाणामसंभवत्कर्त-व्यपदवाक्यानां मन्दमिव रक्षितव्यं दृश्यते ॥

लक्षयेद्यः समाम्नायात्पदवाक्यक्रमान् बहून् ।
स लक्षयेत्तरामल्पं प्रकृतिप्रत्ययक्रमम् ॥

किं च ॥

यदि व्याकरणाद्रक्षा मन्त्रैरन्येदवादिनः ।
वैयाकरणगेहेषु किन्न्युस्ते वेदसंशयान् ॥
कस्यावलम्बिनं नित्यं को नाम करकं वहन् ।
तमनादृत्य शौचार्थमन्यतः कर्त्तुमर्हति ॥
लोके यस्य यदर्थत्वमाप्ता वा यत्र ये मताः ।
तेन तेभ्यश्च तद्वस्तु यथावदवगम्यते ॥
आयुर्वेदं चिकित्सास्तु प्रायेण विनियुज्यते ।
व्याधितस्त्वौषधज्ञानं वैद्येभ्यश्चोपलभ्यते ॥

न तु वेदाध्यायिनां कदाचिदप्यभियुक्ततरसत्राध्यायिव्यतिरेकेण वेदवर्णपदवाक्याज्ञानसंदेहविपर्ययव्यावृत्तौ व्याकरणं वैयाकरणा वोपयुज्यन्ते ॥

सत्राध्यायिभिरेवातो वेदः कार्त्स्न्येन रक्ष्यते ।
स्वराक्षरविनष्टो ऽपि द्वेषादन्यैर्न मृष्यते ॥
तस्मात्प्रीतैरुपाध्यायैर्द्विष्टैः कारुणिकादिभिः ।
न विनाशयितुं वेदो लभ्यते तेन रक्ष्यते ॥

तस्माद्वेदरक्षार्थं तावन्नाध्येयं व्याकरणम् ॥

लोके तु सर्वभाषाभिरर्था व्याकरणादृते ।
सिध्यन्ति व्यवहारेण काव्यादिष्वप्यसंशयम् ॥

यदि तु संव्यवहारवाक्येष्वनुपयुज्यमानमपि काव्यनाटकलक्षणप्राकृतव्याकरणद्विपदीरासकादिलक्षणन्यायेन संस्कृतकाव्योपयोगार्थं व्याकरणमाश्रियेत, तथापि काव्यप्रयोगनियमोत्पत्त्यशास्त्रत्वाद्यथेष्टभाषाभिः प्रबन्धकरणसंभवाच्छब्देषु न व्यवस्था स्यादित्युच्यते ॥

काव्यशोभास्वपि त्वेतन्नैवातीवोपयुज्यते ।
वैयाकरणदोषाद्धि कष्टाञ्छब्दान्प्रयुञ्जते ॥
न च लक्षणमस्तीति प्रयोक्तव्यमलौकिकम् ।
लोकसिद्धप्रयोगे तु लक्षणं स्यादनर्थकम् ॥

तेन लोके ऽपि न कदाचिद्व्याकरणेन शब्दरक्षा ॥

ऊहार्थमपि शब्दानां न व्याकरणमर्थवत् ।
ऊहस्याप्यन्यतः सिद्धेरूह्यानूह्यविभागवत् ॥

तथा च ॥

मुख्यदृष्टार्थतास्वार्थसमवेतार्थतादिभिः ।

प्रयुक्ताः प्रकृतौ मन्त्रा गताः कार्य्यातिदेशतः ॥
विकारे ऽथ निषिद्धोहाः कार्यापन्नेषु पञ्चधा ।
अर्थान्तरेष्वपूर्वार्थद्वारेणोहं व्रजन्ति नः ॥
एतावत्यन्यतो यस्य विना व्याकरणान्मतिः ।
जायेत स कथं तत्र पदं योग्यं न लप्स्यते ॥
वेद एव हि सर्वेषामादर्शः सर्वदा स्थितः ।
शब्दानां तत उद्धृत्य प्रयोगः संभविष्यति ॥
अथ वा यो ऽपि गाव्यादिर्लोकेनार्थे प्रयुज्यते ।
सो ऽप्यर्थद्वारतः प्राप्तप्रयोगः केन वार्य्यते ॥

देवतापदानि तावद्विधिशब्दस्य मन्त्रत्वे भावः स्यादित्येतेन न्यायेन सर्वानेव साध्वसाधुत्वसंमतान्पर्यायान्परित्यज्य विधिगतप्रयोगानुसरणेनैव तद्वाक्यशेषवाक्यान्तराधिगतार्थाभिधानरूपेण प्रयुज्यन्ते तेषु ह्यस्यैव कर्माभिधानार्थमेव प्रयोगोत्पत्तिशास्त्रत्वम् । यानि तु द्रव्यतद्गुणादिपदानि सन्निहितार्थपर्य्युपस्थापितसमस्तरूपाणि प्रयोगवचनगोचरमागच्छन्ति, तेष्वसन्निहितार्थपदनिवृत्तिन्यूनसाकाङ्क्षमन्त्रवाक्यनिराकाङ्क्षीकरणाय स्मृते ऽप्यर्थे प्रयुज्यमानेषु प्रयोगोत्पत्त्यशास्त्रत्वात् न व्यवस्था स्यादित्युच्यते । प्रकृतौ हि मन्त्राणां प्रयोगोत्पत्तिः शास्त्रवती विकृतौ पुनरर्थवशाद्भवन्ती न व्याकरणानुगतेष्वेवावतिष्ठते । व्याकरणस्याप्यसंभाव्यमानमूलशास्त्रस्य कृतकाविधायकेष्व्युपसंख्यानाद्यावापसूत्रप्रत्याख्यानानवस्थितप्रमाणत्वस्य यथारुचिविकल्पितप्रकृतिप्रत्ययपरिमाणादिदोषग्रस्तस्य निश्चितकार्य्यमाणपाणिन्यादिमतसापेक्षस्य नैवानादियज्ञगतशब्दप्रयोगनियमोत्पत्तिशास्त्रत्वमवकल्पते ॥

तेनोहे कर्मकर्माङ्गवाक्यार्थज्ञानकौशलैः ।
लोकवेदप्रयोगाच्च सिद्धे व्याकरणेन किम् ॥

अपि च व्याकरणेनोहकरणमशक्यमेवेति मन्वानैष्टीकारैरप्युक्तम् ॥

अङ्गानि जातिनामान्युपमा चेन्द्रियाणि च ।
एतानि नोहं गच्छन्ति अद्रिगौ विषमं हि तत् ॥
आगमो यस्तु निर्दिष्टः प्रयोजनविवक्षया ।
कर्मणां नोच्यते तत्र किं वेदाध्ययनं फलम् ॥

सर्वस्य ह्यनुष्ठातव्यस्यागमो मूलत्वेनाख्यायते न प्रयोजनत्वेन ॥

अथैतेनैव युक्तं स्यादागमोक्तं प्रयोजनम् ।
तदप्यसदनाम्नानान्निष्कारणतयापि च ॥

निष्कारणषडङ्गवेदाध्ययनोपन्यासेन हि सुतरां व्याकरणस्य निष्प्रयोजनत्वमुक्तम् ॥

आगमो वेदवाक्याच्च नान्यः कश्चन विद्यते ।
कथं चादिमता सिद्ध्येद्वेदेनानादिना विधिः ॥

तस्मात्स्वाध्यायोऽध्येतव्य इत्येतत्केवलवेदाध्ययनविधानं शतपथादिषु दृष्टमुपपन्नं च नित्यार्थालम्बनत्वात् । व्याकरणाद्यङ्गाध्ययनविधानं पुनर्न कस्यां चिच्छाखायां श्रूयते । न चादिमदर्थविषयं सदनादित्वाधीनं वेदत्वं प्रमाणत्वं वा लभते ॥

न च वेदाङ्गभावोऽपि कश्चिद्व्याकरणं प्रति ।
तादर्थ्यावयवाभावाद्बुद्धादिवचनेष्विव ॥
श्रुतिलिङ्गादिभिस्तावत्तादर्थ्यं नास्य गम्यते ।
अकृत्रिमस्य वा कश्चित्कृत्रिमोऽवयवः कथम् ॥

तस्मादवयवविषयमेवैतदेवं वर्णयितव्यम् ॥

षडङ्गो वेद इत्युक्तं श्रुतिलिङ्गाद्यपेक्षया ।
तैः षड्भिः प्रविभक्तः सन्स हि कर्म्मविबोधनः ॥

ननु बाह्याङ्गानपक्षत्वे वेदस्वरूपान्तर्गतश्रुत्याद्यपेक्षया विशेषणमनर्थकं प्रसज्यते । तथाहि ॥

संभवव्यभिचाराभ्यां स्याद्विशेषणसंभवः ।
श्रुत्याद्यव्यभिचारात्तु तैरङ्गैः किं विशेष्यते ॥

उच्यते ॥

यस्तानि प्रविभक्तानि हेतुरूपफलैः पृथक् ।
ज्ञात्वाधीते स एवास्य विधेरर्थं करोति नः ॥
अधिगन्तव्य इत्येतदध्येय इति चोच्यते ।
तेन श्रुत्यादिमान्वेदो वेदितव्यो विधेरतः ॥
ध्यायतेरेव वा रूपं ध्येय इत्येतदाश्रितम् ।
श्रुत्याद्यर्पितसर्वार्थः स ध्यातव्यः सदा द्विजैः ॥

ततश्च मीमांसाद्वारा वेदार्थानुचिन्तनविधिरेवायमिति ज्ञायते न व्याकरणाध्ययनविधिः ॥

वेदे व्याकरणादीनि सन्त्येवाभ्यन्तराणि नः ।
भवेद्वा तदभिप्राया षडङ्गाध्ययनस्मृतिः ॥

"तद्दग्नो दधित्व"मित्येवमादीनि हि वैदिकार्थवादान्तर्गतान्येव हि निरुक्तव्याकरणादीनि तैः सह विधायको वेदोऽध्येतव्य इति स्मृत्यर्थो भवेत् ॥

प्रातिशाख्यानि वा यानि स्वाध्यायवदधीयते ।
गृह्यमाणतदर्थत्वादङ्गत्वं तेषु वा स्थितम् ॥

यानि हि वेदव्यापारपराण्येव तेषु लिङ्गेन प्रथमश्रुत्यमध्य-

वसातुम्। ननु कतिपयस्पृष्टवेदवाक्योदाहरणच्छद्ममात्रेषु पाणिनिप्रभृतिप्रणीतेषु प्रातिशाख्यानीव प्रयोगशास्त्राणीति चेत्। न। तेषां पदस्वरूपेष्वेव व्यापारात्। पाणिनीयादिषु हि वेदस्वरूपवर्ज्जितानि पदान्येव संस्कृत्य संस्कृत्योत्सृज्यन्ते। प्रातिशाख्यैः पुनर्वेदसंहिताध्ययनानुगतस्वरसन्धिप्रयतिविवृतिपूर्वाङ्गपराङ्गाद्यनुसरणाद्वेदाङ्गत्वमाविष्कृतम्॥

पूर्वोक्तेनानुसंध्यानमागमस्य च नास्ति ते।
आगमोऽध्ययनप्रायः प्राक्च शब्दानुशासनम्॥

ब्राह्मणेन निष्कारणो धर्म्मः षडङ्गो वेदोऽध्येय इति विहिते ज्ञाने धर्म्मः शास्त्रपूर्वप्रयोगेऽभ्युदय इति च व्याहताभिधानम्। यदपि च शब्दापशब्दज्ञानलाघवं प्रयोजनत्वेनोपदिष्टं तन्निराकृतप्रयोजनान्तरस्य लाघवमात्रमेवावशिष्यतइति सत्यमेवोक्तम्॥

यदि वा गौरवस्यैव लघुत्वमुपचर्य्यते।
विपर्य्ययापदेशेन शूरे कातरशब्दवत॥

लोकप्रसिद्धानामेव शब्दानामत्यन्तविषमधातुगणोणादिसूत्रादिभिरलौकिकसंज्ञापरिभाषानिबद्धप्रक्रियैरनवस्थितस्थापनाक्षेपसिद्धान्तविचारैः क्लेशेनान्तं गत्वा यथावस्थितानुवादमात्रमेव क्रियते, तत्रापि चोदाहरणव्यतिरिक्तेषु कस्य चिदेव लक्षणायोजनसामर्थ्यं दृश्यते। तेनात्यन्तगुरुः स्वन्नयमुपायस्तत्त्वर्थमेव लघुरित्युपचरितः। यदपि केन चिदुक्तम्॥

तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृतइति,
तद्रूपरसगन्धस्पर्शेष्वपि वक्तव्यमासीत्॥

को हि प्रत्यक्षगम्येऽर्थे शास्त्रात्तत्त्वावधारणम्।

शाक्लोकस्वभावश्च ईदृशं वक्तुमर्हति ॥

अत एव श्लोकस्योत्तरार्द्धं वक्तव्यम् ॥

तत्त्वाववोधः शब्दानां नास्ति श्रोत्रेन्द्रियादतइति ॥

न ह्यत्र कश्चिद्विप्रतिपद्यते बधिरेष्वेवमदृष्टत्वात् ॥

असंदेहश्च वेदार्थे यदप्युक्तं प्रयोजनम् ।
तदप्यसद्यतो नास्मात्पदवाक्यार्थनिर्णयौ ॥

यतः पदार्थसंदेहास्तावद्बहवो वृद्धव्यवहारादेव निवर्त्तन्ते। शेषाश्च निगमनिरुक्तकल्पसूत्रतर्काभियुक्तेभ्यः, सर्वेषामर्थप्रतिपादनपरत्वात्। व्याकरणेन पुनरतन्त्रीकृत्यार्थं पदस्वरूपमात्रेऽन्वाख्यायमाने दूरादपेतमेवार्थज्ञानम्। तथाहि ॥

धातुभ्यः कल्पिते नाम्नि क्रियायोगोऽनुगम्यते ।
न चाभिधानवेलायां तत्प्रतीतिर्म्मनागपि ॥

गमेर्डो इत्येतद्व्युत्पत्त्यनुसारी हि गन्तृमात्रमेव गोशब्दवाच्यमध्यवस्येत्। जातिशब्दश्चायं वृद्धव्यवहारेऽवस्थितो यत्र प्रसिद्धस्तत्रान्वाख्यातव्यः। तथाच ॥

कुशलो दारशब्दादेर्यावत्यनुगमस्थितः ।
न तावत्येव शब्दार्थप्रसिद्धिर्व्यवतिष्ठते ॥

अश्वकर्णाजकर्णादौ समासानुगमे सति ।
अपेतावयवार्थोऽर्थो दृश्यते वृत्तशब्दवत् ॥

एवं राजन्यशब्दादेरयतत्वाद्यनादरः ।
व्याक्रियाविपरीतोऽपि स्थितो लोकप्रसिद्धितः ॥

तथा वेदविरुद्धेऽर्थे दृष्टं शब्दानुशासनम् ।
तत्तथा यदि गृह्णीत वेदाङ्गत्वं विरुध्यते ॥

कलेर्ढक् वामदेवाड्ड्यड्ड्याविति कलिवामदेवदृष्टसामाभि-

धानप्रतिपत्तिर्वैयाकरणस्य भवति । वेदे तु "ततो वसु वामं स-
मभवत् तस्माद्वामदेव्यं" "यदकालेयत्तत्कालेयस्य कालेयत्व-
मि"त्याद्यर्थव्युत्पत्तिदर्शनं व्याकरणानुसारिणीं प्रतिपत्तिं बाध-
ते । तथा कल्पसूत्रकारैः कृष्णाग्रं वासः कृष्णवलक्षे अजिने इ-
त्येवमादिषु कृष्णदशादिविवरणाश्रयणाद्व्याकरणशतेनाप्यनव-
गता अर्था वेदार्थवित्परंपराप्राप्ता वेदवाक्यपौर्वापर्यावगतयू-
पादिशब्दार्थाश्च व्याख्यायन्ते । यथा चैवमादिषु व्याकरणान-
पेक्षाणामेव निःसंशयार्थप्रतिपत्तिस्तथा स्थूलपृषत्यादिशब्दा-
र्थेष्वपि व्याख्यातृपरंपरैव निर्णयक्षमेति न व्याकरणमपेक्षित-
व्यम् । किं च ॥

वाक्यार्थेषु च संदेहा जायन्ते ये सहस्रशः ।
नैषां व्याकरणात्कश्चित्पूर्वपक्षो ऽपि गम्यते ॥

यदि वेदार्थासंदेहप्रयोजनं व्याकरणं भवेत्ततः किमर्थवादाः
स्वतन्त्राः कं चिदर्थं प्रतिपादयन्त्यथ विधिशेषभूतास्तथा किमू-
र्गवरोधनमौदुम्बरत्वस्य फलमुत प्रशंसार्थमुक्तमिति तथा हे-
तुविधिर्हेत्वर्थवादमन्त्रप्रयोगदृष्टादृष्टार्थत्वादिषु ग्रहैकत्वविव-
क्षादिषु च संदेहानपनयेत् । अथैवमादिषु मीमांसासिद्धत्वा-
द्व्याकरणे ऽनुपन्यासः ततः कल्पसूत्रकारवचनसिद्धकतिपयस्थू-
लपृषत्याद्यर्थनि यप्रोजनता सुतरां नाश्रयणीया । अपि च ॥

लक्षणोत्थे ऽपि संदेहे व्याख्यानादेव निर्णयः ।
वेदशब्देष्वपि व्याख्या नैव दण्डैर्निवार्यते ॥

व्याख्यानतो विशेषप्रतिपत्तिरित्यनयैव परिभाषया न हि
संदेहादलक्षणमिति वत् न हि संदेहादवेद इत्यपि शक्यं व-
क्तुम् ॥

न चागृहीतशब्दार्थैः कैश्चिद्व्याकरणाश्रयात् ।
व्याख्यातुं शक्यते वेदो यतः स्यात्तेन निश्चयः ॥
यथैवावस्थितो वेदस्तथा व्याख्यापि सर्वदा ।
अतः स्थूलपृषत्यादिव्याख्या व्याकरणादृते ॥
न च लोके प्रयुक्तानां पदानां दृश्यते स्वरः ।
व्यवहाराद्धविर्भूतात्स्वरान्नातो ऽर्थनिश्चयः ॥

वृद्धव्यवहाराधीनं शब्दार्थावधारणं तत्र च समासान्तोदात्तत्वपूर्वपदप्रकृतिस्वरत्वादिप्रयोगविभागाभावान्न तत्कृतार्थविशेषव्यवस्था ॥

यत्र त्वस्ति स्वरज्ञानं वेदवाक्येष्वविश्रुतम् ।
तत्र नैव पदार्थानामवधारणसंभवः ॥
तत्रापि निर्णयो यः स्यादर्थप्रकरणादिभिः ।
तत्र तैरेव सिद्धत्वान्न स्वरस्याभिधा गता ॥
तेनादृष्टार्थ एवायं स्वरपाठो ऽवगम्यते ।
सर्वदा ब्रह्मयज्ञाङ्गद्रव्ययज्ञजपेषु च ॥

व्याकरणानुगमो ऽपि चास्य यदि नाम कथं चित्तदुपयोगार्थ एव भवेत् न तु लौकिकप्रयोगार्थः । अत्यन्ताप्रयुक्तत्वात् ॥

१। न च व्याकरणोक्तेन स्वरेणार्थस्य निर्णयः ।
शब्दानुशासनं ह्येतद् दृष्टं नार्थानुशासनम् ॥

तस्मादसंदेहार्थमपि नाध्येयं व्याकरणम् । न ह्येतदर्थनिश्चयाङ्गभूतस्वरविशेषप्रयोगोत्पत्तिशास्त्रम् । यान्यपि चेमानि भूयः शब्दानुशासनस्य प्रयोजनानीत्येवमुपन्यस्तानि तेषामपि कानि चित्प्रयोजनत्वयोग्यान्येव न संभवन्ति, कानि चित्प्रयोजनाभासानि, कानि चिदप्रमाणकानि । अपि च ॥

अर्थवत्त्वं न चेज्ज्ञातं मुख्यैरर्थस्य प्रयोजनैः ।
तस्यानुषङ्गिकेऽप्याशा कुशकाशावलम्बिनी ॥

नत्र यस्तावत्ते ऽसुरा इत्याद्यसुरपुराकल्पार्थवादप्रक्रमे ऽपशब्दप्रतिषेधः प्रयोजनत्वेनोपन्यस्तः स यथावस्थितस्तथोक्तं प्राक्। दुष्टः शब्द इत्यत्रापि बहुजनप्रसिद्धशिक्षाकारपठितमन्त्रपदोद्धारेण शब्दपदं प्रक्षिपता स्वपक्षानुरागो दर्शितः। दुष्टमन्त्रप्रयोगे त्विष्यतएव यजमानस्य प्रत्यवायः। "यद्दीता जह्याति वाग्घ तद्यजमानं जहाती"ति एवमादिभिः सर्वर्त्विक्प्रयोज्यमन्त्रविनाशेषु यजमानगामिदोषदर्शनात्। तथा चेन्द्रशत्रुर्वर्द्धस्वेतिमन्त्रप्रयोगविनाशदोष एवोदाहृतः। यत्तु निरुक्ते "यदधीतमविज्ञातं निगदेनैव शब्द्यत"इति उक्तं, तदस्माभिः प्रथमसूत्रएवार्थशब्दं व्याचक्षाणैः स्नानस्मृत्यतिक्रमकारणत्वेनोपवर्णितम्। अनतिक्रामन्तो वेदमर्थवन्तं सन्तमनर्थकं कल्पयेम, दृष्टो हि तस्यार्थः कर्म्मावबोधनमिति। ततश्चाव्याख्यातेन वेदेनार्थप्रकाशनाकरणान्न तज्ज्वलति तर्हि चिदिति। सत्यमेवैतत्। न तु व्याकरणस्य तत्रोपयोगः। कर्म्मप्रयोगोत्पत्तिं प्रत्यशास्त्रत्वात्। शब्दशास्त्रमेतदिति चेत्तेऽप्यपूर्वोक्तेन निर्मूलत्वेन व्यवस्था स्यात्। तस्मात्कल्पसूत्रनिरुक्तमीमांसानामेवाधीतमन्त्रब्राह्मणार्थविज्ञानोपयोगक्षमत्वादेतत्प्रयोजनं युक्तं, न तु व्याकरणस्य। यस्तु प्रयुङ्क्तइत्येतदपि मन्त्रब्राह्मणशब्दस्य सम्यक्प्रयोगप्रयोजनमेव विज्ञायते। "यथासमाम्नातादन्यथाकरणाच्च दुष्यति चापशब्दैरि"ति। स्वाध्यायाध्ययनाध्यापनयजनयाजनगतवेदशब्दविनाशे ऽपि यद्दृत्तो यज्ञआर्त्तिमियादिति। एतद्वचनादवगतदोषानुवादो ऽपीत्यवगम्यते। वाग्योगविदिति

च वृद्धलोकव्यवहारदर्शनादिदितपदपदार्थसंबन्धः पुमान् ब्राह्मणवाक्येषु चोद्दिश्यमानोपादीयमानगुणप्रधानादिनिरूपणावधृतवचनव्यक्तिविशेषो मन्त्रेषु चावगतचोदिताचोदितस्वार्थपरार्थप्रकाशनार्हत्वानर्हत्वविदेव च वाग्योगविदित्युच्यते, न वैयाकरणो, वैयाकरणस्यैवंविधप्रयोगोत्पत्त्यशास्त्रत्वात् । यदप्यविद्वांस इति प्रत्यभिवादे नामान्त्यस्वरप्लुतानभिज्ञनिन्दावचनं, तत्प्लुतस्य त्रिमात्रस्य लोकप्रसिद्धत्वाद् मन्वाद्युपदिष्टनामान्त्यप्रयोगसिद्धौ लब्धायां तत्प्रयोगोत्पत्त्यशास्त्रत्वम् । न च तावता मन्वादिभिरनेन चोदाहृतेन श्लोकेन प्रकृतिप्रत्ययादिविभागद्वारेण शब्दापशब्दविवेकज्ञानं (१) तदुपयोगो वाश्रीयते । यच्च प्रयाजाः सविभक्तिकाः कर्त्तव्या इति तद्याज्ञिकोपदेशसिद्धत्वाद् ब्राह्मणे च षडहविभक्तयः "अग्निर्वृत्राणि जङ्घनत्" । "अग्निं वो वृधन्तमम्" अग्निनाग्निः समिध्यतइत्येवमादिविभक्तविभक्तिप्रयोगदर्शनादन्तरेणापि व्याकरणं वैभक्तिकमात्रलोचनेनापि वा सविभक्तिकप्रयाजप्रयोगसिद्धे,रशास्त्रं व्याकरणम् । "यो वा इमां पदशः स्वरशो वाचं विदधाति स आर्त्विजीनो भवती"ति सम्यग्वेदाध्याय्येवमभिधीयते । तथा "चत्वारि वाक्परिमितापदानी"ति यानि तावदोंकारमहाव्याहृत्यादिचतुष्टयवाक्यप्रयोजनानुसरणेन नैरुक्तैरप्यक्षरवर्णसाम्यान्निर्ब्रूयादितिवत्समुपच्छिन्नानि, न तत्र व्याकरणस्य कश्चिदधिकारः । यत्तु नामाख्यातोपसर्गनिपातचतुष्टयानुगतं वैयाकरणमतमाश्रितं तदपि चतुष्टयस्य लोकसिद्धत्वादेव नातीव व्याकरणापेक्षम् । एतद्विषयत्वे च वर्ण्यमाने "तुरीयं वाचो मनुष्या वदन्ती"त्यसंबद्धमेव

(१) शब्दविवेकज्ञानमिति पा० ।

स्यात्। चतुर्णामपि पदजातानां मनुष्यैरुच्यमानत्वात्। तस्मादयमस्य मन्त्रस्यार्थः पौर्वापर्यसंगतो वर्ण्यते। "चत्वारि वाक्परिमितापदानी"ति यैर्वाक्पद्यते गम्यते तानि चत्वारि प्रत्यक्षानुमानोपमानार्थापत्त्याख्यानि प्रमाणान्यभिधीयन्ते। तत्र यानि प्रतीकविधिप्राकृतवैकृतवाक्यसारूप्यदृष्टानुपपद्यमानादिप्रभवैरनुमानोपमानार्थापत्त्याख्यैस्त्रिभिर्गम्यन्ते, तानि तत्सिद्धत्वादेव नेङ्गयन्ति नोच्चारयन्ति। यस्तु भागस्तैरशक्यः प्रतिपादयितुं तं तुरीयं प्रत्यक्षसमधिगम्यमध्येतारो मनुष्या वदन्ति समामनन्तीत्यर्थः। षट्प्रमाणीमध्याच्च प्रमाणद्वयं वाक्पदत्वादपोद्धृतम्। अभावस्तावदभावविषयत्वादेव वाक्पदं न भवति। आगमस्य पुनर्वागात्मकत्वात्पद्यमानवागाश्रितस्य पदत्वाश्रयणमनुपपन्नम्। प्रत्यक्षपरिनिश्चितत्वात्पृथक्केनानिर्देशः। चत्वारि शृङ्गेत्यस्य तु विषुवति होतुराज्ये प्रयुक्तस्य यो ऽर्थः स मन्त्राधिकरणे व्याख्यातः। न चात्र काचिद्व्याकरणापेक्षा। यत्तु चत्वारि पदजातानि शृङ्गाणीत्येवमादिसंख्यासामान्यमात्रेण कर्मविनियोगानपेक्षमर्थान्तरं वर्ण्यते, तद्व्याकरणकृतवाक्यैः शलमात्रम्। तादृशं च वैशेषिकादिष्वपि तदभियुक्तैः शक्यं योजयितुमित्यनादरणीयम्। "उतत्वः पश्यन्नि"त्यपि लोकनिरुक्तकल्पसूत्रमीमांसाश्रयोत्पन्नपदार्थवाक्यार्थज्ञानप्रशंसार्थ एव मन्त्रो विज्ञायमानो न व्याकरणमाद्रियते। एवं "सक्तुमिव तितउने"ति एषो ऽपि अविस्मृतस्वाध्यायाध्ययननिर्मलवेदाक्षरार्थज्ञानप्रशंसार्थं पूर्ववदेव वर्णनीयः। "आहिताग्निरपशब्दं प्रयुज्ये"ति, व्याख्यातमेवैतत्। यदपि नामकरणे घोषवदाद्यन्तरं

तस्य (१) द्विचतुरादिवर्णकृदन्तपरिग्रहतद्धितवर्ज्जनवचनं, तत्कृत्तद्धितसंज्ञयोर्व्याकरणे ऽपि पूर्वप्रसिद्धयोरेवोपादानाद्वर्णपरिमाणस्य च प्रत्यक्षपूर्वकस्मृत्यधीनत्वाद् घोषवत्त्वादीनां च शिक्षाप्रातिशाख्येष्वनुक्रमणात्सर्वैश्च श्रोत्रियैरक्लेशेन नामकरणान्न व्याकरणं नाम प्रयोगोत्पत्तिशास्त्रत्वेनापेक्षणीयम्। "सुदेवो ऽसि वरुण" इत्यत्र यद्यपि तावत्सप्तविभक्तय एव सप्तसिन्धव इति व्याख्यायन्ते, तथापि तासां विभक्तिसंज्ञामात्रं व्याकरणेन क्रियते प्रसिद्धमेव वा गृह्यते । यानि तु प्रयोगरूपाणि तानि लोके वेदे च विभागशः प्रत्यक्षाण्येवेति न व्याकरणापेक्षयैवमभिधीयते। यदा पुनः सप्तसिन्धवो ऽनद्य एव यज्ञर्त्विग्यजमानप्रशंसापत्ते वा सप्त होत्रागता वाचः सप्त सामस्वरगतास्तद्भक्तिगता वा परिगृह्यन्ते, तदैतिहासिकयाज्ञिकगोचरापन्नत्वाद् अविषय एव व्याकरणस्य ॥

संस्कृतानां च शब्दानां साधुत्वे परिकल्पिते ।
वक्तव्यः कस्य संस्कारः कथं वा क्रियते पुनः ॥

व्याकरणेन शब्देषु संस्क्रियमाणेषु न ज्ञायते किं वस्तु संस्क्रियते को वा संस्कार उत्पत्तिप्राप्तिविकारापूर्वसाधनसामर्थ्याधानानां क्रियतइति ॥

न तावदस्ति शब्दत्ववर्णत्वव्यक्तिसंस्क्रिया ।
सर्वत्रातिप्रसङ्गेन न व्यवस्था हि सिध्यति ॥
शब्दत्वे संस्कृते स्याद्धि ध्वनीनामपि साधुता ।
वर्णत्वे ऽप्येकवर्णानां गव्यादीनां च तुल्यता ॥

एतेन वर्णव्यक्तिसंस्कारः प्रत्युक्तः ॥

(१) तस्यइति पा० ।

गवादिषु गकारादिर्यः सकृत्संस्कृतः क्व चित् ।
गाव्यादिषु स एवेति साधुरेव प्रसज्यते ॥
एवं प्रत्येकसंस्कारे न कस्य चिदसाधुता ।
समुदायस्तु नैवास्ति तेषामयुगपच्छ्रुतेः ॥

येषां तावद्वर्णव्यक्तयः प्रध्वंसिन्य एव तेषां विनष्टानुत्पन्नानां संस्कारायोग्यत्वमेव ॥

वर्त्तमानापि संस्कारक्षणं नैवात्रतिष्ठते ।
तावदेव विनश्येत्सा यावत्संस्कर्त्तुमिष्यते ॥
न च तां संस्कृतां भयः कश्चन द्रक्ष्यति क्व चित् ।
सक्तूनामिव संस्कारो होमेनैष प्रसज्यते ॥

यथैव होमसंस्कृतानां भस्मसाद्भावात्सक्तूनां पुनर्दर्शनविनियोगासंभवाद्वितीयाप्रतिपादितसंस्कार्य्यत्वपरिग्रहे सक्तवो होमस्तद्भावनाविधिरिति सर्वेषामनर्थकत्वं प्रसज्यतइति संस्कारानाश्रयणं, तथैव क्षणिकशब्दव्यक्तिसंस्कारपक्षे सर्वानर्थकत्वप्रसङ्गः । ततश्च योऽप्ययमनियमोऽभिहितो यद्येवं नित्यः शब्दोऽथापि कार्य उभयथापि लक्षणं प्रवर्त्त्यमिति स एवमेव न्यायनिरूपणभयमात्राविष्करणार्थः, शिष्यव्यामोहनार्थो वेति न युक्तः परिग्रहीतुम् ॥

अदूरविप्रकृष्टे च वस्तुन्यनियमो भवेत् ।
शीतोष्णानियमं ब्रूयात्को ऽनु वह्नेः सचेतनः ॥
उत्पादस्यैव संस्कारः कार्य्यपक्षे भवेदयम् ।
ततश्च सुतरां प्राप्ता प्रयोगोत्पत्त्यशास्त्रता ॥

व्याकरणप्रक्रियानुगृहीतेन वैयाकरणेनोत्पाद्यमानेषु साधुशब्देषु नित्यवेदमूलत्ववेदाङ्गत्वनिराकरणं स्वयमेवापादितम् ॥

अथ व्याकरणोत्पन्नैः शब्दैर्वेदो ऽपि निर्म्मितः ।
ततो व्याकरणस्येव वेदस्याप्यप्रमाणता ॥
शब्दस्योत्पाद्यमानत्वे क्षणान्न स्यात्क्षणान्तरे ।
तादृशस्य च संस्कारो न शक्यो नोपयुज्यते ॥
तस्मादनियमं मुक्ता नित्यः संस्क्रियते यदि ।
विक्रियाख्यो ऽपि संस्कारस्ततो नैवास्य संभवेत् ॥
विना व्याकरणाद्दाप्तिः सिद्धा श्रोत्रसमाश्रया ।
अदृष्टार्थस्तु संस्कारो विध्यभावान्न गम्यते ॥
दृष्टार्थेषु च शब्देषु नादृष्टेन प्रयोजनम् ।
न ह्यीष्टं भोजनार्थानां व्रीहीणां प्रोक्षणात्फलम् ॥
कर्म्मप्रकरणाम्नाता न च व्याकरणक्रिया ।
येनापूर्वप्रयुक्तानां शब्दानां संस्कृतिर्भवेत् ॥
छन्त्यादिविधिवन्नापि संभवी व्याक्रियाविधिः ।
पौरुषेयं कथं वस्तु विदध्याच्छाश्वतो विधिः ॥
तेनानारभ्य वादे ऽपि विधिर्नैवास्ति तादृशः ।
अनारभ्य विधित्वे च न कर्म्मार्थत्वसंभवः ॥
ऐकान्तिकं हि संस्कार्य्यं यत्क्रतौ स्यात्स्रुवादिवत् ।
तद्द्वारेण क्रतुप्राप्तिर्न्न लोकव्यभिचारिणः ॥
लोकवेदगतत्वाच्च शब्दानां व्यभिचारिता ।
अतो न व्याक्रिया गच्छेत्तदुपस्थापितं क्रतुम् ॥
आकाशे ऽवस्थितः शब्दः संस्कर्त्तुं शक्यते कथम् ।
नित्यत्वान्मूर्त्त्यभावाच्च व्योमाश्रितविभुत्ववत् ॥
वर्णसंस्कारमात्रं च यदि व्याकरणाद् भवेत् ।
प्रत्याहारेण तत्सिद्धेर्नोत्तरेण प्रयोजनम् ॥

समुदायस्त्ववस्तुत्वान्नैव संस्कारमर्हति ।
प्रत्येकं च भवद्यद्वदग्निधर्म्मः प्रतीष्टकम् ॥
न च स्थलवदारम्भो वर्णैः शब्दस्य कस्य चित् ।
येन तत्संस्कृतिः सिद्धेत्स हि पूर्वं निराकृतः ॥
स्फोटगोशब्दताङ्गत्वप्रभृतौ पदकल्पना ।
गकारादिपदव्याख्याद्वारेणैव निराकृता ॥
सर्ववर्णसमूहो ऽपि न संस्कार्य्यः कथं चन ।
न तस्यार्थप्रयुक्तत्वमस्ति ह्यनभिधानतः ॥
अथ त्रिचतुरा वर्णाः संस्क्रियन्ते पदे पदे ।
संख्यामात्रस्य साधुत्वं तच्च स्यादितरेष्वपि ॥
संस्क्रियेतानुपूर्वी चेत् शब्दधर्म्मो न सेष्यते ।
ग्रहणोच्चारणस्थत्वाद्गाव्यादिषु च संभवात् ॥
ग्रहणोच्चारणे एव संस्कार्य्ये यदि मन्यसे ।
कर्म्मणः कर्म्मसाध्यत्वमुपरिष्टान्निषेत्स्यते ॥
वक्ष्यति हि ॥
कर्तृगुणे तु कर्म्मासमवायाद्वाक्यभेदः स्यादिति ॥
ताल्वादिश्रोत्रसंस्कारो न च व्याकरणाद्भवेत् ।
वैद्योपदिष्टसंस्कारसंस्कार्य्यत्वावधारणात् ॥
मनो वा पुरुषो वाथ संस्कारास्पदमिष्यते ।
शब्दानुशासनं शास्त्रमिति व्यर्थं तदा भवेत् ॥
शिष्यानुशासनत्वं हि शास्त्राणामुपपद्यते ।
शब्दस्याननुशास्यत्वाद्व्यर्थं तदनुशासनम् ॥
स्फोटशब्दे च संस्कारः सुतरां नोपपद्यते ।
असत्त्वौ तत्र हि स्यातां प्रकृतिप्रत्ययावपि ॥

वाक्यस्फोटश्च यैरिष्टः सर्वावयववर्जितः ।
नामाख्याता हि संस्कार्यं तेषां शशविषाणवत् ॥
अपोद्धारेण संस्कारो यद्यत्राभ्युपगम्यते ।
शृङ्गं शशादपोद्धृत्य किन्न संस्क्रियते मनाक् ॥
अन्यावयवसारूप्यादपोद्धारो यदीष्यते ।
खरशृङ्गेण सारूप्याच्छशशृङ्गस्य किं न सः ॥
गवयादिषु नाङ्गानां सादृश्यं यन्निदर्शितम् ।
सत्यावयवसामान्यात्तदिहापीष्यते तथा ॥
वाक्याधिकरणे चैतद्विस्तरेण निराकृतम् ।
तेनापोद्धारसंस्कारकल्पनापि न युज्यते ॥
अन्वाचक्षीत शास्त्रं चेच्छब्दानसदपोद्धृतान् ।
एतेनैवाप्रमाणत्वमस्य माहेन्द्रजालवत् ॥
अशिष्यत्वादशास्त्रत्वमेवं तावत्पदं प्रति ।
वाक्यानुशासनं नैव कृतं व्याकरणेन च ॥
अर्थेन च प्रयुक्तानां शब्दानां संस्क्रियोदिता ।
वाक्यमेवंविधं चेष्टं न पदान्यर्थवर्जनात् ॥
ब्राह्मणार्थो यथा नास्ति कश्चिद्ब्राह्मणकम्बले ।
देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः ॥

इति बहुप्रपञ्चमुक्त्वा केवलस्य चाप्रयोगादर्थप्रयुक्तत्वं निराकृत्य वाक्यान्वाख्यानार्थमेव व्याकरणमपि व्याख्यानं युक्तमासीत्तदनाश्रयणात्तु सूत्रवार्त्तिकभाष्यकारवदेव पूर्वापरविरुद्धमभिदधानैष्टीकाकारैरपि सुतरां व्याकरणस्याप्रत्ययितपुरुषत्वं दर्शितम् ॥

प्रत्येको भिगावभूमिष्ठादिवक्षाभूतवर्जितात् ।

निष्फलाच्च व्यवस्थानं शब्दानां नानुशासनात् ॥

ततश्च ॥

स्वाध्यायाध्ययनं मुक्त्वा तत्प्रयोगस्य कर्म्मसु।
शेषशब्दप्रयोगेषु न व्यवस्थोपयुज्यते ॥

तेन सर्वैर्भाषितव्यं सर्वे साधव इत्यत्र प्रमाणप्रयोगाः ॥

गावीगोण्यादयः शब्दाः सर्वे गोत्वस्य वाचकाः।
वृद्धैस्तत्र प्रयुक्तत्वाद्गौरस्त्रेत्येवमादिवत् ॥
एवं साधुत्वमेतेषां सर्वेषामर्थसाधनात्।
श्रोत्रत्वान्नापशब्दत्वं पूर्वदृष्टान्तदर्शनात् ॥
अनादित्वं च सर्वेषामवध्यनवधारणात्।
वक्तृवक्तुः पुरो वृत्तेः शक्यं वक्तुं गवादिवत् ॥
साधुभिर्भाषमाणानां नादृष्टफलसंभवः।
दृष्टार्थत्वाद्यथा धूमादग्निं देशे ऽवगच्छताम् ॥
अशास्त्रविहितत्वाच्च वृद्धशब्दाभिधानवत्।
शास्त्रं नावेदरूपत्वात्प्राकृतव्याक्रियादिवत् ॥
वेदमूलतयाप्यस्य प्रमाणत्वं न कल्पते।
अवेदविषयार्थत्वान्नाटकादिनिबन्धवत् ॥
शास्त्राङ्गमपि नैवैतदतादर्थ्यात्कथादिवत्।
अतादर्थ्यं विनाप्यस्मादेदेनार्थावबोधनात् ॥
न च शब्दप्रयोगाङ्गं सिद्धे तस्मिन्प्रवर्त्तनात्।
यदोद्दशमनङ्गं तद्दृष्टं नेत्रानुमानवत् ॥

यथा हि चक्षुरादिग्रहणानपेक्षरूपादिविज्ञानसिद्धौ तज्ज-नितार्थापत्तिप्रभवं चक्षुराद्यनुमानमुपजातमपि न पूर्वज्ञान-स्याङ्गमेवं लोकवेदसिद्धशब्दप्रयोगोत्तरकालप्रणीततया व्याक-

रणमप्यनङ्गम् ॥

तस्मात्पर्यायशब्दत्वाद्गाव्यादेस्तरुवृक्षवत् ।
आचारेण प्रयोज्यत्वं न शास्त्रैर्निवारितम् ॥

एवं प्राप्ते ऽभिधीयते ॥

## शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ॥ २२ ॥

अनैकान्तिकता तावदर्थापत्तेरिहोच्यते ।
अन्यथाप्युपपन्नत्वात्प्रयोगार्थावबोधयोः ॥
वाचकत्वादृते यस्तु न कथं चित्प्रयुज्यते ।
प्रयोगप्रत्ययायत्ता तत्र वाचकता ध्रुवम् ॥
संशयप्रतिबद्धे च पूर्वपक्षार्थनिर्णये ।
इष्टार्थनिश्चयः शक्यः सुखं सिद्धान्तहेतुना ॥

दृढविपर्ययज्ञानानन्तरं सहसैव च सम्यग् ज्ञानोत्पादातिभाराद्द्वारैकदेशावतारणार्थं संशयोत्पादनमात्रमेव तावद्युक्तम् । अथ वा ॥

संसिद्धव्यवहारत्वादनादित्वं यदाश्रितम् ।
अपराधप्रसङ्गेन तत्रैषा संशयक्रिया ॥

यदि ह्येकान्तेन यादृशः परमुखाच्छब्दः श्रूयते तादृगेव सर्वेण सर्वदोच्चार्येत ततो वृद्धव्यवहारपरंपरायां सत्यां गवादिभिरिव न गाव्यादिभिः कश्चिदपि कालः शून्य आसीदित्यध्यवसायादनादित्वमङ्गीक्रियेत । अपराधजस्य शब्दस्य संभवात्तु तदाशङ्कायां सत्यां नैकान्ततः सर्वेषामनादित्वम् । प्रयत्ननिष्पत्तेरिति पूर्वोक्तन्यायावधारितप्रयत्नाभिव्यक्तिरेव हेतुत्वेनोप-

दिश्यते । अपर आह, अप्रयत्ननिष्पत्तेरपराधस्य भागितेति । यो ह्यस्खलितप्रयत्नः शब्दमभिव्यनक्ति तस्य परंपरागतशब्दोच्चारणमात्रात्सर्वे समानविधाना भवेयुः । यदा त्वप्रयत्ननिष्पत्तिरपि शब्दे संभाव्यते तदा तत्रापराधजरूपान्तरापत्तिप्रसङ्गान्न नियोगतः सर्वशब्दानां समानविधानत्वम् (१) । अथ वा शब्दविषयस्य प्रयत्नस्यैव या निष्पत्तिः तस्यामपराधः सुनिपुणानामप्यविकलकरणानां दृश्यते किमुतानिपुणविगुणकरणानाम् ॥

यस्य प्रयत्ननिष्पत्तावपराधः कृतास्पदः ।
शब्दे स तदभिव्यङ्ग्ये प्रसजन्केन वार्यते ॥
अतस्त्वानपराधेन व्यज्यमानेषु साधुता ।
सापराधेष्वसाधुत्वं व्यवस्थैवं च तत्कृता ॥

लोके ऽपि च ॥

अविनष्टे विनष्टे च दृश्येते साध्वसाधुते ।
तथा सति च तद्द्वारा सिद्धिः शब्दापशब्दयोः ॥
यद्वा सत्यत्वमेवेदं साधुत्वमभिधीयते ।
असत्यत्वमसाधुत्वं धर्म्माधर्म्मोपयोगवत् ॥
धर्म्माधर्मव्यवस्था हि सत्यानृतनिबन्धना ।
विहितप्रतिषिद्धत्वात्तयोस्तेष्टा सशास्त्रता ॥
अर्थसत्यं यथा वाच्यं शब्दसत्यं तथैव हि ।
शब्दानृतं च त्यातव्यमर्थानृतवदेव नः ॥
एवं सति व्यवस्थाने भक्ष्याभक्ष्यविभागवत् ।
प्रयोगोत्पत्त्यशास्त्रत्वादिति चेतोऽरसिद्धता ॥

(१) विषयत्वमिति पा० ॥

अथ वा यदुक्तम् ॥

साधोर्नित्यप्रसक्तत्वादसाधोरप्रसङ्गतः ।
न धर्म्मनियमो ऽस्तीति तत्रेदमभिधीयते ॥

अपराधस्य भागित्वादुभयं सावकाशकम् ।
साधोरनियता प्राप्तिरसाधोश्च प्रयोज्यता ॥

यदि हि साधुः प्रयुज्यमानो न कश्चित्कदा चिदपि विनश्येत्, ततस्तस्य नित्यप्राप्तत्वान्निवर्त्त्यापशब्दाप्राप्तेश्च नियमशास्त्रमनर्थकं भवेत् । यदा त्वपराधभागित्वे सति द्वयोरप्यनियता प्राप्तिस्तदा साधुनियमकारिणः शास्त्रस्य न विषयव्याघातः । एक एवायं शब्दः पुरुषाशक्तिप्रमादकारणादिभेदात्तां तां वर्ण्यूनातिरेकक्रमान्यत्वाद्यवस्थामनुपतंस्तेन तेनापभ्रंशरूपेण गृह्यमाणस्तमेवार्थं प्रतिपादयतीति न पर्य्यायकल्पनया वाचकशब्दान्तरत्वैकान्तसिद्धिः । किं च ।

देवदत्तादिनामानि निःसंदिग्धानि यानि च ।
बालैस्तत्तादिरूपेण नाश्यन्ते तैश्च संशयः ॥

तत्तादिशब्दादपि हि बालप्रयुक्तात्तदनुकारिकठोरबुद्धिप्रयुक्ताद्वा देवदत्ताद्यर्थप्रत्ययमुपलभमानः कथमिव प्रयोगप्रत्ययदर्शकाभ्यामेव वाचकत्वमध्यवस्येत् ॥

अपभ्रंशाश्च ये केचिद्रूढा गाव्यादयो जने ।
तेपि गाव्यादिरूपेण नाश्यन्ते व्यभिचारिताः ॥

कतिषु चिदेव गाव्यादिषु चिरापभ्रष्टत्वाद्रूढ्याशङ्कया साधुत्वभ्रान्तिर्भवेत् । ये तु संप्रत्येव जडप्रायज्ञानकरणैरभिनवगाव्यादिरूपेण विनाश्यशब्दाः प्रयुज्यमानाः प्रकृत्यनुसरणद्वारेणार्थं प्रत्याययन्त उपलभ्यन्ते तेष्वपि प्रयोगप्रत्ययदर्शनमस्ती-

त्यनैकान्तिकता ॥

ततश्च त्वत्प्रयुक्तो ऽयं हेतुरप्यपराधभाक् ।
अनैकान्तिकतादोषान्न ह्यसा साधनक्षमः ॥
अन्यथोच्चार्य्यमाणश्च शब्दो ऽपभ्रश्यते यथा ।
तथा हेतुरनैकान्ताद्धेत्वाभासत्वमृच्छति ॥
तस्माद्दृष्टप्रयोगे ऽपि पुनरस्ति विचारणा ।
वाचको ऽयं न वेत्येवं सति वा ऽन्येन निर्णयः ॥

संशयापादनात्परपक्षे जिते ऽपि स्वपक्षसिद्धिर्दुर्लभैवेत्येवमर्थमुत्तरसूत्रम् ॥

# अन्यायश्चानेकशब्दत्वमिति ॥ २३ ॥

कथं पुनरिदमन्याय्यम् । तदुच्यते ॥

वाच्यवाचकसामर्थ्यनियमो योभिधागतः ।
संबन्धस्तदनेकत्वे स्वरूपात्सो ऽपि हीयते ॥

एकात्मकयोरेव हि वाच्यवाचकयोरन्योन्यापेक्षात्परस्परनियमः संभवत्यन्यतरस्यापि त्वनेकत्वे सति व्यभिचारान्नियमहानिः । किं च ॥

सामर्थ्यं सर्वभावानामर्थापत्त्यावगम्यते ।
एकसामर्थ्यसिद्धेर्थे नानेकं तच्च लभ्यते ॥

अत्यन्तादृष्टा हि वाच्यप्रत्ययान्यथानुपपत्तिमात्रप्रमाणिका वाचकशक्तिरेकत्रैव कल्पिता तदनुसार्य्यपभ्रंशेष्वपि चेदनुगम्यते, को नाम तन्निरपेक्षवाचकशक्त्यन्तरंकल्पनां लभेत (१) ॥

नाम च व्यवहारार्थमर्थस्याभ्युपगम्यते ।

(१) भजेतेति पा० ॥

तेनैकेनैव सिद्धे ऽर्थे द्वितीयादि च निष्फलम् ॥

किं च ॥

विकल्पस्याष्टदोषत्वं पुरस्तादेव वर्णितम् ।
स चेद्यानेकशब्दत्वे निश्चयेन प्रसज्यते ॥
नामान्तरे श्रुते चार्थस्तद्भिन्नो ऽन्यः प्रतीयते ।
संज्ञा चोत्पत्तिसंयोगादित्यत्रैतद्वदिष्यते ॥
या तु हस्तः करः पाणिरित्यत्रानेकशब्दता ।
अनन्यगतिकत्वेन सा दृढस्मरणेन च ॥
एकशक्त्यनुसारेण यावत्त्वस्ति गतिः क्वचित् ।
उपमानानुमानाभ्यां तावत्सैवानुगम्यते ॥
तस्मात्स्वरूपसंबन्धशब्दार्थत्वनिरूपणे ।
एकैकनियमादेव गतिः स्यान्नान्यगोचरा ॥

यथा च प्रकृतिसारूप्यद्वारेणापभ्रंशाः प्राकृतीमेव शक्तिमाविर्भावयन्तो ऽर्थप्रतिपत्तावुपयोगं गच्छन्ति, तथा तदशक्तिस्वानुरूपत्वादित्यत्र वर्णयिष्यते ।

तेनानेकप्रयोगे ऽपि कश्चिदेवार्थसंगतः ।
तदुपस्थापने नान्ये बोधकास्तदशक्तिजाः ॥

तुल्यप्रयोगप्रतिपत्तीनामन्यतरावधारणमशक्यमिति चेदत आह ।

# तत्र तत्त्वमभियोगविशेषात्स्यादिति ॥ २४ ॥

कः पुनरभियोगः को वा तद्विशेषः कथं वा तेन वाचकत्वनिरूपणमिति । तदुच्यते ॥

लक्षणश्रवणाभ्यासादभियोगः प्रवर्त्तते ।
तेन लक्ष्यान्तरज्ञानं तद्विशेषो ऽभिधीयते ॥

प्रतिपदपाठो ह्यानन्त्यादत्यन्ताशक्यस्तदभावे च लक्षणानुसरणमेवैकमशेषलक्ष्यनिरूपणक्षमत्वेनावधार्य्यते ।

तस्मान्न लोकवेदाभ्यां कश्चिद्व्याकरणादृते ।
वाचकाननपभ्रष्टान्यथावज्ज्ञातुमर्हति ॥
तत्सामस्त्यापरिज्ञाने पारिशेष्यानिरूपणात् ।
अर्थापत्त्यापशब्दानां निश्चयो नोपपद्यते ॥
लक्षणानुगमाद्यांस्तु बहिरेव प्रयुञ्जते ।
नियतप्रतिपन्नत्वात्तेष्वर्थापत्तिसंभवः ॥

तेनोभयज्ञानस्यापि व्याकरणमेवोपाय इति तद्गताभियोगविशेषाश्रयणम् । यत्तु प्रयोगोत्पत्तिशास्त्रत्वादिति लक्षणे तन्मूलासंभवादितरेतराश्रयत्वमुक्तं, तल्लोकव्यवहारप्रसिद्धप्रतिपादकत्वमात्रेणानिर्णीतपारमार्थिकवाचकत्वैरपि व्याकरणावयवभूतैः पदैः केषां चित्साधुत्वमन्वाख्याय पुनस्तैरप्यन्वाख्यापकशब्दसाधुत्वनिर्णयात्परिहरिष्यते ॥

यदि वाचकतैवादौ न स्याद्व्याकरणादृते ।
न विज्ञायेत वा तत्र भवेदन्योन्यसंश्रयम् ॥
निर्ज्ञाते वाचकत्वे ऽपि तदपभ्रंशसंकरात् ।
विवेकप्रतिपत्त्यर्थमिष्टा च व्याक्रिया स्मृतिः ॥

तेन संकीर्णासंकीर्णवाचकज्ञानोपायत्वाल्लोकव्याकरणयोर्भिन्नविषयत्वेनाऽपुनरुक्तता, वेदे साधुशब्दमात्रदर्शनादनर्थकं व्याकरणमिति चेत् ॥

## नाकृत्स्नविषयत्वात् ॥ २५ ॥

के चिद्व्यवस्थिता एव साधवो लोकवेदयोः ।
सर्वशाखागतान्विद्यात्को वा साधारणानपि ॥

यथैव लौकिकप्रतिपदपाठस्याशक्यत्वमेवं वेदेऽपि सर्वशाखागतान्सकृदपि श्रोतुमशक्तिः किमुताध्येतुम् ॥

प्रकृतिप्रत्ययानन्त्याद्यावन्तः पदराशयः ।
लक्षणेनानुगम्यन्ते कस्तानध्येतुमर्हति ॥

एतेन पुरुषार्थकत्वर्थादृष्टसाधुशब्दप्रयोगज्ञानसाध्यसाधनभावविधिवाक्यगतपदव्याक्रिया तस्याश्च पूर्वप्रसिद्धतन्मूलत्वकल्पनागतेतरेतराश्रयत्वप्रसङ्गः प्रत्युक्तः । यदि चैकान्तेन "तस्मान्न ब्राह्मणेन म्लेच्छितवै," "एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवति" । "तस्मादेषा व्याकृता वागुद्यत"इति चैवमादिक्रतुपुरुषगतनियमविधिदर्शनोत्तरकालमेव व्याकरणेन प्रवर्त्तितव्यमिति पौर्वापर्यव्यवस्था भवेत्, तत एवं पर्य्यनुयोगः प्रसज्येतापि । व्याकृतत्वाश्रयो वेदविधिः, वेदविध्याश्रयं च व्याकरणं कथमवकल्पिष्यतइति । यदा तु किं चिद्ग्रन्थोपनिबद्धप्रकृतिप्रत्ययादिविभागद्वारप्रक्रियात्मकव्याकरणस्मृतिवर्जितकालाभावादन्वाख्यानान्वाख्येयान्वाख्यातविधिप्रयोगानन्वाख्यातप्रतिषेधवर्ज्जनषट्कस्याप्यवगम्यमानवेदविधिमूलत्वादनादित्वे सति सर्वेषां वेदवेदीयूपाहवनीयाध्वर्युगोदोहनादिस्वरूपतत्कार्यतत्साधनविधीनामिव सर्वदानवगतपूर्वापरविभागसंबन्धेऽत्यन्तादृष्टार्थत्वमेव केवलं शास्त्रप्रत्ययाधीनं तदा सर्वकालव्याक्रियमाणविद्यमानशब्दनियमविधेर्न्न किं चिदनुपपन्नम् । यत्तु वाचकत्वावाचकत्वव्यतिरिक्तसाध्वसाधुताभावाद्वाचकावाचकत्वयोश्च लौकिक-

प्रयोगप्रतिपत्तितद्विपर्ययमात्रशरणत्वाद्गाव्यादिशब्दानामवाचकत्वप्रतिज्ञाने लोकविरोधान्न भेर्य्यादिशब्दमातृकाक्षरपाठप्रसिद्धन्यूनातिरिक्तविपर्य्यस्तवर्णपदव्यतिरिक्तप्रसिद्धमध्ये कश्चिदपशब्दो नामास्तीति। तत्राभिधीयते।

संमुग्धवाचके लोके लक्षणाद्वाचकः स्फुटः।
गम्यते स्मरणं चोक्तमाचाराद्बलवत्तरम्॥

लोकव्याकरणाभ्यां हि मिश्राभ्यामविप्लुतवाचकसिद्धिरिति तावदेव लोकव्यवहाराद्वाचकत्वज्ञानं जायते। यावद्व्याकरणानुगतत्वं नाभ्युपगम्यते।

यदा तु तयोर्म्मार्गभेदेन प्रतिपत्तिस्तदा तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यादित्युपन्यस्य शास्त्रस्था वा तन्निमित्तत्वादित्यनेनैवोत्तरेण व्याकरणाख्यशास्त्रगतप्रतिपत्तिबलीयस्त्वं, तदभियुक्तपुरुषबलीयस्त्वं वा पूर्वमेव स्थापितम्।

तर्क्केणावाचकत्वं च वदन् लोकेन बाध्यते।
स्मर्यमाणविरोधस्तु ब्राह्मणाब्राह्मणादिवत्॥

यथैव तुल्यशिरःपाण्याद्याकारेष्वपि संकीर्णलोकदृष्टिग्राह्येषु ब्राह्मणादिषु मातापितृसम्बन्धस्मरणादेव वर्णविवेकावधारणं भवति, तथा साधुशब्दावधारणमपीति लोकविरोधाभावः॥

यथा च तुल्यपाण्यादिरूपत्वाद्वर्णसंकरम्।
वदतः स्मृतिबाधः स्यात्तथा वाचकसंकरम्॥
आदितस्य स्मृतेः सिद्धः प्रत्यक्षेणापि गम्यते।
साध्वसाधुविभागोयं कुशलैर्वर्णभेदवत्॥

यो नाम स्मृतिप्रतिपादितो ऽर्थः कर्म्मफलसम्बन्धवद्-

नियतकालत्वान्न ज्ञायते कदा भविष्यतीति सोऽत्यन्तं प्रत्यक्षा-
द्यविषयत्वात्केवलशास्त्रमूलत्वेन स्थाप्यते । यस्य त्वादौ स्मरण-
जनितविवेके कृते तदनन्तरमेव प्रत्यक्षमपि विचाराभ्यासजनि-
तसंस्कारस्य रागाध्यायजनितषड्जादिविभागविषयमिव सा-
ध्वसाधुशब्दरूपगोचरमुपजायते ॥

तस्मै तर्केण यो नाम साधयेच्छब्दसंकरम् ।
तस्य प्रत्यक्षबाधो ऽपि वर्णसंकरबाधवत् ॥

तेनापशब्दगतवाचकत्वापादनस्यैव समस्तप्रमाणविरोधः शक्यो वक्तुं न स्मर्यमाणशब्दसाधुत्वपक्षस्येति निरवद्यता । ते-
नादृष्टार्थप्रत्यायननियमप्रतिषेधद्वारं धर्माधर्मसाधनत्वकृ-
तमपि साध्वसाधुत्वज्ञानमुपपत्स्यते । यत्त्वाह, साधुत्वं नेन्द्रि-
याग्राह्यमित्यादिश्लोकम् । तं प्रत्येवं वक्तव्यम् ।

साधुत्वमिन्द्रियग्राह्यं लिङ्गमस्य च विद्यते ।
शास्त्रस्य विषयो ऽप्येष प्रयोगो ऽप्यस्य संकरः ॥

इति । ग्रस्तनिरस्ताम्बूकृतादिदोषवर्जितनियतह्रस्वादि-
कालाभिव्यङ्ग्ययथाम्नातक्रमग्राह्यवर्णानां स्मर्यमाणाविन-
ष्टवाचकरूपविषयश्रोत्रज्ञानेनोदात्तादिवदिन्द्रियग्राह्यत्वम् ।
तदुत्तरकालप्रवृत्तव्यवहारगतार्थप्रतिपत्तिसचिवलक्षणागतप्र-
कृतिप्रत्ययलोपागमविकारादेशादिलिङ्गमप्यव्यभिचारि विद्य-
ते । शास्त्रस्य च द्विविधस्यापि श्रुतिस्मृतिरूपस्य स्वर्गलोकय-
शोपकारसिद्धिसाधनभावप्रतिपादनार्थस्यार्थानर्थकार्यस्वरूप-
ज्ञानार्थस्य चायमेवंविध एवान्यो ऽपि विषयः । अविनष्टैः श-
ब्दैर्भाषमाणस्य स्वर्गयशोपकारौ भवतः । यागे च कर्मणि अ-
पशब्दैर्भाषमाणस्य अनृतमिव वदतः प्रतिषिद्धाचरणनिमित्त-

क्रतुवैगुण्यप्रसङ्गः । यथोक्तं "वाग्योगविद् दुष्यति चापशब्दै" रिति । एतौ द्वावप्यर्थौ न शास्त्रादृते ऽन्येन प्रतिपादयितुं शक्येते इत्यतोऽत्र शास्त्रविषयः । द्वाभ्यामेव च विधिप्रतिषेधाभ्यामविनष्टैः शब्दैः स्वर्गयज्ञोपकारकामो भाषेत न विनष्टैरिति न प्रतिशब्दापशब्दमनन्तविधिप्रतिषेधकल्पनप्रसङ्गः । न च विधिप्रतिषेधविषयेणैव शास्त्रेण भवितव्यं न प्रमेयस्वरूपज्ञापनार्थेनेति एतदीश्वराज्ञासिद्धम् । नह्यविनाशी वा अरे अयमात्मानुच्छित्तिधर्मेत्यादिचतुस्त्रिंशदाश्वीनानि सरस्वत्या विनशनप्लाक्षप्रस्रवणे इत्येवमादिवाक्यशेषाणां च शास्त्रगतानामर्थतत्त्वप्रतिपादनपरत्वं न लभ्यते । नापि तत्प्रतिपादने शास्त्रशब्दवाच्यत्वं बाधः । यथापि विधिप्रतिषेधात्मकेनैव शास्त्रेण भवितव्यमिति का चित्परिभाषा, तथाप्येवंविधाः साधुशब्दाः प्रत्येतव्या इतीदृशो विधिः संभवत्येव । यद्वाक्यान्तरावगतादृष्टफलार्थी यश्चाविनष्टैः शब्दैर्भाषितुमिच्छेत् स चैतानेवंरूपानेतत्क्रमसमाचाराश्च वर्णानुपाददीत नाधिकान्न न्यूनांश्चेति यावद्रूपं विधिप्रतिषेधौ शक्यौ दर्शयितुमिति शास्त्रविषयत्वसिद्धिः । निःसंदिग्धवृद्धबालप्रयुक्तादेवदत्तगवादिशब्दोपमयापि च सर्वशब्दानां विनष्टाविनष्टरूपैरवश्यं भवितव्यमिति शक्यं विज्ञातुम् । एवं व्याकरणानुगतवैदिकशब्दाविनाशसादृश्यादपि तद्विधलौकिकाविनष्टत्वोपमानं दर्शयितव्यम् । तथा लौकिकार्थप्रत्ययोत्थापितवाचकत्वार्थापत्तिलभ्यस्तावदेकः साधुत्वनिश्चयः । ततः संभवत्प्रमादालस्यकरणवैगुण्यनिमित्तापभ्रष्टरूपवर्जितकेवलसाध्वन्वाख्यानस्य । अन्यथानुपपद्यमानत्वादपरयाप्यर्थापत्त्या सिद्धमेव साधुत्वज्ञानम् ॥

अपभ्रंशेषु साधुत्वं तुल्यार्थत्वाद्यदुच्यते ।
लक्षणाभावमार्गेण तस्याभावो ऽपि निश्चितः ॥ इति ॥
षण्णामपि प्रमाणानां साध्वसाधुत्वनिर्णये ।
व्यापारो ऽस्तीति को जल्पेत्साधुत्वं निष्प्रमाणकम् ॥
यद्यप्यनभियुक्तानां प्रयोगो ऽस्ति ससंकरः ।
अभियुक्ता विविच्यन्ते तथापि ब्राह्मणादिवत् ॥
यथा च पद्मरागादीन्काचस्फटिकमिश्रितान् ।
परीक्षका विजानन्ति साधुत्वमपरे तथा ॥
यथा रत्नपरीक्षायां साध्वसाधुत्वलक्षणम् ।
तथा व्याकरणात्सिद्धं साधुशब्दनिरूपणम् ॥

पौरुषेयव्याकरणागमपरंपरायामपि च तदनुगतसाधुत्वानन्तरदर्शनात्पूर्वदृष्टविवेकज्ञानमात्रपरत्वाद्वा नान्धपरंपरावचनन्यायप्रसङ्गः । यावानिह दृष्टार्थांशः स वैदिकविधिप्रतिषेधद्वयादेवोपपन्नः । तस्मिञ्श्चार्थाविनष्टशब्दरूपाज्ञानं वेदशिष्टप्रयोगसंवादिव्याकरणान्वाख्यानपारंपर्येण सद्यः फलत्वात्सुलभमिति न पुरुषकृतत्वनिमित्तदोषप्रसङ्गः । यत्तु दृष्टार्थत्वात्स्वसामर्थ्यप्राप्तत्वादेवाप्राप्ते शास्त्रमर्थवदिति वाचकभाषणविधानमनुपपन्नमिति तत्राधिकरणेनैवोत्तरं दास्यते नियमार्था श्रुतिरुच्यतइति । यत्त्ववाचकत्वेनापशब्दानामप्रसङ्गाद्व्यावर्त्याभावे नियमानुपपत्तिरिति । तत्रोच्यते ॥

नियमः परिसंख्या वा न व्यावर्त्याद्विनेष्यते ।
नित्यतामात्रकारी तु नियमः किं न लभ्यते ॥

सति भाषितव्ये कदा चिदविनष्टे न भाषेत कदा चित्प्रमादाशक्तिजापभ्रंशेनाप्यक्षिनिकोचादिना वा शब्दरहितेनैव प्र-

त्यापयेत् ॥

अत्र श्रेयोऽर्थिनोऽवश्यं साधुभाषा नियम्यते ।
नियोगेन हि तां कुर्वन्नपूर्वं साधयिष्यति ॥

यद्यपि च नियमेऽन्यनिवृत्तिरवश्यं कल्पनीया, तथापि साधुशब्दस्मृतिव्यवस्थितानां कारणरूढरूपभ्रान्तिवाचकत्वगृहीतानां चापशब्दानां सम्भविनि प्रयोगप्रसङ्गे साधुनियमेन व्यावृत्तिः ॥

अथ वा नैवापशब्दानामपृथक्त्वे चिदेकक्रियाविषयानेकद्रव्यगुणादिवदभिधायां प्राप्नुवन्ति ये साधुनियमेन व्यावर्त्येरन् । किं तु ॥

साधूनेव प्रयुञ्जाना नाशयेयुरयत्नतः ।
भाविनीनशदित्येवं नियमस्तान्नियच्छति ॥

तद्यथा । यो विदग्धः स नैच्छेत इत्येवमादिदोषनिन्दापूर्वकसविदग्धताशपयितव्य इति नियम्यते । तथा दुष्टः शब्दः स्वरतो वर्णतो वेत्यादिना निन्दितत्वात् । तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्द इति प्रमादादिनिमित्तविनाशेन शब्दकार्यादर्थसाधनादपेतोऽयं म्लेच्छः, म्लेच्छ अव्यक्तायां वाचीति स्मरणात् स न प्रयोक्तव्य इति प्रतिषेधस्तस्मादेषा व्याकृता वागुद्यते इति च विधिरविनष्टप्रयोगनियमार्थः ॥

ननु चाशक्तिजा दोषाः प्रमादजनिताश्च ये ।
परिहर्तुमशक्यत्वान्निषेधस्याप्यगोचराः ॥

उच्यते ॥

प्रमादमेव मा कार्षीः सामर्थ्याय यतस्व च ।
एवमर्थो निषेधोऽयं नाद्रियेतान्यथा ह्यसौ ॥
अन्ये तुसमुखारूढा न क्लेशेन विवक्षवः ।

शक्ताश्चैवाप्रमत्ताश्च वदेयुरनिवारिताः ॥
अशक्तैर्नाशितायान्ये दाक्षिण्याद्यनुवर्त्तनात् ।
जानन्तो ऽपि प्रयुञ्जीरन् यदि शास्त्रं न वारयेत् ॥
अन्ये ऽपि प्राकृतास्तावेरशक्तैर्व्यवहर्तृभिः ।
सह व्यवहरन्तस्तानुपेत्यापि प्रयुञ्जते ॥
तत्कथं नाम यत्किं चित्स्यादपभ्रंशकारणम् ।
दूरात्परिहरेयुस्तदिति यत्नो नियम्यते ॥

यत्तु दृष्टार्थप्रत्यायननिराकाङ्क्षत्वाददृष्टार्थप्रयोगोत्पत्त्यशास्त्रत्वमिति । तत्रोच्यते ॥

दृष्टे सत्यपि सर्वत्र नियमाद्दृष्टमिष्यते ।
क्रत्वर्थं पुरुषार्थं च तत्संयोगपृथक्त्वतः ॥

एकस्य तूभयत्वे संयोगपृथक्त्वं कारणं तच्चेह प्रकरणानारभ्यवादाभ्यामवगतं, तत्र ॥

क्रत्वर्थांशे परार्थत्वादर्थवादः फलश्रुतिः ।
पुरुषार्थे तु निर्देशात्फलमात्रे यदर्शनात् ॥

क्रत्वर्थं ह्यनिर्ज्ञातोपायत्वात्सर्वादृष्टोपसंग्रहक्षममिति नियमापूर्वमात्मसात्कुर्वत्पुरुषार्थांशे फलश्रुतिमर्थवादो करोति । पुरुषार्थस्य नियमस्य त्ववश्यकल्पनीयप्रयोजनत्वादर्थप्रतिपत्तेरपभ्रंशेभ्यस्तिनिक्रोचादिभ्यो वा सुतरां सिद्धत्वात् । अनाकाङ्क्षितनियमापूर्वोपजीवनसामर्थ्यं नास्तीत्यवश्यमर्थवादोपात्तमेव स्वर्गलोके कामधुगाद्येव फलत्वेनाश्रयणीयम् । यत्तु न ज्ञायते क्वेदं नियमापूर्वमाश्रितमिति, तत्राभिधीयते ॥

क्रत्वर्थं तावदङ्गेषु तदर्थेष्वेव संश्रितम् ।
अनङ्गत्वाभिधानार्थं स्यात्क्रत्वर्थं नराश्रितम् ॥

प्रकरणविशेषाद्वा तद्युक्तस्य तत्संस्कारो द्रव्यवदिति हि ज्योतिष्टोमप्रकरणगतब्राह्मणशब्दलक्षिततदपूर्वसाधनयजमानसंस्कारत्वात्साधुभाषणनियमापूर्वस्य। याजमानास्तु तत्प्रधानत्वात्कर्मवदित्यनेन न्यायेन फलप्रतिग्रहणयोग्यत्वाधानार्थं तदाश्रितमेव विज्ञायते। पुरुषार्थवाक्ये ऽपि सम्यग्ज्ञानसुप्रयुक्तत्वाच्छिष्टज्ञातृप्रयोक्तृपर्युपस्थापनात्क्रियाफलयोश्च तद्गामित्वात्प्रधानयागाद्यपूर्ववदेव ज्ञातृप्रयोक्त्राश्रितं निष्पद्यते॥

तृतीयोक्तिक्रियागम्यगुणभावे ऽपि वक्तरि।
संस्कार्यत्वात्प्रधानत्वं स्यात्प्रयाजाज्यशेषवत्॥

यथैव प्रयाजशेषेण हवींष्यभिघारयतीति सत्यपि शेषस्य तृतीयानिर्देशकार्योपयोगित्वात्संस्कार्यत्वावधारणमेव ब्राह्मणस्यापीत्यदोषः॥

यदि वा ब्राह्मणेनेति तृतीया यागकारिणि।
कामधुक्छब्दयोगाच्च बहिः प्राधान्यकल्पना॥
नैव म्लेच्छनकारित्वात्तृतीयेयं प्रतीयते।
कुर्वता यागमित्येवं ब्राह्मणेनेति योज्यते॥
यागे यो गुणभावस्य संस्कारे सा प्रधानता।
न ह्यारादुपकारित्वं संयुक्तस्योपयोगिता॥

तस्योपयोगित्वं प्रकरतोपाठयाविभक्तिश्रवणाभ्यामवगतं शेषीकरणसमर्थं भवति। बाह्यपुरुषार्थत्वे ऽपि कामधुक्छब्दस्य पुरुषोपयोग्यकाम्यमानार्थसाधनवचनत्वात्पुरुषप्राधान्यप्रतिपत्तिः। यद्यपि च साधुशब्दोच्चारणमुच्चारयितृत्वर्थं क्रत्वर्थं च न भवति तथापि तद्गतनियमप्रतिषेधयोरेव क्रत्वर्थपुरुषार्थत्वे भविष्यतः। महि यदर्थे कर्मणि यौ नियमप्रतिषेधौ तावेव क-

वर्त्तौ तदर्थौ भवतः । तथाहि ॥

स्त्र्यपायमांसभक्षादिपुरुषार्थमपि श्रितः ।
प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात् ॥
क्रत्वर्थात् खादिराद्यष्टा वीर्य्यसिद्धिर्विधानतः ।
भोजनाद्याप्यतिथ्यर्थादपूर्वं दात्रसंश्रितम् ॥

अतश्च परार्थाचारणाश्रितावपि नियमप्रतिषेधौ स्वप्रयोजनाकाङ्क्षावेलायां सन्निहितपुरुषप्रधानौ विज्ञायेते ॥

अतश्च वेदमूलत्वे सत्येवं प्रतिपादिते ।
प्रयोगोत्पत्त्यशास्त्रत्वं यदुक्तं तदसत्कृतम् ॥
यच्चास्य कृत्रिमत्वेन स्वतः शास्त्रत्वबाधनम् ।
तत्प्रसिद्धिविरुद्धं स्यादचन्द्रशशिवाक्यवत् ॥

शास्त्रशब्दो यदि तावद्रूढस्ततस्तु ईशस्तु तावद्विद्यास्थानेषु शास्त्रस्थानामेव प्रसिद्धस्तदन्तर्गतत्वाच्च व्याकरणस्य शास्त्रत्वनिराकरणानुपपत्तिः । अथापि शिष्यतेऽनेनेति शास्त्रत्वमन्वर्थमिष्यते तथापि व्याकरणेन साधुशब्दाः शिष्यन्ते तदनुगमोपाया वा प्रकृतिप्रत्ययादयस्तदभियुक्तशिष्यजनो वेति सर्वथा शास्त्रशब्दप्रवृत्तिरविहता ॥

प्रसिद्धमपि शास्त्रत्वं यस्तु तर्केण वारयेत् ।
वेदस्यापि स नित्यत्वाद्व्योमवद्वारयिष्यति ॥

यथैव हि व्याकरणादीनां कृत्रिमकाव्योपनिबन्धसाधर्म्यात् शास्त्रत्वं प्रतिषेद्धुमध्यवसीयते, तथाऽऽकाशदिक्कालात्मनः परमाणुदृष्टान्तबलेन नित्यत्वाद् वेदस्याशास्त्रत्वमप्ययत्नेनैव क्रियेत ।

यो हि नागरिकभाषाभिज्ञतया ग्रामीणैर्मातापितरावपि
...रभिदधीत स केनान्येन बाध्येत ॥

सर्वांश्च कामानाप्नोति तरति शोकमात्मविदित्यथा स यदि पितृ-
लोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन
पितृलोकेन संपन्नो महीयत इत्यादिना योगजन्याणिमाद्यष्टगु-
णैश्वर्यफलानि वर्णितानि । तथा स खल्वेवं वर्त्तयन्यावदायुषं
ब्रह्मलोकमभिसंपद्यते न स पुनरावर्त्तत इत्यपुनरावृत्त्यात्मकप-
रमात्मप्राप्त्यवस्थाफलवचनम् । अप्रकरणगतत्वेनानैकान्तिक-
क्रतुसंबन्धासंबन्धाच्च नाञ्जनखादिरस्रुववाक्यादिफलश्रुतिवद-
र्थवादत्वम् ॥

न च स्नानविधानेन कर्म्मसंबन्धवारणम् ।

प्रत्याश्रमवर्णनियतानि नित्यनैमित्तिककर्म्माण्यपि पूर्वकृत-
दुरितक्षयार्थमकरणनिमित्तानागतप्रत्यवायपरिहारार्थं च क-
र्त्तव्यानि न च तेषां भिन्नप्रयोजनत्वाद्भिन्नमार्गत्वाच्च बाधविक-
ल्पपरस्पराङ्गाङ्गिभावाः संभवन्ति । शब्दस्नानस्य त्वेकान्तेन
प्रयोगाङ्गत्वात्पूर्वतरभावित्वाच्च न पृथक् फलसंबन्धसंभव इति
स्नानपूर्वप्रयोगफलवत्त्वमेव निश्चीयते । यस्त्वादिमद्व्याकरणस्नान-
पूर्वकप्रयोगफलसंबन्धोऽनादिविधिमूलो नावकल्पत इति त-
द्यूपादिकरणवद्व्याकरणपरंपरानादित्वादनुपालम्भः । तस्मादे-
व व्याकृतेति च व्याकरणव्यवहारनित्यत्वमुक्तम् ॥

न चैषा संप्रदायेन व्याकृतेत्यभिधीयते ।

तच्च श्रूयत इत्येव व्याकृतेति तु निष्फलम् ॥

यदपि च मनुना पङ्क्तिपावनमध्ये वेदादेवोपलभ्योक्तम् ।
यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वर”मिति तेनापि पूर्व-
वादुक्ताधीतवेदत्वयज्ञमीमांसनव्यतिरिक्तविषयेण व्याकरण-
नदेव [illegible] प्रतिपादितमिति [illegible]

प्रयोगचोदनाभावादर्थैकत्वमविभा-
गात् ॥ २६ ॥

इह नामाख्यातोपसर्गनिपातानां मध्यान्नामानि परिगृह्यन्ते, तेषामपि जातिगुणक्रियाद्रव्ययदृच्छासर्वनामशब्दानां मध्याज्जातिशब्दाश्चिन्त्यन्ते । तेषामप्येकं गोशब्दमुदाहृत्य विचार्यते ॥

किं पुनरयमाकृतेर्वाचको ऽथ व्यक्तेरिति, ततः ॥

एतत्सान्यासिकं कृत्वा वक्ष्यमाणं तु सांप्रतम् ।
उपायफलसिद्ध्यर्थमिदं तावद्विचार्यते ॥

किं यएव लौकिकाः शब्दास्तएव वैदिकास्तएव चैषामर्था उतान्यइति । आह ॥

किं लोकवेदशब्दानामेकत्वप्रतिपादने ।
प्रयोजनं यतः पूर्वं तावत्तत्प्रतिपाद्यते ॥

उच्यते ॥

फलमस्य विचारस्य वैदिकेषु भविष्यति ।
लोके च निर्णयोपायस्तेनैकत्वाय यत्यते ॥

यदि शब्दार्थानामनन्यत्वं लोकवेदयोर्भवेत् तत एतस्या व्यक्त्याकृत्यभिधानचिन्ताया वृद्धव्यवहारस्यानेकप्रयोगानुसरणद्वारेणाभिधेयानभिधेयत्वनिर्णयः शक्यते कर्तुम् ॥

प्रयोजनं तु लोकस्य न किं चिदपि सिध्यति ।
आकृतिव्यक्तिवाच्यत्वपरमार्थनिरूपणात् ॥

संमूर्छितानेकार्थसन्निधाने हि शब्दः प्रयुक्तः कियत्यपर्याप्ते प्रत्ययं करोति तेन चाविविक्ताभिधेयगम्यमानानाम्

समस्तधर्म्मोपेतेन कार्यसिद्धौ क्रियमाणायां प्रयुक्तः ॥

यद्युच्यमानया कार्यं यदि वा जातिगम्यया ।
समस्तं क्रियते व्यक्त्या को विवेकधियो गुणः ॥

यद्युच्येतेत्यापि वेदवत्सामान्यविशेषलक्षणबाधसिद्धिरेव प्रयोजनमिति । तदुच्यते ॥

सर्वं हि दधिदानादि लोके कर्म्मार्थलक्षणम् ।
तदशात्क्रियमाणे तु न चिन्त्ये श्रुतिलक्षणे ॥
तेन लोके विचारोऽयं जायते निष्प्रयोजनः ।
स्यात्प्रयोजनवान्वेदे ज्ञानोपायस्तु दुर्लभः ॥
तेन शब्दार्थभिन्नत्वे व्यक्त्याकृतिविचारणा ।
वाच्यावाच्यविवेकाय न कर्त्तव्या कथं चन ॥
अभेदे सति लोकस्थैः कृतः शब्दार्थनिर्णयः ।
तस्मिन्ननुपयुक्तोऽपि फलं वेदेषु दास्यति ॥

तेन लौकिकवैदिकशब्दार्थैकत्वे सत्याकृत्यधिकरणमुपपत्तिमत्त्वात्प्रयोजनवत्त्वाच्चारब्धव्यं भेदपक्षे त्वनारभ्यमित्यवधृत्य भेदपक्षस्तावत्प्रतिपाद्यते । नियतानियतस्वरच्छान्दसप्रकृतिप्रत्ययलोपागमवर्णविकारसदसद्भावकृतरूपभेदादध्यायानध्यायोपनीतानुपनीतत्रैवर्णिकचातुर्वर्ण्यप्रयोज्याप्रयोज्यत्वगुरुशुश्रूषाराधितगुरुसंप्रदाययदृच्छाप्रयुक्तवाक्यतदर्थान्यत्ववद्धि पदपदार्थान्यत्वं लोकवेदयोस्ततो लौकिकानामेव व्यवहारोपनिपातादर्थवत्ता वेदे त्वानर्थक्यान्न चोदनालक्षणो धर्म्मः । स्वरेण रूपभेदं मन्यतेऽध्यायानध्यायतया वृत्रहननाद्यर्थयोगेन चाविदग्धवाक्यवदुत्तानवचनवाक्यभङ्गः । सर्वेषां च वैदिकानामन्यत्वात्ततोऽपि पौर्वापर्येणार्थावगतिः । आख्यात्वादिधर्म्म-

भेदनियतानियतपदवाक्यरचनाद्वारा व्यपदेशरूपभेदाभ्यां सर्वशब्दानामर्थानां लौकिकानां वैदिकानां च भेद इति प्राप्तेऽभिधीयते ॥

प्रयोगचोदनाभावादेकत्वं तेषु गम्यते ।
तस्मात्सिद्धिः फलत्वाच्चेदविभागाद्भविष्यति ॥

भेदे सत्यपूर्वत्वाद्वैदिकपदानामनवगतसंबन्धत्वेनार्थशून्यत्वात् क्रियाकारकसंसर्गात्मकप्रयोगचोदनानामभाव एव स्यात् ॥

एकत्वे सति सद्भावादिति वा हेतुवर्णना ।
अर्थैकत्वं प्रधानत्वाद्वस्वभेदोऽथ वोच्यते ॥

शब्दार्थैकत्वमिति वक्तव्येऽर्थैकत्ववचनं फलादेव शब्दैकत्वोक्तिसिद्धिं मत्वैवमुक्तम् । अथ वा वस्तुमात्रपर्य्यायत्वादुभयसाधारण्याभिप्रायेणैवार्थैकत्वोक्तिः । प्रयोगचोदनाभावप्रसङ्गः परपक्षे स्वपक्षे वा तद्भावसिद्धिर्वेदवादिनैव सह विवादेऽवकल्पते नान्येनेत्यत आह । प्रयोजनमतत्प्रमाणमभिधीयतामिति । तदुच्यते । प्रत्यभिज्ञारूपप्रत्ययविभागाद् ज्ञायमानोभयप्रमेयरूपाविभागाद्वा वाक्यतत्समूहमात्रनिबन्धनापन्नपदवर्णविषयत्वव्यपदेशाविभागाद्वा तथोच्चारयितॄणां स्थानकरणप्रयत्नाविभागाद्वा लक्षणविदां वा बहुतरानुगमनाविभागादिति हेत्वर्थविकल्पाः ॥

प्रत्यक्षप्रत्यभिज्ञानाच्छब्दैकत्वं प्रतिष्ठितम् ।
एकशब्दोत्थितज्ञानग्राह्यत्वाच्चैकवाक्यता ॥
यथाश्रुतगवादीनां यापि वाच्यान्तरे श्रुतिः ।
अर्थैकत्वाविरोधेन गुणमात्रान्यता परा ॥

यथा हि वामना गावो नराश्चिपिटनासिकाः ।
कर्णप्रावरणाश्चान्ये नरार्थत्वाच्च न च्युताः ॥
एवं सत्येव गोत्वादौ धर्मो यदि विलक्षणः ।
नैतावतार्थभेदोऽस्ति विशेषानभिधानतः ॥

न च या एव देवानां गावस्ता एवावश्यं सर्वत्र वैदिकस्य गोशब्दस्य वाच्या भवन्ति । मनुष्यगवीषु दक्षिणादिसाधनेषु सुतरां प्रयुज्यमानत्वात् ॥

एवं हिरण्यपर्णत्वं मेरौ यदि वनस्पतेः ।
देवलोके ततः शब्दः किमर्थान्तरवाच्ययम् ॥
यच्चैतद्धृतमस्माकं देवानां मध्विदं यदि ।
रसवीर्यादिभिस्तत्र न शब्दार्थोऽन्यथा भवेत् ॥
न च सर्वाप्रसिद्धत्वे गम्यतेऽको ऽपि कश्चन ।
तेनासिद्धैरसिद्धानां नास्त्यन्यत्वनिरूपणम् ॥

अतोऽवश्यमेतेषामेव गवादीनां देवसंबद्धानामुत्तानवचनप्रतिपादनमिति वक्तव्यम् । अथ वा भूमिष्ठानामेव सतां केनापि गुणवादेन पृथिवीगोलकत्रैलोक्यभ्रमणादिना वा पुराणोक्तेन दृष्टिवशाद्यथैव वयमुपरि देवान्पश्याम एवमधो द्युपरिवर्तनादयमपि लोको देवैरुपरि दृश्यते इति उत्तानवचनदृष्टिस्तस्माल्लोकवेदयोरभिन्नाः शब्दार्था इति सिद्धे विचार्यते । किमाकृतिः शब्दार्थोऽथ व्यक्तिरिति ॥

द्वौ च पक्षावुपन्यस्तौ भाष्यकारेण यद्यपि ।
व्याख्यातारस्तथाप्यत्र कुर्युः पक्षान्तराण्यपि ॥
नियोगेन विकल्पेन द्वे वा सह समुच्चिते ।
संबन्धः समुदायो वा विशिष्टा वैकयेतरा ॥

एते पक्षाः पुनर्योज्या व्यतिकीर्णाः परस्परम् ।
लिङ्गकारकसंख्याभिः संहतासंहतात्मभिः ॥
पुनर्जात्यादिपक्षाणां तादृश्यैवात्र योजना ।

प्रथमं तावदष्टपक्ष्येवं दर्शयितव्या । गोशब्दस्यार्थः किमाकृतिरेव १, व्यक्तिरेव २, उताकृतिर्वा व्यक्तिर्वा ३, ऽथाकृतिश्च व्यक्तिश्च ४, किमुभयोः संबन्ध ५, उत समुदायः ६, किमाकृतिविशिष्टा व्यक्तिः ७, उत व्यक्तिविशिष्टा आकृतिः८,रिति । तथा किमाकृत्यैव विशिष्टः संबन्धः किं व्यक्त्यैवाथाकृत्या वा व्यक्त्या वा ऽथ समुदायेनाप्याकृतिविशिष्टया व्यक्त्या ऽथ व्यक्तिविशिष्टया ऽऽकृत्या ऽथ परस्परविशिष्टाभ्यां द्वाभ्यामिति । तथा किमाकृत्यैव विशिष्टः समुदाय इत्याद्यपि पूर्ववदेव संबन्धविशिष्टसमुदायपक्षमात्रातिरिक्तं योजनीयम् । एवं किमाकृत्यैव विशिष्टः संबन्ध एव उत व्यक्त्यैवाथवाकृत्या वा व्यक्त्या वा ऽथ समुदायेन किमन्यतरविशिष्टयान्यतरया ऽथोभाभ्यामित्येवं समुदायविशेषणत्वपक्षाः पूर्ववदेव योज्याः ॥

एवं किं संबन्धेनैव विशिष्टा आकृतिरथ समुदायेनैवाथ विकल्पमानाभ्यामुत समुच्चिताभ्याम् । तथैतद्विशिष्टा किमाकृतिरेवाथ व्यक्तिरेव, अथ विकल्पिते किं समुच्चिते किमिति । तथा किमाकृतिविशिष्टसंबन्धविशिष्टा व्यक्तिरेवाथ व्यक्तिविशिष्टसंबन्धविशिष्टाकृतिरेवाथ विकल्प उत समुच्चयः । एवं समुदायेनापि योज्यम् । तथा संबन्धविशिष्टव्यक्तिविशिष्टाकृतिरेवाथ संबन्धविशिष्टाकृतिविशिष्टा व्यक्तिरेवाथ विकल्पो ऽथ समुच्चयः । एवं समुदायविशिष्टपक्षाः कल्पयितव्याः । तथा किं जात्यैव विशिष्टेन संबन्धेन विशिष्टा व्यक्तिः, अथ व्यक्त्यैव विशिष्टेन सं-

बन्धेन विशिष्टा जातिरथ विकल्पो ऽथ समुच्चयः । एवं समुदायेनापि विशिष्टता योज्या । तथा किं संबन्धेनैव विशिष्टया जात्यैव विशिष्टा व्यक्तिरुतैवंविधया व्यक्त्यैव विशिष्टा जातिरथ विकल्पो ऽथ समुच्चयः ॥

एवं समुदायेनैव विशिष्टयेत्यपि योजयितव्यम् । एवं जातिलिङ्गयोर्जातिकारकयोर्जातिसंख्ययोश्च प्रत्येकं जातिव्यक्तिपक्षविकल्पितसमुच्चितपक्षोत्थानं दर्शयित्वा व्यक्तेर्लिङ्गादीनां च दर्शयितव्यम् । तथा लिङ्गसंख्या लिङ्गकारकसंख्या कारकयुगलान्यपि विकल्प्य प्रत्येकद्विविलिङ्गादिसहितैकजातिव्यक्तिविकल्पास्त्रियोगपञ्चयोगाश्रया दर्शयितव्याः ॥

एवं शब्दस्वरूपस्य पुनर्जात्यादिभिः सह ।
एकद्वित्रिचतुष्पञ्चषट्कैः सह विकल्पना ॥
एते चात्यन्तनिष्कृष्टाः पक्षा यद्यपि न स्थिताः ।
बुद्ध्या तथापि भिद्यन्ते जातिद्रव्यगुणादिवत् ॥
सर्वत्रेन्द्रियलिङ्गाभ्यां भेदः स्तोको ऽवगम्यते ।
शब्देन तु सुसूक्ष्मोपि वस्तुभागो विभज्यते ॥
पदात्प्रभृति चैवं या प्रज्ञा ज्ञातुर्विजृम्भते ।
पुष्पिता सा पदार्थेषु वाक्यार्थेषु फलिष्यति ॥
अत्र चाकृतिरेवेति दृढः पक्षोयमेकतः ।
इतरे त्वन्यतः सर्वे व्यक्तिपक्षानुयायिनः ॥
व्यक्तौ निराकृतायां च समस्तानां निराक्रिया ।
सुलभेति न सर्वे ऽमी भाष्यकारेण दर्शिताः ॥
न चैतस्मान्न सन्त्येव न चैते निष्प्रयोजनाः ।
विकल्पिता हि जिज्ञासोः प्रज्ञाविकसनक्षमाः ॥

दर्शितेष्वपि सर्वेषु विचारः क्रियते द्वयोः ।
का शब्देनाकृतिव्यक्त्योरुच्यते का ऽनुगम्यते ॥

ततश्च ॥

विचारसुखसिद्ध्यर्थं स्वरूपं तावदेतयोः ।
प्रश्नपूर्वमुपन्यस्य याथात्म्येन निरूप्यते ॥

ननु प्रथमपाद एवाकृतेर्निरूपणादिदानीं प्रश्नोत्तरे मन्दप्रयोजने ॥

उच्यते ॥

सत्यमेवाकृतिः पूर्वं प्रत्यक्षेण निरूपिता ।
संस्थानाशङ्कया त्वत्र सामान्यात्मा निरूप्यते ॥

द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिरिति ॥

द्रव्यादीनां च सामान्यं परापरविभागवत् ।
वस्तुत्वं प्रथमं तत्र द्रव्यत्वाद्यपरं तथा ॥
पुनर्वायुत्वतेजस्त्वजलत्वात्मत्वभिन्नता ।
पृथिवीत्वाद्घटत्वं च तद्व्यक्तिषु समाप्यते ॥
वृक्षत्वात्परतश्चेष्टं शिंशपात्वादि केवलम् ।
शरीरत्वाच्च गोवाजिहस्तिपुंस्त्वादि गम्यते (१) ॥
वाजिकत्वादि चाश्वत्वात्कर्कादिस्तु गुणो मतः ।
हस्तित्वाद्भद्रमन्द्रादिदिग्नागकुलजातयः ॥
पुंस्त्वाद्ब्राह्मणकौण्डिन्यकठत्वादि समाप्यते ।
तथा गुणत्वकर्मत्वरूपता जन्मतादि यत् ॥
ततः शुक्लादि तद्व्यक्तिगुणेषु प्रतितिष्ठति ।
कर्मणामपि यागत्वहोमत्वादिविभागतः ॥

---

(१) कथ्यते । पा० ।

अपर्यायस्मृतैरुक्तं धातुभिः प्रविभज्यते ।
पुनर्विधानसंख्याख्या गुणप्रकरणान्तरैः ॥
अन्ये तु भेदमाचार्याः कर्मणामेव मन्वते ।
अपि वा व्यतिरेकात्स्याद्दृशादेरेकरूपता ॥
रूपशब्दाविभागाच्च वच्म्यस्येतद्धि जैमिनिः ।
एवं प्रपञ्चितं सर्वमर्थसामान्यमाकृतिः ॥
न संस्थानं कुतो ह्येतदात्मादिगुणकर्मसु ।

सर्वेषु हि पार्थिवेषु गवादिघटादिषु संस्थानं भवेत् । अग्नितोयवाय्वाकाशादीनां तु पार्थिवद्रव्यपरिग्रहवशादाकारानुवृत्तिः कल्प्येत न स्वातन्त्र्येण, दिक्कालात्ममनसां तु गुणकर्मणां च न कथं चिदपि संस्थानं संभवति । सामान्यमात्रं तु सर्वस्वविशेषानुवृत्तिरूपं संभाव्यते । तस्मादेतदेवाभिधेयाकृतिलक्षणं नावयवरचनासंस्थानाकृतित्वमवकल्पते ॥

संस्थानस्य च नाशित्वात्प्रतिव्यक्ति च भेदतः ।
सामान्यव्यवहारित्वं नाकृतित्वे ऽवकल्पते ॥
अथ संस्थानसामान्यमाकृतित्वेन गृह्यते ।
अश्वादिष्वपि तुल्यत्वाद्भवेदाकृतिसंकरः ॥
न चावान्तरसंख्यानं सर्वगोपिण्डवृत्ति यत् ।
अश्वादिभ्यो निवृत्तं च गोशब्दालम्बनं भवेत् ॥

तस्य ह्युपलक्षणमालोच्यमानं न जातेरन्यल्लभ्यते ततश्च जातिरेव सामान्यमिति न्यायेनापद्यते । तेन प्रथमपादे रुचकस्वस्तिकवर्धमानकोदाहरणात्संस्थानाकृत्यभिधानाशङ्काश्रयादृदर्शनवदासीदित्येताभ्यां प्रश्नोत्तराभ्यां व्यावर्त्यते । अतश्च द्रव्यगुणकर्मणां यावत्किं चित्प्राग् व्यक्तिभ्यः सामान्यं तत्सर्व-

माकृतिरेवेत्यभिप्रेत्य मात्रशब्दः प्रयुक्तः । असाधारणविशेषा व्यक्तिरिति । के चिदाहुः । असाधारणा विशेषा एव व्यक्तिः । विशेषव्यतिरिक्तव्यक्त्यभावादिति ॥

नन्वु नैवं विशेषेभ्यो व्यक्तिरन्यैव चोद्यते ।
खण्डमुण्डादयः सर्वे विशेषत्वेन संमताः ॥
ते चान्यत्रापि दृश्यन्ते तथा जात्यन्तरेष्वपि ।
शावलेयादिभेदोस्ति तदपत्यान्तरेष्वपि ॥

खण्डमुण्डादयस्तावदन्या अपि व्यक्तयो भवन्त्येव गवयमहिषादिव्यक्तयश्च। शावलेयोपि यथैकस्तथान्योपि यः शवलापत्यत्वेन गम्यते स सर्वः शावलेयः। एतच्चोभयवर्णनिमित्तं वा यादृच्छिकं वा नामान्यत्रापि विनियोगवशाद्वर्त्ततएव । तदपत्ये च शावलेय इत्यसाधारणव्यपदेशानुपपत्तिः । विशेषव्यक्तिशब्दयोः बहुवचनैकवचनान्तयोः सामानाधिकरण्यप्रयोगवचनभेददोषः । तस्मादसाधारणा विशेषा यस्यां सा व्यक्तिरित्येवं व्याख्येयम्। ननु पूर्वोक्तेन न्यायेन खण्डादीनामपि बहुव्यक्तिसाधारण्याद्व्यक्तिव्यतिरिक्तानां चान्येषां केवलैकैकव्यक्तिगतानां विशेषाणामसंभवाद्बहुव्रीहिरप्यनुपपन्नः । उच्यते । नैव विशेषाणां प्रत्येकमसाधारणत्वमाश्रित्य व्यक्तिविशेषणत्वेनोपादानं कथं तर्हि साधारणरूपाणामप्येकद्वित्रादिभेदेन क्व चिदुपलब्धानां यदेकत्र पिण्डीकृतानां ग्रहणं तदपेक्षमसाधारणविशेषत्वाभिधानम् ॥

प्रविभक्ता हि ये दृष्टा दृश्यन्ते संहताः पुनः ।
पिण्डासाधारणत्वेन तैर्व्यक्तिरुपलक्ष्यते ॥

न चैकस्यां व्यक्तौ ये समुदिता दृष्टास्तएव व्यक्त्यन्तरेप्यन्यूना-

नतिरिक्ता दृश्यन्ते। य एवादृष्टपूर्वस्तस्मिन्समुदाये संप्रति दृश्यते स एवासाधारणतामापादयति। अनन्तभेदास्वपि व्यक्तिषु नात्यन्तापूर्वविशेषणोपलक्षणोपादानं किं चिदुत्कर्षापकर्षमात्रेण च सर्वत्रासाधारणोपलक्षणाभावात्परसामान्यापेक्षया च सर्वाण्येवावान्तरसामान्यानि विशेषव्यपदेशं प्राप्नुवन्ति। संघातावस्थायां च व्यक्तिविशेषणत्वात्तेषु विशेषशब्दः। एतच्च व्यक्तेर्विशेषाणामन्यत्वमुपरिष्टाच्छाब्दकारोऽपि वक्ष्यत्येव योऽर्थः सामान्यस्य विशेषाणां चाश्रयः सा व्यक्तिरिति। तत्र के चिद्गोत्वादिषु विशेषत्वमङ्गीकृत्य सामान्यवाचिना शब्देनानभिधेयत्वाद्यदेव महासामान्यं सत्तावस्तुभावशब्दाभिधेयं तदेव शब्दस्वरूपव्यवच्छिन्नं गोत्वादिविशेषव्यवच्छिन्नं वा गोसत्ताख्यमाकृत्यभिधानपक्षे वाच्यमिति मन्यन्ते। यथाहुः॥

"अस्त्यर्थः सर्वशब्दानामिति प्रत्याय्यलक्षणम्।
अपूर्वदेवता स्वर्गैः सममाहुर्गवादिषु"॥ इति॥

तत्तु कक्ष्याविभागेन सामान्यानां निरूपणात्।
अयुक्तं न गवादीनां तत्र वाचकशक्तता॥

प्रतिनियतार्थविषया हि शब्दानां वाचकशक्तिरर्थापत्त्या गम्यते तत्रानन्तरावान्तरसामान्यवचनानां द्रव्यगुणकर्मशब्दानामेव तावदसंकीर्णार्थत्वात्सत्तार्थत्वमनुपपन्नं किमुत दूरान्तरितार्थगवादिशब्दानाम्॥

सत्तामेते वदन्तश्च न शुद्धां सविशेषणाम्।
वदन्तीत्यभिधातुं हि शक्यं द्वेधाप्यसंभवात्॥

शुद्धवचनत्वे तावत् सर्वेषामेकार्थप्रत्यायनात्पर्यायत्वप्रसङ्गः। पुनरुक्तत्वाच्च अस्तिशब्दप्रयोगानुपपत्तिः॥

गौर्नास्तीति प्रयोगश्च विरोधान्नावकल्पते ।
नहि सत्तैव नास्तीति कथं चित्संप्रतीयते ॥

देशकालाद्यपेक्षायामपि नैव सत्तायां नास्तित्वमभिधातुं युक्तम् । विभुत्वनित्यत्वाभ्यां सर्वदेशकालव्यापित्वात् ॥

रूढिशब्दश्च नैवायं लोकदृष्ट्या प्रतीयते ।
तेन द्रव्यादिसामान्यं सत्तेत्येतन्न युज्यते ॥

य एव ह्यस्तिशब्देन द्वितीयो भावविकार उच्यते । जायमानविपरिणामाद्यवस्थसर्ववस्तुषु विनश्यत्तापर्यन्तेषु वस्त्वाकृतिप्रतिपत्तिर्दृश्यते । तेन यदि नाम महासामान्यमभिधेयं प्रतिज्ञायते ततो वस्त्वर्थः सर्वशब्दानामिति प्रत्याख्यानलक्षणमिति कामं वक्तव्यं नास्त्यर्थ इति । न चावयवार्थपरित्यागेन सच्छब्दसत्ताशब्दौ वर्त्तेते इति भवच्छब्दवदेवास्तीति सद्भावः सत्तेति न तु वैशेषिकपरिभाषया यतो द्रव्यगुणकर्मसु सदिति प्रतीतिः सा सत्तेति । एवंलक्षणा जातिः प्रतिपत्तव्या ॥

सेयमव्ययशब्देन वस्तुपर्यायवाचिना ।
भवत्साधारणार्थेन प्रसिद्धिरुपपादिता ॥
अस्तित्वमस्तितेत्येवं दृश्येते प्रत्ययौ यतः ।
स वस्तुवचनः शब्द आख्यातप्रतिरूपकः ॥
अप्रातिपदिकत्वाद्धि नाख्यातात्त्वतलौ स्मृतौ ।
अस्तिक्षीरा समासश्च तेन सद्वाचिनेष्यते ॥

अस्तिक्षीरा गौरिति तिङन्तसमासत्वेनानुपसंख्यानादवश्यंभाविप्रत्ययलक्षणद्वारसुबन्तत्वयोग्याव्ययपदेन सह क्षीराशब्दस्यान्यपदार्थे बहुव्रीहिरभ्युपगन्तव्यः । तत्र चायं सदर्थवचनः सत्क्षीरा गौरिति प्रत्ययोत्पादात् । ततश्च वस्तुनि सति च प्रयु-

ज्यमानमस्तिशब्दमुपलभ्य तदर्थानुसरणप्रत्यासन्नं सच्छब्दं च देवात्तन्निति च स्वार्थिकं देवतेतिवत्तन्निमित्ताप्यस्तिधातुवाच्यार्थविशिष्टकर्तृप्रतीतिमनङ्गीकृत्य शुद्धधात्वर्थमात्रवचनावेव सच्छब्दसत्ताशब्दौ गृहीत्वैवं तार्किकैः कल्पितं सच्छब्दवाच्या सत्ता महासामान्यमिति । तदुक्तान्तमननानादराच्च पदवाक्यविद्भिरप्युपेक्षितं प्रसिद्धमिवैमामवस्थां प्राप्तं येन गवादिशब्दवाच्यत्वेनापि संभाव्यते ॥

न त्वर्थाद्गम्यमानस्य वस्तुत्वस्यापि वाच्यता ।
धर्मान्तरत्ववृत्तेस्तु सत्तायाः कुत एव सा ॥
वस्तुशब्दो हि रूढित्वाद्व्यक्तिजात्यन्तराश्रितम् ।
सामान्यं यद्ब्रवीत्येतद्गम्यतेऽर्थैर्गवादिभिः ॥
शुद्धाभिधानपक्षस्य दुष्टत्वात्तैर्विशेषितम् ।
महासामान्यमिष्टं चेद्वाच्यं तदपि दुर्लभम् ॥

यदेवाकृतिविशिष्टव्यक्त्यभिधानपक्षे व्यक्तिविशिष्टाकृतिपक्षे वा निराकरणकारणं तदत्रापि सुलभम् । विशेषणस्य पूर्वतराभिधानप्रसङ्गात् ॥

गोसत्तां चापि गोशब्दो यदि नाम ब्रवीत्ययम् ।
गोजात्या वा विशिष्टां तां वदेद्व्यक्तिभिरेव वा ॥

तत्र ॥

गोत्वजातिविशिष्टा चेत्सत्तानेनाभिधीयते ।
उक्ताद्विशेषणादेव तत्सिद्धिः सा किमुच्यते ॥

विशेषणमनभिधाय तद्विशिष्टविशेष्याभिधानसंभवाद्विशेषणस्य च विशेष्येणात्यन्तसंबन्धात्पूर्वतराभिहितविशेषणभूतगोत्वसंबन्धादेव सत्तावगमसिद्धेः । न तत्राभिधानशक्तिकल्पनायाम्

र्थापत्तिरप्यन्यथाप्युपपद्यमानफलत्वप्रतिहता सती न प्रवर्त्तते । तथा व्यक्तिविशिष्टसत्ताभिधानेऽप्येष एव निराकरणहेतुः । अनित्यसंबन्धज्ञानानन्तशब्दशक्तिव्यक्त्यभिधानपूर्वकैकसत्ताभिधानकल्पनायाश्च केवलव्यक्त्यभिधानपक्षवदनुपपत्तिः । यत्तु "अपूर्वदेवता स्वर्गैः सममाङ्"रिति ॥

तत्राभिधीयते ॥

नैवापूर्वादिशब्दानां सत्ता वाच्येत्यवस्थितम् ।
विशेषानेव तेऽप्याहुरर्थापत्त्यादिकल्पितान् ॥

केचिच्छ्रुतार्थापत्त्या केचिद्वाक्यशेषवाक्यान्तरपर्य्युपस्थापितार्थविशेषवचना एव सन्तोऽत्यन्ताव्यभिचारिस्वार्थद्वारेण सत्तां गमयन्तोऽनभिधायकत्वेनावधार्यन्ते न सत्तापदार्थो व्यभिचरतीति लक्षणयैव तेभ्यः सत्ताप्रतीतिः ॥

कार्यसामर्थ्यमिन्द्रादिनिमिश्रसुखसंगतिः ।
सामान्येनाप्यपूर्वादि सत्तातोऽन्यत्तु लभ्यते ॥

सर्वपदार्थानामिव कार्यार्थापत्तिगम्यानि सामर्थ्यानि सन्ति यागादिजनितं च पुंसां फलप्राप्तिसामर्थ्यमपूर्वशब्दवाच्यं यागानुष्ठानात्पूर्वमभूतमनुष्ठानोत्तरकालं चापूर्वं जायतइति यौगिकत्वादेवापूर्वशब्दाभिधानं सर्वत्र लभ्यते, तथा दीव्यन्ति द्योतन्ते वा चन्द्रादित्याग्निग्रहनक्षत्रतारकादिरूपेण वायवश्च सततगत्या स्तूयन्ते सर्वैर्मन्त्रैरिति देवाः सुज्ञानशब्दसंबन्धा विशेषरूपेरेवेति न सत्तागोचरत्वं प्रतिपद्यन्ते । तथा स्वर्गशब्देनापि नक्षत्रदेशो वा वैदिकप्रवादपौराणिकयाज्ञिकदर्शनेनोच्यते यथा हि वेदे ये हि जनाः पुण्यकृतः स्वर्गं लोकं यन्ति तेषामेतानि ज्योतींषि नक्षत्राणि तथा चैष ज्योतिष्मन्तं पुण्यलोकं जय-

तीति । यदि वेतिहासपुराणोपपन्नं मेरुपृष्ठम् । अथ वान्वयव्यतिरेकाभ्यां विभक्तं केवलमेव सुखं यत्संवत्सरादिष्वनुभूयमानं दुःखसाधनशीतोष्णक्षुत्पिपासादिसमस्तद्वन्द्वरहितार्थापत्तिसिद्धदेशान्तरानुभवनीयं, तच्च यद्यपि तादृशमदृष्टपूर्व्वं तथापि मिश्रानुभवादेव विवेकेनोद्धृत्य स्वर्गशब्दार्थत्वेन ज्ञायमानं सत्तां गमयतीति न तदभिधानमपेक्ष्यते ॥

तेनापूर्व्वादिशब्दार्थाः समाः सत्यं गवादिभिः ।
स्वशब्दाभिहिताः सन्तः सत्तां लक्षयितुं क्षमाः ॥
अतश्च नैव गोशब्दो गोसत्तामभिधास्यति ।
गोत्वाख्याकृतिवाच्यत्वसंदेहात्तु विचार्य्यते ॥
कुतः संशय इत्येतत्कार्य्ययोग्यार्थनिर्णयात् ।
व्यक्तिमात्रपदार्थत्वं मन्यमानेन चोद्यते ॥
उच्यते कार्य्ययोगित्वाद्गम्यते व्यक्तिवाच्यता ।
शब्दशक्त्यनरोधात्तु नाकृतेर्व्यतिरिच्यते ॥
शक्तिकार्य्यविसंवादादेव शब्दार्थगोचरात् ।
किं समञ्जसमित्येवं नाविचार्य्यावधार्य्यते ॥

किं तावत्प्राप्तम् ॥

प्रयोगचोदनाभावाद्व्यक्तिर्वाच्या न तूभयम् ।
अर्थैकत्वं यतो युक्तमविभागाद् द्वयोर्गतिः ॥
नित्यं यथैव शब्दानामाम्नातानां प्रयोजने ।
अर्थप्रत्यायनार्थत्वात्तद्दशेनावधारणा ॥
एवं सर्व्वपदार्थानां वाक्यार्थप्रत्ययाङ्गता ।
यथा सिद्धेत्तथा कार्य्यं तेषां रूपनिरूपणात् ॥
आकृतिर्य्यदि शब्दार्थः कस्य स्युः प्रोक्षणादयः ।

केन चेज्येत न त्याग आकृतेरुपपद्यते ॥

अमूर्त्ता ह्याकृतिर्नित्या नावघातादिभाजनी(१) ।

तद्विधिः प्रतिषेधो वा तेनास्या नावकल्पते ॥

व्रीहीनवहन्ति, पशुं संज्ञपयति, सोममभिषुणोति, पावयति, सोमेन पशुना व्रीहिभिश्च यजतइति यावन्त एवमादयो विनाशिमूर्त्तिमद्विषयाः संस्काराः प्रयोजनसिद्ध्यर्था वा तेषां प्रयोगचोदनाया आकृतावभावाद्व्यक्तौ तु भावात्कार्य्यप्रधानत्वाच्च पदार्थप्रतीतेर्विध्यधीनत्वाच्च सर्वपुरुषचेष्टानामवश्यं विधिविषयत्वयोग्यवाक्यार्थपूरणसमर्थपदार्थकल्पनमङ्गीकर्त्तव्यम् । तथा यदपि ब्राह्मणो न हन्तव्यो न कलञ्जं भक्षयितव्यमित्यादिप्रतिषेधविधानं तदपि प्राप्तिपूर्वकत्वं सापेक्षत्वाद्व्यक्तौ च प्राप्तिसंभवादाकृतेश्चानधिकारादसत्यां प्राप्तावनर्थकमेव स्यात् । तस्माद्येन शब्दार्थेन प्रयोगचोदनानां भावो भवति स एवाभ्युपगन्तुं न्याय्यो न तत्त्वज्ञानमात्रदृष्टसिद्ध्यर्थपदार्थकल्पना युक्तेति। स्यादेतद्व्यक्तिसंभवत्प्रयोगचोदनास्तु व्यक्त्यर्थस्ततोऽन्यत्राकृत्यर्थ एव भविष्यतीति । तदसत् । न्यायेन हि स्थितमेकस्य शब्दस्यार्थैक्यमनवस्थितसंबन्धानेकादृष्टवाचकशक्तिकल्पनविकल्पदोषप्रसङ्गात् । संबद्धानां चार्थानामन्यतराभिधानेनैवेतरत्र प्रतिपत्तिसिद्धेः । कथं तर्ह्याकृतिप्रत्यय इति चेद् अत आह । विभागादिति । यतस्तु नित्यमेव व्यक्त्याकृत्योरविभागस्तस्माद्व्यक्तिरभिहिता सती शक्नोत्येवाकृतिं गमयितुम् । तदुक्तं तद्भूताधिकरणे । यस्य तु पदस्य योऽर्थोऽभिधेयत्वेनाश्रितस्तस्य तत्परिहारासंभवादवश्यं तत्रस्थस्यैवार्थान्तरं लाक्षणिकत्वेनाभ्युपगन्तव्य-

(१) भाजनम् । पा० ।

मित्यपि चाकृतिपदार्थकस्य व्यक्तिषु साधारणानैकान्तिकत्वा-न्निर्णयो न स्याद्व्यक्तिपदार्थकस्य पुनरत्यन्तान्तर्भूताकृतिनिश्चय-सिद्धेर्न शब्दव्यापारकल्पनोपपत्तिः । तस्माद्व्यक्तिरेव शब्दार्थो नाकृतिः । न च विकल्पसमुच्चयसंबन्धसमुदायान्यतरविशिष्टान्य-तराभिधानपक्षाः संभवन्त्यविभागादेव सर्वेषामपि ज्ञानसिद्धेः ॥

अपि चाद्रव्यशब्दत्वाद्व्यक्तेरेवाभिधेयता ।
सामानाधिकरण्यं हि नाकृत्यर्थगुणार्थयोः ॥

गोशब्दादीनामाकृतिवचनत्वे गौः शुक्लो ऽरुणया पिङ्गाक्ष्यै-कहायन्या गवा क्रीणातीति षड् गावो देया एकां गां दक्षिणां दद्यादित्येवमादिषु प्रयोगेषु सर्वेषां जातिगुणमात्रवचनत्वा-त्सामानाधिकरण्यं न प्राप्नोति ॥

गोत्वस्य नहि संबन्धः शुक्लत्वारुणिमादिभिः ।
येन षष्ठ्यपि तावत्स्यात्कुतस्त्वेकार्थवृत्तिता ॥
नहि गोत्वाकृतिः शुक्ला नारुणा नापि षड्गुणा ।
व्यक्तिस्त्वेवंगुणा तस्माद्व्यक्तेरेवाभिधेयता ॥
मम हि व्यक्तिशब्दत्वात्सिध्यत्येकार्थवृत्तिता ।
तव त्वद्रव्यशब्दत्वाद्भवेद्भेदो गवाश्ववत् ॥

जातिगुणविशिष्टव्यक्तिवचनत्वेन शुद्धव्यक्तिवचनत्वेन वा प्रत्य-क्षे भवति सामानाधिकरण्यं तच्च तत्र द्रव्यम् । एवंविधमपि स-मानद्रव्यशब्दत्वं त्वत्पक्षे न स्यादिति नञा तदभावप्रसङ्गं दर्श-यति । यत्तु भाष्यकारो विपरीतार्थेन द्रव्यशब्देनैव तदाश्रयगु-णलक्षणया नञ्समासमर्थसमासमङ्गीकृत्य न द्रव्याश्रयवचनः शब्दो भवेदाकृतिवादिन इत्याह । तदतिक्लिष्टं व्यधिकरण-निर्दिष्टगुणप्रयोगाच्च चेत्युपेक्षितव्यम् । तत्रापि चैवमक्षरार्थमा-

त्रसंभवयोजना । द्रव्याश्रयस्य गुणस्य यः शब्दो ऽद्रव्यशब्दः स श्चाकृतेर्निर्गुणत्वादेकवाक्यसंबन्धं गोत्वं शुक्लमित्यादिवन्न प्रतिपद्यते । सामानाधिकरण्यचोद्यं तु स्वपक्षेप्यविशेषात्तदानीमप्यनुपपन्नमेवेति पूर्ववैव व्याख्या कर्त्तव्या । किं च नैवेष्टकाभिराकृतिसंपादनमभ्युपगतं यतः स्वभावात्स्वाख्याद्यारब्धद्रव्यसमवायित्वेनोपालम्भः स्यात्पिष्टपिण्डसिद्धवत्सादृश्यसंपत्तिः पक्षद्वयेपि चोदनार्थः सा त्वाकृत्यन्तरविलक्षणशयेनाकृत्या स्यान्न तु व्यक्त्यन्तरविलक्षणशयेनविशेषेणासाधारणेन वा । निर्विकल्पत्वात्सामान्यविशेषानपेक्षं व्यक्तिमात्रसादृश्यमविधेयं, सर्वद्रव्येषु तुल्यत्वात् । एकव्यक्तिपरिग्रहाच्च व्यक्त्यन्तरेण सादृश्यं न कार्य्यं स्यात् । तस्माच्छ्येनविल्क्रियाव्यक्तौ शब्दार्थेन संभवति । न साधकतम इति । नह्येवं स्मृतिः श्येनश्चीयते इति श्येनचित्कर्मण्यग्न्याख्याया”मिति हि सा श्येनं चयनेन साधयेदितीप्सिततमत्वम् । तत्रापि मुख्यासंभवात्सादृश्यपरिग्रहः । असाधारणे शब्दप्रवृत्त्यसंभवादव्यपदेश्यत्वेन च सर्वत्राविशेषात्सामान्याकारेण च निरूपणे विकल्पाद्व्यापकापेक्षया व्याप्यसामान्यस्य नैवं विशेषव्याप्यापेक्षयेतरदाकृतिः । तत्र विशेषपक्षे संबन्धानन्वाख्यानव्यभिचारसामान्यबुद्ध्यभावप्रत्यर्थशक्तिकल्पनादयो दोषाः । न च यत्र संशयस्तत्प्रत्याय्यं भवतीति निर्विषयता शब्दस्य । एतेन स्वतन्त्रोभयाभिधानमार्गः प्रत्युक्तः । व्यक्तिविशिष्टाकृतिमार्गोपि नागृहीतविशेषणेतिन्यायाद्व्यक्तेः प्रथमग्रहणाप्रसङ्गात् । संबन्धसमुदाययोरपि स्वरूपप्रत्ययाभावात्सर्वत्र चाविशेषादवश्यं संबन्धिसमुदायिविशेषणताभ्युपगन्तव्या भवति । तत्रापि शक्तित्रयकल्पना । व्यक्त्यंशे चोक्तदोषप्रसङ्गः । न च

व्यक्त्याकृत्योर्भिन्नकार्ययोर्गुणप्रधाननानावस्थयोः समुदायोपगमनं युक्तमनत्यन्तभेदाच्च भिन्नधर्म्मौ संबन्धसमुदायौ न युक्तौ। आकृतिविशिष्टोपि व्यक्तिविशेषो नैव प्रतीयते व्यक्तिविशेषबुद्ध्यभावाद् व्यक्तिमात्रमिति चेन्न । तदानीं तस्याकृतितोन्यत्वेनानिरूपणात्। मात्रशब्दो हि सामान्यवाचीत्याकृतिरेवोच्यते । नानाकारेषु च वस्तुषु तद्भेदानुसारित्वाच्छक्तीनामन्वयव्यतिरेकाभ्यां गोत्वाकारनिबन्धनैव गोशब्दवाच्यत्वशक्तिर्गम्यते । तदेकाधारसामान्यान्तरावगतिर्विशेषाकाङ्क्षा वेत्यर्थव्याप्यव्याप्तिभ्याम् । अनत्यन्तव्यतिरेकाच्चाकृतेरमूर्त्तत्वाद्याश्रयदोषाप्रसङ्गः। सा हि प्रतीयते निष्कृष्टरूपा क्रियायोगिनी तु व्यक्त्युपेता भवत्येवेति प्रोक्षणावेक्षणादि तु न कथं चिन्न संभवति। विशसनाद्यपि तु व्यक्त्यव्यतिरेकापेक्षया संभवत्येव । तथाहि। पश्वादिष्वपनीताङ्गेषु विशेषबुद्ध्यभावात्सामान्यरूपैव विशसनादिविशिष्टा बुद्धिर्दृष्टा। नन्वेवमनित्या ऽऽकृतिः स्यात् तेनांशेनेष्टैवाश्रयान्तराविनाशात्तु सर्वैरप्यविनाशोवश्यमेवेष्टव्यः । तेन यत्तावन्मात्रमेव तस्य विनाशो ऽनेकदेशस्य तु न कथं चिद्विनाशः स्यादित्युभयथा व्यवहारः । अत्यन्तव्यतिरेके तु नैष धर्मविधिविषयो व्यवतिष्ठेत । न च पशुत्व,समूर्त्तत्वात् । तदुपलक्षितं तु यद्द्रव्यं तद्द्रव्यत्वादृते न तादूप्येण गम्यतइत्येकार्थसमवायाव्यापकत्वाच्च द्रव्यं गमयितव्यं, तत्राप्यमूर्त्तत्वे दोषः । आश्रयोपलक्षणाच्च द्रव्यमात्रप्रसङ्गः। विशेषस्तु पशुत्वस्य वा द्रव्यत्वस्य वा ऽव्यापकत्वादगम्यः । न वा प्रतीतं विधिना संबध्यते। न च यत्र संशयस्तत्प्रतीतम् । न चान्यत्रोक्तो धर्मस्तत्रासंभवादन्यत्र कार्यस्तस्मान्न सामान्यकृतो विशेषेषु युक्तः, विशेषा अपि व्यपदे-

शाबलसामान्यमेवेत्यभ्युपगन्तव्यमूर्त्तता । असाधारणेन तु नैव व्यवहारस्त-स्मादनिरूप्यो धर्मविधिविषयः । सामानाधिकरण्यादि च प्रसि-द्धिविपरीतं लक्षणया कल्प्यम् । भाष्यकारेण तु व्यतिरेकाभ्युप-गमेनाश्रयमात्रगतिरुक्ता, विशेषरूपा न कदा चिद् व्यक्तिः प्रतीयते । योप्याश्रयाश्रयिभावः सोप्यौपचारिकः । सामान्याच्च विशेषलक्षणं तत्र नाश्रयितव्यम् । आक्षेप(१)मात्रभावादथ वैत-द्विषय एवायं प्रपञ्चः । किं शब्देनाकृत्या वेति । अन्वयव्यतिरे-काभ्यां चाकृत्येति निर्णयः । यो हि धूमादग्नित्वं प्रतिपद्यते तस्य तैक्ष्ण्येप्याकाङ्क्षा सिद्धा । मानसादपचारादिति । यो हि जा-त्यात्मसामान्यवाचितां हित्वा कं चिदेव विशेषं यत्र संबन्धानुभ-वस्तं वाच्यं मन्यते तस्य सामान्याप्रतीतेर्न विशेषान्तरापेक्षा भवत्यथ वा यथा शब्दात्स्वतन्त्रामाकृतिं बुध्यते नैवं कदा चिदा-कृतिमबुद्ध्वा व्यक्तिमिति । केन तर्हि गोत्वगोशब्दयोर्विशेषः । व्यतिरेकांशस्यैकत्र विवक्षा । गोत्ववानिति तु स्फुटं प्रत्ययेन जातिमदभिधानं विभागोपपत्तेः । सामान्यस्य वोपलक्षणत्वान्न भेदपक्षदोषः । भेदानामेव चायं प्रत्येकं सर्वेषां वाचकः । यस्तू-पादीयमानत्वे संशयः स संख्याधारविषयः । उद्दिश्यमानेषु नि-र्णय एव । गवादिशब्दग्रहणं सर्वनामाख्यातशब्दानामन्तर्भावा-र्थम् । प्रयोजनं सामान्यविशेषशब्दयोरेकविषयत्वात्सामान्यशि-ष्टस्य विशेषशिष्टेनाबाधः पूर्वपक्षे । एवं वा ॥

> गौरित्येवंविधाः शब्दाः साधुत्वेन निरूपिताः ।
> तेषामेवाभिधेयेर्थे व्यापारः क्वेति चिन्त्यते ॥
> चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः ।

(१) आक्षेप इति पा० ॥

क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः ॥
तयोरर्थाभिधाने हि व्यापारो नैव विद्यते ।
यदर्थद्योतकौ तौ तु वाचकः स विचार्यते ॥
वाचकत्वेपि पाश्चात्यमनुयात्येवमादिषु ।
प्रतीयते विशेषो यः संशयेन स नाप्यते ॥
यदि ह्यर्थद्वये बुद्धिर्निपातोच्चारणाद्भवेत् ।
ततो विचारो जायेत न सामान्यधिया विना ॥
आख्यातस्यापि नन्वत्र न युक्तार्थविचारणा ।
द्वितीयादाविदं यस्माद्विस्तरेण करिष्यते ॥
कः पुनर्भाव इत्यादौ विवेकेनार्थनिर्णयः ।
आख्यातस्य कृतस्तेन तच्चिन्ता नोपपद्यते ॥
प्रत्ययार्थस्य भावस्य वाच्यता प्रतिपादिता ।
प्रकृत्यर्थविवेकार्थं विचारः क्रियते ऽधुना ॥
प्रत्ययस्यापि वा तत्र भावार्थत्वे निरूपिते ।
सामान्यं वा विशेषो वा किं वाच्यमिति चिन्त्यते ॥
या चोक्ता भाष्यकारेण यागादेरभिधेयता ।
सिद्धा सेह विवेकार्थं तत्र भावस्य भाषिता ॥
यज्याद्यर्थे ऽपि वा वाच्ये किं सामान्यविशेषयोः ।
अभिधेयमिति प्राप्ता चिन्ता कर्त्तुं क्रियापदे ॥
अपूर्वं भावशब्देभ्यो द्रव्यादिभ्यः किमिष्यते ।
एषा तत्र च चिन्तोक्ता शेषा प्रासङ्गिकी कथा ॥
नामाख्यातपदे तेन कस्यार्थस्याभिधायके ।
किमाकृतेरुत व्यक्तेरिति चिन्ता प्रवर्त्तते ॥
प्रयोगस्य प्रतीतेश्च तुल्यत्वाच्छब्दलक्षणे ।

व्यक्तिपक्षाभिधानाच्च संशयः प्रतिभाति नः ॥
कथं लक्षणसंबन्धश्चिन्तायाः प्रकृतेन वा ।
स्मृतिमूलविचारेण वक्तव्यं त्विदमादितः ॥
इयं प्रासङ्गिकी चिन्ता साधुशब्दे निरूपिते ।
उदाहृतस्य तस्यैव क्रियतेऽर्थविनिश्चयः ॥
वक्तव्यः पूर्वमर्थश्चेच्छब्दरूपनिरूपणात् ।
नहि वाच्यमविज्ञाय साधुत्वमवधार्यते ॥
अनिश्चितेपि वाच्यत्वे व्यक्त्याकृत्योर्विवेकतः ।
साधुत्वं शक्यते ज्ञातुं तेन वाच्यमिहोच्यते ॥
वाच्यमात्रे हि साधुत्वमविज्ञाते न लभ्यते ।
न चाकृत्या न च व्यक्त्या विना तत्रोपपद्यते ॥
अथ वोक्तेन मार्गेण सर्वा व्याकरणस्मृतिः ।
प्रमाणमिति सिद्धस्य किं चिदत्र विचार्यते ॥
व्यक्तिर्वाच्येति विज्ञानं न सन्मूलमसंभवात् ।
तेन व्याकरणेपीदृग् न प्रमाणं स्मृतिर्मता ॥
स्मृतेस्तेनापवादोयं प्रामाण्यस्य क चित्कृतः ।
युक्तो लक्षणपादाभ्यां पूर्वया चापि चिन्तया ॥
ननु चाकृतिपक्षेपि व्यक्तावेव क्रियाक्रिये ।
शब्दार्थे संभवात्तेन किमर्थैषा विचारणा ॥
यद्यप्येवं न भेदोस्ति वेदार्थकरणे नृणाम् ।
दधि विप्रेभ्य इत्यादौ फलं लोके भविष्यति ॥
व्यक्तिपक्षे विकल्पः स्यात्कौण्डिन्ये दधितक्रयोः ।
सामान्यवाक्यदौर्बल्यात्तक्रमेवेतरत्र तु ॥
१८ वेदेपि च विशेषोस्ति व्रीहिप्रोक्षणचोदके ।

दध्नेत्यादिषु भेदश्च जायते होमचोदके ॥
प्रोक्षणं पूर्वपक्षेऽपि कर्त्तव्यं लौकिकेष्वपि ।
व्रीहिषु श्रुतिसामर्थ्याद्बाधित्वा सन्निधिक्रमम् ॥
प्रकृतेष्वेव सिद्धान्ते श्रुतिसन्निध्यनुग्रहात् ।
तत्रापि कृत्स्नमस्त्येव व्रीहित्वं हि श्रुतीरितम् ॥
एवं होमेऽपि दध्यादौ प्रकृतेऽप्रकृतेऽथ वा ।
प्रकृते श्रुतिवाच्यस्य होमत्वस्यापि संभवात् ॥
सोपपत्तिकमन्यच्च वक्तव्यमनया दिशा ।
कर्त्तव्या तेन यत्नेन चिन्तेयं सप्रयोजना ॥
ननु गौरितिशब्दादौ सर्वमेतद्विचारितम् ।
तेन तेन गतार्थत्वात्पुनश्चिन्ता न युज्यते ॥
आकृतेरभिधेयत्वप्रतिज्ञा केवला कृता ।
तत्रेदानीं सहेतुत्वं तस्या एवाभिधीयते ॥
यथा चाकृतिरित्यादौ भाष्यकारेण चोदितम् ।
पुनरस्याः प्रतिज्ञाया हेतुरप्यभिधास्यते ॥
यद्वोक्तस्तत्र सद्भावः शब्दार्थत्वमिहोच्यते ।
या तु शब्दार्थता प्रोक्ता सेह सिद्धा न चिन्तिता ॥
उक्ते वाप्यभिधेयत्वे जातेः सद्भावसिद्धये ।
व्यक्तिर्वाच्या न वेत्येतद्गतार्थं विचार्यते ॥
एतच्चिन्ताप्रसिद्ध्यर्थमिदं तावद्विचार्यते ।
शब्दार्थौ लौकिकौ वेदे किमन्याविति संशयः ॥
एकत्वे सति कर्त्तव्यो विचारः शब्दवाच्ययोः ।
भेदे तु संशयाभावान्न चिन्तावसरो यतः ॥
शब्दार्थेन न कार्यं हि व्यवहारेऽर्थलक्षणे ।

लौकिकव्यवहारार्थं तेनेदं न विचार्यते ॥
वेदे तु प्रत्यभिज्ञाने शब्दार्थविषये सति ।
विवेकः शक्यते ज्ञातुं प्रतीतेर्वाच्यगम्ययोः ॥
अलौकिके च शब्दार्थे वाच्यवाचकरूपयोः ।
अज्ञातयोर्न जायेत संदेहो वाच्यवस्तुनि ॥
तेन प्रतीतशब्दार्थे निर्णयार्थमिदं पुरा ।
एकत्वं विद्यते नेति चिन्त्यं शब्दाभिधेययोः ॥
संख्याभावादिति ह्येतन्ननु स्पष्टं निरूपितम् ।
शब्दस्य प्रत्यभिज्ञानान्नान्यतोच्चारणान्तरे ॥
अभेदकारणं चात्र प्रत्यभिज्ञानमेव ते ।
अन्यत्रूपचयत्वेन तेन चिन्ता न युज्यते ॥
लौकिकेष्वेव शब्देषु तत्राभेदः प्रसाधितः ।
वैदिकानामभेदार्थं चिन्तनीयमिदं पुनः ॥
व्यपदेशादिभेदाच्च कथं भेदो न जायते ।
तत्रानुक्तमिदं वक्तुं विचारोयं प्रवर्त्तितः ॥
एकत्वेपि च शब्दस्य सिद्धे तत्रेह चिन्त्यते ।
किमर्थो भिद्यते नेति तेनाप्यपुनरुक्तता ॥
अर्थाभेदे च चिन्तेयं शब्दाभेदे तु सत्यपि ।
घटते कस्य वाच्यत्वं व्यक्त्याकृत्योर्द्वयोरपि ॥
व्यपदेशादिभेदेन शब्दे च प्रत्यभिज्ञया ॥
भेदाभेदनिमित्ताभ्यां क्रियते संशयोद्भवः ।
किं प्राप्तमुच्यते भिन्नौ शब्दार्थौ लोकवेदयोः ॥
व्यपदेशस्य भिन्नत्वादाख्याया लक्षणस्य च ।
स्वरोच्चारणभेदाच्च लोपव्यत्ययदर्शनात् ॥

स्वरयूपादिशब्दैश्च स्पष्टभेदैः सह श्रुतेः ।
अनध्यायादिभेदाच्च शूद्रोच्चारणवर्जनात् ॥
अश्ववालादिशब्दानां स्पष्टार्थान्तरदर्शनात् ।
अग्न्यादीनां च भिन्नत्वं भाष्ये यदभिधीयते ॥
तदयुक्तं क्रियाभेदे कर्तृभेदो हि नेष्यते ।
हन्तिकर्तृत्वमग्नेश्च पदार्थेभ्यः प्रतीयते ॥
अशाब्दं वह्निशब्दस्य तद्वाच्यं कथमुच्यते ।
हननं किं कृतं नेति प्रमाणं चात्र नास्ति नः ॥
असता कथमन्यत्त्वं कर्म्मणातः प्रतीयते ।
अपूर्वे वृत्रशब्दार्थे क्रियाशब्देऽप्यलौकिके ॥
हन्तिकर्त्तरि वह्नित्वं कथमध्यवसीयते ।
स्तुतिमात्रपरत्वाच्च न वह्नित्वं विधीयते ॥
अक्रियत्वाच्च भाष्योक्तैर्वाक्यैरित्यभिधास्यते ।
तेनोक्तस्यैव शब्दस्य त्रिवृदादेर्नवादिषु ॥
वृत्तिरर्थेष्वपूर्वेषु वक्तव्या भेदसिद्धये ।
यच्चान्यदिदमित्याह रूपभेदं क्रियाश्रुतेः ॥
तदसत्यं न शब्दस्य भेदोऽर्थगुणकारितः ।
तेन स्वरादिभेदेन वक्तव्या भिन्नरूपता ॥
पूर्वोक्तेनैव मार्गेण नार्थभेदनिबन्धना ।
तस्माच्छब्दार्थयोर्भेदः स्पष्ट इत्यवधारिते ॥
तावेव वेदे शब्दार्थौ लोके याविति भाष्यते ।
वेदस्यैव प्रसज्येत सकलस्याप्रमाणता ॥
अविज्ञातार्थसंयोगात्स्थितप्रामाण्यबाधया ।
प्रयोगस्याग्निहोत्रादेश्चोदनायाश्च जायते ॥

अभावः प्रत्ययार्थस्य विधेरप्रतिपादनात् ।
अर्थान्तरे च शब्दस्य न प्रयोगो विधीयते ॥
वेदेनाशास्त्रहेतुत्वात्संबन्धस्येति हि स्थितम् ।
किं चाविभक्तरूपत्वं प्रत्यभिज्ञायते स्फुटम् ॥
वैदिकेष्वपि शब्देषु प्रत्यक्षेण पुनःपुनः ।
यद्वा विभागशब्देन शब्दस्योच्चारणे सति ॥
गोत्वबुद्धेः समानत्वान्न भेद इति कीर्त्त्यते ।
लक्षणस्याविभक्तत्वं शब्दानां वेदमुच्यते ॥
सर्वथा शक्यते भेदो न वक्तुं शब्दवाच्ययोः ।
एकत्वे याज्ञिकानां च प्रसिद्धिरनुगृह्यते ॥
मीमांसा चापि वेदार्थतत्त्वनिर्णयकारणम् ।
व्यपदेशादिभेदैश्च न भेदोऽत्रानुमीयते ॥
प्रत्यक्षप्रत्यभिज्ञाने वेदशब्दे ऽन्यरूपता ।
व्यपदेशादिभेदश्च स्वरभेदादिकारितः ॥
स्वरादयश्च भिद्यन्ते वेदत्वात्किमिहोच्यते ।
स्वरयूपादिशब्दानामन्यत्वेनेतरत्र च ॥
नान्यत्वं युज्यते बाधात्प्रत्यक्षप्रत्यभिज्ञया ।
वचनाद्धर्मभेदस्तु शूद्रवर्ज्जिततापि वा ॥
धर्म्मावुच्चारणस्यैतौ न शब्दस्य स्वरश्च यः ।
अश्ववालादिशब्दार्थभेदे वचनकारिते ॥
न च भिन्नत्वमन्येषु प्रज्ञातार्थेषु युज्यते ।
उक्तानानां च केषां चिद्दक्षतां न विधीयते ॥
गोत्वं तेषामसिद्धत्वात्पदार्थाग्रहणादपि ।
विधेरन्यस्य शेषत्वात् स्तुतिरेषा ऽवगम्यते ॥

उक्तानेत्यादिका तेन नातो भेदः प्रतीयते।
तस्माद्यावेव शब्दार्थौ लोके पूर्वं निरूपितौ॥
वेदे तावेव विज्ञेयाविति सिद्धं प्रमाणवत्।
यदा चैवं तदा युक्ता चिन्तेयं क्रियतेऽधुना॥
किमाकृतेः पदार्थत्वं, किं व्यक्तेः, किं द्वयोरिति।
बहवः प्रतिभान्त्यत्र पक्षाः प्रतिपदं च ये॥
ते च सर्वेऽभिधीयन्ते व्यामोहविनिवृत्तये।
गौरित्युच्चरिते सप्त वस्तूनि प्रतिभान्ति नः॥
जातिर्व्यक्तिश्च संबन्धः समूहो लिङ्गकारके।
संख्या च सप्तमी तेषामष्टपक्षी द्वयोर्द्वयोः॥
किं जातिरेव शब्दार्थो व्यक्तिरेवाथ वोभयम्।
किं विकल्पोथ संबन्धः समुदायो निरूप्यताम्॥
जातिर्व्यक्तिविशिष्टा वा व्यक्तिर्ज्जातिविशेषिता।
जातिसंबन्धयोरेवं सामान्यसमुदाययोः॥
जातिकारकयोश्चैवं संख्यासामान्ययोरपि।
लिङ्गसामान्ययोरेवमेकैकस्येतरैः सह॥
अष्टौ पक्षा नियोक्तव्याः षड्भिः प्रत्येकमुक्तवत्।
एवमानन्त्यमेतेषां पक्षाणामिह गम्यते॥
पूर्वपक्षेपि चत्वारो भाष्ये चैते प्रदर्शिताः।
व्यक्तेरेवाभिधेयत्वं द्वयोर्वा स्वप्रधानयोः॥
व्यक्तेर्ज्जातिविशिष्टाया विपरीतमथापि वा।
उपन्यासेन चैतेषां ज्ञेयाः सर्वे प्रपञ्चिताः॥
निराकरणयुक्त्या च निषिद्धा इति नोदिताः॥

तेनाद्यौ द्वावेव पक्षौ विचार्य्येते किमाकृतिः शब्दार्थो, व्यक्ति-

रिति । भाष्यकारेण च संशयकारणमुक्तं सामान्यप्रत्ययाद्व्यक्तौ च क्रियासंभवादित्येतदयुक्तं, व्यक्तेरपि प्रतीयमानत्वात्कथं जातेरेव प्रतीतिरुपपत्स्यते । यदि च व्यक्तिर्न संप्रतीयेत ततः संशय एव न स्यात्किमभिधीयते ऽनेनेति । न च क्रियासंभवो ऽभिधेयत्वे कारणाव्यक्त्यन्तराणामपि प्रसङ्गात् । तेन पूर्वोक्तमेव संशयकारणं मन्तव्यम् । प्रयोगप्रतीत्योः साधारणत्वाच्छास्त्रान्तरे व्यक्तिपक्षाभ्युपगमात्संशयः । यदा शब्द उच्चारिते सामान्यप्रत्ययाद् व्यक्त्याकृत्योः सामान्यात्तुल्यात्प्रत्ययाद् व्यक्तौ च शब्दादाकृतावालम्भनस्पर्शनप्रेक्षनसदृशचयनादिक्रियासंभवात्सामान्ये व्यक्तौ च प्रत्ययात्क्रियासंभवादिति चोक्तम् । का पुनराकृतिः का व्यक्तिरिति । कथं पुनरयं प्रश्नो यदा गौरित्येतस्य शब्दस्य कोर्थ इत्यत्र जातिर्निरूपिता । नैष दोषः । येनैतन्न ज्ञातमसौ पृच्छति का पुनराकृतिः का व्यक्तिरिति । संदेहाद्वा ऽत्र पुनरुभयस्मिन्प्रतीयमाने का व्यक्तिः कियती वा जातिरिति । वैपरीत्येन वा कश्चित्पृच्छति यदा शावलेयादिपिण्डान्न किंचिद् व्यक्तं वस्त्वन्तरं भिन्नमुपलभ्यते तदा कुतो ऽयं विवेको व्यक्तिरियं जातिरियमित्यथ वा व्यवहारार्थं सर्वैव चिन्ता क्रियते जातेश्च पदार्थत्वेपि व्यक्तौ क्रियासंभवान्निष्प्रयोजना चिन्ता यतस्त्वसौ प्रयत्नेनैतद्विचारयति तेन नूनं काप्यस्य पिण्डादत्यन्तभिन्नव्यवहारयोग्या जातिरभिप्रेतेत्यभिप्रायः । तत्राह द्रव्यगुणकर्म्मणां सामान्यमात्रमाकृतिरिति । यौ तावदज्ञानसंशयवादिनौ तयोः स्वरूपकथनमात्रेणैव निराकरणं वक्तव्यम् । यस्तु विपरीतवादी तस्यैव निराकरणमभिधीयते । यद्यपि जातिर्व्यक्तेरत्यन्तभिन्ना नोपलभ्यते, तथापि शवलाकारे तस्मि-

नुपलभ्यमाने सामान्यबुद्धेरालम्बनं प्रथमपादोक्तेन न्यायेनाकृतिरितरा व्यक्तिः । न चानेन ग्रन्थेन जातेः सद्भावः प्रमाणं वा प्रतिपाद्यते व्यक्तेर्विवेकः केवलः कथ्यते । तेनैवाभिप्रायेण मात्रशब्दप्रयोगो ऽन्यथा तस्य गतार्थतैव भवेत् । यदप्युक्तं नूनं काप्यत्यन्तभिन्ना जातिरभिप्रेतेति । तस्याप्युत्तरं द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिरभिप्रेता नात्यन्तव्यतिरिक्तेति । द्रव्यादीनां च सर्वेषां यत्सामान्यं सत्तारूपं तदनेन निर्दिश्यते, तन्निर्देशेनावान्तरसामान्यानामपि निर्देशसिद्धिः । यद्वा । सामान्यशब्दस्य प्रत्येकं संबन्धाद्द्रव्यत्वादीनि त्रीणि सामान्यानि निर्दिश्यन्ते सत्तया व्यवहाराभावात् । अथ वा । मात्रशब्दप्रयोगाद्द्रव्यादिषु यावन्त्यवान्तरसामान्यानि महासामान्यं च तत्सर्वमभिधीयते । असाधारणविशेषा व्यक्तिरिति बहुव्रीहिः । असाधारणा विशेषा यस्यां व्यक्तौ सेयमसाधारणविशेषा, न त्वसाधारणाश्च ते विशेषाश्चेति सामानाधिकरण्यं संभवति । उपरिष्टाद्विशेषाधारस्य व्यक्तित्वाभिधानात् । सूतेश्च । तेन सम्यगभिहितं किमाकृतिर्वा व्यक्तिरिति । किं प्राप्तम् आलम्भनप्रोक्षणविशसनादिप्रयोगचोदनाया व्यक्तिपक्षे भावादाकृतिपक्षे चाभावाद्ब्राह्मणो न हन्तव्यः सुरा न पातव्येत्यादिप्रतिषेधचोदनायाश्च व्यक्तिपक्षएव संभवाद्देवदत्त गामभ्याजेत्येवमादिलौकिकव्यवहारचोदनायाश्चोपपत्तेर्व्यक्तिः शब्दार्थ इति निश्चीयते । संख्याकारकोपपत्तेश्च । यदि हि व्यक्तिः शब्दार्थो भवति ततो वृक्षौ वृक्षाभ्यामिति प्रातिपदिकाभिहितासु व्यक्तिषु प्रत्ययाभिहितद्वित्वादिसंख्याकरणादिकारकं वोभयमुपपद्यते, इतरत्र तु जातेरसंख्येयत्वात् कारकत्वाच्चोभयमप्यनुपपन्नम् । लात्त-

णिकव्यक्त्याश्रयणं चापद्येत। तथा च सर्ववैदिकवाक्यार्थानां लाक्षणिकत्वं स्यात्। व्यक्तिपक्षे च पुरुषो देवदत्त इति मुख्यशब्दसामानाधिकरण्योपपत्तिः। जातिपक्षे लाक्षणिकद्वारं सामानाधिकरण्यं कल्पयितव्यं भवेत् तेनापि व्यक्तेः पदार्थत्वमवसीयते। पशुमालभेतेति च श्रुतेर्हृदयजिह्वादिभिर्व्यक्त्यवयवैरुपरिष्टाद् व्यवहारो दृश्यते। न जात्या कर्म्मभिश्च द्रव्यस्यापेक्षितत्वाद् व्यक्तिपक्षेऽपेक्षिताभिधानं नेतरत्र सिद्धस्वरूपायाश्च व्यक्तेरभिधेयत्वं युक्तं नाप्रसिद्धाया जातेरतो व्यक्तिः शब्दार्थः। किमित्युभयं वाच्यं नाश्रीयते प्रयोगप्रतीतिक्रियोपपत्तेरिति चेत्। न। अनेकशक्तिकल्पनाप्रसङ्गादेकाभिधानेनैव संबन्धादितरत्र प्रतीतेरुपपन्नत्वाद् व्यक्तेरेवाभिधेयत्वम्। सामान्यप्रत्ययः कथमिति चेद् व्यक्तिसंबन्धादुपपत्स्यते। यत्रैव क्रियानुपपत्तिस्तत्रैवार्थापत्त्या व्यक्तिवचनत्वं युक्तम्, अन्यत्र तु पूर्वप्रतीतेर्जातिवचनत्वमेव न्याय्यमिति चेत्। न। उक्तमार्गेणानेकशक्तिकल्पनादिदोषप्रसङ्गात्। अनवस्थितशब्दार्थसंबन्धापत्तेः संशयापत्तेश्च। व्यक्तिवादिनः कथं निर्निमित्ता व्यक्त्यन्तरे शब्दस्य प्रवृत्तिरिति चेदाकृतिचिह्ननिमित्तत्वाद् व्यक्त्यन्तरे प्रयोगस्याविरोधः। भाष्यकारस्तु कथं सामान्यावगतिरित्युपन्यस्याकृतिश्चिह्नभूता भविष्यतीत्युत्तरं ददाति, तदसंबद्धम्। कथं सामान्यप्रत्ययकारणे पृष्टे व्यक्त्यन्तरप्रयोगनिमित्तं कथ्यते। तेनाध्याहारेणैतद् व्याख्येयम्। कथं सामान्यावगतिरिति चेत्। व्यक्तिसंबन्धात्। कथं व्यक्त्यन्तरे प्रयोगः, चिह्नत्वादाकृतेरित्येवम्। यद्वा कथं सामान्यावगतिरिति चेदित्युपन्यस्ते पूर्वपक्षवादी सामान्यावगतिमपह्नोतुमशक्नुवन्नाकृतिविशिष्टव्यक्त्यभिधानपक्षं प-

रिगृह्यमाणत्वादाकृतिश्चिह्नभूता विशेषणभूताभिधेया भविष्यति। अ-
नस्य तत्प्रतीतिरचोद्या। तेन केवला विशिष्टा वा व्यक्तिः शब्दा-
र्थः। तथा च षड् देया इत्येवमादिषु षडादिका संख्योपपत्स्यते।
अन्यं तदर्थमिति च व्यक्त्यन्तरे ऽन्यशब्दोपपत्तिस्तद्धर्मता च
भविष्यति। अन्यथा व्यक्त्यन्तरानयनेपि जातेरनन्यत्वादगुण-
त्वाच्चोभयमनुपपन्नं, तस्माद् व्यक्तिः शब्दार्थ इति प्राप्ते ऽभिधी-
यते। नैतद् व्यक्तिः शब्दवाच्येति किं त्वाकृतिः पदार्थ इति वि-
ज्ञायते। श्येनचितं चिन्वीतेति श्रवणाद्‌ध्रि श्येनव्यक्तिं चय-
नेन कुर्य्याद् आकृतिं वेति वाक्यार्थौ स्याताम्। यावदिष्टकादिः
श्येनव्यक्तेः कर्त्तुमशक्यत्वात् स्नाय्वादिभिरप्यनिर्वृत्तेरिष्टकाबा-
धाच्छ्येनव्यक्तेः प्रयोजनकल्पनाच्चिनोतेरमुख्यार्थत्वात्। 'कर्म-
एयग्न्याख्यायां'मिति स्मृतिपरित्यागप्रसङ्गाच्च। चयनेन श्येन-
व्यक्तिं कुर्य्यादित्येवं तावन्नोपपद्यते। तथा ऽऽकृतेरपीष्टकाभिः
कर्तुमशक्यत्वाद्दैवनिर्मितत्वात्प्रयोजनकल्पनाच्चिनोतेरयथार्थत्व-
प्रसङ्गात्स्मृतिबाधाच्चाकृतिं कुर्य्यादित्यपि नोपपद्यते। परिशेषा-
च्छ्येनमिव चितमग्निस्थलं चयनेन निर्वर्त्तयेदिति वाक्यार्थः। तत-
श्च यया कया चिच्छ्येनव्यक्त्या सदृशस्याग्नेश्चेतुमशक्यत्वात्सर्व-
व्यक्तिसादृश्यासंभवादतीतानागतव्यक्तिसादृश्यानुपपत्तेश्च श्ये-
नाकृतिसादृश्यसंपत्तिसंभवाच्चाकृतिः शब्दार्थ इति निश्चीयते॥

अथ कस्माच्छ्येनव्यक्तिभिश्चयनचोदनेयं नाश्रीयते श्येनचितं
चिन्वीतेति। तत्र भाष्यकारेणोक्तरं दक्तमीप्सिततमो नह्यसौ
श्येनशब्देन निर्दिश्यतइति। तदयुक्तम्। नह्यत्र श्येनशब्दः स्वा-
र्थो न च सकलश्येनचिच्छब्दोत्तरकालं श्रुतत्वाद् द्वितीयायास्त-
दन्तो येनेप्सिततमार्थप्रतिपादकः स्यात् तेन कर्म्मण्यग्न्याख्या-

यामिति स्मृतेः श्येनशब्दार्थस्य करणत्वं निषेद्धव्यम्। कर्म्मणि हि कारके चिनोतेः क्विप्प्रत्ययः स्मर्य्यते, यदि चिनोतिरग्न्याख्या भवति। न च चिनोतेः केवलस्याग्निवचनत्वं संभवति। तेन क्विबन्तचिनोतिश्रुतेः श्येनचिच्छब्दस्य सकलस्याग्निवचनत्वं निश्चीयते न श्येनशब्दस्य पृथगर्थता। तेन न श्येनशब्दार्थः करणतया विज्ञायते। यदि वा ऽसौ करणं स्यात् ततो लक्षणाभावात्तृतीयासमासवचनानुपपत्तिर्भवेत्। तृतीया चाश्रुता कल्पनीया। श्रुतकरणत्वे ऽष्टकापरित्यागश्च स्यात्। सत्यां च गतौ प्रतिषिद्धानेकश्येनव्यक्तिहिंसा जायते तेन करणत्वानुपपत्तेः श्येनमिव चितमग्निं चिन्वीतेति वाक्यार्थो ऽतश्चोक्तेन न्यायेनास्य वाक्यस्याकृतिपक्षे संभवादाकृतिः पदार्थ इति। नैतदेवम्। नहि चयनक्रियासंभवमात्रेणाकृतेरभिधेयत्वं लभ्यते। व्यक्तिपक्षे ऽप्युपालम्भनादिक्रियासंभवात्। बहुत्वाच्चालम्भनादिवाक्यानां तदन्यथानुपपत्त्या व्यक्तेरेव पदार्थत्वमवसीयते। अथाकृतिपक्षेऽपि व्यक्तिलक्षणया तान्युपपत्स्यन्त इत्युच्यते तदेतदपि शक्यमेव वक्तुं श्येनवाक्ये व्यक्तिराकृतिर्लक्षणार्थेति। युक्ता चैकत्र लक्षणा नेतरेषु बहुषु। अगत्या वा तृतीयासमासश्रयणं श्येनवाक्ये करिष्यते। संख्याकारकाद्युपपत्तिश्च व्यक्तिपक्षे तेन व्यक्तिः शब्दार्थ इति स्थिते ऽभिधीयते। जातिरभिधेयेति। कुतः॥

पूर्वं सामान्यविज्ञानाच्चिरबुद्धेरनुद्भवात्।
गामानयेतिवाक्याच्च यथा रुचिपरिग्रहात्॥

गोशब्दोच्चारणे हि पूर्वमेवागृहीतासु व्यक्तिषु सामान्यं प्रतीयते तदाकारज्ञानोत्पत्तेः पश्चाद् व्यक्तयः प्रतीयन्ते ऽतश्चाकृतिप्रत्ययस्य निमित्तान्तराभावाद् व्यक्तिप्रत्यये च पूर्वप्रतीत-

सामान्यनिमित्तत्वादाकृतिः शब्दार्थ इति विज्ञायते । यदि च व्यक्तयो ऽभिधेया भवेयुस्ततस्तासां चित्रखण्डमुण्डादिविशेषस्वरूपग्रहणाद्विचित्रा शब्दोच्चारणे बुद्धिः स्याद् एकाकारा तूत्पद्यते। तेनाप्याकृतिः शब्दार्थ इति निश्चीयते। गामानयेति चोदितेऽर्थप्रकरणाभावे यां कां चित्सामान्ययुक्तां व्यक्तिमानयति न सर्वां न विशिष्टाम्। यदि च व्यक्तेरभिधेयत्वं ततः सर्वासां युगपदभिहितत्वादशेषानयनं स्यात्। या वाभिधेया सैवैका ऽऽनीयेत यतस्त्वविशेषेण जातिमात्रयुक्ता ऽऽनीयते तेनापि सामान्यस्य पदार्थत्वं विज्ञायते । व्यक्तिपक्षे च सर्वा वा स्वतन्त्रा व्यक्तयो ऽभिधीयेरन् व्यक्तिविशिष्टो वा समुदायः का चिदेका व्यक्तिरिति। तत्र सर्वव्यक्त्यभिधानं तावदयुक्तम्। अनेकवाचकशक्तिकल्पनाप्रसङ्गादनित्यशब्दार्थसंबन्धापत्तेरशेषव्यक्तिग्रहणाशक्तेश्च संबन्धाग्रहणे सति व्यवहारानुपपत्तेः। नित्यवद् गोशब्दस्याष्टशब्दवद्बहुविषयत्वादेकवचनद्विवचनश्रुत्यसंभवाद्गोशब्दाभिहितासु च सर्वव्यक्तिषु शुक्लगुणाभावे गौः शुक्ल इति सामानाधिकरण्यासंभवात् । पशुना यजेतेति च पशुशब्दोपात्ताभिः सर्वव्यक्तिभिर्यागस्य कर्त्तुमशक्यत्वात्ततश्च वेदाप्रामाण्यप्रसक्तिः। एवं समुदायपक्षोऽपि न संभवति । तत्रापि हि विशेषणत्वेन व्यक्तयोभिधातव्यास्ततश्चोक्तदोषप्रसङ्गः । व्यक्तिव्यतिरिक्तसमुदायकल्पना, तेन च व्यवहाराभावादभिधानानर्थक्यं समुदायिविनाशे च तस्याप्यनित्यत्वादनित्यशब्दार्थसंबन्धप्रसङ्गः । समुदायस्य चैकत्वाद्द्विवचनबहुवचनानुपपत्तिः सामानाधिकरण्यासंभवश्च। तेन चामूर्त्तेन यागाद्यसंभवाद्वेदस्याप्रामाण्यम्। अथैका व्यक्तिरभिधीयतइत्युच्यते तत्रापि संबन्धानित्यत्वं, का

ऽस्यावभिधीयत इत्यस्मानाङ्गावद्वाराणामसंभवः सामान्यप्रत्ययानुपपत्तिर्द्विवचनबहुवचनाभावप्रसङ्गः । प्राक् चाभिधेयव्यक्त्युत्पत्तेरूत्तरकालं च प्रयोगासंभवः । समाने च गोत्वे प्रतीतौ चेयमभिधीयते नेयमिति विशेषकारणं नास्ति । अतः परं भाष्यार्थो यदि चैका व्यक्तिरभिधेया भवेद्व्यक्त्यन्तरे प्रयोगो न स्यादभिधेयव्यक्तेस्तत्राभावादत्यन्तविलक्षणत्वाच्च, सामान्यविशेषविनिर्मुक्ता हि व्यक्तिरित्युच्यते । न च सामान्यविशेषौ मुक्त्वा व्यक्त्यन्तरे ऽन्यदस्ति येन शब्दप्रयोगः स्यात् । ननु च यथैवैका सामान्यविशेषविनिर्मुक्ता तथा द्वितीया यतश्च यथैवैकस्यां सामान्यविशेषविनिर्मुक्तायां शब्दस्य प्रवृत्तिरेवमविशेषादितरत्रापि भविष्यति । यदि सामान्यरूपं विशेषरूपं वा व्यक्त्यन्तरं स्यात्ततो विलक्षणत्वाच्छब्दो न प्रवर्त्तते, यदा तु तदप्युभयविनिर्मुक्तं रूपं तदा तुल्यरूपत्वादयुक्ता शब्दस्य प्रवृत्तिरिति । यद्येवं सामान्यविशेषविनिर्मुक्तत्वादेकत्रेतरत्र च शब्दो वर्त्तते हन्त तर्हि सामान्यविशेषविनिर्मुक्तत्वमेव सामान्यं शब्दस्याभिधेयं स्यादिति सिद्धो नः पक्षः । तस्मादाकृतिशब्दवाच्यत्वे केवलं भवतः प्रद्वेष इति । पूर्वपक्षवाद्याह नैवं मयोच्यते । सामान्यविशेषविनिर्मुक्तत्वाद्व्यक्तौ शब्दो वर्त्तते व्यक्त्यन्तरे वेति । किं तु सामान्यविशेषव्यतिरेकेणान्यापोढवद्व्यक्तिः कथ्यते । तत्र कथं सामान्यमेव तर्हि वाच्यमित्युच्यते यो ह्यर्थः सामान्यस्य विशेषाणां चाश्रयः सा व्यक्तिर्न सामान्यविशेषौ । ततश्च यथैवैकस्यां सामान्यविशेषव्यतिरिक्तायां व्यक्तौ शब्दस्य वृत्तिस्तथान्यस्यामपि भविष्यति । सिद्धान्तवाद्याह । यदि तावत्सामान्यविशेषविनिर्मुक्तत्वाच्छब्दो वर्त्तते ततः सामान्यमेव वाच्यम् । अथ समानं निमित्तं

नास्ति तदा व्यक्त्यन्तरे वृत्तिर्न प्राप्नोति । तदभावेपि चेद्वर्त्तेत ततोऽश्वव्यक्तावपि वृत्तिप्रसक्तेरतिप्रसङ्गः स्यादिति । नैवम् । सामान्यनिरपेक्षायामेव शब्दप्रवृत्तौ प्रयोगकृतव्यवस्थाश्रयणान्नातिप्रसङ्गो भविष्यति । यद्येवं प्रयोगवशेन शब्दो वर्त्तेत ततोऽद्य जातायां गवि न दृष्ट इति शब्दो न प्रवर्त्तेत तेन प्रयोगकृता चेद्व्यवस्था क्व चिदप्रसङ्गो न चेदतिप्रसङ्ग इति । यत्तु भिन्नासु व्यक्तिषु सामान्यप्रत्ययो न प्राप्नोत्ययमपि गौरयमपीति तदिहातिप्रसङ्गापादनेन न संबध्यतइति व्यक्त्यन्तरे प्रयोगो न प्राप्नोतीत्यस्मिन्नवसरे वक्तव्यम् । शक्त्या तर्हि व्यवस्था भविष्यति यत्र शक्तः शब्दस्तत्र वर्तिष्यते प्रयोक्ष्यते च यत्र तु शक्तिर्नास्ति तत्र प्रयोगप्रवृत्ती न भविष्यतस्ततश्च गोव्यक्तिष्वेव शक्तेः प्रयोगव्यवस्था भविष्यति । नैवमपि व्यवस्था लभ्यते । प्राक् प्रयोगाच्छब्दशक्तेरविज्ञानात्प्रयोगप्रतीत्यधीनं हि शब्दशक्तिज्ञानं तत्कथमिवानुत्पन्नं प्रयोगकाले व्यवस्थाकारणत्वेनाश्रयितुं युक्तम् । यद्यपि श्रोता प्रयोगाच्छक्तिं जानाति तथापि प्रयोक्ता कथं ज्ञातं गोव्यक्तावयं शक्तः शब्दो नाश्वव्यक्ताविति, तेनाश्वव्यक्तावपि प्रयोगः प्राप्नोति । जात्या किमिति व्यवस्था नाश्रीयते यत्र गोत्वमुपलक्षणं तत्र शब्दो वर्तिष्यते यत्र तन्नास्ति तत्राश्वव्यक्त्यादौ वृत्तिर्न भविष्यति ततश्च व्यवस्था सिद्धिरिति । सत्यमेवं सिध्यति, किं त्वापन्नो भवानस्मत्पक्षमाकृतिर्वाच्येति । नह्यनभिधाय गोत्वमुपलक्षणं गोव्यक्तावेव प्रयोगव्यवस्था लभ्यते तच्चेदभिहितं सिद्धमाकृतिशब्दार्थत्वमिति । पूर्वपक्षवादी तु द्वितीयं पूर्वपक्षमुपन्यस्यति सत्यमाकृतिरभिधीयते किं तु गुणत्वेन स्थिता व्यक्तिः प्राधान्येन शब्दार्थः । न चावयोरुभयं नाभिधीयतइति प्रतिज्ञा ।

कस्य चित्प्राधान्येन किं चिदभिधेयतया विवक्षितं किं चिद्गुणत्वेन, तदुक्तं व्यक्तिः प्राधान्येनाभिधेयेत्येवं सति प्रयोगव्यवस्थोभयप्रतीतिश्च तथालम्भनादिक्रियोपपत्तिश्च भविष्यति । इतरस्त्वाह । नैवं लभ्यते । जातिश्चेत्पूर्वमभिधेयत्वेनाभ्युपगता ऽत्रैव शब्दस्योपक्षीणशक्तित्वान्न व्यक्तिवचनता लभ्यते । न चाकृतिसंवेदनेनापि व्यक्तिप्रतीतेरन्यथाप्युपपन्नत्वात्सत्यां गतावनेकार्थता युज्यते ऽभ्युपगन्तुम् । अर्थापत्त्या च शब्दस्य वाचकशक्तिः कल्प्यते । सा च यदा व्यक्तिप्रतीतेरन्यथाप्युपपन्नत्वात् क्षीणा तदा वाचकशक्तिकल्पनायां प्रमाणं नास्ति । न च सामान्यविशेषवचनत्वं शब्दस्य हृयुगश्वादिशब्दानामनेकसामान्यवचनत्वात् । अन्वयव्यतिरेकाभ्यां च व्यक्तेरशब्दार्थत्वं निश्चीयते । अनुच्चरितेपि शब्दे प्रतीतसामान्यस्य व्यक्तिप्रतीतेः श्रुतिशब्दस्यापि चागृहीतसामान्यस्य व्यक्तिप्रत्ययाभावात्तेनाकृतिरेव शब्दार्थ इति । सांप्रतं पक्षान्तरमुपन्यस्यति । अथ व्यक्तिविशिष्टायामाकृतौ किमिति न वर्त्तते । तदेतत्प्रयोगप्रतीतिक्रियासंभवत्वेन वा पक्षान्तरमुपन्यस्तम् । यद्वा व्यक्तेरेव शब्दार्थत्वं साधयितुमिदमुच्यते । अनेनाभिप्रायेण कदा चित्सिद्धान्तवाद्याकृतेः शब्दार्थत्वमनेनाभ्युपगतमेवालम्भनादिक्रियासंभवश्च भविष्यतीत्यनेनाभिप्रायेण व्यक्तेरपि गुणत्वेनाभिधानमिच्छति ततोहं पूर्वं तावद्विशेषणे वर्तितुमर्हतीति व्यक्तिवचनत्वमेव साधयिष्यामीति । इतरस्तु तदभिप्रायं ज्ञात्वोत्तरं वदति व्यक्त्यन्तरविशिष्टायां प्रयोगो न प्राप्नोतीति । यदि हि व्यक्तिविशिष्टा जातिरभिधीयते ततो व्यक्त्यभिधानपक्षोक्तदोषप्रसङ्गः, अनेकशक्तिकल्पनादिरूपो व्यक्त्यन्तरे प्रयोगश्च न प्राप्नोति विशेषणस्यान्यत्वादिति । तेन

जातिरेव शब्दार्थः । ननु गुणभूता प्रतीयते ऽतस्तान्येन प्रधाने-नाभिधेयेन भवितव्यमिति । नैवं शब्देन तावत्सैवाभिधीयते । यदि विवक्षावशेनार्थाद्गुणत्वं प्राधान्यं वा भवति भवतु नाम न तावता शब्दाभिधेयत्वं व्याहन्यते । यदा चासौ शब्देनाभिधीयते तदा गुणत्वं नैव प्रतीयते तेनार्थाद्गुणत्वप्रतीतिरदोषः । ननु पूर्वपक्षोक्तैः कारणैर्व्यक्तेरेव शब्दार्थत्वं युक्तं व्यक्त्यन्तरे प्रयोगो न प्राप्नोतीति चेत् । आकृतिश्चिह्नभूता भविष्यति । यथा ऽनभिधीयमानमपि काकनिलयनं देवदत्तगृहशब्दस्य स्वार्थमभिदधतश्चिह्नभूततां प्रतिपद्यते तद्वदाकृतिश्चिह्नं व्यक्त्यभिधाने भविष्यति । भाष्यकारेण तु दण्डशब्दो दृष्टान्तत्वेनोपात्तो यथा तेन न नाम किल दण्डो ऽभिधीयते । अथ च दण्डविशिष्टः पुरुषः प्रत्याय्यते तद्वदाकृतावपीति । ननु दण्डिशब्दे प्रकृत्या दण्डो ऽभिधीयत एव कथमुच्यते न च तावद्दण्डोऽभिधीयत इति । कथं चोपलक्षणत्वेनाकृतावुपन्यस्तायां विशिष्टः प्रत्याय्यत इति विशेषणं दृष्टान्ततयोपन्यस्तमिति । नायं दोषः । विशेष्याभिधायक-प्रत्ययाभिप्रायत्वाद्दण्डानभिधानस्य यथा प्रत्ययेन न च तावद् दण्डो ऽभिधीयते । अथ च तद्विशिष्टः पुरुषः प्रत्याय्यते तथेहापि भविष्यतीत्यभिप्रायः । यत्तूपलक्षणोपन्यासे विशेषणस्य दृष्टान्तता न युक्तेति तदुपलक्षणस्यापि विशेषकत्वान्न चोद्यम् । यद्वा केन चित्सामान्येन दृष्टान्तता भविष्यत्यनभिधेयत्वेन विशेष-कत्वेन चेत्यदुष्टं, ततश्च सम्यगभिहितं यथा दण्डिशब्दे तद्वद-त्रापि भविष्यतीति । एवं चाप्रसङ्गातिप्रसङ्गौ न भविष्यत इति । तदेतन्न युज्यते । युक्तं देवदत्तगृहस्य पुरुषस्य च केवलस्याभि-धानं विशिष्टप्रतीतावपि काकनिलयनदण्डयोः प्रत्यक्षदण्डश-

ब्दावगतयोर्विशेषणत्वोपपत्तेः । न तु गोत्वस्यासन्निहितस्येहोप लक्षणत्वं युज्यते । अप्रतीतविशेषणे विशेष्याप्रतीतेर्न च दण्डशब्दवत्तदवयवेन गोत्वाभिधानं प्रतीमो येन द्वितीयावयवेन व्यक्तेरेवाभिधानं स्यात् । अतश्च यदि तावद्गोत्वमभिधीयते ततस्तदेवोक्तेन न्यायेन वाच्यं भवेत् । अप्रतीतस्य विशेषणत्वासंभवात् । उक्तवदतिप्रसङ्गः शब्दप्रयोगस्य प्राप्नोति । न च यथा दण्डिशब्दः केवले दण्डे न प्रयुज्यतइति विशिष्टवचनो ऽवधार्य्यते तद्वदाकृतौ प्रयोगाभावाद्विशिष्टवचनो ऽवधारयितुं शक्यते । श्येनचित्यादावाकृतौ प्रयोगदर्शनादन्वयव्यतिरेकाभ्यां च जातिरेव वाच्येत्यवधार्य्यते । श्येनचिद्वाक्ये केवलायामाकृतौ प्रयुक्तत्वात् । क्व चिदपि चाकृत्या विना व्यक्तिमात्रे प्रयोगादर्शनादेवं येपि संबन्धसमुदायादयः पूर्वपक्षास्तेप्युक्तेन न्यायेन निराकृतास्तेनाकृतिरेव शब्दार्थ इति । ये त्वालम्भनादिचोदनाभावादयो न क्रिया स्यादित्येतत्सूत्रानुभाषिताः पूर्वपक्षोक्ता हेतवस्तेषां सर्वेषामनेन सूत्रेण परिहारोभिधीयते । तदर्थत्वात्प्रयोगस्याविभाग इति । तदर्थत्वादपूर्वार्थत्वादालम्भनप्रोक्षणाद्यङ्गानामपूर्वसाधने प्रयोगेण भवितव्यं द्रव्यं चापूर्वसाधनं यागेन लक्षितत्र्यर्थमाक्षिप्तत्वान्नाकृतिरसमर्थत्वात्तदाभिधानं तु द्रव्यनियमार्थं प्रतिपत्तव्यं न स्वार्थं जातेरनपेक्षितत्वाददृष्टार्थत्वप्रसङ्गात्साधनत्वाप्रतीतेश्च । यदपि जातेः प्रातिपदिकाभिहितायाः करणत्वं प्रतीयते तदपि द्रव्यनियामकत्वेनैव न साक्षादयोग्यत्वात् तेनाकृत्यभिधानस्य द्रव्यनियमार्थत्वाद्द्रव्ये वा ऽऽलम्भनप्रोक्षणसंख्याकारकसामानाधिकरण्यादिसंभवाददुष्टता । तदाह । प्रयोगस्याविभाग इत्याकृतिपक्षे ऽप्यालम्भनादिप्रयोगस्य द्रव्यादवि-

भक्तनैवेत्यथ वाकृत्यभिधानस्य द्रव्यनियमार्थत्वादुक्तवत्प्रयोगस्याविभाग इति । यद्वा । आकृतिव्यक्त्योरत्यन्तभेदाभावात्कदाचिद्व्यक्तिरूपेण द्रव्यमभिधीयते कदा चित्सामान्यरूपेण यथा विवक्षितं तथा शब्दस्योभयरूपवस्त्वर्थत्वाद्व्यक्त्यभिधानेऽपि न प्रयोगस्य विभागो नानारूपतेति । जातेर्वा व्यक्तितोऽत्यन्तभेदाभावाद् व्यक्तौ कृता धर्म्मा जातौ कृता एव भवन्तीति न प्रयोगस्य विभागेन प्रयोजनमिति । यद्वा । आकृतिव्यक्त्योरुभयोर्यागार्थत्वाद्धर्म्माणां च यत्र क्व चन यागसाधने कृतानां प्रयोजनवत्त्वाद्द्रव्यादविभक्ततेति ॥

तस्मादाकृतिपक्षेप्यालम्भनादिसंभवादाकृतिरेव शब्दार्थ इति सिद्धम् ॥

इति श्रीभट्टकुमारिलस्वामिकृतौ मीमांसावार्त्तिके प्रथमस्याध्यायस्य तृतीयः पादः समाप्तः ॥

———

# तन्त्रवार्तिके ।

## प्रथमाध्यायस्य चतुर्थः पादः ।

---

## उक्तं समाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात् ॥ १ ॥

एवं स्मृतिमद्धितस्य वेदस्य प्रामाण्ये सिद्धे ऽधुना वाक्यार्थव्याख्यानावसरे सत्यपरिसमाप्यैव प्रमाणलक्षणं केन संबन्धेन नामधेयचिन्तायाः प्रस्तावः क्रियते । के चित्तावदाहुः । किमुद्भिदादयो गुणस्य प्रमाणम्, उत क्रियाणामेव नामधेयत्वेनेति । तदयुक्तम् । एवं सति हि समस्तमेव शास्त्रं प्रमाणलक्षणादभिन्नं स्यात् । सर्वत्र ह्येतद्विचार्यते, किमिदं वाक्यमस्यार्थस्य प्रमाणमुतान्यस्येति । ये ऽपि चैते द्वे अपि सूत्रे पूर्वोत्तरपक्षौ परिकल्प्यैकाधिकरणत्वेन व्याचक्षते तैरप्युक्तं समाम्नायैदमर्थ्यमित्यनेन सूत्रेण कः सिद्धान्तानभिप्रेतः पूर्वपक्षानुगुणो ऽर्थो विधीयत इति वक्तव्यम् । न ह्युक्तैदमर्थ्यान्तर्भाववचनमुद्भिदादीनामनिष्टम् । तस्माद् द्वयोरप्यधिकरणयोरनुमितपूर्वपक्षयोरुत्तरपक्षसूत्रद्वयमेतदिति व्याख्येयम् । तत्र प्रथमं तावदुद्भिदादीनुदाहृत्य संदेहः क्रियते, किमेते कं चिद्गुणं प्रत्युपयोगं गच्छन्ति, उत नेति । किं तावत्प्राप्तम् । आम्नायस्य क्रियार्थत्वादित्यानर्थक्यम् । आह च ॥

त्र्यंशवेदप्रमाणत्वादुद्भिदादि ततो ऽधिकम् ।

धर्मायानुपयुक्तं सदानर्थक्यं प्रपद्यते ॥

नह्येते विध्यादिष्वन्तर्भवन्ति । साध्यसाधनेतिकर्तव्यानभिधायित्वात् तावच्चोदनाबाह्यत्वं स्तुतिबुद्ध्यभावादर्थवादातिरेकः । कर्माङ्गभूतैवंसंज्ञकप्रकाशयितव्यार्थाभावान्मन्त्रकार्यनिवृत्तिः । न चान्यद्वेदप्रयोजनमस्तीत्यप्रमाणमेवंजातीयका इति । अत्राभिधीयते ॥

सर्वस्य त्रिविभागत्वाद्वेदस्योक्तेन हेतुना ।
उद्भिदाद्यप्रमाणत्वमतिरेकान्न सिध्यति ॥

यदा तदर्थत्रयान्यतमार्थमिति स्थितं तदा विचारः किमर्थमिति । न तावदर्थवादत्वं वाक्यशेषत्वाभावात् । कथं पुनरयं न वाक्यशेषो यावता वायुर्वै क्षेपिष्ठेत्यादिवदेकवाक्यता ऽवगम्यते । नैतदस्ति । विधातव्यस्य हि यः शेषः सो ऽर्थवादः । अयं तु विध्युद्देशादेव नातिरिच्यतइत्यवाक्यशेषः । तत्संभविनश्च स्तुत्युपयोगित्वं न युज्यतइत्युक्तमौदुम्बराधिकरणे । न चैकपदेन स्तुतिर्दृष्टा । न चेह तां प्रतिपद्यामहे । यदप्युद्भिदनं पशूनामनेन क्रियतइत्येवं प्राशस्त्यं कल्प्येत तदपि तृतीयान्तसमुदायाश्रयबलवत्तरकरणत्वप्रसिद्ध्या बाध्यते । अन्यथा हि प्रातिपदिकप्राधान्याद्वा वायुर्वै क्षेपिष्ठेतिवत्प्रथमैव प्रायोक्ष्यत । न चास्य मन्त्रत्वं, ताद्रूप्येणाप्रतीतेः । अध्येतृस्मरणाभावाच्च । न चैकपदत्वात्साकाङ्क्षत्वं करणप्रतीत्या वा स्मारकत्वम् । न चैतदभिधेयः कश्चित्प्रयोगसमवाय्यर्थो दृश्यते । न चासमवेतप्रकाशने कर्माङ्गत्वम् । मान्त्रवर्णिकद्रव्यकल्पनायामपि गौरवम् । न चास्य सूक्तवाकवद्विनियोजिका श्रुतिरस्ति येन मान्त्रवर्णिकद्रव्यकल्पना स्यात् । न चास्य रूपं प्रयोगार्हम् । अतश्चावि-

नियुक्तत्वादिषे त्वादिवदपि नाध्याहारेण निराकाङ्क्षीकृत्य प्रयोगः । स्फुटं च ब्राह्मणेनैकवाक्यत्वमित्यमन्त्रत्वम् । तस्मादिध्युद्देशान्तर्गतस्यैवोत्तराधिकरणेन विचार्यते गुणविधिर्नामधेयमिति । तत्र तावत् ॥

प्रसिद्धेर्बलवत्त्वेन प्रयोजनवशेन च ।
अधिकत्वात्प्रवृत्तेश्च गुणरूपं विधीयते ॥

प्रातिपदिकं तावदुद्भेदनसमर्थे द्रव्ये खनित्रादावयवप्रसिद्ध्या प्रवर्तते । न च समुदायो ऽर्थान्तरवाची लोके प्रसिद्धः । न च लोकादनवगतो(१) ऽर्थो वेदादवगम्यते संबन्धस्य शास्त्राहेतुत्वात् । तृतीयापि च करणवाचिनी, क्रियायाश्च शक्तिमद् द्रव्यं तदाधारा वा शक्तिः करणं, तेनोद्भित्साधनको यागो ऽवगम्यते । न च यागस्योद्भित्त्वं करणत्वं वा क्व चित्प्रसिद्धम् । अर्थवत्त्वात्प्रवृत्तिविशेषकरत्वं विधायकोद्भित्पदपुरुषाणां प्रवृत्तौ विशेषो ऽन्यथा ह्यनुच्चरितसमैव प्रवृत्तिरेषां स्यात् । अथ वा प्रसिद्धत्वाद्गुणविधिरर्थवत्त्वमभिधेयवत्त्वं नामधेयत्वे त्वर्थो न विज्ञायत इति योज्यते । अथ वा भेदेनार्थवत्त्वं हेतुः, उद्भित्पदस्य यजितः फलान्तरत्वात् ततश्च विधिपुरुषयोः प्रवृत्तिविशेष इति वाच्यम् । ननु नामधेयमपि क्रतुं विशिंषदर्थवत्प्रवृत्तिविशेषकरं च स्यात् । नैतदस्ति । कुतः ॥

आकृतेरविधेयत्वाद्धातुना व्यक्तिराश्रिता ।
सा च नाम्ना ऽभिधीयेत जातिश्चेन्नैव नामता ॥

यदा तावद्धातुनैव लक्षणया विधिविषयत्वयोग्यत्वाद्यागविशेषः प्रतिपाद्यते तदा किमपरं तत्र नाम करिष्यति । अथ सा-

(१) दनधिगत इति पाठान्तरम् ।

मान्यमात्रमभिधीयते ततस्तस्यानिष्टमेवैतन्नामेत्यसंबद्धं सिद्ध-त्वादेव च विशेष्यस्य न नामधेयं विधायिष्यतइति वक्ष्यति। यदा च केनापि प्रकारेणोद्भिदादीनां विशेषवचनत्वं तदा तदत्यन्ता-विनाभूतसामान्यवचनत्वेन यजेरनर्थकत्वम्। लाघवं च विधेर्गु-णविधौ भविष्यति। यागानुवादात्। यद्येवं गुणाश्रितत्वाद्विधि-शक्तेर्न तर्हि कर्म विधीयते, तथा च विहिते कर्मणि कस्य गुणो विधीयतइत्यानर्थक्यम्। अत आह। प्रकृतौ ज्योतिष्टोम इति। ननु गुणविधिपक्षे ज्योतिष्टोमेनेत्यस्यापि तत्परत्वादविहितमेव कर्म गत्यभावादिदमेकं कर्मविधानं भविष्यति। तद्व्यावृत्ते च विधायके च गुणस्य विधातुमशक्यत्वाद् ज्योतिष्टोमपदमेवैकं नामधेयम्। अथ वा तदेकं गुणविशिष्टं कर्मविधानमितराणि कर्मानुवादेन गुणविधानानि। नन्वेवं सति सर्वा एकाहाहीन-सत्रचोदना ज्योतिष्टोमस्यैव गुणविधिद्वारेण प्रकरणादनतिरि-क्तेति कर्मान्तराभावान्न ज्योतिष्टोमः कस्य चित्प्रकृतिरिति त-च्छब्देन नाभिधातव्यः। सिद्धान्ताभिप्रायेणाहेति के चित्। अथ वा प्रक्रियतइति प्रकृतिः, प्रकृते ज्योतिष्टोम इत्यर्थः। अथ वा अथैष ज्योतिरित्येवमादीनां करणविभक्त्याख्यातसंस्पर्शा-भावाद्गुणविधित्वानुपपत्तेरेकान्तेन भेदकतया कर्मनामत्वं तद-पेक्षया च ज्योतिष्टोमः प्रकृतिः। ननूत्पत्तिवाक्यशिष्टेन सोमेन ज्योतिष्टोमेन वावरोधाज्ज्योतिष्टोमे गुणान्तरविधानमयुक्त-म्। काम्यत्वादुद्भिदादयो बाधका भविष्यन्ति। नित्ये प्रयोगे च पूर्वगुणस्यार्थवत्ता। अथ वा विशिष्टविहितमपि कर्म स्वरूपमात्रं निष्कृष्य गुणान्तरे विहितं नौत्पत्तिकादिशिष्यते। अन्यथा ग-त्यसंभवाद्विकल्प इति मन्यते॥

## अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वात् ॥ २॥

यदुत्पत्तौ प्रथमज्ञाने ऽर्थान्तरपूर्वकत्वेनैकान्ततो न प्रसिद्धमुद्भिदादि तद्वैदिकव्यवहारे प्रथमोपनिपातात्सामानाधिकरण्येन नामधेयं स्यात्। अथ वैवमपूर्वं कर्म विदधदर्थवद्भविष्यति। अथ वा कस्य नामधेयमिति सन्देहे ऽभिधीयते। यस्योत्पत्तावपूर्वं निष्पद्यते यागस्येत्यर्थः। किं कारणम् ॥

गुणो विधीयमानो हि फले कर्मणि वा भवेत्।
विशिष्टविधिबुद्ध्या वा सर्वथा च न युज्यते ॥

फलं प्रति तावद्विधीयमाने परपदसंबन्धविधानं व्यवहितकल्पना धातोः पारार्थ्यमौत्पत्तिकसोमबाधः। अनदनीयेन च खनित्रादिना ऽत्यन्ताप्रसिद्धेन याग इति दोषास्तथा यागं प्रति गुणविधौ फलपदानर्थक्यम्। सार्वकाम्यप्राप्तज्योतिष्टोमविशेषणत्वे वाक्यभेदः। प्रत्ययव्यापारविप्रकृष्टता धातुपारार्थ्यानदनीययागसोमबाधविकल्पाश्चात्यन्तायुक्ताः। तथा विशिष्टविधौ सर्वपारार्थ्यमनेकविधिशक्तिकल्पना। मत्वर्थलक्षणागम्यमानसामानाधिकरण्यत्यागो ऽनदनीययागस्येति दोषाः। तस्मान्न गुणविधिस्तद्दर्शयति। इतरथा श्रुतिरुद्भिदादीन् वक्ष्यति तद्वतो लक्षयेत्। वक्ष्यन्ती लक्षयेदिति वा ग्रन्थः। प्रातिपदिकसामर्थ्यमुक्त्वा विभक्तिसंबन्धादप्येतदेवावगम्यतइति दर्शयति। यागेन कुर्यादित्यादिना। किं च ॥

विधाने चानुवादे च यागः करणमिष्यते।

तत्समीपे तृतीयान्तस्तद्वाचित्वं न मुञ्चति ॥

यत्करणाभिधायिन्या तृतीययेत्येवमादिषु कारकाणां विभक्त्यर्थत्वाभ्युपगमात्कथं करणवाचिनो हि प्रातिपदिकादित्युच्यते । नैष दोषः । करणाश्रयवाचिनो हीत्यभिप्रायः । अथ वा करणशब्दो यादृशमर्थं ब्रवीति तादृशस्य प्रातिपदिकं वाचकमेव । कृदन्तेन हि कारकविशिष्टं द्रव्यमेवोच्यते न विभक्तिवन्निष्कृष्टा शक्तिः । तथा च करणं करणेन करणायेति च कारकान्तरयोगो दृश्यते । अन्यथा हि विभक्त्यभिहितेनैवैकेन कारकेण वशीकारान्न द्रव्यं कारकान्तरयोगं प्रतिपद्येत । शक्तेस्तु शक्त्यन्तरं नास्त्येव । तस्माच्छक्त्युपसर्जनद्रव्यवचनत्वात् कृदन्तानामुपपन्नं करणशब्दार्थवाचित्वं प्रातिपदिकस्य । तेनैतदुक्तं भवति । यदस्मिन् वाक्ये करणं तद्वाचिनः प्रातिपदिकात्तृतीययोत्पत्तव्यं यागश्चात्र फलभावनायाः करणं न द्रव्यमिति वक्ष्यति । ततश्च यद्युद्भिपदं यागवचनमेवं तृतीयान्तं सदेकवाक्यतां यास्यत्यर्थान्तरवचनत्वे (१) त्वसंबद्धं स्यात् । ननु च ॥

प्रत्यक्षं द्रव्यवाचित्वमुपन्यस्तं कथं पुनः ।
करणत्वानुमानेन बाध्यते व्रीहिसोमवत् ॥

यथैव व्रीहिभिर्यजेत सोमेन यजेतेत्यादीनां करणभूतयागैकवाक्यत्वे सति तृतीयान्तत्वं वैयधिकरण्येप्यविरुद्धमेवमिहापीति । हठ इति । चिरन्तनतडागोदकाच्छादितहरितद्रव्यमुच्यते । यथा तदुत्सार्यमाणमपि स्वच्छन्दतः पुनःपुनरुदकं छादयत्येवं योन्योपि स्वच्छन्दव्यवहारः स हठ इति प्रसिद्धः । तदुच्यते ॥

(१) विषयत्वे इति पा० ।

पदमज्ञातसंबन्धं (१) प्रसिद्धैरपृथक्श्रुति ।
निर्णीयते निरूढं तु न स्वार्थादपनीयते ॥

व्रीह्यादयो ह्यत्यन्तरूढास्ते स्वार्थमपरित्यजन्तः सामानाधिकरण्यमप्रतिपद्यमाना गत्यन्तराभावाद्गुणविधयो विज्ञायन्ते। ये पुनरुद्भिदादयो यौगिकास्तेषां येनैव प्रकारेण यत्नेन द्रव्यवचनत्वं तेनैव कर्मवचनत्वमप्युपपद्यतइति प्रत्यक्षप्रसिद्धानुदासीनायामनुमानेनाप्यज्ञानसंशयव्युदासकरणं न दुष्यति। सर्वशब्दार्थावधारणे ह्ययमभ्युपायो, यत्प्रसिद्धसामानाधिकरण्यं नाम। प्रधानं च करणत्वं यागे लब्धात्मकं शक्नोति प्रातिपदिकमात्मविषयमापादयितुम्। किं च ॥

विभक्त्यर्थानुवादाच्च विधेः स्यान्नाम्नि लाघवम्।
गुणपक्षे विधेयत्वं संख्याकारकयोरपि ॥

त्वत्पक्षे ह्यवश्यं काचिद्विभक्त्यर्थेऽपि प्रत्ययस्य विधिशक्तिः कल्प्या स्यात्। तस्मादवयवद्वारेणास्ति कर्मण्यपि प्रसिद्धिः। ज्योतिष्टोमादेरपि स्वफलोद्भेदनकारित्वादेतन्नामप्रसङ्ग इति चेत्। न। सामानाधिकरण्यावधारितविषयविशेषस्यावयवान्वाख्यानात्। न चास्य ज्योतिष्टोमादिभिः समभिव्याहारोऽस्ति। अथ वार्थापत्तिवशेनैतद्विशेषविषयमेवोद्भेदनं निमित्तं, न चान्यत्र तदस्तीति व्यवस्था। यथा सास्नादिमद्गतगमनविशेषनिमित्तत्वं (२) गोशब्दस्य। अविधायकत्वादित्यस्य व्याख्या न नामधेयं विधायिष्यतइति। संज्ञासंज्ञिसंबन्धरूपेण वृद्धिरादैजित्यादिवद्विधानं सामानाधिकरण्यावयवप्रसिद्धिभ्यां तत्सिद्धेः। ननु नाम-

(१) संदिग्धमिति पा० ।
(२) निमित्तत्वाद् इति पा० ।

धेयार्थौ न विधीयते तदधीनत्वाद्यागविशेषसिद्धेः । इह हि यद्य-
पि संज्ञासंज्ञिसामानाधिकरण्यं नास्ति तथाप्यात्मरूपव्यवच्छि-
न्नमेवार्थं संज्ञा गमयतीति विशेषणविशेष्यभावान्न भिद्यते ।
नन्वेवं शब्दस्वरूपाभिधानं प्रसज्येत । प्रत्यक्षावगतस्वरूपविशि-
ष्टार्थाभिधानाददप्रसङ्गः । सर्वत्र ह्यगृहीतविशेषणा विशिष्टबुद्धिर्न
दृष्टा, न त्वनभिहितविशेषणा । न चैतावता शब्दस्वरूपारोपप्र-
सङ्गः । तदनुरोधेन विद्यमानार्थांशविशेषोद्धरणादित्युक्तं प्राक् ।
नाम्नैव चैवमादीनां प्रकृतितो भेदोऽन्यथा हि तदनवच्छिन्नो
यजिर्गुणफलाद्यर्थं पुनः श्रुतिः प्रकृतिगामित्वान्नैव कर्म भिन्द्या-
त् । अथ वा सर्वनामधेयेषु किं चिदर्थगतमपि विशेषणमस्तीत्य-
रुणैकहायन्यादिवदेव विशेषणविशेष्यता । न च यज्युच्चारणम-
न्तरेणास्य यागविशेषनामत्वमिति न सामान्यस्यानर्थकत्वम् ।
परस्परसंनिधानेन हि नामापि यागविषयं यागोऽप्येतदवच्छिन्नो
न सामान्यमात्रं प्रकृतो वेति लभ्यते । तस्मादुभयोरर्थवत्ता वि-
शिष्टभावनाविधाना(१)च्चोभयो(२)रपि विधानमिति नानुवाद-
त्वम् । एवं च सति न नामत्वं विधित्वमात्रप्रतियोगीति ये पूर्वपक्षे
विध्यन्तर्भावं सिद्धान्ते तु विध्यर्थवादमन्त्रातिरेकं नाम्नां वर्णय-
न्ति तेषामयुक्तमेव । विशेष(३)व्यवहाराङ्गभावाच्च नाप्रवृत्तिवि-
शेषकरता । नह्यात्विग्वरणादिष्वनेनाहं यक्ष्य इति लघुराख्या-
नोपायः स्यात् । दर्शपूर्णमासावारप्स्यमानः स मे दर्शपूर्णमासा-
भ्यामिति गुणोपबन्धो दर्शपूर्णमासाभ्यां स्वर्गकाम इति च फ-

---

(१) विधिना पा० २ । पुस्तकान्तरे ।
(२) विशिष्टविधिना चोभयो पा० १ । पुस्तके ।
(३) अशेष इति पा० ।

लोपबन्धो ऽन्यथा न स्यात् । तस्मान्नामधेयान्येवंजातीयकानीति सिद्धम् ॥

## यस्मिन् गुणोपदेशः प्रधानतो ऽभिसंबन्धः ॥ ३ ॥

इदानीमयौगिकेषु व्रीह्यादिवल्लोकरूढेषु जातिगुणशब्देषु चिन्ता । तत्रानुमानिककरणत्वानुरोधेन प्रत्यक्षप्रसिद्धिभावः संभवतीति पूर्वाधिकरणेनासिद्धिः । नन्वाज्यैः स्तुवते पृष्ठैः स्तुवते बहिष्पवमानेन स्तुवतइत्युत्पत्तिवाक्यत्वादेतान्युदाहर्तव्यानि । तथाहि ॥

उत्पत्तौ नामधेयं वा गुणो वा ऽप्यवधारितः ।
व्यवहाराङ्गतां याति सर्वोदाहरणक्षमा ॥

सा तु नोदाहृता सूत्रकारेण यस्मिन् गुणोपदेश इति गुणवाक्यस्याश्रितत्वात् । अथ किमर्थं तेनैव तदाश्रितम् । यत्र क्व चन प्रतिपादिते फलाविशेषात् । पूर्वपक्षनिराकरणहेतुर्वा वाक्यभेदस्तत्र संभवतीत्युदाहृतम् । अथ वोत्पत्तिवाक्यस्थस्याज्यादिपदस्य पक्षद्वये ऽपि साकाङ्क्षत्वादेकस्यापि निश्चयहेतुर्नास्तीत्यन्यतः सिद्ध्यपेक्षणादनुदाहरणत्वम् । घृतवाचित्वात्तावन्न स्तोत्रनामत्वं विज्ञायते । यान्याज्यानि तैः स्तुवतइति च श्रूयते तत्र कान्येव नामानि कथं वा तेनाभिधीयन्तइति सहाप्युत्पत्तिवाक्येनान्यतः सिद्धिरवाप्तव्या । उत्पत्तिवाक्यस्थितमेव चाज्यादिपदं यथा रूढिं परित्यज्य स्तुतिनामतां प्रतिपद्यते, तथा हेतुर्वाच्य इत्यपेक्षा गुणविधित्वेपि घृतस्य स्तुतावकरणत्वात्तत्संबद्धमन्त्रलक्षणायावश्यं संबन्धकृद्वाक्यमपेक्षणीयम् । इह विधाने मत्वर्थलक्ष-

णाप्रसङ्गात् । अनुवादत्वे तु नायं दोषो भवति । तेन स्तोत्राणामप्याज्यवत्त्वान्यत एव लभ्यत इति । तदुभयपक्षे ऽपि सापेक्षता । ततश्च स्तुवतइत्येतावन्मात्रमत्र विवक्षितमित्याज्यादिशब्दो ऽन्यतो निर्णीयते । पवमानशब्दस्तु यौगिकत्वात्पूर्वाधिकरणसिद्धेरनुदाहरणमिति केचित् । अपरे तु मन्यन्ते । नोद्भिदादिवत्पवनक्रियां प्रति कर्तृत्वं स्तोत्रस्योपपद्यते, सोमो हि तत्र पवते । ततश्च न कर्मण्यवयवप्रसिद्धिरस्तीति पवमानार्थमन्त्रकत्वाल्लक्षितलक्षणा मत्वर्थलक्षणातो दुर्बलतरेति वाक्यभेदेनैव सिद्धेरुदाहरणम् । तत्र प्रसिद्ध्यादयः पूर्वपक्षे पूर्ववदेव व्याख्येयाः । चित्रेत्युत्तरपक्षे द्योतनादग्नीषोमीये गुणविधिरिष्टः । अत्र कारणमुच्यते ॥

चित्रत्वस्त्रीत्वयोगो हि प्राणिजातौ स्वभावतः ।
तेनैते प्राणियागाङ्गं प्रकृतिं देशमाश्रिते ॥

स्त्रीत्वादिविभागो हि प्राणिव्यतिरिक्ते ऽर्थे शब्दानुकरणमात्रेण विज्ञायते पश्वादिषु त्वर्थरूपेण । प्रकृतं च दध्यादिद्रव्यात्मकत्वान्नैतद्योग्यं कर्मेत्युत्कृष्यमाणे वाक्याद्यागमात्रसंबन्धिनी प्रसक्ते सामर्थ्यात् प्राणियागमाकाङ्क्षन्ती प्रकृतौ वा हिरुक्तत्वादित्यनेन न्यायेन सर्वप्राणियागपरमप्रकृतिमग्नीषोमीयं गच्छतः । तत्र यद्यपि उत्पत्तिवाक्यशिष्टं कृष्णसारङ्गलोहितसारङ्गादिगुणान्तरं पुंस्त्वं च बाधकं संभाव्यते, तथापि पूर्ववदेव बाधविकल्पौ वक्तव्यौ । साप्तदश्यपूर्वपक्षन्यायश्चात्र द्रष्टव्यः । एकपदोपात्तानेकार्थविधानाच्चैककारकनिबन्धनत्वादवाक्यभेदाभिप्रायः । पशुकामशब्दो ऽपि च स्वर्गकामाधिकरणपूर्वपक्षन्यायेनार्जनाङ्गत्वादनुवादो ऽभिमतो न यागफलम् । न हि पशुयागः पशुमकामयमानेनानुष्ठातुं शक्यते । यागानुवादो विज्ञातत्वादिति ॥

सर्वत्राख्यातसंबद्धे श्रूयमाणे पदान्तरे ।
विधिशक्त्युपसंक्रान्तेः स्याद्धातोरनुवादता ॥

यावद्यावद्विधेयान्तरमुपादीयते तावत्तावत्पूर्वत्रानेकशक्तिकल्पनाभयादनुवादत्वाकाङ्क्षा भवत्यगत्या तु तत्रापि विध्यङ्गीकरणम् । अस्ति चात्र व्रीत्वचित्रत्वभागग्नीषोमीययाग इत्यनूद्यते । गुणे फलकल्पनायां यजतेरविवक्षेति किमर्थं गुणविधित्वपक्ष एव सन्निराक्रियते । सिद्धान्तग्रन्थो ऽयं प्रमादाल्लिखित इति केचित् । अपरे त्वाहुः । फलसंबन्धे किल प्रधानत्वाद्गुणोक्तिविघातः स्यादिति । तदयुक्तम् । सर्वथा नामधेयप्रतिपक्षो गुणविधिः स च फलसंबन्धे ऽप्यनपगतः । तथा च वक्ष्यति स्थित एतस्मिन्नधिकरणे गुणविधिर्नामधेयमिति विचार इति । फलसंबन्धे ह्येकान्तेन यागसामानाधिकरण्याभावाद्गुणविधिरेव स्यादिति, तेनैवं वाच्यम् । इह तु त्रयः पक्षाः प्रतिभान्ति । गुणविधिः फले यागे वा नामधेयं वेत्येकैकस्य च द्वयंद्वयं निराकर्तव्यम् । तत्र पूर्वपक्षस्यैव दुर्बलतरत्वात्तृतीयं पक्षं निराकरोति । धातुपारार्थ्यप्रसङ्गादिति । अतश्च व्रीहिभिर्यजेतेतिवद्यागे गुणविधानम् । करणभूतस्यापि च यागस्योत्पत्तिवाक्यावगतकरणत्वार्थाक्षिप्तसाध्यांशानुवादेन गुणे विधीयमाने न मत्वर्थलक्षणा । गुणवाच्येव वानभिभवसमर्थं यागे गुणविधानमाश्रयति । फले गुणविधिकल्पनायां पूर्वाधिकरणोक्तदोषप्रसङ्गादिति । तथा पञ्चदशान्याज्यानीत्यत्रास्तिर्भवन्तिपर इति सत्तोपकल्पनं प्रयोगवचनाच्च विधिः । ननु च पञ्चदशानि सप्तदशानीति चैवंरूपः शब्दो न संख्यामात्रवाची स्तोमे डविधिः पञ्चदशाद्यर्थ इति स्मरणात् । नहि स्तोम इति स्तोत्रीयसंख्यातो ऽन्या विधीयते ।

नैष दोषः। स्तोत्रसाधनमात्रपरिच्छेदेन स्तुतिमानात्मकस्तोमसिद्धेः सदशमृक्परिच्छेदे घृतपरिच्छेदे च स्तुतिमाननिमित्तस्तोमवाचित्वम्। न चात्र मत्वर्थलक्षणा। कुतः॥

श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने।
लक्षणावाक्यभेदादिदोषो नानुमिते ह्यसौ॥

इह तावदाज्यादीनां श्रुतवाक्यसंयोगाभावादवश्यं प्रकरणाम्नानानुमितवाक्यसंबन्धपूर्वकः प्रयोगवचनविधिराश्रयितव्यः। तेन मत्वर्थ एव प्रतिपाद्यतइति न लक्षणा। तत्रैतत्स्यात्। द्रव्यत्वादाज्यादीनां कर्तव्यताविशेषात्मकेतिकर्तव्यतार्थिना प्रकरणेन न ग्रहणमिति। सत्तैवात्र क्रियेत्यनुपालम्भः। प्रधानदेशत्वाच्चाङ्गानामाज्यादिभिरवश्यं स्तोत्रसमीपे भवितव्यम्। अतस्स यथैवाग्निमुपनिधाय स्तुवतइत्यत्राग्निः सत्तामात्रेणोपकरोत्येवमिहापीति निर्दोषं, तस्माद्गुणविधानमिति। अत्राभिधीयते। प्रधानतो ऽभिसंबन्ध इति। अनेकार्थविधानं हि प्रधानकर्मविधाने सत्युपपद्यते। अत्र पुनः कर्मानुवादेन गुणो विधीयते। न च गुणानां परस्परं संबन्धो विद्यते। तत्रैकगुणविधाने गुणान्तरानाक्षेपादर्थापत्त्यभावे श्रौतानेकविधिव्यापारकल्पनायां पुनः पुनरुच्चारणं प्रत्ययस्य कर्तव्यमिति वाक्यभेदः स्यात्। आह च॥

अर्थादनेकमप्यर्थं विधापयति भावना।
विशेषणविधिस्त्वन्यन्न गृह्णाति विशेषणम्॥

एकपदोपात्ते ऽपि चानेकविधिशक्तिकल्पनागौरवमस्त्येव। उत्पत्तिवाक्यशिष्टे गुणान्तरावरोधाच्चाशक्तिः। तथाहि॥

उत्पत्तिवाक्यविज्ञातं कर्म सर्वं ह्यनूद्यते।

न चाश्रितगुणे शक्यं तद्विरोधि गुणान्तरम् ॥

यत्रानूद्यमान एवावश्यं गुणो ऽप्यनुवदितव्यस्तत्र नैरपेक्ष्यद-र्शनादाकाङ्क्षाधीनसंबन्धगुणान्तरविधानानुपपत्तिः । न च नि-ष्कृष्य क्रियामात्रं गुणविधिः शक्यः कर्त्तुम् । कुतः ॥

प्रथमं हि स्ववाक्यस्थैर्गुणैः संबध्यते क्रिया ।
वाक्यान्तरगतैः पश्चान्न शुद्धा सा ह्यवाप्यते ॥

यानि परस्परनिरपेक्षाणि व्रीहियवादिवाक्यवत्प्रवर्त्तन्ते तेषां तुल्यबलवत्त्वाद्भवति विकल्पः । इह चोत्पत्तिवाक्यमन्यनिरपेक्षं विदध्यान्नोत्पन्नवाक्यम्, अनुत्पन्ने ऽनुवादानुपपत्तेः । पशुका-मसंबन्धाच्च पदान्तरगतार्थग्रहणनिमित्तो ऽपि वाक्यभेदो भि-द्यते । यद्यपि च फलं न विधीयते तथापि तत्र कर्मविधानात्क-र्मणि च गुणविधेरस्त्येव गौरवम् । अपि च कर्मणः फलगुणौ प्रति युगपद्विध्यनुवाददोषो ऽपरः स्यात् । न च पशुकामपदस-र्जनाङ्गत्वात्प्राप्तमनूद्यते । कथम् ॥

पुरुषार्थो हि सर्वेण स्वरसादेव काम्यते ।
तत्साधनतदङ्गेषु प्रवृत्तिः प्रार्थनादृते ॥

नहि साधनभूतं पशुं कश्चित्कामयते विनैव तु कामेन प्रार्थि-तान्यथानुपपत्त्या तमुपादत्ते । गौणी वा तस्य काम्यता भवेत् । अतः स्वातन्त्र्येण यन्मुख्यया वृत्त्या काम्यते तदेव कामशब्दोप-बन्धात्फलं प्रतीमः । विस्तरेण चैतदसाधकं तु तादर्थ्यादित्यत्र वक्ष्यामः । फलं चाग्नीषोमीयस्य क्रत्वङ्गत्वान्नैतदन्यदास्तीत्यनु-वादासंभवः । प्रकरणं च बाध्येत प्राजापत्यस्य यागस्य, नामधे-यत्वे तु कर्मफलसंबन्धमात्रकरणान्न कश्चिद्दोषः । पञ्चदशान्या-ज्यानीति द्रव्यसंख्ययोरुभयोः स्तोत्रेष्वप्राप्तत्वान्नान्यतरानुवादे-

नेतरविधानसंभवः । कर्मान्तरस्थं च न प्रतीयते । तदनुवादेन च विधावकर्माङ्गत्वप्रसङ्गः प्रकरणबाधश्च । न च विशिष्टद्रव्यविधिरुपपद्यतइति वक्ष्यते तत्रैकत्वमयज्ञाङ्गभूतमिति । न चाक्रियाविशेषणं विधीयते, विधायकस्य नामपदैः साक्षादसंबन्धात् । न चेह क्रियोपात्ताया विधीयमानार्थादनेकमपि गुणमाक्षिपेत् । न चैषां स्तुतिप्रयोगवचनेन ग्रहणम्, अक्रियात्मकत्वात् । आह च ॥

नावान्तरक्रियायोगादृते वाक्योपकल्पितात् ।
गुणद्रव्यैः कथंभावैर्गृह्णन्ति प्रकृताः क्रियाः ॥

न च भवतिक्रियां प्रत्यङ्गत्वमुपपद्यते । सर्वोपि हि लब्धात्मको ऽन्यत्र व्याप्रियते । सत्तायास्तु वस्त्वात्मलाभमात्रापवर्गान्न साध्यत्वम् । तद्व्यतिरिक्तसाध्यान्तरानपेक्षणाच्चोपकारासंबन्धान्नेतिकर्तव्यतात्वम् । यत्तु रथन्तरं भवतीत्येवंचोदितानामपि प्रकरणेन ग्रहणं तदतिदेशप्राप्तावान्तरक्रियासंबन्धविज्ञानान्न वा ऽऽज्यादीनां लोके सत्ता न सिद्धा येनेदानीं भाव्येत । स्तुतिप्रयोगसंनिधिस्थापनभावना करिष्यतइति चेत् । न । अचोदितत्वात् । अग्निमुपनिधायेति तु स्पष्टं विधानम् । आत्मलाभव्यतिरिक्ता चेयं क्रिया शक्यते कथंभावेन ग्रहीतुं सिद्धान्तेन च वाक्यस्यार्थवत्त्वान्नान्यथानुपपत्त्या विनियोजकवाक्यकल्पना । यदि त्वाज्यैः स्तुवतइत्यनेन विहितानां पञ्चदशत्वविधिरुच्येत ततः पूर्वाधिकरणन्यायेन सैव मत्वर्थलक्षणेति मत्वा वदति । अपि चाज्यानि स्तोत्राणीत्यादिसंसर्गिद्रव्यत्वाच्चाज्यानां साक्षात्पञ्चदशत्वयोगाभावादश्वतपरत्वादिपरिमाणकल्पनावश्याश्रयितव्या भवेत् । तेनैवं ज्ञायते यद्यप्युत्पत्तौ नामत्वं न ज्ञातं गुणवाक्ये

च तस्यानधिकारः । तथाप्येतद्गुणविधानमेवं सिध्यति । यद्युत्प-त्त्याज्यशब्दो नामधेयं नान्यथेति ॥

गुणवाक्योपपत्त्यर्थं समभिव्याहृतेन च ।
अन्वाख्यानार्थवादाच्च नामधेयत्वमाश्रितम् ॥

यदाजिमीयुस्तदाज्यानामाज्यत्वमिति । यस्माद्देवाः प्रजापति-वचनादेतेषु स्तोत्रेष्वाजिमधावन् । ततस्तदर्हत्वादेतान्याज्यानी-ति । तथा तासां वायुः पृष्ठे व्यवर्ततेति यस्मादपां वायुना पृष्ठे स्पृष्टे रथन्तरादीनि जातानि तस्मात्तानि पृष्ठानीत्यर्थवादाद्वि-ज्ञातम् । तत्प्रकृतित्वाच्च वामदेव्यादिषु पृष्ठशब्दप्रसिद्धिः । द्वा-वेतावर्थावेकस्य वाक्यस्याशक्याविव्यस्यानन्तरमथ कस्मान्न पञ्च-दशसंख्याविशिष्टानीत्येवमादि द्रष्टव्यम् । विशिष्टानां वाचक-स्याभावादिति प्रधानाख्यातानुच्चारणाभिप्रायम् । ननु पदद्वय-मिति भवतिक्रियासंबन्धाभिप्रायं न तत्पदद्वयमपि विधायक-मिति, प्रधानक्रिया हि विशेषणानि पिण्डीकरोति सत्तायास्तु प्रत्येकवर्तित्वान्न समुदाये वाक्यपरिसमाप्तिः । अतश्च परस्परसं-बन्धाभावः । पञ्चदशानि यानि कानि चिद्भवन्ति, आज्यान्यपि यावन्ति तावन्ति भवन्तीति कल्पना । तस्मान्नोभयं विधायकम् । न चानुवादकं, स्तोत्रेषु तादृशस्याभावादनर्थकत्वप्रसङ्गाच्च । तस्मादेकानुवादेनेतरविधिर्नामधेयत्वे ऽवकल्पते । विधायकमि-ति चात्र विधेयार्थोपनयनव्यापारात्मनः पुनरभिहितं न तु ना-मपदस्य (१) विधिशक्तिरस्ति । पञ्चदशानीति च स्तुतिसाधकत-मस्तोत्रीयकपरिच्छेदान्मुख्यं स्तुतिगाननिमित्तं स्तोमत्वमिति शब्दसामञ्जस्यं भविष्यति ॥

(१) नामधेयस्येति पा० पुस्तके ।

## तत्प्रख्यं चान्यशास्त्रम् ॥ ४ ॥

ननु सर्वत्र द्विप्रकारमेव नामपदं सांविज्ञायिकं यौगिकं चोभयमपि चाधिकरणद्वयेन प्रतिपादितं, किमिदानीमवशिष्यते येन पुनर्विचार्यते । उच्यते । यौगिकानामेव मत्वर्थलक्षणापरिहारेणात्र चिन्ता, उत्तराधिकरणे तु सांविज्ञायिकानां वाक्यभेदासंभवात् । तत्राग्नये होत्रमस्मिन्निति सिद्धान्ते ऽप्यभ्युपगमादन्यसमासार्थानुपलब्धेः श्रान्तर्णीतमत्वर्थो बहुव्रीहिरखेदेन गुणं विधत्ते तएव च प्रसिद्धादयो हेतवः सत्यामपि च सायं होमे ऽग्निप्राप्तौ तदङ्गं प्रातर्होमे होममात्रानुवादाद्वा सर्वेदर्विहोमेष्वविहितदेवताकेषु विधास्यति वाक्यसामर्थ्यात् । तथा ऽऽघारयतइत्याघार इति क्षारणसमर्थं द्रव्यमाज्यपयःप्रभृत्यभिधीयते । तच्च द्वितीयानिर्देशात् क्षारणक्रियासंस्कार्यत्वेनाध्यवसीयमानमनुपयुज्यमानसंस्कारानुपपत्तेः प्रयोजनमपेक्षते । धर्ममात्रं चास्य क्षारणं शब्दार्थमात्रापवर्गित्वान्नाशेपक्षारणं करोति । तत्क्षारितैकदेशेन किं कर्तव्यमित्यस्त्यपेक्षा लोकेपि च द्रवद्रव्याणां क्व चित्पानादावुपयोक्ष्यमाणानामीषत्क्षारणसंस्कारं कुर्वन्ति । तेनाभिपवयुक्तपूतीकवल्लक्षणयुक्तफलचमसवच्च संस्कार्यं द्रव्यं कर्ममात्राभिलाषि । प्रकरणवशेन दर्शपूर्णमासप्रधानान्युपसर्पति । तत्रापि चाग्नेयादीनां विहितद्रव्यकत्वादुपांशुयाजः केवलः साकाङ्क्ष इति तादर्थ्यं प्रतिपद्यते । आह च ॥

श्रुतसंस्कारसंबन्धं मुख्यैर्यद्यप्यसंगतम् ।
अन्यथा तदयोग्यत्वात् प्रकृतैर्याति संगतिम् ॥

अथ वा यत्करोतीति प्रत्ययार्थमात्रं साकाङ्क्षत्वादेवोपांशु-

याजभावनामनूद्याघारद्रव्ये वाक्येन विधीयमाने तत्साध्यत्वा-
देव धात्वर्थः प्राप्तो ऽनूद्यते । श्रैवप्राप्त्यैव वा तस्य क्षरणात्मकत्वे
विज्ञाते क्षरणसमर्थमात्रपयःप्रभृतिविधिं मन्यते । न च धात्व-
र्थादेव सिद्धेर्नाम्ना प्रयोजनम् । न च संस्कारकर्माणि क्व चि-
न्नामवन्ति दृश्यन्ते । श्रुत्यैव गुणो विधीयतइति द्वितीयाश्रुत्यै-
व संस्कार्यत्वादवश्यं क्व चिदस्य गुणत्वमित्यवगमाभिप्रायम् ।
अत्रोच्यते ॥

विधित्सितगुणप्राप्ति शास्त्रमन्यद्यतस्त्विह ।
तस्मात्तत्प्रापणं व्यर्थमिति नामत्वमिष्यते ॥

अत्र वदामः ॥

सायं होमे यदि ब्रूयादाघारे च परो विधिम् ।
ततः शास्त्रान्तरप्राप्तविधिः स्यान्निष्प्रयोजनः ॥
यदा त्वदैवते होमे दैवताविधिरुच्यते ।
द्रव्यं चोपांशुयाजस्य तदा तत्प्रख्यता कथम् ॥

उच्यते ॥

विधिश्चेदग्निहोत्रं स्यात्ततो ऽस्य विषयैषिणः ।
निवेशः प्रकृते वा स्याद्युक्तेरप्रकृते ऽपि वा ॥
अग्नेर्होत्रेण (१) संबन्धे कृते ऽन्येन प्रवर्तनात् ।
अग्निहोत्रपदे स्पष्टमनुवादत्वलक्षणम् ॥
अनूद्य चापि धात्वर्थं गुणः सर्वो विधीयते ।
न चानुवादः प्रकृतात्कर्मणो ऽन्यत्र लभ्यते ॥
प्रकृतं चेदनूद्यायं गुणो होमे विधीयते ।
तत्र तत्प्रख्यता ऽन्यत्र न विधिस्तत्परिग्रहात् ॥

(१) अग्निहोत्रेणेति पा० पुस्तकान्तरे ।

न चधात्वनुवादो ऽत्र कथं चिदुपपद्यते।
प्रकृताप्रकृताभावात्तस्मात्कर्म विधीयते॥
सायमूर्ध्वादिसंयुक्तैर्गुणो वाक्यैर्विधीयते।
शुद्धं न श्रूयते कर्म प्रकृतं नास्ति तेन तत्॥
दूरस्थस्यानुवादस्य व्यवधानान्न युज्यते।
तस्य बुद्ध्यावनारोहात्कौण्डपायिनहोमवत्॥
विधीयतां विशिष्टं चेत्कर्मेत्येवं विकल्प्यते।
न चेदन्येन शिष्टाः स्युस्तत्प्रख्यं चेति चोत्तरम्॥
न चतुर्थीसमासस्य लक्षणं चात्र विद्यते।
न च तेन विना शक्या देवताविधिकल्पना॥
यः कश्चिदेव संबन्धः षष्ठीतत्पुरुषाद्भवेत्।
अनुवादे ऽन्यतः सिद्धे कथ्येताप्यश्वघासवत्॥
विधातव्यस्य संबन्धो भवेत्परपदार्थयोः।
प्रातर्होमे ऽपि तेनैष वह्निनैव विधीयते॥
एकदेशे ऽपि च ज्ञानान्नानुवादो ऽपगच्छति।
आघारस्यापि संबन्धः क्लेशेनोपांशुकर्मणा॥
सामानाधिकरण्यं च साध्यांशेनेह कर्मणः।
विस्पष्टं द्रव्यनामत्वं न चाघारस्य गम्यते

## तद्व्यपदेशं च ॥५॥

अशेष ज्योतिरित्यादिवर्जमुदाहरणम्। तेषां तृतीयानिर्देशाभावाद् गुणविधित्वानुपपत्तेः। ते ऽपि च वाक्यान्तरेषु यदा तृतीयानिर्देशं प्रतिपद्यन्ते तदा विचार्यन्ते। अथ वा प्रथमानिर्देशेन द्रव्यमपि प्रस्तुत्य पश्चात्तत्साध्योपन्यासः संभवतीत्येते ऽपि

उदाहरणमेव। तत्र तैरेव प्रसिद्धादिभिर्गुणविधिः। न चात्र कर्मणि प्रवृत्तिनिमित्तं किं चिदस्ति। वत्यर्थोपादानेन कर्मणि प्रवृत्तौ चात्यन्तविप्रकृष्टा गौणता स्यात्। तत्र वरं मत्वर्थलक्षणा। साधनं हि प्रतीतमत्यन्तविनाभावात्स्वसाध्यां क्रियामक्लेशेन प्रतिपादयति विनैव मतुब्लोपेन। किं च॥

मत्वर्थो वाक्यवेलायामेकवाक्यवशाद्भवेत्।
इवार्थः पदवेलायां गृह्यमाणोऽतिदुर्बलः॥

गुणविधिपक्षे हि स्वार्थापरित्यागेनैव श्येनपदं तद्वन्तमुत्तरकालं लक्षयति। आत्मोच्चारणकाले तु स्वार्थमेव विनियुङ्क्ते। भवतस्तु श्येनार्थानुपयोगादादित एव सादृश्यविवक्षया पदं प्रवृत्तमित्युपगमात् श्रुतिबाधप्रसङ्गः। तदुच्यते॥

विधेयं स्तूयते वस्तु भिन्नयोपमया सदा।
न हि तेनैव तस्यैव स्तुतिस्तद्वदितीष्यते॥

श्येनादिवाक्येषु हि यथा वै श्येनो निपत्यादत्तएवमयमपीत्युपगमान्न स्तुतिर्दृश्यते। तया च विधीयमानस्य भवितव्यम्। गुणविधाने च श्येनद्रव्यं विधीयतइति तदेव स्तोतव्यम्। न च तस्यात्मनैवोपमानं युक्तम्। अथोच्येतानन्यत्वेन सुतरां स्तुतिर्भवति, अनन्यसंभविचरितत्वात्। तथा॥

"रामरावणयोर्युद्धं रामरावणयोरिव"।

इति। भवति हि लोके काल्पनिकमवस्थादिगतभेदमाश्रित्यैवमपि स्तुतिः संभवति भेदे न युक्ता। नामधेये तु यागश्येनस्य द्रव्यश्येनोपगमोपपत्तेराञ्जस्यम्। इतरथा हि द्वौ मत्वर्थवत्यर्थौ लक्षयितव्यौ। काल्पनिकश्च भेद इति गौरवम्। न च यागस्याङ्गिनः तदाश्रितद्रव्यस्तवनमवकल्पते, यागविधेरनिराकृ-

तत्वात् । अविधेयगता हि स्तुतिरन्यत्र संचार्येत यागस्तु स्वयमेव विधिभागत्वेति न द्रव्यं स्तूयते विधीयते वा । पुनरपि च यागेन द्रव्यलक्षणादिप्रकृष्टता । समभिव्याहाराच्च द्रव्यवदेव यागवचनत्वं मुख्यम् । विधौ च तत्र लक्षणा ममानुवादे । गुणवचनेभ्यश्च मतुब्लोपः स्मर्यते न द्रव्यवचनेभ्यः । इवार्थस्तु परशब्दस्य परत्र प्रयोगात्स्वयमेवोपजायते । मत्वर्थलक्षणा च स्वयं कल्पनीया, क्लृप्तस्तु वत्यर्थः । यथा वै श्येन इत्यादिना । पूर्वोक्ताश्च धातुपारार्थ्यप्रत्ययविप्रकर्षादयो दोषा वक्तव्याः ॥

## नामधेये गुणश्रुतेः स्याद्विधानमिति चेत् ॥ ६ ॥

तन्त्रसंबन्धेनाख्यातपदस्यधात्वर्थः फलं प्रति करणं गुणं च प्रति साध्यो भवन्न विरोत्स्यते । तेनोद्भिदा यागं यागेन च पशून् भावयेदिति युगपद्विधिव्यापाराद्विनैव मत्वर्थलक्षणया संबन्धसिद्धिः । तथाज्यादिपदस्य तन्त्रेण स्तोत्रसंख्यादियोगः । तस्मात्सर्वत्र त्वत्परिकल्पिते नामधेये गुणश्रुतेः प्रसिद्ध्यादिभिर्गुणप्रत्ययानपगमात्तद्विधानमेव भवत्वलं नामधेयत्वेनेति यथासंभवं सर्वाधिकरणाक्षेपेणेदमारभ्यते । तत्रेदमपि वाक्यं शुद्धं भविष्यतीति वाजपेयोपन्यासः । सर्वाण्येव त्विह्वोदाहर्तव्यानि । आह च ॥

करणोपूपदिष्टेषु यार्थात्साध्यत्वकल्पना ।
तस्यां गुणविधानेन नास्ति मत्वर्थलक्षणा ॥

## तुल्यत्वात् क्रिययोर्न ॥ ७ ॥

वाजपेये तावदयं विशेषो ऽभिधीयते ॥

वाजपेयं यवागू स्यादौषधद्रव्यता ततः ।
द्रव्यसारूप्यसामान्यादैष्टिकत्वं प्रसज्यते ॥

## एकशब्द्ये परार्थवत् ॥ ८ ॥

तन्त्रत्वमैकरूप्येण भवेत्तुल्योपकारतः ।
उपकारान्यथात्वे तु भवत्यावृत्तिलक्षणम् ॥

द्विधा हि तन्त्रं भवति प्रत्येकं वा समुदाये वा वाक्यपरिसमाप्तौ, आख्यातगुणत्वप्राधान्यापेक्षया । तदिह द्रव्यं यागे विधीयते, न फलमफलत्वप्रसङ्गात् । उद्दिश्यमानं हि सर्वत्र फलं भवति तच्चेत्क्रियां प्रत्युपादीयेताङ्गमेव स्यात् । यागो ऽपि फलं प्रत्युपादातुं शक्यते न द्रव्यं प्रति तत्संस्कारत्वप्रसङ्गात् । तृतीयानिर्देशबाधाच्च । न च यागसंस्कृतस्य द्रव्यस्यान्यत्रोपयोगो विद्यते येनैवमाश्रीयेत । एतेन यागफलयोर्द्रव्यं प्रत्युपादानं प्रत्युक्तम् । न च फले यागद्रव्ययोरुपादानमेकेन निराकाङ्क्षे फलेऽन्यस्याविधानात् । यथा वक्ष्यति "यदैकस्मादपूर्वं तदेतरत्तदर्थ"मिति । न च द्रव्योपसर्जनो यागः फले विधीयते, मत्वर्थलक्षणादिप्रसङ्गात् । तच्चैतदेवापतति यागेन फलं यागं च द्रव्येणेति । ततश्च फलेनोपादेयविधेयगुणभूतयागग्रहणाद्गुणेन चोद्देश्यानूद्यप्रधानभूतापेक्षणात्तन्त्रत्वाभावः । एकमार्गाश्रयणे ऽन्यतरस्यासंबन्धात् । तत्र युगपदाश्रयणे वाक्यभेदात् । अवश्यं हि यत्रोद्दिश्यमानादिरूपं यत्र चोपादीयमानाद्यात्मकता तत्र यागस्यैते द्वे वाक्ये कल्पनीये । ननु द्वे एवैते इति तन्त्रपदमभितो दर्शयन् ब्रवीति । चत्वारि पदान्यपलभेमहीत्यतुल्यार्थत्वादत-

न्तत्वाभिप्रायेण । परस्य तु शब्दरूपाभेदात्साधारण्याभिमानः । नैतदस्तीति कार्यप्राधान्याच्छब्दरूपस्य तद्गतवैरूप्याद्भेदापत्तिः । आह यदिदमुक्तमिति, वैरूप्यं परिहरति । गुणविध्यंशेपि हि अवश्यमाख्यातं विधिरूपमेवाभ्युपगन्तव्यम् । वाजपेयपदस्याना-ख्यातत्वेनाविधायकत्वात् । यदुभयत्र विधिरिति द्रव्यसंस्कार्य-त्वप्रसङ्गमनादृत्याख्यातगुणभावकृतप्रत्येकवाक्यपरिसमाप्तिनि-मित्तपरस्परासंबन्धोपन्यासः । प्रकरणानुरोधाद्व्रीहिभिर्यजेते-त्यादिवद्गुणस्येति चेत् । न । वाक्येन यागमात्रे विधाना(१)दि-ति । तत्संबन्धे हि परस्परनिरपेक्षयोर्योगेन संबन्धः । एकवि-शेषितेतरसंबन्धे वाक्यभेदप्रसङ्गात् । तत्रानिष्पन्ने स्वाराज्यया-गप्रकरणे गुणो विधीयमानः शुद्धयजतिसंबन्धात्सार्वत्रिको ऽपू-र्वयागसंबन्धो वा विज्ञायते । दर्शपूर्णमासादिवाक्यैस्तु निष्पा-दिते प्रकरणे विधीयमाना व्रीह्यादयो ऽवतिष्ठन्त इति वैषम्यम् । तेन स्वाराज्यकामैर्योगैकवाक्यता गम्यमाना नोत्सृष्टा भविष्य-तीति नामधेयता ॥

## तद्गुणास्तु विधीयेरन्नविभागाद्विधा-नार्थेन चेदन्येन शिष्टाः ॥ ९ ॥

एवं सिद्धेषु नामधेयेषु नामधेयकार्येषु चेदानीमपवादः प्रस्तू-यते । कस्मात्पुनरिहैव दर्विहोमपदं न विचार्यते विचारितमे-तदपि तत्प्रख्यमित्यनेन । विध्युद्देशगतानां चेह विचारस्तत्र त्व-र्थवादगतानां यदेकया जुहुयाद्दर्विहोमं कुर्यादिति । सिद्धे वा

(१) ऽभिधानेति पा० पुस्तकान्तरे ।

कर्मनामधेयत्वे तद्विशेषविचारस्तत्र । इह (१) पुनः सामान्यचिन्तेति नोपन्यस्तम् । या तु तत्र गुणविध्याशङ्का सा ऽधिकरणमध्ये परिचोदनामात्रं सर्वमेवैतत्प्रासङ्गिकम् । अष्टमे च पूर्ववदपूर्वचिन्ताधिकारात् । केन पुनर्विहितानां कर्मणामाग्नेयादीनां नामधेयत्वमाशङ्क्यते । तदुच्यते । अष्टाकपालो भवतीत्यादिभिर्द्रव्यमात्रयुक्ताः क्रमवत्यो भावनाः प्रतिपाद्यन्ते । तासां च स्थानक्रमेणाग्न्यादिदैवत्यानि याज्यानुवाक्यायुगलान्याम्नायन्ते । तानि क्रमविनियुक्तानि सन्ति मान्त्रवर्णिकीः कर्माङ्गभूता देवताः कल्पयन्ति । नह्यन्यथा ते मन्त्राः कर्मोपयोगं गच्छेयुः । क्रियास्वरूपप्रकाशनेन तत्संबन्धिप्रकाशनेन वा मन्त्राः कर्मोपयोगितां गच्छन्ति । न चैतैः क्रिया द्रव्यं चाभिधीयते । यदग्न्याद्यभिधीयते तस्य संबन्धित्वं न ज्ञातं तत्रासंबन्ध्यग्न्यादिप्रकाशने ऽनङ्गत्वप्रसङ्गः । तेनावधारिताङ्गत्वमन्त्रानुरोधेनैवं विज्ञायते यानेते वदन्ति ते नूनमग्न्यादयः क्रियाङ्गमिति । ते च मन्त्रेषु प्राधान्याभिधानाद्देवतात्वेन प्रज्ञाता इति तद्वैलक्षण्यात्कर्मस्वपि देवता भवन्ति । पुरोडाशादिभिरपि च हविरात्मकत्वाद्योग्यतया यागसाधनत्वेनोपप्लवमानैर्देवतैवाकाङ्क्षितेति द्रव्यदेवतासंबन्धनिष्पत्तेरनुमितानां यागानां "तत्प्रख्यं चान्यशास्त्र"मित्याग्नेयादीनां नामधेयत्वम् । अथ वाष्टाकपालादीनां हविष्ट्वाद्द्विर्हविषो ऽवद्यतीति द्व्यवदाने गृहीते चोदनान्तरेण च तत्संस्कारार्थोपस्तरणाभिघारणग्रहणाच्चतुरवत्ते निष्पन्ने चतुरवत्तं जुहोतीति वचनाद्यावद्द्रव्यं निष्पन्नानां होमानां तथैवाग्न्यादिषु प्राप्तेषु नामधेयत्वम् । एवं चानेकार्थविधिदोषो न भविष्यति ।

---

(१) इह स्थितिं पा० पुस्तके ।

तथा प्राप्ते ऽभिधीयते ॥

न चेदन्येन शिष्टाः स्युर्यागाः शब्देन केन चित् ।
ते गुणाश्चोपदिश्येरन् विधिना ह्यविभागतः ॥

न तावद्द्रव्यदेवतासंस्कारसंयोगेन यागविधिरुपपद्यते । कथम् ॥

न द्रव्यस्य स्वरूपेण मन्त्राकाङ्क्षा ऽवकल्पते ।
न चान्यवाचिना तस्य संबन्धः संप्रतीयते ॥

नाष्टाकपालो भवतीत्येतावता कश्चित्पुरुषव्यापारो विधीयते यो ऽनुष्ठानाय स्मृतिकरणं मन्त्रमपेक्षेत । न च पुरोडाशभवनं पुरुषस्यानुष्ठेयं, प्रतिनियतकर्तृत्वात् क्रियाणाम् । नापि द्रव्यं, स्वरूपेण सिद्धात्मकत्वात् कर्तव्यं येन स्मर्येत । न चाग्निर्मूर्धेत्यादिभिर्द्रव्यं तद्व्यापारो वा ऽभिधीयते येनाकाङ्क्षया ऽपि संबध्येरन् । अग्न्याद्यभिधायिना न कश्चित्तैः संबन्धो विद्यते ॥

न च यागो हविष्ट्वं वा पुरोडाशे ऽवधारितम् ।
येन स्याद्देवताकाङ्क्षा तन्मन्त्राणां च संगतिः ॥

यदि हि प्रथमं यागत्वमवधार्येत ततो देवताकाङ्क्षायां सत्यां देवतावाचिनो मन्त्राः संबध्येरन्, न तु तद्भवतिशब्देनोक्तम् । न च यागसंबन्धात्प्राक् पुरोडाशादीनां हविष्ट्वमवधार्यते । संबन्धिशब्दो ह्ययं न द्रव्यस्वरूपप्रयुक्तः । तदेव हि द्रव्यमयागसंबद्धं पयःप्रभृति न लोके हविःशब्दवाच्यं भवति । एतेन चतुरवत्तचोदनाकल्पितकर्मनामत्वं प्रत्युक्तम् । आघारादिषु तु क्रियात्मकत्वान्मन्त्राकाङ्क्षायां वचनविनियोगवशाच्च भवति मान्त्रवर्णिकदेवताकल्पना । सर्वजघन्यश्चायं देवताविधिः सर्वज्येष्ठे तद्धितदेवताविधौ संभवति किमित्याश्रीयते । अन्यथा-

नुपपत्तिमूलश्चासौ न च तद्धिते संभवत्यन्यथानुपपत्तिः । तस्मादनेनैव कृते द्रव्यदेवतासंबन्धे ऽर्थवादपुरःसरेण भवतिशब्देन विहिते विशेषार्थं क्रमेण मन्त्राम्नानम् । अगत्या चानेकार्थविधिरङ्गीक्रियते । विधानार्थे तद्धितान्ते शब्द इति विधिप्रयोजनत्वाभिप्रायेण । सर्वं चैतत्तस्मादविभक्तं गम्यते । देवता तावत्प्रातिपदिकेनोक्ता तद्विशिष्टं द्रव्यं तद्धितेन संबन्धो ऽपि तत्रैवार्थगृहीतस्तत्सामानाधिकरण्याच्चाशेषात्मीयोपसर्जनयुक्तमष्टाकपालत्वादं विशेषणत्वेन तत्रैवान्तर्गतम् । द्रव्यस्य चाग्नेयत्वेन भवनमभाव्यमानस्य न सिध्यतीति तदाक्षिप्ता भावनापि तत्रैव । न च यागेन विनाग्नेयत्वं भावयितुं शक्यमिति पुरुषव्यापारविशेषोपि यागस्तदन्तर्गतः । ततश्च तद्धितान्तपदोपात्तविधिना सर्वमन्यदर्थादाक्षिप्यमाणं न वाक्यं भिनत्ति । भावनाविधिपूर्वकश्च सर्वत्र धात्वर्थकारकविधिर्भवतीत्यश्रूयमाणापि सैव तावद्विशिष्टा विधीयते । ततो विशेषणान्यथानुपपत्त्या सर्वसंसर्गात्मकत्वाच्च तामेव संबन्धशब्देनाभिधत्ते, न त्वव्यापारात्मकत्वाद्द्रव्यदेवतासंबन्धः शक्यते विधातुम् । अविभागादित्यर्थाक्षेपहेतुः । न चेदन्येनेत्यन्यथानुपपत्तिशरणाभिधानम् ॥

## बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥ १० ॥

नामधेयप्रस्तावेन द्रव्यनामसु निमित्तं प्रत्यधिकरणत्रयमारभ्यते । तुल्यहेतुत्वात्पुरोडाशो ऽप्युदाहृतः । तत्र शास्त्रस्थावत्तन्निमित्तत्वादिति याज्ञिकानां संस्कृतेषु प्रयोगात्सार्वत्रिकत्वाद-

विगीतत्वाच्च संस्कारनिमित्तता । तथाहि ॥

पुरोडाशादिभिर्लोके व्यवहारो न दृश्यते ।
तस्माद्यूपादिवद्वेदात्तेषां संस्कारहेतुता ॥

तन्नास्ति । कुतः ॥

एकदेशे ऽपि यो दृष्टः शब्दो जातिनिबन्धनः ।
तदत्यागान्न तस्यास्ति निमित्तान्तरकल्पना ॥

य एव लौकिकाः शब्दास्त एव वैदिकास्त एवामीषामर्था इति स्थितत्वाल्लोकप्रसिद्धिप्रतीतेर्वेदे यत्रैकदेशे ऽपि जातिनिमित्तता लभ्यते न तत्र पुनर्निमित्तान्तरशक्तिकल्पना संभवति । संस्कृतेष्वपि जातेरनपगमात्तन्निमित्तताऽतिक्रमो न शक्यो वक्तुमतश्च शास्त्रस्थैरप्यविरोधान्न बाधः । किं च ॥

वेदेनापि च संस्कारात्प्रागेव छेदनादिकात् ।
तद्विधौ जातिशब्दत्वमाश्रितं लोकसंमतम् ॥

तेन जातिमेते न व्यभिचरन्ति । व्यभिचरन्ति तु संस्कारान् अविहितत्वाल्लोकव्यवहारवेलायां संस्काराणामभावात् ॥

न च यूपादितुल्यत्वमन्यथाप्युपपत्तितः ।
लोकादलभ्यमानार्थास्ते ह्यगत्या तथाश्रिताः ॥

यदि हि छेदनविधिवेलायां बन्धनविधौ वा कश्चिल्लौकिको ऽर्थो लभ्येत ततः किमेवं व्यवस्थितवचनव्यक्तिविपर्ययेण कल्प्येत यश्छिद्यते स नूनं यूप इति । अस्ति च बर्हिरादेर्गतिस्तस्मादतुल्यता ॥

## प्रोक्षणीष्वर्थसंयोगात् ॥ ११ ॥

ननु समुदायप्रसिद्धेः श्रुतिस्थानीयत्वाद्वाक्यस्थानीयावयवप्र-

सिद्धिर्दुर्बला स्यात् । तथाहि ॥

अश्वैरेव बुध्यन्ते समुदायप्रसिद्धिषु ।
अर्थभागोपसंहारादितरा विप्रकृष्यते ॥

सत्यमेवमेतत् । अवश्यं त्ववयवानामपि स्वार्थे शक्तिराश्रयणीया तदनाश्रयणे ऽवयवप्रसिद्धत्वाभावात् । तत्र च ॥

असत्स्ववयवार्थेषु यो ऽन्यत्रार्थे प्रयुज्यते ।
तत्रानन्यगतित्वेन समुदायः प्रसिध्यति ॥

लब्धात्मिका हि समुदायप्रसिद्धिरवयवप्रसिद्धिं बाधते तस्यास्त्वात्मलाभो यत्र प्रमाणान्तरेण पूर्वानुभूतावयवार्थरहिते ऽर्थे शब्दप्रयोगो दृश्यते । यथाश्वत्वकर्णत्वरहिते वृक्षे ऽश्वकर्णशब्दस्य । नह्यत्र पूर्वशक्त्यनुसारेण प्रतीतिरुपपद्यत इत्यर्थापत्त्या शक्त्यन्तरं कल्प्यते । ततश्चोभयसंभवे ऽवयवार्थानुसंधानादिशिथिलाया अवयवप्रसिद्धेरश्वरश्रवणमात्रलभ्यत्वादियं बलीयसी भवति । अत्र पुनरप्सु प्रकर्षसेचनक्रियाकरणत्वसंभवादवयवशक्तिभिरेव वाक्यवत्प्रयोगोपपत्तेः शक्त्यन्तरे प्रमाणाभावात्समुदायप्रसिद्ध्यभावः । तथाहि ॥

भवेतां यदि वृक्षेषु वाजिकर्णौ कथं चन ।
अदृष्टां समुदायस्य कः शक्तिं जातु कल्पयेत् ॥

तस्मान्नाप्सु समुदायप्रसिद्धिरिति द्रवद्रव्यमात्रसाधारणता । ननु संस्कारनिमित्तत्वे ऽप्यसामानाधिकरण्यकृतत्वादीकारस्य घृतान्निवृत्तिः स्यात् । यदि हि प्रागीकारात्संस्कारनिमित्तता ऽवगम्येत ततः स्त्रीप्रत्ययो ऽयमाश्रयलिङ्गनिमित्त इत्यवधारणादन्यलिङ्गान्निवर्तेत अयं पुनरन्यप्रयोगः संस्कारेष्वीकारान्त एवानवगतविभागो वेद्यादिवत्प्रयुक्त इत्यन्यादृशस्य वाचकत्वं

नावधार्येत तस्मादीकारान्तः स्यात्। यौगिकत्वे तु प्रागीकाराद्योगो गम्यतइति स्त्रीप्रत्ययो ऽयं निमित्ताभावाद्घृते न प्रयोक्ष्यते, चोदकप्राप्तं तु प्रातिपदिकमात्रं प्रयोक्तव्यम्। न च द्रव्येष्वर्थसमवायाद्विधिशब्दप्रयोगनियमो, यतः प्रोक्षणशब्दबाधेन जातिपक्षवद् घृतमित्येव प्रयोगः स्यात्॥

## तथा निर्मन्थ्ये ॥ १२ ॥

निर्मन्थ्ये ऽपि पूर्वाधिकरणवज्जातिसंस्कारनिमित्तपक्षावष्टम्भव्याख्यानान्तरेण यौगिकत्वं साधनीयम्॥

वैद्युताश्माभिघातोत्थसूर्यकान्तादिजन्मनाम्।
निवृत्तौ चरितार्थः सन् निर्मन्थ्यो ऽभिनवः कथम्॥

लोके कर्मार्थलक्षणमित्यशब्दार्थेनापि व्यवहाराङ्गवेदचिरनिर्दग्धघृतप्रतीतिः। सर्वघृतानां च नवनीतविकारत्वात्पुनः श्रुतेरचिरनिर्दग्धनवनीतार्थता स्यात्। इह तु शब्दप्रमाणके ऽन्यक्रियाजनितनिवृत्तमात्रचरितार्थो निर्मन्थ्यशब्दश्चिराचिरविशेषोपादानासमर्थः कथमचिरनिर्मथितविषयः कल्प्यते। नह्यत्राचिरत्वमपि योगे ऽन्तर्गतं, क्रियायोगमात्रनिमित्तत्वात्। तस्मादसदेतत्। नैष दोषः॥

पाकेनाग्नेरुपात्तत्वाद्विशेषणपरा श्रुतिः।
तच्च पाकाङ्गभूतत्वात्तद्देशादौ करिष्यते॥

यथैव लोहितोष्णीषादिविधिषु विशेष्याणां प्राप्तत्वाद्विशेषणपरत्वमेवमिहापि विशेष्यानुवादेन विशेषणभूता क्रियैव पाकाङ्गत्वेन विधीयते। अङ्गानां च प्रधानेनैकदेशकालकर्तृत्वं वक्ष्यते। तेनाचिरनिर्मथितेनादूरनिर्मथितेनानन्यकर्तृनिर्मथितेने-

ति वक्ष्यमाणे प्रदर्शनार्थमचिरगृहणम् ॥

## वैश्वदेवे विकल्प इति चेत् ॥ १३ ॥

तद्धितोपात्तत्वान्मत्वर्थस्य न लक्षणा । न चानेकार्थविधिर्ये-न वाक्यं भिद्येत । न च समस्तेषु कर्मसु तत्प्रख्यानशास्त्रसद्भावः । न च यथाग्निहोत्रे समासो ऽनभिव्यक्तस्तथात्र तद्धितः । सर्वत्र ह्येवंरूपा एव देवताविधयो भवन्ति । न च श्येनयागवद्दिश्वैर्देवैः कस्य चिद्व्यपदेशः । न च फलपदाश्रवणाद्वाजपेयवद्रूपं यजेः, शक्यते हि केवलयज्यनुवादेन देवता विधातुमित्यारम्भः । सर्वत्र च नामचिन्तानुसारान्न बर्हिराज्यादिविचारेण व्यवधानम् । अथ वा नामधेयान्यपि यौगिकानि निर्मन्थ्यादिष्वप्राप्तार्थत्वा-द्विधिफलानि दृष्टानि वैश्वदेवशब्दो ऽपि तथास्त्वित्यनन्तरं सं-बन्धः । तत्र विकल्प इति गुणविधेः फलेन प्रतिज्ञानम् । एवं हि शङ्क्यते । यद्ययं गुणविधिर्न तर्हि कर्म विधीयते । न चापि दू-रस्थमनुवदितुं शक्यते तत्र प्रकृताग्नेयादिकर्मानुवादेनाशक्यं देवताविधानमुत्पत्तिवाक्यशिष्टदेवतान्तरावरोधादत आह । विकल्पस्ताभिः सह भविष्यति । न चाद्यापि सूत्रकारभाष्यका-राभ्यामौत्पत्तिकबलीयस्त्वं क्व चिद्दर्शितमिति तुल्यबलत्वं म-न्यते । किं च ॥

न समस्तानुवादस्य किं चिदस्ति प्रयोजनम् ।
विश्वेदेवा न च प्राप्ताः प्रत्येकं संहतेषु वा ॥

यदि हि गुणं न विदध्यात्ततः समस्तमेव वाक्यमनर्थकं स्या-त् । विश्वेदेवसंबन्धस्य न प्रकृतानां प्रत्येकमस्ति, न समुदाये ये-नानूद्येत । न चामिक्षायागस्य केवलस्य यजिना गृहणम् । न च

वैश्वदेवशब्दस्तद्विषयत्वेनेष्यते। तस्मात्समस्तु यागेषु गुणविधिः। तत्रैतत्स्यात्। एक एव शब्दः समस्तु विधिरामिक्षायां चानुवाद इति विप्रतिषिध्येत। तत्र॥

प्रकृतत्वाविशेषे ऽपि यत्र प्राप्तिर्न विद्यते।
विधेस्तत्रोपसंहारान्न वैरूप्यं भविष्यति॥

अत्रोच्यते। नायं प्रकृतेषु गुणविधिरुपपद्यते। कथम्॥

गुणान्तरावरुद्धत्वान्नावकाशो गुणो ऽपरः।
विकल्पो ऽपि न वैषम्यात्तस्मान्नामैव युज्यते॥

अग्न्यादयो ह्युत्पत्तिवाक्ये तद्धितश्रुत्याष्टाकपालादीनां देवता विश्वेदेवा वाक्येन। नन्वत्राप्यष्टाकपालादिसंबन्धाद्वाक्यमेव। न। तद्धितेन द्रव्यविशेषस्य कृते देवतासंबन्धे वाक्येन विशेषणविशेष्यभावमात्रकरणात्। वैश्वदेवशब्दे ऽपि तथेति चेत्। न। यागलक्षितद्रव्यसंबन्धकल्पनाविप्रकर्षात्। न तावद्वैश्वदेवेनेति प्रकृतमप्रकृतं वा द्रव्यं देवतासंबन्धि श्रूयते। तत्र यजेतेति सामानाधिकरण्याद्देवं तावद्विज्ञायते वैश्वदेवेन यागेनेति। ततश्चान्यथा यागसंबन्धानुपपत्त्या तत्साधनं द्रव्यं लक्षणया देवता स्कन्दति। वाक्येन च यागमात्रसंबन्धे सति प्रकरणादिदं कल्पनीयं तेनैवाग्नेयादिना यागेन वैश्वदेवेन यजेत नान्येनेति। न त्वग्न्यादिविधौ काचिल्लक्षणापेक्षा प्रकरणापेक्षा वेति वैषम्यम्। नहि प्रकरणं द्रव्यस्येति। यदा द्रव्यस्याग्न्यादिसंबन्धो विधीयते न तदा प्रकरणापेक्षेत्यर्थः। अथ वा यद्द्रव्यस्य प्रकरणं न तद्वैश्वदेववाक्येनाश्रितम्। भाष्ये तु द्रव्यशब्दो वस्तुवाची नहि श्रौतस्याग्न्यादिद्रव्यस्य देवताभूतस्य प्रकरणं बाधकं, वैयधिकर-

एवं वा द्रव्यस्य यत्संबन्धित्वेन श्रुतमग्न्यादि(१) तस्य प्रकरणं न बाधकमिति। प्रकृतयजिवृद्धेश्च न दूरस्थानुवादेन गुणविधिर्विशिष्टापूर्वकर्मविधानं वा। विप्रकीर्णयागैकीकरणाच्च समुदायानुवादो ऽर्थवान्। नहि वसन्ते वैश्वदेवेन प्राचीनप्रवणे वैश्वदेवेनेत्यादिविधानं परस्परसहितानामष्टानां हविषां समुदायपदादृते ऽवकल्पते। तस्मादेकदेशस्थैरपि विश्वेदेवैरुपलक्षितानां क्वचिन्न्यायेन तत्प्रख्यतयैव सर्वेषां नामधेयत्वम्॥

## मिथश्चानर्थसंबन्धः ॥ १४ ॥

वैश्वदेवमुपादाय देवता नोपदिश्यते।
सह विध्यनुवादौ हि नैकः शब्दः समश्नुते॥

अथ वा यदुक्तं निर्मन्थ्यादिवन्नामैव सद्गुणमपि विधास्यतीति। तत्राभिधीयते। मिथश्च नामगुणविध्यर्थयोरसम्बन्धः। निर्मन्थ्यस्तु गुणविधिरिति॥

## परार्थत्वाद् गुणानाम् ॥१५॥

पूर्वेणैकसूत्रमपि सम्भवति। मिथः सह प्रदाने क्रियमाणे किंमत्संपत्त्यभावादनर्थसम्बन्धः स्यात्। कुतः॥

हविषो गुणभूतत्वान्न कर्मावृत्तिहेतुता।
देवतैक्यात्सह त्यागो लाघवाद्धि प्रसज्यते॥

तेन सकृत्त्यागः कर्त्तव्य इति(२) सत्यां सहप्रदानशक्तौ नावृत्तिर्युक्ता। संप्रतिपन्नदेवतात्वाच्च सहप्रदानमविरुद्धं शक्यं क-

(१) देवतेति पा० पुस्तके।

(२) तेन शक्यः सह त्यागः कर्तुमिति पा० पुस्तके।

तुं ततश्च त्रिंशत्त्वविरोधः । त्रिंशत्पूरणं च केषांचिदेवं, नव प्रयाजाः, नवानुयाजाः, द्वावाघारौ, द्वावाज्यभागौ, अष्टौ प्रधानाहुतय इति । अपरेषां तु स्विष्टकृद्वाजिनेज्याग्रहणादाघारौ न गणितौ । सर्वथा तु प्रधानाहुतिभेददर्शनसिद्धिः ॥

## पूर्ववन्तो विधानार्थास्तत्सामर्थ्यं समाम्नाये ॥ १६ ॥

गुणविधिनामधेयविचारे पर्यवसिते ऽधुना केवलगुणविधित्वमेवास्ति न वेति विचार्यते । अथ वाष्टाकपालत्वस्य वैश्वानरसामानाधिकरण्याद् द्वादशत्वान्तर्गतस्तत्प्रख्यत्वेन नामधेयत्वमाशङ्क्य गुणविधिः प्रसिद्ध्यादिभिः प्रकृतयजिबुद्धेस्तत्प्रख्यत्वाभावाच्च समर्थनीयस्तमपि निराकृत्यार्थवादता पूर्वसिद्धैवोपसंहरिष्यते । तत्र पूर्ववत्तां विधानेनार्थवत्त्वमपूर्वाणां नामधेयत्वावधारणाद्यदुत्पत्तावपूर्वमिति । तस्माद् गुणविधयो ऽष्टत्वादय इति केचित् । तदयुक्तम् । नह्यपूर्वत्वान्नामधेयत्वं सिद्धम् । अपूर्वत्वाद्धि यथैव लौकिकार्थापरिज्ञानान्न गुणविधित्वमेवं वैदिककर्माभिधायित्वं सुतरामप्रसिद्धमिति नामधेयत्वमपि न स्यात् । सत्येव च सर्वत्र लौकिके ऽर्थे समभिव्याहारादिभिर्नामधेयतोक्ता । तस्माद्यथाभाष्यमेव सूत्रार्थः ॥

पूर्वज्ञातार्थवाचित्वे नामधेयार्थवादने ।
अप्राप्तत्वादिहैते स्युर्वैश्वदेवविकल्पवत् ॥

यदि हि वैश्वानरयागे ऽष्टत्वादयः कुतश्चित्प्राप्ता भवेयुस्ततः संवादद्वारेण नामधेयत्वमर्थवादता वा स्यात् । न तु प्राप्तिर-

स्ति केवलद्वादशत्वाविधानात् । तथाहि ॥

यद्यप्यर्थात्मनास्त्येव सत्त्वासंख्यास्ववान्तरा ।
अपरिच्छेदकत्वात्तु नासौ कर्मविशेषणम् ॥

नहि सत्तामात्रेण संख्या व्याप्रियते किं तर्हि संख्येयपरिच्छेदेन द्वादशत्वेन च कपालेषु परिच्छिद्यमानेषु नाष्टत्वादीनां परिच्छेदकत्वमित्यविद्यमानता । यद्यपि च यथाकथं चिदस्तित्वमाश्रीयते तथाप्येतावन्मात्रं भवेदष्टौ भवन्तीति न तु यदष्टाकपाल इति । संस्कृततद्धितो ह्येष, तद्धितार्थनिमित्तश्च समासस्तौ च सति सामर्थ्ये भवतः । सामर्थ्यं चान्यनिरपेक्षत्वे भवति । सापेक्षाश्च द्वादशत्वेनाष्टत्वादय इति न द्वादशकपालोऽष्टाकपालादिशब्दाभिधानीयकं लभते । तेन स्वरूपसंकीर्तनस्यासत्त्वात्प्ररोचनमसम्बद्धतरमापद्येत । न च द्वादशत्वविलक्षणोऽष्टत्वादेः कर्मोपयोगः सम्भवति, संख्यात्वात् । यद्यपि चाष्टत्वस्तुत्या द्वादशत्वं स्तूयते न त्वष्टाकपालस्तुत्या द्वादशकपालस्य स्तुतिर्विशेषणविशेष्ययोरत्यन्तभेदात् । अपि चास्त्येव द्वादशत्वस्यात्मीया स्तुतिर्जगत्यैवास्मिन्निति । तस्माद् द्वादशत्वेन सह विकल्प्यमाना गुणविधय एवैतेऽपि । सर्वं चेदं वैकल्पिकानेकसंख्याविशिष्टवैश्वानरविधानादेकमेवोत्पत्तिवाक्यमिति न बलाबले विशेषः । तस्मात्सामर्थ्यमिति च पूर्वप्रकृतयोस्याप्यपेक्षत्वाद्वैश्वदेवपूर्वपक्षातिदेशः । तदीयं हि सामर्थ्यमस्मिन्समाम्नायेऽस्ति, न च तदुक्तः परिहारः । तस्माद्विधानार्था इति ॥

## गुणस्य तु विधानार्थेऽतद्गुणाः प्रयोगे स्युरनर्थका नहि तं प्रत्यर्थ-

वत्तास्ति ॥ १८ ॥

प्रकृताप्रकृते यागे तथा द्रव्येऽपि वा गुणः ।
द्रव्यं गुणवदेवं च न कथं चिद्विधीयते ॥

प्रकृते तावद्द्वादशत्वावरोधान्नाष्टत्वादयो विधीयन्ते । न च दूरस्थे तदुपादानशब्दाभावात् । न च कर्मान्तरं केवलाष्टत्वादिगुणकं सम्भवति । द्रव्यदेवतासंयोगप्रत्यक्षयागाश्रवणात् । एतेन पुरोडाशे संख्याविधिस्तथापि प्रत्युक्तः । तथाष्टाकपाला-दि पुरोडाशविधानम् । न हि द्वादशकपालपुरोडाशविरुद्धो यागः पुरोडाशान्तरं गृह्णाति । नाप्यननूदिते कर्मणि स्वशब्दे-नाप्रकृते पुरोडाशविधानं फलतत्साधनासंबद्धं क्व चिदुपयुज्य-ते । नाप्यव्यापारात्मकत्वाद् द्रव्यं विधातुं शक्यते । अत एव वि-श्वजिदादिवदपि नाध्याहारेण फलं कल्प्यते ॥

वैश्वानरपदं नापि यागायात्रानुषज्यते ।
विभक्त्यन्तरयोगित्वान्न चर्तेऽस्मादनर्थकम् ॥

स्यादेतत् । वैश्वानरपदानुषङ्गादष्टाकपालादिद्रव्यदेवतासं-बन्धविधेर्यागान्तरसिद्धिरिति तन्नास्ति । प्रथमान्तेषु द्वितीया-न्तानानुषङ्गात् । न च विभक्तिविपरिणामोऽन्यथाप्युपपद्यमान-त्वात् । यदि ह्यनुषङ्गविपरिणामावन्तरेणाष्टत्वादिश्रवणमनर्थ-कं स्यात्ततः किं वा न क्रियेत तत्तु स्तुत्यर्थत्वेनोपपन्नतरत्वान्ना-नर्थकम् । तदा चानुवादत्वाद्विपरिणतविभक्तिसंबन्धेऽप्यदोषः । तस्मान्न पुरोडाशविधानम् । न च द्वादशकपालेऽष्टाकपाला-दयः पुरोडाशाः स्वात्मभिर्विभक्ता विद्यन्ते । अष्टत्वादिमात्रवि-शेषदर्शनात् ते चाष्टत्वादयो न यागेनापि पुरोडाशे वि-

धीयन्ते इत्युक्तम्। न चाष्टत्वादीनां द्वादशकपालेनैकवाक्यता तत्रोपपद्यते । नानाविधेयप्रयोजनवशेनार्थैकत्वाभावात्। न च नानाविधानां विभज्यमानानां साकाङ्क्षत्वं विद्यते। यदि चैकं वाक्यं भवेत्ततः सर्वविशिष्टैकभावनाविधानान्न विकल्पः स्यात्। अष्टत्वादीनां च गुणत्वान्न प्रत्येकं वाक्यपरिसमाप्त्या पृथगनुष्ठानोपपत्तिः। न च संख्यानां समुच्चयः संभवति। संख्यान्तरोपजननेन सर्वाभावप्रसङ्गात्। संख्यान्तरानुपजननसमुच्चयस्तु द्वादशत्वे ऽष्टत्वाद्यन्तर्भावात्। तथाभूतानां च द्वादशत्वविधिनैव प्राप्तेरनुवादत्वापत्तिः । तेनैतैर्भिन्नैर्वाक्यैः स्वतन्त्रा विधीयन्तइत्यवश्यं भवताभ्युपगन्तव्यम्। ततश्च द्वादशत्वमुत्पत्तिवाक्यशिष्टमितराणि तु वाक्यान्तरैः प्रकरणापेक्षैर्दुर्बलानि सन्ति न संबध्यन्ते। एवं तावद्वैश्वानरयागो बलवत्तरगुणावरोधान्नाष्टत्वादीन्प्रतीच्छति। अपि चाष्टत्वादयोपि नैवातिसोढास्तेपि हि पुरोडाशेनैकवाक्यभूतत्वान्नैव वैश्वानरयागस्य प्राप्नुवन्ति। तत्प्रकरणं बाधित्वा न तस्य भविष्यन्ति। तथा चातद्गुणाः केवलपुरोडाशसंबन्धे प्रयोगे स्युरनर्थकाः। न हि तं पुरोडाशं प्रत्यर्थवत्तास्ति। अथ वा कथमतद्गुणा इत्यत आह। न हि तं यागमन्यावरुद्धं प्रत्यर्थवत्तास्तीति ॥

## तच्छेषो नोपपद्यतइति चेद् अविभागाद्विधानार्थे स्तुत्यर्थेनोपपद्येरन् (१) ॥ १९ ॥

(१) स्तुत्यर्थेन विधीयेरन्निति २ पु० पाठः ।

अष्टत्वाद्यविधानत्वाद्धार्थेयं तत्प्ररोचना ।
तस्मादवयवद्वारं द्वादशत्वं प्ररोच्यते ॥

यद्विधेयमवधार्यते तदेव स्तोतव्यं द्वादशत्वं चात्र विधेयं तस्माद्यथा कथं चित्तदेव स्तोतव्यम्। तत्सामीप्याच्च शक्नुवन्त्यष्टादिशब्दास्तदेकदेशप्रतीतिं कर्तुम्। एकदेशस्तुतिद्वारेण चैकदेशी स्तुतो भवति। तेनैतदुक्तं भवति । ईदृशोयं द्वादशकपालो महाभागो यस्मिन् क्रियमाणे ऽष्टाकपालादयोपि संभाविता भवन्ति ते चाष्टत्वादयो ब्रह्मवर्चसादिभिर्द्विप्रशस्तास्तस्मात्प्रशस्तोयमिति। यत्त्वस्त्येव द्वादशत्वस्यान्या स्तुतिरिति। नैष दोषः। कुतः॥

स्तुतेरपरिमाणत्वाद्यावती हि प्रतीयते।
तां सर्वामेक(१)रूप्येण विध्युद्देशः प्रतीच्छति ॥

सर्वत्र ह्यल्पैर्बहुभिर्वाक्षरैः स्तुतयो दृश्यन्ते, श्रोतृप्रकारानेकत्वाच्च कश्चित्काश्चिदर्थवत्यो भवन्ति। यथैव केषां चिद्विध्युद्देशमात्रेण प्रवृत्तौ सिद्धन्त्यामन्यार्था स्तुतिराश्रीयते तथैवाल्पस्तुत्युपपन्नेऽपि कार्ये महास्तुत्याश्रयणमिति ॥

## कारणं स्यादिति चेत् ॥२०॥

जनकत्वेन पूतादेरष्टत्वादीनि कारणम्।
तेषां कारयितृत्वाद्वा पूतादेः कारणाभिधा ॥

यदुक्तं द्वादशत्वावरोधादनर्थकमष्टत्वादिविधानं स्तवनं चेति। तन्नानर्थकम्। नित्यं हि द्वादशकपालता। यस्तु गुणफलानि ब्रह्मवर्चसादीनि प्रार्थयते तस्याष्टत्वादीनि द्वादशत्वोप-

(१) सर्वामेवैक—पा० पुस्तकान्तरे ।

मर्देन निवेक्ष्यन्ते । तथा हि ॥

पुरुषार्थसमासत्तेः काम्यं नित्यस्य बाधकम् ।
विशेषतस्य सामान्ये पूर्वप्राप्ते प्रवर्तनात् ॥

पुरुषार्थसिद्ध्यर्थो हि सर्वः प्रयास इति तत्प्रत्यासन्नं वस्तु बलीयो भवति । दूरे च द्वादशत्वं पुरुषार्थस्य तत्साधनयागद्रव्यसंस्कारार्थकपालपरिच्छेदाद् अष्टत्वादयस्तु तदाश्रिताः सन्तः साक्षाद् ब्रह्मवर्चसादि साधयन्तीति प्रत्यासत्तेर्बलीयांसो भवन्ति तस्मादर्थवन्त इति । ननु च ॥

ब्रह्मवर्चसयोगादि फलत्वेन यदीष्यते ।
स्तुत्यभावाद्विधिः केन वर्तमानापदेशिनाम् ॥

तत्र केचिदाहुः । औदुम्बराधिकरणपूर्वपक्षन्यायेनात्र प्रत्यवस्थानमिति तन्न युक्तम् । तत्रैव दत्तोत्तरत्वात् । अतोयमभिप्रायः । पूत एव स तेजस्वीत्यादिना फलमुच्यते । गायत्र्यैवैतमित्यादिस्तुतेः प्रात्यात्मिको विधिः । यदष्टाकपालइत्यादिभिः सार्थवादकैः प्रत्येकं विहितानां यथासंख्येन पूत एवेत्यादिभिः फलसंबन्धः क्रियते ॥

## आनर्थक्यादकारणं कर्तुर्हि कारणानि गुणार्थो हि विधीयते ॥ २१ ॥

वाक्यानि यावदर्थं स्युर्गुणेभ्यः फलकल्पने ।
एकोपक्रमसंहारादेकं चेदं प्रतीयते ॥

पुत्रे जाते द्वादशकपालमिति यदेवोपक्रान्तं तदेवाष्टत्वादीनामन्ते यद्द्वादशकपालो भवतीति यस्मिन् जाते एतामिति चोपसंह्रियमाणं पश्यामः । तावति च नाष्टत्वादयः पृथग् भवितुं

लभन्ते तदेकवाक्यता च न स्तुत्या विनोपपद्यते। अर्थान्तरपरतायामानर्थक्यात्। यदि हि कर्तृसंबन्धीन्येतानि भवेयुस्ततस्तस्य कारणानि प्रयोजकानि स्युः। वैश्वानरसबन्धीनि त्वेतानि। तस्माद्गुणार्थोन्यासंभवादिति स्तुत्यर्थो विधीयते। पूत एव स इत्येवमादीनां च तच्छब्दयुक्तानां यस्मिन् जातइत्यनेनापेक्षितत्वान्न पूर्वैः सह फलत्वेन संबन्धः। न चात्रानुपयोगो येन बलादाच्छिद्य नीयेरन्। न चाष्टत्वादि(१)ब्रह्मवर्चसादीनामेभि(२)र्भागेन संबन्धः। यत्र तु विभागो गायत्र्यैवेनमित्यादौ तत्र स्तुतित्वमभ्युपगतमेव। अतो या नाम पूत इत्येवमादीनां फलकल्पना सा यागमेव प्रति नाष्टत्वादीन्। प्रथमोपनिपाते तु यागस्यापि स्तुतिरेव। एवं कामकाररहितत्वेन फलविध्यसद्रूपत्वात्। एतैरेव स्तूयमाने यदष्टाकपाल इत्यादीनामुपपत्त्यर्थता तस्मान्न गुणविधय इति सिद्धम्॥

## तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणाश्रयाः॥२२॥

अर्थवादप्रसङ्गात्तदुपकारिगुणवादविधिलक्षणं तत्र नोक्तमिदानीमभिधीयते। ननु च तत्रैव रूपात्प्रायाद् दूरभूयस्त्वादिति निमित्तं कथितम्। सत्यं कथितम्, न तु लक्षणत्वेन। कथं तर्हि इह सिद्धं तत्रोदाहृतार्थवादलक्ष्यविषयव्यवहारार्थं नीतम्। अत्र तु सर्वगौणवृत्तीनां लक्षणमुच्यते। ननु च सहचरणस्थानादीन्यन्यान्यप्युपपादप्रभृतिभिर्गौणनिमित्तान्युक्तानि। लोके

(१) चाष्टत्वादीना—पा० पुस्तके।

(२) ब्रह्मवर्चसादिभिरेभि—पा० पुस्तके॥

च दृश्यते यष्टीः प्रवेशय, मञ्चाः क्रोशन्ति, अश्ववसहस्रेणामुको राजा जित, इति । तान्युपसंहर्त्तव्यानि लिङ्गसमवायेनैवोपसंहृतानीति केचित् । क्वचित्समवेतेतरप्रत्ययवद्धि यष्टिसहचरितादिप्रत्ययो भवति । अथ वा गौण्या वृत्तेरिह निमित्तमभिधीयते न लक्षणायाः । किं चानयोर्भेदो ऽप्यस्ति । बाढमस्ति । कुतः ॥

अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते ।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥

तत्र यथैवाकृतिवचनः शब्दस्तत्सहचरितां व्यक्तिं लक्षयति तथैव यष्टिमञ्चाश्ववादयस्तत्संबद्धपुरुषलक्षणार्था भवन्ति । अग्निर्माणवक इति तु नाग्नित्वाविनाभावेन माणवकः प्रतीयते । किं तर्हि ॥

वह्नित्वलक्षितादर्थाद्यत्पैङ्गल्यादि गम्यते ।
तेन माणवके बुद्धिः सादृश्यादुपजायते ॥

सर्वत्र च तत्सिद्धिकरादावियमेव प्रस्तरप्रभृतौ यजमानादिशब्दानां वृत्तिरिति तउदाहृताः । अत्रापि च सामानाधिकरण्यादेकतरस्य नामधेयत्वं निमित्ताभावादनेकशक्तिकल्पनाभयाच्च तदनुपपत्त्या कार्यलक्षणाद्वारं प्रयोजनवत्तरत्वेन गुणविधित्वमशक्तेर्वा तदसम्भवादर्थवादत्वमिति त्रय एव पक्षाः । तत्र गुणविधिवादी मन्यते । न कां चित्प्रस्तरयजमानयोरितरेतरसमभिव्याहारेण स्तुतिः प्रतीयते । न च स्तोतुमपि परशब्दः परत्र वर्त्तते । न च प्रवृत्तिनिमित्तमस्ति । न च प्रवृत्तस्य प्रयोजनमन्यत्कार्यलक्षणातः । तस्माद्यो होता सो ऽध्वर्युरित्यादिवदन्यतरः कार्यलक्षणार्थः । तत्रापि मुख्यं वा पूर्वचोदनादिति यजमानशब्दः स्वार्थवृत्तः प्रस्तरशब्दस्तु धारणादिकार्यलक्षणार्थ

इति गुणविधिः । अत्रोच्यते ॥

न तावत्कार्ययोगित्वमेकस्याप्युपपद्यते ।
विरोधाद्यजमानस्य प्रस्तरादेरचोदना ॥

एककपालवत्सूक्तवाकेन प्रस्तरं प्रहरतीति यजमाने प्रह्रियमाणे सर्वतन्त्रविलोपप्रसङ्गः । तस्मादेकवाक्यगतोत्तरसादनसर्वहोमविधिस्तुत्यर्थः संवादः । कथं पुनः परशब्दस्य परत्र सामानाधिकरण्यं किमाकारा वा स्तुतिरिति । यजमानो हि सर्वाभ्यर्हितस्तदंशत्वाद्बर्हिष उपरि प्रस्तरः सादयितव्यः । स्वर्णत्वेन संस्तुते चाहवनीये सकलो यजमान आरोपितो भवत्येककपालेनाखण्डितेनेति स्तुतिः । गुणाच्च शब्दवृत्तिः । कथमगुणवचन इति वाचकत्वमभ्युपेतं मन्वानस्य प्रश्नः । सिद्धान्तस्तु । अजहत्स्वार्थाः सर्वाः शब्दप्रवृत्तयः पूर्वशक्त्यनुसारसम्भवे शक्त्यन्तरकल्पने प्रमाणाभावात् । सम्भविष्यति चात्र सिंहत्वावगतव्यक्त्युपस्थापितप्रसह्यकारित्वाद्यनेकधर्मप्रत्ययाद्देवदत्तप्रत्यय इति पूर्वैव शक्तिर्निमित्तमिति न संशयहेतुत्वेन व्यवहारोच्छेदकारणं प्रसिद्धहानाप्रसिद्धकल्पनमाश्रयणीयम् । अन्येषां तु दर्शनं सर्व एव हि सिंहादिशब्दा जातिगुणक्रियासमुदायवाचिनः समस्तार्थासम्भवे देवदत्तादिषु कतिपयगुणक्रियायोगादुपचर्यन्त इति । तत्राभिधीयते ॥

समुदायार्थवाचित्वे नैकदेशे भवेद्गतिः ।
शतशब्दान्न पञ्चाशन्मुख्यरूपेण गम्यते ॥

भवति तु जातिमात्रे दृष्टे सर्वक्रियागुणप्रत्ययस्तस्मये ऽपि प्रयोगः । प्रत्ययश्च मुख्यात्मनैव न देवदत्तादिष्विव सिंहशब्दादुपचरितः । सामान्यवाचिता चान्तत्यधिकरणसिद्धा बाध्यते ।

क्रियागुणानां चानन्त्यान्न शक्यः प्रतिव्यक्ति सम्बन्धो ऽनुभवितुम् ॥

एकस्यामेव च व्यक्तौ बाल्यादिषु गुणक्रियाः ।
अन्याश्चान्याश्च शक्यन्ते नाभिधातुमसंगतेः ॥

न चासामान्यात् सामान्यं शक्यते कल्पयितुं जात्यन्तरे ऽपि क्व चित्कासां चित्सद्भावात् ॥

तत्र सिंहत्वमेवासां व्यवच्छेदकरं भवेत् ।
तच्चानभिहितं नैवमुक्तं चेन्नान्यवाचिना ॥

न ह्यनभिहितं सिंहत्वं गुणक्रियाणां व्यवच्छेदकरं भवति अप्रतीतेः । अभिहितं चेत्तु प्रत्ययादेवाशेषगुणक्रियावगमादभिधानशक्त्यनवसाय इति समुदायवाचिनामेकदेशेषु न गौणत्वसम्भवः । कश्चित्पुनराह समारोपिततद्भावो गौण इति । तस्यैतन्मतं न कथं चन परशब्दस्तया जात्या स्वनिबन्धनभूतया विनात्यन्तानभिधेयक्रियागुणमात्रद्वारेणान्यत्र वर्त्तितुमर्हति । न च सिंहशब्देनाप्रवर्त्तमानेन सिंहो देवदत्त इति सामानाधिकरण्यप्रयोगो घटते । कथं तर्हि ॥

अर्थेष्वर्थान्तरात्मानमध्यारोप्योपपादितम् ।
वाच्यमासाद्य शब्दानां स्वयमेव प्रवर्त्तनम् ॥

सिंहादिसदृशक्रियागुणदर्शनेन हि देवदत्तादयः सामस्त्यपरिकल्पनया सारूप्यमापद्यन्ते । ततश्च स्वार्थएव शब्दः प्रयुज्यते न चैतावता मुख्यप्रसङ्गो ऽर्थस्याध्यारोपितत्वात् । यत्र तु स एवार्थो न समारोप्यते तत्र मुख्य इत्यदोषः । तत्रेदमुच्यते नैतत्कल्पनाया अशक्यत्वात् । तथा हि ॥

असंकीर्णस्वभावं सत् वस्तवस्त्वन्तरात्मना ।

आरोप्यते ऽभिधानार्थं कथं नु भ्रान्तिवर्जितैः ॥

यदा तावद्भ्रान्त्या मृगतृष्णायां तोयमध्यारोप्य शब्दं प्रयुङ्क्ते, तदोभयोः मुख्यार्थाध्यवसानरूपेण तोयप्रतीतेर्भ्रान्तिमुख्यत्वम् । अथापि वक्ता विवेकी सन्नितरवचनार्थं प्रयुङ्क्ते, श्रोता च न विविङ्क्ते, तदाप्येकस्य विवेकेनाध्यारोपाभावादितरस्य भ्रान्त्याध्यवसानान्नैकमपि प्रति गौणत्वोपपत्तिः । यदा तु द्वावप्यभ्रान्तौ तदोभयोः सादृश्यादिनिमित्तान्तर्णीतवत्यर्थाध्यवसानादारोपाभावः । तथा हि ॥

द्वावपि प्रतिपद्येते सिंहरूपं सोर्विविक्ततम ।
नाध्यारोपयितुं शक्तिस्तेनैकस्यापि विद्यते ॥

यथैव ह्यसदृशानामर्थानां तिक्तमधुरादीनां न कथं चिदपि प्रतीत्यभावात्परस्पराध्यारोपण,मेवं सदृशानामपि विवेकज्ञानं नोपपद्यते । न ह्यर्थाध्यवसानादन्यादृशं नामज्ञानं व्यवहाराङ्गं भवतीति । किं च ॥

शब्द एव यदा तावदनिमित्तो न वर्त्तते ।
बुद्धिर्दुर्लभजनिता तत्र भवेत्त्रिविषया कथम् ॥

न चार्थरहिता बुद्धिरात्माकारमात्रमनुभवन्ती जायते इत्युक्तं शून्यवादे । अपि च ॥

पूर्वानुभूत एवार्थः स्मर्य्यते प्रथमं पदात् ।
तेन मुख्ये प्रतीते ऽर्थे क्वाध्यारोपो भविष्यति ॥

सर्वथा तावदयं गौणमुख्यविभागः श्रोतॄणामर्थविशेषावधारणे व्याप्रियते ते च पदवेलायामनध्यारोपितस्वार्थवृत्त्येव सिंहादिपदमध्यवसाय देवदत्तादिपदसामानाधिकरण्यान्यथानुपपत्त्या गौणतां कल्पयन्ति तत्र चैषां स्वयमनारोप्यैव सिंहत्वं

तस्मादश्वादिप्रतीतिर्भवति । सा च किं शब्दादुतार्थादित्यन्विच्छतामन्वयव्यतिरेकाभ्यामाकृत्यधिकरणन्यायेनार्थादिति निश्चयो जायते । कथम् ॥

सिंहशब्दे ऽप्यनुक्तेऽपि सिंहार्थात्सदृशे मतिः ।
जायते न त्वबुद्धेऽर्थे सिंहशब्दे श्रुतेऽपि नः ॥

यदा च श्रोतॄणां स्वयमध्यारोपाभावः, तदा वक्तर्यपि नैवैषामेवं कल्पना भवति, यथा नूनमनेन सिंहत्वमध्यारोपितमिति । कथं तर्हि सिंहत्वाविनाभूतानेकक्रियागुणसमुदायोऽनेन विवक्षितः यत्नगौरवभयान्न स्वैरभिधानैर्ब्रवीति । न चास्य समस्तस्य किं चिदेकं वाचकं पदमस्ति तेनाविनाभावितया कथं नु सिंहत्वात्तत्प्रतीतिर्भवेदिति तत्तावदभिधीयते यतः । स्थितया शब्दशक्त्या पुंसां व्यवहारो न तदंशेन शक्त्यन्तरोपजन इति । किं च ॥

यद्यध्यासेन वक्तॄणां गौणी वृत्तिः प्रकल्पते ।
वेदे सा न कथं चित्स्यादध्यारोपयितुर्विना ॥

तस्माद्गुणप्रवृत्तिप्रयोजनो गौण इत्येव लक्षणं न्याय्यं नान्यथा । नन्वेवं सति खपुष्पादीनां स्वार्थाविनाभूतगुणाभावाद्गौणप्रयोगाभावप्रसङ्गः, सांख्यादिकल्पितप्रधानादिनिषेधे च बौद्धादेर्विनाध्यारोपेण प्रयोगासम्भवो ऽनभ्युपगते हि प्रतिषेधानर्थक्यमभ्युपगते तद्विरोधः स्यादध्यारोपितनिषेधे त्वदोष इति । अत्राभिधीयते । तवैवायं दोषः । कुतः ॥

अध्यस्यते खपुष्पत्वमसत्कथमवस्तुनि ।
प्रज्ञातगुणसत्ताकमध्यरोप्येत वा न वा ॥

यत्तावत्खपुष्पस्थानीय आत्मा खपुष्पं भवत्सिद्धान्त इत्यादि-

प्रयोगः । तत्र कतरत् खपुष्पमन्यत् । त्वया सिंहत्ववदवधारितं यदध्यारोप्येत तेन खपुष्पस्वरूपमेव तावदध्यारोपात्मकमभ्युपगन्तव्यं, न चैतस्य लोके गौणत्वप्रतीतिर्मुख्यार्थान्तराभावात् । प्रथमप्रतीतत्वाद्धि खपुष्पादिस्वरूपं न मुख्यत्वादपैति । कथमसतो मुख्यत्वमिति चेत्, तुल्यमिदं गौणत्वेपि । यच्च त्वध्यारोप्यते स गौणः न योध्यारोप्यते खपुष्पं वारोप्यमाणं विषयान्तराभावात् स्वयमेवाध्यारोप्यते वा तच्चैतत्स्यात् । विद्यमानघटादिरूपं तत्राध्यारोप्यते न गौणत्वमिति । तदयुक्तं खपुष्पादौ सद्रूपप्रत्ययानुत्पादात् । अवश्यं हि यादृक् सम्बन्धकालेर्थो ऽनुभूतस्तादृग उत्तरकाले ग्रहीतव्यम् । न च शशविषाणाद्यर्थः सद्रूपेणानुभूतपूर्वः न चार्थान्तरसद्रूपग्रहणेन खपुष्पादेः सम्बन्धो गृह्यते ययोस्तदवयवयोरर्थसम्बन्धोनुभूतस्तयोर्नैव गौणत्वं मुख्यात्मनाववोधात् । कथं तर्हि शशविषाणं नास्तीत्युच्यते यदि तत् सद्रूपेण न प्रतीतपूर्व्वं सद्रूपप्रतीतस्य वा कथमत्यन्तप्रतिषेधोपपत्तिः । पश्य ॥

> अन्यत्र ज्ञातसद्भावः पदार्थोन्यत्र वार्य्यते ।
> न त्वेकत्रैव सद्रूपमसद्रूपं च गम्यते ॥

तेनैवाध्यारोप्यतइति चेत्, नाध्यारोप्यस्याप्येवमेव प्रदेशान्तरसद्भावाधीनत्वात । न चान्यसद्भावेनान्यस्याध्यारोपः सिध्यति, असम्बन्धात् । कथमूषरसद्भावेन तोयरूपाध्यारोप इति चेत् । प्रदेशान्तरे तोयसद्भावप्रतीतेर्वैषम्यम् । कथं तर्हि शशविषाणं नास्तीति प्रयोगः । पूर्वेणैवाभावेवगते नास्तिशब्दो ऽनुवादक इति केचित् । अथ वा सामान्येन प्रागभावादिषु नास्तिशब्दः प्रवर्तमानः शशविषाणशब्देन विशेष्यते न शशविषाण-

मव्यभिचारात्तेनेत्यदोषः । अथ वा येनावयवार्थौ गृहीतौ स-
मासाच्च राजपुरुषादिवत्सामान्यतो दृष्टेन षष्ठ्यर्थस्मृतिः प्रस-
क्ता न च कदा चिच्छ्रशः शृङ्गरहितत्वेनावधारितपूर्वस्तस्यैत-
त्संसर्गानुसन्धानं वार्यते । अथ वा विनैव समासेन शशमधि-
करणत्वेन निर्दिश्य विषाणं च गवादिगतं विनैवाध्यारोपेणान-
योः सम्बन्धो नास्तीति कथिते तेनैवानुभूतसम्बन्धस्य शशवि-
षाणशब्दः तमेवाभावं गमयिष्यति । अथ वा शशमूर्धवर्त्तिनां
पृथिव्यवयवानां उपर्युपरि चीयमानानां दृढदीर्घसन्निवेशरूपे-
ण परिणतानां नीचैर्वृत्ताकारेण यदवस्थानं सोस्य वाक्यस्या-
ध्यासमन्तरेणोक्तविषयः सम्भवतीत्यविरोधः । तथा चाह ॥

यां निषेधाः क्रियामाहुर्न यातीत्येवमादयः ।
तिष्ठतीत्यादिभिः सैव वस्तुरूपा प्रतीयते ॥

तेन लब्धमुख्यार्थानां शशविषाणादीनामन्यत्रापि प्रसिद्ध्य-
न्यथास्थायिन्यर्थे सिद्धो गौणप्रयोगः तत्र तु मुख्याभावात् दू-
रीभूतो गौणः । यदि च स्वार्थएव गौणता ततोर्थान्तरेणैव वृ-
त्तेरत्यन्ताभावः स्यात् । न ह्यग्निशब्दो माणवके गौणीभूतस्तद्-
द्वारेण पुनरन्यत्र गौणतां प्रतिपद्यते तथा च वक्ष्यति 'न प्रति-
निधौ समत्वादि'ति येपि प्रधानत्वादीनां प्रतिषेधास्तेपि ना-
ध्यारोपनिमित्ताः किं तर्हि ॥

परमाणुशरीरादिकारणात्मादिवादिभिः ।
ततोऽन्यादृक् प्रधानात्मरूपं नास्तीति वर्ण्यते ॥

प्रधानादिशब्दा जगत्कारणादिविषयास्तत्रैव बौद्धादिभिः
परमाण्वाद्यात्मककारणाभ्युपगमात् । शरीरसन्तानाद्यात्मक-
कल्पनाच्च तद्व्यतिरिक्तकारणादिनिषेधः क्रियते, परमाणुशरी-

रादिष्वेव प्रधानात्मादिशब्दवृत्तिरिति यावत् । तस्मात्स्वार्थाभिधानेनैव गौणत्वमित्यदुष्टम् । अतश्च यजमानः प्रतीतः स्वार्थसिद्धिकरत्वं लक्षयति प्रस्तरैककपालावपि च पारंपर्य्येण यजमानार्थसिद्धिं कुरुत इति कार्य्यापत्तेस्तच्छब्देन स्तूयेते । एतेन जातिसारूप्यादीनि व्याख्यातानि ॥

## जातिः ।

तत्राग्नेयादिशब्दानां ब्राह्मणादिषु मुख्यत्वमेव येन केन चित्सम्बन्धेन तद्धितोत्पादात् । देवतासम्बन्ध एव वास्ति न हि यदेव त्यज्यते तस्यैव केवलं देवतासम्बन्धः, त्यक्तुरपि तेनैव सम्बन्धेन सैव देवता भवति । यथा च वक्ष्यति 'भवति पुरुषस्यापि यष्टुः सा देवते'ति । तस्मादनुदाहरणत्वम् । अतो यत्राग्निर्वै ब्राह्मण इत्यादिप्रयोगास्तदुदाहर्त्तव्यम् । अग्निर्हि प्रतीतो मुखप्रभवत्वसामान्येन ब्राह्मणादीनुपस्थापयति । जातिरिति चात्र जन्मोपादानं विवक्षितं यद्यपि च तथा वस्तु नास्ति तथाप्यर्थवादान्तरे तथोक्तत्वादिह तच्छब्दनिमित्तता प्रतिपत्स्यते ॥

## सारूप्यात् ।

ननु सर्वत्रैव सारूप्यनिमित्तं गौणत्वं, सत्यमेव,मिह तु चक्षुर्ग्राह्यशब्दविवक्षया पृथगुपादानम् । चाक्षुषं हि यूपस्योर्द्ध्वत्वमञ्जननिमित्तं च तेजस्वित्वं तद्द्वारेण यजमानादित्यशब्दाभ्यां स्तूयते यजमानस्य हि पशुधारणे विनियुक्तस्य निखातस्य च स्वपदार्थकरणविरोधः । सहस्ररश्मेस्तु अशक्यमेव यूपकार्य्यमाधातुं यदि च कश्चिन्नास्तिक्यादाहप्रतिकृतिमुपादद्यात्त-

स्यापि गौणतापत्तिर्विधिविषया स्यात्तद्वरं स्तुतावेव तदाश्रयण-
मित्यविधित्वं स्यात् ॥

# प्रशंसा ।

ननु सर्व्वत्र प्रशंसानिमित्तत्वं गुणवादस्योक्तम् । सत्यं, फल-
मन्यत्र गुणवादस्य प्रशंसा, अत्र तु गुणमाहृप्यादिवत्प्रवृत्तिनि-
मित्तम् । कथमिति चेत् ॥

गवाश्वादिगतां पूर्वमुपादाय प्रशस्तताम ।
तदभावोऽन्यपश्वादौ नञ्समासेन कथ्यते ॥

न तावन्महिषादीनां पशुत्वस्वरूपाभावः शक्यते वक्तुं प्रत्यक्ष-
विरोधात्,तत्कार्य्यप्रतिषेधः कल्प्येत तदपि तत्र तत्र वचनविहि-
तत्वात् न शक्यमेव । न च विकल्पो वैरूप्यात् । कल्प्यो ह्यत्र वि-
धिरितरत्र क्लृप्तः स्तुत्या वार्थवत्त्वान्नागत्या तदाश्रयणम । तन्न्यत्र
मुख्यार्थत्यागः पशवो गोऽश्वा इति च पुनरुपादानमनर्थकं न
च पशुत्वैकार्थसमवायिनः क्रियागुणाः शक्याः प्रविवेक्तुम् । अथ
गवाश्वसमवायिनो विशेषाः प्रतिषिध्येरन् एवमपि मन्दं फ-
लम् । अन्यशब्देनैव च तावानर्थः सिद्ध इत्यनर्थकम् । अवश्यं
चोत्तरपदेन प्रतिषेध्यर्थे प्रथममुपात्तेन तत्रानुवर्त्तितव्यं विषय-
रहितप्रतिषेधासम्भवात् । न च प्रशस्तत्वादन्यदुपादीयमानमुप-
युज्यते । शक्नुवन्ति च गवाश्वादिसम्बन्धात्तद्गतं प्राशस्त्यं गमयि-
तुम् । यद्यप्यप्रशस्तत्वमपि शक्नुवन्ति तथापि प्रक्रमापेक्षया त-
द्विहानाकाङ्क्षितमिति प्राशस्त्यमेव निषिध्यते । तत्प्रतिषेधमा-
त्रमपि च नैवोपयिकमिति तद्द्वारेणान्येषां प्रशस्ततरत्वं क-
थ्यते । एतदुक्तं भवति । गवाश्वादीनपेक्ष्य नैवान्यस्य प्राशस्त्यं

विद्यत इत्येवमन्यगतप्रशंसानिमित्तः प्रतिषेधः सा चेह प्रथमतरमाश्रितेत्यनन्यप्रयोजनतया पश्चादवगम्यते । अन्यत्र पुनरुत्तरकालमेवैषा भवन्ती निमित्तत्वेनोच्यते ॥

## भूमा ।

यदि सृष्टीरुपदधातीत्याख्यातप्रत्ययवशाद्विधिराश्रीयते तत्र न जात्या धर्म्मविशेषेण वा काश्चिदिष्टकाः सृष्टयो नामान्याभ्यो विलक्षणा विज्ञायन्ते, या एवंविधलिङ्गैर्म्मन्त्रैरुपधीयन्ते ता एव सृष्टयस्तत्रोपधानमात्रमुद्दिश्य मन्त्रेषु विधीयमानेषु सकलव्याप्तेः प्रत्यक्षवचनाविनियुक्तलिङ्गप्रकरणविनियोज्यमन्त्रानर्थक्यप्रसङ्गः । तस्मात् प्रकरणपाठादेव सर्व्वत्र मन्त्रेषु प्राप्तेषु एकदेशानुवादः सृष्ट्यभिधाननिमित्तार्थवादार्थः । अत्र चोदयन्ति । चयनचोदनयैवोपधानस्य प्राप्तत्वाल्लिङ्गप्रकरणानुमितया च श्रुत्या मन्त्रप्राप्तेः प्रदेशान्तरस्थार्थवादानुपपत्तिरेकवाक्याधीनत्वादर्थवादप्रवृत्तेस्तथा च प्रथनाशवाद व्याख्यातम् । न चान्यो गुणः श्रूयते यदर्थता कल्प्येत तत्र परिसंख्यार्थतैव प्राप्नोति। ततश्च तदवस्थमानर्थक्यमिति वाच्यं पुनः श्रुतिप्रयोजनम् । तत्र केचिदाहुः । उपधानमेवात्र विधीयते तन्माहात्म्यप्रदर्शनार्थं च मन्त्रग्रहणम् । इत्थमिदं प्रशस्तं यदेवंरूपैर्म्मन्त्रैः क्रियतइति । चयनेनार्थगृहीतमुपधानमिति चेन्न । संहृतस्थापनेनापि चयनोपपत्तेः । न चैवं संहृतानामेवोपधानं स्यात्, न । तस्येष्टकाः प्रत्युपादीयमानस्य प्रतिप्रधानावृत्तिन्यायसिद्धेः । अपि च ॥

प्राप्नुवन्त्यपि वक्तव्या पुनरेवंविधा क्रिया ।
आध्वर्य्यवसमाख्यानं तथा हि प्रतिपद्यते ॥

ततश्चाध्वर्युकर्तृकत्वं च लभ्यते अर्थगृहीतायां त्वनियमः स्यात् । न चावश्यमुपधाने एव सर्वे मन्त्रा विनियुज्येरन् । अविशिष्टसामर्थ्या हि केचिद् ग्रहणाद्यपि कुर्युः । अपि च ॥

प्रत्यक्षब्राह्मणोक्तानां मध्यमा चितिराश्रयः ।
तदर्थमपि सम्बन्धः कार्यो मन्त्रोपधानयोः ॥

ये त्वौपानुवाक्यकाण्डाधीनास्तेषां वाक्यादृते सम्बन्ध एव नास्तीत्यर्थवदेव वचनम् । न चावश्यमनेन सूत्रेणार्थवादत्वं प्रतिपाद्यते तल्लिङ्गात्तल्लिङ्गेषु भूयस्त्वनिमित्तशब्दप्रवृत्तिमात्रकथनादतो नातीव सृष्टिनामविधानमादर्तव्यम् ॥

भाष्यकारेण तु विधौ लक्षणां परिहरतानुवादत्वमाश्रितम् । एकया स्तुवतइति ह्यनुवाकाद्यस्यैवासृष्टिलिङ्गत्वादात्मपरित्यागेनेतरलक्षणार्थता स्यात्, तल्लक्षयित्वा च पुनरात्मापि प्रतिपादनीय इत्यतिगौरवमुपधानस्तुत्यर्थत्वेन पुनरनुवादत्वाददुष्टा लक्षणा ॥

## लिङ्गसमवायात् ।

सृष्टिवदेव प्राणभृदादिषु चोद्यपरिहारावल्पैरेव लिङ्गैर्भूयसामनेवंलिङ्गानां लक्षणमित्युदाहरणभेदः स्वार्थापरित्यागाच्चोभयत्र लक्षणस्यापि ग्रहणमुपादीयमानत्वादिति ॥ आह च

यत्र लक्षणमुद्दिश्य लक्ष्ये कार्य्यं नियुज्यते ।
तन्मात्रग्रहणं तस्मिन्नुपादाने द्वयोरपि ॥

## संदिग्धेषु वाक्यशेषात् ॥ २३ ॥

विधिस्तुत्योः सदा वृत्तिः समानविषयेष्यते ।

तस्मादेकत्र संदिग्धमितरेणावधार्य्यते ॥

किं पुनरत्र संदेहकारणं विधौ सामान्यग्रहणमिति केचित्। तदयुक्तम्। तत्र तावन्मात्रनिर्णयात्। स्यादेतत्। कथं निर्विशेषं सामान्यं संभवतीति, घृतवदिति वदामः। तत्रापि च नवपुराण-गव्यमाहिषादिसंदेहस्तद्वदत्रस्तेन यथात्र घृतमात्रनिर्णयादसं-देहो विशेषानभिधानेपि सर्व्वैः कार्य्यसिद्धिरेवमिहापि स्नेहन-समर्थद्रव्यमात्रग्रहणादसंदेहः। तस्मादर्थवादे घृतश्रवणात् सं-शय इत्यपरे। तथापि न युक्तो, विशेषप्रतिपत्त्या निर्णीतत्वात्। न हि गौरानीयतां शुक्ल इत्यत्र केश्चित्संदिह्यते । विषम उप-न्यासः। कथम् ॥

विधौ यदि विशेषः स्यात् संदेहः कस्य वा भवेत्।
स्तुतिस्थे त्वितरस्यापि तुल्यैवैषा विचारणा ॥

यदि ह्येवं भवेदक्ताः शर्करा उपदधाति घृतेनेति। ततो नै-व किं चिद्विचार्य्येताथ त्वञ्जनवाक्यवदिहाप्येवं श्रूयेत गामानय शुक्लः प्रशस्त इति ततो ऽस्त्येव संदेहकारणमिति एतदप्युदा-हरणमेव स्यात्। अतो ऽन्यत्र सामान्यमन्यत्र च विशेष इत्ये-तस्मात्संदेहः। केचिच्च संशयदर्शनादेव विधिस्तुत्योर्वाक्यान्त-रत्वमाचक्षते ॥

यदि ह्येकं भवेद्वाक्यं विशेषे तत्समाप्यते।
विशेषावगमात्तत्र न संदेहः प्रसज्यते ॥

वाक्यभेदे पुनरेकं सामान्ये परिसमाप्तमन्यद्विशेषपरमिति युक्तः संदेहः। 'यत्तु विधिना त्वेकवाक्यत्वादि'ति तदङ्गप्रधान-वाक्यानामिव पश्चात्संबन्धसद्भावाभिप्रायेण ॥ तथा हि।

स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया।

वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥

न त्वेतद्युक्तमिव, ये हि पदसंघाताः कर्म्मोपयिकेषु अर्थेषु पर्य्यवस्यन्ति तेषां नानावाक्यत्वं युक्तम्। न त्वर्थवादानामेकवाक्यत्वात्प्राक् प्रयोजनलाभ इति प्रथममेवैकवाक्यता। दूर्ध्वमितरस्य संदेहः स्यादन्योन्यनिरपेक्षयोः सामान्यविशेषयोरितरत्रेतरत्र च पर्य्यवसानात। यदेव हि यत्रोपात्तं तदेव तत्रासंदिग्धं गृह्यते सामान्यसमाप्तश्चात्र विधिः पश्चाद् विशेषः स्यात्। मन्त्रवर्णवदिति चेत्, एवमपि तदधिकरणविषयत्वात्पौनरुक्त्यप्रसङ्गः। तस्मादेकवाक्यतायामेवोपक्रमोपसंहारयोः सामान्यविशेषविषयत्वेन विप्रतिपत्तेरवश्यंभाव्येकगोचरत्वाच्च किमधीना कस्य प्रवृत्तिरिति जायते संदेहः। कस्य सामञ्जस्यमिति यच्च श्रुतिवृत्तं तत्समञ्जसं न लक्षणावृत्तं, तत्र च ॥

स्तुतीनां विध्यधीनत्वादनुवादाच्च लक्षणा।
मुख्यत्वात्तु विधेर्नासाववरोधाच्च कल्प्यते ॥

विधीयमानं हि स्तोतव्यं न तु स्तुत्यं विधेयमप्राप्तार्थस्य विधिरिति न श्रौतार्थात् प्रच्यवते। यद्यपि तावदर्थवादोपक्रमत्वं भवत् ततः प्रथमज्ञानानुरोधेन कदाचिद्विधिर्वशीक्रियेत विध्युपक्रमं त्विदमक्ताः शर्करा इति। तस्मान्निर्दिष्टसामान्ये यद्यर्थवादो न तादर्थ्यं प्रतिपद्यते ततो ऽनर्थको भवतीत्यशक्तः स्वतन्त्रीभवितुं, विनापि चार्थवादेन विध्युद्देशः समर्थत्वान्न युक्तस्तदश्यः कर्त्तुमर्थवादस्त्वगतित्वाद्विधिवशेन वर्त्तते, विशेषश्च सामान्यमव्यभिचारात् शक्नोति लक्षयितुं, न सामान्यं व्यभिचाराद् विशेषं, तस्माद् घृतशब्दः स्नेहमात्रलक्षणार्थः ॥

कामं वा सो ऽर्थवादो ऽस्तु सामान्यस्थो घृते विधिः।

विना स्तुत्या विधानं तु स्वेच्छद्रव्यान्तरे भवेत् ॥

यथा रौद्रेणापि मन्त्रेण सोमो गृह्यमाणो न केवलं तदर्थो भविष्यत्यन्यदैवत्यस्यामन्त्रग्रहणोपपत्तेरेवमनर्थवादकं तैलवसयोर्विधानं, यत्रैव चांशे स्तुतिर्दृश्यते तत्र विध्युद्देशस्य प्ररोचनाशक्तिरपगच्छति, अन्यत्र त्वविहतशक्तिना विधानमिति सर्वस्नेहग्रहणम् । उच्यते ॥

समाप्यते विधिः कश्चित्कदाचिन्नाप्ररोचितः ।
घृते प्ररोचनां दृष्ट्वा विधिस्तत्रानुमीयते ॥

यद्यपि तावद्विधिप्रक्रमे तैलवसयोरप्युपादानं, तथापि प्ररोचनातो विधिर्घृते दृश्यते नेतरयोरित्यनुपादानत्वे कल्पयितव्या च तद्विषया विधेः प्ररोचनाशक्तिः क्लृप्ता च घृते । तस्यां च सत्यां काल्पनिकी वाक्यं भिनत्ति घृते च क्लृप्तां गृह्णन्नितरत्र च कल्पयन् वैरूप्येणापि विधिर्भिद्येत । तस्माद्विध्युद्देशेऽपि तैलादिभ्यो ऽपनीयते । यद्यपि च सामान्यशब्दः स्यात्तथापि न कश्चिद्विशेषः । तत्र सामान्यान्यथानुपपत्त्या यत्र क्व चनानुश्रुते विशेषे ऽपेक्षिते वाक्यशेषाद् घृतएव प्रत्ययो भवति, घृते च शब्दार्थे यदि श्रुत्यनुरोधेनात्यन्ताश्रुततैलादित्यागः क्रियते किं विरुध्यते सन्देहमात्रं हि तत्र बाधितं न तु प्रमाणं किंचित् । क्रियामात्रमेव चेद्ध चोदितं न द्रव्यं तत्र न यावत किंचित् द्रव्यमाक्षिप्येत यदि कश्चिदपि श्रुतिलेशो न स्यात् । घृतार्थवाददर्शनात् त्ववश्यकर्त्तव्यायामश्रुतद्रव्यविधिकल्पनायां नान्यत्र प्रमाणमस्तीत्यङ्गीकृत्य घृताञ्जनविधिर्गम्यते । तत्र भ्रान्त्युत्पन्नतैलाद्याकाङ्क्षा निर्मूलत्वात् बाध्यमाना न दुष्यतेत्यविरोधः तैलादिग्रहणे च लक्षणात्रयं स्यात् । क्रियया द्रवद्रव्येण

च विशेषः घृतशब्देन च सामान्यं लक्षयितव्यम् । तस्माद् घृत-ग्रहणं प्रमाणमिति सिद्धम् । वृत्त्यन्तरे त्वत्रैव मन्त्रवर्णोऽप्यु-दाहृतः । तत्र तु घृतेन किं करिष्यतइति वक्तव्यम् ॥

## अर्थाद्वाकल्पनैकदेशत्वात् ॥ २४ ॥

अथ यत्रेति सन्दिग्धे वाक्यशेषो न विद्यते ।
तत्र सामर्थ्यसिद्धेन विध्यंशेनैव निर्णयः ॥

देवताप्रसादाभयप्रार्थनादौ संहतहस्तसंयोगमात्रमञ्जलिः नाञ्जलिना वारि पिबेत् इत्यादावाकोशः । सक्तुहोमचोदनायां शब्दात्सन्देहे सत्यसति चाकोशस्य वाक्यशेषे ऽन्यथानुपपत्तेरे-वाकोशाश्रयणम् । नन्वनेनैव न्यायेन यथा शक्नुयादिति वाक्य-शेषादन्धादीनामाज्यावेक्षणादिरहितः कर्म्माधिकारः स्यात् । नासन्देहात्, सन्दिग्धनिर्णयार्था त्वेवं कल्पना भवति । न चा-धिकारे संदेहः समस्तधर्म्मोपेतं यथा शक्नुयात्तथा कुर्यादिति वाक्यशेषात् । सन्ति च तादृशस्य कर्त्तारश्चक्षुष्मदादयः इति न प्रयोगचोदनान्यथानुपपत्तिः । यत्र तु यावज्जीवचोदनादावेवं भविष्यति तत्र शक्तिकृताङ्गत्यागेपि सत्यवैगुण्यं प्रधानस्य चो-दितमित्याश्रयिष्यामहएव तस्माद्यावदेव लब्धात्मको विधि-स्तावद्यत् कल्पते तद्वैदिकं, सिद्धे तु तत्कल्पनं पौरुषेयत्वादप्र-माणं सामर्थ्याधीनत्वाद्वाक्यशेषसिद्धेः । आह च ॥

यथैव पाठः प्रतिपत्त्युपायस्तथैव सामर्थ्यमपि श्रुतीनाम् ।
तेनैव चैता न समामनन्ति सहस्रभागं तु समामनेयुः ॥

इति कृतवक्रमार्गं मन्त्रविध्यर्थवादैः
स्मृतिपरिखमुद्रां खेदशाल्लोपगूढाम् ।

अनभिभवसमर्थं धर्म्मदुर्गं प्रविश्य
प्रविभजति समर्थामर्थचिन्तामिदानीम् ॥

इति श्रीभट्टकुमारिलविरचिते मीमांसावार्त्तिके प्रथमस्याध्यायस्य चतुर्थः पादः ॥ समाप्तः प्रथमाध्यायः ॥

# तन्त्रवार्त्तिके ।

## द्वितीयाध्यायस्य प्रथमः पादः ।

---

श्रीमहागणपतये नमः ॥

## भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ॥ १ ॥

संबन्धं तावल्लक्षणद्वयस्य करोति तत्र प्रथमे ऽध्याये प्रमाणलक्षणं वृत्तमित्युक्तम् तत् कुतः, नैव हि प्रथमे ऽध्याये सूत्रकारेण किं चन लक्षणेन प्रमाणादेः स्वरूपमुपवर्णितम्। तन्नाम लक्षणमुच्यते येन तदन्यतिरिक्तेभ्यस्तस्य स्वरूपं व्यावृत्ताकारं निरूप्यते, न चैष (१) प्रमाणादीनां लक्षणमुक्तम्। अनुमानादीनि तावन्नैव सूचितानि। प्रत्यक्षमपि धर्मं प्रत्यनिमित्तत्वेनोपन्यस्तं न लक्ष्यत्वेनेति व्याख्यातम्। न च शब्दो ऽपि कश्चिद्धर्मप्रमाणभूतो लक्षितः अस्मिन्नेवाधिकरणे तस्य लक्ष्यमाणत्वात्। यदपि च वृत्तिकारेण सर्वेषां लक्षणं प्रदर्शितं न तदध्यायार्थत्वेनोपसंहर्तुं युक्तम। सूत्राध्यायार्थानुपसंहारात्। कथं च समस्तलक्षणार्थव्यतिरिक्तएवार्थे सूत्राणि क्षीयेरन्। अपि च वृत्तिकारेण यो ऽप्युक्तः पट्कः प्रत्यक्षपूर्वकः अपरीक्ष्यतया सो ऽपि नैव लक्षणगोचरः, लोकप्रसिद्धार्थानि हि ता-

(१) न चेहेति युक्तः पाठः ।

न्यपरीक्ष्यत्वेनोक्तानि न प्रथमाध्यायविषयत्वेनोपसंहारमर्हन्ति। तस्माद्यत् प्रथमाध्याये वृत्तं तदालोच्यैतद्भाष्यं नेयम्। तत्र प्रमाणलक्षणं तावच्चोदनालक्षणाश्रयणास्य विध्यादितत्त्वनिर्णीतिः प्रमाणेनैव स्थिता। समस्तो हि प्रथमः पादश्चोदनासूत्रपरिकरः तत्र च धर्मस्य चोदनालक्षणत्वमुक्तम्। अतोऽवधारितार्थलक्षणशब्दसाहचर्यात् प्रमाणशब्दः प्रतिपाद्यतइत्येवं नोत्पाद्यधर्मविषय एव व्याख्याय सत्यपि प्रमेयमात्रवाचित्वेऽस्मिन् शास्त्रे जिज्ञास्यत्वेन धर्मः प्रमेयः प्रक्रान्त इति स एव गृह्यते। अथ वा करणमेव प्रमाणं तस्यैव लक्षणमुक्तम्। यद्यपि च सर्वप्रमाणानां तन्नोक्तं तथापि धर्मप्रमाणस्य चोदनात्वं लक्षणमित्येतावतैवोक्तं मन्यते। न चावश्यं सर्वात्मनैव लक्षिते लक्षणत्वं विशेषरूपाणामानन्त्येन सर्वलक्षणाभावप्रसङ्गात्। अपि चौत्पत्तिकसूत्रेण विशेषोऽप्युक्त एव येनागमविशेषो गम्यते। अथ वोपन्यस्तस्य चोदनात्मकस्य प्रमाणस्य लक्षणं प्रामाण्यकारणमित्युपसंहारः। तथा यद्यपि विधेरिदं रूपमिदमर्थवादस्येदं मन्त्रस्येत्येवं नोक्तं तथापि धर्मं प्रत्युपयोगाभिधानात्तत्त्वं निर्णीतम्। अवसराभावात्तु तत्स्वरूपं न निर्दिष्टम्। श्रुतिमूलत्वं विज्ञानस्य स्मृतिप्रामाण्ये तत्त्वम्। नामधेयस्य चोदनान्तर्गतत्वात्प्रमाणत्वम्। संदिग्धार्थनिर्णये वाक्यशेषसामर्थ्ययोः प्रामाण्यमित्येवं समस्तमध्यायं प्रमाणलक्षणमाचक्षते। तन्न प्रसक्तव्यमिति। अविस्मृतप्रामाण्यो हि भेदादिप्रतिपादनमविशेषादनर्थकं हि स्यादिति क्रियमाणं सहते। अन्यथा ह्यनर्थकं नामेत्येव प्रत्यवतिष्ठेत। ननु प्रधानाप्रधानचिन्ता तृतीयचतुर्थयोर्विषयः कथमत्रोपन्यस्यते। केचिदाहुः। इह द्रव्यकर्मणोरुत्तरत्र तु कर्मणामेव ग-

णप्रधानत्वविचारादपौनरुक्त्यमिति । तदयुक्तम् । द्रव्यगुणसंस्कारेष्वित्यत्र सर्वाभिधानात् । तेनैवं वाच्यम् ॥

लक्षणार्थो ऽत्र तत्त्वेन भेदः शब्देतरादिभिः ॥
तमन्वपूर्वभेदो ऽपि प्राधान्यं तत्प्रसिद्धये ॥

कर्मभेदस्तावदौत्सर्गिको लक्षणार्थ,स्तदपवादत्वेनाभेदः । तदनन्निष्पादिनौ त्वपूर्वभेदाभेदौ । तत्र प्रतिकर्मभेदमपूर्वभेदप्रसक्तौ । तृतीयसिद्धः प्रधानाप्रधानविचारः पुनरपवादत्वेनारप्स्यते सत्यप्यवहन्त्यादीनां शब्दान्तरादिभिर्भेदे कर्माकाङ्क्षितदृष्टप्रयोजनपर्यवसानान्न क्रियाजन्यापूर्वान्तरोत्पत्तिः । यत्तु नियमापूर्वं तत्क्रियाकृतं न भवतीति न तया व्यपदिश्यते । तेन यत्रैव द्रव्यादीनि प्रति क्रियाणां प्रधानत्वं तत्रैव तद्भेदनिमित्तापूर्वभेदसिद्धिः । अस्य च विवेकार्थं यद्गुणप्रधानलक्षणं वक्ष्यते तदपवादार्थं धर्ममात्रे तु स्तुतशस्त्रयोरिति चाधिकरणद्वयं प्रस्तोष्यते । ततश्चाख्यातद्वैविध्ये विचारिते प्रसङ्गात्तृतीयं प्रकारमभिधायकत्वं प्रतिपादयितुं मन्त्रप्रस्तावः तल्लक्षणादीनि तु प्रसक्तानुप्रसक्तेन यावत्पादसमाप्ति । ततः शब्दान्तराभ्यासाभ्यां भेदमुक्त्वा पौर्णमास्यधिकरणेनाभ्यासापवादः करिष्यते समुदायानुवादत्वात् । ततस्तदपवादार्थमुपांशुयाजाघाराग्निहोत्रपशुसामाधिकरणानि । ततः संख्यासंज्ञागुणैर्भेदः । तावच्च गुणगतो विचारो यावत्प्रकरणान्तराधिकरणम् । ततस्तन्न्यायानुवृत्तिराशाखान्तराधिकरणात् । तत्र च षट्कातिरिक्तभेदकारणव्युदास संज्ञाभ्यासगुणप्रक्रियाणां चाशङ्कानिवृत्तिरित्येतावान् भेदलक्षणार्थः । एष एव चार्थो ऽवश्यं वक्तव्योऽङ्गाङ्गित्वावधारणार्थम्, न चान्यस्येदानीमवसरो ऽस्तीत्ययमेवाध्यायसं-

बन्धः कुतः ॥

शेषशेष्यादयः सर्वे कर्मभेदनिबन्धनाः ।

कार्ये ज्ञाते ऽधिकारः स्यादुपदेशेतिदेशधीः ॥

प्राक् तावत्प्रमाणलक्षणादेदर्थविचारात्मकत्वान्न कस्य चिद्भेदलक्षणादेः प्रस्ताव इत्युत्तरकालमारम्भः । तत्रापि शेषशेषित्वं प्रयोजकाप्रयोजकत्वं क्रमश्च भिन्नानां भवतीति न भेदलक्षणात्प्रागारभ्यते । तथा ऽधिकारः कर्मस्वरूपे ऽवधारिते तद्योग्यतया शक्यो निरूपयितुमिति पश्चात्पि लक्षणानि प्रतीक्षते । तथोत्तरः षट्को ऽतिदेशविषयत्वादुपदेशज्ञानाधीनसिद्धिः समस्तः समस्तं पूर्वषट्कमपेक्षते । ततश्च परिशेषसिद्धो ऽयं भेदलक्षणस्य सबन्ध इत्यत्रारभ्यते । यद्विधः कर्मभेद इति साधनभेदोपचाराद् वक्ष्यमाणसूत्रक्रमानुरोधान्नामधेयं संख्यानन्तरं पठितव्यं सदनादरादन्ते पठितम् । इतिकरणो चेत्वर्थः षड्विधः कर्मभेद एतैः कारणैरिति यावत् । अथ वा करणे भेदशब्दं व्युत्पाद्य सामानाधिकरण्येनैव शब्दान्तरादीनि व्याख्येयानि संज्ञाशब्दान्तरयोः संख्यागुणयोश्चापौनरुक्त्यं स्वस्थाने वक्ष्यामः । सर्वत्र चैषां भिन्नविषयत्वान्न श्रुत्यादिवद्बलाबलचिन्ता भविष्यतीति तद्भेदप्रतिपादनमात्रं तात्पर्येण अन्यदुपोद्घातप्रसक्तानुप्रसक्त्यादिना ॥ तत्र ।

चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते ।

प्रसक्तानुप्रसक्तादि प्रस्तुतादुपजायते ॥

यथेदमेवाधिकरणं प्रकृतानुनिष्पाद्यपूर्वभेदानुसारसिद्ध्यर्थमुपोद्घातत्वेन भविष्यति कतरस्मात्पदात्फलेन संबध्यमानादसर्वभेदाभेदावनुगन्तव्याविति । यदा निरवयवौ वाक्यवाक्यार्थौ

स्यातां ततः किं प्रतिपदं धर्म इत्यादिरसंबद्ध एव विचारः स्यादत आह । वाक्ये च पदानामथो इति । अत्रापि चोद्यते ॥

चोदनालक्षणत्वेन वाक्यार्थो ऽवस्थितो यदा ।
धर्मः प्रतिपदं वाच्यः कथमाशङ्क्यते तदा ॥

यदि हि धर्मस्वरूपमभिधीयेत ततः किं पदेन पदेनोच्यत-इति विचारो युज्यते लाक्षणिके त्वयुक्तः ॥ तदुच्यते ।

धर्मत्वं फलसंबन्धात्पदार्थस्यैव युज्यते ।
तत्किमेकस्य सर्वेषामिति युक्ता विचारणा ॥

न चात्र यो धर्मः स किं पदेन पदेनोच्यतइत्येवं विचार्यते किं तर्हि यः पदेन पदेनोच्यते स किं फलसम्बन्धोत्तरकालं वाक्यार्थात्मना गम्यमानो धर्मो भवति अथेतरपदार्थानुगृहीत एकः पदार्थ इति । तथा च सर्वैरेकस्य धर्मत्वं प्रतिपादितं भवति । साक्षात्फलसाधनमात्रस्य धर्मत्वाभ्युपगमात् । न तु सर्वेषामेकः कश्चिदर्थोऽस्ति यः सर्वैरेक इत्येवमाश्रीयेत । यश्च फलपदेन सह संबध्यते तस्यार्थं धर्ममपूर्वसाधनं च मन्यन्ते । तेन किं सर्वाणि पदानि फलेन संबध्यन्ते किं वा एकमिति विचारः । किं प्राप्तं प्रतिपदमिति । कुतः

ऐकरूप्येण सम्बन्धः प्रधाने न च सिध्यति ।
तस्मात्फलपदेनैव सर्वं संबध्यते पदम् ॥

यदि हि विशेषो गम्येतेदं फलसबन्धयोग्यमिदं नेति ततः किंचिदेव संबध्येत, अनवगम्यमाने तु सर्वाणि पदानि फलेनैव संबध्यन्ते । यदि चैकं फलसंबन्धीतराणि च तत्संबन्धीनीति कल्प्यते ततो वाजपेयाधिकरणन्यायेन एकस्य फलं प्रत्युपादान-विधानगुणभावादितरत्तु प्रत्युद्देशानुवादप्राधान्याद्वैरूप्यनिमि-

त्ववाक्यभेदप्रसङ्गः। सर्वेषां तु फलं प्रत्युपादीयमानानामैकरूप्यात् तत्सम्बन्धोपपत्तिः। सर्वस्य सतिसंभवे गुणमतिलङ्घ्य प्रधानेनैव नित्यं संबध्यते। तस्मात्सर्वेषां फलसंबन्धाद्गुणत्वं,तच्च तु किं सत्त्विव- त् प्रत्येकं कृत्स्नं फलं साधयन्ति,अथ दर्शपूर्णमासवत्संहत्य,तथा किं विकल्पेन समुच्चयेन वेत्यादि यथेष्टं कल्पनीयम्। तत्र फलभूमगरीयस्त्वादेकशब्दोपादानाभावात्सत्त्रिवत्प्रत्येकं साध- नशक्तयवगमात्सर्वेभ्यः पृथक्फलमिति पक्षः। अथ वाऽरुणादिन्या- येनैकवाक्योपादानात्संहतानां फलम्। अथ वैकनिराकाङ्क्षत्वा- न्न तदानीमेवेतरसंबन्धोपपत्तिः तस्माद्विकल्प इति। अत्राभि- धीयते॥

फलेन यस्य संबन्धस्ततोऽपूर्वं प्रकल्प्यते॥
तदल्पत्वोपपत्तौ च न युक्ता बहुकल्पना॥

यदि हि फलसंबन्धमात्रपर्यवसाय्येव वाक्यं भवेत्ततः कदा- चिदपि सर्वाणि फलेन संबध्येरन्। इह तु तावन्मात्रेणासिद्धेरपूर्व- मन्यत्कल्पयितव्यं तच्चानुपपत्तिप्रमाणकं, तत्रैकापूर्वकल्पन- योपपन्ने नादृष्टान्तरकल्पनाप्रमाणमस्ति। यो ह्यनेकान्यपूर्वाणि कल्पयति कल्पयत्यसावेकं तच्चेत्कल्पितमर्थवत्त्वाद्वाक्यस्य क्षीणा ऽन्यथानुपपत्तिर्नापूर्वान्तरस्य प्रमाणं भवति। तस्मादेकमेव फ- लसंबन्धि तस्माच्चापूर्वम् इतरत्फलवदुपकारीत्यध्यवसीयते। न चात्र विरोधो भविष्यति नामधेयत्वेन परिहारात्। अगत्या वा दशापवित्रेण ग्रहं संमार्ष्टीतिवन्मत्वर्थलक्षणाश्रयणात् अर्थाच्चि- प्रमाध्यांशद्वारेण वा धात्वर्थैरात्मीयकरणग्रहणसिद्धेः। एवं स्थिते कतरदेकं संबध्यतामिति सर्वथानेकादृष्टकल्पनापरि- हारादनियमप्राप्तौ उच्यते॥

प्रधाने फलसंबन्धि तत्संबध्यङ्गमिष्यते ।
प्रधानाङ्गत्वमेकस्य न चैकत्रावकल्पते ॥

न ह्येकस्मिन् वाक्ये तदेव कदा चित्फलसंबन्धात् प्रधानं कदा चित्फलवदुपकारादङ्गं युज्यते नियतरूपत्वादङ्गाङ्गिभावस्य । तस्मान्नियोगेनैवाख्यातपदान्नामपदाद्वा पूर्वप्रतीतिः । कः पुनर्भावः के वा भावशब्दा इति । यावन्तः फलसंबद्धेषु वाक्येषु आख्यातशब्दा यजतिजुहोतीत्येवमादयस्तेषु प्रत्ययार्थप्राधान्यात्कर्त्तरि च लकारोत्पत्तेर्योगादिविशिष्टकर्त्रभिधानं, कथं चिद्वा विपर्ययात्कर्त्तृविशिष्टयागाद्यभिधानं मन्वानस्य प्रश्नः । सत्यामपि चैकपर्यनुयोगेनोभयपर्यनुयोगसिद्धौ यो ऽयं यजनमिज्या याग इत्याद्यनुदाहृत्यैव भावार्थता ब्रवीति तन्नूनं के ऽप्य लौकिका भावशब्दा अपीत्युभयप्रश्नः । सिद्धान्तवादी तु भवतेर्णिजन्तादेरजित्यच्प्रत्यये कृते भावनावाचिनं भावशब्दं व्युत्पाद्याख्यातस्य चान्वयव्यतिरेकाभ्यां तत्परत्वं कर्त्रभिधानप्रतिषेधं चाभिप्रेत्योदाहरति यजति ददातीति । परः पुनर्भवतेर्णिजन्तादन्येन नैषो ऽर्थोभिधीयते, न चाख्यातप्रत्ययस्यात्र व्यापारो धात्वन्तरार्थत्वात् । कामं तुल्यजातीयत्वेन धातवो ब्रूयुस्ते ऽपि तु यागादिवचनत्वादसमर्था इति मत्वा हवनयागदानहोमशब्दा इति । अत्रोच्यते ।

यागदानाद्यनुस्यूतो भावनात्मा ऽवगम्यते ।
नित्यमाख्यातशब्देभ्यस्तस्माद्भावार्थतेष्यते ॥

यावानेव हि अनन्यलभ्यो ऽर्थः शब्दाद्गम्यते स सर्वः शब्दार्थः । सर्वत्र चाख्याते धात्वर्थस्य तदनुरक्ता च भावना विज्ञायते । तस्माद्भावार्थत्वव्यपदेशः । तद्व्यतिरिक्तास्तु द्रव्यगुणशब्दाः विज्ञाय-

न्तएवेति न पृष्टाः । तत्र द्रव्यादिशब्दानां निष्पन्नार्थाभिधायिनां करणार्थत्वयोग्यत्वात्प्राप्नोति फलसंगतिः । सर्वत्र हि फलं साध्यत्वात्सिद्धरूपं साधनमपेक्षते न साध्यान्तरं, नामार्थश्च सिद्धत्वात्तदपेक्षापूरणसमर्थः नाख्यातार्थः स्वयमेव तावत्साध्यत्वा, त्तस्माद्द्रव्यादिभ्यः फलमिति प्राप्ते सूत्रेणोत्तरं दीयते ॥

भावार्थाः कर्मशब्दा ये तेभ्यो ऽपूर्वक्रियागतिः ।
तैः कुर्याद्यजिना स्वर्गमेष ह्यर्थो विधीयते ॥

फलसंबन्धो हेतुरपूर्वप्रतिपत्तेः(१) । संबन्धश्चाकाङ्क्षापूर्वकः । सा च भावशब्देभ्यः प्रसर्पन्ती दृश्यते न द्रव्यगुणशब्देभ्यः । तस्मादाख्यातेभ्यो ऽपूर्वभावना गम्यते तत्र च धात्वर्थस्य करणत्वप्रतिपत्तिः प्रत्यासत्तेः । अतस्तेनैव फलकरणभूतेनान्यथानुपपत्त्या ऽपूर्वं भाव्यते(२) इत्यवधार्य्यते । कथं पुनर्यज्यादीन्पृथक्कृत्य केवलप्रत्ययवाच्य एव भावनार्थो लभ्यते भावयेदिति । कुतः ॥

अभिदध्युः स्वशक्त्या हि विधिमात्रं लिङादयः ।
ण्यन्तस्य भवतेरर्थः केनांशेनाभिधीयते ॥

न च धात्वन्तरार्थं यज्यादयः प्रतिपादयन्ति स्वार्थमात्रव्यापृतत्वात् । अतः शब्दरहितमेवेदमारोप्यते भावयेदिति । किं च ॥

शब्दान्तरस्य यो ऽप्यर्थः पर्य्यायैरभिधीयते ।
न स तेनैव सहितस्तस्मिन्नर्थे प्रयुज्यते ॥

तद्यथा पिकमानयेत्युक्ते यो नामार्थं न प्रतिपद्यते तस्मै कोकिलशब्दमेव केवलं प्रयुञ्जते न कोकिलः पिक इति, तथात्र यद्याख्यातस्य करोतिर्ण्यन्तो वा भवतिः पर्य्यायः ततस्तदर्थ-

(१) प्रतीतेरिति ? पु० पाठः ।

(२) अपूर्वभावनाऽवगम्यतइति पु० पाठः ।

कथने तन्मात्रमेव प्रयोक्तव्यं नाख्यातप्रत्ययोऽपि, न हि तदानीं विविच्य ज्ञायते केनांशेन क्रिया प्रत्याय्यतइति । अत्र तु भावयेत्कुर्य्यादिति वा पुनरपि लिङ् प्रयुज्यते एव । अतश्च यो ऽनेन यजतेः परेणार्थः प्रतिपादितः असौ भावयतेरपि परेण तेनैवेत्यधिकावाप एव भावयतिः । तस्माद्वैदिक इति । अत्राभिधीयते । सर्वत्रैव तावत् ॥

सिद्धकर्तृक्रियावाचिन्याख्यातप्रत्यये सति ॥
सामानाधिकरण्येन करोत्यर्थो ऽवगम्यते ॥

इह केभ्यश्चिद्धातुभ्यः परा तिङ्विभक्तिरुच्चार्य्यमाणा कर्त्रात्मलाभमात्रमेव व्यापारं प्रतिपादयति यथा ऽस्तिभवतिविद्यतिभ्यः । अपरेभ्यस्तु सिद्धे कर्त्तरि अन्यात्मलाभविषयव्यापारप्रतीतिः । यथा यजति ददाति पचति(१) गच्छतीति । द्रव्यमेव च विशिष्टशक्त्युपेतं प्रचलितात्मतत्त्वं विप्रकीर्णस्वभावं पूर्वापरीभूतं प्रथमावस्थातः प्रच्युत परामवस्थामप्राप्तं व्यापारशब्दवाच्यं भवति । तत्र कदाचित्कर्त्रैव एवमवस्थः प्रतीयते, कदाचित्सिद्धे कर्त्तर्यन्यः । तद्यदा कर्त्तुरेवैषा ऽवस्था भवति तदासौ स्वयमेवान्यस्मादात्मलाभमपेक्षमाणः परनिष्पत्त्यावव्याप्रियमाणत्वान्न करोतिशब्दवाच्यतां प्रतिपद्यते(२) । यदा तु लब्धात्मको ऽन्यत्र व्याप्रियते तदा करोतीत्येवमपदिश्यते । तथा च किं करोति पठति गच्छतीति सामान्यविशेषरूपेण सामानाधिकरण्यप्रयोगो दृश्यते, न तु किं करोति भवत्यस्ति वेति प्रयुज्यते । तस्माल्लब्धात्मककर्तृव्यापारवचनानि करोत्यर्थवन्ति आख्यातानि । तत्र

(१) पठतीत्यधिकं २ पु० पाठः ।
(२) भजतइति २ पु० पाठः ।

च क्रियमाणेन केन चिदवश्यं भवितव्यम् । कुतः ॥

करोतिः क्रियमाणेन न कश्चित्कर्म्मणा विना ।
भवत्यर्थस्य कर्त्ता च करोतेः कर्म्म जायते ॥

करोतेः नित्यं सकर्म्मकत्वाद्यावत्क्रियमाणं न लभ्यते न तावदर्थः पर्यवस्यति सर्वकारकाणां चावान्तरक्रियासु कर्तृत्वं प्रतिपाद्यमानानां प्रधानक्रियासु कर्म्मादिविभागो जायते । प्रतिक्रियं योग्यताभेदादवान्तरक्रियावैचित्र्यं भवति । तत्रान्वयव्यतिरेकाभ्यामिदमवगतं भवतिक्रियायाः कर्त्ता करोतेः कर्म्म संपद्यते इति । तथा हि ॥

नित्यं न भवनं यस्य यस्य वा नित्यभूतता ।
न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव ॥

य एव हि प्रवृत्तभवनः संभावितभवनो वा ऽन्येन प्रयुज्यते स एव क्रियमाणत्वेनावधार्य्यते नान्य,स्तथा च न कश्चित्खपुष्पमाकाशं वा कुर्वन्नुपलभ्यते । यत्रापि पादौ कुर्वित्यादिषु निष्पन्नानां कर्म्मत्वप्रयोगो दृश्यते तत्राप्यनिष्पन्नसंस्कारादिविवक्षया पादादिशब्दप्रयोगादव्यभिचारः । सत्यपि च करोतेरनेकार्थत्वे सर्वत्र गन्धनावक्षेपणादौ किं चिदनुत्पन्नोत्पादनसामान्यमवगम्यते । अथ वा यदा ऽस्योत्पादनाभिधायित्वं तदैव विशिष्टाख्यातसामानाधिकरण्यं दृष्टमिति तद्गतस्योत्पाद्यमानमेव कर्म्म भवतीत्युपपन्नम् । तेन भवतिक्रिया तावल्लब्धा । ततश्च ॥

करोत्यर्थस्य यः कर्त्ता भवितुः स प्रयोजकः ।
भविता तमपेक्ष्याथ प्रयोज्यत्वं प्रपद्यते ॥

भवतिकरोत्योः शक्तिभेदाद्भिदिपचत्योरिव नियतं प्रयोजकव्यापारवचनत्वम् । तत्र च कदा चिदभिधीयमानकर्म्म-

शक्त्या ऽऽश्रितप्रयोज्यव्यापारो वा स्वयमेवाश्रितप्रयोज्यव्यापारो वा केवलं प्रयोजकव्यापार एव विवक्ष्यते कटं करोति ओदनं पचतीति । कदा चिदाश्रितप्रयोजकव्यापारं प्रयोज्यव्यापारमात्रं घटो भवति विक्लिद्यन्ति तण्डुला इति । कदा चिदुभौ भिन्नौ समुच्चित्य प्रयोगः करोति कटं देवदत्तः स च भवति । कदा चिदुपसर्जनीभूतप्रयोजकव्यापारः प्रयोज्यव्यापारः क्रियते देवदत्तेनेति स्वयमेवेति वा प्रयोगे । कदा चित्पुनः समानपदैकदेशोपात्तोपसर्ज्जनीभूतप्रयोज्यक्रियः प्रयोजकव्यापारो विवक्ष्यते तदा च करोतिपचत्योस्तादात्म्येनाशक्तेरप्रयोगाद्भूविक्लिद्योश्च केवलप्रयोज्यक्रियानिष्ठत्वान्न साक्षात्प्रवर्त्तितुं शक्तिरस्तीति वाचकत्वेन द्योतकत्वेन वा णिजपरः प्रयुज्यते भावयति विक्लेदयतीति च । तथा चाह ॥

प्रयोज्यकर्त्तृकैकान्तव्यापारप्रतिपादकाः ।
ण्यन्ता एव प्रयुज्यन्ते तत्प्रयोजककर्मसु ॥

न च तेषामण्यन्तानामशक्तिरिति अन्येषामशक्त्या भवितव्यम् । अन्येषां वा शक्तिरित्येषामपि तद्वद्भवितव्यम् । कुतः ॥

शक्तयः सर्वभावानां नानुयोज्याः स्वभावतः ।
तेन नाना वदन्त्यर्थान्प्रकृतिप्रत्ययादयः ॥
एवं करोत्यर्थद्वारेण सर्वाख्यातेषु भावयत्यर्थः सिद्धः ।
तेन भूतिषु कर्त्तृत्वं प्रतिपन्नस्य वस्तुनः ।
प्रयोजकक्रियामाहुर्भावनां भावनाविदः ॥

यत्तूक्तं न विधित्वव्यतिरिक्ता लिङादयो ऽर्थं वदन्तीति । तदयुक्तम् । कुतः ॥

अभिधाभावनामाहुरन्यामेव लिङादयः ।

अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ॥

यदा हि सर्वाख्यातानुवर्त्तिनी करोतिधातुवाच्या पुरुषव्यापाररूपा भावनावगता भवति तदा तद्विशेषाः सामान्याख्यातव्यतिरिक्तशब्दविशेषवाच्या विधिप्रतिषेधभूतभविष्यद्वर्त्तमानादयः प्रतीयन्ते । तथा च सर्वत्र सामान्यतः करोत्यर्थोऽवगम्यते, किं करोति पचति किमकार्षीदपाक्षीत्किं करिष्यति पक्ष्यति किंकुर्य्यात्पचेत्किं न कुर्य्यान्न पचेदिति । तत्रार्थात्मिकायां भावनायां लिङादिशब्दानां यः पुरुषं प्रति प्रयोजकव्यापारः सा द्वितीया शब्दधर्म्मोऽभिधात्मिका भावना विधिरित्युच्यते । विशेषतश्च इयमर्थवादाधिकरणे वर्णिता । यत्तु पर्य्यायस्थित्यतिलङ्घनं प्रत्ययापरित्यागादभिहितम् । तत्रोच्यते ॥

केवलस्याप्रयोगित्वात्कर्तृसंख्यादिसंग्रहात् ।
रूपाविनाशसिद्धेश्च प्रत्ययोऽपि प्रयुज्यते ॥

यदि हि केवलः करोतिर्भावयतिर्वा प्रयोगार्हौ स्यातां ततः कोकिलशब्दप्रयोगे पिकशब्दवत्प्रत्ययो न प्रयुज्येत, न तु केवलायाः प्रकृतेः प्रयोगः अपभ्रंशत्वप्रसङ्गात् । तेन यस्मिन् कस्मिंश्चित्प्रत्यये प्रयोक्तव्ये यस्यैवार्थः कथ्यते स एवानुवादभूतः प्रकृत्यनुग्रहार्थं प्रयुज्यते नान्योऽभ्यधिकार्थान्तरापत्तिप्रसङ्गात् । ननु च इक्श्तिपौ धातुनिर्द्देशे विहितौ अतस्तद्युक्तौ करोतिभावयती प्रयुज्येयाताम् । नैतदस्ति । तथा सति शब्दपदार्थकत्वान्नैव ताभ्यामाख्यातार्थः कथ्येत । यत्तु क्व चिदर्थेऽपि धातुमिक्श्तिबन्तं प्रयुञ्जते यजिः यजतिः इति च, तच्छब्देऽभिहिते लक्षणयाऽर्थप्रतीतिरित्यवगन्तव्यं, न चेह किञ्चिल्लक्षणाश्रयणे प्रयोजनमस्ति येनावाचकः प्रयुज्येत । तत्रान्यदेवानिष्टमापद्येत

कृभ्वौ धातू तिङाभिधीयेते इति । तस्मादर्थपरत्वसिद्ध्यर्थमाख्यातप्रत्ययसहितावेव प्रयुज्येते । यदि च भावनैव एका प्रत्ययार्थः स्यात्करोतिभावयती वा समस्तप्रत्ययार्थोपादानसमर्थौ भवेतां ततः केवलप्रयोगोऽप्याशङ्क्येत, न तु तदुभयमप्यस्तीति करोतिभावयतिभ्यां कथितेऽपि भावनार्थे कर्तृसंख्यादिप्रत्यायनार्थं पुनः प्रत्यय उच्चार्यते । यस्तु तत्र भावनाभिधानांशः स प्राप्तत्वादनूद्यते, अन्यथा हि भावनैवैका प्रत्ययार्थः करोतिभावयती वा कर्तृसंख्यादीनामप्यभिधायकाविति भ्रान्तिः स्यात । नित्यं च पूर्वापरीभूता भावना ऽऽख्यातेनोच्यते । तत्र यदि प्रत्ययान्तरं प्रयुज्यते ततः करोतिभावयतिभ्यां द्रव्यवदुपसंहृतरूपोच्यमाना नैवाख्यातसदृशी कथ्येत तस्मादवश्यं तदपि प्रयोक्तव्यमिति । किं च ॥

भावना गम्यमाना च धातुप्रत्ययसन्निधौ ।
कस्य वाच्येति विस्पष्टं न कदा चित्प्रतीयते ॥

यदि ह्येकान्तेनास्याः प्रत्ययार्थत्वमवधार्येत ततः करोतिभावयतिभ्यां प्रत्ययपौनरुक्त्याशङ्का स्यान्न तु तदस्ति, उभयसंन्निधौ गम्यमानत्वात् । केवलप्रकृतिप्रत्ययप्रयोगाभावाद्धि न विवेको विज्ञायते । शक्यते हि वक्तुं धातुसहितेन प्रत्ययेनोच्यत इति । अथवा प्रत्ययानुगृहीतेन धातुना, अथ वोभाभ्याम् । न च शक्तिकल्पनायां विशेषः, सर्वथा ऽर्थापत्तिसाम्यान्न च विवेकज्ञानप्रयोजनमस्ति । स्यादेतत् कृदन्ताद्धातोरप्रतीतेस्तिङ्व्यभिचारिण्येव नेति । तदयुक्तम् । अस्तिविद्यतिभवतिपरेषु प्रत्ययेष्वप्यदर्शनात । न च कृदन्तेष्वपि अत्यन्तं भावना नास्ति किं चिदपकृष्यमाणरूपप्रतीतेः । कृत्येषु ताव-

ह्रोक्तव्यम् यष्टव्यमिति किं चिन्न्यूनाख्यानाद्गम्यते । तचापि कर्म्मोत्पन्नेषु द्रव्यप्राधान्याद् ब्राह्मणो न हन्तव्य इति भावोत्पन्नेभ्यो न्यूनतरा । न हि तत्र प्रयोजकव्यापारप्राधान्यमेकत्र धात्वर्थप्राधान्यात् अपरत्र स्वव्यापारविशिष्टप्रयोज्यपरत्वात् । एतेन भावकर्म्मोत्पन्नलकारास्तिङोपि व्याख्याताः । तेष्वपि हि प्रयोजकव्यापारगुणत्वप्रतीतिरविशिष्टा, अतो न तिङन्तानां तत्त्यक्तरूपत्वम् । तथा ऽव्ययकृतो भावे भवन्तीति स्मरणाविशेषेपि स्वसंवेद्यमीषन्न्यूनभावनाविज्ञानम् । अभिक्रामञ्जुहोति दर्भतरुणकेनोपघातं जुहोति अभिषुत्य हुत्वा भक्षयन्ति पुरा वाचः प्रवदितोरिति सर्वत्र ऋत्वैव भावनान्तरसापेक्षा भावना ऽवगम्यते । पक्तः पक्ववानित्यपि निर्वृत्तरूपभावनोपसर्ज्जनद्रव्यप्रतीतिः प्रत्यक्षा । एवं पाचकादिष्वपि द्रष्टव्यम् । तथा च सर्वत्र कारकापेक्षा दृश्यते । अन्यथा हि कृदितद्धितसमासेष्विवेयं न स्यात् । न च निर्व्यापाराणामेते व्यपदेशा भवन्ति । न चास्ति स व्यापारः यत्र किं चिद्रूपं न जन्यते । ततश्च सिद्धः करोतिभावयत्योरर्थः, शक्यते च सर्वत्र सामानाधिकरण्यमपि दर्शयितुं विनापि पूर्वापरीभूतत्वेन । तद्यथा किं कर्त्तव्यं पक्तव्यं कथङ्कारं जुहोति अभिक्रामन्किं कृत्वा जुहोति अभिषुत्य किं कृतवान् पक्ववान्किं कृतं पक्वं किंक्रियो देवदत्तः पक्ता केयं क्रिया पाकः इति । न च करोतिसामानाधिकरण्यातिरिक्तमाख्यातेष्वपि भावनाप्रमाणं विद्यते । तस्माद्धातवोपि भावनां न मुञ्चन्ति । तथा चाहुः करोतिरर्थेष्विव सर्वधातुष्विति । यत्त्वस्याः प्राधान्यं तत्कामं तिङाभिधेयं द्योत्यं वान्वयव्यतिरेकाभ्यामस्तु न स्वरूपम् । नन्वेवमपि यागेनेति धात्वर्थे

निष्कृष्टे तेनैव भावनाप्युपात्तेति भावयेदिति पुनः प्रयोगो न प्राप्नोति। नैष दोषः। तथा हि द्रव्यर्थस्य धातोर्भेदनार्थे कथ्यमानं यागेनेति विशेषरूपं करणात्मना निष्कृष्टम्। इतरत्तु भावनात्मकं सामान्यरूपः शब्दान्तरेण भावयेदित्यनेन कथ्यते। अथ वा केचित्करणांशकर्तृसंख्यादयः प्रकृतिप्रत्यययोर्भेदेन वाच्याः भावना तु समुदायाव्यभिचारात्समुदितयोरेवार्थ इत्यपि शक्यं वक्तुम्। तथा च सूत्रकारभाष्यकाराभ्यां भावार्थाः कर्मशब्दा इति सामानाधिकरण्यमेवाश्रितं(१) न भावार्थत्वेन प्रत्ययाः कथिताः। शास्त्रे तु सर्वत्र प्रत्ययार्थो भावनेति व्यवहारः। तत्रायमभिप्रायः॥

प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययौ सदा।
प्राधान्याद्भावना तेन प्रत्ययार्थोऽवधार्यते॥

यद्यप्यन्यद्विवेककारणं नास्ति तथापि प्राधान्यं प्रत्ययार्थधर्मं दृष्ट्वा नूनमियं प्रत्ययार्थ इत्यवगम्यते॥

तथा क्रमवतोर्नित्यं प्रकृतिप्रत्ययांशयोः।
प्रत्ययश्रुतिवेलायां भावनात्माऽवगम्यते॥

न केवलमेतावेवान्वयव्यतिरेकौ यौ परस्परपरित्यागेन लक्ष्येते तस्मिन्नेव हि पदे तदागमे हि तद् दृश्यतइत्यनेन न्यायेन विवेको ऽवधार्यते। यत्त्वस्त्यादिपरः प्रत्ययोपि भावनां जहातीति तुल्यं धातुसमुदायपक्षयोरप्येतत्,सर्वथा यत्र प्रतीयते तत्र तावत्प्रत्ययार्थत्वं निश्चीयते। अन्यत्र त्वयं विचार एव नास्ति। क चिद्व्यभिचारस्य चोत्तरमुक्तं तद्भूताधिकरणे। अथ वा नैवात्रापि व्यभिचारः। कुतः॥

(१) अभिहितमिति २ पु० पाठः।

अस्त्यादावपि कर्त्रंशे भाव्ये ऽस्त्येव हि भावना ।
अन्यत्राशेषभावात्तु न तथा सा प्रकाशते ॥

यद्यपि कर्त्तुरनिष्पन्नत्वाद् व्यतिरिक्तभावयितव्याभावात् अस्त्यादिषु प्रयोजकव्यापारो नातीव लक्ष्यते तथापि प्रत्ययसामर्थ्याद्भावयतीत्यवगम्यते । किमित्यपेक्षिते चानिष्पन्ने कर्त्तर्यन्यत्किं चिदित्यकल्पनादात्मानमित्येव सम्बध्यते केन भावनेन कथमवयवजननादिप्रकारेणेति । त्वयोऽपि तत्र भावनांशा भवनेनैव पर्यन्ते व्यापारान्तरासम्भवात्तत्र के चिदवयवा भावनव्यापृताः प्रयुज्यन्ते के चित्सिद्धभवनाः प्रयोजकाः । सिद्धभवनासिद्धभवनवर्त्ति च सामान्यमुभयसंपर्काद्भावनेत्युच्यते । एतेन जायते निष्पद्यते सिध्यतीत्यादीनि व्याख्यातानि । अस्ति पुनर्ज्जनिसमानार्थाद्भवतेरुपरितनीमवस्थामभिलपन्सत्तयात्मभवनं भवद्भावयतीत्येवमाख्यातप्रत्ययं लभते । तत्रापि तु कालकृतभेदपूर्वोत्तरसामान्यसत्तारूपेण पूर्ववदेव प्रयोज्यप्रयोजकव्यापारकल्पनानुसर्त्तव्या । सत्त्वामपि त्वेवमादिषु भावनायां निष्पन्नचेतनकर्तृविषयत्वाद्विधिप्रतिषेधयोरसम्भवः । स्यादेतत् । दृष्टो विधिरपि तस्मात्प्रायणीयस्याङ्ग ऋत्विजा भवितव्यम् । रथन्तरं भवति । अत्र अध्वर्युः स्यात् । इन्द्रोक्थ्यानि स्युरिति । सत्यं दृश्यते न त्विह पूर्वेण तुल्यो भवत्यर्थः । सिद्धो हि पुरुषः कर्म्मसम्बन्धनिमित्तमृत्विकत्वं भवदन्यैरेव वाक्कायमनोव्यापारैर्भावयेदित्युच्यते । तथा रथन्तरादिषु सत्यपि श्रुत्या भवनविधिसम्बन्धे तत्र सम्भवादनुमीयमाना भावनैव विधीयते । यत्र त्विह्यामुको भवेदिति प्रयोगस्तत्र भवतेस्तित्वर्थवाचित्वात्सम्भवत्येव व्यतिरिक्तं भावयितव्यम् इत्येवं विज्ञायते । स्थानेनान्यत्किं चिद्भाव-

येदिति । तेन भूतभविष्यद्वर्त्तमानापदेशमात्रेष्वेवापारमार्थिकं भवितृव्यापारस्य भावनात्वं न विध्यादिषु । भूतादिकथने ऽपि यदा समस्तं व्यापारं धातुरेवोपादत्ते नावयवकालादिकृतभेदाश्रयणं तदा विप्रतिषेधा(१)द्धात्वर्थमात्रं कर्तृसंख्यादयश्च आख्यातपदार्थत्वेनावधार्यन्ते न भावना । न च भावनाव्यभिचारेण दोष इत्युक्तम् । यत्तु कृदन्तेष्वपि धातवो भावनां न व्यभिचरन्तीति । सत्यं धात्वर्था न व्यभिचरन्ति तैरेव तु गम्यमानत्वादनभिधेयत्वमपि शक्यं वक्तुम् । तथा हि ॥

धात्वर्थकारकैरेव गुणभूतो ऽवगम्यते ।
भावनात्मा कृदन्तेषु तस्मान्नैवाभिधीयते ॥

यथैव भावप्रधानत्वादाख्याते तत्सम्बन्धादेव गुणभूतकारकप्रतीतिसिद्धेर्न कर्तृकर्म्मणोरभिधानं भविष्यत्येवं कर्त्राद्यभिधानादेव तदन्यथानुपपत्त्या भावनासिद्धेरनभिधानं गम्यमानापेक्षयैव च करोतिसामानाधिकरण्यं, यथा पचतिशब्दस्य देवदत्तशब्देन,तथाभूतयैव च कारकसम्बन्धो ऽप्युपपत्स्यते । अथ वा भावनोपसर्ज्जनधात्वर्थनिष्पत्त्यर्थत्वात्कारकाणां धात्वर्थेनैव सम्बन्धसिद्धिः । स एव हि तानि स्वसिद्ध्यर्थमपेक्षते भावनापि च तथाभूतान्येव तानि गृह्णातीत्यविरुद्धः सम्बन्धः । कृत्यानां तु प्रैषवाचित्वात्सत्यपि भावनानभिधाने तावत्स्वार्थपर्यवसानं नास्ति यावदंशत्रयपरिपूर्णा भावना न लब्धा । कुतः ॥

स्वव्यापारे हि पुरुषः कर्तृत्वेन नियुज्यते ।
प्रैषैस्तस्य स्वरूपं च भावना ऽंशत्रयात्मिका ॥

न हि पुरुषः स्वव्यापारं मुक्त्वा ऽन्यदनुष्ठातुं शक्तः प्रैषाश्चैन-

(१) विशेषादिति २ पु० पाठः ।

मनुष्ठापयन्ति । ते यदि तद्व्यापारं कथं चिन्नोपादद्युः न नियोक्तुं शक्नुयुः इत्येवमपि भावनाचेपसिद्धिः । यावांश्च ब्राह्मणगतः कश्चित्प्रैषः स सर्वः प्राप्त्यभावाद्विधिरेव भवतीति विनापि स्मरणेन कृत्यानां विधायकत्वम् । अयमेव च विधिप्रैषयोर्विशेषः ॥

प्रवर्तनस्मृतिः प्राप्ते प्रैष इत्यभिधीयते ।
अप्राप्तप्रैषणं सर्वं विधित्वं प्रतिपद्यते ॥

तस्मात्प्रत्ययार्थो भावनेत्युपपन्नम् । ननु च यदि प्रयोजकव्यापारो भावनेष्यते ततः पचावधिश्रयणादीनि यजौ च मानसः सङ्कल्प इत्यादीनां भावनात्वं तएव धात्वर्था(१) इति धातुवाच्यैव भावना स्यात् । नैष दोषः ॥

धात्वर्थव्यतिरेकेण यद्यप्येषा न लभ्यते ।
तथापि सर्वसामान्यरूपेणान्या ऽवगम्यते ॥

सर्वत्र हि अधिश्रयणादौ करोतीत्यपि सामान्यव्यापारांशः प्रतीयते पचत्यादिवाच्याः विक्लित्यधिश्रयणादयः कर्म्मस्थाः कर्तृस्थाश्च । तत्र यदौदासीन्यप्रच्युतिमात्रेण परिस्पन्दरूपं निरूप्यते सा भावना । ये तु तदनुरञ्जनसमर्थाः कर्तृकर्म्मगता विशेषास्ते तस्या एव करणेतिकर्त्तव्यतांशयोर्न्निविशन्ते । एवं तर्हि धात्वर्थसामान्यं भावनेत्येतदापन्नम् । सत्यं साध्यतया सामान्यं न तु गोत्वादिरूपेण । कथम् ॥

अन्यदेव हि यागादौ सामान्यं करणात्मकम् ।
अन्यच्च भावना नाम साध्यत्वेन व्यवस्थितम् ॥

भावनायां हि स्वयमेव प्रतिपुरुषं सामान्यविशेषौ भवतः । तथा तत्करणभूते यागादौ समवेतं भावनाकरणांशापेक्षितं

(१) स एव धात्वर्थ इति २ पु० पाठः ।

धात्वर्थसामान्यं नाम यत्कर्म्मशब्देनाभिधीयते विशेषणभावा-च्च यागादयो भावनाविशेषा इत्युच्यन्ते न तद्व्यक्तित्वेन। शास्त्रप्रदेशे तु क्रियाकर्म्मशब्दौ कदा चिद्धात्वर्थे प्रयुज्येते कदा चिद्भावनायां कदा चित्तु प्रत्ययसत्वेभयत्रापि प्रयोगः न स्वरूपाभिधानेन। कुतः॥

याद्दशी भावना ऽऽख्याते धात्वर्थस्यापि याद्दशः।
नासौ तेनैव रूपेण कथ्यते ऽन्यैः पदैः क्व चित्॥

भावनाशब्दो हि निष्पन्नात्मिकां सत्त्वरूपापन्नां लिङ्गसंख्यायोगिनीमभिधत्ते न चासावाख्याते ताद्दश्यभिधीयते लिङ्गसंख्यारहितरूपेण गम्यमानत्वात्। एवं धात्वर्थो ऽपि वेदितव्यः। तथा करोति भावयतीत्येताभ्यामपि श्रुत्या तावदन्याद्दगेवार्थः प्रतीयते कृञ्भावयत्यर्थकरणिका भावना न चैवंरूपा ऽसौ यजेतेत्यादिष्वस्तीत्यपर्यायत्वम्। तत्रानन्तरप्रत्ययोत्थापितभावनान्तरबुद्धिमविवच्चित्वा ऽर्थसंवादः कर्त्तव्यः। तेनादूरविप्रकर्षमात्रेणैष प्रयोगो नार्थसाम्येनेत्यवस्थितमनन्यशब्दवाच्यत्वं भावनायाः। सा तु प्रतीतमात्रैव प्राधान्यादपेक्षान्तरानधीनत्वाच्च प्रथमं तावत्साध्यांशमपेक्षते भावयेत्किमिति। तत्र यावती विध्युपेता भावना तस्यां पूर्वप्रतीतमपि विधित्वं तावन्नाश्रीयते यावदंशत्रयपूर्णा भावनानुष्ठानयोग्या न भवति। विधित्वप्रक्रमाच्च प्रथममेवैतज् ज्ञायते याद्दशैरंशैः पूर्णेयं विधानमर्हति ताद्दशैः पूरयितव्येति। न च बुद्धिपूर्वकारी पुरुषः पुरुषार्थरहितं व्यापारं वचनशतेनाप्युक्तो ऽनुतिष्ठति। न च पुरुषार्थः साध्यव्यतिरिक्तांशपातित्वेन कैश्चित्प्रार्थ्यते ततो ऽभ्यर्हिततरस्यान्यस्य साध्यस्याविद्यमानत्वात्। तत्र यद्यस्यां भावनायामपुरुषार्थः सा-

ध्यः स्यात्ततः पुरुषेष्वप्रवर्त्तमानेषु प्रत्ययस्य प्रयोजकशक्तिर्वा-
ध्येत तेन यद्यपि समानपदोपादानप्रत्यासत्तेर्द्धात्वर्थः साध्यांश-
पूरणायोपप्लवते तथा ऽप्ययोग्यत्वान्निराक्रियते, न हि प्रत्यास-
त्तिरेवैका संबन्धकारणं योग्यत्वाद्यपि । तथा च वक्ष्यति यस्य
येनार्थसम्बन्ध इति । किं च ॥

सम्बन्धमात्रमुक्तं च श्रुत्या धात्वर्थभावयोः ।
तदेकांशनिवेशे तु व्यापारो ऽस्या न विद्यते ॥

सम्बन्धमात्रं कृत्वा निवृत्तव्यापारायां श्रुतावन्यतरांशनिवे-
शो योग्यत्वादाश्रयितव्यः । तद्यदि साध्यांशादेकप्रत्ययोपा-
त्तेन प्रत्यासन्नतरेण विधित्वेन प्रच्याव्यते ततो ऽंशान्तरेण नूनं
सम्पत्स्यत इत्येवं प्रतीक्ष्यते । किं च ॥

साध्यांशे पुरुषाणां च प्रत्ययो न नियोजकः ।
स्वयमेव हि जानन्ति कर्त्तव्यं पुरुषाः सदा ॥

यत्र हि शास्त्राधीना पुरुषप्रवृत्तिः तत्र तत्सन्निकर्षविप्रकर्षा-
वपेक्ष्येते, साध्यं पुनः स्वर्गपशुपुत्रग्रामादि प्रागेव शास्त्रात्सर्वे
पुरुषाः प्रतिपद्यन्ते । ततश्च भावयेत्किमित्यपेक्षितमात्रे विनैव
तावच्छास्त्रेण एतावदवगतं पुरुषार्थः कश्चिदिति । तत्र विशे-
षमात्रमनवगतत्वादपेक्ष्यते । तदपि च न साध्यात्मना, किं त-
र्ह्येतद्भावनाविषयत्वेन ततश्च दूरस्थस्यापि स्वर्गादेरेव कृतास्प-
दस्य सङ्गतिः । धात्वर्थसम्बन्धस्त्वनपेक्षितः क्रियेत विध्यानर्थ-
क्याच्च बाध्येततरां श्रुतिः । किं च ॥

भवने यस्य कर्तृत्वं कथं चिदवधारितम् ।
स्ववाक्ये वा ऽन्यवाक्ये वा स साध्यत्वं प्रपद्यते ॥

न चात्र धात्वर्थादेर्भवनक्रियासम्बन्धो ऽवगतः स्वर्गादीनां तु

कामशब्दोपबन्धात् भवनसम्बन्धो विज्ञायते । कुतः ।

स्वर्गो मे स्यादितीत्थं हि स्वर्गादिः प्रार्थ्यते भवन् ।
तेनासौ भावनापेक्षः प्रयोज्यत्वेन गम्यते ॥

ततो ऽवधृतस्वर्गादिसाध्यांशा भावना केन भावयेदित्येवं करणमपेक्षते । तत्र च शास्त्राधीनप्रवृत्तित्वात्तत्सन्निकर्षादाश्रीयमाणे प्रमाणान्तराच्च योग्यायोग्यत्वयोरज्ञानाद्विध्यविरोधाच्चात्यन्तप्रत्यासत्त्युपस्थितधात्वर्थातिक्रमकारणाभावात्सर्वफलभावनानां च केन चिद्धात्वर्थविशेषेण विना ऽनुपपत्तेर्योगेनेत्येवं विज्ञायते । यद्यपि च यागः स्वयमेव तावदनिष्पन्नस्तथापि स्वसाधननिष्पादितः सन्त्साधयिष्यति । सर्वमेव च कदा चिन्निष्पन्नं कदा चिदनिष्पन्नम् । न च प्राक् शास्त्रप्रवृत्तेर्निष्पत्तिः क्व चिदुपयुज्यते फलसिद्धिकालमात्रोपयोगित्वात्करणनिष्पत्तेः । प्रमाणवशाच्च त्रिकालवर्त्तिनामपि साधनत्वाविरोधः । तस्माद्यागादीनां करणत्वं तच्चापूर्वद्वारेणेति तच्छब्देभ्यो ऽपूर्वप्रतीतिः । अतश्चैवमपि सूत्रार्थः सम्भवति । ये भावार्थाः भावनाप्रयोजनाः कर्म्मशब्दा यज्यादयः तेभ्यः क्रिया प्रतीयेतेति । ननु चोक्तेन कर्म्मकरणसम्बन्धन्यायेन सकर्मकधातुयुक्तादेवाख्याताद्भावना ऽवगतिः प्राप्नोति । तथा हि ॥

येनेप्सिततमैर्भावैः किमित्यंशो ऽवरुध्यते ।
तद्योगी तेन धात्वर्थो न कश्चित्स्यादकर्म्मकः ॥

यदि वा सर्वधातूनां सकर्म्मकत्वापत्तिरथ वा ऽकर्म्मकेभ्यो भावनया न भवितव्यम् । नैष दोषः । कुतः ॥

अन्यदेव हि धात्वर्थप्राप्यं कर्म्म सकर्म्मके ।

अन्यदेव च सर्वत्र प्रत्ययार्थनिबन्धनम् ॥

ओदनं पचति ग्रामं गच्छतीति धात्वर्थापवर्गलभ्यमेकं कर्म्म, अपरं पुनर्भावनाकर्म्म । तत्र कदाचिद्धात्वर्थकर्म्मैव भावनाकर्म्मत्वमपि प्रतिपद्यते पाकेनौदनं भावयतीति । कदाचित्पुनः स्वकर्म्मविशिष्टधात्वर्थयुक्ता भावना कर्म्मान्तरेण युज्यते ग्रामगमनेन स्वार्थं भावयेदिति ओदनपाकेन चेति । तच्चैतद्धात्वर्थात्परतः तद्व्याप्यमात्रत्वेन गम्यमानं धात्वर्थान्तरतिरोहितं भावनाकर्म्मतया सर्वत्रावधार्य्यते । तच्च प्रायेणैवं कामशब्देनैव संबन्धमापद्यते । सुखकाम आसीत स्वास्थ्यकामः शयीतेति । सत्यपि आसिशेत्योरकर्म्मकत्वे यः प्रत्ययेन करोत्यर्थोभिहितः तत्कर्म्मत्वेन च स्वादीन्यवधार्यन्ते । तेन करोतेः सर्वदा सकर्मकत्वादकर्म्मकाख्यातानामपि च तत्सामानाधिकरण्यदर्शनात्किं करोत्यास्ते किं करोति शेते इति सिद्धेवमादिष्वपि सकर्म्मिका भावना ॥

यजेरपि तु यत्कर्म्म पूज्यत्वाद्देवतेष्यते ॥
तदुज्झित्वैव पुत्रादेः कर्म्मत्वं भावनाश्रितम ॥

तस्मात्सकर्म्मकाकर्म्मकयोरविशेषादासनेन भावयेदित्यपि प्रयोगसिद्धिः । कस्तर्हि सकर्म्मकाकर्म्मकयोर्भेदः । उच्यते ।

साक्षादव्यभिचारेण धात्वर्थो यत्र कर्म्मभाक् ।
सकर्म्मकः स धातुः स्यात्पारंपर्य्ये त्वकर्म्मकः ॥

आसनशयनादौ हि न नियमेनानन्तर्य्येण वेदं तदिति वा कर्म्म निरूप्यते, तेनाकर्म्मका अभिधीयन्ते । पचिगम्यादीनां तु विक्लित्त्यन्तसंयुज्यमानसाक्षात्सम्बन्धिकर्म्माव्यभिचारात्सकर्म्मकत्वं, न तु भावनाविशेषणे कश्चिद्विशेषः । सेयं भावना अंशद्वय-

परिपूर्णा सती सर्वकरणानामुपायाननुगृहीतानां करणत्वानुपपत्तेः कथं भावयेदितीतिकर्त्तव्यतामपेक्षते । सा च प्रत्यक्षादीनामनुग्राहकदर्शनशक्त्यभावादत्यन्तशास्त्रगम्येति यथासन्निकर्षं तदसंभवाद्वा यथा कथं चिदुपस्थाप्यमाना शास्त्रानुसारेण श्रुत्याद्युपदेशेन चोदनासामान्याद्यतिदेशेन वा अत्यन्तादृष्टोपकारद्वारेणान्यथानुपपत्त्या कल्प्यते । ततः परिपूर्णत्वादनुष्ठातुं योग्येति विधीयते । तद्विधानाच्चार्थापत्त्या यागादिविधानमित्युपपन्नं भावार्थसूत्रम् । भवन्ति के चित्कर्मशब्दा यागो यजनमिज्येति उदाहर्त्तव्ये तत्सामानाधिकरण्यसिद्ध्यर्थं नैकचित्काद्युदाहरणं यागादिकरणत्वचोदनोत्तरकालभाविकर्मशब्दत्वेन पारतन्त्र्यात्तदुज्ज्ञानम् । स्वतन्त्राणां कथं चिदपि भावार्थत्वाशङ्कासंभवात् । यागादयो हि स्वातन्त्र्येणापि कदा चिदनुमानाद् भावार्थाशङ्काविषयाः स्युरिति । के चिद्भावार्था न कर्मशब्दा यथा भावयेत्कुर्य्यादिति चोदाहरणं भूत्यादयस्तु प्रयोज्यव्यापारवचनत्वान्नैव यथावर्णितभावार्था इत्यनुदाहरणम् । तत्र यथा कथं चिच्छिजन्तव्युत्पत्त्या भावशब्द एको गीयेत नेतरौ । तावपि तु प्रयोज्यव्यापारांशेन कथं चिद् भावार्थावित्युदाहृतौ । अथ वा द्वितीयसूत्रार्थव्याख्यानेन भावनाप्रयोजनत्वमंशत्रावित्वे नास्तीति विनापि सकलार्थाभिधानाद्भवन्ति भावार्थाः । कथं पुनरमी न कर्मशब्दाः, यदा धातुमात्रं कर्मशब्दत्वेनोक्तं निर्विशेषस्य सामान्यस्यानुष्ठातुमशक्यत्वादकर्मशब्दत्वम् । अतो विशेषवाचिनामेव धातूनां कर्मशब्दत्वग्रहणादचोद्यमेतत् । यदि हि श्येनचित्रादर्शपौर्णमासशब्दाः फलैः संबध्येरन् ततो यागकरणत्वाभावात्तत्सामानाधिकरण्यनिमित्तनामधेय-

त्वानुपपत्तेः प्रसिद्ध्यादिभिर्गुणविधित्वमेवस्यादतः स्थितएतस्मिन्नधिकरणे इत्याह । कस्मात्पुनरिदं तत्रैव न नीतं प्रमाणलक्षणेनासंबन्धादथ नामधेयत्वं कस्मादत्र नानीयते भेदलक्षणेनासंबन्धात्तस्माद्यथान्यासमेव स्थितयोरर्थात्पौर्वापर्य्यसिद्धिः । नचैषामर्थितेति फलपदाभिप्रायम् । विविभक्तित्वादिति संबन्धनिमित्ताख्यातविभक्तिविगमादथ वा निष्पन्नार्थाभिधायिस्वविभक्तिविशेषयोगो विविभक्तित्वम् । तस्मान्न द्रव्यादिशब्दानां फलसंबन्ध इति । आह च ।

साध्यसाधनसंबन्धः सर्वदा भावनाश्रयः ।
तेन तस्य न सिद्धिः स्याद्भावनाप्रत्ययादृते ॥

## सर्वेषां भावो ऽर्थ इति चेत् ॥ २ ॥

न तावत्प्रत्ययस्येष्टमपूर्वप्रतिपादनम् ।
न च धातोः स्वतन्त्रस्यान्नाम्नो वा परतः समम् ॥

यदि हि भावनावचनस्यैवापूर्वप्रतिपादकत्वमिष्यते धातोर्वा प्रत्ययनिरपेक्षस्य ततो नामपक्षो दुर्बलः स्या, दिह तु यथैव धातोः प्रत्ययसंबन्धानुगृहीतस्य भावनानुरञ्जननिमित्तं करणवाचित्वं भवत्येवं नामपदस्यापीत्यविशेषः ।

## येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि तस्मात्तेभ्यः पराकाङ्क्षा भूतत्वात्स्वे प्रयोगे ॥ ३ ॥

यदुक्तं यदैकस्मादपूर्वं तदा इतरत्तदर्थं भविष्यतीति तदुक्तं तावद्वस्तुधर्म्मेण विशेषं दर्शयति । कथम् ॥

बह्वदृष्टप्रसङ्गाद्धि धर्म्मो नेष्टः पदे पदे ।
नाम्नः फलेन संबन्धे परिहारो न तस्य च ॥

एकस्मादहृष्टे कल्पिते यदोतरद् दृष्टार्थत्वेन तादर्थ्यं भजते ततो लाघवं लभ्यते । अस्य तु तादर्थ्यसिद्धये ततो ऽपि पुनरदृष्टं कल्प्यतएव ततो वरं फलेनैव सर्वाणि संबद्धानि । न च संबन्धवैरूप्यस्त्रोषाश्रयणं नाम्नश्च फलसंबन्धे ऽवश्यं धात्वर्थस्तदनुग्रहार्थो ऽभ्युपगन्तव्यः । स च स्वयं निष्पाद्यः सिद्धरूपस्य नामार्थस्य न शक्नोति दृष्टेनोपकर्त्तुम् । न हि नामार्थस्तमपेक्षते शब्दप्रयोगवेलायामेव निष्पन्नतया गम्यमानत्वादपेक्षणीयस्य वा सिद्धत्वेनायोग्यत्वात्प्रयुज्यते ऽस्मिन्निति चाभिधेयएव प्रयोगः । तदाधारैव हि निष्पन्नरूपोपलब्धिरनुत्पन्नत्वे क्रियारूपस्य वक्तव्ये विनाशित्वप्रदर्शनं निष्पन्नस्यापि क्षणिकत्वेन पुनः पुनर्निष्पत्त्यपेक्षोपपत्तेः । तेभ्यः पराकाङ्क्षान्याकाङ्क्षा निष्पाद्यत्वेन वा प्रधानाकाङ्क्षा न विद्यतइति अध्याहारः । अथ वा तेभ्यः परा दूरे आकाङ्क्षेत्यर्थः । कुतः भूतत्वादेवेति । स्वरूपकथनार्थमुपन्यस्तं निष्पन्नत्वादेवेति । पुनरन्ते तदेव हेतुत्वेनोद्दिष्टं सूत्रकारेण ।

## येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि तस्मात्तेभ्यः प्रतीयेताश्रितत्वात्प्रयो-

## गस्य ॥ ४ ॥

आख्यातवर्त्ती धात्वर्थः साध्यरूपः प्रतीयते ।
तस्मिन्फलवतीष्टे तु नाम्नो दृष्टार्थतेष्यते ॥

धात्वर्थस्तावत्प्रकृत्यैव साध्यात्मको विशेषतस्त्वाख्यातगतेन धातुनोच्यमानः स यदि फलसाधनत्वेन चोद्यते ततो ऽसिद्धरूपत्वात्तस्य साधनाकाङ्क्षायां सत्यां नामपदं गुणविधित्वेन नामधेयत्वेन वोभयथापि दृष्टेनैव तादर्थ्यं लभते । ननु नामधेयपक्षे नामपदमपि साध्यार्थं भविष्यतीति धातुतुल्यं स्यात् । न । तस्य फलसंबन्धे गुणविधित्वेन सिद्धार्थत्वात् । अपि च ॥

साध्यात्मको ऽपि धात्वर्थो यदा नाम्ना ऽभिधीयते ।
तदा द्रव्यवदेवासौ निष्पन्नात्मा प्रतीयते ॥

यद्यपि वस्तुस्वरूपेण धात्वर्थः साध्यः तथापि नामपदेनोच्यमानो लिङ्गसंख्यायोगित्वात्सिद्धरूपो ऽभिधीयते । अभिधानकृता चाकाङ्क्षोत्पत्तिर्न वस्तुकृता । तस्माद्युक्ता धातोरेवाकाङ्क्षा न नाम्न इति । किं चाश्रितत्वात्प्रयोगस्येत्यधना शब्दप्रत्यासत्तिकृतो विशेषो ऽभिधीयते । पुरुषव्यापारात्मिकायां भावनायां धात्वर्थोपश्लेषोऽपि पुरुषेणाश्रितस्तदतिक्रमहेत्वभावाच्च न नामपदग्रहणं तस्मादस्ति विशेषः ॥

## चोदना पुनरारम्भः ॥ ५ ॥

सिद्धं कृत्वा ऽपूर्वं तत्प्रतिपत्त्युपायशब्दविशेषविचारः कृतः । तस्य सिद्धत्वमेवाप्रसिद्धमतस्तदेव तावत्प्रतिपादनीयमित्यत आह ॥

फलाय विहितं कर्म्म क्षणिकं चिरभाविने ।
तत्सिद्धिर्नान्यथेत्येवमपूर्वं प्रति गम्यते ॥

वेदवाक्योपात्तस्वर्गयागादिसंबन्धान्यथानुपपत्त्या चोदनयैवापूर्वमपि चोदितं भविष्यतीति प्रमाणवत् । तस्मादस्त्यपूर्वम् इत्यत्रापरे निपुणंमन्यास्तन्निराकरणमाहुः ॥

प्रमाणपञ्चकाऽज्ञानादपूर्वं षष्ठगोचरः ।
तस्मादन्वर्थनामैतन्न वस्तुत्वेन गम्यते ॥

वस्त्ववबोधनार्थानि प्रत्यक्षादीनि पञ्च प्रमाणानि । तद्यत्र तानि न प्रवर्त्तन्ते तदभावेनाभावात्मनैवावगम्यते । न चापूर्वे तानि प्रवर्त्तन्ते । तस्मात्सर्वप्रमाणापूर्वत्वात् अन्वर्थनामैवासद्रूपपूर्वं प्रतिपत्तव्यम् । तत्र प्रत्यक्षेण तावन्नावगम्यते, रूपाद्यनात्मकत्वेन चक्षुरादिभिरसंबन्धात् । नाप्यनुमानेन, केन चिल्लिङ्गेन सहादृष्टसंगतित्वान्न हि विशेषतः सामान्यतो वास्य केन चित्सम्बन्धोऽनुभूतपूर्वः । सर्वत्रैव च वस्तुसत्तावबोधायानुमानमपर्याप्तमित्युक्तं प्राक् ॥

पदवाक्ये न चैतस्य वाचके शास्त्रगमः क्व चित् ।
शब्दगम्यत्वमप्यस्य तेन नैवोपपद्यते ॥

आगमिकत्वमप्यस्य पदेन वोच्यमानस्य स्याद्वाक्यगम्यस्य वा । तत्र पदं न तावत्किं चित्साक्षादेतस्य वाचकमस्ति । यत्त्वपूर्वमिति तदन्वर्थत्वात्सुतरामस्तित्वं बाधते । न च प्रमाणान्तरानवगतेर्थे पदं प्रवर्त्तते । न च स्वातन्त्र्येण प्रमाणमिति स्थितम् । तथा च वाक्यस्यावाचकत्वादेवाप्रामाण्यम् । न च के चित्पदार्थाः श्रूयन्ते येषां भेदः संसर्गो वाऽपूर्वं भवेत् । येपि शब्दान्तरादयः श्रुतिलिङ्गादयश्च शब्दप्रकाराः तेऽपि च स्वभाव-

भिन्ने वस्तुनि भेदे विनियोगे वा कारणं न सद्भावे कस्य चिदि-त्यपूर्वं प्रत्यप्रमाणम् । उपदेशानवगते चातिदेशो ऽपि न प्रवर्त्तते विधिप्रतिषेधविषयत्वाच्च समस्तस्य वेदस्य । न क चिद्वस्तुस्व-रूपप्रतिपादनार्थत्वं भवतीति नागमगम्यमपूर्वम् । न चादृष्टपू-र्वस्यादृष्टसदृशस्य चोपमानविषयत्वं कामं वा ऽनुपलभ्यमानश-शविषाणादिसारूप्यादभावात्मकत्वोपमानप्रसङ्गः । तस्मादसद्रू-पेणोपमेयम् ।

अर्थापत्त्यापि नैवैतदस्तीत्येवं प्रतीयते ।
अन्यथाप्युपपन्नत्वात्फलयागादिसंगतेः ॥

दृष्टार्थापत्तिस्तावद्धर्मास्तित्ववदेवात्रापि निराकर्त्तव्या । स्व-भावादिनापि ईश्वरदरिद्रादिवैचित्र्योपपत्तेः । श्रुतार्थापत्तिरपि कीदृशी भवति यत्र प्रत्यक्षेणैवानुपपत्तिर्दृश्यते । न च कल्प्य-मानोऽर्थः केन चिद्विरुध्यते । तद्यथा स्रुवेणावद्यतीत्युक्ते न च कथं चिदपि मांसपुरोडाशादीनि तेनावदातुं शक्यन्तइति प्रत्यक्षगम्यत्वात् । अपि च तत्रापि प्रसक्तेः एवं कल्प्यते द्र-वाणामिति । न चैषाकल्पना केन चिद्विरुध्यते श्रुतत्वान्यश्रुतप-रिकल्पनाभावात् । अपूर्वं तु न कदा चित्फलसाधनत्वेन सं-भाव्यते । यतो ऽन्यकारणनिषेधे सति तद्विषया परिशेषसिद्धिः स्यात् ॥

यदि त्वन्यनिवृत्त्यैव परिशेषः प्रकल्प्यते ।
शशशृङ्गनिमित्तत्वं फलानां किं न गम्यते ॥

न हि कारणान्तरप्रतिषेधमात्रेणापूर्वनिमित्तता गम्यते, श-शविषाणादिभिरनैकान्तात् । अपि च यदि तावदपूर्वं यागस्य साध्यमिष्यते ततः श्रुतं स्वर्गं परित्यज्याश्रुतं परिकल्पितं भवेत् ।

अथ फलं प्रति साधनभूतं, ततः श्रुतयागपरित्यागात्सैव गतिः।
न चाकारान्तरेण(१) तन्निरूपयितुं शक्यते। तेनागमप्रामाण्या-
द्यागादेव फलेन भवितव्यम्। कथं नष्टः साधयतीति चेत्। य-
दि शास्त्रादेवं गम्यते किं भवतो विरुद्ध्यते। ध्रियमाणेन वा फलं
साधनीयमित्यत्र किं प्रमाणम्। अपि च आकाशादीनि नित्या-
वस्थितानि कस्मात्फलं न साधयन्ति। यदि च श्रूयमाणातिरेके-
णाऽवस्थायित्वसंभवादपूर्वेण फलं साध्यत इति कल्प्यते ततो व-
रमाकाशादेरेव कल्पितं, तस्य हि स्थानसद्भावावपि तावत्प्रसि-
द्धौ। केवलं फलनिमित्तत्वमाश्रयणीयम्। अपूर्वे तु सद्भावप्रभृति
सर्वं निष्प्रमाणकं कल्पनीयम्। अथ यागसंबन्धिना केन चिद-
वस्थितेन फलं दातव्यमित्यभिप्रायः, तथा सत्यपि॥

यष्टुरेवात्मनो यागैस्संगतस्य स्थितस्य च।
निमित्तत्वं वरं क्लृप्तं लाघवं हि तथा सति॥

यदि यागस्य विनाशित्वादन्येन तत्सम्बन्धिना फलं साध्यमा-
नं यागेन साधितं भवति ततो लाघवादतिक्रान्तयागेनात्मनैव
वरं साधयितव्यम्॥

यदा कर्मविनाशोऽयं फलं नः साधयिष्यति।
अङ्गियागविधानाद्धि तद्यत्नेन कल्प्यते॥

विनाशिनि हि कर्मणि चोदिते कियद् दृश्यते कर्म च वि-
नष्टं शास्त्रप्रत्ययाच्च कालान्तरे फलं भविष्यतीति निश्चीयते यच्च
यत्प्रतीत्योपजायते तत्र तस्य निमित्तत्वमित्यवधार्यते। तस्मा-
दभावनिमित्तमेव फलमस्तु। स्यादेतत् न क्व चिदवस्तुनः साध-
कत्वं दृष्टमिति। तदुच्यते। अपूर्वस्य वा क्व दृष्टं येनात्राश्रीयते त-

(१) प्रकारान्तरेणेति २ पु० पाठः।

द्वश्यकर्त्तव्ये लौकिकनिमित्तधर्म्मातिक्रमे किमपूर्वनिमित्तत्वं कल्प्यतामुताभावनिमित्तत्वमिति । क्रूप्ताभावनिमित्तत्वातिलङ्घनेन कल्पनिकापूर्वनिमित्तत्वपरिग्रहो न युज्यते । किं च ॥

यदि चैकान्ततो ब्रूयुः शब्दाः कालान्तरे फलम् ।
ततस्तेनैव(१) कल्प्येत निमित्तं वस्तु किं चन ॥

क्रियाफलसंबन्धप्रतिपत्तिमात्रचरितार्थासु चोदनास्वनुपात्ते कालान्तरे कर्म्मस्वभावादानन्तर्य्ये गम्यमाने कुत एतत्कालान्तरभावि फलं तत्सिद्ध्यर्थं चापूर्वं कल्प्यते इति । तच्चैतत्स्यात्कृते कर्म्मण्यनन्तरं फलमनुपलभ्य(२) कालान्तरफलोत्पादद्वारमपूर्वकल्पनमिति तदयुक्तम् । कुतः ॥

पूर्वं निश्चित्य शास्त्रार्थं (३)प्रयोगे हि प्रवर्त्तते ।
प्रयोगोत्तरकालं तु न शास्त्रार्थोऽवधार्यते ॥

न हि अविद्वान्विहितोऽस्तीति तावदवश्यं यावच्छास्त्रगम्यं तत्सर्वं प्रागनुष्ठानादवगन्तव्यम् । न च तत्काले कर्म्मफलकालवियोगज्ञानकारणमस्ति । यच्च शास्त्रप्रवृत्तिवेलायां तदन्तर्गतत्वेन नावधारितं तदुत्तरकालमेवावधार्यतइति कुत एतत् । अपि च ॥

सर्वकर्तृष्वशक्तत्वाद्वैगुण्यं संप्रतीयते ।
तेन च प्रतिबद्धत्वान्नार्थापत्तिरपूर्वभाक् ॥

दृश्यतएवानन्तरफलानुत्पत्तिकारणवैगुण्यमिति न कालान्तरफलसिद्ध्यर्थमपूर्वं कल्पनीयम् । अनैकान्तिकी हि तदार्थाप

---

(१) तेनैवेति २ पु० पाठः ।

(२) अनुपलब्ध्येति २ पु० पाठः ।

(३) निश्चितशास्त्रार्थे इति २ पु० पाठः ।

त्तिवैगुण्यमेव वरमननुभूतमपि कल्पयेत् । न च जन्मान्तरफलोत्पत्त्यर्थ(१)मपूर्वकल्पना कुतः ॥

सुखदुःखात्मकत्वेन समानेष्वेव जन्मसु ।
क्रियानन्तरमेवेह स्तः स्वर्गनरकावपि ॥

न हि स्वर्गनरकौ नाम निरतिशयसुखदुःखस्वभावौ देशविशेषात्मकौ वा याविहैव जन्मनि नानुभूयेयाताम् । अलौकिकानां जिह्वासोपादित्वानुपपत्तेः । ये तु लौकिके प्रकृष्टे सुखदुःखे ते कर्म्मानन्तरमेव सम्भाव्येते इत्यविशेषः किं च ॥

प्रतिषेधेषु चापूर्वं न शास्त्रार्थेन जन्यते ।
तदतिक्रमजन्यं तु न भवेच्छास्त्रपूर्वकम् ॥

ब्राह्मणो न हन्तव्य इति हि निवृत्तिः शास्त्रार्थः । न च तया कालान्तरे किं चिज्जनयितव्यम् इति नापूर्वकल्पनामपेक्षते । हननस्य तु नरकपातः फलं तद्यदि तेनापूर्वं जन्येत ततो हननस्याचोदितत्वात् लौकिकक्रियाजन्यं सदपूर्वं न वेदमूलं स्यात् । कल्पितमपि च तन्निष्क्रियत्वान्नैव देशान्तरे शरीरादिप्रापणासमर्थमित्यनर्थकम् । न चास्याश्रयः सम्भवति, क्रियाश्रयस्य पुरोडाशादेर्विनष्टत्वात्तद्व्यतिरिक्ते चारम्भानुपपत्तेः । एवमङ्गापूर्वाण्यपि निराकर्त्तव्यानि । किं च ॥

अङ्गानि यदि वाऽपूर्वं कुर्वन्त्याराद्वस्थितम् ।
असम्बन्धात्प्रधानानां न स्यात्तेनोपकार्य्यता ॥

न हि कल्पितमप्यङ्गापूर्वं प्रधानैरसम्बध्यमानमुपकर्त्तुं समर्थं न चामूर्त्ते प्रधाने तदपूर्वं वा निपतितुं समर्थम् । यदपि च प्रोक्षणादि निमित्तं द्रव्यसमवायि तदपि तन्माचोपक्षीणत्वादन्य-

(१) उत्पत्तिसिद्ध्यर्थमिति २ पु० पाठः ।

त्वासम्भवत्स्वैव फलसाधनत्वाऽपूर्वस्योपकुर्यात् । अथ त्वङ्गापूर्वा-ण्यपि यजमानात्मन्येवावतिष्ठेरन् एवं सति पुरुषार्थत्वापत्तेः क-र्माङ्गत्वहानिः स्यात् । अपि च युगपत्प्रयोगवचनेन प्रधानाद-ङ्गापूर्वैर्युगपदेवोपकर्त्तव्यम् । न च परस्परेणासम्बद्धानां यौगप-द्यं सम्भवति । न चैषां कश्चित्सम्बन्धे हेतुरस्ति । एतेन प्रधाना-पूर्वाणां फले यौगपद्यं प्रत्युक्तम् । तस्मात्कृतत्वमात्रेण प्रधानं पुरुषे फलम् । अङ्गानि च प्रधानेषु जनयन्तीति गम्यते । न चा-पूर्वस्योत्पत्तिरभिव्यक्तिर्वा उपपद्यते । कुतः ॥

न तावद्युगपज्जन्यं कर्म्मभिः क्रमवर्त्तिभिः ।
न चानवयवत्वात्तत्क्रमशोऽपि प्रतीयते ॥
एवं तावन्नोत्पद्यते न चाभिव्यज्यते । कथम् ।
इन्द्रियार्थोभयेषां नः संस्काराद्व्यक्तिरिष्यते ।
न च यागादिभिः किं चित्संस्कृतं संप्रतीयते ॥

सर्वाभिव्यक्तीनां त्रयान्यतमसंस्कारद्वारत्वात्संस्कारान्तरम-वश्यं कल्पनीयं ततः पुनः स एव क्रमः इत्यप्रमाणता । यदि च क्रियानन्तरमपूर्वमुपलभ्येत ततोऽभिव्यज्यते इति ब्रूयाम । य-दि चास्य प्रागस्तित्वे प्रमाणं भवेत् । न तु तदुभयमप्यस्तीति सर्वथा नास्त्यपूर्वं न चैतत्सूत्रं तत्प्रतिपादने विस्पष्टमित्यव्या-ख्यानमेतत् । अत्रोच्यते । यदिदं स्वमतिपरिकल्पितं विग्रहव-द्दिवाऽपूर्वं भवद्भिर्निराक्रियते न तेनास्माकं किं चिद्विरुध्यते । यतो नैतत्तादृशं(१) कस्य चिदिष्टं, किं तर्हि कर्म्मभ्यः प्रागयो-ग्यस्य कर्म्मणः पुरुषस्य वा योग्यता शास्त्रगम्या या परा साऽ-पूर्वमिष्यते । प्रधानकर्म्मणामङ्गकर्म्मणां वा प्राकरणात्स्वर्गा-

(१) नैव तत्तादृशमिति २ पु० पाठः ।

द्विप्राप्त्ययोग्याः पुरुषाः क्रतवश्च स्वकार्य्यायोग्याः । तामुभ-योमप्ययोग्यतां व्युदस्य प्रधानैरङ्गैश्च योग्यतोपजन्यत इत्यवश्यं सर्वैणाभ्युपगन्तव्यम् । असत्यां तस्यामकृतसमत्वप्रसङ्गात् । सैव च पुरुषगता क्रतुगता वा योग्यता शास्त्रे ऽस्मिन्नपूर्वमित्यप-दिश्यते । यत्तु प्रत्यक्षादिगम्यत्वमस्य नास्तीति, सत्यं श्रुतार्था-पत्तिव्यतिरिक्तैर्न्न गम्यते स त्वदोषः किं कारणम् ॥

श्रुतार्थापत्तिरेवैका प्रमाणं तस्य वेष्यते ।
शब्दैकदेशभावाच्च स्वार्थेष्वागम एव नः ॥

येन वाक्येन यागात्स्वर्गो भवति प्रयाजादिभिश्च प्रधानोप-कारो भवति इत्येतच्चोद्यते तेनावश्यं विनष्टानामविनष्टानामपि चैषां कापि स्वकार्य्योत्पादनशक्तिरस्तीत्यभ्युपगन्तव्यं सर्वभा-वनानामशक्तानां कार्य्यारम्भाभावात् । नियोगतश्चात्रातीता-नामेव शक्तिरेष्टव्या । कुतः ॥

क्षणिकत्वेन सर्वत्र(१) नैकस्यापि हि कर्म्मणः ।
कथं चिद्युगपद्वृत्तिः फले किमुत भूयसाम् ॥

यदेव हि कर्म्म गृहीतं तदेव हि क्षणिकसूक्ष्मावयवत्वात्फलं प्रति युगपद्भवितुमसमर्थं किमुत यान्यनेकात्मकानि दर्शपूर्ण-मासप्रभृतीनि । यदा हि पूर्णमासो भवति न तदा दर्शो यदा दर्शस्तदा पूर्णमासश्चिरविनष्टस्तथैकस्मिन्नेव समुदाये यदाग्ने-यस्तदाग्नीषोमीयोपांशुयाजौ न स्तः यदा तयोरेकस्तदेतरौ न विद्येते इति यौगपद्यासम्भवस्तद्यदा दर्शपूर्णमासस्तदवयवो वा कां चित्पुरुषे शक्तिमनाधायैव विनश्येत्ततः प्रागवस्थातुल्यत्वा-दुत्तरकर्म्मणां पूर्वैः सह रूपतः शक्तितो वा साहित्याभावान्न

(१) क्षणिकावयवत्वेनेति २ पु० पाठः ।

केवलकरणात्कश्चिद्विशेष इति सहितसाध्यत्वेन श्रुतं फलं साहित्यासंपत्त्या नोपपद्येत। न हि केवलो दर्शस्तत्साधनत्वेन श्रूयते तदन्यं वा कर्म। नियोगतस्य कर्मानन्तरफलोत्पत्तिवादिनापि सर्वकर्मान्ते सा ऽभ्युपगन्तव्या । ततश्च यस्यैवानन्तर्यं तदेवैकं साधनं प्राप्नोति नेतराणि चिरविनष्टत्वात्। अथ तु सर्वेषामपूर्वाख्याः शक्तयस्तिष्ठन्ति ततः स्वरूपाणामतन्त्रत्वात्तेषु असत्स्वपि शक्तिगतमेव यौगपद्यं व्यवहाराङ्गत्वात् व्यापरिष्यते तथा चाह ॥

शक्तिभिः सर्वभावानां व्यवहारानुपातिता ।
तेनान्यदेशकालेपि रूपे ताभिः स सिध्यति ॥
लौकिकं चापि यत्कर्म फले कालान्तरोद्गतौ ।
तत्रापि शक्तिरेवास्ते न त्वपूर्वमिहेष्यते(१) ॥

यान्यपि च लौकिकानि कृषिघृतपानाध्ययनप्रभृतीनि कर्माणि कालान्तरफलत्वेनेष्यन्ते तेषामपि स्वरूपावस्थानासम्भवात्संस्कारैरेव तिष्ठद्भिर्व्यवहारसिद्धिः। ते त्ववैदिकत्वात्संस्कारा नापूर्वशब्दाभिधेयत्वेन प्रसिद्धाः। तेन प्रागेवानुष्ठानाच्छास्त्रश्रवणवेलायामेव क्षणिकानेकाङ्गप्रधानप्रयोगसाध्यं फलं विदित्वा शास्त्रप्रत्ययादेषा बुद्धिर्भवति नूनं केनाप्यात्मना समस्तान्यङ्गप्रधानानि फलकालं यावत्तिष्ठन्तीति। प्रत्यक्षं च स्वरूपभङ्गदर्शनान्न शक्तिव्यतिरिक्तात्मावस्थानोपपत्तिः। यत्तु श्रुतहान्यश्रुतकल्पनाप्रसङ्ग इति। तत्र ॥

यागादेव फलं तद्धि शक्तिद्वारेण सिध्यति ।
सूक्ष्मशक्त्यात्मकं वा तत्फलमेवोपजायते ॥

(१) न त्वपूर्वं गिरोच्यतइति २ पु० पाठः ।

यदि हि असम्बन्धिना केन चित्फलं साध्येत ततो दोषः स्यात्। यागाहितया तु शक्त्या साध्यमानं यागेनैव साधितं भवति। सर्वसाधनानामिष्टफलप्रवृत्तावान्तरालिकव्यापारावश्यंभावित्वात्। अथ वा सर्वमेव कार्य्यं दध्यादि क्षीरादेरुत्पद्यमानं न सहसैव स्थूलेनैवात्मनोत्पद्यते। किं तर्हि, सूक्ष्माणि तावद्रूपान्तराणि अनुभवति। एवं स्वर्गादयोप्यङ्कुरादिस्थानीयां तावदपूर्वावस्थां प्रतिपद्यन्ते तया चोत्पद्यमानया तएवोत्पन्ना भवन्ति इत्येतावानेव चात्र वर्त्तमानः कालो यदुत कर्म्मसंकल्पात्प्रभृत्यासर्वान्त्यफलावयवोपभोगात्। आह च॥

काष्ठैः पक्तव्यमित्युक्ते निर्दिष्टा ज्वलनक्रिया।
अङ्कुरे जायमाने च वृक्षोप्युत्पन्न इष्यते॥

यत्तु सम्भावनापदमपूर्वं नारूढमिति तदयुक्तम्। कुतः॥

विनाशित्वेन विज्ञातं साधनं लोकवेदयोः।
असम्भावितसामर्थ्यस्थायित्वं चोद्यते कथम्॥

नूनं विनष्टस्याप्येतस्य सामर्थ्यं फलनिर्वृत्तिकालावधिं यावदास्त इति हि यावन्नावधार्य्यते तावद्विनाशिनी क्रिया चोदयितुमेवाशक्या तस्मात्संभावना ऽवधारणा च प्रथममेव सिद्धेति॥

न चातिक्रान्तयागेभ्यः पुरुषेभ्यः फलोद्गतिः।
अतिक्रान्तानतिक्रान्तविशेषस्तव नास्ति हि॥

यदि हि अनाहितसंस्कारा एव यागा नश्येयुस्ततः प्रागवस्थातुल्यत्वात् अतिक्रान्तानतिक्रान्तयागयोः को विशेषस्स्यात्। आत्मत्वं तावद्विशिष्टमुभयोः। यागत्वमपि हि विनष्टाकृतयागयोस्तुल्यम्। न च क्रियारहितस्यावस्थान्तरसमवेतस्य(१)वा क-

---

(१) अवस्थान्तरगतस्येति २ पु० पाठः।

तृत्वमवतिष्ठते। कर्तृशक्तिस्तिष्ठतीति चेत् न। तस्याः प्रागपि यागकरणादिद्यमानत्वेनाकरणत्वात्। अपि च यदि पुरुषः फलसाधनं सर्वकर्मणां शुभाशुभानामविशिष्ट इत्येकरूपफलप्रसङ्गः। तथैकेन यागेन बहुभिश्च तदतिक्रमलक्षणलचितत्वाविशेषाद्बहुयाजिनः फलविशेषो न स्यात्। एतेनैव बहुप्रयोगानुष्ठायिनः प्रत्युक्ताः। कर्त्रनभिधायिनि वाख्याते कथमयमर्थो विज्ञायते, यस्य त्वपूर्वाणि क्रियन्ते तस्य प्रातिकर्म्म प्रतिप्रयोगं च तद्भेदादुपपन्ने फलनानात्ववैचित्र्ये। किं च॥

अङ्गमध्ये ऽपि कर्त्तैव भवेच्चेदुपकारकः।
प्रसङ्गसिद्धेरङ्गानामप्राप्तिर्विकृतौ भवेत्॥

प्रयाजादीनामपि क्षणिकत्वात्स्वरूपसंन्निध्यभावे(१) भवत्यचे कर्त्रैव प्रधानोपकारः कर्त्तव्य इति सोपि चापूर्वाभावात्कर्त्रात्मन एवोपकारकस्तत्र येन प्रकृतौ प्रयाजादयः कृतास्तस्य विकृतिषु तद्गतोपकारसद्भावाद्विनापि तन्त्रमध्यविधानेन तत्फलावाप्तेः प्रसङ्गलक्षणमस्तीति न पुनरङ्गान्यनुष्ठातव्यानि। तत्र प्रयाजे कृष्णलं जुहोतीत्यादीनि नोपपद्येरन्। ननु अत्यन्तकालभेदान्नैतत्प्रसज्यते। वक्ष्यत्यस्योत्तरमर्थस्याविकृतत्वादिति। यदेव हि प्रत्यासन्नानि(२)प्रति कर्त्रात्मकं तदुपकाररूपमिष्यते तदेव दूरस्थायामपि विकृतौ इत्यविशेषः। एते कर्म्मविनाशपक्षे ऽपि दोषाः प्रसक्तव्याः। यस्यापि च कर्म्मविनाशादेव फलं भविष्यतीत्यभिप्रायस्तस्यापि शुभाशुभैकानेककर्म्मतत्प्रयोगविनाशानां प्रागभावप्रध्वंसाभावानां वा ऽवस्तुत्वेनाविशेषात्फल-

(१) सान्निध्याभावे इति २ पु० पाठः।
(२) प्रधानानीत्यधिकं २ पु० पाठः।

भेदवैचित्र्यानुपपत्तिः । तथा हि ॥

एको रोगी हतो यस्य यस्य वा ऽपहृता रुजः ।
अरोगित्वे तयोर्भेदो न कश्चिदपि दृश्यते ॥

यदि तु प्रतिकर्म्म विनाशानां वैचित्र्यमिष्यते तथा सति वस्तुत्वापत्तेः वस्त्वन्तराभावाच्चापूर्वं वस्त्वेव विनाशशब्देनाभिधीयेत ॥

न च कर्म्मविनाशेभ्यः स्वर्गादि श्रूयते फलम् ।
विपर्ययाच्च नैतेभ्यो जातं यागस्य तद्भवेत ॥

यजेत स्वर्गकाम इति हि श्रूयते न यागाभावं प्रतिपद्येतेति तत्र भावांशसाध्यसाधनसम्बन्धनिष्ठे वाक्ये यस्तत्राभावांशसाध्यसाधनसम्बन्धं कल्पयति तेन वेदस्तावदप्रमाणीकृतः । कुतः । कर्म्मविनाशप्रभवं हि सदेतन्न कथं चित्कर्म्मसम्बन्धीति शक्यं वदितुम् । अत्यन्तविपरीतत्वात् । नह्यग्न्यातपप्रभवो दाहः शैत्यसम्बन्धीत्युच्यते । अथ वा यथैव यागाच्छ्रुतं तदभावात्कल्प्यते तथैव स्वर्गे श्रुते तदभावः फलमित्यपि कल्प्येत(१) । अपूर्वपक्षो ऽपि तुल्यमिति चेत् न । तस्य कर्म्मफलशक्त्यात्मकत्वेनात्यन्ताभेदात् । उक्तं ह्येतत्पुरस्तात् । अपूर्वेण क्रियमाणं यागेनैव क्रियते अपूर्वे वा कृते फलमेव कृतं भवतीति । न च लोके ऽपि कश्चिदभावः कारणत्वेन दृष्टः । यदि तु क्व चिदुदाह्रियेत शक्यं तत्र भावान्तरं दर्शयितुं न त्वत्रापूर्वादृते तादृक्किं चिदस्ति । यत्त्वपूर्वस्यापि नैव कारणत्वं दृष्टमिति तदयुक्तम् । सर्वत्र शक्तिसामान्योपलम्भात्तद्विशेषमात्रत्वाच्चापूर्वस्य । यत्तु शास्त्रेण कालान्तरफलं नाश्रितं प्रयोगोत्तरकालकल्पना च शास्त्रान्तर्भवति

---

(१) कल्प्यताम् २ पु० पाठः ।

तस्मादानन्तर्य्यमेव चोदितमिति । तत्र यथाऽनन्तगणिकानेककर्म्मानन्तर्य्यं न सम्भवतीत्युक्तं प्राक् । स्वर्गनरकौ च निरतिशयसुखदुःखात्मकत्वाद्देशान्तरजन्मान्तरानुभवनीयौ न कर्म्मानन्तरं सम्भवत इति षष्ठाद्ये वक्ष्यामः ॥

ऐहिकं चापि पुत्रादि क्रमजन्मस्वभावकम् ।
न कर्म्मानन्तरं कश्चित्फलं लब्धुं व्यवस्यति ॥
न च ग्रामादिसंप्राप्तिः केवला फलमिष्यते ।
उपयोगश्चिरेणैषां न निमित्ताद्विना भवेत् ॥

चिरकालोपभोगफलात्मकत्वाद्ग्रामादीनां क्रियानन्तरं तादात्म्यासम्भवे सति यत्रैवान्तराले निमित्तं क्षीणं तत्रैवापहारः प्रसज्यतेऽवश्यं समस्तोपभोगं यावदवस्थितेन केन चिद्भवितव्यम् । ततश्च प्रागेव प्रयोगादित्यमवधारणात्कर्तृवैगुण्याशङ्कया ऽर्थापत्तेरनैकान्तिकत्वमित्ययुक्तमेतत् । यत्तु प्रतिषेधेषु न शास्त्रगम्यमपूर्वमित्युच्यते(१) ॥

विधेयेभ्यो यथा ऽपूर्वं विधिशास्त्रेषु गम्यते ।
तथैव प्रतिषेधेभ्यः प्रतिषेधैस्तदुच्यते ॥

यथा हि लौकिकानामेव द्रव्यादीनां फलविश्लिष्टत्तरकालं वैदिकत्वाद्वेदगम्यापूर्वसिद्धिः, एवं ब्रह्महत्यादीनामनवगतनरकफलानां प्रतिषेधोत्तरकालभाविना वैदिकत्वेनैव नरकप्राप्तिसमर्थापूर्वकल्पनोपपत्तिः । सत्यपि चास्य चलनादिक्रियारहितत्वे कर्तृसम्बन्धमात्रेण तद्देशान्तरप्रापणादिक्रियासम्बन्धाभ्युपगमान्निष्क्रियतानुपलम्भः ॥

---

(१) इत्यत्रोच्यतइति २ पु० पाठः ।

कर्त्तैव(१) चाश्रयस्तस्य क्रिया ऽप्यत्रैव च स्थिता ।
आत्मवादे स्थितं ह्येतत्कर्तृत्वं सर्वकर्मसु ॥

द्रव्यदानप्रक्षेपादीनां हि सर्वेषां सङ्कल्पादिद्वारेणात्मैव कर्त्तेत्यवधारितम् । अतश्च ते प्रलीयमानास्तत्र स्वर्गाद्युपभोगशक्तिमाधाय प्रलीयन्त इत्यविरोधः । कथं विनष्टस्य कर्मणः शक्तिस्तिष्ठतीति चेत् । अत्राभिधीयते ॥

यदि स्वसमवेतैव शक्तिरिष्येत कर्म्मणाम् ।
तद्विनाशे ततो न स्यात्कर्तृस्था तु न नश्यति ॥

कथमन्यशक्तिरन्यत्र समवैतीति चेत् न । क्रियात्मनोरत्यन्तभेदाभावात् । अपि च ॥

शक्तिः कार्य्यानुमेयत्वाद् यद्गतैवोपयुज्यते ।
तद्गतैवाभ्युपेतव्या स्वाश्रया ऽन्याश्रया ऽपि वा ॥

यदा कर्म्मविनाशात्तद्गता शक्तिरपि निष्प्रयोजना भवति अवश्यं चासौ कल्पयितव्या, तदा ऽस्याः स्वरूपवदेवाश्रयविशेषोपि कार्य्यवशेन एव प्रमातव्यः । तथाङ्गापूर्वाणामप्यात्माश्रितानामेवैकार्थसमवायेन प्रधानैः सम्बद्धानामपि उपकुर्वतामाश्रयशेषत्वाभावादारादुपकारकत्वप्रसिद्धिः । यत्तु पुरुषार्थत्वं प्रसज्यत इति, नैष दोषः ॥

तादर्थ्येन हि शेषत्वं नाश्रयाश्रयिभावतः ।
राजार्थौपयिकं नित्यमुष्ट्रो वहति कुङ्कुमम् ॥

न चामूर्त्तानामाश्रयाश्रयिभावेन न भवितव्यम् । आत्मसुखादिवत्तदुपपत्तेः । यत्तु व्रीह्यादिसमवायि प्रोक्षणादिनिमित्तं तण्डुलादिद्रव्यावस्थासंवरणपरंपरया द्रव्यवदानं यावद्गतं तत्रापि

(१) आत्मैवेति २ पु० पाठः ।

प्रधानस्यापि केन चिदंशेन समवायात्तदीयापूर्वनिष्पत्तावेव व्यापृत्य निवर्त्तते। तेनैव चैषां नारादुपकारकवद् अशेषप्रधानार्थत्वमभ्युपगम्यते। यथैव च एकार्थसमवायाद् अङ्गप्रधानापूर्वाणां सम्बन्धः, एवमङ्गापूर्वाणामन्योन्यं प्रधानापूर्वाणां च वक्तव्यः। ततश्च युगपत्कार्य्यारम्भसिद्धिः। कथं पुनः क्रमोत्पत्तीनां प्रधानापूर्वाणां क्रमवर्त्तिभिरेवाङ्गापूर्वैः प्रागूर्ध्वं चोत्पद्यमानैर्युगपदुपकर्त्तुं शक्यम्। के चित्तावदाहुः। अङ्गमध्यवर्त्तिषु प्रधानेषु पूर्वाङ्गापूर्वैर्निष्पन्नैरागामिभिश्च प्रक्रमवशात्प्रचलितावस्थैरेकैकं प्रधानं स्वापूर्वं साधयति। आनिष्पत्तेर्वर्हिर्वच्च साधारण्यान्नैकप्रधानापूर्वनिष्पत्तौ तान्यपवृज्यन्ते। कथं पुनरनागतानामुपकारकत्वं भवति। एकान्तावधारणाद् भोजनप्रत्यासत्तौ स्थालीपरिमार्ज्जननिष्पत्तिवदिति द्रष्टव्यम्। ननु च यद्यनागतावस्थेष्वेतेष प्रधानापूर्वाणि निष्पद्यन्ते ततो नैवोत्तराङ्गानि कर्त्तव्यानि। कथं न कर्त्तव्यानि, यदा तत्कारिष्यमाणतासम्भावनया तानि निष्पन्नान्यपि तदकरणान्नापवृज्यन्ते। अन्ये पुनराहुः। एकैकमङ्गमितरेतरनिरपेक्षमात्मीयमात्मीयं तावदपूर्वं करोति, तथा प्रधानमप्याग्नेयादि यथाश्रुतसमस्ताङ्गापूर्वलाभात्तन्निरपेक्षं तदानुत्पन्नप्रधानान्तरनिरपेक्षं च प्रथमकृतसामवायिकाङ्गापूर्वमात्रानुगृहीतं स्वापूर्वमेव तावत्साधयति। एवं यदा दर्शापूर्वाणि तदङ्गापूर्वाण्यपि समस्तानि निष्पन्नानि तदा तदीयब्राह्मणतर्पणानन्तरमपर्य्यायविधानाद्युगपत्प्रयोगवचनीयसंस्कारकल्पितमङ्गानि प्रधानानि च प्रतितन्त्रभूतं समस्तान्यङ्गापूर्वाणि अपूर्वात्मकमेकं युगपन्निरवयवं प्रधानोपकारं कृत्वा निवर्त्तन्ते। ततश्च तदंशेन प्रधानापूर्वाण्यप्येकफलोत्पत्तिशक्तिभूतं संहत्य

सर्वाण्येकमपूर्वान्तरं जनयित्वा ऽपवृज्यन्ते । तस्त्वाफललाभात् अजरं तिष्ठति । यदि पुनः प्रतिबन्धकरहितं तदानीं फलमेवोत्पद्यते ततो ऽपि किं कल्पनीयमेवापूर्वम् । बाढं, न हि तस्मादृते समस्तफलोपभोगसिद्धिरित्युक्तम् । अथ कस्मात्प्रात्यात्मिकान्येवाङ्गापूर्वाणि प्रधानोपकारकत्वं भिन्नानि च प्रधानापूर्वाणि फलबीजत्वं न प्रतिपद्यन्ते । सत्यं, न हि कश्चिदत्र दोषः । किं तु ॥

अर्थापत्तेरिहापूर्वं पूर्वमेकं प्रतीयते ।
ततस्तत्सिद्धये भूयः स्यादपूर्वान्तरप्रमा ॥

प्रधानानां फलं प्रत्यङ्गानां च प्रधानानि प्रति युगपदुपादानादपेक्षावशेनैकापूर्वकल्पनया च तत्सम्बन्धोपपत्तेर्नेतरकल्पनाप्रमाणमस्तीत्येकमेव तावदवधार्यते । ततः पुनः क्रमवर्त्तिभिः(१) कर्म्मभिस्तदशक्यं युगपत्कर्त्तुमिति तत्सिध्द्यर्थं प्रात्यात्मिकापूर्वान्तरकल्पना भवति । सर्वत्र च ॥

प्रमाणवन्त्यदृष्टानि कल्पन्ते सुबहून्यपि ।
अदृष्टशतभागो ऽपि न कल्प्यो ह्यप्रमाणकः ॥

केचित्त्वत्र चोदयन्ति । यदि पौर्णमास्यां कृतान्यङ्गापूर्वाणि अमावास्यां यावत्तिष्ठेयुस्ततस्तैरेव कृतार्थत्वान्नैवाङ्गानि पुनः प्रसज्येरन् । एवं च सति त्रयोदशामावास्यायामित्याहुतिसंख्या बाध्येत । अन्ये तु परिहरन्ति । साङ्गयोः पौर्णमास्यमावास्ययोः कालान्तरसम्बन्धात्सवैरङ्गैर्द्विः प्रयुक्तैः समुदायद्वयस्योपकर्त्तव्यमित्यवधारणात्पुनः प्रयोगः सेत्स्यतीति । अथ वा एवं वक्तव्यं साङ्गा पौर्णमास्यमावास्या ऽसहिता स्वार्थं करोतीति करणविभक्तिश्रुतेरवगमात्पूर्वोक्तेनैव न्यायेन प्रधानापूर्वत्रयं स्वाङ्गापू-

(१) बहुभिरित्यधिकं २ पु० पाठः ।

र्वानुगृहीतमेकमपूर्वं कृत्वा ऽपवृज्यते । तत्पुनरेवं निष्पन्नेनैवा-
मावास्यापूर्वेण सहापरमपूर्वमारभते । ततश्च निवृत्तेष्वङ्गापूर्वे-
ष्वमावास्यायां क्रियमाणान्यङ्गानि न निराकरिष्यन्त इत्यदोषः ।
एतयैव च दिशोत्पत्तिविरोधः परिहर्त्तव्यः । आह च ॥

आवृत्तिभिर्यथा ऽध्याये संस्कारो भवति क्रमात् ।
वाक्यावयवरूपेण तथा ऽपूर्वं भविष्यति ॥

न चामूर्त्तस्यावश्यमवयवैर्न्न भवितव्यम् । अनयैव ह्यर्थापत्त्या
शक्यते वक्तुं सूक्ष्मावयवरूपेण तत्प्रतीयत इति । यदा ऽप्यत्य-
न्तासतामनुत्पत्तेः प्रागवधृतास्तित्वमभिव्यज्यते तदापि प्रतिपु-
रुषं कर्म्मभिः स्वीकरणात्फलाभिमुखकरणं शब्दादिविलक्षणा
ऽस्याभिव्यक्तिर्भविष्यति । तथा हि ॥

नैकरूपैव भावानामभिव्यक्तिः प्रतीयते ।
आत्मस्योन्मीलनं तेन व्यक्तिरस्य भविष्यति ॥
सर्वावाप्तिसमर्थो वा प्रकृत्यात्मा सदेष्यते ।
कश्चित्तु प्रतिबन्धोऽस्य कर्म्मभिः सो ऽपनीयते ॥

तस्मादस्त्यपूर्वं सूत्रस्यापि च न प्रकृतोपयिकमन्यमर्थं प-
श्यामः । तेनारम्भचोदनैवापूर्वस्यापि चोदनेत्ययमेवार्थः । यदि
पुनः फलवचनसामर्थ्यात्तदेव तदपि नष्टमित्यपूर्वकल्पनानि-
ष्प्रमाणकत्वं मन्वानो वरमेतदित्याह । न हि कर्म्मणां रूपमु-
पलभामह इत्ययुक्तं रूपशब्दाविभागाच्चेत्यत्र प्रत्यक्षोपलब्ध्यभि-
धानात् । यागप्रस्तावे च सति तस्याचलनात्मकत्वाद्यदाश्रयं
देशान्तरं प्रापयतीत्यसम्बद्धम् । अत्रोच्यते ॥

कालान्तरक्षमं रूपं कर्म्मणो नोपलभ्यते ।
भङ्गिरूपोपलब्धिस्तु न फलायोपयुज्यते ॥

यद्यपि कर्म्मस्वरूपमुपलभ्यते तथापि कालान्तरावस्थानाभा-
वान्न तदुपयुज्यतइति नोपलभामहइत्युच्यते ॥

यागेऽपि प्रस्तुते चात्र चलनं यददाहृतम् ।
तत्प्रक्षेपांशरूपेण यागेप्यस्तीति निश्चयात् ॥

न हि सङ्कल्पमात्रेण फलनिष्पत्तिः समस्तात्मस्तेनिकर्त्त-
व्यताकाच्च कर्म्मणः फलश्रवणात्तच्च द्रव्यवदानप्रक्षेपादीनां ग्र-
हणासादनादीनां च संयोगविभागफलत्वात्स्थायित्वे तदाश्रये-
णावश्यं भवितव्यम् । न चासावस्ति । न चाभिव्यक्तं रूपमुपल-
भ्यते । सङ्कल्पादीनामपि सङ्कल्पान्तरादितिरोधानान्नात्र स्वरू-
पावस्थानोपपत्तिः । अवस्थाने चात्मसमवेतस्य वा स्यात्प्रदेयद्र-
व्यसमवेतस्य वा । न तावदात्मनि चलनं समवैति सर्वव्यापिनः
संयुज्यमानवियुज्यमानदेशासम्भवे चलितुमसामर्थ्यात् । कथं
सर्वव्यापित्वमस्येति चेत्सर्वत्रोपलभ्यमानकार्यत्वात् । अहंप्रत्य-
येन हि चैतन्यस्वभावस्यात्मनोऽस्तित्वमात्रमवगम्यते न तु दे-
शतः कालतो वा विशेष्यते । ततश्च ।

अनवच्छिन्नसद्भावं वस्तु यद्देशकालतः ।
तन्नित्यं विभु चेच्छन्तीत्यात्मनो विभुतेष्यते ॥

सर्वत्र कार्योपलम्भ इत्यहंप्रत्ययमेवाविशेषितं वदति । सुख-
दुःखाद्युपलब्धिर्वा न हि क्वचिद्गतैस्ते नोपलभ्यन्ते । न चैते
शरीरधर्मा इति स्थितमात्मवादे । तत्र यद्यसर्वगत आत्मा भ-
वेत् ततो यदैव तद्गता देशेन शरीरं युज्यते तदैव सुखाद्युपल-
ब्धिः स्यान्नान्यत्र ॥ शरीरमात्रान्तर्गतात्मवादी त्वाह । ननु त-
देव देशान्तरादागमनस्य लिङ्गम् । अतश्च विरुद्धहेतुत्वमस्ये-
ति । कुतः ॥

युगपद्यदि सर्वत्र कार्य्यमात्मगतं भवेत् ।
ततः सर्वगतत्वं स्यात्पर्य्याये तु शरीरवत् ॥

यदि हि शरीराद्बहिरपि किं चिदात्मकार्य्यमुपलभेमहि शरीरान्तरे सुखदुःखादीन्वा ततः सर्वगतत्वमध्यवस्येम । यतस्तु स्वशरीरान्तर्वर्त्त्येव कार्यं यत्र यत्र च तद्गतिस्तत्र तत्र पर्य्यायेणोपलभ्यते तच्छरीरकार्य्यवदेव तत्सन्निहितगतस्योपपत्स्यते । अन्यथा हि शरीरमपि सर्वगतं स्या,त्तस्माच्छरीरवदेवास्य तत्र तत्र गमनापत्तेः सुतरां सक्रियत्वप्रसङ्गः । सन्देहो वास्तु साधारणानैकान्तिकत्वात् । आह च ॥

आत्मा शरीरसंमिश्रस्तेनैव सह सङ्गमात् ।
तत्र तत्र सुखादीनि कार्य्याणि प्रतिपद्यते ॥

तत्रोत्तरं न ह्यसत्यागमने किं चिद्विरुद्धमिति । येषां तु न तु तदेवेति पाठः तेषां सिद्धान्तवाद्येव पर्य्यायेण सर्वत्रात्मकार्य्योपलम्भनमागमनलिङ्गत्वेप्यविशिष्टमाशङ्क्योत्तरं वदतीति ग्रन्थयोजना । कथं पुनरिदमुत्तरं न ह्यसत्यागमनइति । तथा हि ॥

नैवाविरोधमात्रेण स्वपक्षः सिध्यति क्व चित् ।
परस्याप्यविरोधित्वमविशिष्टं हि दृश्यते ॥

परेणापि हि शक्यं वदितुं न हि सति गमने किं चिद्विरुद्धमिति । अत्राभिधीयते ॥

उभयत्राविरोधित्वं प्राप्तं न ह्यसतीति यत् ।
पुनर्ब्रवीति तन्नूनं विरोधागमनं मतम् ॥

परिसंख्यारूपेणासत्येवागमने न किं चिद्विरुद्धं सति तु बहु विरुद्धमित्याह । तदुपवर्ण्यते ॥

स्वतस्तावदमूर्त्तत्वान्न भूतैर्म्मिश्रता ऽऽत्मनः ।

ततश्च तैरसंश्लिष्टो न नेतुं शक्यते क्वचित् ॥

यदा मूर्त्तानामपि सूक्ष्माणां चन्द्रादित्यप्रकाशादीनां न मृत्पिण्डादिभिः सह मिश्रत्वमुपपद्यते, तन्नयनेन वा नयनं, तदात्मनः स्वभावेनात्यन्तामूर्त्तस्य ज्ञानसंतानस्य वा भूतैर्मिश्रत्वं भवेदिति कुत एतत्। योऽपि स्याद्वादी बद्धात्मनां शरीरादत्यन्तव्यतिरेकाभावादस्येव मूर्त्तत्वं जीवस्येति ब्रूयात्तस्यापि इतरेतराश्रयप्रसक्तिः मिश्रत्वान्मूर्त्तत्वं मूर्त्तत्वाच्च मिश्रभाव इति। तस्मात् मुक्तावस्थानिदर्शनेन स्वलक्षणतोऽस्यामूर्त्तत्वात् न शरीरसंपर्कनिमित्तमूर्त्तत्वसिद्धिः। ततश्च शरीरादन्यः तेनासंपृक्तश्चास्पर्शत्वाच्च अनाकृष्यमाणः शरीरं गच्छति तद्गताकाशप्रदेशवदात्मा पश्चान्निःसृतस्तत्रैव तिष्ठेत्,न हि तस्य वायुना पृथिव्यादिभिर्वा प्रेरणं येन स्वतन्त्रपरप्रेरितो वा गच्छेत्। ज्वालाप्रभृतीनां तु स्पर्शवत्त्वाद्वायुना प्रेर्यमाणानामुल्मुकादिना वा नीयमानानां युक्तं गमनम्। तेन केवलं शरीरं गच्छत् अचेतनं स्यात्। सर्वगतत्वे तु यत्र यत्र गम्यते तत्र तत्रात्मानुस्यूतिरस्ति इति युक्ता चैतन्यानुवृत्तिः। यथा पूर्वाकाशप्रदेशत्यागे सर्वगतत्वादेव परेणावकाशदानसिद्धिः। किं च ॥

असर्वगतपक्षे स्याज्जीवो देहादनिर्गतः।
अणुः शरीरमात्रो वा सर्वथाऽपि न युज्यते ॥
ज्ञानसंततिपक्षस्तावन्निराकृतः।
तत्र नित्यः सन्नात्मा शरीराभ्यन्तरवर्त्ती ॥
यद्यणुः कल्प्यते तत्र देहं न व्याप्नुयादसौ।
ततश्च सर्वगात्रस्थसुखदुःखाद्यसंभवः ॥

यदा ह्यणुमात्र आत्मा भवति तदा यावानेव प्रदेशविशेष-

तेनाधिष्ठितः तन्मात्रगतानामेव सुखदुःखादीनामुपलब्धिः प्राप्नोति, ततश्चैकस्मिन् क्षणे शिरःपादवेदनानुभवो न स्यात्। अथ लघुसंचारित्वात्तत्र तत्रोपलभ्यत इत्युच्यते न तत्र प्रमाणमस्ति । न च कालभेदो लक्ष्यते, अनवस्थितस्योपलब्धिकालासंभवाच्चैकत्राप्युपलभ्येत तस्मादकल्पनेयम् । शरीरावयवानां चापरिशोषणं पुष्ट्यादि चात्माधिष्ठितानां भवति मृतावस्थायां विपर्ययदर्शनात्,तत्र स एवावयवस्तेनोत्सृष्टः स एव मृतवच्छुष्ये,दथ शरीरपरिमित आर्हतपक्षेणाभ्युपगम्यते तत्रापि बहु अदृष्टं कल्पनीयम् ॥

सद्भावोऽवयवानां च तथा तेषामनन्तता ।
संश्लेषश्च विनान्येन तद्भावेऽपि च नित्यता ॥
अतिसंकोचविस्तारौ पुत्तिकाहस्तिदेहयोः ।
अन्तराभवसंचारस्तद्भावाज्ञानकारणे ॥

सर्वे ह्यवयवसद्भावादयः प्रत्यक्षाद्यविषयाः सन्त उत्प्रेक्षामात्रेण कल्प्यन्त(१)इति शब्दवद्भेदेऽपि प्रत्याख्येयाः । शरीरमात्रावधिकानां चैषामुत्प्रेक्षितुमप्यानन्त्यमशक्यं, न चैषां द्रवत्वादिना विना कश्चित्संश्लेषहेतुर्विद्यते । न चासंश्लिष्टानामेकजीवारम्भसामर्थ्यम्। सर्वसंयोगानां च वियोगाविनाभूतत्वाद् घटादितुल्यः कदाचिज्जीवस्य प्रध्वंसो भवेत् । गात्रच्छेदे च तद्वर्त्तिनां जीवावयवानां ततो निःसृत्यावशिष्टे शरीरभागे पुनः प्रवेश इत्येतदप्रमाणकम्। यत्तु वियोजितमात्राणां हस्तादीनां स्फुरणं दृष्टं, तदभिघातप्रेरितवायुनिमित्तमिति न तावता जीवावयवानुगतिर्विज्ञायते। तथा सति संकोचविकासावेतेषां भवत इत्यत्र

(१) कल्प्याः इति २ पु० पाठः ।

न किं चित्प्रमाणं पश्यामः। दीपप्रभाप्रभृतीनां तु कथं चित्प्रत्य-
क्षत्वादुपपद्येते। न च प्रदीपप्रभायाः संकोचो भवति शरावा-
दिच्छादने शेषप्रभाविनाशादनावृता हि ज्वाला ऽऽत्मसमीपे
प्रभामण्डलमारब्धुं समर्था नाच्छादिता। एतेनैव च विकासो
ऽपि प्रत्युक्तः अन्यएव ह्यवयवास्तत्र प्रचीयमाना विस्तारं जन-
यन्ति न तावतामेव विकासः। स्पर्शवतां च परस्परदेशप्रति-
बन्धाद्देशान्तरव्याप्त्या विकासो घटते, जीवावयवानां त्वमूर्त-
त्वात्सर्वेषां समानदेशत्वाविघातान्नित्यमणुमात्रत्वप्रसङ्गः स्यात्।
कथं चैकस्य जीवस्य पुत्तिकाहस्तिशरीरपरिमितौ संकोचवि-
कासौ युज्येते। मरणकाले चान्तराभवशरीरसंचरणं तच्चास्ति-
केन चित्प्रतिबन्धेन सदपि न गृह्यते, तेन च शरीरान्तरे जीव-
निक्षेप इत्यादि निष्प्रमाणकम्। तस्मात्सर्वगतत्वम्। यत्तु श्यामा-
कतण्डुलमात्रादिप्रदर्शनमुपनिषत्सु तद्वाक्यान्तरप्रदर्शितविभु-
त्वस्यैव सतः सूक्ष्मग्रहणागोचरत्वात्। यदपि द्वैपायनेनोक्तम्।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यम इति तदपि काव्यशोभार्थं
विप्रकृष्टमृत्यव्यवहारप्रशंसनार्थं च पतिव्रताप्रशंसापरे वाक्ये प्र-
जापतिवपोत्खेदनादिवद् द्रष्टव्यम्। तथा हि तेनैव गीतादिषु
अनेकप्रकारं सर्वगतत्वं वर्णितम्। ननु च सर्वगतत्वे व्योमवत्स-
र्वशरीरेष्वेक एवात्मा प्राप्नोति। नैष दोषः। शरीरभूयस्त्वात्प्रति-
शरीरं च सुखदुःखोपलब्धिव्यवस्थादर्शनात्। इतरथा ह्येकश-
रीरेणैव चरितार्थत्वादनेकशरीरवैयर्थ्यं स्यात्। जन्मान्तरशरी-
रवद्दोष इति चेत् न। तत्र कर्मान्तरवशेनोपभोगान्तरार्थं पु-
नः पुनरारम्भात्सर्वशरीरगतसुखाद्युपलब्धिश्च प्रतिशरीरं स्यात्।
अन्यदीयैश्चेन्द्रियैः शरीरान्तरगतस्यात्मीयत्वादुपलब्धेरभाव-

धिरादीनामभावः स्यात्। वर्णविशेषव्यवस्थया च कर्म्मचोदनाभेदो न स्यात्। एकस्यैवात्मनस्तेन तेन शरीरेण संबध्यमानस्य सर्ववर्णोपपत्तेः(१)। आत्मनानात्वे त्वदोषः। सर्वेषामपि च सर्वगतत्वे मूर्तिरचितत्वात्समानदेशवृत्त्यविरोधः। तदपेक्षयैव च चैतन्यात्मकत्वाद्यविभागाच्चोपनिषत्स्वैकात्म्यव्यवहारः। कथं पुनर्नानात्वे ऽपि सर्वेषां सर्वशरीरैः संबन्धादन्यदीयसुखदुःखाद्यनुपलब्धिः। केचित्तावदाहुः॥

यथा शरीरमात्रे ऽपि मातृगर्भात्मवर्त्तिनाम्।
सुखादीनां व्यवस्थैवं सर्वत्रैषा भविष्यति॥

शरीरपरिणामवादिनो ऽपि किन्नायं तुल्यो दोषस्तस्यापि गर्भात्मसमानदेशत्वान्मातृक्षेत्रज्ञस्तद्गतानि सुखादीन्युपलभेत। तत्र यस्तस्य परिहारः स सर्वात्मनां सर्वशरीरेषु भविष्यतीत्यदोषः। (२)यद्यत्रोपपत्तिरुच्येत न तु परपक्षसाम्यापत्तिरेवोपपत्ति,स्तस्य च तव चोभयोरप्यन्येन पर्य्यनुयोगात्। अपि च तस्य त्वगिन्द्रियपरिमाणत्वात्। अन्तः शरीराकाशे बाह्यवदेवात्मनो ऽनभ्युपगमान्नैव गर्भशरीरेण मातृक्षेत्रज्ञस्य प्राप्तिरस्ति येन तुल्यदोषता स्यात्। तस्मादेवं परिहर्त्तव्यम॥

देशप्राप्त्या यदीष्येत सुखादेरुपभोग्यता।
ततो दोषः प्रसज्येत योग्यभोगे त्वदुष्टता॥

यदि ह्यात्मनः सुखादीनां च समानदेशलक्षण एव संबन्ध उपभोगकारणमिष्येत ततोयं दोषः स्यात्। इह तु चक्षुरादीनामिव क्षेत्रज्ञयोग्यतालक्षणः संबध,स्तत्र यथैव त्वगिन्द्रियेण स्पर्श-

(१) वर्णत्वोपपत्तेरिति २ पु० पाठः।

(२) भविष्यतीत्यविशेषः। स्याद्दोषः इति २ पु० पाठः।

समानदेशानामपि रूपादीनामग्रहणम्, एवमन्येनात्मनान्यदीयधर्म्माधर्म्मोपात्तसुखदुःखाद्यग्रहणम्। तस्मादात्मवादोक्तस्वस्वामिभावव्यवस्थानाददोषः। एवं सर्वगतत्वात्सिद्धमात्मनो नित्यत्वम्। अथ ह्यवदानसमवेतमासीत्तत आह(१)। तद्विनष्टमिति। न च तस्याविनाशः तद्विपरीतद्रव्यान्तरोपलम्भात्। न चास्य ग्रहणप्रतिबन्धहेतुः कश्चिदस्ति येन न गृह्येत। अथार्थापत्त्या ग्रहणप्रतिबन्धादि कल्प्येत तथाऽपि सत्यपूर्वाद्बहुतरमदृष्टं दृष्टविपरीतं च कल्पयितव्यं तावदविनष्टमास्ते। तथा न दृश्यते तथा प्रतिबन्धहेतुः। तस्याप्यदर्शननिमित्तं चेत्येवं तस्य तस्यान्यदित्यव्यवस्था(२)। तथा क्षणिकस्य कर्म्मणः स्थानमनुपलब्धिकारणं च कल्प्यमित्यतिगौरवम्। एवमनाश्रितकर्म्मावस्थानकल्पनायाम्। अथात्माश्रितमेव संयोगविभागावकुर्वदासीत् तत्रापि दृष्टविपर्ययादृष्टकल्पने स्याताम्। तस्माद्वरमपूर्वकल्पनमेवेति सिद्धं मूलाधिकरणप्रयोजनम्। द्रव्यादीनां फलसंबन्धे तेषामदृष्टार्थत्वात्कर्म्मणामिव प्रतिनिध्यभावः। कर्म्मफलसंबन्धे तु द्रव्यादेः कर्म्मोत्पत्त्याऽऽदृष्टार्थत्वात्समानकार्यत्वज्ञानादस्ति प्रतिनिधिः। कथं तर्हि पूर्वपक्षवादिनः प्रक्रान्तापरिसमाप्तिदोषाभावः। समापनीयमेव कर्म्म येन केन चिद् द्रव्येण। सदृशोपादने तु न यतितव्यं सदृशादपि फलाप्राप्तेः, कर्म्मणश्चाविहितसाधनविशेषस्यानपेक्षितसदृशत्वाद्येन केन चित्सिद्धेः। न च तत्पूर्वे द्रव्यस्य प्रतिनिधिरित्युच्यते अन्यार्थत्वात् असादृश्याच्च। पूर्वद्रव्यं हि फलाद्यप्रवृत्तमासीदिदानीमानीयमानं तु प्रत्यवायपरिहाराय

(१) अत आहेति १ पु० पाठः।
(२) अनवस्थेति २ पु० पाठः।

नैमित्तिकफलाय वा प्रवृत्तस्य कर्मणः सिद्ध्यर्थमिति । नामधेयसिद्धिरपि प्रयोजनमेव(१)। सा तु पूर्वोक्तत्वान्न प्रदर्शिता ॥

## तानि द्वैधं गुणप्रधानभूतानि ॥ ६ ॥

एवमाख्यातभेदानुसारेणापूर्वभेदानुगमे सर्वत्र प्राप्ते तदपवादार्थं गुणप्रधानविवेकारम्भः । तत्र तावत् ॥

आख्यातत्वाविशेषेण भूतिर्भव्यार्थजन्मनः ।
सिद्धे च साध्यताशक्तेः सर्वाख्यातप्रधानता ॥

यावद्धि प्रयोजनकल्पनं तत्सर्वं धात्वर्थान्नातव्यं प्रयोजनवच्च प्रधानमपूर्वसाधनं च । तेन यज्यादिवदेवावहन्त्यादीनामपि व्रीह्यादिभिर्निष्पाद्यो ऽर्थः । अतश्च तेष्वपूर्वसाधनमिति । अत्रोच्यते ॥

नामाख्यातार्थसंबन्धे यदक्लृप्तप्रयोजनम् ।
तस्यादृष्टार्थता युक्ता नेतरस्याप्रमाणिका ॥

सर्वत्रैव द्रव्यकर्मसंबन्धे कर्मणां द्रव्येण विना ऽनुत्पत्तेः प्रथमं तावद्द्रव्यं कर्मोत्पादयत् दृष्टोपकारित्वात्तदर्थमाभासते। तत्र क्वचिद्भूयः कर्म परावृत्त्य द्रव्यस्योपकरोति क्व चिदात्मलाभमात्रमनुभवति । तद्यदा ऽऽत्मलाभमात्रं तस्य दृश्यते तदा साकाङ्क्षत्वाददृष्टं कल्पयितुं शक्यते। यदा तु कार्यान्तरौपयिकेन दृष्टेनैव तण्डुलनिर्वृत्त्यादिना द्रव्योपकारेण(२) निराकाङ्क्षीभवति तदानीमदृष्टकल्पनावसराभावात् अन्यथैव विधानार्थवत्त्वोपपत्तेर्नादृष्टसाधनत्वं प्रतीयते ॥

---

(१) प्रयोजनम् इति २ पु० पाठः ।
(२) द्रव्योपकारद्वारेणेति २ पु० ।

यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधान-भूतानि द्रव्यस्य गुणभूतत्वात् ॥ ७॥

यैः कर्म्मभिर्द्रव्यं स्वरूपतो धर्म्मतो वा न कर्त्तुमिष्यते यथा प्रयाजादिभिः तानि स्वसाधनानि प्रति प्रधानभूतत्वाद् अदृष्टार्थानि भवन्ति ॥

यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात् ॥ ८॥

यैः पुनर्द्रव्यमुत्पाद्यते यथाधानेनाग्नयो ऽवाप्यन्ते क्रियन्ते वा यथा वरणेनर्त्विजः संस्क्रियन्ते यथा ऽवहन्तिना व्रीहयः पेषणेन तण्डुलास्तानि गुणभूतानि प्रयोजनवत्त्वद्रव्यसंस्कृतेरीप्सितत्वात्। यदा दृष्टार्थमदृष्टार्थं चोभयथापि तुल्यवदनुष्ठीयेत तदा किं प्रयोजनं चिन्तायाः। तदुच्यते। प्रैयङ्गवेपि चरावतिदेशप्राप्तो व्रीहिसाधनक एवावहन्तिः कर्त्तव्यः पूर्वपक्षे। कुतः ॥

प्रधाने हि श्रुतं द्रव्यं नाङ्गद्रव्यस्य बाधकम्।
प्रयाजेज्याज्यवत्तेन हन्तौ स्याद् व्रीहिसाधनम् ॥
सिद्धान्ते तु बाध्यन्ते कुतः।
प्रधानौपयिकं द्रव्यं संस्कारैरपि युज्यते।
तेन हन्त्यादिभिः सर्वैः संस्कर्त्तव्याः प्रियङ्गवः ॥

ननु च पूर्वपक्षे ऽपि प्रधानप्रयुक्तव्रीह्याश्रयत्वेन प्रकृतावप्रयोजकत्वात्प्रैयङ्गवे चरौ प्रधानेनागृह्यमाणान् व्रीहीनवघातो न लभते। नैतदेवम्।

तुल्यो हि व्रीहिसम्बन्धः प्राशाद्यागावघातयोः ।
वाजिनेज्यादि तुल्यं च नाप्रयोजकलक्षणम् ॥

व्रीहिभिर्यजेत व्रीहीनवहन्तीति तुल्ये चोदने, तत्रेयं प्रयोजिकेयं नेति नास्ति विशेषहेतुः । न च वाजिनादिवदवहन्तेरनुनिष्पादित्वम् । न च पदकर्मवत्परप्रयुक्तप्रकृतैकहान्यधीननिराकाङ्क्षत्वम् । न चैकदेशद्रव्यत्वमुत्तराद्धीदिवत् । नापि पुरोडाशकपालेनेतिवदर्थाभिधानकर्म्मत्वम् । तस्मादवहन्तिरपि प्रयोजकः तत्रास्मिन्पक्षे नियोगतो यागार्था एव व्रीहयोऽवहन्तव्याः । लौकिकैरपि कर्मसिद्धविशेषा, न्न चात्र प्रकृतग्रहणे प्रमाणं प्रकरणस्याविशेषकत्वात् । न चाधिकारादिशेषः । तुल्येषु नाधिकारः स्यादिति न्यायात् । संस्कारपक्षे तु लौकिकानामानर्थक्येनासंस्कार्यत्वात् अपूर्वसाधनविशेषणत्वेन कथं चित्प्रकृतग्रहणं क्लेशेन भविष्यति । न चारादुपकारकत्वेऽवहन्तेर्यागस्येव लौकिकैस्साध्यमानस्य किं चिदानर्थक्यमिति श्रौतत्वाद् व्रीहिमात्रग्रहणमेव युक्तम् । धर्ममात्रं च तदावहन्तिः सर्वौषधावहन्तिवत्सकृदेव च कर्तव्यः नातण्डुलानिर्वृत्तेः प्रधानव्रीहीणां च दलनादिभिरपि तण्डुलीभावः स्यात् । सान्नाय्योपांशुयाजाङ्गत्वमपि चास्य प्रकरणाविशेषात्तथा भवतीति तद्विकारेष्वपि प्रयोक्तव्य इत्यादीनि प्रयोजनानि ॥

## धर्म्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् ॥ ९ ॥

स्रुवपरिध्यग्निपुरोडाशसंमार्गाणामुत्तरोत्तरप्रधानप्रत्यासत्तिभेदेनोदाहरणपृथक्त्वम् । एतदुक्तं भवति ॥

दूरेणापि प्रधानानां यद् द्रव्यमुपकारकम् ।
तेनापि कर्म्मसंवन्धान्न प्राधान्यं प्रपद्यते ॥

तच्च पूर्वपक्षवादी पूर्वोक्तेनैव यैर्द्रव्यं न चिकीर्ष्यत इत्यनेन प्रधानकर्म्मलक्षणेनाह द्रव्येण निष्पादितं कर्म्म न किं चित्तस्य प्रत्युपकुर्वद् दृश्यते । तस्मात्प्रधानकर्म्म संमार्गप्रोक्षणादीति ॥

# तुल्यश्रुतित्वाद्वेतरैः स धर्म्मः स्यात् ॥ १० ॥

नैव ह्येतद्गुणकर्म्मलक्षणं यद् द्रव्यचिकीर्षा नामोपकारलक्षणशेषत्वप्रतिषेधात्, तादर्थ्यलक्षणं हि श्रुत्यादिप्रमाणकं, तत् न प्रत्यक्षाद्युपकारनिमित्तमिति वक्ष्यामः । किमर्थं तर्हि द्रव्यचिकीर्षोपन्यस्ता । तदुच्यते ॥

अन्यतः सिद्धशेषाणां येषां दृष्टोपकारिता ।
तेषां नापूर्वमस्तीति ह्यन्त्यादीनामुदाहृतिः ॥

यत्र द्रव्यचिकीर्षया गुणभावस्तत्र नापूर्वभेदः प्रतिपत्तव्य इति यावत् । पूर्वपक्षवादी त्वेतदेव गुणकर्म्मलक्षणं मत्वा संमार्गादिषु तदपश्यन्प्रत्यवस्थितवान् । सिद्धान्ताभिप्रायस्तु सर्वत्र श्रुत्यादिभिरवधृते तादर्थ्ये पश्चादुपकारदर्शनं तदभावाददृष्टकल्पनं वा । तत्रेप्सिततमत्ववाचिन्या द्वितीयया द्रव्यप्राधान्यद्वारेण क्रियाशेषत्वे प्रतिपादिते ह्यन्त्यादीनां दृष्टार्थत्वान्नैराकाङ्क्ष्यं जातं न तु संमार्गादीनामित्यदृष्टार्थता, न च तावता पूर्वावगतशेषत्वहानिः ।

# द्रव्योपदेश इति चेत् ॥ ११ ॥

परत्वाच्च ॥

अन्वयव्यतिरेकाभ्यामुपकारानुसारिता ।
शेषत्वस्य, द्वितीया तु प्राधान्यव्यभिचारिणी ॥

तन्नाम प्रमाणं युक्तं यदैकान्तिकम् । अनैकान्तिकी च प्राधान्ये द्वितीया, गुणभूतद्रव्योपदेशे ऽपि दृष्टत्वात्सक्तून् जुहोतीति । तथा प्रयाजशेषेण हवींष्यभिघारयतीत्यन्तरेणापि द्वितीयामाज्यप्राधान्यं दृष्टम् । अतो व्रीहीनवहन्तीत्यत्रोभयसंभवे ऽप्युपकारदर्शनकृतमेव द्रव्यप्राधान्यम् । न द्वितीयाकृतम् । न च तत्संमार्गप्रोक्षणादिष्वस्तीति (१) इहापि द्वितीयया द्रव्यमेवोपदिश्यतामिति ।

## न तदर्थत्वाल्लोकवत्तस्य च शेषभूतत्वात् ॥ १२ ॥

तिष्ठतु तावत्प्रयोगः । किं कारणम् ॥

आचारत्वात्प्रयोगो हि स्मृत्या सर्वत्र बाध्यते ।
विवक्षानेकधा चात्र स्मरणे त्वेकरूपता ॥

यदि ह्याचारस्यैकरूप्यं भवेन्नैव स्मृतयः प्रयत्नेन धार्येरन् । स एव तु संकीर्णत्वादस्फुटः स्मरणेन प्रतिपाद्यते । स्मर्यते च द्वितीयायाः प्राधान्यमर्थः । 'कर्म्मणि द्वितीया' 'कर्त्तुरीप्सिततमं कर्म्मे'ति । तथा लोकवेदयोः प्रयुज्यते घटं करोति व्रीहीनवहन्तीति । यानि च लोके व्यभिचाराशङ्कास्थानानि तान्युदाहरति । तण्डुलानोदनं पच बल्वजान् शिखण्डकान् कुरु त-

(१) तद्दधातीति. २ पु॰ पाठः ।

ण्डुलानद्य जुहोति । तण्डुलैर्बल्वजैरिति च प्रयोक्तव्ये या द्वितीया प्रयुज्यते तन्नूनं तृतीयासमानार्था सेति गम्यते । तच्चोच्यते ॥

सर्वपाकादिसम्बन्धे ह्याकारास्तण्डुलादयः ।
प्राधान्यांशमुपादाय द्वितीया तत्र वर्त्तते ॥

यदा पदार्थान्तरभूतौदनशिखण्डकसाधनत्वेन तण्डुलबल्वजा विवक्ष्यन्ते तदा तृतीयान्तपदभाजो भवन्ति। यदा तु भोजनयोग्यौदनावस्थापरिणतिरूपेण तण्डुला मार्द्दवोत्पत्त्यर्थं च शिखण्डकाकारेण बल्वजा दृश्यन्ते । तथा वेदवाक्यावगतगुणभावाश्च ते द्रव्यसाधनके ऽग्निहोत्रे सखण्डितास्तिष्ठन्तो रमणीयत्वात्कस्याश्चिद् ब्राह्मण्याः स्वकर्म्मशोभादर्शनार्थं तण्डुला होमसंबधित्वेनाभिप्रेताः । सैवं प्रेष्यति गुणकामा वा यजमान तण्डुलानद्य जुहोति, तदा द्वितीयार्थभाक्तं भवति भवति हि लोके बहुप्रकारा विवक्षेति। गुणभूते ऽप्यर्थे केन चित्कारणेन कश्चित्प्राधान्यांशो विवक्ष्यते तथा प्रधानभूतेषु गुणांशः। कदा चिदुभौ कदा चिन्नोभौ। न च यद्विवक्ष्यते तच्छब्देनाभिधातव्यमित्यस्ति प्रमाणं, विवक्षासंपत्त्यर्थं तु लक्षणाद्युपायान्तराश्रयणं न स्वार्थत्यागः । तस्मात्प्राधान्यमेव द्वितीयार्थः। कथं तु सक्त्वादिषु गुणत्वमिति। तदुच्यते ॥

प्राधान्यमेव तत्रापि द्वितीया वदति स्वतः ।
विरोधात्तेन संबन्धो गुणभावस्तु लक्ष्यते ॥

द्वितीया तावत्कर्म्मत्वं प्रधानरूपमात्मशक्त्या वदति तत्त्विह बलवता कारणान्तरेण विरुध्यमानत्वान्नाश्रीयते । तेन तु कारकविशेषात्मकत्वाद्यत्कारकसामान्यमविनाभूतं लक्ष्यते तद्-

विरुद्धत्वादिवच्यते। नत्वैतावानर्थो विज्ञायते होमस्य कारकं सक्तव इति। न च सामान्यं निर्विशेषं व्यवहारक्षममिति विशेषापेक्षायां करणत्वं भविष्यति। द्रव्याणां कर्म्मसंयोग इति भूतभव्यसमुच्चारणन्यायात्। कथं पुनः सक्तुप्राधान्यविवक्षा विरुध्यते। तत्राह॥

भूतभाव्युपयोगं हि संस्कार्य्यं द्रव्यमिष्यते।

सक्तवो नोपयोक्ष्यन्ते नोपयुक्तास्तु ते क्वचित॥

यस्य हि द्रव्यस्य क्वचिदुपयोगो निर्वृत्तो भविष्यतीति वाऽवधार्य्यते तत्संस्कारार्हत्वात्कर्म्म प्रति प्राधान्यं प्रतिपद्यते। यत्पुनर्न्नोपयुक्तं नोपयोक्ष्यते वा तस्य संस्कारो निष्प्रयोजन इति तद्विधानवाक्यानर्थक्यप्रसङ्गः। तेचामी सक्तवो न होमात्प्रागुपयुज्यन्ते नोर्द्ध्वं भस्मसाद्भावाद्भस्मविनियोगवचनाभावाच्च। तच्च समस्तं वाक्यमनर्थकं भवतु द्वितीया वा लक्षणावृत्तेति, स्थितत्वाद्वेदप्रामाण्यस्य लक्षणा ग्रहीतव्या। मुख्यार्थप्रयोगो ह्यौत्सर्गिकत्वादपवाददर्शनेन भ्रान्तित्वं प्रतिपद्यते। सर्वत्रैव लक्षणाश्रयणमानर्थक्यप्रसङ्गनिमित्तम्। अन्यथा मुख्यार्थोपपत्तेः। तेन विरोधात्सक्तुसाधनकहोमविधानं प्रकरणसंबन्धि गृह्यते। ननु सक्तूनामपि इति होमवन्तः सक्तवोपि ज्योतिष्टोमस्योपकृत्यार्थवन्तो भविष्यन्तीत्याह। सिद्धान्तवादी तु क्रत्वेन होमसाधनीभूतानामेवार्थवत्त्वमभ्युपगच्छति को वा ब्रूते नेति। सर्वत्रैव च॥

द्रव्याणां वाक्यसंयुक्तक्रियानिर्वर्त्तनादिना।

न प्रयोजनमस्त्यन्यत्कथंभावाद्यसंगतेः॥

यथा होमः क्रियात्मकत्वात्किमित्यपेक्षमाणः प्रधानकथंभा-

वेनेत्थमनुग्राहकत्वेन गृह्यते नैवं द्रव्यम् । न च तस्माददृष्टक-
ल्पना क्रियानिर्वर्त्त्यत्वादपूर्वाणाम् । यत्रापि तावद् द्रव्यं सा-
क्षात्फलाय चोद्यते यथा गोदोहनेन पशुकाम इति तत्राप्यन्य-
प्रयोजनक्रियाद्वारमन्तरेण नापूर्वं भविष्यति । किमुत यदा न
कस्य चिदङ्गत्वेन सक्तवः श्रूयन्ते । न च किं चित्कल्पनाप्रमाण-
मस्ति । द्वितीयेति चेत् । न होत्युत्तरम् । द्वितीया हि सक्तूनां
प्राधान्यं वदन्ती होमं तदर्थं कुर्य्यान्न सक्तुभ्यो ऽपूर्वमिति प्र-
तिपत्तिम् । तेन द्वितीयाप्रसादाङ्गवेद्धोमः सक्त्वर्थः । कथं नाम
होमव्याप्ताः सक्तवः स्युरिति । नान्यस्मै प्रयोजनायाश्रवणात । ते
चामी भवन्ति होमे कृते सक्तवो होमसम्बद्धा इति प्रागेव प्रयो-
जनलाभात्पर्य्यवसिता द्वितीया निष्प्रयोजनेष्वपि, होमं प्रति
प्राधान्यमात्रेण कर्म्मत्वसिद्धेः । तत्र सिद्धे वाक्यार्थे पश्चान्न पुरुष-
स्य क्रतोर्वोपयुज्यन्तइति ज्ञात्वा तद्वचनाद्वा ऽदृष्टं कल्पयेत प्रा-
धान्यज्ञानं वा भ्रान्तिरिति । तत्राह । न तद्वचनाच्छक्यमन्यत्क-
ल्पयितुमिति । प्राधान्याविवक्षैव न्याय्या । ततश्च तृतीयार्थसिद्धिरि-
ति मत्वा महाभाष्यकारेणोक्तं तृतीयायाः स्थाने द्वितीयेति । तेन
वैषम्यं होमसंमार्गयोः, सक्तूनां निष्प्रयोजनत्वेन तदर्थत्वात्पुरो-
डाशादेश्चान्यशेषभावेन पर्य्यग्निकरणादिसंस्कारार्हत्वात् । दृष्टे
च शास्त्रार्थे ऽवस्थिते दृष्टोपकाराभावे ऽप्यदृष्टकल्पना भविष्यति ।
लोके ऽप्यदृष्टार्थाः संस्कारा आचाराद्गम्यन्ते यथा ग्रामान्तरा-
दागतानां शान्त्यर्थमग्निलवणादध्यक्षतप्रभृतेः शिरस उपरि भ्रा-
मणं शुचिदेशप्रतिष्ठापनं च । न चास्यानुपपत्तिराचारप्रामा-
ण्यात । तेनादृष्टार्थानामपि तुल्यश्रुतित्वात्सिद्धो गुणभावः । नन्वेवं
सति सर्वत्र प्रयोजनवत्ताकृतमेव द्रव्यप्राधान्यमिति न वक्तव्यं

मुख्यश्रुतित्वादिति, दर्शयितव्ये वा यत्र प्रयोजनवत्तानिरपेक्षं द्वितीयाकृतमेव प्राधान्यं केवलतृतीयाकृतो वा गुणभाव इति। तदुच्यते। प्राधान्यं तावदैन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र लिङ्गादिन्द्रार्थत्वावगतेः गार्हपत्यैकवाक्यत्वाच्च तत्साधनकेन्द्रोपस्थानप्रसङ्गे केवलद्वितीयाकृतमेव गार्हपत्यप्राधान्यम्। तथा सूक्तवाकेन प्रस्तरमित्युभयोः प्रयोजनवत्त्वाविशेषे केवलतृतीयाकृतमेव सूक्तवाकस्य प्रस्तरप्रहरणाङ्गत्वं तेन विभक्तिभिरेवाङ्गाङ्गिभावे ऽभिधीयमाने निष्प्रयोजनत्वमपवादो न तु प्रयोजनवदसद्भावेनाङ्गाङ्गित्वमिति विवेकः। प्रयोजनं त्वधिकरणस्य न सम्यगनुमन्यन्ते। तथा हि ॥

स्रुङ्मात्राद्यनुवादेन शमीमय्यादिचोदितम्।
ज्ञायते ऽङ्गप्रधानार्थं पूर्वसिद्धान्तपक्षयोः ॥

प्रियङ्गवो ह्युत्पत्तिवाक्यात्केवलप्रधानार्थत्वेन ज्ञायमाना युक्तं यदङ्गेषु न भवन्तीति। शमीमयत्वादि तु स्रुगादिमात्रानुवादेन विधीयमानं सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वादित्यनेन वाक्यसंयोगबलीयस्त्वात्प्रकरणगम्यप्रधानार्थत्वबाधेनाङ्गप्रधानार्थं विज्ञायते। न चात्र विशेषणं किं चिदुपात्तं येन प्रधानगतस्रुगादिमात्रप्रतीतिः स्यात्,तदपि वोद्दिश्यमानविशेषणत्वान्न विवक्ष्येत। तस्मात्पूर्वपक्षे ऽपि यानि च प्रधानसंबन्धीनि स्रुगादीनि यानि चारादुपकारकसंमार्गादिसंबन्धीनि तानि सर्वाणि शमीमयीत्वादियुक्तानीत्ययुक्तो नानावृक्षस्रुक्संमार्गः। स्यादेतत् मुख्यार्थो वाङ्गस्याचोदितत्वादिति वैकृतविशेषणां केवलप्रधानार्थत्वाद्वेह्याङ्गप्रधानार्थता भविष्यतीति। तदयुक्तम्। कुतः ॥

वाक्योपात्तप्रधानार्थसंबन्धो यत्र गम्यते ।
तत्रैतदुच्यते नात्र तादृशस्य प्रतीयते ॥

यत्राथर्वणा वै काम्या इष्टयस्ता उपांशु कर्त्तव्या इति हि प्रधानै-रेव काम्यशब्दोपात्तैरुपांशुत्वं संबध्यमानमङ्गस्याचोदितमिति व-च्यते, न चात्र तादृशः प्रधानसंयोग इति वैषम्यम् । ननु चाति-देशिकत्वादप्राप्तावस्थेष्वङ्गेषु शमीमयीत्वाद्युपदिश्यमानं प्रधान-मात्रार्थं भवत् । नार्हत्येवं भवितुम् । एवं हि स्यास्यति ॥

कृप्तोपकारसाकाङ्क्षाः प्रथमं प्राकृतैः सह ।
संबध्यन्ते समीपस्थं विकाराः प्रोड्झ्य चोदितम् ॥

अवश्यं चानेकार्थविध्यनुपपत्तेः स्रुगादीन्यनुवदितव्यानि ते-न प्रत्यक्षोपि सन्नुपदेशो ऽतिदेशं तावत्प्रतीक्षते । तत्र यावता कालेन प्रधानस्रुगादीनि प्राप्नुवन्ति तावतैवाङ्गस्रुगादीन्यपी-त्यविशेषः । किं च ॥

यदि प्रधानमात्रेण शमीमय्यादिसंगतिः ।
प्राकृत्यस्तु प्रसज्यन्ते प्रयाजादिस्रुचस्ततः ॥

य एव हि संमार्गस्रुचां वर्ज्जनोपायस्तेनैव प्रयाजादिस्रुग्व-र्जनमपि प्राप्नोति, न चैतदिष्टं युक्त्यभावात् । यद्यपि च किं-चित्प्रधानमात्रसंबन्धकारणं भवेत्तथापि सौमिकवेदिदक्षिणा-न्यायेन प्रसङ्गसिद्धेर्न्न प्राकृतजात्युपसंग्रहो युज्यते । किं च ॥

परिध्यादेश्च कार्येण स्वरूपमुपलक्षितम् ।
अतत्कार्यस्य संमार्गः परिधेर्न्न कृतो भवेत् ॥

परिधिरित्यग्निपरिधानार्थं द्रव्यमुच्यते । तथा होमाद्यर्था जुह्वादयस्तत्र संमार्गस्यार्थाभिधानकर्म्म चेत्यप्रयोजकत्वमपि शक्यं वक्तुम् । ततश्च बाणवत्परिधिश्रवणे यदि तावदपरिहिता-

नैव पलाशादीनां मार्ष्टि अपरिधय एव संसृष्टा भवेयुः । अथ तानपि परिदधीत,ततः कृते परिधाने प्राकृतार्थता न स्यात्। न च तुल्यार्थानां समुच्चयो दृष्टः। तस्मान्न परिध्यन्तरमुत्पादनीयम्। अवभृथस्य त्वपूर्वत्वाद्यावदुक्तमात्रपर्यवसायिनः साङ्गस्य चास्तु चोदितस्य केन संमार्गोऽग्निर्वा प्राप्नोति येनोत्पादेत। तस्मादप्रयोजनान्येतानि । तस्योदाहरणं त्वेकं सत्यम्। तत्र हि मांसं तु सवनीयानामिति सिद्धान्तात्पुरोडाशमात्रेणासंबध्यमानं तत्समयत्वमसवनीयत्वान्न पर्यग्निकरणपुरोडाशेन संबध्यते। न हि सवनीयाङ्गे सवनीयशब्दप्रयोगः । सवनसंबन्धिविषयत्वात्। सवनीयाङ्गस्य चासवनार्थत्वात्तत्रापि तु व्रीहिमयत्वं दुर्लभम्। व्रीहिभिर्यजतइति प्रधानपुरोडाशमात्रेण तेषां संबन्धात्। एवं तर्ह्यनियतद्रव्यकता पर्यग्निकरणपुरोडाशस्येति प्रयोजनम्। तदप्ययुक्तम्। तथा सति कांस्यभोजिन्यायेन तत्समयपर्यग्निकरणेनैव शास्त्रार्थोपपत्तेः सिद्धान्तार्थसदृशकर्मप्रसङ्गः। तस्मात्कथं चित्प्रकृतौ व्रीहिमयपुरोडाशग्रहणात्तत्साधनत्वं शास्त्रकृतत्वात्प्राप्नोतीति वक्तव्यम् । तत्रापि त्वेकहायनीन्यायेनाप्रयोजकत्वात् तदभावे लोपप्रसङ्गः। तेन एतदेव प्रयोजनमित्याश्रयणीयम्। अनियतद्रव्यकत्वं वा। न चात्र कांस्यभोजिन्यायः संभवति। मांसेन पुरोडाशत्वानभिव्यक्तेः। सवनीयपुरोडाशे कथमिति चेत्। नैव तत्र पुरोडाशत्वमिष्टं वचनादपुरोडाशात्मकमेव मांसं पुरोडाशस्य स्थाने विधीयते यथा धानादीनाम्। न हि कथं चिदपि मांसेन धानादयो भवन्ति। अतश्च प्रैयङ्गवन्यायेन प्रधानमात्रे मांसेन पुरोडाशो निवर्त्तितः। पर्यग्निकरणं तु पुरोडाशसाधनकमेवासत्त्वनियतद्रव्यको

वा कथं चिद्दा प्रकृतिदर्शनेन व्रीहियवद्द्रव्यक इति स्थितम् । एतानि च प्रयोजनानि स्रुक्संमार्गस्य प्रकृतौ बहुसाधनत्वात् कपिञ्जलन्यायेन त्रित्वस्य शास्त्रीयत्वात् पात्राविवृद्धावपि पशु-चातुर्मास्येषु तिस्र एव संमार्ष्टव्याः पूर्वपक्षे । सिद्धान्ते तु सर्वाः, संस्कारस्य प्रतिप्रधानावर्त्तित्वात् । तथा पशुन्यायेन विवक्षितै-कसंख्यत्वात् एक एव संमार्ष्टव्यः परिधिः पूर्वपक्षे । सिद्धान्ते तु सर्वे । यत्र च परिधिविवृद्धिस्तत्र विशेषः । एवमेकपुरोडाशे पर्यग्निकरणं सर्वपुरोडाशे च वक्तव्यम् । तथापि विषये लौ-किकं स्यादित्येवमग्निमुपनिधाय स्तुवतइतिवल्लौकिकाग्निसं-मार्गकरणं पूर्वपक्षे । सिद्धान्ते तु तस्याप्रयोजनत्वेनासंस्कार्य-त्वात्सर्वेषामाहवनीयादीनामिति विशेषः ।

## स्तुतशस्त्रयोस्तु संस्कारो याज्याव-द्देवताभिधानत्वात् ॥ १३ ॥

यैस्तु द्रव्यं चिकीर्ष्यतइत्यस्यापवादत्वेन स्तोत्रशस्त्रोपन्यासः । स्तुतिरेव स्तोत्रं शस्त्रमपि सैवाप्रगीतमन्त्रसाध्या गुणगुणिसम्ब-न्धकीर्त्तनं च स्तुतिः शिष्यते । सा च प्रथमं गुणगुणिभ्यां निर्व-र्त्त्यते । तदभावे शब्दोच्चारणमात्रस्य स्तुतित्वाव्यपदेशात् । तत्र गुणानां तावदकर्म्माङ्गतया निष्प्रयोजनत्वादेकान्तेन स्तुत्यर्थ-ता । तन्निर्वर्त्तिता तु स्तुतिः किं स्तुत्यस्य स्मारकत्वेन शेषीभव-त्युत स्वप्राधान्येनादृष्टार्था भवतीति । किं प्राप्तम् ॥

दृष्टेन क्रतुसिद्ध्यर्थां साधयन्ति यतः स्मृतिम् ।
स्तोत्रशस्त्राणि तेन स्युः संस्कारा देवताः प्रति ॥

## अर्थेन त्वपकृष्येत देवतानामचोदनाऽर्थस्य गुणभूतत्वात् ॥ १४ ॥

प्रमाणान्तरविरोधेन दूषणं तावदुच्यते। तथा हि ॥

यद्यत्राविद्यमानार्थो मन्त्रः स्यात् प्रयुज्यते।
तस्यार्थेनापकृष्टत्वात्पाठबाधः प्रसज्यते ॥

या यद्देवतानामसंयुक्ता स्तुतिचोदना भावनेति यावच्चोद्यमानत्वात्सा तदर्थपरत्वात्तस्मिन्नसति न स्वार्थं करोतीति तद्वशेनेन्द्रोस्तुतिस्माहेन्द्रग्रहयजिसन्निधिमुल्लङ्घ्य यत्रेन्द्रस्तत्र गच्छेत्। ततश्च क्रमसन्निधिबाधः। क्रमश्चात्र यथासंख्येनोत्तरासु पाठः। सन्निधिस्तु रथन्तरचोदनयोपस्थानं प्रकरणपरामर्शो वा।

## वशावद्वा गुणार्थं स्यात् ॥ १५ ॥

नायं दोषः ॥ किं कारणम् ॥

तत्र मन्त्रोऽपकृष्येत यत्र सोऽर्थान्तरं व्रजेत्।
अभिवत्योऽर्थवत्यस्तु साम्यादिन्द्रमहेन्द्रयोः ॥

य एव हि अभिवतीभिरिन्द्रः स्तूयते स एव माहेन्द्रग्रहेणेज्यते तत्र सत्येवार्थे किमित्यपकर्षः स्यात्। न च यावत्कर्माङ्गभूतेऽर्थे विद्यते तत्सर्वं मन्त्रेणाभिधातव्यं, न्यूनमधिकं वाऽसौ यदभिधातुं समर्थस्तदभिधत्ते। तेन निर्गुणेन्द्रप्रकाशनं गुणस्यातन्त्रत्वात्प्रकरणान्तरस्थत्वाद्वा निर्गुणद्रव्यप्रकाशनवदेव ॥ न च शब्दमात्रं देवतेति नवमदशमयोरभिधास्यते। ततश्च य एव महेन्द्रशब्देनार्थश्चोदितः स एवेन्द्रशब्देनोच्यते इत्यर्थान्तर-

त्वकल्पनाप्रमाणाभावात् । तस्मादुत्कर्षोपलम्भाभावात्संस्कारकर्मत्वमेव युक्तमिति ॥

## न श्रुतिसमवायित्वात् ॥ १६ ॥

नैतदस्ति निर्गुणेन्द्राभिधानादनुत्कर्ष इति । प्रसज्यतएवोत्कर्षः । कुतः ॥

यद्यभेदः प्रमाणेन भवेदिन्द्रमहेन्द्रयोः ।
ततो ऽयं नापनीयेत भेदस्त्वत्र प्रतीयते ॥

यद्यवयवव्युत्पत्त्या महांश्चासाविन्द्रश्चेति एवं महेन्द्रशब्दमन्वाचक्षाणैस्तद्धितानुगमः क्रियेत, तत इन्द्र एव गुणमात्रविशिष्टो ऽस्य ग्रहस्य देवतेति गम्येत । न त्वेवमस्ति समुदायप्रसिद्धिबलीयस्त्वेनेन्द्रव्यतिरिक्तरूढिशब्दाभिधेयमहेन्द्रप्रतीतेः । तथा हि ।

व्युत्पाद्यते महेन्द्रश्चेद्वाक्यभेदादि दुष्यति ।
अव्युत्पत्तौ महेन्द्रार्थः स्फुटं वस्त्वन्तरं भवेत् ॥

न चास्य महत्त्वमपेक्षमाणस्त्वेत्यवयवव्युत्पत्तिं निराकरोति । कथम् ।

वृत्तिद्वये ऽपि सामर्थ्यं स्मर्यते हि विशेषणम् ।
व्युत्पत्त्याश्रयणे चैतदुभयत्रापि दुर्लभम् ॥

'समर्थः पदविधिः' । 'समर्थानां प्रथमाद्वे'ति च समासतद्धितवृत्त्योर्विशेषणम् । अतस्तदभावे नैकया ऽपि भवितव्यम् । यदि युगपत्समासतद्धितावन्वाख्यायेते ततो नैकत्रापि सामर्थ्यं लभ्यते । कुतः ॥

तद्धितेन ह्यसंबन्धो महत्त्वे ऽपेक्षिते भवेत् ।

तस्मिन्नपेक्ष्यमाणे च न महत्त्वेन संगतिः ॥

एकार्थीभावलक्षणं व्यपेक्षालक्षणं वा सामर्थ्यमुभयथाऽपि सापेक्षस्य नावकल्पते । कथम् ।

अन्यवस्त्वनपेक्षत्वे ह्यन्येनैकार्थतेष्यते ।
सापेक्षस्त्वन्यविश्लिष्टो नैकार्थ्यं प्रतिपद्यते ॥

अविच्छिद्यमानौ हि द्वावर्थौ एकत्र लोलीभावं प्रतिपद्येयाताम् । न च विच्छिद्यमानौ, नानात्वे बुद्धिकानुष्यात् । यो ह्यवयवाभ्यामेकत्रोपसंहृताभ्यामुभयविशिष्ट एको ऽर्थः प्रतिपाद्यते सोऽपि निरपेक्षाभ्यामेव । सापेक्षत्वे संशयरूपेणैकत्रानुपसंहारात् । एवं तावदैकार्थ्यलक्षणसामर्थ्याभाव ॥

व्यपेक्षा पुनराहत्य विगतापेक्षतोच्यते ।
सापेक्षत्वे च दूरे ऽसाविल्येवमसमर्थता ॥

न हि सापेक्षो विगतापेक्षशब्देन शक्यो वक्तुम् । इत्युभयसामर्थ्याभावादुभयवृत्त्यभावप्रसङ्गः । एवं तावद्युगपद्व्याख्याने दोष ॥

क्रमेणाख्यायमाने तु वाक्यभेदो ऽसकृच्छ्रुतेः ।
कृत्वा समासमुच्चार्य पुनः शब्दद्वयं भवेत ॥
एतदेवाभिप्रेत्याह न च तद्धितार्थे वृत्तस्येत्यादि ।
तद्धितार्थे च वृत्तस्य वृद्धिः स्यादुत्तरे पदे ।
महत्त्वं द्रव्यसंबन्धि नोपसर्जनसंगति ॥

महैन्द्र इति हि स्यान्न चेन्द्रविशेषणं महत्त्वम् । न ह्युपसर्जनमभिभूतस्वार्थवृत्ति विशेषणान्तरैः संयुज्यते, न च समासार्थे वृत्तस्येति वाक्यभेदमात्रेणैवोच्यते । तेन क्रमवृत्तिरपि नास्तीति प्रतिपाद्य पुनर्युगपद्वृत्तिमेव दोषान्तराभिधित्सयोपन्य-

स्यति । एकशब्दो परार्थवदित्यनेन न्यायेनेन्द्रशब्दस्य महत्त्वतद्धितार्थौ प्रति वैरूप्यनिमित्तवाक्यभेदप्रसङ्गः । विध्यनेकव्यापारात्मकश्चापरो वाक्यभेदः । तथा हि ॥

महत्त्वस्येन्द्रसंबन्धं तस्य च द्रव्यसंगतिम् ।
विदधत्प्रत्ययो वाक्यं भिन्द्यात्पुनरपि श्रुतेः ॥

तस्मान्नेन्द्रो देवता महत्त्वविशिष्टः । किं तर्ह्यवयवसंबन्धनिरपेक्षाद्रूढिशब्दात्तद्धितोत्पत्तिः । अतश्च सिद्धं देवतान्तरत्वम् । न च वृत्रवधोत्तरकालं महत्त्वाभिधानेनेन्द्रस्यैव महेन्द्रत्वं भवेत् । वेदस्यादिमत्त्वप्रसङ्गात् । अतो नित्यरूढस्यैव स्तुतिमात्रार्थमेतत् ॥

## व्यपदेशाच्च ॥ १७ ॥

व्यपदेशभेदाच्च भेदः । एवं च मन्त्रयोर्व्यवस्था भविष्यति । इतरथा विकल्पे पक्षे बाधः स्यात् । असति चार्थभेदे मन्त्रभेदस्यादृष्टार्थता प्रसज्येत ॥

तस्माद्यथैव सूर्य्यादेरिन्द्रादत्यन्तभिन्नता ।
महेन्द्रस्य तथैवेति प्रगाथापनयो भवेत ॥
एवं व्याख्यायमाने तु रूढित्वे तद्धिते सति ।
अग्नीषोमादयः सर्वे रूढित्वान्न द्विदेवताः ॥

यथैव ह्रीन्द्रशब्दस्य महत्त्वतद्धिताद्यपेक्षमाणस्य युगपत्क्रमेण वा वृत्तिर्न संभवति, एवमेव सोमस्याग्निमपेक्षमाणस्य न तद्धितसंबन्धस्तदपेक्षस्य वा नाग्निना सह समासः । तथा क्रमवृत्तौ पुनरुच्चारणे वाक्यभेदान्नान्यतरत्र वृत्तस्यान्यतरेण वृत्तिः, सोमपदस्य वैरूप्यं, प्रत्ययस्यानेकार्थवृत्तिरिति दोषाणां साम्येना-

रूढित्वप्रसङ्गात्समस्तद्विदेवत्यत्वव्यवहारोच्छेदः स्यात्। न चैषां रूढित्वं शक्यं वदितुं, सर्वत्र शास्त्रे द्विदेवत्यत्वाभ्युपगमात्। तद्यथा। चतुर्द्धाकरणेन्द्रपीतपृषप्रपिष्टभागविचारेषु सापेक्षाग्निदेवत्यादीनामैन्द्राग्नाग्नीषोमीयादीनामाग्नेयादिशब्दैः केवलाग्न्यादिदेवताकैरसामर्थ्यादग्रहणमिति वक्ष्यति। रूढित्वे हि कस्य कापेक्षा भवेत्। तथा द्विदेवतत्वसामान्येनैन्द्रापौष्णादीनामग्नीषोमीयैन्द्राग्नप्रकृतिकत्वं वक्ष्यते। तथा मेधपतिभ्यां मेधमित्यत्र। देवता तु तदाशीष्ट्वादित्यर्थद्वयमाश्रयिष्यते। तथा मनोताधिकरणे वक्ष्यति। यौ तावग्नीषोमौ तावग्निश्च सोमश्च तत्राग्निरदेवता न त्वसमवेत इति। तथा देवताद्वन्द्वाश्रयाणि अग्नेरीत्वषत्वादीनि स्मर्यमाणानि न शक्यानि बाधितुम्। यदि च व्याकरणमेवमादावप्रमाणं तर्हि देवतातद्धितस्मरणाप्रामाण्यादग्नीषोमादीनां देवतात्वमपि न स्यात्। अथ तत्प्रतीतिरभ्युपगम्येत सा तुल्या ऽर्थद्वयप्रतीतावपीति रूढित्वाभावः। एतेनाश्वकर्णादिवदर्थरहितसमासान्वाख्यानेन स्वरसंस्कारप्रसिद्ध्यर्थमग्नीषोमीयादिद्वन्द्वस्मरणप्रामाण्यकल्पनं प्रत्युक्तम। तथा हि॥

यत्रार्थस्य विसंवादः प्रत्यक्षेणोपलभ्यते।
स्वरसंस्कारमात्रार्था तत्र व्याकरणस्मृतिः॥

महदिन्द्रशब्दयोस्तावदवश्यं पृथगर्थाभिधानशक्तिः कल्पयितव्या। तयोश्च गुणगुण्यभिधायित्वाद्विशेषणविशेष्यात्मकत्वमवधारितम्। तत्र यावदेव संहतावुच्चारितौ तावदेव पूर्वानुभूतार्थसंबन्धितया विशिष्टार्थप्रत्ययो जायते। न चास्य निवर्त्तकं किंचिदस्ति। न च समुदायस्यापूर्वशक्त्यन्तरकल्पनाप्रमाणं विद्य-

ते । लब्धात्मिका च समुदायप्रसिद्धिरवयवप्रसिद्धिं बाधते । न चावयवार्थैरहितार्थान्तरप्रयोगं विप्रकृष्टमन्तरेण तदात्मलाभः । किं च ॥

एकस्तावदनिक्लेशैरिन्द्रो ऽस्तीत्यवगम्यते ।
महेन्द्रस्त्वपरः कल्प्यः पुनः क्लेशान्तरैर्भवेत् ॥

प्रत्यक्षेऽपि तावदर्थे ऽनेकशब्दशक्तेः कल्पना निष्प्रमाणिका, किमुत यत्रार्थसद्भावो ऽपि कल्पनीयः । तदिहेन्द्रशब्दप्रयोगान्यथानुपपत्त्येन्द्रस्तावददृष्टो ऽपि कल्प्यते, तत्र यदि पुनर्महेन्द्रशब्दप्रयोगान्यथाऽनुपपत्तिर्भवेत्ततोऽर्थान्तरं महेन्द्रो नाम कल्प्येत । यदा तु पूर्वकल्पिताभ्यामेव महदिन्द्रपदशक्तिभ्यां प्रयोगः सिध्यति, स एव चार्थः किं चिद्विशिष्टः प्रत्यभिज्ञायते, कस्तदार्थान्तरं कल्पयितुं शक्ष्यति । तस्मादिन्द्र एव महत्त्वविशिष्टो महेन्द्रो नान्य इति सिद्धम् । न च समासं कृत्वा तद्धिते क्रियमाणे कस्य चिदसामर्थ्यं समासवेलायां तद्धितवेलायां चापेक्षणीयार्थान्तरानुपादानात् । न च द्विरुच्चारणनिमित्तवाक्यभेदप्रसक्तिः सकृदुच्चारितैकपदोपात्तानेकार्थकथनात् । वृत्तिद्वयात्मकं हि माहेन्द्रपदम् । एकैका च वृत्तिर्वाक्यार्थे वर्त्तते । तत्र ययोर्वाक्ययोरर्थौ माहेन्द्रपदेनोपात्तौ तौ ताभ्यां भिभिद्य कथ्येते । यच्चात्रासकृदुच्चारणं दृश्यते न तद्वेदवचनस्यैव । न हि कदा चिदप्येवंरूपो वेदो ऽस्ति महांश्चासाविन्द्रश्च महेन्द्रो देवता अस्येति माहेन्द्रः । न चैतदेव वैदिकं पदमेवं विभज्यते विभागस्य पौरुषेयत्वेनावैदिकत्वापत्तेः । किं तु ॥

वेदे स्वरूपतः शब्दो माहेन्द्रादिरवस्थितः ।
तस्यार्थः सकलो वाक्यैः पौरुषेयैर्निरूप्यते ॥

विभिन्नशक्तीनि हि पदानि एकानेकपदार्थप्रतीतेः ॥

तथैषामर्थकथनं कदा चित्पदेनैवान्येन क्रियते कदा चिद्वा-
क्येन, तेनाप्येकेनानेकेन वा द्विपदेन बहुपदेन वेति वैचित्र्यम् ।
तद्यथा कः पिकः कोकिलः क औपगवः उपगोरपत्यम् । उप-
गुना वा स्वकान्तायामुत्पादितः । तथा पचतीत्युक्ते पाकं परगा-
मि फलमेकः कर्त्ता पूर्वापरीभूतं वर्त्तमानकाले निर्वर्त्तयतीति
कथ्यते । न चैवं कथयतां वाक्यभेदः प्रसज्यते । न वा ऽशब्दार्थ-
त्वमध्यवसीयते । एवमेव यदि माहेन्द्रपदोपात्तो ऽर्थस्तदस्पृश-
द्भिरेव शब्दशक्तिविद्भिः पुरुषैः स्ववाक्येनैकेनानेकेन वा क-
थ्यते कस्तत्र वाक्यभेदः, शतकृत्वो ऽपि हि स्ववाक्यमुच्चार्यमाणं
न वेदं दूषयति । न च तदीयो ऽर्थः कथ्यमानः पौरुषेयत्वं भ-
जते । अवश्यं चानेको ऽर्थः पुरुषैः कथ्यमानः क्रमेण कथयि-
तव्यः, सो ऽपि च प्रकृतिप्रत्ययपौर्वापर्येणेत्येवं कथ्यते । महां-
श्चासाविन्द्रश्चेत्यादि । न चैवं सापेक्षत्वम् । अथ वा भवति हि
प्रधानस्य सापेक्षस्यापि समास इति यद्यपीन्द्रशब्दस्तद्धितापेक्ष-
स्तथा ऽपि महत्त्वं प्रति प्राधान्याल्लभते समासम् । अतश्च यु-
गपदपेक्षायामविरोधस्तथा ऽपि तु वृत्तिः क्रमेणैव । कुतः ॥

सापेक्षो ऽपि महत्त्वेन प्रधानत्वात्समस्यते ।
तदपेक्षो गुणत्वात्तु तद्धितेनैव वर्त्तते ॥

तेन यत्रैव प्रधानं सापेक्षं तत्रैतयैव तावद् वृत्त्या भवितव्यमि-
ति समास एव प्रथमं भवति । यदि वा कृत्वा समासं तन्त्रेण
वृत्तिरिष्येत, ततः शुद्ध इन्द्रस्तद्धितसंबन्धी शुद्धश्च समासभागिति
निर्गुणस्यैवेन्द्रस्य देवतात्वापत्तेर्गुणानर्थक्यप्रसङ्गः । न चेन्द्रमह-
त्त्वयोर्युगपत्तद्धितार्थे निपतितयोररुणैकहायन्यादिवत्परस्पर-

नियमो लभ्यते । न ह्येकक्रियायां युगपत्सन्निपातो नापि विशेष-णवशीकारसामर्थ्यम् । सत्यपि च द्वन्द्वदेवतापत्तिः । अकृतस-मासयोश्च महदिन्द्रशब्दयोरनेकत्वाद्द्विवत्तिनैकसंख्यप्रातिपदि-कनिमित्ततद्धितसंबन्धाभावप्रसङ्गः । किं च ॥

सुबन्तौ यदि चैत्तौ(१)ते न प्रातिपदिकं ततः ।
असुबन्तत्वक्लृप्तौ वा समासाप्तौ न लभ्यते ॥

तस्मान्न युगपद्वृत्तिः, इति क्रमवृत्त्या समासार्थस्यैव देवतात्व-म् । अतश्चेन्द्र एव गुणसंयुक्तो महेन्द्रो नार्थान्तरमिति पूर्वपक्ष एव शोभन इत्यन्यदुत्तरं वाच्यम् ॥ तदुच्यते ।

श्रुत्या हि देवता यागे समवैति न रूपतः ।
तस्मान्माहेन्द्रशब्दोक्त्या महेन्द्रो देवतेष्यते ॥

यद्यप्यभिन्नोऽर्थस्तथापि विधिशब्दस्य मन्त्रत्वे भावः स्यादि-ति(२) महेन्द्रशब्देनैवोच्यमानस्यास्मिन् ग्रहयागे देवतात्वं ना-न्यथा । तत्र सकलपर्य्यायेणापि बृहदिन्द्रादिशब्देनोच्यमानस्य देवतात्वं न भवति किमुत न्यूनेनैवेन्द्रशब्देन । तथा हि ॥

अर्थोऽपि यादृशो यत्र देवतात्वेन चोदितः ।
मनागपि ततोऽन्यत्वे देवतेति न गम्यते ॥

देवतात्वस्य प्रत्यक्षाद्यनवगम्यत्वाच्चोदनैवैकं प्रमाणं, सा च यं यादृशं यत्र यादृशे चार्थे विदधाति, स यदि तथैवानुष्ठानेऽपि संपाद्येत, ततस्तत्प्रमितोऽयमित्यवसीयते । किं चिदपि चेद्वि-धान्यथा जातं निवृत्तव्यापारायां चोदनायां प्रमाणान्तरं मृग्यं, न च तदस्तीत्यप्रमाणता । यथा वक्ष्यति 'स एवाग्निरष्टाकपाल-

(१) चैतौ इति २ पु० पाठः ।
(२) स्यादनेन चोदनेतीत्यधिकं २ पु० पाठः ।

स्य देवता नाऽन्यस्येति। तेन व्यवस्थावशादयथैवेन्द्रे चोदिते ऽ-
ग्नेर्देवतात्वं न भवति, सोमस्य च चोदिते न पुरोडाशस्य, अ-
भिषुतस्य च न लतायाः, शुद्धे च न सगुणस्य तथैव, गुणवति
चोदिते न निर्गुणस्य॥ कुतः॥

देवता हि विधेयत्वाद्विवक्षितगुणेष्यते।

लक्षणत्वे तु तस्याः स्यादविवक्षा गुणादिषु॥

यदि हि तद्धितसंबन्धे देवतोद्दिश्यमाना स्यात्ततो ऽस्या
गुणाविवक्षा भवेत्। इयं पुनरविधीयमाना देवतात्वमेव न
प्रतिपद्यतइति अवश्योपादातव्या। ततश्च विवक्षितगुणत्वात्तद-
पाये न कथं चिद्देवतेति, गम्यते। यथा शुक्लवासा भोज-
यितव्यो लोहितोष्णीषा ऋत्विजः प्रचरन्ति दण्डी प्रैषा-
नन्वाहेति विशेषणरहितानामकर्माङ्गत्वम्। यदा ते ऽप्यु-
द्दिश्यन्ते यो ऽयं शुक्लवासास्तमानयेत्यादौ तदा विनापि
विशेषणेनानीयन्ते। तदिह यद्यपि तावद्देवता रूपेणोपकुर्या-
त्तथा ऽपि न गुणरहिता ऽऽश्रीयेत, किमुत यदा ऽभिधा-
नोपकारिणी विधिगतव्यतिरिक्ताभिधानाभिहिता नैव प्रत्य-
भिज्ञायते सैवेयं देवतेति। समासेन च विधीयमानायां नानेका-
र्थविधिदोषप्रसक्तिः। तत्र माहेन्द्रशब्दगता न कथं चिदिन्द्र-
शब्देनोच्यते। या तु तेनोच्यते सा तत्र नैव देवतेत्यनर्थकमेव-
स्याः प्रकाशनम्। अतश्च न श्रुतिसमवायित्वादित्ययमपि सू-
त्रार्थो भवति श्रुतिसमवेतं देवतात्वं भविष्यति तदधीनत्वात्तन्नि-
त्यर्थः। तच्च तद्धितसंवादे सति ज्ञायते तस्मादस्ति देवताभेद
इति। कथं तस्मिन् पक्षे भाष्ययोजनिका। तदभिधीयते। पूर्व-
पक्षवादी तावदनुत्कर्षं प्रगाथस्य वदति, यस्य माहेन्द्राद् प्रभा-

इन्द्राभिधानसमर्थमन्त्रानुत्कर्षं वदति तेनाकस्मात्कृमूतार्थप्र-
काशनवैयर्थ्यादिन्द्र एवात्र शुद्धो देवताभूतः शक्याश्रयमित्यभ्यु-
पगतं भवति। तस्य च देवतात्वं नाभ्युपगममात्रेण सिध्यति, ना-
पि प्रमाणान्तरेण, ते च एतद्धोत्पत्तिवाक्ये देवताभिधानशक्ति-
स्तद्धितः श्रूयते माहेन्द्रं गृह्णातीति तत्संयोगाद्विज्ञायते । स च
यदि समासान्निष्कृष्य केवलादिन्द्रशब्दादुत्पाद्यते, ततो मन्त्रा-
भिधेयसदृशं देवतात्वमुक्तं भवति । सिद्धवच्चैतमर्थं पूर्वपक्षवा-
दिनो ऽभिप्रेतं मन्वानो निष्कृष्य ब्रवीति "इन्द्रो ऽस्य देवतेति त-
द्धितसंयोगेन ज्ञायेत, न चास्य सत्त्वमपेक्षमाणस्याकृते समा-
से गुणस्योपसर्जनीभूतस्य तद्धितसंयोगः । तद्धितसंयोगापेक्षस्य
चेति" सत्यपि सापेक्षप्रधानसमासे प्रातिपदिकावस्थायां तद्धि-
तापेक्षा, न च तदानीमसुबन्तत्वात्समासोपपत्तिः । तेन यच्चैव पृ-
थग्भूतं सुबन्तं संबन्ध्यार्थमेव पदान्तरमपेक्षते यथा राजपुरुषः
शोभन इति, तद्विषयमेवैतद्भवति वै प्रधानस्य सापेक्षस्यापि
समास इति द्रष्टव्यम् । अकृते च समासे तद्धितापेक्षायां वा-
क्यात्तद्धितोत्पत्तिरित्यभ्युपेतं स्यात् । शुद्धस्य वा तद्धितसंस्पर्शा-
द्विशेषणानन्तर्गतिप्रसङ्गः । क्रमवृत्तिः पुनर्भवतो नाभिप्रेतैव,
पूर्वं तद्धितसंबन्धे पूर्वोक्तावेव द्रव्यविशेषणोत्तरपदवृद्धिप्रसङ्ग-
दोषौ । न च समासार्थे वृत्तस्य शुद्धस्य तद्धितसंबन्धः । तस्मै-
कस्मिन्नेव प्रयोगे तत्संबन्धो ऽभ्युपगन्तव्यः । ततश्चैक-
शब्दे परार्थवदिति तथैव वैरूप्यदोषः । विस्पष्टश्चायमन्यो
ऽर्थ इति प्रागसमासादनेकार्थविधेः समासपदस्याभ्यस्तत्वाद्वाक्य-
भेदमात्र। कृते तु समासे नैष दोषः । "तस्मादिन्द्रो देवता
ऽभ्यस्तविशिष्टः"। शुद्धः। किं तर्हि विशिष्ट एव । अथ वा तै-

न्द्रो देवता केवलपदोपात्तः शुद्ध इत्यभिप्रायः। कथं तर्हि म-
रुत्त्वविशिष्टः। समासप्रातिपदिकात्तद्धितोत्पत्तेः। "न त्ववयव-
संबन्धेने"ति नावयवप्रसिद्धिनिराकरणपरं किं तर्हि नावयवसं-
बन्धेन तद्धितोत्पत्तिः, निष्कृष्टमग्रकत्वादित्यभिप्रायः। "तस्मा-
द्देवतान्तर"मिति सत्यपि द्रव्यैकत्वे सगुणनिर्गुणाश्रयणाद्देवता-
न्तरत्वम्। आह च॥

आचार्यो मातुलस्येति द्रव्यैकत्वेऽपि दृश्यते।
अपेक्षाहेतुभेदेन व्यवहारः पृथक्कृतः॥

यदप्युच्यते "इन्द्रस्य वृत्रवधोत्तरकालमि"ति। एवं सर्वत्र
शुद्धात्मनः प्रतिपन्नदेवतात्वस्य पश्चात्तनोऽयं गुणः स्तुतिमात्रो-
पयोगी न देवतात्वेऽन्तर्भवतीति मन्यते। अस्य तूत्तरं गतार्थ-
म्। स्थिते च देवतान्तरत्वे, शुद्धस्य देवतायाः प्रकाशनं, शुद्धेन
वा विशिष्टस्य, विशिष्टचोदनायामपि वा शुद्धस्य देवतात्वं, शु-
द्धशब्दोच्चारणेपि वा विशिष्टे देवतात्वं, प्रतिपद्यतइत्यादि सर्वं
सन्धकारनिरीक्षितं माहमात्रेणाभ्युपगम्येत, न चैतद्युक्तम्।
अतो यत्र विधिमन्त्रयोर्देवतासंवादस्तत्र प्रगाथो नीयेत, त्वत्पक्षे
पुनः॥

यां कां चिदप्युपादाय देवतां साधिता स्तुतिः।
अदृष्टं यागमात्रार्थं करोत्याराद्वस्थितम्॥

# गुणश्चानर्थकः स्यात्॥१८॥

यदि चादिमत्तनादिर्वा गुणः केवलमिन्द्रस्तुत्यर्थमेवोपादी-
यते न देवतात्वेऽन्तर्भवति, ततोऽस्योपादानमेवानर्थकं स्यात्।
सर्वा हि देवतैवमर्थमभिधीयते विधीयते वा, कथं नाम तद्दे-

शेन कर्म्म क्रियेतेति । यदि च अविहिते विहिते च गुणे केव-
लेनेन्द्रेण व्यवह्रियते ततो नार्थो गुणाभिधानेन । किं च ॥

गुणो ऽनन्तर्गतस्त्वात्र पश्चादभिहितो भवेत् ।
लक्षणात्वेन वोक्तः सन्नचाप्राप्तेस्तदस्ति(१)ते ॥

न हि ग्रहसंबन्ध इन्द्रस्य प्राप्ता, येन तद्गतेन्द्रानुवादेन मह-
त्त्वं केवलमेव स्तुत्यर्थमुच्येत । न च महानिन्द्रः प्राप्तो यतो गु-
णेनोपलक्ष्य विधीयेत । तस्मादप्राप्तविधेर्द्देवतान्तरता ॥

## तथा याज्यापुरोरुचोः ॥ १९ ॥

पूर्ववन्मन्त्रव्यपदेशभेदव्यवस्था ॥

## वशायामर्थसमवायात् ॥ २० ॥

वशादिद्रव्याणामर्थरूपोपकारित्वात्प्रत्यक्षलभ्ये विशेषे सा-
मान्येनापि सिद्धेर्न विधिशब्दादरः ॥

## यत्रेति वा ऽर्थवत्त्वात् स्यात् ॥ २१ ॥

बलवत्प्रमाणविरोधे संस्कारपक्षस्त्यज्येत, न च सोऽस्ति, लि-
ङ्गबलीयस्त्वादुत्कर्षसिद्धेरित्यपर्युदासः संस्कारपक्षस्य ॥

अथ वार्थैकदेशो ऽयं समासार्थप्रकाशनम् ।
करिष्यत्यविरोधाय मनोतास्थाग्निशब्दवत् ॥

अनुत्कृष्यमाण एव वा प्रगाथः सन्निधिवशादवयवद्वारेण म-
हेन्द्रमविरोधाय दृष्टार्थत्वाय च प्रकाशयिष्यति, यथा ऽग्नीषो-
मीये मनोतायामग्निशब्दः प्रकरणात्समासस्थः प्रतीयमानः सा-

---

(१) चाप्राप्ते तदस्तीति २ पु॰ पाठः ।

स्वचर्य्यास्तोममपि प्रतिपादयन्समुदायार्थो विज्ञायते । अतस्था-नुत्कर्षे ऽप्यदोष इति ॥

## न त्वाम्नातेषु ॥ २२ ॥

आम्नातेष्वपि मन्त्रेषु नोत्कृष्टेष्वर्थदर्शनम् ।
सर्वेषु भवतीत्येवं नोत्कृष्टत्वं न दुष्यति ॥

न हि यमादीनां ग्रहान्तरेष्वपि देवतात्वं येनेन्द्रवदुत्कृष्टैर्म-न्त्रैः प्रकाश्येरन् । अतस्तेषां तावद्विध्यानर्थक्यप्रसङ्गादवश्यम-दृष्टार्थत्वेन भवितव्यम् । ततश्च तत्सामान्यादितरेषु तथात्वं, त-स्मान्न संस्कारकर्म्मत्वमिति ॥

## दृश्यते ॥ २३ ॥

यमादयो न विद्यन्ते यद्यपि ग्रहदेवताः ।
अन्यकर्म्मोपयोगित्वात्प्रकाश्याः स्युस्तथापि नः ॥

मण्डूकसूक्तस्याग्नौ प्रयोगः, तत्र मण्डूकेनाग्निविकर्षणाम्ना-नात् । अक्षसूक्तस्य राजसूये, तत्राक्षैर्दीव्यतीति विधानात् । मू-षिकासूक्तस्यैकादशिन्याम्, आखुस्ते पशुरित्युपशयसंबन्धसं-कीर्त्तने सति तद्द्वारेणोपशयस्यैव स्तुतिः । कुसुम्भकसूक्तादीनां तु यदि क चिद्विशेषरूपेणार्थो नास्ति ततः सामान्यविधानेना-र्थवत्ता भविष्यति । वाचः स्तोमे सर्वमन्त्रोपदेशात् । तथा ऽऽश्विने सूर्य्योदयावधि समाप्त्यसंभवे सर्वासामृचामुपदेशात् । तत्र व-चनेनैवासमवेतार्थमन्त्रविधानसामर्थ्यादगतेरदृष्टार्थाश्रयणं, न च क चिददृष्टार्थत्वेन सर्वत्रैव दृश्यमानमप्यर्थं प्रोह्याऽदृष्टार्थत्व-कल्पना युज्यते । तथा हि ॥

न च प्रादावदृष्टार्थे वैफल्यादिनिदर्शनात् ।
याज्यादावपि दृष्टार्थे स्याददृष्टार्थकल्पना ॥

अपि वा श्रुतिसंयोगात्प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ॥ २४ ॥

यदुक्तं मनोतायामिवाग्निशब्दं इन्द्रशब्दस्समासार्थं लक्षयिष्यतीति । तदयुक्तम् । कुतः । एतस्मादेव दोषात् । न हीन्द्रशब्दस्य स्वार्थमभिदधतः कश्चिद्विरोधो येन श्रुतिवृत्तिं जह्यात् । सर्वादृष्टार्थानां च यथा कथं चिल्लक्षणया दृष्टार्थत्वापादनसंभवादयुक्तमेतत् । यत्तूक्तम् उत्कृष्यतामेवेति तदयुक्तम् ॥ कुतः ॥

प्रकृतस्तोत्रशेषत्वं श्रुत्या सन्निधिक्लृप्तया ।
विना सामान्यसंबन्धाल्लिङ्गं चाविनियोजकम् ॥

यदि लोकान्तेन प्रथमं दृष्टार्थत्वमवधारितं स्यात् ततः क्रमसन्निधिकल्प्या श्रुतिर्बाध्येत, यतस्तु विनियोगोत्तरकाला प्रयोजनकल्पना न तद्दर्शनेव विनियोग,स्तेन क्रमसन्निधिभ्यां विनियुक्ते दृष्टमदृष्टं वा प्रयोजनं कल्प्यमानं न विरुध्यते । न चोत्कृष्टस्य प्रगाथस्यान्यत्र विनियोगहेतुरस्ति । लिङ्गं हि देवताप्रकाशयितुं सामर्थ्येन तन्मन्त्रं स्वरूपे विनियुञ्जीत, तथा चास्यानर्थक्यप्रसङ्गः । कर्म्मसंबन्धे तु न कश्चिदस्य व्यापारः । तदेतल्लिङ्गं यदि सामान्यतः केन चित्कर्म्मसंबन्धः क्रियते, ततः कथं तस्योपकरिष्यतीत्यपेक्षिते यथा शक्नोतीत्येवमाश्रयणाद्देवताप्रकाशनद्वारेणेति विनियुङ्क्ते । न चात्र सामान्यसंबन्धकारणं प-

स्याम: । तस्मादुत्कृष्टानामानर्थक्यमेव स्यादित्यदृष्टार्थतैव न्याय्या । किं च ॥

एवं च सप्तमी षष्ठी द्वितीया स्तौतिशंसती ।

अनिवृत्ता भविष्यन्ति त्वत्पक्षे ऽन्यार्थवृत्तयः ॥

गुणगण्यभिधानक्रियाणामसत्त्वरूढत्वात्सप्तमीश्रुतिसंयोगो घटते । प्रकाशने हेतुकरणत्वात् तृतीयायुक्ताः कवत्यादयः श्रूयेरन् । ननु स्तुतावपि कवतीनां करणत्वात्तृतीयैव प्राप्नोति । नैष दोषः ॥

आधारत्वमपि ह्यासां करणत्वं च विद्यते ।

तत्रैतयोर्यथाभीष्टं निर्देश उपपद्यते ॥

प्रकाशनं पुनः परमार्थतस्तावदात्माधारम् । कर्मत्वप्रतिपत्त्युत्तरकालं च व्याप्यत्वाद्देवताधारम् । तत्र कवतीनामैकान्तिकमेव करणत्वमिति वैषम्यम् । अपि च स्तौति शंसतीति स्तुतिभावना पूर्वापरीभूता श्रूयते । तस्यां च धात्वर्थः करणभूतः शेषाणि च कारकाणि नित्यं धात्वर्थं निष्पादयन्ति संबध्यन्ते । तत्र यदि मन्त्राः स्तोत्रनिर्वृत्त्यर्था भवन्ति ततो ऽपेक्षितार्थकरणात्साक्षाददृष्टमर्थं कुर्वन्तो दृष्टार्था (१) भवन्ति । प्रकाशनं तु कुर्वन्तो ऽचोदितकृत्वाददृष्टार्था भवेयुः । ततश्च वरं स्तुतीनामेव दृष्टार्थत्वम् । किं च ॥

श्रुत्यैव षष्ठी पारार्थ्यं देवतानां ब्रवीति नः ।

न प्रधानं गुणास्तेष्टाः स्तुतेस्तेन प्रधानता ॥

देवताप्राधान्ये हि प्रातिपदिकार्थपरत्वाद्व्यतिरिक्तार्थविषयाभिनर्मूर्द्धे निवत्प्रथमैव श्रूयेत । यदपि किं चित्प्रथमान्तं तद-

(१) चोदितकरणाद् दृष्टार्था इति २ पु० पाठः ।

पि योग्यतापूर्वकैकवाक्यत्ववशेन गुणसंबन्धार्थमेव। यथेन्द्रो या-
तो जङ्गमस्यावसितस्य स्थावरस्य च राजेति । न च गुणानामु-
पयोगो ऽस्तीति तत्प्राधान्यानाश्रयणे स्तुत्यर्थतैव युक्ता । स-
त्यमिति ग्रन्थच्छेदः । तच्चार्थवादन्यायेन शेषपदानर्थक्यप्रसङ्गा-
त्सत्यपि पूर्वेण प्राधान्यपर्यवसानसंभवे स्तुत्यर्थेनैवैकवाक्यता
युक्ता । न चैवं स्तौतिशंसत्योः प्रकाशनलक्षणार्थता भविष्यतीति
स्तुतेरेव प्राधान्यम् ॥

## शब्दपृथक्त्वाच्च ॥ २५ ॥

पृथक्त्वनिवेशिनी हि द्वादशसंख्या न प्रकाशनाभेदे सति शब्दे-
ष्वौच्यते । सामान्यविवक्षायां वा प्रत्यृचं प्रतिपदं च तन्निर्वृत्तेर्न
द्वादशत्वे ऽवतिष्ठते । ननु च स्तुतावपि तुल्यमेतत् । तथा हि ॥

सामान्यस्तुतिरेकैव भेदो ऽपि प्रत्यृचं स्थितः ।
न चान्यथा विवक्षास्ति यतो द्वादशता भवेत् ॥

अथ स्तोमवशाद्दशसमुदायसाध्याः स्तुतयो गण्यन्ते तथा प्र-
काशनान्यपीत्यविशेषः ॥ उच्यते ॥

क्रियाः फलापवर्गिण्यस्तत्संख्यागणनास्पदा ।
अपूर्वद्वादशत्वाच्च द्वादशत्वं निरूप्यते ॥

प्रकाशनार्थत्वे हि प्रत्यृचं प्रतिपदं च तन्निर्वृत्तिदर्शनात्क्रिया-
समाप्तेर्न किं चित्कारणमस्ति, येन द्वादशत्वं परिच्छिद्येत ।
अपूर्वार्थत्वे तु तेषां शास्त्रगम्यत्वाद्यथोक्तस्तोमसंपदः प्राङ्नि-
र्वृत्तिप्रमाणाभावाद्दशसमुदायेनापूर्वनिर्वृत्तेस्तद्द्वारेण क्रियास-
माप्त्युपलक्षणादपूर्वाणां द्वादशत्वेन स्तुतिद्वादशत्वसिद्धिः । न
हि प्रत्यृचं सर्वस्तोत्रेभ्यो वा तत्कल्पनायाः किं चित्प्रमाणमस्ति ।

यथा प्रकाशनस्य दर्शनम् ॥

## अनर्थकं च तद्वचनम् ॥२६॥

ऋचामनूद्यत्वादाग्नेय्यश्चचोदनयैवाग्नेयीनां स्तुतिसाधनत्वसिद्धेः आग्नेयीषु स्तुवतइत्यनर्थकं वचनम् ॥

## अन्यश्चार्थः प्रतीयते ॥२७॥

संबन्धस्य भेदनिबन्धनत्वात्सम्बन्धवचनेन स्तोत्रशस्त्रयोर्भेदः स च प्रकाशनैकत्वान्न प्राप्नोति । ननु स्तुत्येकत्वादितरत्रापि तुल्यमेतत् । अथ प्रगीताप्रगीतमन्त्रसाधनत्वेन भेदः, तद्युक्तिद्वारेण वा, स पूर्वपक्षे ऽप्यविशिष्टः । तत्रोत्तरं द्वादशलक्षणम् । अत्यन्तभेदाद्धि स्तोत्रशस्त्रापूर्वयोस्तद्द्वारेण क्रिययोर्भेदमुपचर्य संबन्धवचनम् । न तु प्रकाशनं स्वतः फलतो वा भिद्यते ॥

## अभिधानं च कर्म्मवत् ॥२८॥

यदिदं द्वितीयाप्रतिपादितकर्म्मार्थमभिधानमिदं चापरं प्राधान्ये कारणम् । प्रधानक्रिया हि केन चिद्रूपेणेप्सिता अग्निहोत्रं जुहोत्याघारमाघारयतीतिवद्भवति, न संस्कारक्रिया ऽत्यन्तगुणभूतत्वात् । अथ वा स्तोत्रशस्त्रसमाख्ययोरभिधानत्वं तत्प्राधान्यज्ञापनार्थम् । इतरथा हि प्रकाशनमित्येवं समाख्या स्यात् । अवघात्यादिवद्वा नैव भवेत् ॥

## फलनिर्वृत्तिश्च ॥ २९ ॥

यो ऽयं मन्त्रे फलाशीरर्थवादः स स्तुतेः प्रधानत्वे घटते स-

र्थं च प्रधानविषयत्वात्प्रार्थनानाम् । त्वत्पक्षे तु ॥

देवतैव प्रधानत्वात्फलं याच्येत कर्म्मवत् ।
न स्वामिनि स्थिते कश्चिद्दासात्प्रार्थयते फलम् ॥

## विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ॥ ३० ॥

इह मन्त्रा उदाहरणम् । किं तद्गता भावनावचना ब्राह्मणवद्विदधति नेति संदेहे शब्दाभेदाद्विधायका इत्याशङ्क्य मन्त्रत्वात्प्राप्तार्थत्वाच्च विधित्वासंभवेन प्रयोगकालेषु ब्राह्मणविहितानामेवार्थानां स्मारका इत्युत्तरपक्ष उक्तः । तथा हि ॥

न कर्म्मान्तरतास्त्यत्र वलवत्प्रत्यभिज्ञया ।
न चोपात्तो गुणः कश्चिन्न च वाक्यान्तरे स्तुतिः ॥

स्मारकत्वप्रतिपक्षौ हि विध्यर्थवादौ स्याताम्, तदिह स्वरूपं तावदन्यतः क्रियायाः प्राप्तं गुणफलनिमित्तानि तु नैवोपात्तानि यानि विधीयेरन् । न च वाक्यान्तरस्थे पर्य्यवसितप्रयोजने विधौ स्तुतिरुपपद्यते । तदुक्तं प्रथममन्त्रे तस्मात्प्रकाशका मन्त्रा इति यद्व्याख्यायते तत्र वदामः । किं पुनः कारणं मन्त्रत्वेनाख्यातविशेषाणां विधिशक्तिस्तिरोधीयते, कथं च ब्राह्मणत्वेनासावाविर्भाव्यते । दृश्यन्ते मन्त्रगता अपि विधायका वसन्ताय कपिञ्जलानालभतइत्यादयः । तथा ब्राह्मणगता अप्यविधायकाः । यथा यस्योभयं हविरार्त्तिमार्च्छेदित्यादयः । तस्मान्नायमेकान्तः । किं च ॥

प्राप्तत्वाद्यदि चेष्येत मन्त्राणामनुवादता ।
तैरेव विहितं कस्मान्न स्मारयति चोदना ॥

न ह्यत्र विशेषहेतुरस्ति किं ब्राह्मणविहितमासाद्योपहतविधिशक्तिर्मन्त्रः स्मारको भवत्यथ वा विपर्य्यय इति। तत्रोभयोरनुवादत्वासंभवादगृह्यमाणविशेषत्वाच्च द्वयोरपि विधायकत्वम्। अभ्यासाच्च कर्म्मभेदः स्यात्। बलवत्प्रत्यभिज्ञायास्त्वभ्यासाधिकरणएवोत्तरं भविष्यति। तस्मान्नैवमभिधायकत्वसिद्धिः। येप्याहुः॥

यस्माद् व्रीह्यादिवन्मन्त्राः करणत्वेन कर्म्मणाम्।
ब्राह्मणेन नियुज्यन्ते तद्वत्ते न विधायकाः॥
तैरपि सामान्यतोदृष्टमात्रं व्यपदिष्टम्। कुतः।
विधिशक्तिर्न्नियोगेन न मन्त्रस्यापनीयते॥
ततो विधास्यति ह्येष नियोगात्स्मारयिष्यति।

न हि विनियुक्तेन न विधातव्यमिति किं चित्प्रमाणं यदि स्वतो विधिशक्तिरस्त्येव। अथ त्वसौ प्रथममेव नास्ति व्यर्थो विनियोगोपन्यासः। न चोभयकरणे विरोधः। तथा हि॥

विधायकं सदप्यर्थं ब्राह्मणं स्मारयिष्यति।
मन्त्रतस्तु विरोधे स्यादित्यत्रैतद्वदिष्यते॥

ये च वचनेनाविनियुक्तास्ते च त्वत्पक्षे निराकरणहेत्वभावाद्विधायकाः प्राप्नुवन्तीति एतदप्यकारणम्। न चात्र मन्त्रोपन्यासस्य कश्चित्संबन्ध इति अन्यथा वर्ण्यते। द्विविधमेवाख्यातं गुणप्रधानकर्म्मत्वेनोक्तम्। अथेदानीं प्रस्तूयते किं तावेव द्वौ प्रकारावुतान्यो ऽप्यस्तीति। तत्र न तृतीयः प्रकारो ऽस्तीति मत्वा पूर्वपक्षवादी वदत्यैकार्थ्यमिति। तथा प्राप्ते ऽभिधीयते॥

## अपि वा प्रयोगसामर्थ्यान्मन्त्रो-

ऽभिधानवाची स्यात् ॥ ३१ ॥

अस्ति तृतीयः प्रकारो यदभिधायकत्वं नाम । पश्य ॥

येषामाख्यातशब्दानां यच्छब्दाद्युपबन्धनात् ।
विधिशक्तिः प्रणश्येत्तु ते सर्वत्राभिधायकाः ॥

मन्त्रगतानां ब्राह्मणगतानां चाख्यातशब्दानां येषां शब्दान्तरेण विधिशक्तिरपगच्छति तेषामभिधायकत्वम् । तत्र मता नशन्तीत्यत्र तावद्यच्छब्दोपहितो विधायको ऽनुवादत्वं प्रार्थयते । तथा अद्दे बुध्निय मन्त्रं मे गोपायेत्यामन्त्रणविभक्त्या । दामि गृह्णामीत्युत्तमपुरुषेण । यदि सोममपहरेयुरिति यदिशब्देन । ते चैवमादयः प्रायेण मन्त्रेष्विति मन्त्रा उदाहरणम् । अविधायका मन्त्रा इति च प्रसिद्धिः । ब्राह्मणे तु भूयांसः प्रत्यया विधायकास्तेन तद्विधायकमिति प्रसिद्धम् । अल्पे त्वविधायका इति तदिह नोदाहरणम् । विधायकत्वाविधायकत्वे तु तयोर्यथोक्तमेव कारणमिति न मन्त्रत्वब्राह्मणत्वयोर्व्यापारः । तत्र त्वेतावान् व्यापारो(१) दृश्यते । रूपादेव ब्राह्मणगतानां विधित्वनिवृत्तौ सत्यां निमित्तादिप्रत्यायनार्थता । न हि तेषां रूपं कर्म्मसु प्रयोगार्हम् । मन्त्रगतानां तु रूपमेवोपलभ्य दामि गृह्णामि निर्वपामीदमिदं च करोम्यग्नीन्विहर बर्हिस्तृणीहि इदमिदं च कुर्वित्यादिकं शक्यमेतैः कर्म्म स्मर्त्तुमिति विनियोगबुद्धिर्भवति ॥ कुतः

अनुष्ठाने पदार्थानामवश्यं भाविनी स्मृतिः ।
अनन्यसाधना ऽनन्यकार्य्यैर्मन्त्रैः प्रसाध्यते ॥

---

(१) विशेष इति २ पु० पाठः ।

न तावदनुष्ठानवेलायामस्मृतः कश्चित्पदार्थः शक्यः कर्त्तुमित्यवश्यंभाविन्या स्मृत्या योग्यसाधनमात्रापेक्षणाद्यत्किंचिद् ब्राह्मणपदार्थानुसंधानं वा पूर्वपदार्थप्रत्यवेक्षणं वा सूत्रग्रन्थो वा ऽऽत्मीयग्रन्थवाक्यानि वा उपद्रष्ट्रादि(१) वा साधनं ग्रहीतुमारभ्यते । तत्रानन्यप्रयोजनान्मन्त्रान्प्रकरणे पठ्यमानान्सामान्येन किमप्येभिः कर्त्तव्यमित्येवं प्रयोगवचनेन गृह्यमाणानुपलभ्य यादृशेन वाक्येन स्मृतिः कर्त्तुमाकाङ्क्ष्यते तद्रूपा एतइति विदित्वा लिङ्गप्रकरणानुमितया श्रुत्या विनियोगे सत्यभिधानार्थता विज्ञायते । ततश्चोपायान्तराण्यप्रमाणकत्वान्निवर्त्तन्ते । नियमादृष्टसिद्धिश्च मन्त्रैरेव स्मृत्वा कृतं कर्माभ्युदयकारि भवतीत्यवधार्यते । भाष्यमप्यत्रैव योजनीयम् । नासकृदप्युच्चारणे तत्प्रत्ययादिति न प्राप्तत्वाभिप्रायेणोच्यते । किं तु यच्छब्दोपबन्धादस्यैव मन्त्राच्छातस्यान्यतः प्राप्तमर्थं ब्रवीमीत्येवंरूपप्रत्ययात् । अतद्रूपत्वोऽपि ह्येवमादिरुच्चार्यमाणः स्वसामर्थ्येनैव नापूर्वप्रत्ययं करोति तत एव पूर्वप्राप्तबुद्धत्यादात् ॥

## तच्चोदकेषु मन्त्राख्या ॥ ३२ ॥

यथोक्तेन न्यायेन मन्त्रोदाहरणस्यातन्त्रत्वात्प्रासङ्गिकमिदं पूर्वसूत्रप्रयुक्तमन्त्रशब्दार्थलक्षणाभिधानमिति नावश्यमिदमर्थेनो ऽधिकरणं पूर्वम् । शक्यं हि वाक्यमात्रमप्युदाहृत्य विचारयितुम् । भाष्यकारस्तु सूत्रकारोच्चारितमन्त्रशब्दादरेण पौर्वापर्यविशेषमाह । तच्चोदकेष्विति । तदभिधानं चोदकं

(१) उपद्रष्टा वेति २ पु० पाठः ।

प्रयोजकं येषामिति बहुव्रीहिः । अर्थप्रदर्शनमात्रार्थं तु षष्ठी-कथनं भाष्ये । अध्येतृवृद्धव्यवहारसिद्धं चेदं प्रायिकचिह्नयुक्तं लक्षणं लाघवार्थमुक्तम् । धरणिगतानेकद्रव्यप्रत्येकनिरीक्षणे पुनः पुनः पृष्ठं कुटिलीक्रियतइति तत्सामान्येन पृष्ठाकोटाभिधानम् । श्लोकस्यैवं द्रष्टव्यः ॥

ऋषयोऽपि हि लक्ष्याणां नान्तं यान्ति पृथक्त्वशः ।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥
वृत्तौ लक्षणमेतेषामस्त्यन्तत्वान्तद्रूपता ।
आशिषः स्तुतिसंख्ये च प्रलप्तं परिदेवितम् ॥
प्रैषान्वेषणपृष्ठाख्यानानुषङ्गप्रयोगिताः ।
सामर्थ्यं चेति मन्त्राणां विस्तरः प्रायिको मतः ॥

डुलेरिवेति डुलिः कच्छपः । प्रतिपुनातुशब्दमच्छिद्रेण पवित्रेणेत्यनुषङ्गः । सामर्थ्यमभिधानशक्तिः । ये मां दुग्धवन्तस्त एव निराकृतवन्त इति धेन्वाः परिदेवितम् । अमुतः सोममाहरेति सौपर्णोपाख्याने विनतया गरुत्मानमृतार्थं प्रेषितः । कर्णवन्तीं सूर्मिम् । सूर्मिः स्थूणा ॥

## शेषे ब्राह्मणशब्दः ॥ ३३ ॥

परिशेषसिद्धत्वाद्ब्राह्मणलक्षणमवचनीयमिति सूत्रमिदमनारभ्यमिति प्रतिभाति । तत्र शेषशब्दप्रयोगाल्लक्षणानभिधानाच्च सूत्रव्याख्यानमेवेदमिति द्रष्टव्यम् । किमर्थं पुनः सूत्रमारभ्यते । नारभ्येत यदि मन्त्रब्राह्मणात्मक एव वेद इति सर्वेषां प्रसिद्धं भवेत् । येषां त्वप्रसिद्धं तेषां तृतीयादिप्रकारनिराकरणार्थं द्वैराश्यमेव वेदस्येति प्रतिपादयितुमाह शेषे ब्राह्मणश-

ब्द इति । एकपुरुषकर्तृकमुपाख्यानं परकृतिः । बहुकर्तृकं पुराकल्पः । यत्रान्यथार्थः प्रतिभातः पौर्वापर्य्यालोचनेन व्यवधार्य्यान्यथा कल्प्यते सा व्यवधारणकल्पना । तद्यथा प्रतिगृह्णीयादिति श्रुतं प्रतिग्राहयेदिति कल्पयिष्यते । विधिलक्षणमित्यत्र ब्राह्मणवाची विधिशब्दः ॥

## अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः ॥ ३४ ॥

सूर्य्याय जुष्टं निर्वपामीत्यूहः । तथा यत्र यजमानस्यार्षेयं व्रियते स प्रवरः । यच्च यजमानतत्पुत्रादीनां नामग्रहणं तन्नामधेयं, यथा सुब्रह्मण्यायां देवदत्तो यजत इत्यादि । तेषामपि तच्चोदकेष्वित्यस्माल्लक्षणान्मन्त्रमध्यपाताच्च मन्त्रत्वप्राप्तावुच्यते ॥

स्वाध्याये पठ्यमानेषु येषु मन्त्रपदं स्मृतम् ।

ते मन्त्रा नाभिधानं हि मन्त्राणां लक्षणं स्थितम् ॥

किं पुनरेकस्मिन्पद ऊह्यमाने समस्तस्यैवामन्त्रत्वं ऊहितपदमात्रस्यैव वेति । समस्तस्यैवेति प्राप्तम् । कुतः ॥

स्वरवर्णानुपूर्व्यादिविशिष्टे हि प्रयुज्यते ।

मन्त्रशब्दस्ततोऽन्यत्वे न तस्यार्थः प्रतीयते ॥

संप्रदायकालावगतरूपान्यत्वं चेत्केन चिदप्यंशेन जातं न शक्यते मन्त्रत्वं प्रत्यभिज्ञातुम् । अथैकदेशेऽपि तत्सञ्ज्ञाभ्युपगमः, ततः सर्वत्रैव मन्त्रपदाविशेषान्मन्त्रत्वप्रसङ्गः । तस्मादेकवर्णापायेऽपि मन्त्रत्वाभावात्समस्तमन्त्रकार्य्यनिवृत्तिः । ततश्च यथैव तद्विनाशे सर्वावयववर्त्तिनि प्रायश्चित्ताभावः, एवं मन्त्रक-

न्दोविषयत्वेन यावन्तः शब्दविशेषाः स्मर्य्यन्ते तैर्न्न भवितव्य-मित्येकपदतदवयवोऽपि तन्मन्त्रगतसर्वच्छान्दसोपोद्धारेण लौकिकशब्दप्रयोगः कर्त्तव्य इति ॥ अत्र ब्रूमः ॥ तावन्मात्रमेवामन्त्र इति । कुतः ॥

आकृतीनामभिव्यक्तिर्य्या कथं चिन्निरूपिता ।
नासाववयवाधिक्यविनाशेषु विनश्यति ॥

न हि गोर्गद्गुनि जाते विषाणे वा भग्ने गोत्वं तिरोधीयते तदभिव्यक्तिसमर्थावयवान्तरसद्भावात् । कियत्यपि संस्थाने ध्रियमाणे सर्वा विज्ञायन्ते । सा चेयं मन्त्राकृतिर्विशिष्टस्वरवर्णानुपूर्व्याद्यभिव्यक्ता न किंचिद्विकारदर्शने नश्यतीति प्रत्यक्षमुपलभामहे । तथा हि ॥

यत्र वर्णविकारो वा वर्णलोपो ऽपि वा स्मृतः ।
स्वरान्तरनियोगो वा न मन्त्रस्तत्र नेष्यते ॥

यत्र वचनाद्वर्णलोपं विकारं वा कृत्वा प्रयोगः ऐरं कृत्वोद्गेयमित्यादौ, यत्र च स्वाध्यायकालदृष्टत्रैस्वर्य्यादिपरित्यागेनैकश्रुत्यं नियुज्यते न तत्र कस्य चिन्मन्त्रबुद्धिरपैति । स्यादेतद्वचनसामर्थ्यादिह नापैतीति ॥ तदयुक्तम् ॥ वचनेन हि प्रयोक्तव्यमेतदुच्यते न मन्त्रत्वं न नश्यतीति, न हि वचनविनियुक्तानां व्रीह्यादीनां मन्त्रत्वं भवति, अतश्चामन्त्राणामेव सतां वचनाद्विनियोग इत्यापद्यते । न चार्हति भवितुममन्त्रत्वं मन्त्रत्वप्रत्यभिज्ञानात् । अतश्चात्रापि काममिरापदादीनामेवामन्त्रत्वं भवतु न सकलस्य वाक्यस्य । न च तेषामपि समस्तवेदालोचनेन मन्त्रत्वनिरूपणादिह गिरापदवान्मन्त्र इहेरापदवानिह त्रैस्वर्य्यवानिहैकश्रुतिमानिति ज्ञायते एवावधार्य्यते ।

यद्येवमूहादीनामपि मन्त्रत्वप्रसङ्गः । तत्रापि हि प्रकृतिविकृत्यालोचनेन शक्यमेवं निरूपयितुम् । इहाग्निपदवान्निर्वापमन्त्र इह सूर्य्यादिपदवानिति । नैतत्समानम(१) । कुतः ॥

यत्र वैदिकमन्यत्वं तत्र मन्त्रत्वमिष्यते ।

न्यायेन कल्प्यमाने तु न शक्यं तन्निरूपणम् ॥

वैदिकं ह्यालोच्यैवमवधारणा भवति । इहेदृशो मन्त्र इहेदृश इति । सूर्य्यादिपदप्रयोगस्तु कार्य्यवशेन न्यायात्कल्प्यते, न च मन्त्रत्वं न्यायगम्यमिति वैषम्यम् । ननु चातिदेशो ऽपि वेदप्रकार एवेति सर्वमूहादिकं वैदिकम्, इतरथा ह्यप्रमाणकमेव स्यात् । न ह्यङ्गाङ्गिभावः प्रत्यक्षानुमानादिगम्यः । तस्मात्सूर्य्याग्निपदयोरविशेष इति । अत्रोच्यते ॥

सत्यमूहस्यापि नावैदिकत्वम् । अत एवानाम्नातेष्वमन्त्रत्वमित्युच्यते, वेदभागो हि कश्चित्प्रत्यक्षः श्रूयते, कश्चिदनुमानादिगम्यः । प्रत्यक्षश्रुतस्याम्नात इत्युच्यते । तत्र यथेराग्निपदादीनां विनियोगः श्रूयते नैवं सूर्य्यपदादीनाम् । ननु सौर्य्यं चरुमित्येतदेव श्रुतिसमवायित्वाद्देवतायाः सूर्य्यपदस्य विनियोजकं श्रूयते । नैतन्मन्त्रे सूर्य्यपदस्य प्रक्षेपं ब्रवीति हविषस्त्यागकालमात्रे तदुच्चारणाभिधानात् । यस्तु मन्त्रेषु तत्प्रक्षेपः सो ऽतिदेशकृतो भविष्यति । न चातिदेशवचनन्यायलभ्यत्वादेवाम्नायते । तस्मादनाम्नातविनियोजकत्वादमन्त्रत्वं सूर्यपदादीनाम् । नन्वेवं सति प्रवरनामधेययोः प्रत्यक्षोपदेशान्मन्त्रत्वप्रसङ्गः । स्यादेवं यदि तत्स्वरूपमाम्नायेत, वचनार्थं तु ज्ञात्वा ऽनाम्नातयोरेव प्रवरनाम्नोः प्रयोगान्न मन्त्रत्वनिरूपणायाम-

(१) नैतत्सारम् । इति २ पु० पाठः ।

न्तर्गतिः । एवं तर्हि यत्रापि सर्वनामयुक्तमन्त्राम्नाने सति त-
स्य स्थाने ऽन्यपदप्रक्षेपः क्रियते तत्राप्यमन्त्रता स्यात् ।
तथा नामेति केचित् । अथ वा विशेषाणामानन्त्यादे-
युगपत्कालत्वाच्चाम्नातुमशक्तेः स्वरूपस्य सर्वनामप्रकारेणा-
म्नानमस्त्येवेत्यशून्यस्थानत्वान्मन्त्रस्य शक्यमेवं निरूपणं कर्त्तुं
यदत्र पदं निवेक्ष्यते तद्वानयं मन्त्र इति । इतरथा हि
सर्वनाम्नामप्रयोगार्हत्वाद्यदि विशेषाम्नानमेव(१) तत्तेनोपाये-
नेति न गृह्यते, ततस्तदंशन्यूनत्वान्मन्त्रस्वरूपस्य व्यर्थमेव सर्व-
नामाम्नानं स्यात् । प्रवरनामधेयवदेव तु विधानात्तदवकाश-
स्थपदप्रयोगः कल्प्यते । तस्मादेवमादीन्याम्नातान्येवेति मन्त्र-
धर्म्मैः संवध्येरन् । न तु प्रवरादीनां मन्त्रपाठकाले कश्चिदपि
संस्पर्शः । न च ब्राह्मणेन रूपं दर्शितं येन प्रवचनलक्षणत्वा-
न्मन्त्रत्वाध्यवसानं भवेत् । अतश्च विकृतिष्वभिधानार्थचोदका-
भ्यां सकले मन्त्रे प्रापिते यावन्मात्रमर्थाभावाद्धावर्त्त्यान्यत्प्र-
क्षिप्यते तावन्मात्रमेव लौकिकम् । अवशिष्टं तु तथा प्राप्तमेव क्र-
त्वाकाङ्क्षितप्रत्यभिज्ञायमानमन्त्रत्वं चेति न प्रायश्चित्तच्छान्द-
सप्रयोगैर्वर्ज्जनीयमिति सिद्धम् ॥ १० ॥

## तेषामृग्यत्रार्थवशेन पाद-
## व्यवस्था ॥ ३५ ॥

प्रसक्तानुप्रसक्त्यापतितमृगादिलक्षणाभिधानम् । शब्दार्थस्य
वृद्धव्यवहारगम्यत्वात्कृते ऽपि तल्लक्षणे तन्मूलमभियुक्तोपदेश-

(१) मेवैतनेनेति २ पु० पाठः ।

मेव दर्शयति। क्रियापदानुपादानादग्निः पूर्वेभिरित्यपर्य्यवसिते ऽर्थे वृत्तवशेन पादव्यवस्था। ननु चाग्निमीळ इत्यपि समस्ताया ऋच एवार्थवत्त्वान्नैव प्रतिपादमर्थं पर्य्यवस्यति इति न वाच्यमर्थवशेन पादव्यवस्थेति। कथं न वाच्यम् अग्निमीळे पुरोहितमिति तावत्प्रत्यक्ष समाप्तो ऽर्थो दृश्यते। परयोः पादयो(१)रसमाप्त इति चेत् नाख्यातानुषङ्गेण समाप्तेः सिद्धत्वात्। तस्मात्साधूक्तमिदार्थवशेनेति। एतस्य तु प्रदर्शनार्थत्वान्न वृत्तवशव्यावृत्तिरित्यनिषिद्धमुक्तम्॥ ११॥

## गीतिषु सामाख्या॥ ३६॥

तेषामित्यनुवर्त्तते॥ अत्रापि स एवाभियुक्तोपदेशोपन्यासः। प्राथम्यादयथाम्लं दधीति पूर्वत्रैव वाच्यं सदनादरादिहोदाहृतम्। अथ वा यथा ऽनेकधर्म्मसमाहारे सति दधिगुडयोरसविशेषमात्रमम्लमधुरशब्दावुपाददति। तथा सामशब्दो गीतिमात्रमित्यत्रोदाहरणम्। ननु च प्रत्यक्षगम्यत्वाद्रसविशेषस्याभियुक्तोपदेशो ऽनुवादत्वान्नैव प्रमाणम्। नैष दोषः। प्रत्यक्षमेवात्रेति करणावच्छिन्नं निदर्शनम्। एतदुक्तं भवति। यथा ऽम्लं दधि मधुरो गुड इत्येतद्विज्ञानं प्रमाणमेवमभियुक्तोपदेश इति गीतेर्विशेषणत्वात्पूर्वेतरप्रत्यायने सत्याकृतिवदभिधेयत्वं निर्णेतव्यम्। आह च॥

> एकखण्डेन शब्देन विशिष्टो यत्र गम्यते।
> विशेषणस्य वाच्यत्वं तत्र सर्वत्र जायते॥ १२॥

---

(१) पदयोरिति २ पु० पाठः।

## शेषे यजुःशब्दः ॥ ३७ ॥

शेषे ब्राह्मणशब्द इतिवत्समस्तं व्याख्येयम् ॥ १३ ॥

## निगदो वा चतुर्थं स्याद् धर्म्मविशेषात् ॥ ३८ ॥

शेषे यजुःशब्द इत्येतद्व्यावर्त्तनार्थो वाशब्दः । चतुर्थं मन्त्रजातं निगदः स्यात् धर्मान्यत्वात् । यदि तावदुच्चैर्निगदेनेति विधिस्ततो यजुर्द्धर्म्मबाधा मा भूदित्यर्थान्तरत्वम् । अथानुवादः स नैव प्राप्नोति व्यतिरेकेण विनेति भेदः ॥

## व्यपदेशाच्च ॥ ३९ ॥

## यजूंषि वा तद्रूपत्वात् ॥ ४० ॥

अद्दे बुध्निय मन्त्रं मे गोपायेति त्रिष्वेव मन्त्रत्वस्योपसंहारात् । वेदे च मन्त्रसामानाधिकरण्येन निगदशब्दप्रयोगाद्यजुष्ट्वापरित्यागेनैव च धर्म्मविशेषव्यपदेशभेदसिद्धेः परिशेषसिद्धयजुर्लक्षणयोगाच्च यजूंष्येव निगदाः ॥

## वचनाद् धर्म्मविशेषः ॥ ४१ ॥

न्यायप्राप्तोच्चैर्द्धर्म्मानुवादत्वज्ञानान्न विधानादिति व्याख्यानम् । यं त्वेते ऽर्थं वदन्ति तमुपांशुत्वेन शक्नुयुर्वक्तुमिति वचनादित्युच्यते ॥

## अर्थाच्च ॥ ४२ ॥

अस्ति चाऽऽग्नीदग्नीन्विहरेत्यादिवचनेनार्थोऽन्यथाऽनुष्ठानानुपपत्तेरिति धर्म्मविशेषप्राप्तिः । तथा च निगदशब्दावयवव्युत्पत्तिसिद्धिः । वाचनिकमपि चोपांशुत्वमनुपकारत्वेनानङ्गत्वान्निगदव्यतिरिक्तयजुर्विषयं विज्ञायते ॥

## गुणार्थो व्यपदेशः ॥ ४३ ॥

ब्राह्मणपरिव्राजकवद्गुणेन व्यपदेशभेदः ॥

## सर्वेषामिति चेत् ॥ ४४ ॥

अतिप्रसङ्गद्वारेण गुणस्य व्यपदेशनिमित्ततां व्यभिचारयति ॥

## नर्ग्व्यपदेशात् ॥ ४५ ॥

न तावदतिप्रसङ्गोऽस्ति निगदं निन्दित्वा ऋचो विधानात् । न हि तमेव निन्दित्वा तस्यैव विधिरवकल्पते । न च व्यभिचारित्वम् । गदतिवशेन यजुष्ट्वे सति धर्म्मविशेषस्य व्यपदेशभेदनिमित्तत्वात् ॥ १४ ॥

## अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ॥ ४६ ॥

केचिदेतत्सूत्रं वाक्यलक्षणपरत्वेन व्याचक्षते । तत्रापि किल लौकिकवैदिकवाक्यलक्षणासंभवे हेतुप्रसिद्धिवशेन लौकिकानामेवैतल्लक्षणम् । कुतः ॥

अन्यतोऽवगतेऽर्थे हि लोके वाक्यं प्रवर्त्तते ।

तच्चैकार्थत्वविज्ञानात्सुखबोधैकवाक्यता ॥

लौकिकानां हि वाक्यानां प्रमाणान्तरेणार्थस्तदेकत्वं चावधार्यते । तच्च प्रसिद्धेन हेतुना शक्यमेकवाक्यत्वमवगन्तुम् । वैदिकानां पुनरनन्यप्रमाणगम्यत्वात्प्राग्वाक्यात्तदेकत्वाज्ञानादज्ञाते ऽर्थे तदेकत्वसिद्धिर्नास्तीत्येतल्लक्षणानुपपत्तेरर्थापत्त्या विपरीतं लक्षणं द्रष्टव्यम् । वाक्यैकत्वादर्थैकत्वमिति । यथैव हि धर्मिणा वाक्येन धर्म्म्यन्तरमर्थः प्रतिपाद्यते । तथैकवाक्यधर्म्मैणैकत्वेनार्थैकत्वम् । आह च ॥

नित्यवाक्याधिगम्यत्वाद्यथा वाक्यं प्रवर्त्तते ।
वेदार्थस्तदसिद्धेस्तु न वाक्यस्यार्थवश्यता ॥

अत्राभिधीयते ॥ वेदव्याख्यानप्रवृत्तस्य जैमिनेः कः प्रसङ्गो लौकिकवाक्यलक्षणाभिधाने । वैदिकवाक्यलक्षणस्यापि भेदलक्षणे कः प्रस्तावः । किमर्थं प्रमाणलक्षणएव नोक्तम । एकशब्दश्च न वक्तव्यो ऽर्थैकत्वाद्वाक्यमित्येतावतैव सिद्धत्वात् । कथं च मन्त्राधिकारे तदसंबद्धोऽर्थो ऽभिधीयते । भाष्यकृतश्च प्रश्लिष्टपठितेषु यजुःष्वित्युपन्यासः प्रमाणवानपि विना कारणेनातिक्रान्तः । किं च ॥

यजुर्भेदं च मुक्त्वैतद्वाक्यैकत्वस्य लक्षणम् ।
मन्त्रब्राह्मणलोकेषु वक्तव्यं कोपयुज्यते ॥

ऋक्सामयोस्तावत्परिमाणं प्रयोगसमर्थं प्रसिद्धमिति न कश्चिद्वाक्यलक्षणादेकवाक्यतालक्षणाद्वोपकारो भवति । तथा ब्राह्मणे ऽग्निहोत्रादिवाक्यैः साध्यसाधनेतिकर्त्तव्यतावत्यां भावनायां नियुक्तेषु पुरुषेष्वेकानेकवाक्यज्ञानं कोपयुज्यते । नन्वयमुपयोग, एकवाक्यतालक्षणज्ञो वाक्यभेदं परिहरिष्यति ।

नायमुपयोगः । कुतः ॥

वाक्यभेदो ह्यसामर्थ्यं शब्दावृत्त्यादिदोषतः ।

एकनानात्वविज्ञाननिरपेक्षो ऽवधार्यते ॥

पदतदेकदेशगतसमूहावृत्तिप्रसङ्गात्मकस्तद्विभागलक्षणो वा वाक्यैकत्वनानात्वज्ञाननिरपेक्षैरेव दोषत्वेनावधार्यते । विभागलक्षणे गम्यमानसंबन्धपरित्यागो ऽनेकादृष्टकल्पना च दोषः इतरत्रावृत्तेरवेदत्वादप्रामाण्यम्, इति नैकवाक्यलक्षणेनार्थः । पौरुषेयवाक्ये(१) तु लक्षणनिरपेक्षस्य लोकस्य व्यवहारसिद्धेरत्यन्तानौपयिकत्वम् । यदि चार्थैकत्वेन वाक्यैकत्वमवधार्यते वाक्यस्यार्थप्रत्यायनार्थत्वात्तत्स्वरूपैकत्वज्ञानोत्तरकालभाविना किं वाक्यैकत्वज्ञानेन । वक्तृणां च परप्रत्यायनार्थो वाक्यप्रयोग इति नात्मार्थं लक्षणज्ञानापेक्षा । श्रोतृणां पुनरत्यन्तानवगते(२)ऽर्थे प्रवर्त्तमानं पुरुषवाक्यमपि न वेदवाक्याद्भिद्यते(३) । अवगतार्थं त्वनुवादत्वादनादृत्यमेवेति नैकानेकज्ञानमपेक्ष्यते । किमर्थं च वैदिकानां लक्षणं नोक्तम् । यदि त्वर्थापत्त्योक्तमेवेति तन्न । श्रुत्या तल्लक्षणमभिधायार्थापत्त्या लौकिकवाक्यसिद्धि(४)राश्रयितव्या । न चार्थापत्तिः संभवति । न ह्येतल्लौकिकवाक्यलक्षणज्ञानमीदृशेन वैदिकवाक्यलक्षणेन(५)विना नोपपद्यते । न चैतस्यापि वाक्यलक्षणता सिद्धा, वाक्यैकत्ववशेनार्थैकत्वलक्षणा-

---

(१) वाक्येषु इति २ पु० पाठः ।

(२) अन्यतो ऽनवधारित इति २ पु० पाठः ।

(३) वैदिकवाक्याद्भिद्यतइति २ पु० पाठः ।

(४) लौकिकव्यवहारसिद्धिरिति २ पु० पाठः ।

(५) लक्षणज्ञानेनेति २ पु० पाठः ।

र्थापत्त्युपन्यासात्। अपि च कदा चिद्वैदिकाना(१)मप्येतल्लक्षणम्। अत्यन्तविप्रकृष्टं वा किं चिद्वैदित्याशङ्कितत्वान्न नियोगतो ऽर्थापत्तिः। न च परिसंख्या, सामान्यविशेषभेदानुपादानात्। यदि हि सामान्येनेदं लक्षणं क्व चिदभिधाय पुनः केवलपौरुषेयसंबद्धमुच्येत ततः परिसंख्यावशेन वैदिकानामिदं तावन्न भवतीत्येतावन्मात्रं गम्येत। न तु लक्षणविशेषो ऽनेकोपप्लवात्। एवमपि हि विपर्ययकल्पनं संभवति, अर्थानेकत्वादेकं वाक्यं निराकाङ्क्षं चेद्विभागे स्यादिति। अथ वार्थैकत्वान्नानावाक्यत्वमिति। तस्मादकल्पनेयम्। किं च॥

कथं चार्थानपेक्षत्वे वाक्यैकत्वं प्रसिध्यति।
न हि वर्णस्वरूपेण ज्ञातेनैतन्निरूप्यते॥

वाक्यैकत्वाच्चार्थैकत्वे ऽवधार्यमाणे ऽवश्यमर्थनिरपेक्षं वाक्यैकत्वमवगन्तव्यम्। न च तस्यावधित्वेन किं चित्पश्यामः वर्णशतं वर्णसहस्रं वा॥ तथा हि॥

अज्ञातार्थेषु वर्णेषु बहुवाक्यैकवर्त्तिषु।
न कदा चिन्मतिर्दृष्टा वाक्येयत्त्वावधारणे॥
तस्मात्पदेषु यावत्सु श्रूयमाणेषु दृश्यते।
विस्पष्टमैक्यमर्थस्य तावतामेकवाक्यता॥

लोकमन्त्रब्राह्मणेष्वव्यभिचारयैतदेव वाक्यलक्षणमिति स्थितम्। यत्तु न प्राग्वाक्यादर्थतदेकत्वावधारणमस्तीति। अत्र ब्रूमः॥

पदार्थैः पदविज्ञातैर्वाक्यार्थः प्रतिपाद्यते।
लोकसिद्धैर्न तत्रास्ति वाक्यैकत्वनिमित्तता॥

---

(१) वैदिकवाक्यानामिति २ पु० पाठः।

यदि हि वाक्यं पदवद्वाचकं भवेत् ततस्तदेकत्वानेकत्वानुवर्त्तिता वाक्यार्थस्याभ्युपगम्येत कदाचित्। यदा तु पृथग्भूतैरेव पदैरितरेतरनिरपेक्षैः स्वेषु पदार्थेषूक्तेषु तत्संसर्गादेव पदव्यापारानपेक्षो वाक्यार्थप्रत्ययो भवति, तद्वशेन च तावन्ति पदानि एकं वाक्यमित्यवधार्यन्ते, न तदा वाक्यतदेकत्वयोर्व्यापारं पश्यामः। तस्मादविरोधः॥

भावनैव च वाक्यार्थः स्वकारकविशेषिता।
तस्याश्च ज्ञायते नित्यं भेदः शब्दान्तरादिभिः॥

यस्मिन्पदसमूहे शब्दान्तरादिभिर्न्न भावनान्तरं प्रतिपाद्यते तस्यैकवाक्यत्वं भावनान्तरापेक्षया तु नानात्वम्। तच्चैतदुभयमप्यन्यत एव ज्ञायतइति अनिमित्तं वाक्यैकत्वमर्थैकत्वस्य। तस्माद्यथाभाष्यमेव व्याख्यातव्यम्। भेदलक्षणे मन्त्रप्रस्तावे च तद्भेदस्तावदृग्यजुःसामात्मको ऽभिहितस्तदवान्तरभेदाकाङ्क्षायामृक्सामानामध्येतृसिद्धे भेदे लक्षणं न क्रियते(१)। यजुषां तु प्रश्लिष्टपठितत्वान्न लक्षणादिना भेदज्ञानमित्यारभ्यते। ननु भिन्नप्रतीकविनियोगात्तद्भेदः सेत्स्यतीति। न तावत्सर्वेषामेव ब्राह्मणे विनियोगो ऽस्ति। न चोत्तरादिः पूर्वान्तलक्षणमित्येतद्वेदवचनम्। न्यायेन तु सूत्रकारैरेवात्मीयब्राह्मणविनियोगेष्वेतदुक्तमिति न्यायस्य लक्षणमुच्यते। तत्रावयवव्युत्पत्तिवत्तेनाह यावतेज्यतइति। सर्वैर्मन्त्राणामनेन यजेतेति हि प्रथमं प्रकरणाम्नानानुमितवाक्यविनियोगो भवति। ततः साक्षाद्यागसंबन्धासंभवात्तदुपकारिप्रकाशनेन तैरिष्टं भवतीति कल्प्यते। तेनोच्यते॥

---

(१) वक्तव्यमिति २ पु० पाठः।

यावता पदसंघेन स्मार्यते यागसाधनम् ।

तावद्यजुश्च वाक्यं च वक्तव्यत्वान्निरूप्यते ॥

द्वचनार्थं हि वाक्यं, कार्ये समर्थं च तदर्थं भवति न न्यूनमधिकं वा, तावतैव चेज्यते । तत्तु कीदृशमित्येकार्थं साकाङ्क्षावयवं चेति लक्षणम् । ईदृशं चेदेकं यजुर्यत्ततोऽधिकं तद्वाक्यान्तरं यजुरन्तरं चेत्युक्तं भवति । एवं सर्वत्र पुरस्तात्परस्ताद्वा एकार्थत्वसमर्थपदपरिग्रहणादसमर्थविमोकेन (१) च भिन्नानि यजूंषि कल्प्यन्ते । तेनैकवाक्यलक्षणोक्तौ चार्थाद्यजुर्भेदवाक्यभेदलक्षणयोः सिद्धिरित्येतस्माच्चेत्कारणादित्याह । किमुदाहरणमिति । अभिधेयवाचिनमर्थशब्दं गृहीत्वा लक्षणद्वयसमावेशासंभावनया पृच्छति । तथा हि ॥

एकार्थत्वं पदस्य स्यात्साकाङ्क्षावयवं न तत् ।

साकाङ्क्षावयवः संघस्तस्यैको ऽर्थो न विद्यते ॥

पदस्य ह्याकृतिर्नामैको ऽर्थो भवेन्न तु तदवयवानां वर्णानां प्रकृतिप्रत्यययोर्वा विभागे साकाङ्क्षत्व,मर्थप्रत्यायनशक्त्यभावा,त्समूहावयवास्तु पदानि विभागे परस्परमाकाङ्क्षन्ति, न त्वेषामेकार्थत्वं प्रतिपदमर्थभेदा,त्समूहस्य च पृथगर्थान्तराप्रसिद्धेः । अतो लक्ष्याभावादलक्षणमेतदिति । प्रयोजनवाच्यभिप्रायेण देवस्य त्वेत्युदाहृतम् । नन्वितिपरः स्वाभिप्रायं प्रकटयति । यदा पदार्थव्यतिरिक्तः कश्चिदेको निर्भागो वाक्यार्थो नास्ति तदा तत्तत्पदार्थधर्मावेव सामीप्यवशात्तेषां गम्यमानौ भेदसंसर्गौ स्याताम् । अत आह तथाप्येकार्थता न स्यात् । कथम् ॥

(१) पदपरिग्रहेणासमर्थपदविमोकेनेति २ पु० पाठः ।

भेदो नाम पदार्थानामवच्छेदः परस्परम्।
स च प्रतिपदार्थत्वान्नैकत्वं प्रतिपद्यते ॥

व्यक्तिपदार्थपक्षे सर्वव्यक्तीनां गवादिपदेनैवोपात्तत्वाद्विषयशब्दैः शुक्लादिभिः कृष्णादिव्यवच्छेदमात्रं वक्तव्यम्(१)। तत्संसर्गः पदार्थान्तर्गतत्वान्न वाक्यार्थो भवतीति तदपसर्जनस्तेषां भेदो गृह्यते। स च यथा शुक्लशब्देन गोशब्दस्य कृष्णादिभ्यो भिद्यमानत्वाद्भवति, एवं शुक्लशब्दस्यापि गोशब्देनाश्वादिभ्यो निवर्त्तितस्य भवति, व्यवच्छेद्यनानात्वाच्च नास्त्येकत्वे प्रमाणम्। भेदसामान्यग्रहणे वा सर्ववाक्यार्थैकत्वप्रसङ्गः। यदा तु भेदवन्तः पदार्था एव वाक्यार्थस्तदा सिद्धमेव नानात्वम्। तथा ॥

संसर्गोऽपि पदार्थानामन्योन्येनानुरञ्जनम्।
एकैकत्र तदप्यस्तीत्येकत्वं न प्रतीयते ॥

आकृतिपदार्थपक्षे शुक्लत्वगोत्वयोः स्वरूपेणाभिहितयोः सन्निधानादितरेतरानुरञ्जनमर्थसिद्धमेव वाक्यार्थः। स च गोत्वे शुक्लत्वसंसर्गः शुक्लत्वे वा गोत्वसंसर्गः सामस्त्येनैकैकव्यक्त्युपसंहारादुपलभ्यत इति नाना। यद्यपि च कथं चिद् द्विपदे स एवोभयत्रापि संसर्ग इत्येकत्वं गम्येत, तथापि बहुपदे येन येन प्रदेशेन पदद्वयं संबध्यते तेन तेन संसर्गरूपेणोपलभ्यमानेऽनेकत्वम्। किं च ॥

स्वप्राधान्यात्पदार्थानां धर्म्माविेतावुभावपि।
धर्म्मिभेदेन भिद्येते न ह्येकत्वमुपाश्रितम् ॥

यावद्धि प्रयोजनैकत्वं नाश्रीयते तावत्स्वतन्त्राः पदार्था नैकतामापादयितुं शक्यन्ते इति पृथगेव भेदसंसर्गावनुभवन्ति।

(१) कर्त्तव्यम् इति २ पु० पाठः।

तस्मादपि नाना। यद्यपि चास्माकमाकृतिपदार्थकत्वान्नैव भेदो वाक्यार्थत्वेनाभिप्रेतस्तथापि पूर्वपक्षवादिना विकल्पमात्रेणोपन्यस्तः। सिद्धान्ताभिप्रायविवरणं प्रयोजनवाचित्वादर्थशब्दस्योपपन्नम्। एवं सत्येक एव कश्चित्पदार्थः प्रधानभूतस्तद्विशेषणत्वेनेतरोपादानमिति सर्वेषां च तद्भेदात्तत्संसर्गाच्चैको भेदः संसर्गो वेत्यपि शक्यं वदितुम्। तस्मात्कर्मसमवायित्वेन दृष्टार्थत्वादशेषसवित्रादिपदार्थविशिष्टनिर्वापप्रकाशनं समस्तस्य (१) पदसमूहस्यैकं प्रयोजनमिति सिद्धमुदाहरणम्। परस्तु निर्वापप्राधान्यमज्ञात्वा पृच्छति। नन्वत्र देवस्येति। सिद्धान्तवादाह यदि निर्वपामीत्यनुषङ्गस्तत एवं, स चानुषङ्गस्तद्गुणभावेन भवेत्, न चास्य गुणभावः प्रयोजनवत्त्वात्। सवित्रादीनां चाकर्मसमवायादित्येकार्थत्वम्। अथ किमर्थमभयं सचितमिति। येषां संहतानामेकप्रयोजनत्वं तेषां तदशक्तेर्व्यस्तानामेकान्तेनैव साकाङ्क्षत्वं भवति इत्यवाच्यं तत्। अथ वा विभज्यमानसाकाङ्क्षत्वं संहतैकप्रयोजनत्वेन विना न भवति प्रत्येककार्येषु निरपेक्षप्रवृत्तिसिद्धेः। अतः साकाङ्क्षविभागेनैव(२)तरांशेषात्सम्यक्त्वमेवाभिधातव्यमिति प्रत्युदाहरणं दर्शयति। उच्यत इति। पुरोडाशविभागप्रकाशनमेकं प्रयोजनं निरपेक्षाणां दृष्टम्। निर्वापे दक्षोत्तरापि विभागनानात्वपरिचोदना संहत्य विशेषणानुपादानात्पुनः पुनः प्रयुक्तस्यानुषङ्गदोषाभावादुपन्यस्यते। तत्रोत्तरं न तावन्निरपेक्षसाधनभेदादपि क्रियानानात्वमिति वक्ष्यामः। साधनप्राधान्यं तु प्रत्युक्तमेव। एतत्कृतो विशेषः कर्मानङ्गत्वा-

---

(१) अनन्तरस्येति २ पु० पाठः।

(२) साकाङ्क्षत्वांशनाभावेनेति २ पु० पाठः।

दनादरणीय इति सामान्यप्रकाशनादेकार्थत्वम् । तस्मिन्नीदे-
त्यस्य पूर्वापेक्षित्वे सत्यपि प्रयोजनभेदाद्वाक्यान्तरत्वम् । तस्मा-
त्संहतयोरेव लक्षणत्वम् ॥ १५ ॥

## समेषु वाक्यभेदः स्यात् ॥ ४७ ॥

येषामदृश्यमानकर्म्मसमवेतार्थत्वेन लैङ्गिकविनियोगाभावे-
न वचनाद्विनियोगः तेषां प्रागदृष्टार्थमन्त्रावधेरेकमन्त्रत्वं युक्त-
म् । तथा हि ॥

कल्प्यस्तेषामदृष्टो ऽर्थः स चाल्पः स्यात्प्रमाणवान् ।
कल्पिते च तदेकत्वे साकाङ्क्षाः स्युर्वियोजिताः ॥

यदा हि बहुदृष्टकल्पना निष्प्रमाणिकेत्येकमदृष्टं सर्वेभ्यः
कल्पितं भवति तदा प्रत्येकं तत्साधनशक्त्यभावाद्विभज्यमान-
साकाङ्क्षत्वमप्यस्तीति एकवाक्यता । कथं पुनरस्मिन् पक्षे प्रती-
कभेदेन विनियोग इषे त्वेति शाखां छिनत्ति ऊर्ज्जे त्वेत्यनु-
मार्ष्टीत्येवमादिः । कथं च स्रुग्भिर्वाचयतीति बहुत्वनिर्द्देशः । त-
दुच्यते ॥

एको ऽपि बहुभिर्म्मन्त्रः प्रतीकैर्विनियुज्यते ।
पुनः पुनः प्रयोगाच्च स्रुग्भिरित्यभिधीयते ॥

आदिमध्यावसानग्रहणैरेको ऽपि मन्त्रस्तत्र तत्र विनियुज्य-
मानो ऽपि न भिद्यते(१) । यावद्विनियोगं हि सकल आवर्त्तिष्यते
खण्डस्याप्रयोजनत्वात् । कल्पतां कल्पतामिति च पुनः पुनः प्र-
योगादेकवाक्यत्वे ऽपि बहुवचनाविरोधः । उच्यते । नैतदेवम् ॥

रूपादुत्तरकाले हि विनियोगप्रयोजने ।

(१) न भिद्यतइति २ पु० पाठः ।

तस्मात्प्रागेव तत्कृतभेदाभेदपरीक्षणम् ॥

तिष्ठतु तावत्प्रयोजनकल्पनम्, विनियोगवाक्यं वा, न हि त-दुत्तरकालं स्वरूपनिरूपणं युक्तम्। अज्ञातरूपस्य विनियोगा-शक्तेरविनियुक्तस्य च प्रयोजनकल्पनानुपपत्तेः। तत्तन्निरपेक्षं तु रूपं पाठादेवावधारयन्ति। तत्कालावधृतभेदाभेदानुवर्तित्वं तु प्रयोजनविनियोगयोः। प्रमाणवत्त्वानेकमपि कल्पनीयमित्यु-क्तम्। रूपोपलब्धिवेलायां चेषेत्वादिनां न परस्परसाकाङ्क्षत्व-मेकप्रयोजनत्वं चोपलभ्यते। ततश्च निष्प्रतिद्वन्द्वे ऽवधारिते भे-दे पश्चान्न किंचिदेकत्वापादने कारणं संभवति। न च प्रागनुपलब्धं साकाङ्क्षत्वं कल्पयितुं शक्यं, तेन च विना यद्यप्येक-प्रयोजनवत्त्वं भवेत्तथाप्येकाङ्क्षैकत्व्यादेकवाक्यत्वाभावः, किमु-त यदा रूपभेदाद्विनियोगभेदस्तद्भेदाच्चादृष्टार्थत्वे ऽपि प्रयोजन-भेदः। त्वत्पक्षे ऽपि चावश्यं यावद्विनियोगं तेन तेन भवितव्यम्। इयांस्तु विशेषः। तव समस्तान्मन्त्रान्मम व्यस्तेभ्य। न चैषामदृ-ष्टार्थत्वं ब्राह्मणोपदिष्टदृष्टार्थसाधनत्वात्। तद्बलेन चैषां यावता विना चोदितकरणसामर्थ्यं नास्ति तावदनाम्नातमपि कल्पनीयं छिनद्मीत्यादि। यदा यथैव रथघोषेण माहेन्द्रस्तोत्रमुपाकरोती-ति वचनादवाचकस्यापि विनियोगमात्रानुसंधानेन स्तोत्राभि-मुख्यचिन्हत्वं भवति, एवमिषेत्वादीनां छेदनादिस्मरणहेतुत्व-म्। उभयमपि चैतत्प्रमाणवदिति सूत्रकारैः कैश्चित्कथं चिदा-श्रितम्। सर्वथा त्वेवमध्यवसातव्यम्। विकलवाक्यप्रयोगासंभ-वात् अवाचकप्रयोगानुपपत्तेश्चाध्याहारः। अथ वा यथाम्नात-विनियोगानुसारात्तादृशेनैव स्मर्तुं संस्काराधाने यतितव्यम्। तत्रानुष्ठातृभिप्रायाधीनो ऽन्यतरपरिग्रह इति दृष्टप्रयोजनभे-

द्वादपि सिद्धो वाक्यभेदः । किं च ॥

अन्योन्यनिरपेक्षाणां कार्य्यान्यत्वे नियोगतः ।

प्रत्येकं यागहेतुत्वाद्यजुष्ट्वमवकल्पते ॥

तथा ऽऽयुर्यज्ञेन कल्पतामित्येवमादीनां निराकाङ्क्षभिन्नरू-
पोपन्यस्यैनैकत्वापत्तिः सत्यप्येकार्थत्वे । न च तदस्ति । आयुः-
कल्पनादीनां भिन्नत्वात् । निर्वापवदभेद इति चेत् न । क्लृप्तीरिति
मन्त्रबहुत्वचोदनायाः प्रत्यक्षत्वात् । इह तावदर्थानामकर्म्मा-
ङ्गापवादविवक्षायां सत्यां मन्त्रोच्चारणमात्रं प्रयोजनम् । तत्र
च बह्व्यः क्लृप्तय श्रूयन्ते । तद्भेदश्चार्थभेदमन्तरेण न भवतीत्युच्च-
रोपसर्ज्जनभूतो ऽर्थो नानात्वेनाश्रीयते । क्लृप्तिविशेषवचनं च
दृष्टार्थमिति मन्त्रबहुत्वापादनार्थत्वात् । यथा विभागत इति
सकृत्कृतनिर्वापस्यैव चत्वार्यात् क्लृप्तीनाम् । पुनः पुनरुच्चारितश-
ब्दो ऽपि यथा विभागः साधनभेदे सत्यपि न भिद्यते, तथा क्लृ-
प्तिभेदो ऽपि न भविष्यतीति मन्यते । नैतदेवमित्युत्तरम्, इह
सामान्यविवक्षानुपयोगात् । अथ वा सिद्धान्तवाद्येव यथा वि-
भागेनैतदेवमिति स्वयमेवैकवाक्यभूतमुत्तरं ददाति । ननु च
विभागवाक्यानामपि (१) भेदो ऽस्त्येवेति नोपन्यसनीयम् ।
एवं तर्हि नेवेदं प्रभेदप्रतिपत्त्यर्थं, (२) किं तर्हि दृष्टान्तेन सदै-
कत्वापादनपरत्वात्तदीयविकल्पापादनायोपन्यस्यति । यथा वि-
भागे तथा ऽत्र विकल्पः कस्मान्न भवतीति । नैतदेवमिति । स-
मानविषयत्वे हि विकल्पो भवति, न चेह सामान्यविवक्षा येन
विभागवदैकार्थ्यं भवेत् । क्लृप्तिविशिष्टायुराद्याशासनपरत्वात् ।

(१) भगो वा विभजतु इत्यादीनां विभागवाक्यानामिति २ पु० पाठः ।

(२) प्रतीत्यर्थमिति २ पु० पाठः ।

विभागे हि साधनानामप्रयोजनत्वात्सामान्यभूतक्रियामात्रप्रकाशनपरत्वम् । इह पुनरायुरादीनामाशास्यत्वेन प्राधान्यात्तद्विशेषणत्वेन वक्तृत्वमुपादानं न ह्यायुरादिविशिष्टा सा प्रकाश्यते, निष्प्रयोजनत्वात् । अथापि क्रियाप्राधान्यं तथापि तद्भेदपरत्वान्नानार्थत्वम् । भेदपरत्वे च पूर्वोक्तमेव दृष्टार्थत्वमुच्यते । अथ वा वक्तृशीर्वाचयतीति नैव मन्त्रपरः वक्तृशिशब्दः, कथं तर्हि क्रियावक्तृत्वाभिधान एव, शब्दानामर्थतन्त्रत्वात् । अतश्च बहुत्वसंख्यया कर्मभेदादिविशेषणकृतभेदाश्रयणाच्च मन्त्राणां तत्परत्वे चोदितार्थनिर्वृत्त्या दृष्टार्थत्वात्सिद्धा भिन्नार्थता । कथं पुनरस्मिन् पक्षे वाचयतीत्युच्यते, शब्दपदार्थको ह्ययं प्रयुज्यते । नैष दोषः । उभयत्र प्रयोगात् । यथैव हि शब्दं ब्रुवन्तं प्रयुञ्जानो वाचयतीत्युच्यते तथैव च यः शब्देनार्थं ब्रवीति तस्यापि प्रयोजको वाचयतीति । तस्मात् वक्तृशिक्रियाशब्दैर्यजमानं वक्तुं प्रवृत्तमध्वर्युर्वाचयतीति अयं अर्थो विज्ञायते, तत्प्रकाशनेन च भिन्ना एव सन्तो मन्त्रा दृष्टार्था भवन्तीति वाक्यभेदः ॥ १६ ॥

## अनुषङ्गो वाक्यपरिसमाप्तिः सर्वेषु तुल्ययोगित्वात् ॥ ४८ ॥

ज्योतिष्टोमे तिसृणामप्युपसदामादावग्नेयी विहिता अग्निमनीकमिति । तत्र प्रथमायाः क्रमे या ते अग्ने यासयेति निराकाङ्क्षो मन्त्र आम्नायते उत्तरयोस्तु साकाङ्क्षौ या ते अग्ने रजाशया या ते अग्ने हराशयेति । तत्र स्त्रीलिङ्गयच्छब्दनिर्देशस्य चोपदार्थेन केन चिद्विना परिपूर्णता नास्ति । न चापरिपूर्णेन

व्यवहारो ऽवकल्पते तत्र तदन्यथानुपपत्त्या ऽवश्यं परिपूरण-समर्थो वाक्यशेषः कल्पनीयः। कुतः।

न्यूनवाक्यप्रयोगो हि वेदे नैव समाश्रितः।
कश्चित्क्वापि स्थितः शेषः सोऽन्वेष्टव्यः प्रयत्नतः॥

न हि वैदिकवाक्यानां प्रत्यक्षमेवैकं प्रमाणं, तद्वदेव ह्यनुमानादीन्यपि प्रमाणानि। सर्वप्रमाणप्रत्यस्तमये च षष्ठेनाभावः परिच्छिद्यते। तदिह प्रत्यक्षानुपलब्धे वाक्यशेषे न तावत्येवोपरन्तव्यम्। यद्यनुमानादीन्यपि निवर्तिष्यन्ते तत एतावानेवायं मन्त्र इति कल्पयिष्यामः। अथ तु तैः कश्चिदवगम्यते ततस्तत्सहितो ऽयं मन्त्रः सकलः प्राक् तस्मादून इत्यध्यवस्यामः। तदिहार्थापत्त्या तावत्सामान्यतः कश्चिदस्ति शेष इत्यध्यवसेयम्। ततश्चाभावस्यानवसरादूनमिदं वाक्यं न प्रयोगार्हम्। तत्र विशेषाकाङ्क्षायां लौकिकः कल्पनीय उत वैदिक एव पूर्वमन्त्रस्थस्तनूर्वर्षिष्ठेत्यादिरनुवक्तव्य इति संशये लौकिक इत्याह। तथा हि।

नान्यत्रोत्सहते गन्तुं वैदिकं सन्निबन्धनम्।
यथेष्टविनियोगं तु सर्वार्थं वस्तु लौकिकम्॥

यथैवाहवनीयादयो वैदिकास्तन्निर्दिष्टकार्यव्यतिरेकेण न निवर्तन्ते तथैव वैदिकः शेषो यत्र वाक्ये समाम्नायेन विनियुक्तः स तन्निबद्धत्वान्नान्यत्र प्रयोगं क्षमते। लौकिकः पुनरनिबद्धत्वात्सर्वार्थः सर्वाकाङ्क्षापूरणायापि नियुज्यमानो न विरुध्यते। तस्माल्लौकिकः। तत्र यदि वैदिकमपि रचितत्वाल्लघुतरप्रयोगं रचयितव्यादवैदिकाल्लौकिकात्मना मन्वानः प्रयुङ्क्ते न केन चिद्वार्यते। वैदिकत्वबुद्धिस्तु तत्र न कर्तव्या। तथा हि।

तानेव वैदिकान्वर्णान् भारतादिनिवेशितान् ।
स्वाध्यायनियमं हित्वा लोकबुध्द्या प्रयुञ्जते ॥

यदि त्वानन्तर्यविशेषादजाग्रयेत्यनेनापि संबन्धोऽभ्युपगम्येत ततो यथानिवेशं प्रयोगात्पुरस्तादेवास्य प्रयोगः प्राप्नोति। तस्मादपि न वैदिकः शेषः इति प्राप्ते उच्यते ।

विमुक्तव्यापृतौ वेदे लौकिकावसरस्थितिः ।
तद्व्यापारविमोकश्च सकलान्वेषणाश्रये ॥

वैदिकस्य वाक्यस्य वैदिक एव शेषः पूरणक्षमो न लौकिकः । चोदनालक्षणधर्मनियमात् । यदा तु वेदः सर्वात्मना ऽन्विष्यमाणोपि त्यक्तव्यापारो दृश्यते तदा लौकिकमप्यनुजानाति । सा वा ऽन्वेषणा यथासन्निकर्षं प्रवर्त्तते । तच्च ॥

अदृष्टः प्रकृतावर्थः प्रत्यये ऽन्विष्यते पुनः ।
पदे स्वस्मिन्नलब्धस्तु प्रार्थनीयः पदान्तरे ॥
स्वस्मिन् वाक्ये ऽपि न स्याच्चेन्मृग्यो वाक्यान्तरे ततः ।
वाक्यान्तरे ऽपि न स्याच्चेन्मृग्यः प्रकरणान्तरे ॥

एकस्मिन्नर्थे साकाङ्क्षेभिहिते प्रकृत्या प्रत्ययेन वा तत्संबन्धसमर्थमर्थान्तरं यदि वा तत्रैव दृश्यते ततो रमणीयम । अथ न दृश्यते ततः प्रमादात्तस्मै परित्यज्य प्रकृतौ प्रत्यये चान्वेष्टव्यः । तयोरपि चेन्न दृश्यते ततः पुरस्तात्परस्तादानन्तरोच्चरिते पदान्तरे । न चेदनन्तरे लभ्येतैकान्तरद्व्यन्तरादिव्यवहिते । यदि तु स्ववाक्ये न लभ्येत ततस्तेनैव क्रमेण प्रकृते वाक्यान्तरे । वाक्यान्तरे ऽपि त्वलभ्यमानो यथोपस्थाप्यमानानुसारेण प्रकरणान्तरे । यदा तु तत्रापि न लभ्यते तदा लोके। लोके ऽपि चेन्नोपलभ्येत ततो नास्तीत्येवमवधार्याकाङ्क्षाबुद्धिं भ्रान्ति-

त्वेन परिकल्प्य निराकाङ्क्षीकर्त्तव्यम् । सर्वत्र च ।

सन्निकृष्टो न लभ्यश्चेद्विप्रकृष्टोऽपि वैदिकः ।
स एवावैदिकस्तु स्यात्प्राप्तः सन्निहितो यदा ॥

तदिह रजाशयाह्वराशयावाक्ययोः शेषः स्वपदस्ववाक्ययोरलभ्यमानत्वाद्वाक्यान्तरे नूनमित्युपसंह्रियते। स च यादृगाकाङ्क्षितस्तादृगेवैकानन्तरं पुरस्तादुपलभ्यते अन्यस्य व्यवहितः। यद्यपि चासौ प्रथममन्त्रे कृतार्थत्वान्न तावाकाङ्क्षति तौ तु तेन विनानुपपद्यमानावात्मसमीपेऽन्यस्यानाम्नानादेवं पुरूपं प्रयुञ्जाते। सर्वसमीपे सकृत्पठितुमशक्यः प्रमाणान्तरलभ्यत्वाच्च पुनः पुनरश्रावितोयमावयोरप्यर्थेनाम्नातः शेषो नैकस्यैव सन्निधिविशेषनिमित्तभ्रान्त्या कल्पयितव्य इति यद्यपि च पुरस्तादालोच्यते, तथापि यत्प्रदेशवर्त्तित्वेन ताभ्यां काङ्क्षितस्तत्रैव विनियुज्यते। कुतः॥

प्रतीतिमात्रलाभार्थं तत्प्रदेशे स पठ्यते ।
योग्यत्वात्सन्निवेशस्तु पूर्वमन्त्रवदिष्यते ॥

स हि सकृदाम्नायमानः सर्वेषामीप्सिते प्रदेशे न शक्य आम्नातुमित्येकस्य यथाक्रममाम्नात इतरयोश्च यावता बुद्धिविषयतामापद्यते, ततश्च गृहीतः सन् स्वयमपि प्रदेशान्तरे स्थातुमसमर्थस्ताभ्यामपि चान्यवृत्तित्वेनानाकाङ्क्षितः पूर्वत्र च परस्ताद्भावितया दृष्टसामर्थ्यः परस्तादेव निवेश्यते । भाष्यकारेण तु प्रथमद्वितीययोर्मध्ये पाठादगृह्यमाणविशेषः शेष उभयोरप्यानन्तर्येणैव संबन्धीत्युक्त्वा तृतीयस्य व्यवधानादसंबन्धमाशङ्क्यार्थित्वाविशेषादुभयोः समुदायापादनेनाव्यवधाने साधिते समुदायशेषत्वमेव तर्हि प्राप्नोतीत्याशङ्क्य तस्या-

प्रयोगार्हत्वात्प्रयोगार्हसमुदायिसंबन्धः, तत्रापि तयोः प्राधा-
न्यादन्यथा च नैराकाङ्क्ष्यानुपपत्तेः प्रत्येकं सकलशेषसंबन्ध-
सिद्धिरित्येतदर्थं पुनर्व्याख्यानान्तरमारब्धम् । अपि च सा-
काङ्क्षस्य सन्निधाविति । तत्र कैश्चिद्व्याख्यानविकल्प एवेत्या-
श्रितम् । अपरे तु वदन्ति पूर्वत्रापरितोषादुत्तरं कृतम् ॥ किं
कारणम् ।

न तावत्समुदायत्वं केनचिन्निर्मितं तयोः ।
पुनः प्रत्येकनिर्माणे न च हेतुः प्रतीयते ॥

समुदायत्वं ह्येककार्यत्वेनैकशब्दोपादानेन वा भवेत्, न चा-
न्यैकमप्यस्ति । नन्विदमेककार्यत्वमेकवाक्यशेषग्रहणं नाम ।
अहो नु खलु मन्त्राणां कार्यं विज्ञातम् । अपेक्षा हि तत्रोभ-
योः स्यात् । कथं तत्कार्यमित्युच्यते । शेषस्यासौ तयोर्न तद्व-
शेन समुदायत्वापत्तिर्युक्ता । पश्चादपि वा समुदायिभ्यामेव
तस्य संगतिरिष्टेति आदित एव समुदायत्वं न लभ्यते । यदि च
समुदायत्वमापन्नौ ततः पुनः प्रत्येकं संबन्ध इति राजैकपुत्र-
क्रीडा ऽऽपद्यते । पुरस्तादेव च प्रयोगः प्राप्नोति तथाभूतेन स-
मुदायानन्तर्यात् । न वा गृह्यमाणविशेषत्वं देशभेदनिमित्तं
तत्त्वभेदात् । प्रथमस्य ह्यसौ यथाकाङ्क्षिते देशे स्थितो नो-
त्तरयोः । तस्मादिदमेव व्याख्यानम् ॥

आकाङ्क्षा सन्निधानं च योग्यता चेति च त्रयम् ।
संबन्धकारणत्वेन क्लृप्तं नानन्तरश्रुतिः ॥

यो हि बहूनां संबन्धित्वेन सकृदाम्नायते तस्यावश्यंभावि-
केनानन्तर्यमिति न तदेव तदा संबन्धकारणत्वेनाश्रीयते ।
तत्राप्यस्मादेव कारणत्रयात्संबन्धसिद्धेः । सन्निधिविशेषानु-

दाश्रयप्रतिपत्त्या भवति भ्रान्तिः । सा तु साकाङ्क्षयोग्यसंन्नि-
हितसंबन्ध्यन्तरदर्शनान्निवर्त्तते, यथा धात्वर्थादिषु विधिवृद्धि-
गुणाद्युपादानसामर्थ्या,देवं हि तत्र ज्ञायते । सर्वार्थो ऽयमा-
म्नायमानः सर्वसाधारणानन्तर्य्यासंभवादाक्येकत्वाच्च कस्य चि-
देकस्य समीपे पठ्यते । तस्मादकारणमानन्तर्यमिति । सन्नि-
धिरिति बुद्धौ विपरिवृत्तिः । सा चानन्तर्ये संबद्धपदव्यवाये च
भवति । संबद्धपदव्यवधिरप्यनन्तर्यप्रकार एव । कथम् ।

अनन्तरेण संबद्धः स्यात्परस्याप्यनन्तरः ।
ततः पुनस्तदारूढः परानन्तर्यमश्नुते ॥

या ते अग्ने रजाशयेत्यनेनापेक्षितः शेषः परस्तादलभ्यमा-
नः पुरस्तात्परावृत्त्यालोच्यमानो लभ्यते तनूर्वर्षिष्ठेति । यदा च
तत्रारूढस्तदा हराशयेत्यस्यानन्तरीभूतः पुनरेवमेव तृतीयेनापि
सह संबध्यते । ततः परं त्वन्यस्यानाम्नानात्तावत्येवोपक्षीयते ।
सर्वत्रैवमपेक्षा पुरस्तात्परस्ताच्च प्रवृत्तैकत्रारूढ्येतरेषामनन्त-
रीभवन्ती तावदपेक्ष्यमाणा निगृह्णाति यावत्किं चिन्न योग्यम-
स्त्ययोग्यं चोपलभ्यम् । ततः सर्वमालोचितमुपसंहृत्य निवर्त-
ते । यद्यपि च क्रमेणोच्चारणात्संनिकर्षविप्रकर्षौ प्रतीयेते त-
थापि नित्यत्वाद्वेदस्यानन्तरे दूरस्थे च युगपदपेक्षा संबन्धश्चेति
पश्चादवगमान्न प्रामाण्ये कश्चिद्विशेषः । एवं वाक्ये पदानां प्रक-
रणे च वाक्यानां संबन्धो यावत्साकाङ्क्षेण तत्संबन्धार्हेण पर-
स्याप्यनन्तरीकर्त्तुं समर्थेन व्यवधानम् । अव्यवधाने विच्छेदे ऽ-
पीति । विरोधिना पदेनाव्यवधाने विप्रकृष्टत्वे भवति संबन्धे
इत्यर्थः । तस्मादनुषङ्गः समाप्तिः । अनुषज्यतइत्यनुषङ्गः । स एव
समाप्यते तेनेति समाप्तिः ॥ १७ ॥

यत्र तावच्छेषिणः साकाङ्क्षास्तत्रैवमथ यत्र नैराकाङ्क्ष्यं सर्वेषु शेषिष्वेकः शेषः साकाङ्क्षः पठ्यते यथा चित्यतिस्त्वा पुनाात्वित्येतेषामन्ते अच्छिद्रेणेत्यादिस्तत्र कथमिति। किं प्राप्तम् ॥

अनन्तरेण संबन्धः शेषस्येष्टा कृतार्थता।

शेषिणश्च निराकाङ्क्षाः किंनिमित्ताऽनुषङ्गधीः ॥

उच्यते ॥

अनन्तरस्य वाक्यस्य यदि शेषो भवेदयम्।

तत एवं भवेदेष त्वाख्यातार्थेन सर्वभाक् ॥

आनन्तर्यविशेषेण ह्ययं पुनात्वित्येतेन संबध्यते। स चैक एव त्रिष्वपि वाक्येषु, तदेकत्वाच्चार्थस्याप्येकत्वम्। न च कारकभेदात्तस्य भेदो भवति। येन चित्यत्यादिसंबद्धादस्यानन्यत्वं विज्ञायते। न चाच्छिद्रेणेत्येवमर्था क्रिया, येन सकृत्संबन्धेन संतुष्येत् ॥

तस्मादस्य क्रियार्थत्वाद्यावदेषा प्रयुज्यते।

तावदेव प्रयोगित्वं काष्ठानां पचने यथा ॥

अथोच्यते एकत्वेऽपस्या यत्कर्तृविशिष्टाभ्यासाद्यः करणसंबन्धः श्रूयते तद्विशिष्टैव तेन योजयितव्या। यथैकस्यापि ज्योतिष्टोमस्य मैत्रावरुणग्रहाभ्यासविशिष्टस्य पयसा श्रपणं चोदितं नातिप्रसज्यते, यथा चात्रैव चित्यत्यादयो, न सर्वे सर्वत्र भवन्ति। उच्यते ॥

श्रवणानां व्यवस्था हि भिन्नापूर्वप्रयुक्तितः।

कर्त्रन्तरावरोधाच्च चित्यत्यादेरसंकरः ॥

ऐन्द्रवायवादिग्रहाभ्यासानामदृष्टार्थत्वात्तद्भेदकता श्रपणस्य-

मस्था युक्ता । न हि तथा किंचित्कारणमस्ति । करणस्य क्रिया प्रत्यपयुक्तत्वात् । करणप्रकाशनद्वारेण सैव क्रिया पुनः प्रकाश्यते । सा च सर्वत्राविशिष्टत्वात्तत्प्रकाशनमपेक्षते । यथा च वाक्यप्रत्युपादानात्तत्समानव्यापारत्वित्यतिन्निवर्त्तते, नैवमच्छिद्रपवित्रप्रतियोगिकरणान्तरश्रवणमस्ति येनैतन्निवर्त्तेत, न च कर्तृप्रयुक्तं करणम् यतस्तद्भेदाद्भावतिष्ठेत, कारकाणां क्रियाश्रितत्वेन परस्परसंबन्धाभावात् । नन्वेवमपि मन्त्रान्तरगतेनापि पुनातुशब्देनास्य संबन्धः स्यात् । नैष दोषः । दर्शपूर्णमासबर्हिर्द्धर्मवत् व्यवस्थासिद्धेः । इह प्रक्रम्य पुनातुशब्दस्य यत्कार्यं तत्प्रयुक्तमच्छिद्रादिविशेषणं मन्त्रत्रयेऽपि तदेकमिति प्रत्यक्षमवगच्छामः । न, मन्त्रान्तरे कर्मान्तरगतद्रव्यान्तरसंस्कारार्थत्वात् । नन्वेवं सत्येककार्यत्वात् मन्त्रविकल्पः प्रसज्येत । कुतो वैवमादीनां संख्यायुक्तविधानादन्ते समुच्चयः । सर्वेषु विपर्यावृत्तिभङ्गासंनिधिः संभाव्येत न मन्त्रान्तरेष्विति विशेषः ॥

तस्मात्पुनातुशब्दोऽयं सर्वमन्त्रगतोऽपि सन् ।
अच्छिद्रापह्नतः सर्वैः पुनस्तद्दानपेक्ष्यते ॥

सर्वाभ्यासान्ताभिहितेनाच्छिद्रेणेत्यादिना ऽनन्यगतिकत्वाद्यदा पुनातुशब्दः स्वीकृतः, तदा पुनात्वच्छिद्रेणेत्येवं कल्पते संबन्धे य एवानन्तरः पुनातुशब्दः स एव पूर्वयोरपीति करणसंबन्धप्रदर्शनवेलायामन्वेति । क्रियाः पदार्थाः सन्तः तामपेक्षमाणाः सकरणिकामेवामादयन्तीति सर्वत्रानुषङ्गः । एवं वाऽनुषङ्गेण प्रयोक्तव्ये ये तन्त्रेण प्रयुञ्जते तेषां तदानन्तर्यमात्रं पुरस्तात्परस्ताद्वा वाक्यशेषस्यानुषङ्गत्वाविशेषे सति यत्पुरस्तादनुषज्यत इति केचिदुच्यन्ते तद[illegible]मात्रमिति ज्ञायताम् ॥

## व्यवायान्नानुषज्यते ॥ ४९ ॥

प्रत्युदाहरणत्वेन सन्निधेरेवमुच्यते ।
असंबन्धतिरोधाने वैषम्यान्नानुषज्यते ॥

सं ते वायुर्वातेन गच्छतामित्यस्य साकाङ्क्षस्यानन्तरत्वादवधारितः शेषो बहुवचनान्तेनायोग्येनासंबद्धस्तुल्ययोगित्वाभावाद्योग्येनापि यज्ञपतिना नानुषज्यते, अतश्च वैदिकशेषासंभवादस्ति लौकिकस्यावकाशः इत्युभयत्राध्याहारः कर्त्तव्यः । तत्र तु यद्यपि नोच्चार्यते गच्छतामिति तथाप्यवश्यमनुसंधातव्यः, अन्यथार्थापरिसमाप्तेः । तस्मान्नानुषङ्ग इति । प्रयोजनं तु अनुषङ्गे मन्त्रत्वात् प्रायश्चित्तम् । लौकिकत्वे च मन्त्रत्व इति । आह च ॥

आम्नायमानं ह्यनुषज्यमानमन्तर्गतं मन्त्रनिरूपणायाम् ॥
ऊहादिसाम्ये ननु लौकिकानाममन्त्ररूपप्रतिपत्तिसिद्धिः ॥

इति श्रीभट्टकुमारिलविरचिते मीमांसातन्त्रवार्तिके द्वितीयस्याध्यायस्य प्रथमः पादः ॥

---

## शब्दान्तरे कर्मभेदः कृतानुबन्धित्वात् ॥ १ ॥

उपोद्घातप्रसक्तानुप्रसक्तादौ गते ऽधुना ।
शब्दान्तरादिभिर्भेदात्मलक्षणार्थो ऽभिधीयते ॥

तत्र शब्दान्तरं तावत् स्पष्टत्वात्प्रथममुदाह्रियते । एकानेकाख्यातप्रत्ययसंबद्धाः सर्वे धातवो यजति ददाति जुहोति निर्वपति पुनाति स्तृणाति शंसति स्तौति इत्येवमादय उदाहरणम् ।

भाष्यकारेण तु स्वल्पपरित्यागांशेन यजत्यादित्रयं प्रत्यासन्ना-
र्थत्वात्सुतरामभिन्नमाभासत इत्युदाहृतम् । तत्र पूर्वपक्षत्रैवि-
ध्यदर्शनात्संशयोपन्यासोऽपि तदनुगुणः प्रतिभाति । तद्यथा ।
तिस्रो भावनाः किमेकमपूर्वं कुर्वन्ति उत त्रीणीति, तथा त्रयो
धात्वर्थाः किमेकां भावनां विशिंषन्ति उत तिस्रः, तथा त्रयो
धातवः किमेकं धात्वर्थं वदन्ति उत त्रीनि,ति । कार्यशब्दश्चा-
पूर्वभावना धात्वर्थेषु उपकार्यत्वाविशेषेण प्रयुज्यते भावना
धात्वर्थधातवो ह्येषामुत्पादनेन विशेषणेन प्रतिपादनेनोपका-
रकत्वात्साधनत्वेनाभिधीयन्ते । कुतः संशयः ॥

साधकत्वं द्विधा दृष्टं प्रत्येकसमुदाययोः ।
वस्तुलक्षणएवातस्तद्दृष्टेः संशयोद्भवः ॥

अथ वा पारमार्थिको ऽत्रायमेकः संशयः, किं धात्वर्थत्रयानु-
रक्तैका भावना, अथ वा प्रतिधात्वर्थं भावनाभेद, इति । भावनैव
धात्वर्थानुरक्ता कर्मशब्देनोच्यते । तस्या एव शब्दान्तरादि
भेदकं भविष्यति, अपूर्वस्यानभिधेयत्वात्कर्मभेदानुनिष्पाद्येव
तदिति न पृथग्विचारमर्हति । प्रासङ्गिकस्तु धात्वर्थैकत्वोप-
न्यासः कथमप्यसार्वत्रिकः सन्यज्यादिषु भविष्यतीति नातीव
तन्त्रीकर्त्तव्यः । ततश्चैतदपि संशयकारणं पूर्वपक्षवादिनः प्रति-
भाति, किं धात्वर्थान्प्रत्युपादीयमाना भावना प्रत्येकं समाप्यते,
अथ वा ते तां प्रत्युपादीयमानाः संहत्य विशिंषन्ती,ति । किं
तावत्प्राप्तं संहत्येति । तत्र समुदायस्त्रिकोर्पितः समुदायादेक-
मपूर्वं न वा शाब्दः समुदाय इत्यादिषु पुनः पुनः समुदायश-
ब्दोच्चारणादपूर्वैकत्वाभिधानाच्च तिसृभ्यो भावनाभ्य एकमपू-
र्वमिति पूर्वः पक्षः । इयं चोपपत्तिः ॥

अदृष्टं प्रथमं तावन्नासीत्येवं प्रतीयते ।
तथैव निश्चयस्तावद् दृष्टं चेन्न विरुध्यते ॥
दृष्टश्रुतविरोधे तु सत्यदृष्टं प्रकल्प्यते ।
एकेन चाविरोधित्वे सिद्धे नानेककल्पना ।

तदेवाह ॥

विरुध्यमाने कल्प्यः स्याज्ज्ञायते तेन सोऽर्थवान् ।

दृष्टः श्रुतो वा भवतीति । तत्राप्येकानेकार्थकल्पनयोर्विशेषश्चेद्गुरुलाघवं प्रति न गम्येत ततोऽनेकोऽपि कल्प्येत, गम्यते चासौ । तस्मात्समुदायादेकमपूर्वम् । तत्रैतत्स्यात् केन भावनासमुदायश्चोदितः । यस्मादेकमपूर्वं स्यात् इत्यत आह न वा शब्दः समुदायोऽवयवशब्दैरेव चोदितत्वाद्,थ वेति धात्वर्थचयानुरक्तैकभावनापक्षपरिग्रहः । तस्याप्युपपत्तिः ॥

प्रत्ययार्थप्रधानत्वात्प्रतिधातु न भिद्यते ।
तत्रोपादीयमानत्वाद्धात्वर्थाः संहताः पुनः ॥

यदि हि धात्वर्थानां प्राधान्यं भवेत्ततो भावना तान्प्रत्युपादीयमाना प्रतिप्रधानं भिद्येत । भावप्रधानत्वाच्चाख्यातस्य प्रकृतिप्रत्यययोश्च प्रत्ययार्थप्रधानत्वादरुणैकहायन्यादिवद्यागादिभिः संहत्यैका भावना विशेष्यते । यद्यपि प्रधानानां गुणानुरोधेनावृत्तिरयुक्ता, तथापि केवलप्रकृतिप्रत्ययप्रयोगासंभवादवश्यं तावद्धातुसंबन्धार्थं प्रत्ययः पुनरावर्त्तयितव्यः । यदि तु केवलः प्रत्ययः क्षीणानिव कल्प्येत, ततः सकृदुच्चरित एवारुणादिभिरिव धातुभिः संबध्येत, अपदत्वात् न स्वतन्त्रः श्रूयत इत्यावर्त्तते । इष्टा च विशेषणसंबन्धार्थमावृत्तिः व्याप्तेर्येन कल्पता, दध्ना जुहोति, पयसा जुहोति, ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णा-

तीत्येवमादिषु। तथा ऽनुष्ठानावृत्तिरपि ज्योतिष्टोमस्यानेकद्रव्यदेवतासंयोगसंपादनार्था दृश्यते। तस्मादर्थैकत्ववशेन सर्वमिदं यजतिददातिजुहोतिविधानात्मकमेकं वाक्यमेकं कर्मैकं चाऽपूर्वमिति। अयमेव चात्र पूर्वः पक्षः साधुः, न पूर्वोक्तो भावना समुदायसंभवा। कुतः ॥

प्रसिद्धे भावनाभेदे भाव्यभेदो नियोगतः।
न चास्या समुदायत्वमेकशब्दादिनेष्यते ॥

यदि हि भावनाभेदं पूर्ववाद्यभ्युपगच्छत्येव ततः सा भावयितव्या। पूर्वभेदादुत नैव भिद्यतइति तद्भेदपि सिद्धे किमनेन कृतं स्यात्। अपि च समुदायत्वापादनमेकशब्दसंयोगात्समुदायानुवादरूपेण वा भवति, यथा य एवं विद्वान्पौर्णमासीं यजतइति, फलादिसंबन्धेन वा, यथा राजसूयेन स्वाराज्यकाम इति। न त्विहैकमपि पश्यामः, येन समुदायत्वमध्यवस्येम। ननु ज्योतिष्टोमेनेत्येष समुदायवचनो भविष्यति। न, तस्य यजिसामानाधिकरण्येन तन्मात्रवचनत्वात्। तस्मान्नैष पक्षः। एवं तु भाष्यग्रन्थो नेतव्यः। किं तावत्प्राप्तं धातुत्रयानुरक्तामिन्द्रायुधमिवैकं कर्मेति। तस्मिन्नर्थो त्वियमुपपत्तिः। एवमल्पादृष्टाकल्पना भविष्यतीति। कर्मभेदे हि बह्वदृष्टकल्पना निष्प्रमाणिका ऽभ्युपगन्तव्या। तस्मात्समुदायप्रचिकीर्षित इत्याद्येकस्यैव कर्मणो ऽवयवाभिप्रायेणोक्तम्। अतो यजेतेत्यस्य पूर्वो भागो यजत्यर्थं ब्रवीति उत्तरो भावयेदित्यादि निगमनम्। अथ वेति प्रमादल्लिखितमिति मन्यन्ते अशक्यं त्वेतत्समर्थयितुं, द्वे ह्येते पूर्वपक्षोपपत्ती भाष्यकारेणोपन्यस्ते। तत्रानेकादृष्टकल्पनादोषं पूर्वमुपन्यस्याथ भेदमुपपाद्य परमा-

च। एतदुक्तं भवति। किमेकादृष्टकल्पनोपपत्त्याऽथ वा शब्देनैवैकां भावनां प्रतिपादयामः। पूर्वार्द्धभेदेऽपि प्रत्ययैकत्वेनाभिन्नार्थप्रतीतेस्तद्दर्शयति। तथा ददातीति पूर्वौ ददात्यर्थमुत्तरस्तमेव भावयेदिति। एवं प्रतिभाति तमेव धात्वर्थं भावयेदिति। तत्त्वयुक्तम्। सर्वत्र धात्वर्थभाव्यत्वप्रतिषेधात्, न चैतत्पूर्वपक्षवादिनोऽपि क्वचिदुपयुज्यते। तथानुवदतीति न शक्यं वदितुम्। तस्मादेवं वाच्यं, पूर्वा ददात्यर्थं उत्तरः पुनर्यो यजतेः परेणांशेनोक्तस्तमेव भावयेदित्येव धात्वर्थान्तरसंबन्धार्थमनुवदतीत्येवं जुहोतीत्यत्रापि। तथा च यजेतेत्यत्रैवं नाभिहितं, न हि तत्र पूर्वतरप्राप्ता भावनास्ति, याऽनूद्येत। यदि धात्वर्थभाव्यत्वमभिधीयेत, तदविशिष्टं तत्रापीति। न तद्वर्जमुत्तरयोरेव ब्रूयादतो भावनैकत्वप्रतिज्ञानाभिप्रायमेतत्। तस्मादेका भावनाऽपूर्वं च। यद्वा यजतिशब्देन विहितमिति धात्वर्थैकत्वं वदति। सत्त्वत्यागांशसमत्वाद्यद्यपि लक्षणया ददाति जुहोति यजेतेत्यस्यानुवादस्तथापि कर्मान्तरनिमित्तादृष्टकल्पनातः सैव ज्यायसीत्याश्रीयते। न वानुवादे लक्षणादोषो गुणविध्यर्थस्त्वनुवादः। एकत्रात्रेयः संप्रदानं हिरण्यं च प्रदेयं विधीयते, इतरत्र दाक्षिणानि विधीयन्ते। ननु नामधेयत्वान्नैवायं गुणविधिः। कर्मविधानपक्षे ह्यस्य नामधेयत्वम्। अनुवादे तु वाक्यानर्थक्यप्रसङ्गादेकान्तेन गुणविधिरभ्युपगन्तव्यः। तदा च यजतिददातिजुहोतय इति धात्वभिप्रायकमेकं कार्यमेकं धात्वर्थं तदेतरत्तदर्थमिति वा न्यायेनैकमपूर्वं गमयन्तीत्यर्थः। तस्मान्न कर्मभेद इति॥ अत्रोच्यते॥

धात्वर्थभेदे सर्वत्र विज्ञेयं भावनान्तरम्।

उत्पन्नैकानुरक्ता हि नान्येनाप्यनुरज्यते ॥

यद्यप्येको भावनावचनः तदर्थस्य च प्राधान्यं, तथाप्यनुरञ्जकधात्वर्थभेदाद्भावनान्तरं प्रत्येतव्यं, न ह्येकस्याः त्रयो धात्वर्थाः सन्निपतितुं समर्थाः । न च समुच्चयं प्रतिपद्यन्ते, करणांशावरोधित्वेन तुल्यार्थत्वादन्योन्यनिरपेक्षभिन्नशब्दोपादानाच्च । न ह्येका धातुत्रीन् धात्वर्थानुपादत्ते । न चैकस्मिन्पदे धातुत्रयं परस्परापेक्षं प्रत्ययं प्रत्युपादीयमानं संभवति । धातोरिति प्रत्ययोत्पत्तौ विवक्षितैकत्वसंख्यात्वात् । न चैतत्पदत्रयमेकवाक्यतां गच्छति । विभज्यमानसाकाङ्क्षत्वैकार्थत्वयोरभावात् । न चैकापूर्वकल्पनात एकवाक्यतापद्यते । समेषु वाक्यभेदः स्यादित्यत्र प्रत्याख्यातत्वात्, न चापूर्वभेदाभेदपूर्वकौ कर्मभेदाभेदौ, विपरीताभ्युपगमात् । यदि च केवलैव भावना केन चिदुपादीयेत । ततोऽरुणादिभिरिवैकवाक्यगतैर्दध्यादिवद्वा भिन्नवाक्यगतैरेकैवानूद्याऽनूद्य युगपद्वा विशिष्टविधानन्यायेन यागदानहोमैरनुरज्येत, न त्वस्याः पृथगुत्पत्तिरस्तीत्यवश्यं ददात्यादीनामेकेन समस्तैर्वोत्पादयितव्या । तत्र यदि तावत्समस्तैरुत्पाद्यते, तत उत्पन्नायाः पुनरुत्पत्त्यसंभवात्सिद्धं कर्मान्तरत्वम् । अथैकेन तावदुत्पाद्येत, तत्रापि विनिगमनाया हेतोरभावाद्विशेषो न ज्ञायते येन केन चिदुत्पत्तिरप्येतस्याः प्रतीयते । ततस्तद्व्यतिरिक्तेन धातुना नानुरज्यते । एकैव ह्येकेन धातुना कृतानुबन्धा भावनोत्पन्ना तस्यैव श्रौतत्वेन बलीयस्त्वान्न पदान्तरस्थैर्धात्वर्थैः सह विकल्पः संभवतीति । ततः प्रत्युतैस्तैः स्वपदप्रतिपादितमवश्यं भावनान्तरमनुरञ्जनीयमेवमेकैकत्र स्वपदोपात्तधात्वर्थानुरञ्जनमौत्पत्तिकं श्रौतं च धात्वर्थान्तरानुरञ्जनमुत्पन्नभाविवाक्यप्रकरण-

लभ्यं च। ददातिर्हि यजत्युपनिबद्धां भावनां निषेधमानः स्ववाक्यानुच्चरितां पदान्तरानुवर्त्तिनीं प्रकरणाद्वाक्याच्च प्राप्नुयादेवं यजतिरपि तत्र तत्रेति योज्यम्। ननु च ददातिपदे ऽप्यसौ पुनः श्रूयमाणा सैवेति प्रत्यभिज्ञायतइति न वक्तव्यं वाक्यप्रकरणाभ्यां ददातिसंबन्धो भवतीति। सत्यं भावनामात्रसंबन्धः श्रुत्यैव प्रतीयते। यागानुरक्तभावनासंबन्धे तु न श्रुतिव्यापारो युज्यते। ननु चैकत्वादेवास्या एवं भेदव्यवहारो न युक्तः, केन वा कर्मभेदपक्षे ऽपि सामान्यैकत्वं नाभ्युपगम्यते। नन्वत्र व्यक्तिनानात्वेपि नास्ति प्रमाणम्। कथं नास्ति। यदा भिन्नधात्वर्थसंनिधानादसौ नानात्वेन प्रतिशब्दमुपलभ्यते। ननु च शब्दवदेव परोपाधिको भेदप्रत्ययो न पारमार्थिको भावनाभेदः स्यात्। नैतदेवं शब्दस्यापि गकारादिभेदः पारमार्थिको नैव कस्य चिदनिष्टस्तद्वदिहापि यागादिभेदे सिद्धे शब्दस्यानीयमनुष्ठानसामान्यं निरूप्यते। न च यथा शब्दस्यार्थान्तरभूता ध्वनयः द्रुतादिबुद्धिमपारमार्थिकीं कुर्वन्ति एवमत्र यागादयो ऽदूरव्यतिरिक्ताः, तस्मादस्ति भेद इति। आह च॥

यथा रक्तोपधानेन निरुद्धे स्फटिके सति।
कृष्णादिचोदनायुक्तं गम्यते स्फटिकान्तरम्॥
तथैकधातुसंबद्धभावनाचोदने सति।
भावानान्तरगामिन्यः स्युर्धात्वन्तरचोदनाः॥

यस्मात्प्रकृतिप्रत्यययोः स्वार्थाभिधाने स्मृतेराचाराच्च नित्यविवक्षितक्रमत्वेन पूर्वप्रयुक्तप्रकृत्यर्थव्याप्तेषु प्रतिपत्तृषु प्रत्ययांशः सन्निपतन् कृतानुबन्धमेव स्वार्थं वदति तस्मान्न कदा चित्प्रत्ययार्थः शुद्धो लभ्यते। यथोक्तं प्रातिपदिकादुच्चरन्ती द्वितीया-

द्विविभक्तिः प्रातिपदिकार्थो विशेषक इत्याहेति । प्रयोगवाक्य-शेषभावेन हि समुदायस्य सत्तासंबन्ध इति । एकापूर्वकल्पनया हि समुदायानुरक्तभावनाकल्पनमाश्रितं फलसंबन्धनिमित्ता वापूर्वकल्पना । प्रयोगवाक्यशेषभावेन वोत्पत्तिवाक्यानां फलसं-बन्धो भवति न स्वरूपैः । अवधृतस्वरूपाणि च कर्माणि प्रयोग-वाक्येन गृह्यन्ते इत्यवगते भेदे न शक्यान्येकीकर्तुं, न च ददाति-जुहोत्योः प्रयोगवाक्यशेषभावं पश्यामो यजेत स्वर्गकाम इति केवलयागश्रवणा, न्न च तेन दानहोमौ लभ्येते । स्वार्थत्यागप्र-सङ्गादुभयाश्रयणे वा युगपच्छ्रुतिलक्षणापत्तिर्दोषः । तस्मान्न समुदायकल्पनास्ति । अतश्च धात्वन्यत्वेन पदान्तरत्वात्केव-लविशिष्टता गम्यते । न च ज्ञानान्तरेण निवर्त्तते । न च धात्वर्थैकत्वमा, सेचनपरस्वत्वापादनाभ्यधिकत्वात् । न च त्याग-मात्रलक्षणा स्वार्थवृत्तित्वेनापि वाक्यसमवायोपपत्तेः । न च दा-क्षिणानि नाम गुणः कश्चित्प्रसिद्ध इति सामानाधिकरण्या-न्नामधेयत्वमेव युक्तम् । अतश्च वाक्यानर्थक्यं मा भूदिति होमो विधीयते । ददातिना तु यागमनूद्य गुणे विधीयमाने हिरण्या-त्रेयसंबन्धे वाक्यभेदप्रसङ्गाद्गुणादपि भेदः संभवतीत्यत्रैकगुणो-(१)निर्गुणो वा अन्यो ददातिरुदाहर्त्तव्यः ॥

## एकस्यैवं पुनः श्रुतिरविशेषादन-र्थकं हि स्यात् ॥ २ ॥

शब्दान्तराधिकरणप्रत्युदाहरणरूपेणाभ्यासस्य पूर्वपक्षः सु-खमभिधीयत इति तदनन्तरमारम्भः । तत्र समिधो यजति त-

(१) अत्रेति २ पु० नास्ति ।

नूनपातं यजतीत्यादिषु समिदादिशब्दानपोहृत्य यजतीत्येतन्यश्चकृत्वो ऽभिहितं किमेकस्य कर्मणो वाचकमथानेकस्येत्युदाहृतं तदाक्षिप्यते ॥

गुणो वा नामधेयं वा समिदादिपदं भवेत्।
ताभ्यामेव च भेदोऽत्र किमभ्यासः करिष्यति ॥

षडपि भेदहेतवः पृथग्भूताः स्वसामर्थ्यमात्रव्यापारफला दर्शयितव्याः, तद्यावदत्र गुणनामधेययोर्भेदकत्वं नापनीयते न तावदभ्यासस्य परभागलाभो ऽस्तीत्यन्यदुदाहर्त्तव्यम्। न च तत्संभवति कुतः ॥

प्रयुज्यते हि वेदेषु नाख्यातं केवलं क्व चित्।
नाम किं चित्प्रयुक्तं चेत्तस्य चोक्तं गतिद्वयम् ॥

ऐन्द्रवायवं गृह्णातीत्येवमादीनि हि सर्वाणि परस्परासंगत्यौत्पत्तिकगुणयोगाद्भिद्यन्ते। भिन्ने जुहोति स्कन्ने जुहोतीत्यादीन्यपि फलं वा कर्मसन्निधावित्यनेन न्यायेन निमित्तं प्रत्युपादीयमानत्वाद्भिद्यन्ते। निमित्तसंबन्धपरत्वाच्च नाभ्यासनिर्थक्यमित्यभेदकत्वम्(१)। ये तु पशुधर्मा दीर्येषु तान्पर्यग्निकृतांस्तान्पर्यग्निकृतानित्येवमाद्यभ्यासमुदाहरन्ति तेषां प्राकृत(२)पर्यग्निकरणानुवादप्रस्मरणसामर्थ्यं तत। न वा ऽत्र यजतिः श्रूयते यस्याभ्यासाद्भेदः स्यादिति न किं चिदुदाहरणम्। यथोदाहृतेष्वेव तु समाधिः ॥

प्रायेणाख्यातसंबद्धमिष्टं नामेष्टं पारतन्त्र्यभाक्।
तस्यैव प्रथमन्तेन प्रभेदाभेदनिमित्तता ॥

(१) अभेदकम् इति २ पु० पाठः।
(२) प्रकृतेति २ पु० पाठः।

यान्युपादेयार्थानि नामपदानि तानि तावदाख्यातपरतन्त्रत्वात्तदनुसारीणि सन्ति तद्वृत्तिं प्रतीक्षन्ते, तच्चेत्प्रकृते निविष्टं नामपदमपि तस्यैव गुणविधिर्नामधेयं वा(१)। अथ तेनापूर्वं परिकल्पित,मतस्तद्गामि नामपदमित्येवं भेदाभेदयोरवगतयोः पश्चादागच्छत्समिदादिपदमकिंचित्करत्वादुदास्ते तेन तदपोद्धृत्याख्यातमात्रं विचार्यते। नन्वेवं सति संज्ञागुणयोरभेदकत्वप्रसङ्गः। तत्र तौ भेदकौ यत्राख्यातपदं न व्याप्रियते तथा चोदाहरिष्यति। अथैष ज्योतिर्वाजिभ्यो वाजिनमिति। वाजिने तावन्नैवाख्यातपदं श्रूयते, ज्योतिरादावप्याख्यातस्य गुणफलसंबन्धव्यापारेण प्रकृतनिवेशसंभवे सति ततः पूर्वप्रवृत्तया संज्ञयैव भेदो भविष्यति। यत्राप्याख्यातस्य स्वरसेन प्रकृतकर्मनिवेशोपप्लवे सति तत्रासंभवन् गुणो विधीयते तत्राप्यसौ भेदका, यथा चैवाभ्युपेत्यवादे वक्ष्यति स एष देवतायागसंबन्धो विधीयमान इत्यादि। तच्चाख्यातस्य भेदशक्तौ विवृतायां भवतीति तदेव तावत्प्रथमं परीक्ष्यते। किमेकमपूर्वमिति फलतः कर्मभेदाभेदोपन्यासो, यदा किमेकं कर्मापूर्वं चोदयन्त्युत पश्चापि कर्माण्यपूर्वाणीति। किं प्राप्तमेकमपूर्वमिति। कुतः॥

प्रत्ययार्थः समानोपि धातुभेदेन भिद्यते।
धातोरपि समानत्वे केन भेदोवधार्यते(२)॥

अपि च।

पूर्वं तेनैव शब्देन बुद्धौ कर्म निवेशितम्।
न भेदं प्रत्यभिज्ञानात्पुनः श्रुत्या प्रपद्यते॥

---

(१) अवधार्यते इत्यधिकम् २ पु० पाठः।
(२) अवधार्यताम् इति २ पु० पाठः।

यथैव यजतिशब्दः सकृत्प्रत्यक्षेणावगतः पुनरुच्चारणे स ए-
वेति प्रत्यभिज्ञानान्न भिद्यते। तथा तदर्थोऽपि, यथा चात्रैव
बुद्धबोधनकृत्प्रत्ययत्वमनर्थकमपि भवन्न शक्नोति शब्दान्तरत्वं
कर्त्तु,मेवं पुनः श्रुतिरर्थान्तरत्वम्। न ह्यानर्थक्यं नाम कश्चित्प्र-
माणवर्गेऽन्तर्भवति। यच्च वेदोऽवबोधयति तन्मात्रमेव तत्प्र-
माणत्वादिभिरभ्युपगन्तव्यम्। तदिहैकशब्देनाभेदे वेदेनावग-
मिते यो ऽन्यत्वं कल्पयति तेन वेद एवाप्रमाणीकृतः स्यात्। न च
प्रमाणावगतमानर्थक्यं दोषाय। अस्ति चेयमपि गतिः। प्रयोग-
वचनसंस्पृष्टः शब्दोऽर्थमवदध(१)त्स्वयं प्रयोगित्वेन गृह्यतद्वत्,
थ वाभीक्ष्ण्यादिद्योतनार्थोऽभ्यासो भविष्यत्यस्ति हि लोके द्विर्व-
चनादतिरेकेणापि यावत्कृत्वोऽभ्यस्ते विवक्षितार्थप्रकाशनं भव-
ति तावत्कृत्वोऽभ्यासस्तथा च पञ्चेन्द्रोपाख्याने वृद्धकुमारीव-
रप्रार्थने पतिं मे देहीति पञ्चकृत्वोऽभ्यासः श्रूयते। न च यथा
तत्र देवतायाः छन्दग्राहित्वमेवमिह कस्य चिदेन पतिपञ्चक-
वत्पञ्चयागकल्पना स्याद,थ वा सर्वेष्वप्युच्चारणेषु विधात्राश्री-
यमाणे कर्मैकत्वं विज्ञायते। यथा शाखान्तरीयेषु ज्योतिष्टो-
मादिवाक्येषु। तेन तुल्यार्थानां वैकल्पिकत्वात्तदेव कर्म कदा
चित्समिद्वाक्येनाभिधास्यते कदा चित्तनूनपाद्वाक्येन । न हि
समानकार्यत्वेन व्रीहियवयोरेकस्यानर्थक्यादर्थान्तरसाधकत्वं
विज्ञायते। अथ वा तनूनपादादिदेवताविधानार्थत्वान्नानर्थक्यं
कर्मविधाने हि सति नामधेयत्वं भवेद,नुवादे तु नामधेयविधिर्न
संभवतीति गुणविधित्वं तस्मादप्यकर्मान्तरम्। यत्रापि च प्रदे-
शान्तरे तावेव शब्दार्थौ प्रत्यभिज्ञायेते तत्रापि हि गृहान्निर्ग-

(१) अददादिति २ पु० पाठः ।

तस्य पुनर्गृहजनप्रत्यभिज्ञायामिवार्थान्तरत्वमशक्यं वक्तुम्। किमुतेहानन्तरविपरिवृत्त्या बलीयस्या ऽवरुद्धायां बुद्धौ। यदि च प्रत्युच्चारणमर्थान्यत्वं भवेत्तदा ऽनित्यव्यक्तिशब्दार्थत्वप्रसङ्गः॥ किं च॥

गत्वादिवन्न चैतेषु यागत्वं व्यतिरिच्यते।
व्यक्त्यैकत्वे निरूढे च कथं कर्मान्तरं भवेत्॥

यद्यपि च पुनःश्रुत्यर्थवत्त्वाय पञ्चकृत्वो यागो ऽभ्यस्येत तथा ऽपि ज्योतिष्टोमवद्देवताकर्मान्तरत्वं स्यान्न चात्राभ्यासहेतुरस्ति। वाक्यसंयोगेन देवतानां वैकल्पिकत्वात्। तस्मादेको याग इति। एवं प्राप्ते ब्रूमः। एकस्यापि पुनः श्रुतिरेवं स्याद्यथा शब्दान्तरं भेदकं तथेत्यर्थः। कथम्॥

आख्यातप्रत्ययः पूर्वं विधत्ते कर्मशक्तितः।
अन्येनाक्षिप्तशक्तिस्तु तदाकाङ्क्ष्यनूदितम्॥

यदि हि विपरिवृत्तिरनुवादकारणं स्यात्ततो न कर्मान्तरमध्यवसीयेत। न तु विपरिवृत्तिकृतमनुवादकत्वं, किं तर्हि॥

अनुवादविशेषत्वं प्रकृतप्रत्ययाद्भवेत्।
तत्सामान्यप्रवृत्तिस्तु(१) स्ववाक्यादेव लभ्यते॥

यदा हि विधायकस्य विधिशक्तिर्धात्वर्थादुत्तार्यते तदा ऽनेकविध्यशक्तेर्धात्वर्थानुवादः प्रार्थ्यते। तां च प्रार्थनां विपरिवृत्तिः पूरयति। धात्वर्थोत्तारणं च विधिशक्तेर्विधेयान्तरोपादाननिमित्तं यथा व्रीहिभिर्यजेत, दध्ना जुहोतीति सर्वत्रैवानेकार्थोपादाने विधिशक्त्यनेकत्वासंभवादेकं किंचिदनूद्यतामित्यपेक्षायां सत्यां यद्विपरिवर्त्तते तदित्यवधारणं भवति। तत-

(१) प्रतिद्विस्तु इति २ पु० पाठः।

स्य दध्यादेरप्राप्तत्वाद्धात्वर्थो ऽनूद्यते । यदा तु खलु नैवानेकं विधेयमुपादीयते तदा नैव तस्मिन्वाक्ये ऽनूद्यतां किं चिदित्य-पेक्ष्यते । ततश्चाप्राप्ते सामान्यानुवादे तत्सिद्ध्यपेक्षिणी विशेषा-नुवादकारणभूता किं विपरिवृत्तिः करिष्यति । तस्मान्न यत्प्राप्तं तदनूद्यतइति लक्षणम् । किं तर्हि यदनूद्यतामित्यपेक्षितं तत्प्रा-प्तौ सत्यामनूद्यते । नैकाङ्गविकल्पम,नुवादत्वापेक्षणेन प्राप्तिबु-द्धिमात्रेण वा । तत्र यथैवानुवादापेक्षणे सत्यपि प्राप्त्यभावाद्वि-शिष्टविधानरूपेण विधिर्भवत्ये,वं प्राप्तिबुद्धौ सत्यामप्यनुवादत्वा-नपेक्षणाद्विधेः कर्मान्तरत्वं सत्यपि धातुप्रत्ययैकत्वप्रत्यभिज्ञा-ने । यत्तु बलीयस्या विपरिवृत्त्या शतकृत्वो ऽप्युक्ते तद्बुद्धिर्ना-पैतीति, प्रमाणबलाबलज्ञानात्त्वेवं संभाव्यमेव तत् (१) । तथा हि ॥

श्रुतेः कर्मान्तरज्ञानं सन्निधेरेककर्मधीः ।
तत्र श्रुतिबलीयस्त्वं जानतां कथमेकता ॥

विधायिका हि श्रुतिरन्यानाश्रिता धात्वर्थभावनयोरेव संनि-रुद्धा तत्रैवाप्राप्तविषयस्वभावं विधित्वं प्रसुवाना पञ्चमस्थाना-ख्यप्रमाणकृतां प्राप्तबुद्धिमुपमृद्य विधेयत्वक्षमं कर्मान्तरं क-ल्पयति । स चेद्विधिः श्रुतिमनुरुध्येत कर्मान्तरमध्यवस्यत्य,थ सन्निधिं ततो न कर्मान्तरत्वम् । यत्र पुनर्विधिश्रुतिरन्यत्र व्याप्रियते तत्राविरोधात्सन्निधिकृतं कर्मैकत्वज्ञानं भवति । त-स्मादिह विधेययागव्यक्तिफलत्वोपात्तसामान्यैकत्वनिमित्तैव प्रत्यभिज्ञानभ्रान्तिः । न हि व्यक्तिप्रत्यभिज्ञाने किं चित्कारण-मस्ति । यदत्र परमार्थेन प्रत्यभिज्ञायते तदेकत्वे न कश्चिद्विवा-

(१) संभाव्यमेतदिति २ पु० पाठः ।

दस्तथा हि ॥

स्थिते यागत्वसामान्ये पशुसोमेष्टिकर्मणाम्।
विशेषव्यक्तिरूपेण भेदः सर्वत्र चिन्त्यते ॥

ननु चात्र यजिश्रुत्यैवैककर्मविज्ञानान्न वक्तव्यं सन्निधिकृतमेवैकत्वमिति। नैतदेवम् ॥

यागोऽयमिति विज्ञानं यजिश्रुत्योपजन्यते।
स एवेत्यन्य एवेति व्यापारोऽस्या न विद्यते ॥

न हि यः पूर्वविहितो यागः स एवायमिति यजतिशब्दो वदत्यौदासीन्येनैव त्वभिदधाने शब्दे सन्निधिकृतामभेदबुद्धिमनभिजानतां श्रुतिनिमित्ता प्रत्यभिज्ञानभ्रान्तिः। न तव व्यक्तेरशब्दार्थत्वादभिन्नं सामान्यं श्रुत्या विज्ञायते। येनैव व्यक्तिरशब्दार्थ(१)स्तेनैवानेककर्मतां श्रुतिर्बोधयतीति। कथम् ॥

व्यक्तयो हि विधीयन्ते सामान्येनोपलक्षिताः।
तस्मात्तद्गतमेवात्र भेदाभेदनिरूपणम् ॥

यत्सामान्यं शब्दार्थभूतं तस्याननुष्ठेयत्वेनाविधेयत्वात् सर्वत्र व्यक्तय एव विधीयन्ते। तत्र समिधो यजतीत्येका व्यक्तिरसाधारणा चोद्यते तनूनपातं यजतीत्यपरा तस्मात्पञ्च व्यक्तय इति सिद्धम्। यत्त्वत्र गकारादिवद् व्यक्त्याकृतिभेदो नास्तीति। सत्यं नास्ति किं तु ॥

यस्मात्तमेकं कर्मेति स्वरूपेणावधार्यते।
ततः परं न भेदोऽस्ति प्राक्तस्माद्भेदनिश्चयः ॥

यथैव गकारादीनां वर्णत्वशब्दत्वगुणत्वेषु सत्सु द्रुतादिभेदस्य परोपाधित्वाद्गकारादिरूपैकत्वसिद्धेर्गत्वादिमात्रं न कल्पितम्,

(१) अन्यशब्दार्थ इति २ पु० पाठः।

तथाऽत्र सत्ताकर्मयागत्वेषु समिद्यागादिपर्यन्तेषु सत्सु देशकालयजमानादिभेदाद् व्रतादिवृत्तिस्थानीयान्न भेदः । तथा हि ॥

पौर्णमासीसमिद्यागाद्दामावास्यो न भिद्यते ।
यजमानान्तरेष्वेवं देशभेदेष्ववस्थितम् ॥

न च यत्र प्रत्यक्षेण केवलेन भेदोऽवगम्यते तदेवैकं भिद्यते । शब्दस्यापि प्रामाण्याविशेषात् । अतोऽत्र शब्दान्तरादिषट्कावधिरेव भेदोऽवधारयितव्यः । न ह्यैष्टिपशुसौमिकाहाहीनसत्त्रेषु परोपाधिर्भेदप्रत्ययो विपर्येति वा कदा चित् । तेन तासु विधेयरूपासु व्यक्तिष्वेव नित्यास्वभिव्यञ्जकानि भिद्यन्ते । तेभ्यश्च फलस्वरूपसिद्धिर्यागत्वमेव वैकमवान्तरसामान्यं नान्यत्किं चित् । नन्वेकाहत्वादीन्यप्यवान्तरसामान्यानीष्यन्ते । न, कालविशेषयोगादेव दण्ड्यादिवदभिन्नशब्दप्रत्ययप्रवृत्तिसिद्धेः । एकेन ह्यह्ना योगादेकाहत्वम् द्व्यादिभिरहीनत्वं प्राग्द्वादशाहात्, स तु कथमप्युभयात्मा तदवधिकमेव चासहस्रसंख्यवत्सरकालयोगनिमित्तमसत्रत्वं हविर्विशेषयोगादिष्ट्यादित्वमिति सिद्धम् । अथाप्यवान्तरसामान्यानि पुनः कल्प्यन्ते, तथाप्यस्मत्पक्षाविरोधः । एवं यदि ज्योतिष्टोमत्वादीनि देशकालादिभेदाच्च तद्व्यक्तयोत्यन्तातिरेकिण्यो भवन्ति तथाप्यदोषः । तथा यद्यपि देवतोद्देशद्रव्यत्यागात्मकत्वात्सर्व एवैको यागः कल्प्यते तेष्वपि भेदप्रमाणैस्तदनुष्ठाननानात्वावगमाद्व्यवहारसिद्धिः । नन्वेवं सति ज्योतिष्टोमग्रहाभ्यासवत्समिदादियागाभ्यासेष्वकर्मान्तरत्वप्रसङ्गः । सर्वथा तावदपूर्वभेदाद्धर्मव्यवस्थादीनि सिध्यन्ति, तथापि तु येह कर्मभेदबुद्धिर्ग्रहयागेषु चाभ्यासभेद-

प्रसिद्धिः। तच्चैतन्निमित्तम् इह सकलयागरूपानुष्ठानभेदचोदना(१) तत्र पुनः समस्ताभ्यासात्मकस्य ज्योतिष्टोमसंज्ञत्वाद्यद्यपि प्रत्यभ्यासं यागत्वमस्ति न तु ज्योतिष्टोमत्वमित्यभ्यासे अवयवबुद्धिर्नैतरत्रावयव्यन्तररूपानुपादानादिति विशेषः। एतज्ज्ञानस्य च प्रयोजनं पशुसोमाधिकरणे वक्ष्यामः। तस्माद्भ्यासितव्यो याग इति च भाष्यमेतत्पक्षाश्रयणेनैव। अथ वा भिन्नास्वेव व्यक्तिषु सामान्यापेक्षमभ्यासवचनम्। ननूक्तं न शक्नोत्यर्थान्तरं विधातुमिति विधिशक्तेस्तनूनपादादिदेवताभिधानाक्षेपे(२) सति विपरिवृत्य विरोध इति मन्यसे। तच्च तत्प्रख्यं चान्यशास्त्रमित्येवं समिदादिपदानां क्रमविनियुक्तैव लिङ्गमन्त्रवर्णकल्पितदेवतासंबन्धद्वारेण नामधेयत्वे सति अविधेयत्वान्नास्ति विधिशक्त्याक्षेप इति वक्तव्ये देवतायागसंबन्धविधानोपन्यासोऽभ्युपेत्यवादेन। यत्तावद्भवानप्राप्तत्वात्प्रथमस्य यागविधित्वं मन्यते तदयुक्तं तस्यापि प्रधान(३)यागानुवादत्वात्। तत्र समिदादिशब्दैर्द्रव्यं देवता वा विधीयते। उभयमपि चाग्नेयोऽष्टाकपाल इत्यादिभिरुत्पत्तिवाक्यैर्विहितेन द्रव्यदेवतेन विरुध्यते। अवश्यं चैतद्वाक्यकृतो यागसंबन्धः(४) कर्त्तव्यः, स च यागान्तरादृते न संभवतीति प्रतिपादिते(५)गुणविधित्वे कर्मान्तरत्वमापद्यते। एवं पूर्वत्र कर्मण्युत्तरोत्तरगुणविध्यसंभवात्सर्वेषां कर्मान्तरत्वमिति व्यर्थो गुणविध्युपन्यासश्रमः। गुणविधित्वमपि

---

(१) चोदनादिति २ पु० पाठः।

(२) विधानाक्षेपे इति २ पु० पाठः।

(३) प्रथमेति २ पु० पाठः।

(४) देवतायागसंबन्धइति २ पु० पाठः।

(५) प्रतिपादितेपीति २ पु० पाठः।

न तावद्द्रव्यमीदृशेन शब्देन संभवतीति व्याख्यातं सक्त्वधिकरणे । विशेषेण च यजतेः कर्मभूतद्रव्यसंबन्धो न घटते, न चायं देवताविधिरिति नवमे वक्ष्यते । तस्मात्कर्मविधिभिरेव भेदसिद्धिः ॥

# प्रकरणं तु पौर्णमास्यां रूपा-वचनात् ॥ ३ ॥

समस्तान् दर्शपूर्णमासप्रकरणयागविधीनुदाहृत्य किं सर्वेषां प्रधानत्वमुत केषां चिदेवेति भाष्यकारेण विचारः प्रस्तुतः । तदभिधीयते ॥

अङ्गप्रधानचिन्तेयं चतुर्थाध्यायगोचरः ।
केन नाम प्रसङ्गेन प्रस्तुता भेदलक्षणे ॥

अभ्यासलक्षणभेदानन्तरमिदानीं संख्यानिमित्तं भेदमविचार्यैव कथमयं लक्षणानौपयिकोऽर्थश्चिन्त्यते । के चिदाहुः । अयमपि लक्षणार्थ एव अनन्तरं प्रधानाप्रधानानि परीक्षिष्यन्त इति वचनात् । तत्त्वयुक्तम् । तत्रैव परं पर्यनुयुज्य(१) वचनस्यान्यथैव व्याख्यानात् । अपूर्वभेदनिवृत्त्यर्थो(२)हि स तृतीयसिद्धोऽर्थोऽत्रोपन्यस्त इत्युक्तम् । अयं(३)तु कर्मणामङ्गाङ्गिभावो न कथं चित्संबध्यते । महता प्रयत्नेनायं चतुर्थे साधयिष्यते दर्शपूर्णमासयोरिज्याः प्रधानानीत्यत्राधिकरणे, स्फुटत्वाच्च नान्यथा तन्नेतुं शक्यते । तस्मादिहाविचारणीयमेतत् । य एवं विद्वानित्येवं

(१) अस्येत्यधिक ३ पु० पाठः ।
(२) अपूर्वभेदप्रतीत्यर्थ इति २ पु० पाठः ।
(३) अत्रेति २ पु० पाठः ।

संयुक्तौ प्रक्रमानुवादौ अथ वापूर्वकर्मविधी तत्रेतरे गुणविषय इत्यपि सर्वं यथोपन्यस्तेनाप्यधिकरणार्थेन न संगच्छते ऽथ त्वे-तदेव विचार्यते ततः पूर्वं नोपन्यसितव्यम्। अपि च॥

भेदे च दृष्टसामर्थ्यौ समप्राधान्यसिद्धये।
कथं शब्दान्तराभ्यासौ हेतुत्वेनोपवर्णितौ॥

शब्दान्तरत्वादभ्यासाच्च भेदस्तावदुच्यते समप्रधानत्वमप्ये-ताभ्यामेव प्रतिपाद्यतइत्यपूर्वा युक्तिः। न चाधिकरणद्वयशरी-रस्य विविक्ताः पक्षहेतवो दृश्यन्ते येन तन्त्रेण विचारद्वयमिदं प्रस्तुतमित्यध्यवस्येम। तस्मादेवं समर्थयितव्यम्। इष्टाभ्यामनुक्त-णभेदातिप्रसङ्गापवादार्थमधिकरणे आरभ्यमाणे यथोदाहृता-नां मध्ये द्वे एवोदाहरणे य एवं विद्वान्पौर्णमासीं यजते य एवं विद्वानमावास्यां यजतइति। तच्च संदेहः। किमेतौ यजतिशब्दा-वपूर्वयोः कर्मणोर्विधायकौ उत पौर्णमास्यमावास्याशब्दाभ्यां स्वाभिधेयकालविशेषयुक्तकर्मप्रतिपादकाभ्यां विशेष्यमाणौ प्र-क्रान्तानेव कांश्चिद्यागाननुवदत इति। तत्रेतरेषामाग्नेयादीनां गुणात् प्रयाजादीनामभ्यासादाघारादीनां शब्दान्तरत्वात्सिद्धे भेदे ऽधिकरणपक्षद्वयप्रयोजनभूतसमप्रधानभावाङ्गाङ्गिभाववि-षयत्वेनोपन्यासो नाधिकरणशरीरविषयत्वेन। नहि समप्रधा-नत्वमङ्गाङ्गिभावश्चाधिकरणपक्षावित्युक्तम्। तदिह पौर्णमा-स्यमावास्यासंयुक्तयोर्विधायकत्वं तदभिधेयकर्मभेदः समस्ताघा-रादीनां समप्राधान्यमित्येतत्त्रयमुत्तरोत्तरफलत्वेनाविनाभाव-संबन्धादेकः(१)पक्षस्तथा तयोरनुवादत्वं तद्वाच्यकर्माभेदः आ-ग्नेयादीन्प्रत्याघारादीनामङ्गत्वमिति तेनैव प्रकारेणापरः चि-

(१) संबद्धमेकं इति पु० पाठः।

कः । त्रितयस्य त्रितयस्य च स्वांशाविनाभावादेकसिद्ध्यैवेतरद्ध-यसिद्धिर्भवतीति पक्षद्वयेपि यदेव साधितं तेनैवेष्टसिद्धिं मत्वा फलभूतस्तृतीयः तृतीयोंश उपन्यस्तः । तत्र चार्थगृहीतावपि भेदाभेदौ विस्पष्टीकरणार्थं पुनरन्ते दर्शितौ। किमर्थं पुनरादौ। व्यवस्थितयोः समप्रधानाङ्गाङ्गिभावद्वारेण भेदाभेदयोरुपन्यासः कृतः। एषा ह्याचार्यस्य शैलीति केचित्। तथा हि पूर्वाधिकरणयोरप्यपूर्वभेदमेवोपन्यस्तवान् । अथ वा यल्लिङ्गदर्शनं वक्ष्यति विकृतौ प्रयाजादयो दृश्यन्त इति तत्पाचाङ्गेदनिराकरणायासमर्थं(१)समप्रधानभावं निराकरिष्यति,तन्निराकरणे च सत्यविनाभावाद्विधिभेदावपि निराकृतावेव भवत इति तदुपजीवनायेत्थमुपन्यासः,केवलभेदोपन्यासे तु तदसंबद्धमेव स्यात्। तत्र द्वेधा पूर्वपक्षो भविष्यत्येकः समप्राधान्यद्वारेणाग्नेयादीनां कर्मविधित्वे सत्येव पौर्णमास्यमावास्यासंयुक्तयोस्तद्व्यतिरिक्तकर्मविधानात्,परः पुनस्तयोरेव कर्मविधित्वमितरेषां तु गुणविधानार्थत्वमि,त्येवं प्रथमं तावद्व्यतिरेकपक्षं परिगृह्णाति शब्दान्तरत्वा(२)दभ्यासाच्च समप्रधानानीति। यद्यपि चैतौ हेतू साक्षात्समप्रधानत्वेन न संगच्छेते तथापि तत्प्रतिज्ञानेन योर्थाङ्गेदः प्रतिज्ञातस्तेन संबन्धादेकवाक्यत्वम् । एतदुक्तं भवत्ययागेभ्यः शब्दान्तरत्वाद्यागेभ्यश्चाभ्यासाङ्गेदस्ततश्च समप्रधानानीति। न च समस्तानुवादस्य किंचित्प्रयोजनमस्ति। न च गुणफलनिमित्तानां किंचिच्छ्रूयते यत्र विधिर्व्यापृतः(३) कर्मस्वरूपविधानमुपे-

---

(१) सदित्यधिकं २ पु० पाठः ।

(२) शब्दान्तरादिति २ पु० पाठः ।

(३) विधिर्व्यापारत इति पु० पाठः ।

षेत । न चैषा संज्ञा केष चित्प्रकृतेषु प्रसिद्धा वर्त्तमानापदेशेऽपि च सति प्रयोगवचनार्थवादपञ्चमलकारादीनामन्यतमेन समिधो यजतीत्यादिवद्विधिः । सत्यपि च यच्छब्दोपबन्धे यदाग्नेयोऽष्टाकपाल इत्यादिवत् विधिशब्दश्रवणवल्लोपः । न च शाखान्तरीयवत् विधिविकल्पः । शाखान्तराणां पुरुषान्तरं प्रति प्रतिपादनेनार्थवत्त्वात् । न त्विह कर्मान्तरकल्पनादन्यत् प्रयोजनमस्ति । न च कस्य चिदन्यस्य विधेः स्तुतिः संभवत्येकवाक्यत्वाभावात् । किं पुनरनयोः कर्मणोर्द्रव्यदेवतम् । तदुच्यते ॥

ध्रौवं साधारणं द्रव्यं देवता मान्त्रवर्णिकी ।
रूपवन्तावतो यागौ विधीयेते पृथक्तया ॥

सर्वस्मै वा एतद्यज्ञाय गृह्यत इति सर्वार्थत्वाद्यथैवोपांशुयाजस्य ध्रौवाज्यद्रव्यकत्वमेवमनयोरपि यागयोस्तथाज्यभागयोः क्रमे चतस्रोऽनुवाक्याः पठ्यन्ते । द्वे आग्नेय्यौ द्वे सौम्यौ ते बलीयसा वाक्येनावच्छिद्यानयोः कर्मणोर्विधीयेते । वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायामिति । न हि पौर्णमास्यमावास्याशब्दाभ्यामेतत्कर्मव्यतिरिक्तमन्यदिहोच्यते । ननु कालवचनावेताविह प्रयुज्येते किं हि कालस्य मन्त्रसंबन्धेन, दृष्टश्च सप्तमीनिर्दिष्टानां कर्मणां प्रधानभावस्तद्यथा येन कर्मणेर्त्सेत् तत्र जयां जुहुयादिति, तेनानुवाक्याद्वयस्य तुल्यार्थतया विकल्प्यमानस्यानुरूपा याज्यापि कल्पयितव्या । अथ वा युगपद्विधानात् समुच्चये सति द्विदेवत्यकर्माध्यवसायाद् द्वे द्वे याज्ये अपि कल्पयितव्ये । यद्वैकैवाग्नीषोमदेवत्या । अथ वा वार्त्रघ्न्योरेवैका याज्या कर्तव्या तथा वृधन्वत्योः । अतश्च श्रुतिविहितमन्त्रकर्मसंबन्धान्यथानुपपत्त्याग्नीषोमौ देवता उभयत्रा-

ध्यवसीयते। आज्यभागयोस्तु पुराकल्परूपेण(१)वाक्येन देवता-
तावत्प्राप्तैव। यस्मै कस्मै चिद्देवतायै हविर्निर्वपन् आज्यस्यैव तौ
पुरस्ताद्यजन्निति। याज्याप्राप्तिश्चाबाधितैवानुवाक्यागमस्य दाश-
तयीभ्यः कर्त्तव्य इति न किं चिदिरुद्धम्। तस्मादस्ति कर्मान्त-
रत्वेपि रूपमिति भेदाऽतश्च समप्रधानानि(२)। भेद इति गृह्णी-
मः समप्रधानत्वं तु न मृष्यामहे। कुतः॥

निवेशः केषु चित्त्वेव पृथक्त्वेनाभिधानयोः।
फलं च तद्विशिष्टेभ्य इति साम्यं न युज्यते॥

दर्शपूर्णमासाभिधाने हि विशिष्टयागवाचिनी, तेन तन्मात्र-
स्यैव फलत्वादितरेषां तत्संनिधानादङ्गत्वेन भवितव्यम्। अत्रा-
भिधीयते॥

प्रसिद्धेनाप्रसिद्धस्य नित्यमिष्टं विशेषणम्।
तस्माद्यज्यनुरोधेन नामार्थोऽत्र निरूप्यते(३)॥

सर्वत्र नामयुक्तकर्मविधाने सामानाधिकरण्यात कदा चि-
द्यज्यर्थविशेषो नाम्ना निरूप्यते कदा चिन्नामार्थो यजिना।
यो यत्र पूर्वतरप्रसिद्धार्थो भवति स इतरं स्वविषये स्थापयति।
यथा ज्योतिष्टोमेनेत्यत्र ज्योतिर्भिस्त्रिवृदादिभिः स्तोमैर्योगा-
त्प्रसिद्धार्थेन नाम्ना दीक्षणीयादिभ्यो यजिनिवर्त्त्य सोमयागे
स्थाप्यते। तथा राजसूयेनेत्यत्र नामयागविषयत्वेनोपप्लव-
मानं(४) प्रकृतयागप्रसिद्धेन यजिना स्वविषयं नीयते। तदिह

(१) सरूपेणेति २ पु० पाठः।

(२) समप्राधान्यसिद्धिरिति २ पु० पाठः।

(३) नियुज्यतइति २ पाठः।

(४) उपप्लवमाने इति २ पु० पाठः।

प्रातिपदिकद्वयसमासद्विवचनार्थानां दर्शपूर्णमासपदोपात्तानां-
न क्व चित्प्रसिद्धिरस्ति यया यजेस्तद्विषयत्वं विज्ञायेत । यजिः
पुनर्यागमात्रे प्रसक्तः सन्नधिकारेण प्रकृतेषु स्थापितः शक्नोति
अप्रसिद्धं दर्शपूर्णमासशब्दं स्वविषये नियन्तुम् । ततश्च दर्शपू-
र्णमासाभ्यामित्यविवक्षितावयवसमासार्थद्वित्वं वर्णलोलोभाव-
मात्ररूपेण केवलकरणसंवादिप्रकृताशेषयागनामत्वं राजसूय-
शब्दवत्प्रतिपद्यते । सुपां सुपो भवन्तीति बहुवचनस्य स्थाने द्वि-
वचनं समस्तसमुदायगतैकवचनस्य वा । कथं पुनर्दर्शपूर्णमा-
साभ्यामित्यप्रसिद्धम् । यदा तावत् ॥

वाच्यकालयुजो यागाः प्रकृताः सन्ति के चन ।
द्विसंख्योत्पत्तियुक्ताश्च प्रसिद्धिर्येषु विद्यते ॥

तन्नामाशेषस्वार्थपरित्यागेनात्यन्तपरानुरोधिवृत्तिं भजते
यत्र कश्चिदप्यंशो ऽप्रसिद्धः, इह तु दर्शेन कालेन पौर्णमासेन
च संयुक्ता आग्नेयादियागा विद्यन्ते। द्वित्वयुक्ताश्चाज्यभागा-
दयस्तेषामयुक्तः परित्याग इति तदुच्यते ।

प्रकृतिप्रत्ययौ पूर्वौ विशेष्टुं यजतिं क्षमौ ।
आग्नेयाद्याज्यभागादावेकत्वैकार्थशून्यता ॥

यद्याप्याग्नेयादिषु स्वाभिधेयकालयोगात्प्रातिपदिकं वर्त्तेत
तथापि तेषां बहुत्वाद् द्वित्वानुपपत्तेरसमर्थं पदं, यत्रापि द्वित्व-
मस्त्याघारयोराज्यभागयोर्वा तत्रापि प्रातिपदिकस्यात्यन्तमश-
क्तिः । न चार्थप्रकरणशब्दान्तरैर्विस्पष्टं सामानाधिकरण्यमस्ति,
येन केन चिद्वर्णसामान्यादाख्याविकारन्यायेन गौणत्वेन वा
तद्विषयत्वमध्यवसीयेत । कस्मात्पुनरिमावेवापूर्वौ पूर्णमास्यमा-
वास्यासंज्ञकौ द्वौ यागौ फलाय न विधीयेते । तथा हि ।

सिद्धान्तेपि तु यागाभ्यां शब्दाभ्यामनुकीर्त्तितौ ।
तावेव समुदायौ द्वौ विधास्यते फलं प्रति ॥

यदि कश्चिद्दर्शपूर्णमासशब्दयोः पौर्णमास्यमावास्याशब्दयोश्च वैलक्षण्यात् न पूर्वकर्मप्रत्यभिज्ञानं फलवाक्ये ऽस्तीति ब्रूयात् स वक्तव्यस्तुल्यस्ते दोषोयमिति । तवापि हि पौर्णमास्यमावास्यासंज्ञकावेव समुदायौ फलवन्ताविष्टौ न च तयोः प्रयोगवाक्येस्ति शब्दत्वात्प्रत्यभिज्ञानम् । अथ तत्र विनापि संज्ञानुसारेण कालयोगाद्वृत्तिरिष्यते स ममाप्यस्त्येव कालयोगः । पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्यया यजेत । नैतदेवम् । एवमपि हि ॥

षण्णामग्न्यादियागानामनयोश्च द्वयोरयम् ।
समानः कालसंयोग इति नेष्टावधारणा ॥

न ह्यष्टानां कालसंयोगे सत्यवधारणे हेतुरस्ति, येनानयोरेव फलसंबन्धः स्यात् । स्यादेतत् । एतेषां मध्ये ययोः कयोश्चित्फलसंबन्ध इति तदयुक्तम् ॥

विशेष्यहेत्वभावे हि ग्रहणं निष्प्रमाणकम् ।
पक्षे वाङ्गप्रधानत्वं विरोधान्न विकल्पते ॥

विना विशेषहेतुना यागत्वकालसंबन्धसाम्ये सति यावेव गृहीतौ तत्रैवेतरेषां प्राधान्यप्रामाण्यभाजां सतामङ्गत्वापादनात् विरुद्धता स्यात् । अथ विकल्पेन सर्वेषां पाक्षिको ऽनुग्रहः कल्पेत तत्रापि तस्यैव कदा चित्प्रधानत्वं कदा चिदङ्गत्वमिति विप्रतिषिद्धम् । उभयात्मनां चाङ्गतया प्रवृत्तेः प्रधानत्वेन च निवृत्तेराग्नेयादीनां विकृतिगमने यावज्जीवं संशयप्रसङ्गः । सर्वसंख्याश्च केन चिदवान्तरसामान्यावच्छेदेन संख्येयेषु वर्त्तन्ते ।

न वापूर्वयोरग्नेयादीनां वा समस्तानामेकदेशे वा किं चिद्-वान्तरसामान्यं दृश्यते येन द्वित्वमवधार्येत । य एव हि गृहीत-स्तस्यैव यागान्तरापेक्षयोद्भूतेन बहुत्वेन केवलात्मापेक्षया चैक-त्वेन द्वित्वं बाध्यते । ततश्च द्विवचनस्याप्रसिद्धिः । सिद्धान्ते तु शब्दद्वयेन समुदायद्वयापादनात्समुदायीकृतयागवैलक्षण्याद्-वान्तरधर्मयोगात्संभवति द्वित्वयोगस्तद्वशेन च कालयोगा-त्कथं चिद्दर्शपूर्णमासप्रातिपदिकयोरपि वृत्तिसिद्धिरित्युपप-द्यते यागविशेषणत्वं, न तु पूर्वपक्षे समुदायत्वापादनाभावात्सं-ख्यावृत्तिरिति प्रकृतयागमात्रएव फलसंबन्धः । अथ कस्माद्-द्वावेव यागाः पौर्णमास्यमावास्याकालगतद्वित्वापेक्षया लब्ध-विशेषणाः सन्तो न विधीयन्ते । यथा सिद्धान्ते समुदायगतद्वि-त्वापेक्षया षड् विधास्यन्ते । नेदृशेनास्फुटेन प्रकृतयागमात्राव-लम्ब्याख्यातं शक्यं निवर्त्तयितुम् । न चात्यन्तव्यतिरेकात्काल-गता संख्या याग(१)सामानाधिकरण्यनिर्देशार्हा भवति । स-मुदायसमुदायिनोस्त्वव्यतिरेकादविरुद्धः संख्यासंबन्धः सिद्धा-न्ते । तस्मात्पूर्वपक्षे यजिवशेनैव नामपदवृत्तेरविशेषेण सर्वे या-गाः समप्रधानाः । तथा प्राप्ते ऽभिधीयते । प्रकरणं पौर्णमास्य-मावास्यासंयुक्तयो(२)रालम्बनं स्यात् । प्रक्रियतइति प्रकरणम् । अथ वा प्रकरणं तयोः सहकारि भवेत्ततश्च तन्मात्रप्रतिपाद्यो ऽर्थो ग्रहीतव्यः । कुतः ॥

विधायको नियुङ्क्ते तु(३) सर्वो ऽसाधारणे यजौ ।

---

(१) यागत्वेति २ पु० पाठः ।

(२) युक्तयोरिति २ पु० पाठः ।

(३) हीति २ पु० पाठः ।

न च तत्र प्रवृत्तिः स्यादज्ञातद्रव्यदेवते ॥

न ह्यनेन यजिना पौर्णमास्यमावास्यापदाभ्यां वा यागमात्रे बुद्धिः क्रियते। न च प्रकृतकर्मग्रहणं त्वत्पक्षेऽस्ति। तत्राज्ञातरूपे सति अपूर्वे कर्मणि न कथं चित्प्रवर्त्त्येत।(१)ततश्च वाक्यमेवानर्थकं भवेत्प्रकृतग्रहणे तु तेषां द्रव्यदेवतायोगादेतत्कालवर्त्तित्वाच्च रूपज्ञानादर्थवत्त्वम्। ननूक्तं मत्पक्षेऽप्यस्ति द्रव्यदेवतमिति। सत्यम् ॥

यथा कथं चिल्लभ्येत द्रव्यं(२)साधारणं स्थितम्।
तथापि देवता नास्तीत्यरूपत्वान्न मृष्यते ॥

न हि मान्त्रवर्णिकी देवता संभवति मन्त्राणां कर्मविशेषेणाज्यभागार्थत्वात्। न चास्य(३) वाक्येन बाधो विरोधाभावात्सर्वत्र ह्यविरोधेन वाक्ये निविशमाने विरोधपक्षस्त्यक्तव्यः(४) इह च पौर्णमास्यमावास्याशब्दौ यदि कर्मवचनावेव स्यातां ततो न विरोधः परिह्रियेत(५)। कालवचनत्वे त्वनयोरविरोधः। साधारण्याच्चाविरोधपक्ष एव समर्थनीयः। किं च।

प्रथमं काल एताभ्यां शब्दाभ्यां प्रतिपाद्यते।
पश्चात्तत्कर्म तद्योगादतः कालोऽत्र गृह्यते ॥

यदि हि सर्वलोकप्रसिद्धः कालोऽत्र न समवेयात्ततस्तदतिक्रमेण कर्मणी गृह्येयाताम्। अपि चोपपन्नतरा कालवचनत्वे सप्तमी, तस्य सर्वत्रैव कालस्याधिकरणत्वान्न कर्मणोऽधिकरणत्वा-

(१) प्रवर्त्तेतेति २ पु० पाठः।

(२) ध्रौवमिति २ पु० पाठः।

(३) न च वाक्येनेति २ पु० पाठः।

(४) त्यक्ष्येतेति २ पु० पाठः।

(५) परिह्रियेतेति २ पु० पाठः।

नुपपत्तेर्यथा कथं चित्कल्पनीयं स्यात् । यत्तु किं कालस्य मन्त्र-
संबन्धेनेति, यदि तादर्थ्यलक्षण एवैकः संबन्धो भवेत्स चाम्ना-
नाभिरुच्येत तत एवं युज्यते वक्तुम् । इह त्वाज्यभागौ प्रति ता-
दर्थ्ये व्यवस्थिते संकरे च प्राप्ते कालभेदेन प्रयुज्यमानयोर्मन्त्र-
योर्व्यवस्थामात्रं क्रियते वार्त्रघ्नौ पौर्णमास्योराज्यभागयो-
र्वृधन्वती अमावास्ययोरिति । किं च ॥

प्रज्ञातदेवतत्वाच्च दृष्टार्थोऽन्यविधानता ।
मत्पक्षे भवतस्त्वत्र प्रसक्ता बहुकल्पना ॥

सर्वत्रैवाकाङ्क्षापूर्वकः संबन्धो भवत्याज्यभागौ च प्रज्ञाता-
ग्नीषोमदेवत्यौ तदभिधानसमर्थमन्त्राकाङ्क्षित्वात् अयत्नेन म-
न्त्रान् गृह्णीत, त्वत्पक्षे त्वपूर्वयोः कर्मणोरज्ञातदेवतत्वान्न मन्त्रा-
पेक्षा, ततश्च मन्त्रतद्विशेषद्वित्वादिकल्पनादनपेक्षितानेकार्थ-
विधिप्रसङ्गः । पुनश्च मान्त्रवर्णिकानेकदेवताकल्पना, न ह्येकस्य
कर्मणोऽनेकया देवतयानेकयानुवाक्यया कार्यमस्ति । पुनश्चा-
श्रुतयाज्याकल्पना । अयमाज्यभागयोश्चाश्रुतयोरनुवाक्याकल्प-
नम् । यस्त्वेका याज्या एका वानुवाक्या भविष्यतीति । न तद-
नुवाक्या समाख्याबाधात् । अपि च त्वत्पक्षे लिङ्गस्याविनियो-
जकत्वात् वाक्ये च करणत्वेनाश्रयणात वैष्णवीमनूच्येत्यादि-
वददृष्टार्थप्रसक्तेर्न प्रकाशकता प्रकाश्यनानपेक्षितत्वात् । मा-
न्त्रवर्णिकदेवताकल्पनातश्च वरमारादुपकारकत्वम् । आज्य-
भागयोः पुनर्द्वित्वात्प्रज्ञातद्विदेवतत्वाच्च प्रकाश्याकाङ्क्षिताः
प्रकाशका मन्त्राः लिङ्गक्रमविनियुक्ताः सन्तः एकान्तेन दृष्टा-
र्थतां प्रतिपद्यन्ते । तत्र च मन्त्रतद्विशेषद्वित्वादिषु प्राप्तेषु का-
लद्वारेण व्यवस्थामात्रविधानाल्लाघवं वाक्यस्य, न चाऽनर्थक्यं

न हि सन्निधानाद्व्यवस्था सिद्धा । तस्मान्न देवताविधिसंबन्धा-
त् । अतश्च रूपवत्त्वात् अकर्मान्तरता । किं पुनः समस्तानुवाद-
स्य प्रयोजनं, पश्य ॥

पदतद्भागवाक्यार्थविधिशून्या हि चोदना ।
धर्मं प्रत्युपयोगित्वं न कथं चित्प्रपद्यते ॥

उच्यते ।

यथैवोत्पत्तिवाक्यानां प्रयोगवचनाङ्गता ।
तथैव तदुपादानाद् द्वित्वसिद्ध्या ऽनयोरपि ॥

वाक्यद्वयेन हि समुदायद्वये कल्पिते दर्शपूर्णमासाभ्यामिति
द्विवचनं सिध्यतीत्यर्थवत्त्वं, न हि विधिरेवैकः प्रयोजनवानिति
कश्चिन्नियमहेतुरस्त्यविधेरपि विधिशेषत्वेनार्थवत्त्वात् । न वा
ऽत्र विप्रकीर्णानामाग्नेयादीनामेतद्वाक्यद्वयमन्तरेण द्वित्वसं-
ख्यायोगित्वं संभवत्ये,तदेव चाभिप्रत्यास्य पक्षस्य प्रयोजनमेव
गुणप्रधानत्वमादित उपन्यस्तमितरथा ह्यविशेषादनर्थकं हि
स्यादित्यस्योत्तरमपरिकल्प्यानुवादपक्षो दुरुपन्यास एव स्या-
त् । तस्मादस्ति प्रयोजनं समस्तवाक्यानुवादेपीत्यदोषः । कथं
पुनरत्यन्तभिन्नानां कर्मणां समुदायीकरणं शक्यं, शक्यमिति
ब्रूमः ॥

एककालाभिसंयोगाद्भिन्नानामपि कर्मणाम् ।
समुदायार्पणं शक्यमेकदेशस्थवृक्षवत् ॥

यथैव ह्येकदेशावस्थितान्वृक्षानालोच्य वनमिति समुदायबु-
द्धिर्भवत्येवमेककालयुक्तकर्मसमुदायनामधेयबुद्धिस्तद्गतैकत्वाव-
धारणाच्च पौर्णमासीमित्येकवचननिर्देशः । समुदायिवचनावेव
चैतौ तदेकत्वितसमुदायगतसंख्याद्वारेणैकवचनान्तत्वं बिभ्रातेे ।

न समुदाययोरेव नामधेये भवतः । तथा हि ।

सामानाधिकरण्येन यागनामत्वनिश्चयः ।
समुदाये च यागत्वं नाग्नेयादिष्ववस्थितम् ॥

पौर्णमासीं यजत इति यजिसामानाधिकरण्यात् यागनामधेयमेतदिति गम्यते । न चाग्नेयादीनां समुदाये यागत्वं समवेतं, किं तर्हि प्रत्येकमाग्नेयादिषु, तस्माद्यथैवैतेषु प्रत्येकं यजिरेवं नामधेयमपि । न च समुदायोत्पत्तिरेकेन कालेन युक्ता, आग्नेयादीनामुत्पत्तिकाले परस्परानपेक्षत्वेन समुदायत्वानुपजननात् । ततः कालवशेनापि प्रत्येकं नामधेयमिति शक्यं वक्तुं, यदि च समुदायिनैरपेक्ष्येण समुदाययोरेते नामनी स्यातां ततः प्रयोगवाक्येनापि समुदायौ फले विधीयेयातां, ततोऽवयवानामसाधनत्वात्समुदायादेकमपूर्वम् । अतश्च प्रत्येकापूर्वाणामभावात्कर्मभेदवैयर्थ्यप्रसङ्गः । सर्वधर्माणां चैकापूर्वनिबन्धनत्वात्संकीर्णवृत्तित्वं स्यात् । न च प्रत्येकमितिकर्त्तव्यतया ऽऽग्नेयादयः संबध्येरन् । ततश्च तद्गततन्त्रावृत्तिप्रयोगादिविचारासंबद्धत्वं भवेत् । न च प्रत्येकविकारे सौर्यादौ समस्तेतिकर्त्तव्यतातिदेशः स्यात्सहस्रादिशब्दवच्चावयववृत्त्यभावादेकपुरोडाशा पौर्णमासी सान्नाय्यरहिता ऽमावास्येत्येवमादिव्यवहारोच्छेदप्रसङ्गः । संघातस्याचोदितत्वात्संघातस्य गुणत्वादित्येवमादिषु स्पष्टमेवंप्रकाराणां समुदायिवचनत्वमभ्युपगतम्, इतरथा हि स एव शब्दाभिहितत्वाच्चोद्येत फलसंबन्धाच्च प्रधानं भवेत् । तस्मादुपसर्जनीभूतसमुदायाः समुदायिन एवाभिधीयन्ते । तेषां तु बहुत्वात् बहुवचनप्रसङ्गेन लक्षणयैकवचनयोग इत्यभिप्रेत्य समुदायशब्दतयावकल्पिष्यत इत्याह । तथा च भवति हि बहूनामेकवचना-

न्तः समुदायापेक्ष इत्यपेक्षामात्रमेव समुदायस्य ब्रवीति नाभिधेयत्वम्। यूथवनशब्दावपि यदा समुदायोपसर्जनसमुदायिवचनौ तदा साकल्येन दृष्टान्तौ। यदा तु समुदायमेव ब्रूतः तदा तन्निमित्तैकवचनलाभमात्रेण दृष्टान्तत्वम्। एतेन दर्शपूर्णमासशब्दावेतत्पर्यायौ व्याख्यातौ। तस्मादस्ति समुदायद्वित्वापेक्षानिमित्तैकत्वद्वयप्रत्ययसिद्धिः समुदायानुवादप्रयोजनम्। यथा वक्ष्यति-(१)पृथक्त्वेनाभिधानयोर्निवेश इत्यत्र। तद्द्वित्वानुसारिणौ हि दर्शपूर्णमासशब्दौ तद्विषयौ भवतो, ऽस्ति च पौर्णमासीपूर्णमासशब्दयोर्बहु साकल्यन्तस्माद्व्यर्थाच्च दर्शशब्दस्यामावास्याविषयत्वं, विपर्ययहेतुत्वेन वा लघीयस्येव प्रतिपत्तिर्यथा काण इति चक्षुष्मान्। तथा च वक्ष्यति शक्यते च चन्द्रमसोऽदर्शनाद्दर्श इति वक्तुम्। तथान्वारम्भणीयावाक्यशेषेऽमावास्यादर्शशब्दौ समानाधिकरणौ दर्शयिष्यति, तेन समुदायद्वयोपलक्षितानां फलवत्त्वादितरेषामङ्गत्वम्। ननु चैवमप्यनेनैव गतत्वाच्चतुर्थेऽधिकरणं नारब्धव्यम्। नैष दोषः। स्थिते ह्यस्मिन्प्रकृतयजतिमात्रग्रहणात्तत्र पूर्वः पक्षः, सिद्धान्तस्त्वेतदधिकरणप्रमादाद्भविष्यति, इतरथा तस्य पूर्वपक्ष एव स्यादिति प्रयोजनत्वेनाभिधानम्। इदमपरं समुदायानुवादप्रयोजनं पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्यया यजेतेति कालसंयोगः। तत्रैतत्स्यात्। एतदपि वाक्यमनर्थकमुत्पत्तिवाक्यादेव कालसंयोगसिद्धेरिति। उच्यते॥

अन्यथैव ह्ययं कालः करणांशेन युज्यते।
अन्यथोत्पत्तिवाक्यस्थो निरपेक्षैः परस्परम्॥

---

(१) चतुर्थे इत्यधिकः २ पु० पाठः।

उत्पत्तिवाक्ये ह्यन्योन्यनिरपेक्षाणामाग्नेयादीनां निरङ्गानां च कालसंयोगस्तद्रूपत्वेनोपादानात्। अयं पुनस्तृतीयासंयोगात्करणभूतानाम् । तेषां च करणत्वं प्रयोगवाक्यादितरेतरयुक्तानामङ्गसहितानां चावगतमिति तादृशानां तदनुपादेयं, कालं प्रत्यपादीयमानत्वात्। समस्तरूपविवक्षावशेन माङ्गलिकः परस्परसहितस्यैकपौर्णमास्यायुक्त एकया नामावास्ययेति। यस्मिन् क्षणएको याग आरभ्य क्रियमाणः समाप्तिमनभवति तस्मिन्नेवेतरावित्यवधारणात्त्रिकस्य त्रिकस्य तन्त्रेण प्रयोगः सिद्धो भवति। औत्पत्तिककालानुरोधे तु भेदेनाङ्गवियुक्तानां च प्रयोगः स्यादित्यस्ति विशेषः । ननु चैवं सति समुदायद्वयस्येतरेतरयुक्तस्य करणत्वात् अङ्गसाहित्यवत्त् परस्परतद्विवक्षापोति यथैवाङ्गानां तत्कालविज्ञानमेवं पौर्णमास्यामावास्याशिष्टामावास्यया च पौर्णमासीत्युभयोरुभयत्र प्रसङ्गः न वोत्पत्तिवाक्यशिष्टकालविरोधस्तत्राप्यनुष्ठानात् । न हि यः पौर्णमास्याममावास्यां करोति तेनामावास्यायाममावास्या न कृताभवति, तथा पौर्णमासी। न चोत्पत्तिवाक्येन कालान्तरं निषिद्धं, स्वकालप्रतिपादनमात्रोपक्षयात्। अत्रोच्यते ॥

कालो यस्य न विज्ञातः स्वरूपं च न नश्यति ।
तस्य कालः परोपाधिरुच्यमानो न दुष्यति ॥

अमावास्या ह्यौत्पत्तिकालनिराकाङ्क्षा पौर्णमासीसाहित्यलभ्यं पौर्णमासीकालं प्रतीच्छत्येवं पौर्णमास्यमावास्याकालमित्येतयोः समुदाययोः कालान्तरकरणे सत्यौत्पत्तिकरूपविसंवादादर्शत्वमपौर्णमासत्वं च स्यात् । अङ्गानां त्वनिर्ज्ञातकालत्वेन साकाङ्क्षत्वादुत्पत्तिविसंवादाभावाच्चाविरुद्धः साहित्यापे-

प्रत्यभ्यः कालः । आह ॥

> अङ्गानां मुख्यकालत्वाद्वाक्यादस्मादिना ऽप्ययम् ।
> कालोऽस्त्येवेति नैतस्य वचसोऽत्र निमित्तता ॥

उच्यते ।

> मुख्यकालत्वमङ्गानां न स्थितं मान्त्रवर्णिकम् ।
> इदमेव हि तद्वाक्यं यद्बलेनैतदुच्यते ॥

ननु दूरस्थान्युपकर्त्तुं न शक्नुवन्ति संनिकृष्टस्थैरुपकर्त्तव्यमित्येतद्वा कुतः सर्वत्र, वचनानुसारेणोपकारानुपकारौ विज्ञायेते । तत्र सन्निकर्षवचनाभावे विप्रकृष्टं नोपकरोतीति न किंचित्प्रमाणम् । ननु चा ऽन्येनैव वाक्येनैष तन्त्रप्रयोगः सिध्यति, य इष्ट्या पशुना सोमेनेत्यादीनां तत्रापि करणविभक्तिनिर्देशादिष्टेः स्वसमुदायिस्वाङ्गसहितायाः कालं प्रत्युपादानादीदृशी विवक्षा लभ्यते । सत्यं लभ्यते न त्विष्टः प्रयोगः सिध्यति । तथा हि ॥

> इष्टिशब्दः समस्तं वा प्रत्येकं वा ऽवलम्बते ।
> न तावत्त्रिकमित्येकमन्यादृक् चेष्टितं भवेत् ॥

न तावत्त्रिकस्येष्टिशब्देन ग्रहणमित्यवधार्यते । तत्र प्रत्येकं यागत्वेनेष्टिशब्दप्रवृत्तेरेकैकस्याममावास्यायां पौर्णमास्यां वा प्रयोग इति न सम्यक्प्रयोगसिद्धिः । अथ समस्तानामाग्नेयादीनां कथंचिद्रूढेः प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिरितिवद् ग्रहणम् । एवमपि प्रयोगवचनैकत्वात्समुदायद्वयस्यापि पौर्णमास्याममावास्यायां वा ऽनुष्ठानं स्यात् । तत्र स एवोत्पत्तिशिष्टकालविरोधः तदनुरोधेन व्यवस्थितविकल्पाश्रयणमिति चेत् । एवमपि यथोत्पत्त्यनुरोधात्प्रत्येकानुष्ठानप्रसङ्गः । तथाङ्गानां भेदेन पौर्ण-

मास्यमावास्ये प्रत्युपादानाभावाद्यत्र क्व चनैकत्र प्रदेशे ऽनुष्ठानं स्यात्। तस्मान्नैतद्वाक्यं ताभ्यां तुल्यार्थमिति प्रकृतावकिंचित्कर-त्वात् विकृतीरिव सद्यःकालतायै गच्छति। नन्वनेन तन्त्रप्रयोगः सिध्येत्। समे दर्शपूर्णमासाभ्यां यजेतेति देशस्यानुपादेयत्वा-त्साहित्यविवक्षोपपत्तेः। तत्रोच्यते॥

समस्य केवला नैव तन्त्रता प्रतिपाद्यते ।
तेन सर्वैरसावेको ग्राह्यो न बहवः समाः ॥

भेदेनापि हि प्रयुज्यमानानामनन्यदेशगमनमात्रेण देशत-न्त्रत्वसिद्धिः। अथेतरेतरयोगवशाद्यदैवैकः समेन यागो यु-ज्यते तदैवेतरोपीति तन्त्रत्वमुच्यते। तथा सति षण्णामपि युग-पदुपादानात्तथैव प्रयोगप्रसक्तेः स एव विरोधो, यदि पुनरुत्प-त्तिवाक्यानुरोधेन प्रवर्त्तते। ततः प्रत्येकं कालसंयुक्तानां समं प्रतिसाहित्यं संपादनीयमिति षट्स्वेव पौर्णमास्यमावास्यासु प्रयोगः समाप्येत। अङ्गानि च तावतः कालादनुत्कृष्यमाणानि प्रयोक्तव्यानीति यत्र क्व चनान्तराले क्रियेरन्॥ अथ वा प्रति-प्रधानावृत्तेर्न्याय्यत्वादेकैकं प्रधानं साङ्गमपवृज्येत। अथ तु यावतोत्पत्तिकालो विरुध्यते तावन्मात्रं परिहाय यौगपद्येन समसंबन्धः कर्त्तव्य इत्यवधार्येत, तत एकस्यामेव पौर्णमास्या-ममावास्यायां वा त्रिकयोः प्रयुज्यमानयोर्यस्य कस्य चित्समी-पेऽङ्गानि प्रयुज्येरन्। अथ वा तदर्द्धमासान्तराले यत्र क्व चना-हनि। सर्वो ह्यसौ प्रधानकालः, प्रधानकालावच्छिभावश्च सं-भावयितव्यो नात्यन्तसामीप्यमशक्यत्वात्त,स्मान्नैतेनाप्यभिप्रेत-प्रयोगसिद्धिः। अनेनैव फलवाक्यमपि प्रत्युक्तं फलस्यापि देशव-देवानुपादेयत्वात्सर्वाणीतरेतरयुक्तान्साङ्गान्प्रति तन्त्रत्वे सि-

द्वे न प्रयोगतन्त्रत्वसिद्धिः । विप्रकृष्टकालैरेव स्वर्गे फलं सा- ध्येत । अथोच्येत फलं भवद्भाववयेदेतैरित्यमिति साङ्गानि प्रधा- नानि युगपत्फलभवनकाले ऽनुष्ठातव्यानि श्रूयन्ते । ततश्च न विप्रकृष्टानीति(१)तत्रापि समुदायद्वयस्य युगपत्प्रयोगापत्ति- दोषः । उत्पत्तिवाक्यानुरोधेन वा पूर्ववदेव प्रत्येकं प्रयोगादि- योजना । न च फलभवनकालो ऽस्मत्प्रत्यक्षः, सोपि हि प्रधाने- तिकर्त्तव्यताकालेनैव परिच्छिद्यते । ततश्चोत्पत्तिकालालोच- नेन यावन्तं प्रयोगकालमङ्गप्रधानानि व्याप्नुवन्ति तावानेव फ- लभवनकालस्तादृगेव तद्विषयं यौगपद्यमिति सर्वथा षट्सु पौ- र्णमास्यमावास्यासु द्वयोर्वा साङ्गानां चापवर्गः । एकसमुदाय- समीपे वाङ्गप्रयोगः अर्द्धमासान्तराले वा यत्र क्वचिदिति प्रस- ङ्गा(२)न्नैतद्वाक्यतन्त्रस्थितिकस्य चिकस्य साङ्गस्य स्वकाले प्रयोगो वाक्यान्तरात् सिध्यतीति । तस्मादर्थवान् पौर्णमास्यां पौर्णमा- स्येति (३)कालविधिः । नन्वेवं सत्युत्पत्तौ कालयोगो ऽनर्थकः । कथमनर्थकः । पश्य ॥

यद्युत्पत्तौ न विधीयेत यागानां कालसंगतिः ।
समुदायानुवादत्वं निर्निमित्तं न लभ्यते ॥

पौर्णमास्यमावास्याशब्दौ स्वाभिधेयकालयुक्तयागानुवादा- विष्येते । तदभावे तु नैव ज्ञायेत का पौर्णमासी का ऽमावास्ये- ति । तदज्ञानादलब्धार्थदर्शपौर्णमासपदाविशेषितप्रकृतयाग- मात्रग्रहणात् सर्वाणि समप्रधानानीत्येतदेव स्यात् । तस्मादवश्यं

(१) विप्रकृष्टव्यानीति २ पु० पाठः ।

(२) प्रसङ्गः तस्मादिति २ पु० पाठः ।

(३) पञ्चेतेति २ पु० पाठः ।

भवितव्यं प्रथमं कालसंयोगेनाऽत एव वोपांशुयाजस्यानुत्पत्ति-वाक्यमपि सत्पौर्णमासीसंयुक्तमुदाहृतम् ॥

## विशेषदर्शनाच्च पूर्वेषां समेषु ह्यप्रवृत्तिः स्यात् ॥ ४ ॥

यदि चैते कर्मान्तरे स्युस्ततस्ते आघारादीनि समप्रधानानि स्युस्ततश्च कर्मणस्त्वप्रवृत्तित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तद्धन्धनत्वादित्यनेन न्यायेनाग्नेयादिवत् प्रयाजादीनां करणांशोपनिपातादिच्छितकरणया विकृतिभावनया कथंभावाकाङ्क्षिण्या तत्प्रकरणासमर्थानामग्रहणात्प्राप्तप्रयाजानुवादेन क्रमाणविधानं नोपपद्येत । तस्मादाग्नेयगुणत्वं(१) प्रयाजादेः कथं स्यादिति समुदायानुवादो ॥

## गुणयोगात् ॥ ५ ॥(२)

पौर्णमासीमित्येकत्वं प्रातिपदिकार्थगतमेव भविष्यति न तत्क्षितसमुदायगतम् । प्रत्यक्षश्रुतश्च यजिद्रव्यदेवतासंबन्धात् क्रमेणानुमातव्यो न भविष्यति । सोपि वानेकस्तदपूर्वमप्यनेकं, समुदायानुवादत्वाच्च विधित्वं गुणवत्तरम् । प्रयाजादिदर्शनमपि यत्र नित्यानुवादवचनानि स्युरित्येवं विशिष्टविधानेन वा प्रकृतिस्थप्रयाजगुणविधिना वा सुपरिहरं मन्यमान एतावेव कर्मविधी शेषा गुणविधय इत्यल्पतापरिहारमात्र । अष्टाकपालादिवाक्येषु पौर्णमास्यमावास्याशब्दयोः कर्मवचनत्वाद्

(१) आग्नेयादिगुणत्वमिति २ पु० पाठः ।

(२) गुणस्तु श्रुतिसंयोगादिति २ पु० पाठः ।

वाक्यसिद्धमेव रूपवत्त्वमिति ॥

## चोदना वा गुणानां युगपच्छास्त्राच्चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत ॥ ६ ॥

नैतेष्टाकपालादयो गुणविधयः । कुतः ॥

प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥

कर्मोत्पत्तिवाक्ये हि प्रत्ययो भावनामप्राप्तत्वात् विधातुमुपक्रमते । सा च यावद्धात्वर्थकारकैर्न परिपूर्यते तावदनुष्ठातुमयोग्येति न विधित्वपर्यवसानं, तत्र भावनात्मांशभूतावगतकारकसामान्यान्यथानुपपत्त्याक्षिप्तविशेषोपलिप्सायां स्ववाक्योच्चारितकारकविभक्त्यन्तपदप्रतीतैर्विशेषैर्भावनामात्राकाङ्क्षिभिः वाक्यादेव विशेष्यते । प्रतिपदं च यावत्किंचिद् द्रव्याश्रितं जातिलिङ्गसंख्यादि तत्सर्वमेकपदोपादानलक्षणश्रुतिप्रतिबद्धविशेषणविशेष्यभावमप्रतिपन्नपरस्परशेषशेषित्वं विभक्तिश्रुत्यैव कारकात्मना भावनार्थत्वं प्रतिपद्यते । एवं यावन्ति पदानि संनिकर्षविप्रकर्षस्थानि तानि सर्वाण्यनुषङ्गाधिकरणोक्तेन मार्गेणानादृत्य संनिकर्षविप्रकर्षौ युगपत्संनिपतन्ति । ततः सर्वविशेषणविशिष्टामनुष्ठानयोग्यां भावनामासाद्य विधिः समाप्यते । स चैकेनैव प्रयत्नेन तां विशिष्टां विदधातीति नानेकशक्तिकल्पनापत्तिदोषः । तथा हि ॥

श्रौतव्यापारनानात्वे शब्दानामतिगौरवम् ।

एकोऽत्यवसितानां तु नार्थाक्षेपो विरुध्यते ॥

विशिष्टायां भावनायामाधाय श्रौतं विधित्वं यद्यन्यत्रापि श्रुत्यैव पुनर्व्याप्रियेत ततः पुनरुच्चारणदोषमवैदिकत्वापत्त्या लभेत । अयं पुनः सकृद्विधाय निवृत्तव्यापारः स्वार्थान्यथानुपपत्त्या सर्वविशेषणेषु प्रत्येकनिष्ठानि विध्यन्तराण्याविर्भावयन् समाम्नायावगतैकरूपापरित्यागेनैवासकृदुच्चारणफले वर्त्तते ॥

विशेषणविधिश्चायं पश्चाद्यद्यपि गम्यते ।
तथापि त्वाकृतिन्यायात्ततः प्रागेव जायते ॥

विशिष्टनिमित्तत्वादर्थापत्तिः पश्चाद्भवन्ती यद्यपि विशेषणविधीनुत्तरकालमवगमयति तथापि त्वाकृत्यधिकरणन्यायेन विशेषणान्यनुपादाय विशिष्टव्यापारासंभवान्नूनं पूर्वतरं विशेषणविषयो निष्पन्नाः, यतस्तदधीनसिद्धिर्विशिष्टप्रत्ययो दृश्यते इति, तेन बहव एवैते विधय इति प्रत्यक्षार्थापत्तिलब्धा युगपत्क्रमेण वा व्याप्रियन्त इत्यनेकविध्यन्तरप्रसवसमर्थैकविशिष्टविधिप्रसादेनानेकगुणविधानमपूर्वभावनाविधिपक्षे सुलभं नेतरत्र । कथम् ॥

प्रधानं नीयमानं हि तत्राङ्गान्यपि कर्षति(१) ।
अङ्गमाकृष्यमाणं तु नाङ्गान्तरमसंगतः ॥

यदा हि भावना ऽन्यतः प्राप्ता भवति तदा तस्याः पिष्टपेषणवत्प्रतिहतशक्तिर्विधायकस्तामविदधानः न तत्संगतार्थानेकविधिव्यापारप्रसवहेतुत्वं प्रतिपद्यते । विशिष्टविधाने ह्यर्थापत्त्या विध्यन्तराणि कल्प्यन्ते । न चात्र तत्संभवतीत्यनुपयुक्तश्रौत-

(१) अपकर्षतीति २ पु० पाठः ।

व्यापारावस्थ एव प्रत्यय आनर्थक्यात्तदङ्गेष्वित्यनेन न्यायेन भावनातोऽवतीर्य तत्संबद्धानि कारकाण्युपसर्पति । तत्र यावन्त्येकपदोपात्तैककारकविशेषणानि जातिलिङ्गद्रव्यसंख्यादीनि तानि विशिष्टभावनाविधिन्यायेनैव तत्कारकाक्षेपात् सर्वाणि विधीयन्तइति प्राप्तायामपि भावनायामनेकार्थविध्युपपत्तिः । यदा त्वनेकपदोपात्तानेककारकोपनिपातो भवति तदा कारकाणां परस्परसंबन्धाभावात्तत्पदेष्वप्यसंबध्यमानेषु यद्येकत्र विधिर्गच्छति तदा नेतरत्र गतो भवति, एवमितरगमनेऽप्यन्यगमनानुपपत्तिरसंबन्धादेवं च न भावनावदेकेन विहितेनेतरदर्थादाक्षेप्तुं शक्यते । तत्रार्थलभ्यविध्यन्तरप्रसूतावसत्यामेकात्मकः श्रौतो विधिरेकत्रोपक्षीयमाणो यद्यन्यत्राप्यस्तीति कल्पते तन्नासकृदुच्चारणादृते सिध्यतीति पौरुषेयोऽनेकोच्चारणप्रसङ्गस्तद्दर्शयति । चोदिते हि प्राप्ते कर्मणि तदर्थत्वाद्गुणार्थत्वात्तस्य तस्य गुणस्य विषये पुनः पुनरुपदिश्यतोच्चार्येत प्रत्यय इत्यर्थः ॥ परस्परसंबन्धे चासतीति भाष्यमर्थापत्तिमूलोच्छेदप्रदर्शनार्थं लोकेपि च यत्प्रधानं राजप्रभृति क चिन्नीयते तदात्मनाऽविनाभूतान्यमात्यादीन्यङ्गान्यप्यशेषाण्याक्षिपति । यदा तु कश्चिद्भृत्यानां क चिद्गच्छति तदा तदसंबन्धीनि भृत्यान्तराणि पदमपि न चलन्ति, तत्रावश्यं प्रयत्नान्तरमास्थेयं, न च तदेकव्यापारसाध्यमित्यशक्यं सकृच्छ्रुतावुपादातुमिति । एतमेवार्थं प्रपञ्चयति यदि हि पौर्णमास्युद्देशेनाष्टाकपालो विधीयते तदा तत्स्वरूपोत्पत्तिरपि तावदनुक्ता सती क्लेशेन लब्धा किमुत पदार्थान्तरविधानं, तदाह भवति संब-

न्धाभावान्नाग्नेयेन(१) संबध्यते । अथाग्नेयः पौर्णमास्यामित्यत्रापि स्वरूपोत्पत्तिक्लेशः पूर्वोक्त एव द्रष्टव्यः इति तमप्रदर्श्यैवाष्टाकपालसंबन्धाभावः प्रदर्शितः । एवं पौर्णमासीविशिष्टान्यतरानुवादे ऽप्यनूद्यमानस्योत्पत्तिः पौर्णमासीसंबन्धो विधीयमानस्याप्युत्पत्तिरितरेतरसंबन्धश्चेत्यतिगौरवम् । पौर्णमासीपदतन्त्रत्वे ऽप्युभयोरुत्पत्तिः कर्त्तव्या परस्परं संबन्धश्चेति दोषौ । न चाङ्गुणैकवाक्यनीवत्परस्परनियमसिद्धिर्विशिष्टविधानदोषात् । अतो ऽष्टाकपालानन्तरक्तया पौर्णमास्या ऽऽग्नेयः संबध्यते तदनन्तरक्तया वा ऽष्टाकपाल इत्यसंबन्धः । एतत्परिहारार्थं परस्परसंबन्धं द्रव्यदेवतयोः प्रथममेव कुर्वन् उभयस्वरूपोत्पत्तिरन्यतरस्य चान्यतरत्र विधानमिति युगपद्विधीयमानपरस्परसंबन्धक्लेशमनुभूय पुनः पौर्णमासीसंबन्धक्लेशः । तत्परिहारार्थमन्यतः सिद्धं देवतासंबन्धमनूद्य केवलकर्मसंबन्धं दर्शयत्यथ केन चिदाग्नेयः संकल्पित इति । तत्र संकल्पितशब्दवशेन केचिदाहुः केन चिदनुष्ठात्रा संकल्पित इति । न त्वेतद्युक्तमिव अन्येनाहंकर्मणि तदीयस्य च विधा करणमिति । तस्माद्धि णिजन्तः संकल्पितशब्दः केन चिदाक्येन रूक्षामादियुक्तेन विचित इत्यर्थः ॥ तथा चाष्टकपालसंबन्धसिद्ध्यर्थ(२)माग्नेयशब्दे ऽनूद्यमाने पौर्णमासीगतस्य का देवतेति न ज्ञायते युगपदुपलक्षणविधिकल्पने वाक्यभेद इत्यनेनैव मार्गेणाकृत्यधिकरणमुखप्रदर्शितैर्वचनव्यक्तिप्रकारैर्वाक्यभेदानन्त्यं प्रपञ्चयितव्यं, तेनावश्यं विधातव्यो ऽत्र द्रव्यदेवतासंबन्धो न च स पूर्वप्राप्ते कर्मणि संभवतीति गु·

(१) नानेनेति २ पु० पाठः ।

(२) सिध्यर्थमिति २ पु० पाठः ।

पाश्वापूर्वसंयोग इति कर्मान्तरत्वम्। कर्मान्तरत्वे च सति तद्-वस्थं रूपावचनमित्यनुवादता। अतश्च वत्नादेकवचनलक्षणाख्या-श्रयणीयम् । किं च ॥

न वाऽनन्यक्रियायोगे वाक्यमेतत्समाप्यते ।

न च स्वार्थासमाप्तत्वाद्वाक्यान्तरमपेक्षते ॥

अष्टाकपालो भवतीति नायं पुरुषव्यापारो, न च पुरोडाश-व्यापारमात्रं विधातुं शक्यमभावनाविशेषात्मकत्वात्तत्रावश्य-कल्पनीये पुरुषव्यापारविशेषे यागकल्पनाऽऽपतति तत्र यद्यपि प्रत्यक्षे लभ्यमाने न युक्तमानुमानिककल्पनं तथाप्यत्रापरिपूर्णे वाक्ये वाक्यान्तरानपेक्षिणि पौर्णमास्यमावास्यावाक्यस्थो यजिर-सन्निहित एवेति नानुमानं प्रतिबध्नाति । अनुमिते च सति य एवं विद्वानित्यनुवादसरूपत्वादनुवाद एव विज्ञायते । क्रियासामा-नाधिकरण्याच्च यदाग्नेयोऽष्टाकपाल इत्यादेर्यच्छब्दादिलक्षणः कर्तृसमानाधिकरणोऽयं य एवं विद्वानित्युपबध्यमानो वि-धिसामर्थ्यं निरुन्ध्यात् ॥ तथा चोक्तम् ॥

क्रियापदैकयोगित्वे यच्छब्दो न रुजेद्विधिम् ।

कर्तृयुक्तः स एवान्यप्रापितार्थानुवादकृत् ॥

## व्यपदेशश्च तद्वत् ॥ ७ ॥

एकेष्टिर्यद्यमावास्यासान्नाय्यौषधयोस्ततः ॥

विकल्पे सति संभारपौर्वापर्यं कुतो भवेत् ॥

कर्मभेदे हि भिन्नविषयत्वात्सान्नाय्यपुरोडाशसमुच्चये सति संभ्रियन्त इति समस्तसंभरणं प्रथमोत्तराभिधानं चावकल्पते नान्यथा, प्रथमपक्षे च चतुर्थमप्यपरमस्तीत्युत्तराणीति श्लाघो-

न्तरे इति ॥

## लिङ्गदर्शनाच्च ॥ ८ ॥

कर्मान्तरपक्षे ऽभ्यधिकत्वाद्गुणविधिपक्षे न्यूनत्वात्त्रयोदशत्व-मुद्देशत्वानुवादविरोधः । कुतः ॥

पौर्णमास्यां यदा तिस्रो द्वे दर्शविषये यदा ॥
प्रधानाकृतयः सन्ति तदा संख्योपपद्यते ॥
तस्मात्समुदायानुवादाविति सिद्धम । आह च ।
अरूपत्वाद्विधेयस्य प्रकृते शब्दशक्तितः ॥
तत्रैव रूपलाभाच्च समुदायानुवादता ।

## पौर्णमासीवदुपांशुयाजः स्यात् ॥ ९ ॥

इदानीमधिकरणत्रयेण समुदायानुवादापवादः क्रियते ॥ तत्रोपांशुयाजमन्तरा यजतीति तावत्सकलः प्रागुक्तो न्यायो ऽस्ति । कुतः ॥

यागान्विष्ण्वादिसंयुक्तैर्विहितानुपवक्तया ।
अरूपमन्तरायुक्तमगत्यैवावलम्बते ॥

तेषु तावत्तव्यप्रत्ययेनैकान्तिको विधिः । तत्र यदीदं यागान्तरं कल्प्यते ततः प्राप्तं रूपाज्ञानमदृष्टान्तरकल्पनं च । किं च ॥

अजामिकरणं चैषु प्रत्येकमवगम्यते ।
जामिदोषेण चोपांशुयाजोपन्यसनं कृतम् ॥

यथोपक्रमसुपसंहाराज्जाम्युपन्यासस्याजामितायाश्चैकविषयत्वादेतएव विधयो गम्यन्ते । न ह्यन्तरावाक्ये तादृगर्थ-

वादो विधिर्वा स्पष्टो दृश्यते । समुदायानुवादप्रयोजनं च कथं नामोपांशु पौर्णमास्यां यजन्तीत्यनैकोक्तानां कालसंबन्धे सति सर्वेषां प्राधान्यं स्यात् । ननूपांशुगुणकमिति कथं द्रव्यदेवताव्यतिरिक्तं रूपत्वेनोच्यते । नैष दोषः । सर्वथा येन यागान्तराद्व्यवच्छिन्नो यागो निरूप्यते तदेव रूपम् । शक्यते चोपांशुत्वेनायं व्यवच्छिन्नरूपः प्रत्येतुमित्यत आह नैवंजातीयकः शब्दः शक्नोतीति । यदि ह्यवयवार्थभेदेन गुणविधिरयं कल्प्येत ततो याजशब्दस्य घञन्तत्वादकृतकृत्वस्यासाधुत्वं स्यात् । अव्युत्पन्ननामधेयत्वे तु नैष प्रसङ्गः । नन्वेवं सतीति नामधेयत्वे ऽप्यवश्यं तत्प्रख्यं चान्यशास्त्रमित्येवं विष्णुरुपांशु यष्टव्य इत्यादिभिर्विहितं तद्गुणयोगमाश्रित्य प्रसिद्धिरवाप्तव्या, ततश्च तुल्यो दोष इति । तत्परिहरति मा भूदुपांशुयाजशब्दो यजतिशब्दो भविष्यतीति । विधौ ह्यत्यन्तमाञ्जस्येन कार्यं नामधेये तु यजि (१) प्राप्तानुवादरूपेण प्रवर्त्तमाने किं चित्ताख्यानुगमे ऽप्यविरोधः ।

## चोदना वा प्रकृतत्वात् ॥ १० ॥

कर्मचोदनोपांशुयाजं यजतीति न समुदायानुवादः । कुतः ।
प्रकृतानामसद्भावाद्गम्यते नानुवादता ।
यागो विष्णवादिसंयुक्तैर्न हि वाक्यैर्विधीयते ॥

यथा वैश्वानरवाक्ये द्वादशकपालेनोपक्रमोपसंहाराभ्यामष्टत्वादय एकवाक्यतामापद्यमानाः पृथग्विधित्वं न प्रतिपन्नाः, तथा ऽत्रापि जामि वा एतदिति विध्युपक्रमे दोषसंकीर्त्तनं कस्य

(१) यथाप्राप्तेति २ पु॰ पाठः ।

विद्विधीयमानस्याकाङ्क्षितं तदपनयनद्वारेण स्तुत्यर्थमिति गम्यते । जामिता च पुरोडाशयोरन्तराले कस्मिंश्चिद्विधीयमाने भवतीति यदन्तरालकालसंयोगेन विधास्यते तस्याजामिकरत्वं प्रशंसेत्यवधारणादुपांशुयाजमन्तरेत्यस्य स्तुत्यर्थत्वेन ज्ञानाद्विष्ण्वादियुक्तेषु च तदपेक्षिताजामिरूपस्तुतिसंकीर्त्तनादनपेक्षितं विधित्वमनादृत्य स्तुत्यर्थता गृह्यते । न हि विष्ण्वादिसंयुक्तेष्वन्तरालकालसंयोगोऽस्ति येनोपक्रमोक्तया जामितया तद्विधिस्तद्गतं वा जामित्वं स्तावकतयापेक्षितं संबध्येत । अन्तरालकालसंयुक्तस्य पुनर्विस्पष्टजाम्युपक्रमवाक्यविधानार्हत्वात्तद्गतेन चेतरेषां स्तावकत्वोपयोगे सति नानेकादृष्टकल्पनानुबन्धिविध्यभ्युपगमो युक्तः ॥ किं च ।

विष्ण्वादियागसंबन्धे कृते यागोऽर्थतो भवेत् ।
उपसर्जनभूतस्तु श्रौते चैतन्न युज्यते ॥

कर्मोत्पन्नस्तव्यप्रत्ययो यागोपसर्जनविष्ण्वादिप्रधानस्तदर्थान्निकृष्य यागकर्त्तव्यता कल्पनीया, न चासौ युज्यते । अन्तरा यजतीत्यनेन प्रत्यक्षप्रधानोपदेशोपपत्तेः । तच्च यद्यपि तावद्विष्ण्वादियुक्तानि पृथग्वाक्यानि भवेयुः तथापि तस्मिन्नेवान्तरालविहिते यागे देवतां विदध्युः, न कर्मान्तराणि(१) । न च देवताऽप्येवंविधैः सम्यगभिधीयते । न ह्येते संप्रदानं देवतात्वं वा वदन्ति, किं तर्हि कर्मोपसर्जनद्रव्यवचनास्तत्र कर्मशक्तिं प्रधानीकृत्य द्वितीयानुस्यार्थता तावल्लभ्यते, न च तावता देवतात्वं सिध्यति । त्यागार्थत्वाद्धि यजतेः परमार्थतस्त्यज्यमानं द्रव्यमेव कर्म भवति । ततस्तेनाप्यमाना देवता पश्चात्कर्म सं-

(१) कर्माणीति २ पु० पाठः ।

तार्थवत्ता तथैव क्रमेण चित्प्रकारेण । ननु च समुदायोऽनर्थके नार्थवत्त्वेत्युक्तम् । यथा चैतेनार्थवत्ता तथा ऽन्यार्थदर्शनं व्याख्या- स्याणां वक्ष्यामः । किं च ।

अन्तराले ऽनुपादेये कर्म तत्र विधीयते ।
तादृग्विपरिवृत्तिश्च नेत्युत्पत्तिरपीष्यते ॥

यादृशो व्याख्यातेन स्वप्रधाना पूर्वापरीभूता भावनान्तरालमनुपादेयं प्रत्युपात्ता, न तादृशो विष्णुर्यष्टव्य इत्यादिभिरुपस्थाप्यत इति नोत्पत्तिविधिकल्पनाभङ्गः । न च सत्यपीतरेषां कर्मविधित्वे(१) कर्मान्तरं स्यान्न प्रकृतानुवाद इति मत्वा ऽऽह । कर्मान्तरस्य वाचकः स्यादिति । देवतायाः पुनरुपादेयत्वात्कर्मोद्देशेन विधिः संभवतीति नानुवादबुद्धिरपैति । कर्मविध्यभ्युपगमे तु सत्यपि प्रकृतसद्भावे तद्रूपाणां प्रकृतानामभावादित्यभिप्रायः । अथ वा यदिदमाग्नेयादिभ्यः कर्मान्तरं चोद्यते तस्योपांशुयाजं यजतीत्ययं वाचकः स्यान्नेतरेषाम् । तस्मादन्तरालानुपादेयत्ववशेनास्यैकान्तिके कर्मविधित्वे सतीतरैरर्थवादैरेव भवितव्यम् । धात्वर्थं चान्यत्र विदधत्प्रत्ययः संनिकृष्टमुत्तमं विध्यति । स तु विधीयत उपांशुत्वादिसंबन्ध इत्युपांशुयाजशब्दं गुणविधिं मन्यते । यत्त्ववाचकत्वमस्मिन्पक्षे तुल्यप्रसङ्गादिति । तत्रोच्यते तुल्यमेतत्त्वत्पक्षे । ब्रूमः ।

वाच्यवाचकसंबन्ध इष्टः शब्दार्थयोः पुरा ।
पश्चाद्विध्यनुवादत्वे स्यातां साधारणाश्रये ॥

वाच्यवाचकत्वे ऽवधारिते पश्चाद्विधिविधेयत्वमनूद्यानुवाद्यत्वं वा कल्प्यते । तत्रोभयोरपि वाच्यवाचकसंबन्धः साधार-

(१) कामभित्यधिकः २ पु० पाठः ।

श्रुतिलक्षणैः सुबाद्येषामपि साधारणी। तेन नैकः बोधो भवति ।
अभेदेन। अनुवादत्वमवाचकस्यापि कथं चिद्दृष्टं न विधित्व-
मिति । तदुच्यते । ममापि च ।

यजिना विहिते यागे याज इत्यनुवादभाक् ।
विधिसंबन्ध्युपांशुत्वं न वैतदसमञ्जसम् ॥
न च तत्प्रत्यक्षरूपेण नामैतदुपपद्यते ।
विहितं न ह्युपांशुत्वं शास्त्रेणान्येन केन चित् ॥

न तावद्विष्ण्वादियुक्तेन विहितमर्थवादत्वात् । नोपांशु पौर्ण-
मास्यामित्यनेन कालविधिव्यापृतेनानेकविध्यशक्तेः । तस्मादु-
त्पत्तिस्थेनैव विधीयते । तथा च सूत्रकारो वक्ष्यति । गुणोपब-
न्धादिति । जामित्वापनयनं च सर्वप्रकारं द्रव्यतः स्वरतो देव-
तातश्च शायतएव यथा विष्णुर्यष्टव्यः प्रजापतिरग्नीषोमौ वेति
यागे चोदितेऽवश्यं भाविन्यां देवतायामनियमप्रसक्तौ के चि-
द्विष्ण्वादयः प्राधान्यप्रसिद्ध्या वैचित्र्यप्रदर्शनार्थं संकीर्तिता,स्ते-
न यद्यपि परमार्थेन न यष्टव्याः तथापि स्तुतिपरत्वादुपादानं
गुणवादेन कथं चिदुच्यते, शास्त्रान्तरे विधानात्प्राप्ता इत्यनुदाह-
रणात्स्फुटमेवमभिधाय न हि किं चिदमाध्यं स्यात्र च तस्मिन्नु-
ति नयने तद्वच्च देवतायां स्यादित्यादि विचार्य विष्णुर्वा स्या-
दित्याम्नानादित्यादिना मान्त्रवर्णिकत्वं जैमिनिराश्रयिष्यति ।
यच्चाप्यप्राप्तिरिति चेत्तापि स्वयमेवाशङ्का दर्शिता । यदप्युक्तमु-
पांशुधर्मत्वात्प्राप्तौ तस्माद्यत्किं चित्प्राजापत्यमिति तदप्ययुक्त-
म् । वचनव्यक्ति विपर्यासात्, न ह्येवं वचनं यदुपांशु तत्प्राजापत्य-
मिति किं तर्हि यत्प्राजापत्यं तदुपांश्विति तेन नोपांशुत्वेन प्राजा-
पत्यता [illegible] । तद्वच्चाग्नीषोमयोस्तु विधानं [illegible]

दपि चतुर्थीनिर्दिष्टमन्त्रवर्णात्मकत्वाद्विधायकम् । यदि चि- त्तावग्नीषोमावभूतां ततोऽस्माकं किमिति हि विजानन्तो यज- माना न वयं देवतायां प्रवर्त्तिता इति कल्पयेयुः । कालविधिप- रत्वाच्च न देवताऽऽदयनेन शक्या विधातुं देवतापरत्वे वा कालविधिपरित्यागात्पौर्णमासीशब्देनापि नानूद्येत इति पूर्ण- मासशब्देनाग्रहणादसति प्रधानत्वेऽङ्गत्वप्रसङ्गः । एवं कारेण च दर्शेऽमावास्यायामुपांशुयाजमनिच्छतैतदेव पौर्णमासी- कालविधिपरत्वेनोपन्यस्तम् । अत्र समाधिः मान्त्रवर्णिको दे- वताविधिरिति स्थित,मुपांशुयाजक्रमे हि वैष्णवप्राजापत्याग्नी- षोमीयानि याज्यापुरोनुवाक्यायुगलानि आम्नायन्ते । तैश्च तु- ल्यार्थत्वादिकल्पमानैः वैकल्पिक्य एव देवताः प्राप्यन्ते । तदेव चैत्रं शाखान्तरमित्याद्वाध्वर्यवेऽपि तु क चिदस्त्येव याज्यानुवा- क्यान्तानं चोदरूपेणेति तदभिप्रायं वा शाखान्तरवचनमुपां- शुधर्मत्वं वास्यैव द्योतनार्थम् । अन्या हि देवताऽऽनीयमा- नाऽऽत्मीयं धर्ममुत्सृज्य जह्यात् परधर्ममुपांशुत्वं प्राप्नुयादिति विरुद्धम् । विष्णुप्रजापत्योस्तु प्रत्यासन्नधर्मकत्वादविरोधस्तथा- ग्नीषोमयोस्त्विति विधायके देवताविध्यसंभवाद्यथासंभवप्रत्य- यीन पौर्णमासीकालस्य विधायके ऽग्नीषोमानुवादः प्राप्तिमु- पोद्बलयति ॥

## गुणोपबन्धात् ॥११॥

यस्यायं गुण उपबद्धो दृश्यते कालविधिपरे वाक्ये उपांशु पौर्णमास्यां यजन्तीति । न ह्येतदेव गुणस्योत्पत्तिवाक्यमन्यत्काल- विधिपरे स्वयमनेकार्थविधिप्रसङ्गात् । अत उपांशुयाजमन्तरे-

अनेनैव प्राप्तस्य संकीर्तनमिति ॥

## प्राये वचनाच्च ॥ १२ ॥

यद्ययमुपांशुयाज इति यज्ञपुरुषस्य प्रधानप्रायेणावयवेन संस्तवात्प्रधानमित्यवगम्यते । कथं पुनरप्रधानत्वं पूर्वपक्षे प्रसज्यते । उच्यते ॥

त्रयाणां वैष्णवादीनां समुदाये ऽवधारिते ।
अग्नीषोमीय एवैकः पौर्णमास्यां विशेष्यते ॥

तावग्नीषोमाविति यो ऽग्नीषोमदेवत्यः स एवैकः कालविशेषसंयुक्तः पूर्णमासशब्देन फले चोद्यते । तत्र वैष्णवप्राजापत्ययोर्गुणाभावात्सकलोपांशुयाजप्राधान्यवचनानुपपत्तिः । ननु तथापि वैकल्पिकदेवत्वाद्देवतासु यदैवाग्नीषोमीयदेवत्यः तदैव प्राधान्यमिति नित्यवत्प्रधानत्वसंकीर्तनं नैव घटते । नैष दोषः ॥

कालदेवतयोर्नात्र संबन्धो ऽयं विधीयते ।
यत्तु तल्लक्षितं कर्म तदन्यथापि विद्यते ॥

यदि ह्यग्नीषोमयोरेव पौर्णमासीसंबन्धः क्रियते ततो विष्णुप्रजापतिपक्षे न स्यात् । अयं पुनर्देवतोपलक्षितस्य यागस्य संबन्धः । सर्वत्र चोपलक्षणापाये ऽप्युपलक्ष्यं गृह्यते यथा वत्सत्वनपायस्य कालस्य लक्षणं हि पुरोडाशाविति । न चैकस्यैव कर्मणः कदाचित्प्रधानत्वं कदाचिदङ्गत्वमित्युपपद्यते । नानात्वे त्वविरुद्धं स्यात् । न च संभवति तत् । तस्मादेककर्मत्वादोपांशुयाजमन्तरालवर्तीत्यवसेयो विधिः ॥ ४ ॥

आघाराग्निहोत्रमरूपत्वात् ॥ १३ ॥

ऊर्ध्वमाघारयति तण्डुलैर्जुहोतीत्यादिभिरेवंभूता एव आघारा होमाश्च विहिता इति परिवर्त्तन्ते । न हि हिरण्यमुपांशु यष्टव्य इत्यादिवद् द्रव्यप्राधान्येन यागहोमभावनयोरभिभवः ॥ किं च ॥

न चैषामेकवाक्यत्वं न च स्तुतिपरा श्रुतिः ।
ऐकान्तिको विधिस्तेन गुणवत्कर्मगोचरः ॥

नोपांशुयाजवाक्यवदेषामेकवाक्यत्वमिष्टं, न च स्तुत्यर्थता, तेनोभयपक्षे निश्चिते विधित्वे गुणमात्रं विधीयताम् । तद्युक्तं वा कर्मेति कर्मविधानं युक्तम् । कुतः ॥

विधित्वं प्रत्ययोपात्तं न नामपदमृच्छति ।
तद्विधिर्भावनातस्तस्यैव पूर्वं विधीयताम् ॥

न तावद्दध्यादिशब्दैः स्वयं विधित्वमभिधीयते । न च प्रत्ययोपात्तं सद्भावनाधात्वर्थव्यतिरेकेण स्वतन्त्रैर्दध्यादिभिः संबध्यते । न हि भवति दध्ना यादिति । किं तर्हि दध्ना कुर्यादिति संबध्यते । होमं यागेन कुर्यादिति । तस्मात्तत्प्रसादेन दध्यादेः कर्त्तव्यता तावेव भावनाधात्वर्थौ न विधीयेते इति कुत एतत् । न हि तद्विध्यनपेक्षं कथं चिदपि गुणविधानं शक्यं दर्शयितुं, यदैव हि दर्शयितुमुपक्रम्यते तदैव पूर्वतरं भावनाधात्वर्थविधिर्बलादापद्यते, तस्माद्धोमदध्यादिविशिष्टभावनैव(१) विधीयते । तदा तासां रूपवतीनां प्रत्ययशिष्टः समुदायो ऽग्नीत्यग्निहोत्रं जुहोतीति तदनुवादो विज्ञायते । निमित्तफलचोदनयोश्च एक-

(१) दध्यादिविशिष्टा भावनेति २ पु० पाठः ।

त्वोपजननः समुदायानुवादे प्रयोजनम् । एवं च सति दध्यादेर्भिन्नकर्मविषयत्वादन्याय्यो विकल्पो न प्रसज्यते । तथोर्ध्वमाघारयतीत्यादिषु यद्यपि द्रव्यदेवतं न श्रूयते तथाप्युपांशुत्वन्यायेन व्यवच्छेदकारणत्वात् उदूर्ध्वत्वादिभिरेव रूपवत्तायां कल्पितायामाघारमाघारयतीत्यरूपः सन् स्वार्थे विनियोक्तुमशक्नुवन्ननुवादो भवति। तस्यापि प्रयोजनम् इड ऊर्ध्वो अध्वर इति मन्त्रविनियोगे तस्याघारमाघार्येति च द्रव्यविधावेकत्वसिद्धिः ॥

## संज्ञोपबन्धात् ॥ १४ ॥

अपि च ॥

विशेषप्रतिपत्त्यर्थं संज्ञा सर्वा प्रवर्त्तते ।
यदा तदा विशेषोऽसौ कोऽस्येति न निरूप्यते ॥
सामान्यं स्यादिदं ज्ञेयं ज्ञातत्वान्न क्रियान्तरम् ।
तद्ज्ञेयतया ऽन्यत्र(१) विधानमवकल्पते ॥
क्रियाश्चाकारकत्वेन युज्यन्ते न द्वितीयया ।
ताभिस्तु साध्यमानत्वात् समुदायस्य कर्मता ॥

आघारमग्निहोत्रमिति द्वितीयानिर्देशः क्रियेप्सितस्य कारकस्य युज्यते । न च जुहोत्याघारयतिभ्यामात्मैवाप्नुमिष्यते । स्वात्मनि क्रियाविरोधात्समुदायः पुनर्निष्कृष्य शब्देनार्थान्तरात्मनोच्यमानः शक्यः साध्यत्वेनाभिधातुं, यथौदनपाकं पचतीति विशेषः सामान्येनेप्सिततमः कर्मत्वेनोच्यते । ननु च समुदायस्या(२)व्यतिरेकात् कथं चिद्साध्यत्वमवसीयते-

(१) नास्तीति २ पु० पाठः ।
(१) समुदायस्य समुदायिभ्य इति २ पु० पाठः ।

द्रव्ययुक्तमेव कर्मत्वं, न । अवयवक्रियाप्रचयवत्त्वात्समुदाय-
स्य । समस्ताभ्यो हि समुदायस्याव्यतिरेकादेवमुपादानं न स्या-
त्प्रत्येकरूपास्तु समस्तरूपमर्थान्तरमिष्टं, न च प्रत्येकरूपैर्विना
समस्तरूपनिष्पत्तिरित्युपपन्नमीप्सिततमत्वम् । ननु चैवमादयः
समुदायिवचनत्वेनावधारिता इति समुदायिनां स्वात्मनि क्रि-
याविरोधस्तदवस्थ एव स्यात् । नैष दोषः । समुदायिवचनेनापि
प्रातिपदिकेन समुदायोऽपि लक्षणया गम्यते । ततश्चैकत्वव-
त्कर्मत्वं समुदायस्य प्रत्येष्यते । न च सामान्यविशेषभेदेनापि
भवतः क्रियात्वकर्मत्वे पाकवत्संभवतः सामान्यविशेषशब्दयो-
र्भेदेनानुपादानात् । एतच्च पौर्णमासीमित्यत्रापि सिद्धान्ते
योज्यं, तस्मात्तद्वदेव समुदायानुवादत्वम् ॥

## अप्रकृतत्वाच्च ॥ १५ ॥

अथोच्येत यथा गुणास्तु स्तुतिसंयोगादित्यत्र पक्षे ऽन्येषां
गुणविधित्वाद्रूपलाभ आशङ्कितस्तथा ऽग्निहोत्रं जुहोती-
त्युत्पत्तिवाक्यत्वेन तण्डुलादिसंयुक्तैः रूपलाभ इति, न । तत्र
स्ववाक्यगतपौर्णमास्यमावास्यापदनिमित्तत्वादनुवादाशङ्कायाः ।
न चेह तण्डुलादिवाक्ये ऽग्निहोत्रशब्दो ऽस्ति, यस्त्वस्ति जुहो-
तिशब्दः स सर्वहोमसाधारणत्वान्नाग्निहोत्रविधिपर एव । ननु
च प्रकरणाद्विशेषो ऽवगम्यते अत आह अप्रकृतत्वाच्चेति ।
न ह्युत्पत्तिवाक्ये कर्मणां(१) फलसंबन्धोत्तरकालत्वेन कथंभा-
वात्मकस्य प्रकरणस्य प्रयोगवाक्याधीनप्रसूतत्वात्(२) । तच्चैत-

(१) अस्ति कर्मणां प्रकरणमिति २ पु० पाठः ।

(२) प्रभूतितत्वादिति २ पु० पाठः ।

स्यामाघारस्यैव द्रव्यदेवतासंबन्धो भविष्यतीति । तदुच्यते । अनभिज्ञातरूपस्य फले विधातुमशक्यत्वात् । अतः प्रसिद्धरूपाण्येव तेन प्रत्येष्यन्ते । ननु च तस्याघारमाघार्य इड ऊर्ध्वो अध्वर इत्याघारमिति च द्रव्यमान्त्रवर्णिकदेवताविधौ नामयोगाद्रूपं विज्ञास्यते । न । आघारशब्दस्य धात्वर्थाव्यतिरेकेणाविशेषणकत्वात् । तत्र नाम्ना विशेषः प्रतीयते, यत्र कंचिद्विशेषमुपादाय नामानि प्रवर्त्तन्ते । अत्र पुनः संनिहितावयवार्थत्वात्समुदायप्रसिद्धिमन्तरेणाघारशब्दः क्षरणमात्रवाचित्वात्, न विशेषे वर्त्तते । ननु च प्रकरणाद्विशेषो लप्स्यते । तत्रापि सूत्रम् । न ह्याघारः प्रकृतः परप्रकरणपातित्वात्, दर्शपूर्णमासप्रकरणमेतत्प्रकृतं नान्यस्य प्रकरणस्यान्यत्रावकाशः(१) । सन्निधेर्विशेषागम इति चेदत्रापि सूत्रं न वाक्यबलीयस्त्वेनात्र प्रकृतैरपि संबन्धात्, तदेवं वाक्यप्रकरणयोरविरोधो यदि द्रव्यदेवतासंयुक्तान्येवोत्पत्तिवाक्यान्यभ्युपगम्यन्ते यत्र यः कश्चिद्रूपलेशोऽस्ति तत्र निरूपिते कर्मणि केन चित्प्रकारान्तरेण गुणान्तराणि कल्पन्ते सर्वेषु चोर्ध्वत्वं तण्डुलादि किंचिद्रूपमस्ति, न त्वाघारमाघारयति अग्निहोत्रं जुहोतीत्यनयोः । तस्मात्समुदायानुवादौ ॥

## चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्तत्संनिधेर्गुणार्थेन पुनःश्रुतिः ॥ १६ ॥

(१) अन्यावकाश इति २ पु० पाठः ।

कर्मचोदने स्यातामिति वक्तव्ये तत्रभ्यन्तरमुपांशुयाजाधिकारणवच्छेयम्। आघारयतिजुहोत्योरनन्याक्षिप्तविधिशक्तित्वात्कर्मप्रयोगविधानमेव शब्दार्थ इत्यवगम्यते। न च प्रकृताघारहोमसद्भावः, प्रकृतवाक्यस्थानां विधीनामप्राप्तद्रव्याद्याक्षिप्तायां विधिशक्तौ कर्मानुवादवचनपायात्। न चेदन्येन शिष्टा इति वापवादान्न विशिष्टविधानन्यायः संभवति। तद्दर्शयत्यस्मिन्हि सति विधाने प्रत्यक्षो न संबन्धः शक्नोत्यर्थादाक्षेप्तुमित्यर्थः। अथ वा अस्मिन्हि सति संबन्धिविधावितरेण गुणविधाने न संबन्ध एव केवल आश्रीयते। तस्मान्नैतद्वाक्यनिरपेक्षैः संबन्धविधिभिरर्थादपरौ कल्पयितुं होमाघारौ शक्येते यद्वचनेनानयोरनुवादत्वं स्यात्। भावनाधात्वर्थावुद्दिश्य त्वा न विधिर्द्रव्यादिभिः संबध्यत इति चेत्सत्यमेत,न्न विधित्वं भावनात उच्चार्यते तद्गतेनैव तु गुणः संस्पृश्यते, गुणस्य कारकविभक्त्या भावनामध्यनिक्षेपात्। तेनैतदुपदिष्टं भवति सर्वत्रैव विशिष्टविधानोत्तरकालं किं प्राप्तं किं न प्राप्तमिति अन्वेषणायामप्राप्तमात्रविषयोपसंहारात् विधिर्भावनाधात्वर्थयोरनुवाद इत्यभिधीयते। न त्वादित एव तावनूद्य गुणो द्रव्यं वा विधीयत इति कदाचिदपि शास्त्रार्थाभिव्यक्तिः। तत्र पश्चात्तने व्यापारे मन्दबुद्धिप्रतिपत्त्यर्थं स्थूलेन न्यायेन कथ्यमाने शास्त्रकृता एवैता वचनव्यक्तय इति मन्यमानाः स्वयमिवान्येषामपि भ्रान्तिमुत्पादयितुमर्हैः। श्रुतिप्रकारान् परैर्वर्ण्यन्तः के चिद्दर्शयन्ति। प्रथमः किल श्रुतिप्रकारो धात्वर्थविधानं, द्वितीयः सगुणं धात्वर्थविधानं, तृतीयः किं चिदुद्दिश्य धात्वर्थविधानं, चतुर्थः तत्रैव विशिष्टविधानं, पञ्चमस्तु धात्वर्थोद्देशेनान्यस्य

विधानं, षष्ठस्तु धात्वर्थेनान्ययोः संबन्धः, सप्तमः पुनर्धात्वर्थविशिष्टेन प्रत्ययेनान्ययोः संबन्धः, अष्टमस्तु मुक्त्वा धात्वर्थमन्ययोरेव संबन्ध, इति । तत्र तावद्यदुच्यते अग्निहोत्रं जुहोतीत्येतद्धात्वर्थविधानमिति तदयुक्तम् । न हि विधिर्भावनामुत्सृज्य धात्वर्थे निपतति, न च भावनां मुक्त्वा ऽन्यत्र पुरुषः प्रवर्त्तते । सा हि पुरुषस्य स्वव्यापारो धात्वर्थस्तु कदाचित्कर्माश्रितोऽपि भवति । यथायमेव प्रक्षेपो द्रव्यद्वाराश्रितो, न चान्यदीयं व्यापारमन्यः शक्नोति कर्त्तुमित्यवश्यं भावनाविशेषणत्वादेव दध्यादिवद्धात्वर्थो विधातव्यः । इदं च भावार्थाधिकरणे ऽभिहितं यथा न धात्वर्थः साध्यत्वेन विधीयतइति । न ह्यकरणभूतोऽसौ साध्यापेक्षत्वाद्वाक्यान्तरेणापि फले विधातुं शक्येत । सोमेन यजेतइत्यत्रापि तद्भूताधिकरणोक्तेन मार्गेण धात्वर्थकारकाणामरुणैकहायन्यादिवत्परस्परेणासंबध्य भावनासंबद्धानामनन्तरकालं परस्परोपकारित्वम् । तथा च सप्तमनवमाद्ययोर्वक्ष्यतीति न विशिष्टधात्वर्थविधानम् । भावनां च प्रति यागस्य कारणत्वाद् द्रव्यं प्रति कर्मत्वे सत्येकशब्दे परार्थवदित्येतदापद्यतइत्ययुक्तमेतत् । तथा व्रीहीन्प्रोक्षतीत्यत्र न प्रोक्षणेन व्रीहीनिति कश्चित्संबन्धस्तेनोभयोः करोत्यर्थसंबन्धान्न धात्वर्थो व्रीहिषु विधीयते । यदि तु भावनाभिप्रायेणान्यत्र विधानमुच्यते तत्सर्वत्राविशिष्टम् । न चास्य विशिष्टविधानाद् दुर्बलत्वमस्तीति । तृतीयस्थाननिवेशो ऽप्ययुक्तः । पञ्चधोक्तमपि निराकरणं द्व्यापत्तिवेण ग्रहं संमार्ष्टीत्यत्राप्यापद्यते इत्ययुक्तमन्यत्र विशिष्टधात्वर्थविधानम् । दध्ना जुहोतीत्यत्रापि न कदाचिद्धि होमे करोतीत्ययमर्थः शब्देनोच्यते । न हि होमस्याभिकरणत्वं

शब्दादवस्तुतो वा विद्धं, न च दध्नः कर्त्तव्यता नित्ये कारणतात्मक-
त्वात्। इयमपि च श्रुतिर्द्विविधादपि विशिष्टविधेर्बलीयसी एक-
विधिसंभवे ऽनेकशक्तिकल्पनानुपपत्तेरुभयपक्षभाविनस्तु विप्रकृ-
ष्टार्थविधेरपर्यनुयोज्यत्वात्संनिकृष्टासंभवकृतमेव चास्य विप्रकृ-
ष्टस्य ग्रहणं, तत्रोभयाश्रयणे युगपद्विप्रतिषिद्धसंभवासंभवाप-
त्तिरगत्यैव गृह्यते ऽन्यत्र विशिष्टधात्वर्थविधानात्सातिगुर्व्वी-
वेति न पञ्चमे स्थाने निवेशयितव्या। कामं वा शुद्धधात्वर्थवि-
धानात् तस्य वा ऽन्यत्र विधेरनन्तरा कर्त्तव्या। यत्तु प्राकाशा-
वध्वर्य्यवे ददातीत्यनेन ददातिधात्वर्थे प्राकाशाध्वर्युसंबन्धो
विधीयतइति तदयुक्तम्। वचनव्यक्त्यविवेकात्सर्वत्र हि य-
च्छब्देनानूद्यमानमुपनिबध्य तच्छब्दयुक्तं विधेयमुपनीयते। त-
दिह यदि तावद्यद्ददातीत्यत्राध्वर्युप्राकाशयोः संबन्ध इति
विधीयते ततः सकलदानानुवादात्समस्तदक्षिणाविकारप्रस-
ङ्गः। प्रत्ययस्य चानेकविधिशक्तिकल्पना चोदिते सति कार्य-
पर्यपरिहृतैव। संबन्धो हि विधीयमानः संबन्धिनं तावदाक्षिपे-
द्धात्वर्थे तु पुनः स विधातव्य एव संबन्धी। अन्यथा संबन्धस्यैव
संबन्धी शेषः स्यात् न क्रियायाः। तत्रैतत्स्याद्धात्वर्था-
नुरक्तः प्रत्ययो विदधदवश्यमेव तत्र विधास्यतीति। एवं
तर्ह्युत्तरयोरपि श्रुत्योरत्रैवान्तर्भावाद्भेदेनोपादानं व्यर्थं, न
हि वायव्यं श्वेतमालभेत दध्नेन्द्रियकामस्य जुहुयादिति धा-
त्वर्थाननुरक्तः प्रत्ययः संबन्धं विदधातीति। प्रकृतिलिङ्गमात्र-
फलस्यानभिलष्यमाणो न द्रव्यदेवतासंबन्धिविधानान-
नुपन्यासेन किंचिदुपकरोति। न चा ऽसौ संबन्धः [illegible]
संपादयितुं शक्यो यागविषयत्वाद् द्रव्यदेवतयोः। यदि चात्र-

संबन्धकरणे प्रत्ययोच्चारणसिद्धिव्यतिरिक्तं किं चिद् धातुः कुर्यात् । ततो दधीन्द्रियसंबन्धविधाने किमिति होमः परित्यज्येत । किमिति वा प्रकरणाम्नायो ऽभ्युपगम्येत । तस्मान्न धात्वर्थे ऽस्य संबन्धविधिः । पूर्ववच्च धात्वर्थाधिकरणता कारककर्तव्यता च निराकर्तव्या । न च धात्वर्थे संबन्धस्यापि प्रागभावतासंगतेर्विधिरित्युक्तम् । एवं तावत्त दानमात्रे संबन्धविधिः । अथाध्वर्युविशिष्टं दानमनूद्यताम् (१) अध्वर्युर्वा तद्विशिष्टः एवमपि शिष्टानुवादा(२)द्वाक्यभेदः । शुद्धाध्वर्य्वनुवादे तु यद्यपि संप्रदानश्रुतिरर्थाद्दानमाश्रियते तथापि संप्रदानसंप्रदेयसंबन्धस्य ददातिमन्त्रेणानुपपद्यमानत्वाद् द्रव्यदेवतासंबन्धादिव यजेः कल्पनमिति न धात्वर्थे ऽस्य संबन्ध इति वचनव्यक्तिः संभवति । अवश्यं चाचाद्दानाध्वर्य्वोः चोदकेन प्राप्तत्वात्प्राकाश्यावेव विधातव्यौ ॥ तच्चार्थात्संबन्धविधिरिति न श्रुतित्वोपन्यासो घटते । वक्ष्यति चैतच्चाघन्धिकरणे यत्रान्यतरदप्राप्तं तत्रैवतरोद्देशेनेतरविधिरर्थात्संबन्ध उभयप्राप्तावनुभयप्राप्तौ वा केवलसंबन्धविधानमिति । तिसृणामपि च संबन्धविधिश्रुतीनां प्रत्ययविच्छेदाभ्यां न बलाबले कश्चिद्विशेषो, नापि समवायविरोधसंभवो, यत्र तज्ज्ञानमुपयुज्यतइति मन्दफलं क्रमगणनोपन्यासस्य । तस्मात्प्रस्तुताधिकरणन्यायेन सर्वत्र विशिष्टभावनाविधिरेव तत्त्वम् । इतरत्तु तत्र तत्र स्थूलबुद्धिप्रतिपादनोपायमात्रं भाष्यकारेण कृतमिति द्रष्टव्यम् । यच्च सन्निकर्षविप्रकर्षाभिधानं तद्भावनाख्यस्य शिथिलत्वे कारकाणां भावनाविशेषणत्वं प्रतीति स-

---

(१) अनूद्यतेति १ पु० पाठः ।

(२) विशिष्टानुवादादिति २ पु० पाठः ।

न्तव्यम्(१)। कथं पुनः प्राप्ता सती भावना विधीयते, विशिष्टा न प्राप्तेति तादात्म्येन विधास्यते। फलतस्तु तदा विशेषणार्थो विधिरिति व्यपदेक्ष्यते। नन्वेवं सति विशेषणेष्वनवतरन्विधायको भावनाद्वारेणापूर्वविधिवत्प्राप्तकर्मविधाने ऽप्यनेकं विधातुं समर्थ इति चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्यतेत्यस्याविषयत्वं प्रसज्येत। नैष दोषः यस्य ॥

विधित्वे भावनास्थे ऽपि तादर्थ्यं प्रविभज्यते ।
विशेषणफले चास्मिन्वाक्यभेदो भविष्यति ॥

यदा हि भावनारूढं विधित्वं भावनार्थत्वेनैव गृह्यते तदार्थाद्विशेषणविधौ सत्यवाक्यभेदं वक्ष्यामः। यदा तु तद्विशेषणार्थमित्यवधार्यते तदा भावनायाः संनिहितप्रोषितत्वादनेकविशेषणयोगे सति यदर्थं विधित्वमवसीयते तस्यैवैकस्य विधानं नेतरस्य तद्देशस्यापि चक्षुषेव रूपादेरिति वाक्यभेदो भविष्यति। सर्वत्र समानदेशमपि विधित्वं फलतः प्रचलितमिवैकत्रोपसंहृतं दर्शितं तस्मादविरोधः। यस्त्वभ्युदितेष्टिप्राकाशादिविधिष्वनेकार्थविधिदोषः स सर्वपक्षेषु तुल्यो, यथा चास्मत्पक्षे न भविष्यति तथा तदधिकरणेष्वेव वक्ष्यामः। भवेदेतद्विशिंष्यादिति। यदि साक्षाद्गुणो न विधीयते ततः पुरुषस्य तत्राप्रवर्त्तितत्वात्तत्परित्यागेनाप्यनुतिष्ठतः कृतार्थता स्यादिति मन्यते। तत्र किं भविष्यतीति वाक्यलक्षणविध्यभिप्रायेण प्रश्नः। अध्याप्रियमाणे इति स्वाभिप्रायविवरणम्। स एव वा स्वयं कर्म निरूपयति तेनैवाभिप्रायेण पुनः प्रश्नोत्तरे गुणवचनसन्निधिरिति। तथा कार्थं पुनरिति तुल्यं च सांप्रदायिकमित्यभिप्रायेण वदति स्वयं

(१) प्रतिपत्तव्यमिति २ पु० पाठः ।

किमिति त्वयैवं क्रियते येन तदानर्थक्यमापद्यते। मत्पक्षे तु स-
त्यर्थे नानर्थक्यं भविष्यति। एवं तर्हीति वाक्येन विशिष्टायां भा-
वनायां प्रवर्त्तमानः श्रौतोऽपि विधिर्वाक्यात् भविष्यतीत्युच्यते। प-
रस्तु यत्प्रसादेन स विधीयते सैव तावद्विधीयतामिति श्रुत्यर्थे
सति न वाक्यार्थ इत्याह। सत्यमेतदिति। विधिशक्तिसंक्रान्तिं न
चेदन्येन शिष्टा इति च दर्शयति। कथमिति सानुशयः प्रश्नः
स्वोक्तिर्वा। तस्मात्तत्संनिधेर्गुणस्य भावनानुप्रवेशाद्विधेयत्व,-
मथ वा गुणसन्निधेः शक्तिसंचरणं भावना धात्वर्थप्राप्तिसन्नि-
धिर्वा श्रुत्यविरोधात् गुणविधानं जुहोतेरिति स्पष्टमपि धातू-
च्चारणमनवबुध्य सकलाख्यातानुवादाभिप्रायेणाह। यदि जु-
होतीत्यनुवाद इति। दधिशब्देनेति मा बोधत इति वाजपेया-
धिकरणवद् ग्रन्थच्छाया योजनीया। प्रत्ययो विधिरेव धात्व-
र्थानुवाद इति विवेकः। यदि विधायकाविति भावनायां प्रा-
प्तायां कथं विधानमित्यभिप्रायः। वाक्यार्थो यस्तं विधातुमिति।
दध्नः पदार्थत्वान्नैव वाक्यार्थत्वं संभवतीत्येतदपि दधिविशिष्ट-
भावनाभिप्रायमेव। तस्मात्कर्मान्तरचोदने इत्युपांशुयाजवदेव
व्याख्येयम्। जुहोत्याघारयतिकल्पिताघारणार्थविषयत्वाच्च
संज्ञोपबन्धसिद्धिः। इह विधीयमानत्वेन च कर्मान्तरेभ्यो व्यव-
च्छेदः। प्रकरणाच्च द्रव्यदेवतं लप्स्यत इति नाल्पत्वम्। न चो-
त्पत्तिवाक्ये कथंभावो नास्ति फलसंबन्धं तु यावत्प्रतीक्षिष्य-
ते। न चाविदितद्रव्यदेवतस्य फलविध्यनुपपत्तिः, होममात्रत-
या विदितस्य पश्चादपि तद्ग्रहणाविरोधात्। इष्यते चैवमादौ।
संनिधिवशेनाप्यनुवादः, प्राप्त्यपेक्षो ह्यसौ, यथा कथं चित्प्राप-

भिज्ञानं प्रार्थयति(१)। न च परप्रकरणे पाठाद्वाक्यस्याकाङ्क्षात्प्रकरणलोपः। तस्यापि ह्याख्यातप्रत्ययवशेन किं केन कथमित्यस्त्यपेक्षा। तेन शक्यं प्रकरणेन द्रव्यदेवताविधानम्। बहूनि चाङ्गानि त्वया कल्प्यानि। न च तण्डुलादिहोमानामूर्ध्वाग्न्याधाराणां वा विहिता देवता ऽस्ति। न च देवतावद् द्रव्यं, सर्वे चैते ऽपूर्वकर्मविधित्वान्नान्योन्यं गुणविषयो भवन्ति। ततो यथोक्तमेवास्तु। यत्तु क्रियायाः कर्मत्वनिर्देशो न युज्यत इत्युच्यते। भवति हि क्रियाणामपि संकल्पादिभिराप्यमानत्वात्कर्मत्वं, तेन जुहोत्याक्षिप्तसंकल्पाद्यपेक्षया ऽग्निहोत्रमिति द्वितीयानिर्देशादविरोधः। ननु च यदग्नये च प्रजापतये च सायं जुहोति यत्सूर्याय च प्रजापतये च प्रातरित्यनयोरनेकगुणविधित्वाच्चोदना वा गुणानां युगपच्छास्त्रनादित्येतदापद्यते। तथा नामेति केचित्। एवं च यथापूर्वमाकृती जुहुयात्सायमग्निहोत्रं प्रातरग्निहोत्रमित्येवमादयो भेदव्यवहाराः सिद्धा भवन्ति। न चात्र ज्योतिष्टोमस्येव ग्रहाभ्यासेष्ववयवबुद्धिरुभयत्रापि वाक्यत्वप्रतीतेः। एवं च दर्शपूर्णमासवदुभयत्र समस्तेतिकर्तव्यतावृत्तिरुपपद्यते। अन्यथा तु पश्वङ्गत्वविप्रकर्षन्यायेन सकृत्कृतैवोपकुर्यात्। न चैककर्मत्वे किंचित्प्रयोजनमस्ति। तस्माद् द्वयोराकृत्योः समुदायानुवाद इत्यत्राभिधीयते॥

समुदायानुवादस्य न तावत् दृश्यते फलम्।
प्रयोगवचनैकत्वं लक्ष्यते राजसूयवत्॥

यथैव हि समुदायानुवादत्वमवयवशिष्टसमुदायैकत्वद्वारेण भवत्ये,वमेव प्रयोगवाक्यगतमग्निहोत्रं जुहुयात्स्वर्गकाम इति

(१) मत्यभिज्ञानेन प्रार्थ्यतइति २ पु० पाठः।

भविष्यति । यथा च राजसूयेन स्वाराज्यकाम इति विनाप्यन्येन समुदायानुवादेन सिद्धिः एवमिहापीति । नन्वेवं सत्याग्निपराग्निकानामपि होमानां प्रधानत्वं स्यात् । समुदायानुवादे वा केन तेषामपकर्षः । न हि यथा पौर्णमास्यमावास्याशब्दयोः प्रयाजादिभ्यः कालसंयोगेनावच्छेदः तथेह केन चिच्छ्रियते । नन्वग्नये होत्रमस्मिन्निति विशेषणं भविष्यति न, तेषामप्यग्निदेवत्यत्वात् । अपि च एवं सत्यनिष्टं तव प्रसज्येत । प्रातराहुतेरग्निसंयोगाभावादनग्निहोत्रत्वेनाङ्गत्वं प्राप्नोति । तस्मात्सत्यसति वा समुदायानुवादे न कश्चिद्विशेषः । तथा सत्याग्निपराग्निकानां होमानां भेदो यदि वा सर्वाग्निष्वेकमेवाभ्यस्तं कर्म क्रियते सर्वथाग्निहोत्रशब्देन संनिध्यग्निसंयोगहोमत्वाविशेषात्फलसंयोगेन समप्रधानत्वम् । तथा चैकेषां सर्वसामानाधिकरण्येनाग्निहोत्रशब्दप्रयोगो गार्हपत्यान्वाहार्यपचनयोस्तस्तस्य आहुतीराहवनीये च द्वे विभायात् य एवं विद्वाग्निराट्संपन्नमग्निहोत्रं जुहोतीति । तस्मादनन्यप्रयोजनत्वादग्निहोत्रं जुहोतीत्ययमेव कर्मविधिः । ततश्च तण्डुलादिवाक्यवदेव गार्हपत्यादिसंयोगस्य गुणार्थत्वान्न कर्मभेदहेतुरस्ति । तदेव हि प्रकृतं कर्म तत्र तत्र प्रत्यभिजानीमः । कस्मात्पुनरेककर्मविषयत्वाद्दध्यादिवद्देवाग्नयो न विकल्प्यन्ते । के चिदाहुः । अदृष्टार्थत्वादिति । निराधारस्यापि हि प्रक्षेपस्याप्रतिष्ठेऽपि द्रव्ये संभवाददृष्टार्थो ऽग्निसंयोगः । न च सर्वमदृष्टं संभावनीयमित्यावर्त्तते होमः । एवं तु सति पदादिभिरप्याहवनीयो न बाध्येत । अथ तत्र सकृद्धोमश्रवणादावृत्तिभयाद्बाधः, इहापि तत्तुल्यमिति विकल्पप्रसङ्गः । तस्मादिराट्संपन्नमिति वचनादेव

वचनात्संख्यायुक्तेषु तु समुच्चय इत्यनेन न्यायेन समुच्चयः । अन्यथा हि ॥

> अग्निभ्योऽपूर्वसिद्धिः स्यादाधारत्वोपलक्षिता ।
> न चैकेनावरुद्धत्वादाधारान्तरसंभवः ॥

सत्यप्यग्निसंयोगस्यादृष्टार्थत्वे सप्तमीश्रवणादाधारत्वप्रतिपत्तिद्वारं तदित्यवगमात् तस्य च प्रत्यक्षप्रतीतेरेकेनावरुद्धे कर्मणि नान्यत्संभवतीति विज्ञायते । तेनैकान्तेन विकल्पः प्राप्नोत्येव । कस्मात्पुनस्तिस्र आहुतीर्जुहोतीत्यादिवत्संख्यया कर्मभेदो न भवति । नोत्पन्ने सति कर्मणि संख्योपजननात् । उत्पत्तिस्था हि संख्या भेदिका भवति तिस्र आहुतीरित्यादिषु । इयं पुनरवधारिते कर्मणि उपजायमानैकादशप्रयाजानिनिवदभ्यासेनैव पूर्यतेति न स्वरूपभेदाय प्रभवति । तेनैकमेव सर्वाग्निष्वभ्यस्तं कर्मेति निश्चीयते ॥ यत्तु सायंप्रातर्वाक्ययोरनेकार्थत्वात्कर्मविधित्वमिति । तच्च ब्रूमः । सायं जुहोति प्रातर्जुहोतीति वाक्यान्तरप्राप्तः कालो देवताव्यवस्थापरे वाक्ये संकीर्त्यते । नन्वेवमपि कालविशिष्टकर्मानुवादाद्वाक्यभेदः स्यात् । न, प्रकरणलब्धे कर्मणि कालमात्रे देवताविधानात् । स तु कालो न स्वरूपेण देवतया संबध्यत इति प्रकरणलभ्यकर्मानुरक्तः संबध्यते । अथ वा विधीयमानसंप्रदानभूतदेवताकाङ्क्षितप्रकृतहोमपर्युपस्थापने न कालस्योपयोगः । न च लक्षणया लभ्यमानो होमो वाक्यं भिनत्ति । न च सायंकालेनान्यत्र स्थितो लक्षितः तेन सायंहोमस्याग्निप्रजापती भविष्यतः । एवं प्रातर्होमस्य सूर्यप्रजापती इति सिद्धम् । नन्वेवमपि भिन्नपदोपात्ते द्वे द्वे देवते विदधती वाक्ये भिद्येया-

नाम् । न, एककारकत्वादिति चेत् । कारकान्यत्वे हि विधेर्व्यापारभेदो भवति एककारकनिबन्धनं त्वर्थद्वयमप्ये-कप्रयत्नसाध्यमित्युक्तम् । अत्राभिधीयते ॥

अनेकपदसंबद्धं यद्येकमपि कारकम् ।
तथापि तदनावृत्तैः प्रत्ययैर्न विधीयते ॥

विभक्त्या हि कारकं प्रत्याय्यते । सा च यत्रैकाग्नीषोमादौ तत्र सकृदेव प्रत्ययस्य व्यापारो भवति । यत्र पुनः भिन्नविभ-क्तिसंबद्धानेकपदोपात्तमेकमपि कारकं भवति यथा ऽग्नये वा-ग्नये च प्रजापतये चेति, तत्र युगपत्प्रत्यवेक्षणाभावादवश्यं भेदेनाग्निप्रजापती प्रत्ययेनालोचयितव्यौ । कारकविभक्तिर्हि नाम पदार्थालोचनाय प्रत्ययप्रयुक्ता(१) सा च नानोच्चारितानां नैव प्रयुङ्क्ते इत्यावृत्तिप्रसङ्गः । तस्मान्नैष परिहार इत्येवमभि-धीयते । वाक्यद्वये ऽप्यस्मिन्प्रजापतिरेवैको विधीयते । अग्नि-सूर्ययोः पुनर्मन्त्रवर्णादेव प्राप्तिः वाक्यान्तरेणेत्येवं देवत्यौ म-न्त्रौ विहितौ । ताभ्यामेव च ते देवते प्राप्ते सत्यौ प्रजापतिवि-धावेवाश्रित्येन स्तुत्यर्थमुपादीयेते । यदपि च तत्प्रत्यक्षं चान्यशा-स्त्रमित्यत्रैते वाक्ये निदर्शिते तदपि मन्त्रवर्णप्राप्त्योर्द्योतनार्थ-त्वेन द्रष्टव्यम् । एवं मन्त्रविध्योर्न पौनरुक्त्यं भविष्यति । अन्य-था तदर्थशास्त्रदोषपरिहारप्रयोजने गुणविधिपरिसंख्यार्थवा-दादीनामन्यतमेति क्लेशः स्यात् । तस्मात्तत्र वाक्यभेद इति सि-द्धम् । यत्तु सायंप्रातर्होमयोरवयवबुद्धिर्नास्तीति, दाक्षायणय-ज्ञादिवत्तत्कालकर्मावृत्तिप्रज्ञानात्तदित्यवगन्तव्यम् । नन्वेवं स-ति यावज्जीवकर्मपरिच्छेदात्मकत्वेन सायंप्रातःकालयोस्तुल्यार्थ-

(१) प्रत्ययं प्रयुङ्क्ते इति २ पु० पाठः ।

त्वाद्विकल्पे सति सायं प्रातर्वाग्निहोत्रं होतव्यं नोभयमिति प्राप्नोति। नैतदस्ति। यावज्जीवचोदनया तावज्जीवता सायं हुते पुनर्जीवत एव प्रातःकाले सति समस्तनिमित्तोपजननान्नैमित्तिकहोमकरणं भविष्यति। सत्यमेवमपि सिध्यति। अयं तु विशेषो यदा सायं प्रातरभ्यस्तोऽयमेक एव प्रयोगो भवति। तदा सायं होमे कृते यदा नाम यजमानस्य कदाचिदापद्भवति तदा यथा कथं चित्प्रातर्होमः कर्त्तव्यः प्रक्रान्तासमाप्तिनिमित्तदोषपरिहारार्थम्। अथ तु वसन्ते ज्योतिष्टोमवत्सायंकाले समाप्तं कर्म ततो नावश्यं प्रातर्होमः कर्त्तव्यः। किं च॥

काम्यः सर्वाङ्गसंयुक्तः प्रयोगस्य फलार्थिना।
सायंप्रातर्विकल्पेन प्रयोक्तव्यस्तदा भवेत्॥

अभ्यस्तैककर्मपक्षे तु कालद्वयेऽपि प्रयत्नेनावैगुण्यं संपादनीयम्। कथं पुनर्न विकल्प इति। वचनकृतात्समुच्चयादिति ब्रूमः। प्रवर्ग्यो वा एष इति हि प्रकृत्य ब्रवीति स वै सायं च प्रातश्च जुहोतीति। भेदपक्षेऽपि चशब्दात्समुच्चयः। न च समुच्चये सति साहित्यापत्तिर्भवति अनुपादेयत्वात्कालसाहित्यविरोधः। प्राप्तयोश्च वचनान्तरेण कालयोः समुच्चयार्थमेवेदं वाक्यमिति न वाक्यभेददोषः। तस्मादभ्यस्तमेककर्म। यत्त्वङ्गानां भेदेन प्रयोगो न प्राप्नोतीति। नैष दोषः। कालं प्रति हि कर्मोपादीयमानं विवक्षिताङ्गसंयोगं भवति तेन सायंतनस्य प्रधानस्य तत्कालान्यङ्गान्येवोपकुर्वन्ति, नान्यकालानि वैगुण्यात्। एवं प्रातस्तनस्यापीत्यावर्त्तते। यत्तु प्रयोजनं नास्तीति तदुच्यते। कुण्डपायिनामयने मासमग्निहोत्रं जुहोतीत्येवमादिविधानादेकेतिकर्त्तव्यतापेक्षत्वे सति सायंहोमस्य प्रातर्होमस्य

वा धर्मा आगच्छन्तीत्येकधर्मयुक्तं सकृदेव प्रयुज्येत। अभेदे तु यथाप्रकृतीति ॥

## द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो न हि तस्य गुणार्थेन ॥ १७ ॥

पशोर्दुष्प्रतिपादनतरत्वात्पूर्वाभिधानम् । द्वौ वात्र शब्दौ समुदायानुवादत्वेनाशङ्क्येते पशुशब्दस्तदग्नीषोमसंबन्धानुमितस्य यजिः । ईदृशं ह्येतद्वाक्यं श्रुतानुमितैकदेशनिष्पन्नं यदग्नीषोमीयेण पशुना यजेतेति ॥ तत्र किं हृदयादीनां पशुशब्दोऽनुवादोऽवद्यत्यनुमितानां यागानां च यजिः, उतापूर्वः पशुयागस्य विधीयते तन्त्रेतरे गुणविधय, इति संदिह्यते । तथैन्द्रवायवादिवाक्यैर्द्रव्यदेवतासंबन्धानुमितो याग(१)स्तद्गतस्य सोमरसः किं यजतिसोमशब्दाभ्यामनूद्यते, किं वा द्रव्ययुक्तं कर्म विधीयत इति । किमवद्यतिगृह्णातिभ्यां चोदितानामित्यनयोर्यागपर्यायत्वाभावात्तत्संबन्धानुमितानां, तद्गताख्यातप्रत्ययविहितानां वेत्येतत्प्रदर्शनार्थं तद्ग्रहणम्। आलभतिरपि च तदनुमितयज्युपलक्षणार्थः। अथ वावद्यतौ नैव यागानुवाद इत्युपन्यस्यते, कथं तर्हि, तदाश्रितस्य संस्पर्शनस्यालभतिरनुवादस्तद्द्वारेणैव च प्रत्यवदानं देवतासंयोगात्तावतां च यागानामनुमानम्, अत पशुसंयुक्त एको यागोऽनुमीयत इति। तथा सोमेऽप्ययमेव यागो यद्देवतोद्देशेन द्रव्यप्रक्षेपमिति। तथा सति स-

(१) संयोगानुमिता यागा इति २ पु० पाठः ।

आश्रुतेनैव भाष्येण संदेहोपन्यासः । तत्र पौर्णमासीवदेव समु-
दायानुवादत्वम् । तथा हि ॥

यथाऽऽग्नेयादिवाक्यानां न प्राग्यागानुमानतः ।
स्वार्थपर्यवसायित्वं तथा सोमे ऽपि गम्यताम् ॥

न ह्यैन्द्रवायवमित्यादिद्रव्यदेवतासंयोगेनानुमिते यागे नि-
राकाङ्क्षो न भवति । न चापरिपूर्णं वाक्यं वाक्यान्तरमाकाङ्क्ष-
ति, येनानुमानवेलायां सोमेन यजेतेत्ययमनुप्रविशेत् । एत-
द्विहितस्य वा देवताविरहाद्रूपस्य सतस्तैर्देवता विधीयते ।
यदा तु तैः कल्पितो यजिस्तदा नैव यागस्य यागान्तरं रूपं
भवतीति बलात्प्रकृतानुवादत्वमापद्यते । यस्मात्र पक्षे विशि-
ष्टविध्याश्रयणदोषः स भवत्पक्षे ऽप्यविशिष्टः सोमद्रव्यकया-
गविधानात् ॥ अपि च तवेह चैन्द्रवायवादिवाक्येषु च । मत्पक्षे
तु तेष्वेव केवलेष्विति विशेषः । किं च ॥

यादृशं द्रव्यसंबद्धं भवान्कर्म विधित्सति ।
तादृशस्याविधेयत्वमनन्तरमुदाहृतम् ॥

एकत्रैवेदृशे गुणे श्रूयमाणे(१)विधिशक्तिः संक्रामतीत्यग्नि-
होत्रे ऽभिहितम् । अतो न कर्मानुवादबुद्धिरपैतीत्यनुवादत्वं
यजेः । तत्र सोमशब्देन द्रव्यमेव गृह्णातिना सामान्यशिष्टं
नियम्यते । अथ वा सोमं क्रीणाति सोममभिषुणोति सोमं पा-
वयतीत्यादिभिः प्राकरणिकैर्गुणवाक्यैः सोमरसे कल्पिते गृ-
ह्णातिचोदनाः प्रवृत्ता इति सोमो न विधीयते । ततश्च स्वाभा-
विककरणत्वयुक्तयागसामानाधिकरण्यात्तत्प्रख्यं चान्यशास्त्र-
मिति नामधेयो भवति । ननु ज्योतिष्टोम इत्यपरं नामधेयम-

(१) श्रूयमाणे इति २ पु० नास्ति ।

स्यैव। यदीदमप्यवगम्यते किं नो बाध्यते। तथा च याज्ञिकानां व्यवहारेषु नामद्वयमुपलभामहे। समस्तवाक्यानुवादस्य तु तदेव प्रयोजनं इह प्रयोगवाक्यगतैकत्वोपजननं नाम। तस्मादनुवाद इति। भवेदेव द्रव्यदेवतासंयोगादेवम्। पशौ तु वत्समालभेतेत्येतत्सदृशेन देवतारहितहृदयादिद्रव्यमात्रसंयोगिना ऽवद्यतिना कथं यागविधानं, कथं वा हृदयाद्यनुवादः पशुप्रयोगेनेति वक्तव्यम्। उच्यते॥

यथैव पशुसामान्ये मन्त्राच्छागः प्रतीयते।
तथैव हृदयादीनां ममासौ प्रकृतिर्मतः॥

हृदयादिभिः प्रकृतिद्रव्ये ऽपेक्षिते मन्त्रवर्णाच्छागे लब्धे तदन्तर्गतं पशुत्वं तावदनूद्यते। तत्र तु देवतायां विहितायां यागो विधीयतां नाम। अथ वा सांनाय्यं वा तत्प्रभवत्वादित्यनेनैव न्यायेनायमवद्यतिः सारूप्यात्सांनाय्यावद्यतिप्रकृतिः स च दर्शपूर्णमासयागद्रव्यसंस्कारार्थः प्रसिद्धः। तत्र यदि हृदयादीनि यागद्रव्याणि ततस्तत्संयोगभाञ्जि भवन्ति नान्यथा। तेन यथैव पूतिकानामभिषवसंबन्धे(१) श्रूयमाणे तदर्थत्वान्यथाऽनुपपत्त्या यागसंगतिरश्रूयमाणा ऽपि गम्यते, यथा ऽवेत्युत्प्रेक्ष्यमाणे यागमनुमाय तदनुपपत्तेर्योगो ऽप्यस्तीति गम्यते, तथा ऽनुपमितानां च प्रतिद्रव्यमवस्थितानां समुदायो ऽनूद्यते। साधारणत्वादयं तवाप्यानुमानिकयागाभ्युपगम इति नैतेनास्मत्पक्षदौर्बल्यम्। सोमयागैकत्वे तुल्यार्थानामिन्द्रवाय्वादीनां विकल्पे सति क्रमसमुच्चयदर्शनं नोपपद्यते। पश्य॥

(१) फलचमसस्य च भक्षसंबन्धे इत्यधिकम् २ पु० पाठः।

यद्येकवत्त्वनार्थत्वात् पशावश्वादिदाहकः ।

तत्संबन्धे विकल्पन्ते यागे ऽस्मिन् देवतास्तथा ॥

मम तु भिन्नयागविषयत्वाद् देवतानां यागानां चादृष्टार्था-नां युगपदेकशब्देन फले विधानादुपपत्स्यते । पशावपि हृदय-स्याग्रे ऽवद्यत्यथ जिह्वाया इति क्रमदर्शनमेकादश वै पशोरव-दानानीति च समुच्चयदर्शनं तदपि नोपालम्भ। एकयागत्वे ऽपि समस्तपशुसाधनत्वेन तदुपपत्तेः । न हि हृदयादिष्वसमुच्चीय-मानेषूत्पत्तिवाक्यश्रुतेन समस्तेन पशुनेष्टं स्यात्। यस्माच्च तत्र व-चनान्तरवशेनापनेष्यते तस्मात्तद्व्यतिरिक्तेन सर्वेण यष्टव्यमिति न्यायः । सोमे तु नैवं समस्तचोदनोत्पत्तावस्तीत्युदाह्रियते । त-स्मात्समुदायानुवादौ इति प्राप्ते ऽभिधीयते ॥

प्रकृतप्रत्यभिज्ञानं वाक्ये यत्रोपलभ्यते ।

तत्र तस्या(१)नुवादत्वं न चात्रैवं प्रतीयते ॥

यदि पौर्णमासीवदशेषरूपप्रत्यभिज्ञानं भवेत्ततो ऽनुवा-दः कल्प्येत । यदि वा यजिमात्रस्यानुवादत्वमिष्यते ततः प-रित्यक्तविशेषणो ऽनुवाद इत्यवधार्येत । अत्र पुनः प्रकृता हृ-दयादिद्रव्यका एकद्रव्यकाश्च यागाः । इमौ च पशुसोमद्रव्य-कौ, न चैवं सति प्रत्यभिज्ञानमस्तीत्यनुवादत्वासंभवः । तथै-तत्स्यात् विकारेषु प्रकृतिवदुपचारात् हृदयादिष्वेव एते च पशुसोमशब्दौ वर्त्स्येते इति । तन्न । विना कारणेन लक्षणाना-श्रयणात् । विस्पष्टे हि परशब्दसामानाधिकरण्ये चात्यन्तान्यथा-संभवे च जघन्यवृत्तिः शब्दो भवति । न चैतदुभयमप्यस्ति । शक्यं हि मुख्यपशुसोमद्रव्यं यागान्तरं विधातुम् । न च प्रक-

(१) तत्र स्यादिति २ पु० पाठः ।

तत्त्वनिर्विशेषमानावेतौ शब्दौ नोपपद्येते। तेन यद्यपि तावद्-
वद्यनिगृह्यास्त्रिभ्यां चोदिता यागाः तथापि कर्मान्तरत्वप्रस-
ङ्गः। कल्पान्तरेष्वेव यागेषु स्वद्रव्यप्रकृत्यपेक्षेषु पशुसोमौ न वि-
धीयेते। तत्राह। श्रुत्या हि रस ऐन्द्रवायव इति। पशुस्ताव-
द्देवताविधिपरत्वादनुत्पत्तिवाक्ये सत्यशक्य एव विधातुमिति
नैवोपन्यस्यते। सोमलतापि वाक्यविधेया श्रौतरसविरोधे सति
न संबध्यते। कथं पुनरनुपात्तद्रव्यविशेषेष्वैन्द्रवायवादिविधि-
षु रसस्य श्रौतत्व, मधिकारलभ्यो ह्यसौ। ततश्च वाक्यप्राप्ता लतैव
बलीयसी स्यात्। उच्यते।

श्रुत्यैव द्रव्यसंबन्धो देवतातद्धितैः कृतः॥
अधिकारेण तस्यैव केवलेष्टा विशेष्यता।
गुणस्त्वापूर्वसंयोग इत्यत्राधिकरणे विस्तरेणाभिधास्यते॥

यथा तद्धितश्रुत्या वाक्यप्रकरणादिलभ्यस्य विशेषस्यैवास्य प्र-
व्रवाच्यस्य देवतासंबन्धे कृते कोसौ द्रव्यविशेष इत्यपेक्षायां
वाक्यप्रकरणादिभिस्तदवाप्तिः केवला न तु तैरेव देवतासंबन्ध
इति। किं च॥

उत्पत्तिवाक्यशिष्टस्य रसो वाक्यान्तराल्लता।
प्रकृतापेक्षिणस्तेन दुर्बलैषा ऽवगम्यते॥

ततश्च गुणादपि न भेदः प्राप्नोति। शक्यपरिहारं त्विदम्॥
कुतः॥

यथैवाष्टाकपालादौ श्रौतेपि सति वाक्यतः।
ब्रीह्याद्यौ विधीयन्ते तथा सोमो विधास्यते॥

विधीयमानं हि दुर्बलं विरुद्धं बाध्यते नानुगुणमनुगुणश्च
सोमो रसस्य प्रकृत्यपेक्षिणस्ताद्रूप्येन संबन्धात्॥ तद्यथाऽग्नेयो

ऽष्टाकपाल इति श्रुतिविहितेऽप्यष्टाकपाले सति व्रीहियवौ विधी-
यमानौ न विरुध्येते। पुरोडाशापेक्षितप्रकृतिरूपत्वात्। न हि
व्रीहीन् गृह्णन्नष्टाकपालं न करोति। तेन चात्र न कर्मान्तरता।
तथात्र न सोमे गृह्यमाणे रसः परित्यक्त इत्यविरोधात्पूर्ववन्नैव
संभवन्न गुणो भेदकः स्यात्॥ अपि च सिद्धान्ते ऽप्येतत्तुल्य-
मनभिषुतलतादानानभ्युपगमात्॥ तत्र यथा तत्र रसप्रकृति-
लता भवति तथा पूर्वपक्षेऽपि भविष्यति। अपि च विरुद्धतरं त-
वापद्यते। कथम्॥

उत्पत्तिवचनात् सिद्धा लता चेद्यागसाधनम्।

न सा वाक्यान्तरैः पश्चाद्रसीभवितुमर्हति॥

रसस्य प्रकृत्या विना निष्पत्त्यभावादाकाङ्क्षितः प्रकृतिसंब-
न्धो वाक्यान्तरेणापि क्रियमाणो न विरुध्येत। प्रकृतेस्त्वविकृ-
ताया एव सामर्थ्यादनपेक्षिता विकारापत्तिरुत्पत्तिवाक्यविरो-
धिनी न युक्ता वाक्यान्तरैः कर्त्तुम्। तस्माद् व्रीहियववाक्यमु-
द्रामुद्रितत्वादनुवाद्यैव गुणविधित्वं समुदायानुवादमात्रं निरा-
कृत्यं पशौ तन्मात्रेणापि सिद्धेः। सोमे तु व्रीहिवाक्यतुल्यत्वाश-
ङ्कामधिकां निराकर्त्तुमुत्तरं सूत्रं प्रस्तोतव्यम्। अथ वा भक्त्यैव
पूर्वोपपत्तिमुत्तरयैव निर्णयः। पूर्वसूत्रेण वा पूर्वपक्षं परिगृह्योत्त-
त्तरं तु सूत्रं तुशब्दस्थानचशब्दमुत्तरपक्षे योजयितव्यम्। कथं
पुनर्द्रव्यसंयोगादित्यनेन पूर्वपक्षो ऽभिधीयते। तदुच्यते। हृद-
यस्याग्रे ऽवद्यति ऐन्द्रवायवं गृह्णातीत्येताः किं दध्यादिव(१)गु-
णार्थाः श्रुतयः। ततश्चोत्तरयोरुत्पत्तिचोदनार्थत्वम्। उतैता एव
कर्मचोदना इति॥ किं प्राप्तं नैताः पूर्ववत् गुणार्थाः पुनः श्रुतयः

---

(१) पूर्ववदिति २ पु० पाठः।

किं तूत्पत्तिचोदनाः। कथं द्रव्यसंयोगात् हृदयादिद्रव्यसंयोगात्तैरेव वाक्यैश्चोदना पशुसोमयोः। किं कारणम् इतरथा हि प्रकरणेन हृदयादिसंयोगो यागत्वं(१) प्रतिपद्येत, न चासौ तस्य गुणार्थेन संभवति, उत्पत्तिवाक्यशिष्टपशुत्वताविरोधात्। अथ वा पूर्वोक्तेन न्यायेनान्यत एव पशुसोमयोः सिद्धत्वादस्मिन्प्रकरणे पुनरनर्थको द्रव्यसंयोगः स्यात्ते भवेत्। मम तु सोमशब्दो नामधेयमग्नीषोमीयवाक्यं च देवताविधानार्थमिति न किंचिदनर्थकम्। तस्माद्द्वयतिगृह्णातिसंयुक्तैव यागोत्पत्तिचोदना स्यात्॥

## अचोदकाश्च संस्काराः॥ १८॥

नैवैतौ समुदायानुवादौ चोदना वा प्रकृतत्वादित्येतस्मादेव हेतोः कथं प्रकृता न संभवन्ति। यतो ऽवद्यतिगृह्णातयो न यागानां चोदकाः, किं तर्हि संस्कारमात्रविषयः। तन्मात्रपर्यवसानात्। तन्मात्रपर्यवसायिनि वाक्ये निष्प्रमाणकत्वान्नाश्रुतयागकल्पनं शक्यम्। एवं हि स कल्प्यमानः कल्पेत देवतोद्देशेन गृहीतं द्रव्यं न यावद्यागेन संबध्यते न तावत्तद्देवत्यं कृत्यं कृतं भवतीति॥ तत्र यदैवान्यथानुपपत्त्या यागं कल्पयितुमारभते तदैव सन्निहितः प्रत्यक्षो यजिरविशेषात्सर्वान्द्रव्यदेवतासंयोगानुपपादयितुमुपतिष्ठन् यागान्तरकल्पनाप्रमाणं निरुणद्धि। तस्मिंश्चाप्रमिते कस्य समुदायानुवादो भविष्यति। यदुक्तम् आग्नेयादिवच्चापरिकल्पिते यज्ञौ वाक्यान्तरापेक्षेति तत्र ब्रूमः॥

(१) यागाङ्गत्वमिति २ पु० पाठः।

पुंव्यापारनियोगेन वाक्यं सर्वत्र पूर्यते ।
तदलाभे त्वपूर्णत्वं तल्लाभे वाक्यसङ्गतिः ॥

आग्नेयो ऽष्टाकपालो भवतीति न यागादन्यः पुंव्यापारः प्रतीयतइति प्राक्तदनुमानादपरिपूर्णं वाक्यम् । इह त्वैन्द्रवायवं गृह्णातीति ग्रहणभावनायां पुरुषो नियुज्यते । तत्र प्रागपि यज्यनुमानादस्ति विधेर्विषय इति समाप्यते वाक्यम् । इदं त्वन्यत् यत्ततः परमपि किं चिदपेक्ष्यते । सर्वमेव हि वाक्यं स्वार्थे पर्यवसिते ऽर्थान्तरापेक्षां न जहाति, न च तावता तदसमाप्तं भवति ॥ या त्वसावपेक्षा सा वाक्यान्तरेण पूरयिष्यतइत्यवगमात्र वाक्यान्तरसंबन्धं न सहते । तेन यज्यनुमानवेलायां प्रतिवाक्यं सोमेन यजेतेत्यस्योपस्थानं न विरुध्यते । आग्नेयो ऽष्टाकपाल इति तु भवतेरपुरुषव्यापारात्मकत्वात्प्राग्यजेर्न किं चिद्विहितं न किं चित्प्रतिषिद्धमित्यसमाप्ते वाक्ये वाक्यान्तरे चानपेक्षिते यजिरनुमीयमानो न वाक्यान्तरगतः संबध्यतइति वैषम्यम् । अथ यदुक्तमुत्पत्तिशिष्टयोः पशुसोमयोर्न वाक्यान्तरगता विकारापत्तिर्युक्तेति तत्र ब्रूमः ॥

द्रव्येणात्यन्तभिन्नेन सह चिन्त्यं बलाबलम् ।
हृदयादिरसद्वारसङ्गत्वं पशुसोमयोः ॥

यद्यत्रौत्पत्तिकौ पशुसोमौ परित्यज्यात्यन्तव्यतिरिक्तं किं चिद् द्रव्यं विधीयते ततो विरोधः स्यात्, इह तु पशुनैव हृदयादिद्वारेण योगः साध्यते । सोमेन च रसद्वारेण । न चेतिकर्त्तव्यतासंबन्धे कश्चिद्विरोधः ॥ पशुसोमौ हि यागसाधनत्वेन चोद्यमानाविति कर्त्तव्यतामाकाङ्क्षतः । तत्र च रसहृदयादिनिष्पत्तिद्वारेणेत्येवं कथंभावः पूर्यते तेनानुग्राहकत्वान्न तत्कल्पने

विरोधापत्तिः। यत्तु प्राकरणिके नामादिवाक्यैरेव प्राप्तत्वादि-
ह द्रव्यसंयोगोऽनर्थक इति तत्राप्यचोदकाश्च संस्कारा
इत्येवोत्तरम्। न हि ते विधयः सोमस्य पशोर्वा चोदकाः, किं
तर्हि तयोरेव संस्कारकाः। तेन चोदितस्य द्रव्यस्य यथा कथं
चिदुपादानेन यागसाधनत्वे प्रसक्ते क्रयोपात्तेनैवाभिषवादिसं-
स्कृतेन च साधयितव्यमिति विधीयते। न च मन्त्रवर्णस्यात्य-
न्ताविदितच्छागप्रापणसामर्थ्यं, पशुचोदनाविदितस्य तु संदे-
हापनयनमात्रमुपयुज्यते(१)। न चावश्यतिरेकान्तेन यागमनु-
मापयति, विनापि तेन स्वण्डनमात्रतया लोके वेदे चोपपत्तेः।
द्रव्यदेवतासंयोगस्तु न कथं चिद्यागादिना सिध्यतीत्यनुमानवै-
षम्यम्। न चावश्यतिसान्नाय्यैः(२) प्रकृतौ चोदितोऽर्थगृहीतत्वा-
द्यतस्तद्धर्मप्राप्तिरपि स्यात्। न चास्य यागद्रव्यार्थत्वमितिकर्तव्य-
ता येन तदतिदिश्येत। न चेदमोऽर्थे सामान्यतोदृष्टं प्रक्रमते।
पूतिकाभिषवफलचमसभक्षयोस्तु वाक्यप्रकरणाभ्यां तादर्थ्य-
विज्ञानमित्यसमानता॥ सोमवाक्येऽपि विशिष्टविधौ प्रत्यक्षोपा-
त्ते सत्यानुमानिकासंभवादेवातुल्यत्वम्। न चैन्द्रवायवादिवा-
क्येष्वष्टाकपालादिवाक्येष्विव गुणवाक्यत्वेऽपि वाक्यभेदः। कुतः॥

विधेयानेकभावेऽपि देवताग्रहणात्मना।
क्रियान्तरप्रसादेन विशिष्टविधिसंभवः॥

शक्यते चैन्द्रवाय्वादिविशिष्टग्रहणभावनाविधिराश्रयितुम्।
अर्थप्राप्ते वा ग्रहणे समासोपात्तैकदेवताविधानमात्रमवि-
रुद्धम्। प्रकरणाभावं प्रधानसंबन्ध इति गुणवाक्यत्वेऽप्यदोषः।

---

(१) मुद्रिते पुस्तके २ पृ० ५... ।
(२) [illegible]

नत्वाद्वैषां संस्कारत्वादन्यतो यागमपेक्षमाणानामविरुद्धो ऽन्येन यागविधिः । एवं च सति ज्योतिष्टोमेनेत्येकवचनं मुख्यमेव भवति । न च सोमशब्दः क्लेशेनानर्थकं द्वितीयमानत्वं(१) प्रतिपत्स्यति । न चाघाराग्निहोत्रपूर्वपक्षसदृशः समस्तवाक्यानुवादो ऽनर्थक आश्रितो भविष्यति । तेन चोदना पशुसोमयोरिति सिद्धम् ॥

## तद्भेदात्कर्मणो ऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्याद्भेदो द्रव्यगुणीभावात् ॥ १९ ॥

क्रमसमुच्चययोः पशावपरिचोदितत्वात्कृत्ता कथा पशोरेकत्वविरुद्धमित्यत्रोद्भविष्यति ॥ किं समस्तादवदातव्य,मुत प्रत्यङ्गम्, उतैकस्मात्, अथ वा हृदयादिभ्यः परिगणितेभ्य इति । सोमे तु पाक्षिकचोदनापरिहारो ऽभिधीयते ॥

वाक्येन यदि यागस्य श्रूयेरन् देवताः पृथक् ।
व्यकल्पिष्यन्त सर्वास्तु युगपद्यागसंगताः ॥
यत्र वाक्येन संबन्धो निरपेक्षो ऽवधार्यते । (२)
तत्र तुल्यार्थवर्त्तित्वान्नोपपन्नः समुच्चयः ॥

यद्यैन्द्रवायवेन यजेतेन्द्रवायुभ्यां वा यागं निर्वर्त्तयेदिति श्रूयेत ततो ऽन्योन्यनिरपेक्षैर्वाक्यैस्तुल्यार्थत्वेन ज्ञायमाना विकल्पभाजो भवेयुः । इमाः पुनर्ग्रहणसंबद्धाः श्रुताः । प्रकरणेन

(१) द्वितीयमानत्वमिति २ पु० पाठः ।
(२) निरपेक्षेण चोद्यते इति २ पु० पाठः ।

यागसंबन्धं प्रतिपद्यन्ते । न च प्रकरणव्यापारः पर्यायो येनान्योन्यनिरपेक्षाः संबध्येरन् । सर्वग्रहणेषु हि युगपदितिकर्त्तव्यतात्वेन गृहीतेषु तद्गता देवतास्तन्मात्रेणापर्यवस्यन्त्यः प्रकरणिना यागेनाकाङ्क्षिताः युगपदेव संबध्यन्ते । तत्र नाम विकल्पो युज्यते यत्रेतरेतरनिरपेक्षाः समानार्थे नियुज्यन्ते । किं कारणम् ॥

> प्रत्येकं हि समर्थत्वं वाक्यादेवावधारितम् ।
> सापेक्षत्वे विपरीतेत्येवं सर्वं विकल्पते ॥

न त्विह प्रत्येकं ज्योतिष्टोमनिर्वर्त्तनसामर्थ्यमिन्द्रवाय्वादीनामवगम्यते तादृग्विनियोजकाभावात् । सत्यपि च प्रत्येकं यागनिर्वर्त्तनसामर्थ्ये तद्विशेषज्योतिष्टोमनिर्वृत्तिर्यथावचनं विज्ञायत इति नैव प्रत्येकं तुल्यार्थत्वम् । प्रत्येकं तुल्यार्थाश्च व्रीहियवादयो विकल्पन्ते, वाक्यसंयोगिनो हि ते परस्परनिरपेक्षाः स्वेन स्वेन वाक्येन विनियुज्यन्ते । नन्वैन्द्रवायवं गृह्णातीति वाक्यमेव विनियोजकमुपलभ्यते । अतश्च मैत्रावरुणमित्येतस्य पूर्वनिरपेक्षमेव देवताविधिसामर्थ्यं विज्ञायते ॥ सत्यं ग्रहणं प्रत्यन्योन्यनिरपेक्षा विधीयन्ते न तु तत्रैकार्थत्वमदृष्टार्थत्वात् । कथमदृष्टार्थत्वमिति चेत् ॥ उच्यते ॥

> पूर्वं प्रधानसंबद्धं संस्कारे श्रूयते यदि ।
> तद् दृष्टार्थं विना तेन यदि वासौ न सिध्यति ॥

यदि हि प्रथमं यागेन संबद्धाः सत्यो देवता निर्वापावहननादिष्विव ग्रहणेषु पुनः श्रूयेरन् । यदि वा ताभिर्विना प्रकरणमेव न निर्वर्त्तेत । ततस्तस्य श्रवणं दृष्टार्थमनागतपूर्वकृतिरूपेण कल्प्येत । न त्विन्द्रवाय्वादयः प्रथमं ज्योतिष्टोमे श्रुताः । नापि त-

द्रव्यान्तरेण ग्रहणं सिध्यति ॥ तथैवं च सत्यपि यद्देवतायुक्तं ग्रहणं कर्त्तव्यमिति श्रूयते तस्यादृष्टादृते न किं चित्प्रयोजनमस्ति। ननु च यागस्यैता देवता भविष्यन्तीति ज्ञात्वा विनापि प्रथमविनियोगेन तद्विषयस्मृत्यर्थत्वं विज्ञायते। नैतदस्ति ॥ कुतः ॥

सर्वेषां विधिवेलायां प्रयोजनमपेक्ष्यते।
तद्वेलायामतः कल्प्यो दृष्टादृष्टार्थनिर्णयः ॥

ऐन्द्रवायवं गृह्णातीति एतद्वाक्यप्रवृत्तिकाले किं प्रयोजनमित्यपेक्षा भवति। तच्च यद्यपि प्रकरणवशादितिकर्त्तव्यतात्मकस्य ग्रहणस्य यागसंबन्धः कथमपि भवतीत्यवधार्यते तथापि देवतानामन्यसंयुक्तत्वादक्रियारूपत्वाच्च न प्रकरणेन यागार्थत्वं विज्ञायत इत्यवश्यं यागसंबन्धनिरपेक्षं तावद्ग्रहणं प्रतिप्रयोजनं कल्प्यमित्यदृष्टकल्पनमापद्यते। तस्मिंस्तु शास्त्रवेलायामवधारिते यद्यनुष्ठानकाले दृष्टमप्यनुनिष्पादि भवति केन तन्निवार्यते। न तु तेन शास्त्रप्रवृत्तिः प्रतिबध्यते। तेन प्रतिवाक्यं देवतासंयोगानामदृष्टार्थत्वात्समुच्चयः। तच्च न च यस्मिन्संबन्धेन क्रियते तत् तनूनपात्संबन्धेनेत्यनेन न्यायेन भेदेन श्रुता देवता ग्रहणसंबद्धा नोपपद्यते यदि ग्रहणं नावर्त्तेत इति प्रतिदेवतं सोमो ग्रहीतव्यः। एष तावत्सूत्रार्थः। तद्भेदाद्देवतासंयोगभेदाद् ग्रहणकर्मणोऽभ्यासो देवतासंयुक्तग्रहणसंस्कार्यद्रव्यपृथक्त्वादनर्थकं हि संयोगान्तरश्रवणमननुष्ठीयमानमनर्थकं स्यात्। तेन ग्रहणस्य भेदः संस्कार्यं द्रव्यं प्रति गुणभावात् ॥ एतद्देवतावन्ति ग्रहणानि यागप्रक्रमात्मकत्वात्त यागादृते देवतार्थं द्रव्यं संस्कर्त्तुं शक्नुवन्तीत्येवमपेक्षिते भविष्यति यागो य एतानि द्रव्याणि देवतासंबन्धमापादयिष्यतीति।

यागोऽपि चाविज्ञातदेवताकः श्रुतिलिङ्गवाक्यैर्देवतामलभमानः प्रकरणस्य चेदृशे वस्तुन्यक्रियात्मके व्यापाराभावाद् ग्रहणेषु तावद्विनियोजकं भवति। तानि चापर्यायविधानाद्भिन्नादृष्टसंबन्धित्वाच्च युगपद्गृह्यन्ते तद्वशेन देवतानामपि समुच्चयसिद्धिः॥ ननु प्रकरणगृहीतानामप्येकार्थानां पुरोडाशविभागमन्त्रप्रभृतीनामिष्यत एव विकल्पः, सत्यमिष्टो न तु तत्र प्रकरणं केवलं व्याप्रियते। लिङ्गानुमितया श्रुत्या प्रत्येकं विभागाङ्गत्वे विज्ञाते दर्शपूर्णमासविभागार्थत्वमात्रं प्रकरणाद्भवति विभागान्तरेष्वानर्थक्यात्। तत्र यद्यपि दर्शपूर्णमासौ समुच्चयेन गृहीतः तथापि न विभागद्वारनिरपेक्षयोः सामर्थ्यमस्ति यच्च द्वारं तद्विकल्पेनावरुद्धं न समुच्चयगम्यम्, इह पुनर्विपरीतमेतत्। यान्येव हि द्वाराणि ग्रहणानि तेष्वेव देवताः समुच्चिताः। तत्र प्रत्येकं ग्रहणयोग्योऽपि द्वारसमर्पणवशेन प्रवर्त्तमानः किमिदानीं करिष्यति। ननु ग्रहणानामपि प्रत्येकं द्रव्यप्रकल्पनरूपेण देवतासमर्पणेन च प्रधानोपकारसामर्थ्यमस्तीति विभागमन्त्रवद्विकल्पेन भवितव्यम्। भवेदेवं यदि पूर्वं नानादेवतो यागोऽवगतः स्यात्। ततस्तदर्थोऽयं द्रव्यप्रकल्पनभेद इत्यवगम्यते, न त्वसावेवमवगत इति प्रकल्पनभेदाम्नानमदृष्टार्थं विज्ञायते। अवश्यं च गुणात्प्रकल्पनानि भेत्तव्यानि, न ह्येकस्मिन्प्रकल्पने युगपत्पर्यायेण वा देवताः संकल्पयितुं शक्यन्ते। यौगपद्यं तावत्क्रमवर्त्तिन्या वाचा नैव शक्यम्, अदेवताभूत एव समुदायः संकल्पितः स्यात्। न चेन्द्रवाय्वादिसमुदाये देवतात्वं केनचिदुक्तं प्रतिपदोक्तैस्ताद्धितैः प्रत्येकं प्रतीयमानत्वात्। न च क्रमेणोद्देशः। कथम्॥

द्रव्यस्य गृह्यमाणस्य देवतोद्देशचोदना ।
न चैका देवता मुक्त्वा तदुद्देशस्य संभवः ॥

यदि तु प्रागूर्ध्वं वा ग्रहणादुद्दिशेत् अचोदितमेव कुर्यात् ॥ किं च ॥

एतस्या इति संकल्प उद्देशो ऽत्राभिधीयते ।
अन्यस्मिन्क्रियमाणे च पूर्वस्तत्र विपद्यते ॥

यद् द्रव्यमिन्द्रवायुभ्यां दातव्यमिति संकल्पितं तस्य त्यक्तप्रायत्वादनीशो यजमानः कथमिव वक्ष्यति मित्रावरुणाभ्यामेतद्देवेति ॥ तत्रैकामुद्दिश्य देवतान्तरसंकल्पे क्रियमाणे पूर्वदेवतातस्तद् द्रव्यमाच्छिन्नं स्यात् । पूर्वसंकल्पालोचनेन वा नैवोत्तरः पारमार्थिकत्वं प्रतिपद्यतइत्यसत्संव्यवहारमात्रमेवानुष्ठीयेत न चोदनार्थः ॥ तेनावश्यं यावद्देवतं ग्रहणभेदः कर्त्तव्यः ॥ किं च ॥

शक्यते चागृहीतेपि यत्र क्वचिदवस्थिते ।
द्रव्ये ऽस्मिन्देवतोद्देष्टुमित्यदृष्टार्थता विधेः ॥

देवतोद्देशस्त्यागात्मको हि यागः । शक्यते च पूयमानावस्थेनापि सोमेन क्रयोत्तरकालं वा सर्वावस्थावियुक्तेनापि निर्वर्त्तयितुमित्यशेषोत्तरसंस्कारविधानमदृष्टार्थम् । यत्र तु पुरोडाशादि द्रव्यं चोद्यते तत्र यावद्दवहन्त्यादिविधानं तस्य सर्वं तन्निष्पत्त्यर्थत्वाद् दृष्टार्थं भवति । न च(१) ग्रहचमसस्थेन सोमेन यष्टव्यमित्युत्पत्तिचोदना लतामात्रपर्यवसानात् । तेनातीयादृष्टभेदनिर्वृत्त्यर्थमपि ग्रहणानि समुच्चेतव्यानि । इमं मुष्टीर्मिमीतइति च प्रकरणे परिमाणं श्रुतम् । अतः सोमेन

(१) न चेहेति २ पु० पाठः ।

यजेतेत्येतद्वचनमेव विशेष्यते दशमुष्टिना सोमेन यजेतेति ॥ स च नियतपरिमाणेनोदकेनाभिषुतोऽल्पपरिमाणेषु भिन्नेषु ग्रहणमन्त्रेषु न ग्रहणभेदमन्तरेण शक्यते ग्रहीतुमिति भेदेन गृह्यते । तथावस्थेन च यागो निर्वर्त्तयितव्यः । सोऽप्यनभ्यस्तः तथाऽवस्थितं न शक्नोति सर्वं संभावयितुमिति प्रयोजनवशेनाभ्यस्यते तेन तत्रापि सूत्रम् । तद्भेदात्प्रकल्पितसोमभेदाद्यागकर्मणोऽभ्यासः स्वीकृतद्रव्यपृथक्त्वादशेषमत्यज्यमानमनर्थकं स्यात् । अत उत्पत्तौ सकृच्छ्रुतस्यापि वाक्यान्तरप्रकल्पितावस्थौत्पत्तिकद्रव्यगुणत्ववशेनानुष्ठानभेदः । तद्धि द्रव्यमवश्यं यथागृहीतमेव दातव्यं पुनरेकीकरणे पूर्वकृतग्रहणभेदवैयर्थ्यप्रसङ्गात् । न च यथासंकल्पिताः स्वैर्भागैर्देवताः संबध्येरन् । न च त्यागकाले सर्वाः संकल्पयितुं शक्यन्ते येनाभ्यासभीतैः सर्वोद्देशेन सकृदेव सर्वं द्रव्यं मिश्रीकृतं दीयेत तथा कृतेपि च भागसंकरः प्राप्नोत्येव । प्रकल्पिते च भागनानात्वे वचनादृतेऽवश्यं परिहार्या संकरापत्तिः ॥ तस्माद्यथासंकल्पितस्य प्रदानात्सर्वदेवतासमुच्चये सत्युपपन्नमेतत् । दशैतानध्वर्युः प्रातःसवने ग्रहान्गृह्णात्याश्विनो दशमो गृह्यते तं तृतीयं जुहोतीति तेन सिद्धमेककर्मत्वं प्रयोजनम् । पूर्वपक्षे सोमविकारेष्वेकस्यैव ग्रहस्य धर्मैः सकृदनुष्ठानेन भवितव्यम् । सिद्धान्ते तु प्रकृतितुल्यमेवानुष्ठानमिति ॥

## पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्यात् ॥ २० ॥

गतो ऽभ्यासापवादप्रसङ्गः(१) संख्यया भेद इदानीमभिधी-यते । तत्र तिस्र आहुतीर्जुहोति द्वादश द्वादशानि जुहोती-त्येवमादयः उत्पद्यमानकर्मसामानाधिकरण्यचोदिताः सर्व-संख्यायुक्ता उदाहर्त्तव्याः । सकृज्जुहोतिश्रवणात्कर्मैकत्वे सति संख्यानुग्रहो ऽभ्यासेन भविष्यतीति प्राप्ते ऽभिधातव्यम् । उ-त्पद्यमानस्यैवात्र होमस्य संख्यासंबन्धः श्रूयते नोत्पन्नस्य प-श्चादेकादश प्रयाजानितिवत् । न च पृथक्त्वेन विना संख्या-या आत्मलाभः संभवति । न चाभ्यासपूरिता संख्या समञ्ज-सा भवति अगत्या हि सा नियतपरिमाणप्रयाजोपसदादि-विषयत्वेनाश्रयिष्यते । संभवति चात्र प्रागनवधारितसंख्या-न्तरत्वात् स्वत(२) एव भेदः । तस्मात्कर्मपृथक्त्वनिवेशिन्यैवैषा नाभ्यासपृथक्त्वाश्रया ऽश्रयितव्या । तथा च वक्ष्यत्यागमा(३)-द्दा ऽभ्यासस्याश्रुतत्वादिति । ननु च जुहोतिशब्दात्प्रथममेको होमो ऽवधारित इत्यभ्यासेन पूरणमेव प्राप्नोति । न, जुहोति-शब्दाभिहितस्य कर्मणो ऽसत्त्वभूतत्वेनासंख्यत्वात् । या हि तत्र जुहोतिपदे संख्या कर्त्तुः खलु सा भविष्यति न भावनाधा-त्वर्थयोः । तत्र सकृदाम्नानवशादर्थादेकसंख्यं होममुत्प्रेक्षितु-मारभमाणा एव स्ववाक्यश्रुतया संख्यया वार्यमाणास्तत्परिच्छि-न्नमेवाङ्गीकुर्वन्स्वरूपभेदं सर्वत्र प्रतिपद्यते । तस्मात्कर्मभेद इति । यत्तु भाष्यकारेण सप्तदश प्राजापत्यानित्युदाहृतं तत्र द्रव्यगतापि संख्या कर्मभेदं करोतीत्येतद् दुष्प्रतिपादं प्रतिपा-

(१) प्रसङ्गविचारइति २ पु० पाठः ।
(२) स्वरूपत इति २ पु० पाठः ।
(३) आगमो वेति २ पु० पाठः ।

वयामीत्यनेनैवाभिप्रायेण । कुतः संशयः । उच्यते ॥

किं स्वयं तद्धितान्तानामेकशेषः कृतो भवेत् ।

किं वा कृतैकशेषाणां पश्चात्तद्धितसंगतिः ॥

यदि प्रजापतिरेतेषां देवतेति कृतैकशेषेण सर्वनाम्ना निर्दिश्य तद्धितः क्रियते । तत एक एव संबन्धः सप्तदशानां द्रव्याणामेकस्याश्च देवताया इत्येककर्मत्वम् । अथ तु प्रजापतिर्देवता ऽस्येति प्राजापत्यश्च प्राजापत्यश्चेति सप्तदशकृत्व उच्चार्य प्राजापत्या इति सरूपैकशेषः क्रियते ततः सप्तदशैव द्रव्यदेवतासंयोगाः पृथक्प्रदर्शिता इति प्रतिसंयोगं यागानुमानात्कर्मभेदः । किं तावत्प्राप्तम् । एककर्मेति । कुतः ॥

प्रत्ययार्थबहुत्वं हि प्रत्यक्षमुपलभ्यते ।

तत्कृतं चैकशेषत्वमिति न प्रकृतौ भवेत् ॥

यो हि प्राजापत्यः प्राजापत्यश्चेत्येवमेकशेषं करोति तेनोभयोः प्रकृतिप्रत्ययोरसावभ्युपगतो भवति तस्य च निमित्तं बहुवचनान्यथानुपपत्तिः । न च तत्प्रातिपदिके बहुवचनमुपलभ्यते येन तस्याप्येकशेषः क्रियते । न च तदेकशेषमन्तरेण प्रत्ययार्थस्य दर्शयितुं न शक्यते । विगृह्यमाणवेलायां सर्वनाम्ना कथ्यमानत्वात् । तस्मात्सकृच्छ्रुत एव प्रजापतिर्बहुभिर्द्रव्यैः संबध्यते । किं च ॥

कर्माण्यश्रूयमाणानि तदपूर्वाणि चाऽच मे ।

न कल्प्यानि भविष्यन्ति सिद्धेऽर्थे श्लोककल्पनात् ॥

कल्प्यापि हि तद्धितस्तेनैव चैकशेषं न तावन्मात्रेण मुच्यते पुनरदृष्टाश्रुतानि कर्माण्यपूर्वाणि च कल्पयितव्यानि, न च तानि यथेष्टं कल्पयितुं लभ्यन्तइत्युक्तं शब्दान्तराधिकरणे । य-

माचेण विना चोदितद्रव्ये(१) देवतासंबन्धानुपपत्तिः तन्मात्र-मेवादृष्टाश्रुतमर्थापत्त्या कल्पयितुं शक्यते नान्यत्। तेनाभ्यधिकं न लभ्यते। अवश्यं ह्योकादिक्रमेण सप्तदश कर्माण्यपूर्वाणि च कल्पयितव्यानि। तत्र प्रथमकल्पनेनैवानुष्ठानतन्त्रत्ववदगृह्य-माणविशेषत्वात्सर्वद्रव्याणि यागवन्ति जातानीति नोपरिष्टाद्भ-त्तुं शक्यते, किं च ॥

न चान्यभेदेनान्यस्य भेदो भवितुमर्हति।
हृदयाद्यवदानानां न भेदात्कर्म भिद्यते ॥

यदि हि द्रव्यभेदात्क्रियाणां भेदः स्यात्। ततो हृदयादिभे-देन द्रव्यवदानभेदेनापि वा भेदः स्यात्। न चार्हति भवितुं वक्ष्य-ति ह्यपि वा व्यतिरेकाद्रूपशब्दाविभागाच्चेति। प्रकृतौ च कृत्स्ने पशौ यागसाधनत्वेन चोदिते तथैवोत्सृष्टव्ये प्राप्ते हृदयाद्येका-दशावदानप्रकृतित्वेन पशुना यागः साधयितव्य इति वाक्या-न्तरवशादवगम्यते। तेनासौ पशोर्धर्मो न यागस्य। इहापि स-प्तदशानां यागसाधनत्वे ऽवगते ऽतिदेशेन प्रत्येकं सर्वधर्माः प्राप्यन्तइत्येको ऽपि यागः सप्तदशावदानगणानतिदेशेन गृह्णन्न विहन्यते। तस्मादेकं कर्मेति प्राप्तउच्यते ॥

एककर्मत्वपक्षे स्यादेक एवात्र चोदकः।
ततश्चैकगणप्राप्त्या न सर्वपशुसंग्रहः ॥

न ह्येतदेतावत्येव वाक्यं पर्यवस्यति प्राजापत्यान्पशूनिति, किं तर्हि प्रकृतिवदित्यपरो वाक्यशेषः। एककर्मत्वे चात्र स्व-कीयः प्रकृतिर्भवेत्। तत्र चैको ऽवदानगणो यागस्य(२) साधन-

(१) चोदितद्रव्यदेवतेति समस्तः २ पु० पाठः।
(२) अवदानगणं साधनमिति २ पु० पाठः।

मासीदित्यत्राप्येक एव प्राप्नोति, सोपि विवक्षितैकसंख्यपशु-निष्पन्न आसीदिति तादृगेव कर्त्तव्यः। ततश्चैकेनैव पशुना सिद्धत्वान्न पश्वन्तराणि प्रजापतिना संबध्यन्ते इति स्वपदोपात्तं कर्तृत्वं वाक्यप्राप्तं च सप्तदशत्वमुभयमपि नानुष्ठीयेत। यदा तु सप्तदश यागा इति बुद्धिः क्रियते तदा प्रतिकर्मावसायिभिश्चोदकैस्तावन्त एवावदानगणाः प्राप्यन्ते, तत्सिद्ध्यर्थं चाश्रुतानामपि सप्तदशानां पशूनामागमः क्रियते, किं पुनः श्रुतानामुपादानम्। ननु च प्रत्यक्षं यागैकत्वमुत्सृज्य न युक्तमानुमानिकचोदकानुरोधेन नानात्वं कल्पयितुं, पश्य।

यागोपदेशवेलायामेकानेकत्वकल्पना।
तद्दशेनातिदेशस्य नोपदेशस्तदाश्रयः॥

उत्पत्तिवेलायां हि कर्मणामेकानेकत्वनिर्णयो भवति उत्पत्तिश्च सर्वत्रोपदेशेन गम्यते नातिदेशेन। न ह्यनुत्पन्ने कर्मणि कथंभावो भवति, न च तस्मिन्नसत्यतिदेशः प्रवर्तते। तस्माच्चिरप्रवृत्तभेदाभेदज्ञानावसरभावित्वान्नातिदेशवशेन भेदज्ञानं युक्तम्। अत्रोच्यते॥

संदिग्धे वाक्यशेषेभ्यो निर्णयः प्राक्समर्थितः।
सामर्थ्याच्च तदत्रास्ति द्वयनिर्णयकारणम्॥

नात्रास्माभिरतिदेशेनैव कर्मभेदोऽवधारितः, केन तर्हि, प्राजापत्यानित्युपदेशेनैव। स तु द्रव्यदेवतायजिसन्निधिमात्ररूपेण निर्णीतः परिमाणं प्रत्यनिश्चितसामर्थ्यविशेषः प्रागुपदिष्टसंदिह्यमानैकशेषतद्धितपौर्वापर्यरूपः सन्नतिदेशात्मकेन वाक्यशेषेण तद्ग्रहणानुरूपसामर्थ्येन च निर्णीयते। यद्यपि च पश्चात्तनोऽतिदेशस्तथापि सोऽत्र भविष्यतीत्यादित एव ज्ञात्वा

तद्विवक्षार्थवृत्तित्वमुपदेशस्याध्यवसीयते । ततश्च यद्यपि प्रजापतिर्देवतैषामिति विगृह्य वाक्यार्थोऽध्ययनं प्रक्रम्यते तथाप्यन्ते विसंवाददर्शनात् भ्रान्त्या मयासौ विग्रहः कृत इति न बुद्धिपूर्व्वकारी नाध्यवस्यति । न चात्रैष प्रकारोऽस्ति येनातिदेश एव पूर्वज्ञानानुरोधेन प्रवर्त्तेत । न ह्यसौ प्रकृतावपद्यमाना(१)-न्सप्तदशावदानगणानेकस्मिन्कर्मणि ज्ञापयितुं समर्थः । नाप्येकस्यैव गणस्य सप्तदश प्रकृतिद्रव्याणि, न वासौ संदिग्धो येनोपदेशान्निर्णीयेत । न च संदेहावस्थत्वादुपदेशेनैकान्तिकोऽतिदेशस्य विरोधः येनैकगणप्राप्तिर्बाध्येत । न ह्येककर्मत्वमुपदिष्टं, सर्वत्र चाविरोधसंभवे विरोधो नाश्रीयते । शक्यते चात्र कर्मबहुत्वाभ्युपगमेनाविरोधः संपादयितुं, तस्मादेवमुपदेशवचनं व्यज्यते प्रजापतिर्देवताऽस्येति विगृह्य सप्तदशानां तन्त्रेणोच्चारणम् । ततश्चाग्नेयाग्नीषोमीयादिवदेव भिन्नैर्देवतासंयोगैर्भिन्ना यागाश्चोद्यन्ते । यदुक्तं, भवति पशोरयं धर्म एकादशावदानं(२) नाम, स चैककर्मत्वेपि प्रतिपशु भेत्स्यत इति । तदयुक्तम् । कुतः ।

> न हि द्रव्यकथंभावादतिदेशोऽत्र कल्पते ।
> कर्मोद्भूतः कथंभावः कर्मधर्मान्प्रतीच्छति ॥

प्राजापत्यपशुयागेन भावयेत्कथमिति ह्यपेक्ष्यते, न पशुना कथमिति, त्यज्यमानत्वेन द्रव्यस्य ज्ञातप्रकारत्वात् । प्रकृतावपि चैकपशुनिष्पन्नैकादशावदानगणसाध्यत्वं यागधर्मः । न पशोर्निष्फलत्वात् । तद्धर्मत्वपक्षे ह्यवदानैरसौ संस्क्रियेत

---

(१) अविद्यमानानिति २ पु० पाठः ।

(२) एकादशावदानगणप्रदानमिति २ पु० पाठः ।

न च तेन(१) प्रयोजनं विनाश्रितत्वात्। यागेन तु सिद्धेनार्थसंबन्धिना ऽपूर्वेण वेति सर्वमिदं तन्निर्वृत्तिप्रकारत्वेनाश्रीयते। तस्मान्नैको यागोनेकगणं समर्थो ग्रहीतुम्। न च तद्ग्रहे ऽनेकपशुग्रहणम्। यद्यपि चावदानप्रकृतेरेकत्वं सप्तदशसंख्यया बाध्यतइति नानापशुनिष्पन्न एक एव गणो गृह्यतामिति बुद्धिर्भवेत् तथाप्येकादश पशव उपयुज्येरन् न सप्तदश। न त्वेकस्मिन्नपि यागे सप्तदशभिरवदानगणैर्यज्यतइत्यनेकादृष्टकल्पनाभयात्पशुशब्देनावदानगणं यागप्रत्यासत्तेर्लक्षयित्वा तत्परिच्छेदार्था सप्तदशसंख्या विधास्यतइति मन्यते। नैतदेवं लक्षणाकारणाभावात्। न ह्यसति विरोधे लक्षणा युक्ता तेनैतत्संकटमापद्यते। सप्तदश पशवः कर्त्तव्याः एकेन चावदानगणेनैकपशुनिष्पन्नेनैको यागः साधयितव्य इति। न चैतत्कथं चिदनुष्ठानं(२) शक्यम्। अथान्यत्रापि श्रुता संख्यान्यत्रापि नीयते ततो ऽपूर्वप्रत्यासन्नतरेषु वरं यागेष्वेव कल्पिता। न चाविरोधसंभवात्किं चिदपि चोदकस्य बाधनीयमित्युक्तम्। प्रमाणवशाच्चानेकादृष्टकल्पनापि निर्दोषा। कृत्स्नवाक्यगमनिकार्थं शङ्काभिप्रायाद्युपन्यासः। एतदुक्तं भवति। ये सप्तदशपर्णादिभेदभिन्नाः पशवस्तेषां कश्चित्प्राजापत्यः कर्त्तव्य इति तत्राह। ते हि श्यामास्तूपराः(१) श्रूयन्ते तस्मात्सप्तदश यागा इति। प्रयोजनं यद्यपि पूर्वपक्षवादिनो नाभिप्रेतं तथाप्येकस्यैव साक्षाद्यागसाधनत्वमितरे तत्संख्यासंपादनार्थमुपादीयन्ते इत्येकस्माद-

---

(१) संस्कृतेनेत्यधिकः २ पु॰ पाठः।

(२) अनुष्ठातुमिति २ पु॰ पाठः।

(३) एकरूपा इत्यधिकं पु २ पाठः।

वदातव्यम्। तद्विनाशे चेतरेऽप्यावर्त्तेरन्। अथ वा ऽऽहुतेषु सं-
स्कारेषु य एव नष्टस्तत्रैव समस्तानामावृत्तिः। ननु च यथैव
सप्तदशसु यागेषु सह क्रियमाणेषु एकविनाशे सत्यपवर्गेण तु
यस्मिन्नवच्छेद इत्यनेन न्यायेनेतरेषु प्रतीक्ष्यमाणेषु स एवाव-
र्त्तते तथैव द्रव्यसाहित्येऽपि स्यात्। नैतदेवं, तथाहि सप्तदशसं-
ख्यैकार्थसमवायि व्यासङ्गि यागसाधनत्वमिति तादृशस्यैवोपा-
करणादिभिर्भवितव्यम्। तत्र यदेव द्रव्यं नष्टं तेनैव विना यथा-
श्रुतसाधनविनाशो जात इति सर्वे संस्कारास्तिष्ठत्स्वपि द्रव्येषु
साधनात्प्रच्युता इति पुनरादित एव कर्त्तव्याः। तथा यस्या-
प्यभिनवानीतस्य ते क्रियन्ते तस्यापि ते साधनभूतस्य श्रुताः।
न च सप्तदशत्वेन विनास्य साधनत्वमस्तीति तत्सिद्धये ऽवश्यमि-
तरे ऽप्यपेक्षितव्या इति। सिद्धान्ते त्वन्योन्यनिरपेक्षसाधनत्वश-
क्तियुक्तानां सहप्रयोगमात्रं क्रियत इत्युपपन्ना तन्मात्रावृत्तिः।
नन्वेवं सति पूर्वपक्षन्यायेन स्तोत्रशस्त्रेषु तां चतुर्भिरादत्त इ-
त्यादिषु चैकमन्त्रविनाशे समस्तावृत्तिः प्राप्नोति। न, तत्र
प्रत्येकं साधनत्वे सति वचनेन समुच्चयाश्रयणात्। यत्कुर्वाणा
हि ते मन्त्राः स्तोत्रादीनि साधयन्ति तत्रैषां प्रत्येकाकाङ्क्षानि-
वर्त्तनसामर्थ्यम्। अन्यथा ह्येकमन्त्रतैव स्यात्। भिन्नैरेव च
प्रात्यात्मिकैर्मन्त्रकार्यैः संहत्य कार्यान्तरमारभ्यते न मन्त्रेषु
व्यासङ्गि साधनत्वम्। पशूनां तु व्यासङ्गीत्युक्तम्। मन्त्रका-
र्याणां तर्हि संहत्यकारित्वादेकविनाशे समस्तावृत्तिः स्यात्।
नैतदस्ति साधनविनाशव्यतिरेकेण कार्यविनाशाभावात्। सा-
धनेष्वेव पुरुषस्य व्यापार इति तद्विनाशानुरोधेनैवानुष्ठानमि-
ति विशेषः॥

## संज्ञा चोत्पत्तिसंयोगात्॥ २२॥

बहुविचारत्वाद् गुणप्रकरणभेदावुपेक्ष्य संज्ञा तावदुदाह्रि-
यते। तत्राथैष ज्योतिरित्यादिष्वथशब्दैषशब्दयोगपूर्वप्रकृतापे-
क्षत्वात्प्रकृतत्वान्यप्रकृतप्रक्रियाकल्पनदौर्बल्यादेकस्यापि च दा-
क्षायणयज्ञादिवद्वक्ष्यमाणेन गुणयोगेनानेकनामधेयत्वसिद्धेः।
न च गुणफलसंबन्धपरे वाक्ये सति कर्मान्तरं कर्मानुसारि चा-
पूर्वं तत्सिद्ध्यर्थानि चात्यन्ताश्रुतेतिकर्तव्यतादीनि कल्पितानि
भविष्यन्ति। कथंभावापेक्षया च ज्योतिष्टोमः सहस्रदक्षिणादि
गृह्णन् वारितो भविष्यति। न च कर्मान्तरविधावथशब्देन पू-
र्वापेक्षेण किं चित्फलमस्ति। न हि क्रतुः क्रत्वन्तरमपेक्षते।
न च क्रतूनां क्रमविवक्षेति वक्ष्यामः। तेन क्रमार्थमपि नाथ-
शब्दश्रवणम्। न च संज्ञा भावनां ब्रवीति। नापि धात्वर्थो यज-
त्यादिवत्तदुपश्लिष्टः येन तद्भेदबुद्धिः स्यात्। न चेयं विधात्री
श्रुतिर्येन विहिते कर्मान्तरे पुरुषं प्रवर्तयेत्। न चाप्रवर्तिते
पुरुषे भेदः प्रतीतोऽपि ग्रहैकत्ववद्विवक्ष्यते। यस्त्वत्र विधाय-
कः स गुणाद्याक्षेपान्न कर्मस्वरूपे निपतति। न चेदसावाश्रि-
प्तस्ततोऽभ्यासादेव भेदः स्यात् न संज्ञातः। फलसंबन्धोऽपि
च संनिधौ त्वविभागादित्यनेन न्यायेन न कर्मान्तरबुद्धिं क-
रोति। यद्वा दधिगोदोहनादिवत्प्रकृतकर्माश्रयात्सहस्रदक्षि-
णादेर्गुणादेवैतत्फलमित्यध्यवसानाद्कर्मान्तरत्वम्। ज्योतिरा-
दिषु त्वयमपरो विशेषः यत् ज्योतिष्टोमनामैकदेशत्वेन तद्बु-
द्ध्यनपायः। तथा वसन्ते वसन्ते ज्योतिषेति तत्र तत्र प्रयोगो
दृश्यते। तस्माच्छब्दान्तराभ्याससंख्यापूर्वकर्मायोग्यगुणप्रकर-

णान्तराणामभावादभेद इति प्राप्ते ऽभिधीयते ॥

अनुक्ते कर्मशब्दे या संज्ञा पूर्वं प्रवर्त्तते ।
न वस्त्वन्तरबुद्धेः सा कथं चिदपनीयते ॥

या ह्युत्पन्ने पूर्वोच्चारिते आख्यातशब्दे संज्ञा प्रवर्त्तते सा पूर्वमेवाख्यातेन भेदाभेदयोरन्यतरत्र निश्चये कृते पश्चात्प्रवर्त्तमाना न भिन्द्यात् । इयं पुनरुत्पत्स्यमानसंयुक्ता संख्यावच्च पृथक्त्वनिवेशिनी । कथम । सर्वत्रैव तावदनेकार्थानेकशब्दयोरन्याय्यत्वादर्थान्तरदर्शनात्संज्ञान्तरमपेक्षते संज्ञान्तरदर्शनाच्चार्थान्तरत्वं, तच्चोभयमपि बलीयसस्तद्बाधकप्रत्यभिज्ञानाद्बाध्यते । यावत्तु तादृग्बाधकविज्ञानं नास्ति तावदनपोदितमौत्सर्गिकं भेदज्ञानमास्ते । तदिह पूर्वप्रस्तुतज्योतिष्टोमविलक्षणमनन्तरम् अथैष गौरिति संज्ञान्तरमुच्चार्यमाणमेव पूर्वसंबन्धानुभवाद्दते तत्र बुद्धिमनादधदात्मानुरञ्जितप्रत्याय्यार्थान्तरबुद्धिं करोति । तत्र प्रागूर्ध्वं वा संज्ञी स्यादित्यन्विष्यमाणे यावन्तः प्रागुच्चारिता यजतयस्ते सर्वे ज्योतिष्टोमबुद्धावविच्छिन्नायां प्रवृत्तत्वात्तद्विषयत्वेनावधारिता नार्थान्तरत्वं संज्ञान्तरभाक्त्वं वा लभन्ते । यस्तु प्रस्तूयमानः स यद्यपि फलगुणोपबन्धादन्यत्र व्यापृते विधायके तद्वशेन न भिद्यते तथाप्यसंबद्धपदव्यवायन्यायेन गोशब्दे पूर्वत्रानिविशमाने तद्बुद्धावननुषज्यमानायां प्रकरणविच्छेदे ज्ञाते ऽर्थान्तरकलुषितायां च बुद्धौ निपतत्संज्ञान्तरावरुद्धं च ज्योतिष्टोमं गन्तुमशक्नुवन्विच्छिन्नानुसंधानादर्थान्तरे वर्त्तते । तथा हि ॥

संज्ञानदीव्यवच्छिन्नो यजिः पूर्वं न गच्छति ।
न च पूर्वस्तमित्येवं बलादर्थान्तरं गतः ॥

एवं च सत्यथशब्दः पूर्वप्रकृतापेक्षानन्तर्याद्यसंभवात्क-र्मान्तराधिकारार्थ एवावगम्यते। एषशब्दोपि संनिहितप्रत्यक्ष-वचनः सन्यथैव च पूर्वप्रकृते तद्रूपत्वाद्वर्तते तथोत्तरे प्रस्तूय-मानेपीत्यविशेषः। प्रकृतविच्छेदाप्रकृतप्रक्रिये च संज्ञाश्रुतिव-शादाश्रीयमाणे निर्दोषे। तासामिमाः पुनः श्रुतय इति प्रथमो-च्चारितत्वान्नैव पुनः श्रुतित्वाशङ्कास्तीत्येवं वर्ण्यते। नोत्पन्ने क-र्मणि पुनः श्रूयन्तइत्यभिप्रायः। समस्तमेव च वाक्यमनर्थकं भवेत्। अथैष ज्योतिरिति ह्यनुत्क्वापि शक्यन्ते सहस्रदक्षि-णादयो गुणा विधातुम्। कर्मैकत्वपक्षे च द्वादशशतप्रभृतीनां सहस्रदक्षिणादीनां च तुल्यार्थत्वाद्विकल्पः स्यात्, स चान्या-य्यः। कर्मान्तरत्वे तु नैष दोषः। न च गुणात्फलमवसीयते सं-ज्ञाविच्छिन्नाश्रयभानासंभवात्(१)। प्रस्तूयमानकर्मसंबन्धश्च सं-ज्ञागुणफलादीनां वाक्येन, पूर्वकर्मसंबन्धः प्रकरणेन। तस्मादपि कर्मान्तरम्। न च ज्योतिरादीनां ज्योतिष्टोमावयवत्वम्। न हि कण्वरथन्तरावयवो रथन्तरमिति निश्चीयते। यत्तु वसन्ते ज्योतिषा यजेतेति प्रयोगो दृष्ट इति स प्रमाणान्तरावगमव-शाद्गौण इति द्रष्टव्यम्। न चेह तादृक्प्रमाणान्तरमस्ति येन तद्विषयत्वमवगम्येत। योपि त्रिवृदादिषु ज्योतिःशब्दप्रयो-गः सोपि तत्रैव वाक्ये सामानाधिकरण्यादौपचारिक इति न सर्वत्र लभ्यते। तथा हि॥

सिंहशब्दः क चिद्गौणो माणवादौ निरूपितः।
नारण्ये श्रूयमाणोपि तदर्थः परिगृह्यते॥

तस्मान्मुख्यार्थपरित्यागहेतुका संज्ञेति सिद्धम्॥

---

(१) आभासंभवादिति २ पु० पाठः।

## गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् ॥ २३ ॥

अतः परं प्राक् प्रकरणभेदाद् गुणनिमित्तो भेदाभेदविचारो वर्त्तिष्यते। चातुर्मास्येषु वैश्वदेवे पर्वणि वैश्वदेव्यामिक्षेति द्रव्यदेवतासंयोगानुमितं यागं विधायोच्यते वाजिभ्यो वाजिनमिति। तत्र संदेहः। किं तस्मिन्नेव कर्मणि गुणविधिः उतानेनापि द्रव्यदेवतासंयोगेन यागान्तरं कल्प्यते। तत्रोभयमपि द्रव्यदेवतं पूर्वत्र विधीयत इति पक्षः संभवन्नापि नोपन्यस्तः। प्रमाणान्तरप्राप्ते कर्मण्यनेकगुणविधानस्य पौर्णमास्यधिकरणे निराकृतत्वात्। तेन वाजिनमेव केवलं किं पूर्वस्मिन्कर्मणि तया च देवतया संबध्यते, उत देवतान्तरेण यागान्तरेण चापूर्वेण संबध्यत इति। किं प्राप्तम् पूर्वत्रैव वाजिनगुणविधानमिति। कुतः॥

अनन्तरोपदिष्टेन वाजेनान्नेन वाजिनः।
विश्वे देवाः प्रतीयन्ते तस्य कर्मैव वाजिनम्॥

वाजिनो नाम केचन नैव देवताविशेषाः प्रसिद्धाः। न चाप्रसिद्धाः पदार्था वाक्यार्थं निष्पादयन्ति। सर्वत्र समुदायप्रसिद्धावलभ्यमानायामवयवप्रसिद्धिर्गृह्यते। तदिह वैश्वदेव्यामिक्षेत्यनेन वाक्येनामिक्षावत्तया वाजिनो विश्वे देवाः कल्पिताः। ते च वाजिनसंयोगेनावगम्यमाना न शक्याः परित्यक्तुम्। ते च तेन पूर्वानुमितेन यागेनानुरक्तास्तत्र वाजिनसंयोगान्यथानुपपत्त्या यागे कल्प्यमाने वाजिपदोपात्तयागातिक्रमकारणाभावात् तत्सद्भावे चान्यविषयार्थापत्त्यनुत्थानात्स एव यागः तद्देवा-

पूर्वं सैव देवतेति निश्चयात् न व्यतिरिक्तकल्पनं लभ्यते। तस्मा-
त्तत्रैव कर्मण्यामिक्षावाजिनयोर्विकल्पः समुच्चयो वा। सत्यपि
चोत्पत्तिवाक्यशिष्टत्वे निष्कृष्य यागं गुणान्तरं विधास्यते। य-
द्यपि च द्रव्यदेवतासंयोगानुमितत्वादसौ न निष्कृष्टः श्रुतस्त-
थापि क्रियात्मनास्त्येवानुमानिकी व्यतिरेकबुद्धिः। यागपदमेव
वात्रानुमीयते। तदामिक्षापरित्यागेऽपि न विनश्यति वाजि-
शब्दोऽपि च तदनुमितयागप्रतिपत्त्यर्थमेवोच्चार्यते। न हि तन्नि-
रपेक्षो वाजिवाजिनसंबन्धोऽवकल्पते। कारकाणां परस्पर-
संबन्धाभावात्। तस्मान्न कर्मान्तरमिति। अत्राभिधीयते॥

गुणान्तरावरुद्धत्वात्पूर्वकर्मण्यसंभवात्।
क्रियान्तरमतिं कुर्यादात्मसंगतये गुणः॥

अपूर्वकर्मान्तरसंयोगानर्हो वा गुणः कर्मान्तरं कल्पयति।
वाक्ययोः समत्वादितरेतरनिरपेक्षत्वात्। उभौ हि द्रव्यदेव-
तासंयोगावात्मविरोधेनान्योन्यावकाशमप्रयच्छन्तौ पृथक्कर्मणी
विधत्तः। सत्यं पूर्वत्रासंभवन्गुणोऽन्यत्कल्पयति। कथं नु पूर्व-
कर्मणा तद्देवतया वा वाजिनं न संबध्यते। तत्कार्यवर्तिगुणा-
वरोधात्। कथं न समुच्चयः। एकार्थास्तु विकल्पेरन्निति हि
स्थास्यत्येतत्। विकल्प एवास्त्विति चेत्। नातुल्यबलत्वात्। तद्द-
र्शयति श्रुत्या विश्वेषां देवानां तदुपात्तस्य च कर्मण आमि-
क्षासंबन्धः वाजिनसंबन्धस्तु वाक्येन। एवंचैव तावत्॥

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन चेष्यते।
देवतासंगतिस्तत्र दुर्बलं च परं परम्॥

आह(१)। मन्त्रस्य तावदविधायकत्वात् लिङ्गकल्पितो दै-

(१) आहेति २ पु० नास्ति।

वैल्यं भवेत् चतुर्थीतद्धितयोस्तु को विशेष इति वक्तव्यम्। तदु-च्यते॥

देवतासंगतिः श्रुत्या तद्धितान्तात्प्रतीयते।
चतुर्थ्यन्तात्तु वाक्येन पदद्वयसमीपतः॥

वैश्वदेवीति हि श्रुत्यैव देवतासंबन्धः प्रतीतः(१)। इतरत्र तु वाजिभ्यो वाजिनमिति पदद्वयसामीप्याद्गम्यते। नन्विहाप्या-मिक्षापदसंनिधानवशेनैव द्रव्यदेवतासंबन्धः प्रतीयत इति तु-ल्यं वाक्यगम्यत्वं भवेत्। अथ वैश्वदेवीति श्रुत्या देवतात्वं वा-क्येन द्रव्यसंबन्धः स इहाप्यविशिष्टः। चतुर्थीश्रुत्या देवतात्वेऽ-भिहिते वाक्येन द्रव्यसंगतिमात्रकरणात्। अथ द्रव्यमात्रसं-बन्धे तद्धितान्तेनैव कृते विशेषमात्रमामिक्षापदसन्निधेर्भविष्य-तीत्युच्यते। तदप्यविशिष्टमितरत्रापि। वाजिभ्य इत्येकपदेनैव संप्रदानं ब्रुवता संप्रदेयादिना तदनुपपत्तेः सामान्याक्षेपे स-ति वाजिनपदसंनिधानेन विशेषमात्रप्रतीतेः। अपि च भवतु नाम तद्धितश्रुतेर्द्रव्यमात्रसंबन्धः। तत्तु द्रव्यमात्रं वाजिनेप्यवि-[illegible]मिति न विरुध्यते। विशेषयोस्त्वामिक्षावाजिनयोर्विरोधः। तयोश्चोभयत्र वाक्यलभ्यसंबन्धत्वादविशेषः। तेन विकल्पः प्रा-प्नोत्येव। तदुच्यते॥

नैव हि द्रव्यमात्रस्य तद्धितैर्देवतोच्यते।
अस्य शब्दाभिधेयस्य विशेषस्यैव देवता॥

विश्वे देवा देवतास्या इति हि न सर्वनाम्ना द्रव्यसामान्य-मभिधीयते। किं तर्हि सन्निहितो विशेषः स एव व्यवहारक्षमः नानिरूपितं द्रव्यमात्रम्। अतः प्रातिपदिकेन योऽर्थ उपात्तः स

(१) प्रत्यायित इति २ पु० पाठः।

प्रमाणान्तरगम्यस्य द्रव्यविशेषस्य देवतेत्येतत्तद्धितेन श्रुत्यैवो-च्यते । ततश्चान्तर्णीतसंबन्धदेवतोपसर्जनद्रव्यविशेषप्रत्यये प-दान्तरनिरपेक्षेण तद्धितान्तेन पदेन निर्वर्त्तिते कः पुनरसौ द्रव्यविशेषो यस्य तद्धितेन देवतोक्तेत्यन्वेषणायामयमित्यामि-क्षापदेनोपनीयते । तत्र यदा तावत्प्रागेव विशिष्टप्रत्ययात्संब-न्धोऽभिहितः तदा न लक्ष्यमाणो भवति । अथापि प्रकृति-प्रत्यययोः स्वार्थवृत्तयोरेव नैरन्तर्यादनन्तरात्ते संबन्धोऽवगम्यमा-नो भवति तथाप्यत्रैकपदस्थत्वात्पदद्वयसंनिधिगम्याद्बलीया-न्विज्ञायमानः श्रौत इत्युच्यते । तेनैतौ द्वौ संबन्धावेको द्रव्य-देवतासंबन्धोऽपरो विशेषणविशेष्यभावः । तत्र पूर्वः श्रौतः उत्त-रो वाक्यलक्षण इति विशेषः । अतश्च नैवात्र नीलोत्पलादिव-दर्थद्वारं वैश्वदेव्यामिक्षाशब्दयोर्विशेषणविशेष्यत्वं, किं तर्हि ॥

आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः ।
आमिक्षापदसांनिध्यात्तस्यैव विषयार्पणम् ॥

नैवात्र तद्धितान्तेनैकोऽर्थोऽभिहितः । आमिक्षापदेनान्यः पश्चा-त्तयोर्विशेषणविशेष्यता, तद्धितान्तवाच्यस्य प्रथमप्रतीतेः । किं त-र्हि तद्धितान्तस्यानुपयुक्ताभिधानशक्तेरेव प्रतीक्षमाणस्योपपदेन विषयदानमात्रं क्रियते । तेनामिक्षापदसन्निधिवलाद्वैश्वदेवीश-ब्द एव तामभिधत्ते । न चेदानीमामिक्षापदस्यानुवादत्वं, तेन विना तद्धितान्तस्य तद्विषयत्वाप्रतीतेः । न च वाक्यार्थत्वं, त-द्धितान्तपदार्थस्य पृथगप्रसिद्धेः । न हि द्वौ स्वतन्त्रौ पदार्थाव-गृहीत्वा वाक्यार्थः प्रतीयते तेनाभिधेयोपनयनमात्रकारित्वा-न्न तद्धितश्रुतेरामिक्षापदेनार्थविप्रकर्षः क्रियते । तथा चाह ।

श्रुत्यैवोपपदस्यार्थः सर्वत्राभिधीयते ।

तदर्थस्तद्धितेनैवं चयाणामेकवाच्यता ॥

तेन यैवामिक्षा सैव देवतासंबन्धं यास्यतीत्येवमुक्ता सती वैश्वदेवीशब्देनोच्यते । तेन शब्दयोरेवाच सामानाधिकरण्यं नार्थयोः । इतरच्च तु ॥

न प्रातिपदिकेनोक्तं न विभक्त्या हविः स्वतः ।
न चास्य देवतायोग इति वाक्यात्प्रतीयते ॥

वाजिभ्य इति तु नाच प्रातिपदिकेन विभक्त्या चोभाभ्यां वा द्रव्यसामान्यविशेषतत्संबन्धानामन्यतमदप्यभिधीयते । किं तर्हि प्रातिपदिकार्थः संप्रदानमित्येतावन्मात्रमित्युक्तम् । तच्च न कथं चिद् द्रव्यसंबन्धः पदेन्तर्गत इत्यवश्यं वाक्येनैव वाजिनपदसामीप्यात् प्रत्याययितव्यः । अपि च ।

यथैवास्यपदार्थोऽपि(१) तद्धितेन्तर्गतः स्मृतः ।
न संप्रदानमस्येति चतुर्थ्येवं विधीयते ॥

सास्य देवतेत्यस्यपदार्थे देवतातद्धितो विधीयते नत्वेवं तत्संप्रदानमस्येति चतुर्थी विधीयते, येनास्य पदार्थोऽप्युपादीयेत । किं तर्हि संप्रदानमात्रमेव तदभिधेयत्वेनोक्तं, [illegible]विरोधः । [illegible]यते । तेन त्वन्यथानुपपद्यमानेन संप्रदेयविषयम् आकाङ्क्ष्यमाणं च केवलमुत्पाद्यते । न चैतावता ऽभिधेयत्वं भवति सर्ववाक्यार्थानां पदार्थत्वप्रसङ्गात् । आकाङ्क्षया त्वेतावत्क्रियते । येन पदान्तरोच्चारणे सति संबन्धो जायते । निराकाङ्क्षत्वे पुनः सोऽपि न स्यात् । तेन यद्यपि चतुर्थीश्रुत्या देवतात्वमुक्तं तथापि द्रव्यसंबन्धो वाक्येनैव । तच्च चास्माकं विवाद इति तु [illegible]लो वाजिनसंबन्धः । किं च ।

(१) अन्यपदार्थोपीति पु० २ पाठः ।

श्रुत्यर्थः सन्निकृष्टत्वं वाक्यार्थो विप्रकृष्टता।
विप्रकृष्टप्रकारोऽतः सर्व एव प्रपञ्च्यते॥

देवप्रकारमामिक्षासंबन्धस्य सन्निकर्षलक्षणं श्रौतत्वम्। वाजिभ्यसंबन्धे च विप्रकर्षाद्वाक्यीयत्वं, तद्यथा। यद्यपि तावद् द्रव्यविशेषस्य तद्धितो न ब्रूयाद्देवतात्वं तथापि सामान्यस्य तावद् ब्रवीति न चतुर्थ्यन्तेन सामान्यमप्युच्यतइति विशेषः। यत्तु सामान्यं वाजिनेऽप्यविरुद्धमिति तदयुक्तम्। वैश्वदेवीति हि स्त्रीप्रत्ययेन समानपदगतेनैव स्त्रीद्रव्यं किमपि सन्निहितमित्यवधार्यते। न च वाजिनस्य स्त्रीत्वं सन्निधिर्वास्तीति अनाश्रयणम्। अपि च।

वाजिभ्यो वाजिनं कुर्यादिति नैवास्ति संगतिः।
तत्सिद्धयेऽवश्यं दानाध्याहारकल्पना॥

कर्त्तव्यतावचनमामिक्षावाक्येऽप्यध्याहारात्प्रयोगवचनाद्वा लभ्यमिति न पर्यनुयुज्यते। वाजिभ्यो वाजिनमिति तु ददातिमनध्याहृत्य न शक्यःसंबन्धः प्रत्येतुं यथा वैश्वदेव्यामिक्षेति। कुतः।

नाम्नां हि द्विधैव संबन्धः सर्ववाक्येष्ववस्थितः।
सामानाधिकरण्येन षष्ठ्या वा प्रतिपाद्यते॥

न चात्र सामानाधिकरण्यं षष्ठीं च(१)पश्यामः। न च वाजिभ्य इति कारकविभक्तिः क्रियापदादन्येन संबध्यते न चेह तदुपात्तम्। तथाध्याहारकल्पनादेको विप्रकर्षः। अपदसंबन्धगौरवादपरः। इतरत्रापि यजिकल्पनादविशेष इति चेत्। न, तस्य संबन्धोत्तरकालानुमेयत्वात्, वैश्वदेव्यामिक्षेति हि निष्पन्ने संबन्धे

(१) चेति २ पु० पाठः।

यजिरनुमीयते न तदधीना संबन्धप्रतीतिः । तव तु पर
त्वापादनासंभवात्तु च भविष्यत्यर्थसंबन्धार्थम्, आदि...
व्यदेवतापदैकवाक्यत्वसिद्धये ददातिरिति विशेषः । व...
च ददातौ कारकयोः परस्परसंबन्धाभावात्तेन तावत्सम्ब...
न्धः । तत एकार्थत्वात्परस्परनियम इति विप्रकृष्टता । न त्वामि-
क्षायां तद्वत्किंचिदिति सन्निकर्षः । सत्यपि च वाजिवाजिन-
योः साक्षात्संबन्धे वैयधिकरण्याद्विप्रकृष्टत्वम् । वैश्वदेव्यामिक्षे-
ति तु सामानाधिकरण्यात्सन्निकृष्टता । तथा च वक्ष्यति सम-
र्थतराणि हि समानविभक्तीनि भवन्ति दुर्बलो विविभक्तिरि-
ति । किं च ।

संप्रदानत्वमात्रं च चतुर्थी वाजिनां वदेत् ।
देवता लक्ष्यमाणा तु पुनर्दूरेण वाजिने ॥

न हि तद्धितवद्देवतायां चतुर्थ्युत्पत्तिः स्मर्यते । क्व तर्हि, संप्र-
दाने । न च संप्रदानस्यैव देवतात्वं, मा भूद्धिरण्यमात्रेयाय द-
दातीत्यत्रात्रेयो देवता । यदि च देवता संप्रदानं स्यात्ततो या-
गदानयोरभेद एव स्यात् । प्रतिग्रहे व्यापृतं च कारकं संप्रदानं
भवति न च देवतायाः प्रतिग्रहीतृत्वं संभवति । तेनावश्यं यः
संप्रदानत्वात्प्राग्भावी तदुद्देशः स चतुर्थ्या लक्षयितव्यः । यद्वा
परस्वत्वापादनसंबन्धोत्तरकालभाव्यैश्वर्यं तादात्म्यप्रसिद्धेर्दे-
वतात्वस्य । यद्यप्यनिराकरणात्मकसंप्रदानमेव देवतेत्यभ्युपग-
मस्तथापि सामान्येन व्यभिचारिविशेषलक्षणाद्विप्रकृष्टत्वम् ।
अपि च ।

चतुर्थीपञ्चमीरूपसंदेहाद्विप्रकृष्टता ।
तद्धितस्य त्वसंदेहान्न बुद्धिर्विप्रकृष्यते ॥

वाजिभ्य इति रूपसामान्यात्प्रसक्तं षष्ठ्यावत्यन्वमीत्वमपनीय चतुर्थीत्वं साध्यते तावन्मतिविक्षेपः । ननु तद्धितेष्वनेकापत्याद्यर्थसंदेहात्तुल्यमेतत् । विषम उपन्यासः । शब्दसंदेहो मयोपन्यस्तः त्वया ऽर्थसंदेहः । सर्वथा तावत्तद्धितत्वमसंदिग्धम् । अर्थः पुनर्योग्यत्वादितरासंभवेन देवतात्मको निर्णीयते भवतस्तु निर्णीते ऽपि शब्दे चतुर्थ्यर्थानेकत्वादुपपदकारकलक्षणासंदेहादस्त्येव विप्रकर्षः । तेनार्थसंदेह उभयोः समत्वान्नैकस्योच्यते शब्दसंदेहस्त्वसाधारणत्वाच्चोदितः । किं च ॥

आमिक्षोत्पद्यमानेन कर्मणा सह युज्यते ।
ततो वाक्यान्तरोपात्तमुत्पन्नेन तु वाजिनम् ॥

यथा चोत्पत्तिशिष्टस्य बलीयस्त्वं न च क्रियामात्रं निष्कृष्य गुणान्तरं विधातुं शक्यते तथोक्तं चित्राधिकरणे वैश्वदेवाधिकरणे च । वैश्वदेवाधिकरणन्यायेन च प्रकरणमपेक्षितव्यमपरं वाजिनवाक्येन । कुतः ।

द्रव्यदेवतसंबन्धो(१) यागमात्रमपेक्षते ।
आमिक्षायाग एवेति तत्र प्रकरणाद्भवेत् ॥

वाजिनं हि विना यागेन वाजिभिर्न संबध्यतइति किं चिद्यागमपेक्षते । तत्र यदामिक्षायागस्यैव तदप्यङ्गमिति कल्प्यते तत्प्रकरणात् । ततश्च यद्यपि वाक्येनैवामिक्षायागे विश्वे देवा विधीयन्ते तथाप्यन्यनिरपेक्षविहितत्वादामिक्षायाः प्रकरणसापेक्षवाक्यविहिताद्वाजिनाद्बलीयस्त्वं भवेदिति विशेषः । प्रकरणानपेक्षयागसंबन्धे चान्येषामिच्छाप्रतीतेरपूर्वयागः संबन्धी भवतीति भेदः । न चैवमादीनामनुपात्तपुरुषव्यापाराणामननुमि-

(१) संयोग इति २ पु॰ पाठः ।

ते यागे वाक्यान्तरापेक्षास्तीत्यनुक्तमाग्नेयादिषु ।

विश्वे देवाश्च रूढ्यैव संबध्यन्ते पयस्यया ।
वाजिनेन तु संबन्धो भवेदवयवानुगः ॥

वाजिन इति ह्यवयवप्रसिद्ध्या विश्वेदेवाः प्रत्याय्यन्ते । वाक्यार्थत्वाच्चावयवार्थौ समुच्चित्य संबन्धं कल्पयित्वा सा भवन्ती श्रुतिमात्रोपनिपातलभ्यायाः समुदायप्रसिद्धेर्दुर्बला भवतीति दुर्बलतरः संयोगो वाजिनस्य ।

वाजिशब्दोपि वा ऽश्वादौ सुनिरूढः स्वभावतः ।
क्लेशेनैव विना कार्याद्विश्वदेवेषु(१) वर्त्तते ॥

देवतात्वं नाम यस्यैव शब्देनोक्तं तस्यैव योग्यस्यायोगस्य वा भवतीति न जातिनिमित्तं, येनायं वाजिशब्दो बलादन्यत्र नीयेत । अतश्च वाजिशब्दोश्वानां देवतात्वं वदन्विना कार्येण दुर्बलया ऽवयवप्रसिद्ध्या विश्वदेवेषु कल्पतइति विप्रकर्षः ।

सत्यप्यवयवार्थे च वाजिन्यन्यापि देवता ।
पुरोडाशादिनेत्येवं क्लेशात्प्रकृतनिश्चयः ॥

सर्वे ह्यग्न्यादयः पुरोडाशादिभिरन्नैर्वाजिनो विज्ञायन्ते । तत्रामिक्षायां तावदन्नशब्दः प्रयुक्तो न पुरोडाशादावित्येकः क्लेशः । पुनरपि चामिक्षामात्रग्रहणे सति वैश्वदेव्यामिक्षयैव तद्वतां ग्रहणमित्यपरः । ततश्च स्वरसेन श्रुतिरन्यत्रापि वर्त्तमाना सती प्रकरणेनैव विशेषे स्थापयितव्या, न च तत्र किंचिन्निमित्तमस्ति । गुणभावेनोपादीयमानत्वाद्देवतायाः । संस्कार्यत्वे च प्रोक्षितप्रोक्षतीत्यादिष्विव कथंचिदपूर्वसाधनलक्षणाया(२) प्रकृ-

(१) विश्वेदेवेष्विति २ पु० पाठः । एवमग्रेपि ।
(२) लक्षणायामिति २ पु० पाठः ।

तग्रहणं भवेत्, न चास्य तदस्ति । विनापि तेन कर्मणः प्रयोजनवत्त्वोपपत्तेः । कामं वाजिनस्यैव प्रतिपत्तिः संस्कारो भवेत्, न देवतायाः । प्रकृतग्रहणे चाग्न्यादीनां सद्भावादनवधारणम् । अथ विश्वदेवेषु सर्वे संगृहीता भविष्यन्तीति तेषां ग्रहणम् । तदयुक्तम् । सर्वसंग्रहस्याप्रमाणकत्वात् । बहुवचनश्रुत्या सर्वग्रहणमिति चेत् । न, तस्य त्रिष्वेव चरितार्थत्वात् । न, त्रिष्ववधारणज्ञानमिति चेत् । न सख्यं चापूर्वचोदनाल्लोकवदित्यवधारणहेतुसद्भावात् । तस्मान्न विश्वदेवग्रहणे किं चित्प्रमाणम् । साकाङ्क्षा च देवता द्रव्येण संबध्येत सा चात्र वाजिशब्देन द्रव्यवत्येवो(१)पादीयमाना निराकाङ्क्षैव प्रत्यायितेति न द्रव्यान्तरसंबन्धं क्षमते, तस्मादतुल्यवत्त्वम् । किं च ॥

श्रुत्यैव समवायित्वं देवतानां स्वकर्मसु ।
विश्वदेवश्रुतिस्तच्च वाजिशब्देन दुर्लभा ॥

यदि हि वाजिनयागेपि विश्वदेवा(२)एव देवतात्वेनाभ्युपगम्यन्ते ततो ऽवश्यं निगमस्थानेषु विश्वेदेवश्रुतिरेवोच्चारणीया । सा चात्र विधिशब्देनुच्चारितत्वादशक्या लब्धुम् । तत्रैवं क्लेशेन लभ्येत वाजिशब्दः कं चिदर्थं वदति सोपि स्वरूपासमवायाद्विश्वदेवशब्दं लक्षयति । ततोसौ वाजिनत्यागवेलायामुच्चार्यमाणत्वेन विधीयतइति क्लेशः । तत्रापि चार्थेन शब्दलक्षणायामविशेषात्सर्वे देवा निःशेषा देवा इत्यादयः सर्वे पर्यायाः प्राप्नुवन्तीति विश्वेदेवशब्दो दुर्लभः । न चान्यशब्दोच्चारणे तेषां देवतात्वं भवति । विधिशब्दस्य मन्त्रत्वे भाव इति वक्ष्यति । वा-

(१) द्रव्यवत्त्येवेति २ पु० पाठः ।
(२) विश्वे देवा इति २ पु० पाठः ।

जिशब्दवाच्य पुरुषः शास्त्रेण प्रवर्त्तित इति तदुच्चारणेनैव वाजिनस्य देवता संपादनीया। ततश्च यद्यपि विश्वेदेवार्थ एवेह वाजिशब्देनोच्यमानो देवता भवति इतरत्र विश्वेदेवशब्देन तथापि महेन्द्रन्यायेन विनियोगभेदादिस्पष्टं देवतापृथक्त्वमित्यपरोयं द्रव्यदेवतासंबन्धो विज्ञायते(१) न च प्राप्ते कर्मण्यनेकार्थगुणविधानं संभवतीत्युपपन्नमेतत् गुणस्यापूर्वसंयोगे भेदक इति।

## अगुणे तु कर्म्मशब्दः॥ २४॥(२)

इति प्रत्युदाहरणसूत्रम्॥

अन्येनानवरुद्धे हि गुणो यत्र विधीयते।
तस्मिन्गुणविधिः शक्य इति कर्म न भिद्यते॥

## फलश्रुतेस्तु कर्म स्यात्फलस्य कर्मयोगित्वात्॥ २५॥

अग्निहोत्रं जुहोतीति प्रकृत्य दध्नेन्द्रियकामस्येति श्रूयते तत्र संदेहः। किं पूर्वस्मादिदं कर्मान्तरम्, उत तस्यैव गुणात्फलमिति। द्वयमेव पुरस्तादवस्थितम। अगुणोत्पत्तौ कर्मणि तत्रैव गुणः, सगुणोत्पत्तौ तु प्रकारान्तरेण चाविधीयमानानेकगुणसंगतौ सत्यां कर्मान्तरत्वमिति। तदिहागुणस्य कर्मशब्दोनेकार्थोपादानं च वाक्ये श्रूयते तेन संभवासंभवयोः संदेहः। तत्र एतस्मिन्नर्थमिदं विचारयितव्यम्। किमिह होमात्फलम्, उत

(१) संयोगो विधीयते इति २ पु० पाठः।

(२) इदमादिपूर्णं सूत्रमादर्शपुस्तके यथादृष्टमत्र निवेशितम्।

गुणात्। किमर्थं पुनर्गोदोहनेन पशुकामस्येत्येतद् वृत्त्यन्तरोदाहृतमतिक्रम्यते। भेदाभेदयोरनुपयोगात्। क्रत्वर्थपुरुषार्थविचारे हि तस्यैतस्य वोदाहरणे न कश्चिद्विशेषः स्यात्। इह तु भेदाभेदलक्षणे तदनुगुणमुदाहर्त्तव्यम्। न च प्रणयनस्य देशान्तरप्राप्तिसंस्कारात्मकत्वाद्भेदाभेदयोर्विशेषः। यदि च गोदोहनात्फलं यदि च तद्वतः प्रणयनाद्,भयथापि तादृगेवानुष्ठानम्। इह पुनर्यदि गुणात्फलं ततः सायंप्रातराहुत्योरिव दधि प्रयोक्तव्यम्। अथ होमात्ततो नैयमिकहोमव्यतिरिक्तमनियतकालं दधिसाधनकं होमान्तरं सकृदेव दर्विहोमत्वादपूर्वं क्रियतइत्यस्ति भेदज्ञाने विशेषः। ननु च होमादपि फले सन्निधौ त्वविभागादित्यनेन न्यायेन स्वर्गयावज्जीवयोरिव तदेव कर्म विधीयते। नैतदेवम्॥

यदि नामाविभागः स्यात्कर्मणः प्रत्यभिज्ञया।
ततस्तदेव कर्म स्यादन्यथा भेदनिश्चयः॥

फलनिमित्तादौ हि विधीयमानं कर्मानुत्पन्नं तैः संबन्धुं न शक्नोतीत्यर्थादुत्पत्तिविधित्वमप्यनुभवितुमुपक्रमते। तत्र यदि बलीयस्या वितरिवृत्त्या तादृप्यादप्रच्युतया पूर्वकर्मोत्पत्तिरूपं स्थाप्यते तच्चोत्पादकशक्तिविरोधात्प्रत्यभिज्ञानबलेन तदेव कर्माध्यवसीयतइति न भिद्यते। यदा तु पूर्वकर्मरूपात्किंचिदप्याधिक्यं(१) विज्ञायते तदा नैवाविभागज्ञानमस्तीत्यर्थादुत्पत्तिविधिर्भवन्नन्येन तद्रूपोत्पत्तिसमर्थेन विध्यन्तरेणानिवारितशक्तिः सत्यपरस्यपरत्वेनुपादेयं प्रत्युपादानात्कर्म भिनत्ति। न च दध्नेन्द्रियकामस्य जुहुयादित्यत्रेन्द्रियं प्रत्युपादानाद्दधिवि-

(१) अर्थाधिक्यमिति २ पु० पाठः।

शिष्टहोमान्तरबुद्धिर्भवन्ती केन चित्तद्रूपोत्पत्तिमुपस्थापयता वार्यते । कुतः ॥

होमो हि प्रकृतः शुद्धः स्ववाक्यादवधारितः ।
सोऽस्मिन् दधिविशिष्टत्वादिभागेनैव गम्यते ॥

अग्निहोत्रं जुहोतीति होमः शुद्धः उत्पन्नः, इह च दधिविशिष्टः श्रूयते, तेनाविभागादित्यस्याभेदहेतोरसिद्धत्वाद्भिद्यते । ननु दध्ना जुहोतीत्यस्त्येव दधिविशिष्टो होमः । न, तस्यानुत्पत्तिवाक्यत्वात् । येन तावदसावुत्पादितो न तत्र दधिविशिष्टः यत्र दधिसंबद्धस्तत्र नोत्पादितः । तत्संनिधेर्गुणार्थेन पुनःश्रुतिरिति साधितत्वात् । उत्पत्तिवाक्येनैव च फलवाक्यस्योत्पादकत्वं प्रतिबध्नता कर्मान्तरत्वं निराक्रियते न गुणवाक्येनानुत्पादकत्वादुत्पत्तिवाक्येनैव च सर्वाणि प्राकरणिकानि गुणफलनिमित्तवाक्यानि संबध्यन्ते न परस्परेण । कुतः ॥

तान्युत्पत्तिमपेक्षन्ते सा चाव्यवहिता यतः ।
गुणादीनां त्वसंबन्धाद्व्यवधिः स्यात्परस्परम् ॥

अनुत्पन्नस्य गुणादिभिरसंबन्धादुत्पत्तिः सर्वैरपेक्ष्यते । न तु परस्परापेक्षायां किं चित्कारणमस्ति । सैव च सर्वत्रानुस्यूतत्वादसंबन्धिना ऽव्यवधीयमाना संबध्यते । गुणानां च परार्थत्वादसंबन्धे सत्येकेनापि व्यवहितानामनुषङ्गात् न केन चिदेकवाक्यत्वमस्तीति न दध्नेन्द्रियकामस्येत्यत्र दध्ना जुहोतीत्येतदुपतिष्ठते । वक्ष्यति चैतदेकस्य तूभयत्वे संयोगपृथक्त्वमित्यत्राधिकरणे । तच्चैतस्यात् । सैवोत्पत्तिर्वाक्यान्तरेण दधिमती कल्पिता ऽनुषज्यमाना ऽत्र भेदबुद्धिं निराकरिष्यति । तदनुपपन्नम् । एवं हि सति ॥

वाक्यान्तरेण तत्कर्म यथा दध्ना विशेषितम्।
तण्डुलादिभिरप्येवमिति नैकात्मकं भवेत्॥

उत्पत्तिवाक्ये तावत्केवले निरीक्ष्यमाणे शुद्धहोमावगमाद-प्रत्यभिज्ञानम्। अथ प्राकरणिकगुणवाक्यानुरक्तमालोच्यते तथापि तण्डुलादिद्रव्यविशिष्टत्वान्नैव केवलदधियुक्ते वाक्येऽस्ति प्रत्यभिज्ञानम्। अथ दधिसद्भावमात्रापेक्षिणीन्द्रियकामवाक्ये सत्यपि तण्डुलादीन्यनपेक्षितत्वादसत्तुल्यान्यनाश्रित्य केवलं दधि गृह्यत इति तथा सति तदेवापतितं भवति दध्ना जुहोतीत्येतदेव वाक्यं केवलं गृह्यत इति। निवारितं चैतत्। अपि च॥

दध्यत्र दशमे पक्षे तद्धोमस्य विशेषणम्।
नित्यं चेन्द्रियकामस्य तेनापि न निरूप्यते॥

यद्यपि तावद्दध्यादीनि नित्यं होमे समुच्चीयेरन् तथा सति विचित्रमपि कर्मैकदेशग्रहणेन चोदितमिति कथंचित्कल्प्येत। दध्यादीनां तु वैकल्पिकत्वादेकैकस्यैव दशमे पक्षे होमाङ्गत्वम्। अतश्च दधिवाक्येऽप्यालोच्यमाने(१) पाक्षिकं दधि दृश्यते। नित्यवच्च तदिन्द्रियकामहोमे श्रूयते। तस्मादपि न प्रत्यभिज्ञायते। न च यद्दध्ना(२) जुहुयादित्येवमनुवदितुं शक्यते। फलस्याविधेयत्वात्। एषा ह्यत्र वचनव्यक्तिः। यदीन्द्रियकामस्तदा नित्यं केवलदधिविशिष्टं होमं कुर्यादिति। न चासौ तादृगन्यतः प्राप्त इति भिद्यते। न तु होमरूपमात्रं तावत्प्रतिज्ञातं तत्प्रत्यभिज्ञानाच्चाभेदसिद्धिः॥ यत्तु द्रव्यं

(१) आलोच्यमानमिति २ पु० पाठः।
(२) यदा दध्नेति २ पु० पाठः।

न प्रत्यभिज्ञायते न तत्कर्मभेदकारणम् । तस्मात्तदेव कर्म गु-
णमात्राभ्यधिकं फले विधीयते । नैतदेवम् । कुतः ।

प्राप्ते कर्मण्यनेकार्थविधिः पूर्वं निराकृतः ।
त्वत्पक्षे ऽनेकसंबन्धविधिश्चात्र प्रसज्यते ॥

दधिहोमसंबन्धं होमफलसंबन्धं च विदधद्वाक्यं भिद्यते
तेनावश्यं विशिष्टविधिरभ्युपगन्तव्यः । ततश्च सिद्धं कर्मान्तर-
त्वम् । यथैव चार्थादनियतानेकद्रव्यकत्वे प्राप्ते केवलदधिनि-
यमादेकार्थविधानं, तथैव परस्परानपेक्षैस्तण्डुलादिविधिवा-
क्यैर्वैकल्पिकदशद्रव्यकत्वे कल्पिते तण्डुलादिव्युदासेन के-
वलदधिनियमकरणात् । न ह्यसावेतस्माद्वाक्यादृते कथं चिद-
पि प्राप्तः, तेन होमात्फले भवति कर्मान्तरत्वम् । अतः पूर्वप-
क्षः परिगृह्यते ॥

कर्मशब्दे ऽगुणे ऽप्यत्र कर्म भूयो विधीयते ।
फलं हि श्रुतमेतस्मिन्कर्मतस्तच्च युज्यते ॥

समस्तमेव भावार्थाधिकरणं पूर्वपक्षः । तत्र ह्येतदवस्थि-
तम् । आख्यातशब्दाः फलपदेन संबध्यन्ते न द्रव्यगुणशब्दा इ-
ति । तस्मात्फलस्य कर्मयोगित्वात्फलश्रुतौ सत्यां कर्म विधीयते
न कर्मणि गुणः । कथम् ।

प्राप्तस्तावद्गुणो नैव विधानं पुनरर्हति ।
अप्राप्तविधिपक्षेपि भवेद्व्यर्था फलश्रुतिः ॥

तत्र नामागुणे कर्मशब्दे सति गुणो विधीयते यत्र स गुणो
न प्राप्तो भवति । यत्र चार्थान्तरं न श्रूयते । न चेह द्वयमपि
तदस्ति । दध्नो वाक्यान्तरेणैव प्राप्तत्वात् फलस्य चाभ्यधिकस्यो-
पादानात् । अत आह फलमिह श्रूयते तच्च कर्मणो ऽन्याय्य-

मिति । तत्र किं दृष्टं हि कर्मणः फलमिति प्रश्नस्य द्विधा प्रति-
भासः । एकस्तावन्नेति ब्रूमः । न ह्येतद् दृष्टेनानेन सिध्यतीत्या-
देर्निराकरणपरत्वेन सिद्धान्तच्छायानुसारात्किमित्येतावानेव
प्रश्नः । किमित्येतद् न्याय्यमित्यर्थः । इतर आह । दृष्टं हि क-
र्मणः फलमिति । तस्योत्तरम् नेति ब्रूम इत्यादि । तावत्स्वयमे-
वाशङ्क्य निराकरोति यावत्तस्मान्नैवंजातीयकेष्वेतद्भवतीति ।
तत्र तु कथं तर्हि होमान्न्याय्यं फलमित्ययमैकान्तिकः सिद्धा-
न्तवादिनः प्रश्नः । स चात्मीयवचनोपसंहारादनन्तरं दुःश्लिष्टः
प्रतिभातीत्येषैव ग्रन्थयोजना युक्ततरा । तत्र कर्मणो न्याय्य-
मिति पूर्वपक्षवादिनाऽभिहिते सिद्धान्तवादी दधिपदानर्थक्य-
भयेन भावार्थाधिकरणन्यायासंभवाच्छब्दस्यासामर्थ्यं मन्यमानः
पृच्छति । किं दृष्टं हि कर्मणः फलं कृष्यादित इत्यनेन न्यायेन
सामान्यतो दृष्टेन होमात्फलं मन्यस इति । यद्यपि च चोदना-
लक्षणधर्माभ्युपगमादनुमानादीनामीदृशेष्वर्थेष्वसामर्थ्यं स्था-
पितम् तथापि वेदार्थनिर्णये तेषां कारणत्वानिषेधात्तदर्थनिर्ण-
यार्थमनुमानोपन्यासः । परः पुनर्भावार्थाधिकरणवासितान्तः-
करण आक्षिपन्नाह । मा मे अध्यारोपमेवं दाः । शब्दे सति न
ह्यनुमानं ब्रवीमि । न चैतेन सामान्यतोदृष्टेनास्मदभिमतं सिध्य-
ति । असिद्धानैकान्तिकविरुद्धादिदोषदुष्टत्वादनुमानस्य । क-
थम् । यदि तावद्धोमः फलवान्फलवत्तया दृश्यमानत्वादित्युच्य-
ते ततः प्रतिज्ञातार्थैकदेशत्वादसिद्धत्वम् । अथ कृष्यादीनां फ-
लवत्तया दृश्यमानत्वादिति ततोऽप्यपक्षधर्मत्वम् । अथ विनै-
व पक्षधर्मत्वाद्यदृच्छामात्रेण कल्प्येत ततस्तद् द्रव्येष्वविशिष्टम् ।
अथ सादृश्यद्वारेणोपमया कल्प्येत तच्च सादृश्यं फलवद्भिः

कृष्यादिभिः सह होमस्य क्रियात्मना विद्यते न द्रव्यस्याक्रिया-त्मकत्वात् इति । तत्र द्रव्यस्याप्यस्त्येव किं चित्सादृश्यमिति मनसि कृत्वा यदि प्रत्यासन्नावान्तरसादृश्यापेक्षया तन्निराक्रियते ततः शक्यं प्रत्यासन्नतरापेक्षया होमस्यापि निराकर्तुमिति मन्यमान आह । होमो ऽप्यसदृशः साधनस्वरूपफलभेदात्कृषेः । अथ किं चित्सादृश्यं गृह्यते तत् द्रव्यस्यापि सदनित्यं द्रव्य-वत्कार्यमित्यादिधर्मभेदादस्तीति पूर्वाभिप्रायविवरणम् । अथ द्रव्यादन्यत्सदृशतरमस्तीत्यापेक्षिकत्वात्सादृश्यस्य सुसदृशापेक्षिते विप्रकृष्टं विसदृशमेव भवति तेन क्रियात्वे कृषिहोमवर्त्तिन्यपेक्षिते विप्रकृष्टत्वात्सदनित्यादियुक्तं द्रव्यमसदृशमेवेत्युच्यते तथा सति क्रियान्तरमपि दृष्टार्थभोजनगमनाद्यवान्तरसादृश्यापेक्षया कृषिहोमयोर्विप्रकृष्टत्वादसादृश्यमेवेत्यकारणं स्यात् । आह च ॥

नास्मिन्परमसादृश्यं दृश्यते कृषिहोमयोः ।
किं चित्सादृश्यदृष्टिस्तु द्रव्येप्यस्तीत्यनिश्चयः ॥

न चैतत्सिद्धमित्युपमानेन साधर्म्यमात्रानुमानेन वा सर्वधर्म-प्राप्तिरनुमानोक्तव्याप्यव्यापकभावनिरपेक्षा ऽयुक्ता सर्वपदा-र्थानामेकत्वप्रसङ्गात् । तथा चोक्तम् । न हि देवदत्तस्य श्यामत्वे यज्ञदत्तस्य श्यामत्वं भवितुमर्हति । तथा हि ।

सास्नानुगतिर्दृष्टा गवये सदृशे गवा ।
[प्रकृ]तेस्य फलादीनि न यान्ति विकृतिं क चित् ॥

[यद्यस्य] कारणभूतं दृष्टं सिद्धे दृष्टान्तधर्मिणि तच्चेत्साध्येपि [यत्रो कारण]भूतमिति गम्यते भवति तत्तस्य साधकमिति । अ[तो वचनात्] [क]ार्यकारणयोरेव गम्यगमकभावो भाष्यकाराभि-

ते इति केचिन्मन्यन्ते । तत्त्वयुक्तम् । अकार्यकारणभूताना-
प्यनित्यत्वकृतकत्वादीनां गम्यगमकभावप्रसिद्धेः । कार्यका-
रणयोरपि च न तथा कारणं गमकं व्यभिचारबहुत्वाद्यथा
कार्यम् । तस्माल्लिङ्गमेव व्याप्यत्वेन दृष्टं सपक्षे व्यापकस्यान्यत्र
साध्यभूतस्य गमकत्वसंभावनया गृह्यमाणं कारक(१)मित्युक्त-
मिति द्रष्टव्यम् । एवं च हेत्वधिकरणे व्याख्यानम् । तथा च
विवृणोति । तस्मात्तद्द्वयमपि साधकमसाधकं वेति विपरी-
क्षितव्यमिति । यदि तर्हि परीक्षितेन च(२) कारणेनाभिहितेन
कार्यमिदमभिधीयते । दध्नेन्द्रियकामस्येत्यत्र वाक्ये यत्कर्म
तत्फलवत्कर्मत्वात् कृष्यादिवत् । कर्मसाध्यं वेदं फलं फल-
त्वाद् व्रीह्यादिवत् इत्येतदनुमायाथ यत्कर्म तत्फलवदिति प्र-
तिसाधनाभिधानेनानैकान्तिकीकरोति । उपरते कर्मणि द्रव्या-
णां तन्त्वादीनां तत्संयोगादीनां च द्रव्यान्तरं पटादि फलं दृष्ट-
मिति । उपरतग्रहणं च कर्मव्यतिरेकप्रदर्शनार्थम् । एवं हि प्र-
ख्याते कदाचिदिहापि कर्मनिमित्तमेव फलं वदेत् । तेन ब्रवी-
ति । इन्द्रियकामवाक्ये दधि फलवद् द्रव्यत्वात्तन्तुवत् । इन्द्रियं
वा द्रव्यं जन्यं फलत्वात्पटादिवत् । अपि च कृषेर्नादृष्टमिति
हेतोर्विरुद्धत्वं वदति । यथैव ह्ययं हेतुः कर्मणः फलवत्त्वं फल-
स्य वा कर्मजन्यत्वं साधयति एवं दृष्टफलत्व(३)मशब्दगम्यफल-
त्वं व्रीह्याद्यन्यतमफलत्वं वा साधयति । तस्मान्नैवंजातीयके
कार्यकारणभावे समस्तहेतुदोषसङ्गादेतद्भवति । क्वचिद् द-

(१) कारणमिति २ पु० पाठः ।

(२) तवेति २ पु० पाठः ।

(३) दृष्टार्थफलत्वमिति २ पु० पाठः ।

ष्टादन्यथाऽदृष्टस्यापि सिद्धिरिति। यद्येतदनुमानं त्वयैव निराकृतं कथं तर्हि होमान्न्याय्यं(१) फलमित्युच्यते। यद्वा इतिकरणान्त एव प्रश्नः। उच्यते। शब्देनावगम्यमेतत्फलमिति भावार्थाधिकरणोपन्यासेन उत्तरम्। तस्माद्धोमात्फलमिति न्याय्यम्। दध्नः फलमिति चान्याय्यमित्यर्थसिद्धं सद्यदुच्यते तत्तुल्यबलवस्त्वनिराकरणार्थम्। कदा चिद्धि द्वयमपि न्याय्यं भवेत्। अपि च दध्युभयमसमर्थं कर्तुमिति। न तावत्कर्मानपेक्षस्य दध्नः कारणत्वमस्ति। येन केवलं फलसंबन्ध्येव स्यात्। अत उभयत्र विधातव्यं, न च तच्छक्यमिति। ननु कम्बलनिर्णेजनवदिति प्रासङ्गिककर्मसंबन्धाभिप्रायेण वस्तुसामर्थ्यनिराकरणार्थं वा। तथा हि। दध्युभयमसमर्थमिति यथाश्रुतगृहीतेन परवचनेन वस्तुसामर्थ्यमेवोक्तमिति दृश्यते। न ब्रूमः एकस्योभयोः प्रयोजनं न युक्तमिति। न वयं वस्तुसामर्थ्यमपक्रमहे, किं तर्हि समर्थेऽपि वस्तुन्यविहितादनुष्ठानादवश्यं दध्युभयार्थत्वेन विधातव्यम्। न चैतदस्ति, अनेकसंबन्धकरणे वाक्यभेदप्रसङ्गात्। सन्निकृष्टासंभवेन विप्रकृष्टोऽर्थो विधीयते। तदिह दधिहोमसंबन्धे संनिकृष्टे दधिफलसंबन्धे च विप्रकृष्टे युगपद्विधीयमाने युगपदेव संभवासंभवावभ्युपेतव्यौ स्याताम्। तस्मादन्यतरपरित्यागे सति तत्प्रसिद्धिर्भवतीति संनिकृष्टवशेन(२) दध्यपि होमेन संबध्यते सोऽपि फलेनेति कर्मयुक्ते सति फले सिद्धं कर्मान्तरत्वमिति॥

---

(१) होमान्नाय्यमिति २ पु० पाठः।

(२) संनिकर्षवशेनेति २ पु० पाठः।

## अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत ॥ २६ ॥

यादृशेषु वाक्येषु धात्वर्थात्फलमिति भावार्थाधिकरणे गतं (१) तैरनुगम्यमेतत् । कथम् ।

यावद्धि विधिसामर्थ्यं धात्वर्थादनपोद्धृतम् ।
तावद्यः फलसंबन्धः स धात्वर्थस्य गम्यते ॥
भवेत्फलश्रुतिर्या तु गुणसंवरिते विधौ ।
सा तद्गतविधिस्पृष्टा तेन यात्येकवाक्यताम् ॥

भावनात्वमेव विधित्वं तादर्थ्यभेदेन तत्र तत्र संक्रामति । तद्यदा धात्वर्थसंक्रान्त्यवस्था फलवतीं भावनामासादयति तदा धात्वर्थमेव करणीकरोति अन्यच्च(२) तदर्थं भवति । तच्चाग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादिषु नाम्नो विधिशक्त्यपहारासमर्थत्वादविहतम् । इह तु दधिपदमशेषनामधेयलक्षणासंस्पर्शादवश्यं विधातव्यं सदुत्तारयति धात्वर्थोपनिपतितं विधित्वम् । अतश्चाकाङ्क्षितधात्वर्थानुवादायां दध्यनुरक्तायां भावनायां फलमुपलभ्यमानं दधिसाधनकमेवावधार्यते न होमसाधनकम् । न ह्यविधीयमानानामर्थानां साधनत्वं संभवति । न च विधेयान्तरोपादाने सत्यनिक्रान्तार्थविधानमवकल्पत इत्युक्तम् । यथा च दध्ना विध्यावेशाच्च होमविधानं तथा फलपदप्रत्यवेक्षणाच्च होमे दधिविधानं, किं तर्हि, फलभावनायां, तस्माद्दध्नः फलमिति । कतमोऽत्र शब्दः पुरुषप्रयत्नस्य

(१) साधितमिति २ पु० पाठः ।
(२) सर्वमित्याधिकं २ पु० पाठः ।

वक्तेति । दधिफलपदयोर्भावनानभिधायकत्वेन साक्षाद्विधिविषयत्वानुपपत्तेराख्यातप्रत्ययापेक्षणे(१)चाश्रितत्वात्प्रयोगस्येत्येवं धात्वर्थत्यागाशङ्कः तत एव फलेन भवितव्यमिति मन्वानस्य प्रश्नः । सिद्धान्तवादी तु प्रत्ययार्थविधित्वं धात्वर्थानुवादत्वं च विभक्तं पश्यन्नाह जुहुयादिति । ननु श्रुत्या होमसंबद्धमेव इति परस्य स्वाभिप्रायविवरणम् । पुरुषप्रयत्नस्य विध्युपेता भावनोच्यते । सत्यं भावार्थाधिकरणन्यायेन श्रुतिबलीयस्त्वादेवमन्यत्राश्रितम् । इह च ये भवदीयं पक्षमाश्रयेरंस्ते श्रुतिमपबाधेरंस्तराम् । कथम् ॥

स्याद्वचर्थविधानं ते लौकार्थविधिसंभवे ।
मत्वर्थश्चोपलक्ष्येत पदत्यागोऽन्यथा भवेत् ॥

लौकार्थविधिसंभवे तावद्विधायको वक्ष्यतरार्थविधानमुपेक्षते । होमस्य च फलभावनाकरणत्वाद्भावयेदिन्द्रियं होमेनेत्येवमवस्थितस्य करणभूतेनैव दध्ना समत्वात्संबन्धे ऽनुपपद्यमाने ऽवश्यं मत्वर्थलक्षणा परिग्रहीतव्या दधिमता होमेनेति । न च तस्यां किं चित्प्रमाणमस्ति । न च दधिशब्दस्यासति प्रवृत्तिनिमित्ते कर्मनामधेयत्वं घटते । सोयमुभयस्माद् भ्रष्टो दधिशब्दो ऽनर्थक एव प्राप्नोति । ततश्च शब्दधर्मसंनिकर्षानुग्रहेण धर्म्येव शब्दः परित्यागाद्बाधित इति बाध्येततरां श्रुतिः । गुणसमभिव्याहारपक्षे तु न कस्य चिद्बाधः । तच्चैतदुच्यते । जुहोतीति शब्दो बाधित इति तत्परिहारार्थमाह अवश्यं जुहुयादिति वक्तव्यम् । कथम् ।

न दधीन्द्रियसंबन्धो भावनाप्रत्ययादिना ।

(१) प्रत्यवेक्षणे इति २ पु० पाठः ।

न चास्योच्चारणं शक्यं केन चिद्धातुना विना ॥

प्रत्ययस्तावदवश्यमेव दधीन्द्रियविशिष्टां भावनां विधातुमुच्चारयितव्यः, स च केवलप्रयोगासंभवाद्धातुव्यतिरिक्तप्रकृत्यनुपपत्तेश्च यतः कुतश्चिद्धातोः पर उच्चारयितव्यः। ततश्च यत्र क्व चन धातावुपादातव्ये प्राप्ते प्रकरणप्राप्तहोमोपादानमङ्गीकृतम्। दधिसंबन्धोऽपि चास्य प्रकरणादेवाश्रयाश्रयिरूपः प्राप्तोऽनुवदिष्यते। यथा च न विभक्तेर्वचनमेवैकं प्रयोजनमिति ग्रहादिषु कारकमात्रप्रतिपत्त्यर्थमुच्चार्यमाणनान्तरीयकत्वादविवक्षितामपि संख्यां प्रत्याययतीति वक्ष्यते तथाऽत्र प्रत्ययानुग्रहार्थमपि धातुरुच्चार्यमाणः संबन्धबलादविवक्षितमपि स्वार्थं प्रत्याययति। न हि तस्यार्थप्रत्यायनमात्रमेवैकं प्रयोजनमिति वक्तव्यम्। ननूच्यमानेऽपि इति प्रत्ययानुग्रहार्थं धातुरुच्चार्यमाणः स्वार्थं प्रत्याययतीति। न चास्य ग्रहैकत्ववदविवक्षाकारणं किं चिदस्ति। तस्माद्यथाभिलषितकेवलकरोत्यर्थासंभवात्समर्थमेतदिति। नैष दोषः। सत्यपि होमसंबन्धे करोत्यर्थानपायात्तावन्मात्रेण प्रयोजनसिद्धिः। यस्तु होमसंबन्धकृतो विशेषो नासौ किं चिदुपकरोति। प्रकारान्तरेण वा भावनां विशेक्ष्यति। नन्वेवं सति स एव दोष इति। अपरित्यज्यमानोपि होमो बलात्करणीभवतीति मन्यते। सिद्धान्तवादी त्वाह। वाक्यान्तरात्मकत्वस्य जुहुयादिति शब्दस्यैतत्सामर्थ्यं येन तवेयं भ्रान्तिर्भवति होम एव करणमिति। निपुणतस्तु पश्यतां यथैव प्रत्ययान्तयोः साध्यसाधनभावयोग्यत्वात्प्रत्याख्यते तथा च दधिपदानुरोधेन साधनांशो, यथा च तत्र प्रतीय-

मानं भावनाविशेषण(१)मंशान्तरे ऽवस्थितमेवमिहापि गुणाश्रयत्वेनावस्थास्यते। यथोक्तं वृत्तिकारेण। होमाश्रितो गुणः फलं साधयिष्यतीति। कः पुनराश्रयाश्रयिसंबन्धो नाम किं केन कथंभावव्यतिरिक्त उताव्यतिरिक्त इति। के चित्तावदाहुः। व्यतिरिक्त एवायमिति। कथम्।

यथैवांशत्रयापेक्षा भावना ऽन्यत्र गम्यते।
तथा गुणविशिष्टायां चतुर्थांशो ऽप्यपेक्ष्यते॥

यत्र धात्वर्थकरणिका भावना चोद्यते तत्रांशत्रयेणैव समाप्यते। यत्र गुणः कारणत्वेन चोद्यते तेन च करणभूतेन फलमुत्पादयितव्यम् नोदासीनेन, तत्रास्य कं चिद्धात्वर्थमकुर्वतः करणत्वानुपपत्तेः कं धात्वर्थं साधयता तेन फलं भावयितव्यमिति चतुर्थमपेक्षान्तरं जायते। यस्य धात्वर्थः साध्यः स एव गुणस्य करणत्वोपजननादाश्रय इत्युच्यते। उत(२) वाक्यभेदप्रसङ्गात्स्वयमाश्रयं दर्शयितमशक्नुवन्ति प्रकरणादग्निहोत्रहोम आश्रयो लभ्यते। तथा लब्धस्य प्रत्ययानुग्रहार्थप्रवृत्तेनाल्लभ्यादिवच्च चोदनालिङ्गभूतेन धातुना ऽनूद्यते। यदेकस्मादपूर्वं तदेतरत्तदर्थमिति च न्यायेन। धात्वर्थो नाम पदार्थानुग्रहार्थो ऽध्यवसीयते। शक्यते त्वत्र न चतुर्थ्यपेक्षास्तीति वक्तुं, करणापेक्षैव ह्येषा प्रवितततरा जाता, धात्वर्थेन हि सा शीघ्रं निवर्त्त्यते। गुणस्य तु क्रियासंबन्धोत्तरकालं करणत्वं निष्पद्यत इति चिरतरेण। तस्मात्त्रिस्र एवापेक्षाः। तेन होमोपजनितकरणत्वे फलवति गुणे ऽवधारिते कथंभावापेक्षायां सत्यामग्निहोत्रेति-

(१) विशेषणत्वमिति २ पु० पाठः।

(२) तत्र वाक्ये ऽ॰यसंब॰धपरे इति २ पु० पाठः।

कर्त्तव्यतैव पूरणीभवतीत्यादिसंस्थाधिकरणविषयः । पर्यवसिते-
धिकरणार्थे प्रसङ्गादभिधीयते । तत्रानयाग्निहोत्रेचेतिकर्त्तव्यत-
येति ॥ केचित्तावदाहुः । अग्निहोत्रमेवेतिकर्त्तव्यतेति । त-
दयुक्तम् । करणव्यतिरिक्तत्वादितिकर्त्तव्यतायाः । होमस्य च
प्रागुक्तेन न्यायेन करणाव्यतिरेकादतो ऽग्निप्रणयनादिकै-
वाग्निहोत्रेतिकर्त्तव्यतेत्युच्यते । कुत एतदिति । कथमधात्वर्थ-
स्येतिकर्त्तव्यतासंबन्ध इत्यभिमानात् । फलसाधनस्य दध्न इति ।
यथैव होमस्य करणत्वादितिकर्त्तव्यतानुग्राह्यत्वं भवति एवं तत
एव कारणाद्दध्नो ऽपीति । अस्याश्चेतिकर्त्तव्यतायाः सन्निधानादि-
ति । संस्थाधिकरणविप्रतिषिद्धसमानविधानत्वाभ्युपगमापत्ते-
श्चोदनालिङ्गस्य चेति । पुनरतिदेशन्यायोपन्यासादसंबद्धत्वम् ।
यदि तावत्सन्निधानात्संबध्यते किं चोदनालिङ्गसद्भावेन । अथ
चोदनालिङ्गसद्भावः प्रमाणं स दूरस्थस्याप्यविशिष्ट इति व्यर्था
सन्निधानवाचोयुक्तिः । अत एवं वक्तव्यम् आश्रयतयोपस्थितेन
होमेनोपकारप्रदानक्षमेणेतिकर्त्तव्यतायाः सन्निधानादतिदेश-
निमित्तस्य च चोदनालिङ्गस्य जुहोत्यर्थस्य दर्शनात् । यस्मा-
देव चायं चोदनालिङ्गत्वेन जुहोत्यर्थः प्रकरणात्प्राप्तो ऽनुवदि-
ष्यते तस्मादस्योत्पत्तेः फलं वा प्रति प्रत्ययो न विधायकः । केन
प्राप्तस्यानुवाद इति चेत् । अत आह न चान्यद्धोमस्योत्पत्तिवा-
क्यं विधायकं नास्तीति । केचित्त्वन्यथा ऽस्य वचनस्यार्थं वर्णय-
न्ति । न चान्यद्दधिफलादिन्द्रियादग्निहोत्रहोमस्य स्वर्गादिफ-
लं नास्ति । स्ववाक्येन प्राप्तत्वादिति । तत्त्वनाशङ्कितप्रस्तुतोपन्या-
सादसंबद्धमिति पूर्वोक्तमेव ज्यायः । तस्मान्न कर्मान्तरं, किं तर्हि
तस्मिन्नेव कर्मणि दध्नः फलं होमस्यानुग्राहकः । अथ वा तेनैव

कारणेन दधिशब्दस्याप्रमादपाठात् केवलाच्च दध्नः फलसिद्-ध्यसंभवादुभयनिरस्कारेण संबन्धादेव फलमुभयोश्च दधिहोम-योस्तादर्थ्यम् । अत्र तु पूर्वोक्तेन न्यायेन दधिहोमसंबन्धकृतो वाक्यस्यास्य चैकवाक्यत्वाभावाद्दधिफलसंबन्धे चानिर्वृत्ते होम-संबन्धः प्राकरणिको नास्तीत्यनेनैव वाक्येन होमसंबन्धं कृत्वा फलं प्रति विधावाश्रीयमाणे ऽनेकार्थविधानाद्वाक्यभेदः स्यात् । अतो दध्न एव फलमित्येषैव व्याख्या युज्यते । तथा च समा-प्तावुपसंहृतं तस्माद्दध्नो होमेन संबध्यमानात्फलमिति । तेन यद्वा वेति(१) विकल्पमात्रप्रदर्शनार्थं द्रष्टव्यम् । अन्ये तु वदन्ति । एक एवायं पक्षः सोपपत्तिक आदित आरभ्योपसंह्रियते । त-स्माद्दध्नः फलम । अतो दधिशब्दस्य विवक्षितत्वादिति च पा-ठः । अथ वेति तु प्रमादलिखितमिति । शक्यपरिहारं त्विद-म् । कथम् । (२)यदैव दध्नेन्द्रियकामस्य भावयेदिति संबध्यते त-दैव करणभूताद्दध्नः फलमित्यवगमात् करणत्वान्यथानुपपत्ति-कारितः क्रियामात्रसंबन्धो ऽवगम्यते शक्तिरूप एव च क्रियाका-रकयोः संबन्ध इति करणविभक्त्यन्तर्गतत्वात्प्रत्ययार्थस्य च प्रा-धान्यात् प्रातिपदिकार्थोपसर्जनः संबन्ध एव फलाय विधीय-ते । तस्मिंस्तु विहिते पूर्ववदेव प्रकरणात्क्रियाविशेषो होमो लभ्यते । तत्र तु द्रव्यदेवतासंबन्धन्यायेन क्रियाकारकसंबन्धस्य फलसंबन्धे वृत्ते कोसौ क्रियाविशेष इत्यपेक्षायां विशेषण-विशेष्यसंबन्धं कर्तुं प्रकरणेन होम उपनीयते । तेनोच्य-ते दधिहोमसंबन्धः फलाय विधीयते इति । ततश्चाथ वेति स-

(१) अथ वेतीति २ पु० पाठः ।
(२) कथमिति २ पु० नास्ति ।

व्यवायात् एव । समाप्त्युपसंहारस्त्वाग्नेयवत् द्रष्टव्यः । अथ वा ऽस्यैव संबध्यमानग्रहणेन दध्युपसर्जनसंबन्धनिर्देश इत्यदोषः । ननु दध्नेति चेन्द्रियकामस्येति च पदद्वयव्यापारा(१)द्वाक्यं भिद्येत । नैष दोषः । कुतः ।

नैव ह्यनेकसंबन्धाद्वाक्यभेदः प्रसज्यते ।

अनेकविधिशक्त्या हि भेदो, नास्ति च सोऽत्र नः ॥

बहवो ऽपि ह्यर्था युगपदेकेन संबध्यन्ते, न च तावता वाक्यं भिद्यते । अनेकविधितो हि वाक्यभेद उक्तः, स चात्र नास्त्येव फलस्याविधेयत्वात् । एषा ह्यत्र वचनव्यक्तिः । यदिन्द्रियं भावयेदित्यनूद्य तद्दध्नेति विधीयते यो हि यदिच्छति स तत्करोतीति चेन्द्रियं भावयितुं स्वरसत एव पुरुषः प्रवर्त्तते । ततश्च तदंशयुक्तां भावनां प्रत्ययो ऽनूद्य करणांशमात्रयुक्तां विधत्ते इत्येकार्थविधानान्न वाक्यभेदः । तस्माद्दधिपदस्यार्थवत्त्वात् गुणात्फलमकर्मान्तरत्वं चेति सिद्धम् ।

## समेषु कर्मयुक्तं स्यात् ॥ २७ ॥

इदानीमस्यापवादार्थमुत्तरमधिकरणमारभ्यते । तत्र विषयं तावद्दर्शयति । त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेतेत्येतमग्निष्टुतं प्रकृत्य वारवन्तीयमग्निष्टोमसाम कार्यमिति च गुणं विधाय पुनर्ब्रवीति एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति । तत्रापि पूर्ववदेव संदेहः किं गुणविशिष्टो यागः पूर्वस्माद् व्यतिरिक्तश्चोद्यते किं वा पूर्वस्यैव गु-

(१) पदद्वयसंबन्धव्यापारादिति २ पु० पाठः ।

णादिनिर्दिष्टवत्पशवः फलमिति । किं तावत्प्राप्तं समस्तेनैव पूर्वा-
धिकरणेन गुणात्फलमिति ॥ तथा हि ।

रेवतीवारवन्तीयसंबन्धव्यापृते विधौ ।
श्रूयते फलमत्रापि यागोऽतो न विधीयते ॥
रेवतीवारवन्तीयसंबन्धं च करिष्यति ।
विनैव प्रत्ययावृत्त्या कृत्वाशब्दः पृथक्श्रुतिः ॥

यस्तु रेवतीवारवन्तीयसंबन्धोत्पत्तिविधानात्तस्य च फलं प्र-
ति विधानात्प्रत्ययावृत्तिलक्षणो वाक्यभेद आशङ्क्यते सोऽपि
नाशङ्कितव्यः । स्वयमेव वेदेन तत्फलस्योपात्तत्वात् । रेवतीषु
वारवन्तीयं कृत्वेति निष्पादिते हि संबन्धे यजेः परेण लिङा
फलसंबन्धः केवलः कर्त्तव्यः । तेन नावृत्तिदोषो भविष्यति ।
तत्राप्याधारनिर्देशाद्रेवतीनां परार्थता प्राधान्याद्वारवन्तीयं फलं
प्रति विधीयते । गुणोपादानवशेन धात्वर्थादुत्तारितो विधाय-
कः फलाय गुणं विदधद्यदन्यत्राज्ञातशेषत्वं विधत्ते । रेवत्यस्तु
सप्तमीनिर्देशाद्वारवन्तीयशेषभूतत्वात्प्रयोजनान्तरमनपेक्षमा-
णा न फलेन संबध्यन्ते, तद्गुणकं तु वारवन्तीयं द्वितीयानि-
र्देशादवगतप्राधान्यं करोत्यभिहितां भावनां प्रति धात्वर्थस्था-
नीयं प्रतीयमानं प्रयोजनापेक्षत्वात् फलवत्तां प्रतिपद्यते । अथ
चोभयतिरस्कारेणात्रापि संबन्धादेव फलमिति वक्तव्यम् । एवं
च सति विपरिवृत्तिप्राप्तो यजिः, प्रकृतार्थावलम्बी वैतच्छब्दः,
तस्माच्च यजिसमानाधिकरणात्परा षष्ठी फलवता गुणेन सह
प्रकरणात्प्राप्तमाश्रयाश्रयिसंबन्धं वदन्ती, प्रमाणाभावाच्चाश्र-
यान्तरासंबन्धात्तन्निवृत्तिरूपप्रवृत्त एवकारः, पूर्वोच्चरितेन व-
चनान्तरेण च प्राप्तमग्निष्टोमसामसंबन्धविशिष्टं वारवन्तीय,-

मित्यादिव(१)त्सर्वकर्मान्तरत्वान्नित्यप्राप्तमनूद्यमानं न प्रत्यय-मायामर्पयिष्यति । कर्मान्तरपक्षे तु सर्वमप्राप्तत्वाद्विधातव्यम् । न च तच्छक्यते । कुतः ।

एकशक्तिः स्वभावेन सर्वदैव विधायकः ।
अल्पार्थविधिसंतुष्टो नानेकार्थविधिक्षमः ॥

तेन कृत्वाशब्देन रेवतीनां वारवन्तीयसंबन्धमात्रं लिङा च फलसंबन्धमात्रं विधीयतइति ज्यायान्गुणविधिपक्षः । एवं चै-ते ऽनुवादा यज्यनुवादेनैव तन्मूलत्वात्प्रदर्शिता भवन्तीति न भाष्यकारेण प्रत्येकमुपवर्णिताः । तस्मान्न कर्मान्तरमिति प्रा-प्ते ऽभिधीयते ॥

आश्रयत्वेन गृह्णाति यो गुणः प्रकृतां क्रियाम् ।
तत्संबन्धानुवादत्वात्तत्र भेदो न गम्यते ॥

इदं तावद्वाक्यमेतस्यैव रेवतीष्वित्यादि यजिमत् श्रूयते । स च यजिर्यद्यत्र श्रूयते तादृग्यदि कुतश्चित्प्राप्तः ततः शक्यमक-र्मान्तरत्वमध्यवसातुम् । तद्यथा दधिहोमसंबन्धादिन्द्रियका-मवाक्ये श्रुतफलसंबन्धमात्रे वाक्येन विधीयमाने प्रकरणादे-वाश्रयापेक्षायां(२) लब्धो होमसंबन्ध इत्यनूद्यते । शक्नोति हि दधि साक्षादेव होमं निर्वर्त्तयितुं न तु रेवतीगुणकं वारवन्तीयं यागनिर्वृत्तिसमर्थमद्रव्यदेवतात्मकत्वात् ॥ तथा हि ।

देवताद्रव्यकर्तृभ्यो नातिरिक्तमपेक्षते ।
यागः साधनमित्येवं साम्ना नैवैष साध्यते ॥

तस्मात्प्रकरणवशेन बुद्धावुपप्लवमानोपि यागः सामाश्रयत्व-

(१) वदिति २ पु० नास्ति ।
(२) आश्रयापेक्षयेति २ पु० पाठः ।

मयोग्यत्वादप्रतिपद्यमानो न रेवतीवारवन्तीयवाक्ये शक्यो ऽनुवदितुं प्राप्तिप्रमाणाभावात्। यत्तु वारवन्तीयस्य साध्यत्वेनाश्रयत्वप्रतिपत्तिक्षमं स्तोत्रं न तस्य प्रकरणं, मातिदेशिकत्वादग्निष्टुति स्तोत्राणाम्॥ आह च।

स्तोत्रसाधनभूतत्वं साम्नो योग्यतया स्थितम्।
स्तोत्रं च प्रकृतं नास्तीत्याश्रयो न प्रतीयते॥

अथोच्येत यथा ऽनेन शक्यते यागः कर्तुं तथा कुर्वदाश्रयिष्यति। यथा च शक्नोति यागः आश्रयत्वं प्रतिपत्तुं तथा प्रतिपत्स्यते। सर्वाख्यानसहकारिशक्त्यनुसारेणावगमादानर्थक्यात्तदङ्गेष्वित्यनेन न्यायेनाङ्गभूतस्तोत्रद्वारेणाश्रयाश्रयिसंबन्धः सेत्स्यतीति। तदनुपपन्नम्। उक्तं ह्येतत्।

तन्नामाङ्गेषु कल्प्येत यदङ्गत्वेन चोदितम्।
प्राधान्यावस्थितं यत्तु तदङ्गं नोपसर्पति॥

सप्तदशारत्निर्वाजपेयस्य यूप इति सप्तदशारत्नित्वं गुणत्वेन चोद्यमानं साक्षाद्वाजपेयस्यासंभवाद्यथा शक्नोति तथोपकरिष्यतीत्यध्यवसानात् तदङ्गपशुयूपाङ्गत्वेनावधार्यते। यदि तथैव वारवन्तीयमपि यागाङ्गत्वेन चोद्येत ततस्तत्रासंभवात्तदङ्गानि स्तोत्राण्युपसर्पेत्। इदं पुनः फले विहितं गुणभूतां क्रियामाश्रयत्वेनापेक्षमाणं यदि योग्यां लभते ततो गृह्णाति, अथ न लभते ततो वाक्यादर्थान्तरत्वं प्रतिपद्यते। न चैतदन्यथा ऽनर्थकं भवति कर्मान्तरविधाने सुतरामर्थवत्त्वात्। अत्यन्तभेदाच्च यागस्तोत्रयोः। न स्तोत्रे साधिते यागः साधित इति शक्यं वक्तुं, तत्र यथैव क्रत्वन्तरे श्रुतं क्रत्वन्तरे क्रियेत तादृगेवैतत्स्यात्। वाजपेयस्येति तु सामान्यसंबन्धमात्रवाचिनी षष्ठी पारंपर्येणा-

गव्यविवद्धेति वैषम्यम् । यद्यपि स्तोत्रद्वारेण क्रतोराश्रयत्वं स्यात् तथापि सर्वस्तोत्रेषु प्रसज्यमानेष्वग्निष्टोमसामेत्यनर्थकं भवेत् । तत्राग्निष्टोमसाम्नि वाक्येनैवाश्रये कल्प्यमाने वाक्यभेदः, पुनरपि च वाक्येनाग्निष्टोमसाममात्रसंबन्धे ऽवगम्यमाने यद्येतस्यैवेति विशेष्यते ततोपि वाक्यभेदः । एतस्यैवेति चापूर्वसंबन्धे तथैव सर्वतदीयस्तोत्रसंबन्धापत्तेरग्निष्टोमसामेति विशेषणात्स एव वाक्यभेदः । स्वतसामसंबन्धकरणकृतं चातिगौरवं स्थितमेव । ननु चास्मिन्नग्निष्टुत्याश्रयत्वेन लब्धे पूर्वविधिनैव शेषमवाप्स्यते । वारवन्तीयं हि क्रतुमाश्रयद्यत्र स्थाने स्थितं साधयद्दृष्टं न(१) ततो ऽन्यत्र भविष्यति । क्रतुरपि च तन्नान्यस्तोत्रगामित्वेनापेक्षिष्यते । प्रकृतक्रत्वग्निष्टोमसामसंबन्धिवारवन्तीयातिक्रमकारणाभावाच्च न क्रत्वन्तरस्तोत्रान्तरसंबन्धाशङ्का । नैतदेवं, यदि हि वारवन्तीयाग्निष्टोमसामविधिवाक्यं रेवतीवाक्येनापेक्ष्येत तत एवं विज्ञायेत, न तु तदपेक्षास्ति गुणादिवाक्यानां परस्परसंबन्धाभावादित्युक्तं प्राक् । पूर्वसंबन्धविलक्षणश्चायं क्रतोर्वारवन्तीयेन संबन्धो न तत्कल्पितस्थानविषयत्वं प्रतिपत्स्यते । कर्माङ्गभूतस्य हि तस्यैतत्क्रत्वग्निष्टोमसामत्वं विज्ञातम् । इदानीं पुरुषार्थभूतत्वाद्देदस्तावन्न तदेव स्थानं कल्पयति । सामान्यतोदृष्टकल्पनायाश्चैवंजातीयकेष्वप्रमाणत्वमुक्तम् । आह च ॥

फलाय विहितं साम स्वतन्त्रं रूपमात्रतः ।
वेदस्वाध्यायमेवैकमुत्पत्त्यर्थमपेक्षते ॥

यदि वारवन्तीयमग्निष्टुत्येव प्रथममुत्पाद्येत ततो गत्यन्तरा-

(१) नेति २ पु० नास्ति ।

भावादनुक्तमपि तद्विषयं विज्ञायेत । इह पुनः समाम्नायमा-
त्राधीनोत्पत्ति तत एव गृहीत्वा फलाय चोद्यते । तत्र क्रत्व-
न्तरस्तोत्रान्तरैरेतत्क्रत्वग्निष्टोमसाम्नो न कश्चिद्विशेषः । यदि
च वारवन्तीयसंस्कारः कश्चिद्विधीयेत ततः कथं चिद् व्रीहि-
प्रोक्षणादिष्विव प्रकृतप्रत्ययो भवेत् । न चैवमस्ति । तस्मान्ना-
ग्निष्टोमसामसंबन्धसिद्धिः । ननु च पुरुषार्थमपि सदेतत्क्रतुम-
साधयन्न शक्नोति पुरुषार्थं भवितुमिति प्रासङ्गिक्यां क्रतुसि-
द्धौ पूर्वक्लृप्तं स्थानं लभ्यते(१) । यथेज्यार्थे दधिपयसी प्रणीताध-
र्मानुपलभेते । तच्चैवं तद्भवति यत्र गुणभूता धर्मा भवन्ति । न
चेहाग्निष्टोमसामत्वं नाम वारवन्तीयस्य गुणः । प्रकरणग्रह-
णे हि सति गुणत्वमपि स्यात् । तदेव त्वयाप्यसिद्धावस्थम् ।
यदि तु केन चित्प्रकारेणाग्निष्टोमसामसंबन्धोऽवगम्यते
ततस्तद्धर्मास्तस्य प्रणीताधर्मवन्नैव कश्चिद्वारयिष्यति । तस्मान्नै-
षोपि परिहारो भवति इत्यपूर्वकर्मविधिनैवैकवाक्यत्वमुप-
पादनीयम् । तथा सति हि यद्यपि सर्वमप्राप्तं तथापि विशिष्ट-
विधिना शक्यं विधातुम्, किं पुनर्यदा निकायित्वात्पूर्वाग्निष्टुत्-
धर्मेष्वत्रातिदिश्यमानेषु वचनेव प्राप्तम् । एतच्छब्दस्तावद्धर्मत्व-
क्षणायानुवादो भविष्यति, न चानुवादे लक्षणा दोषः । प्रस्तूय-
मानकर्मवचनत्वेन वा अथैष ज्योतिरित्यादिवन्मुख्यरूपेणैव
वर्त्तिष्यते तदत्र(२) वारवन्तीयं क्रत्वर्थभूत(३)मतिदेशेनैव प्राप्नो-
तीति तदप्यनुवदिष्यते । कृत्वाशब्दकल्पितरेवतीवारवन्तीयसं-

---

(१) लप्स्यत इति २ पु० पाठः ।

(२) क्रत्वर्थमग्निष्टोमसाम्नैव संबद्धमिति २ पु० पाठः ।

(३) तदा चेति २ पु० पाठः ।

मन्त्रविशिष्टस्यागमात्रविधानात्तु लाघवं विधेः । न त्वग्निष्टोमसाम्नो रेवतीवारवन्तीयसंबन्धो यागस्यात्र विधीयतइति । अन्यैर्विशिष्टविधिभिर्वैषम्यं विधायकस्य स्यात् । तथा हि ॥

नैकप्रयत्नसाध्यत्वं क्रियान्तरविशेषणे ।
तेन क्रियां विधायान्यस्तत्र कार्यः पुनर्विधिः ॥

यान्येकक्रियाविशेषणानि भवन्ति तानि तया विधीयमानया ऽर्थादाक्षिप्यमाणानि न विधायकव्यापारं भिन्दन्ति । क्रियान्तरविशेषणे पुनर्विधीयमाने तया क्रियया संबन्धरहितया ऽनाक्षिप्यमाणे ऽवश्यं विधायकस्यावृत्तिरेष्टव्येति वाक्यभेदः प्राप्नोत्येव । नैष दोषः ॥

कृत्वाशब्दार्थमेवैकं गृह्णीते भावनोत्तरा ।
सोपि स्वगोचरप्राप्तं ग्रहीष्यति विशेषणम् ॥
नवेन क्रतुना पश्चादवसामग्रहणे कृते ।
क्लृप्तस्थानेन साम्नैव रेवतीस्थानकल्पना ॥

रेवतीवारवन्तीयसंबन्धं निष्पाद्योत्तरभावनापेक्षो ऽवस्थितः स्वविशेषणविशिष्टः कृत्वाशब्दार्थः क्रतुना गृह्यते । अतस्य स्वविशेषणाक्षेप एव क्रतोः । स तु तत्संबन्धं साक्षादनुपजीवन्गुणभूतत्वादङ्गेषु निक्षिपन्नतिदेशविज्ञातस्थानवारवन्तीयवशेन रेवतीरपि तद्विषयाः कल्पयति । तेन यद्यपि अत्र वाक्ये ऽग्निष्टोमसाम न विधीयते तथापि क्रतुविशेषणमपि तत्र संक्रामतीत्यदोषः । अतश्च प्रकृतयागसंबन्धस्तत्पक्षे वारवन्तीयस्य नास्ति । पश्य ।

आत्मना स्वक्रियारूपैर्गुणैराश्रीयते क्रिया ।
वारवन्तीयगीतेस्तु क्रियया किं प्रयोजनम् ॥

दधिगोदोहनादीनि क्रियया विना करणत्वमलभमानानि तामपेक्षन्ते वारवन्तीयं पुनर्गायतिधातुवाच्यक्रियात्मकत्वाद्विनैव क्रियान्तरेण यागवत् फलभवनसमर्थमित्यनपेक्षत्वाद्यागेनासंबध्यमानं स्वतन्त्रमेव रेवतीषु गीयमानमग्निष्टुत्प्रयोगाद्बहिरेव फलं साधयेत्। ततश्चैतस्यैवेति चाग्निष्टोमसामेति च कृत्वाशब्दस्य यजेतेति च सर्वमसंबद्धं स्यात्। तस्माद्यागात्फलम्। स च पूर्वविलक्षणविशेषणविशिष्टत्वात्कर्मान्तरम्। समेष्वत्ययोग्यत्वाद्यागगुणयोराश्रयाश्रयिसंबन्धानपेक्षत्वाभिप्रायम् । क्रियात्मकत्वाद्वा क्रियान्तरानपेक्षत्वमुच्यते । भिन्नवाक्येष्विति। पक्षद्वयेपि गुणफलसंबन्धस्य यागान्तरविधानस्य वाऽर्थान्तरत्वात्स्थितस्यैव लक्षणतो वाक्यभेदे पूर्वक्रतुसंबन्धे भवत्येव किंचिदेव वाक्यरूपं, क्रत्वन्तरसंबन्धे त्वत्यन्तभेद इत्यभिप्रायः। न ह्येतस्य रेवत्यः सन्ति इत्यानन्तर्यात्तावदेषा वचनव्यक्तिः प्रतिभात्ये,तस्य या रेवत्यस्तासु वारवन्तीयं कृत्वेति। तत्र यद्यपि प्रकरणलभ्यत्वादेतस्येति विशिष्टानुवादो न वाक्यं भिनत्ति तथापि रेवतीस्वरूपकर्त्तव्यतैव तावदप्राप्तेति नानूद्यते। तत्र रेवत्यः प्रयोक्तव्याः, तासु च वारवन्तीयमि,त्येको वाक्यभेदः, एतच्छब्दवैयर्थ्यं च। अथ त्वेतच्छब्दानुग्रहार्थमेतस्य रेवत्यः कर्त्तव्याः, तासु च वारवन्तीयं, तच्च फलाये,तिविधीयते यजिस्त्वानूद्यते इति तथाप्यर्थत्रयनिमित्तवाक्यभेदाभ्युपगमेनाग्निष्टोमसामसंबन्धो विधातुमनुवदितुं वाशक्यत्वादुभयथापि नावकल्पते। अथ सोपि विधीयेत तथा सति पूर्वस्माद्विध्यपगमादग्निष्टोम(१)मात्रप्रसङ्गादेतस्यैवेत्यनर्थकं, विधीयमाने वाक्यभेद

(१) अग्निष्टोमसामेति २ पु० पाठः ।

इत्येषा ग्रन्थयोजना । अथ वा यथाक्रमावस्थित एवैतच्छब्दो रेवतीविशेषणं स तथाभूत एवाभ्युपगम्यते ततश्चैवं वचनं व्यज्यते एतस्य या रेवत्यः तासु वारवन्तीयमग्निष्टोमसाम कृत्वेति । तत्र(१) कस्य क्रतोरित्यविशेषणादेतच्छब्दस्य च रेवतीविशेषणत्वेनोपक्षीणत्वादेतस्याग्निष्टोमसामेति न लभ्यते, तद्विवक्षायां वा पुनरपि वाक्यभेदः । इहैव सर्वाः पूर्वपक्षवचनव्यक्तीर्निराकृत्य सिद्धान्ते कथं वाक्यभेद इति प्रष्टव्ये पूर्वपक्षवादी विस्मितः पृच्छति । तथा नाम सुप्रतिविहिते सत्यनेनाकाशएवेयन्तो वाक्यभेदा इन्द्रजालवदेव दर्शिताः । ततः पृच्छामि तावदेतस्य कथं वाक्यभेद इति । सिद्धान्तवादी त्वप्राप्तकर्म विधियते विशिष्टविधानोपपत्तौ सत्यामेकार्थत्वादित्याह । नन्वर्थभेद इति । क्रान्ताख्यातोपात्तभावनाद्वयैकवाक्यत्वासंभवाभिप्रायेण । नेति ब्रूम इति । गुणभूतैकभावनाविशिष्टप्रधानभूतभावनान्तरविधानाभिप्रायम् । रेवतीनां वारवन्तीयस्यासंबन्धो न विहितः स्यात् इति विशेषणविशेषणानामविधेयत्वाल्लिङ्गात्तावन्न विधीयते । कृत्वाशब्दस्य नैव विधौ स्मर्यते । तेन यद्यपि संबद्धा भावना ऽभिधीयते तथापि विध्यधीनप्रवृत्तित्वात्पुरुषः सतीमपि तामसतीमिव प्रतिपद्यते । तेन(२) यागभावनामात्रविशेषणत्वाद्रेवतीवारवन्तीययोस्तदवच्छिन्नभावमात्रेण प्रयोक्तव्ययोरन्योन्यनियमप्रमाणाभावादेकस्यात्रविषयत्वे तदेकदेशनियमे चासति रेवतीषु क्वचिदन्यान्यपि गायत्रीमश्वीमवादीनि सामानि प्राप्नुवन्ति । सामापि वारवन्तीय-

(१) तत्तु इति २ पु० पाठः ।

(२) मातस्य यागेति २ पु० पाठः ।

मन्त्रास्तु आवापभूतास्तु गायत्रीष्वत्यनुष्टुप्सु प्राप्नोति । तत्र रै-वतीषु वारवन्तीयमिति संबन्धप्रतीतिर्व्यर्था स्यात् । अतो वार-वन्तीयमेव यथावधृतस्थानमुद्दिश्य रेवत्यो विहिता इति । नैष दोषः ।

विधित्वं यद्यपि श्रुत्या न कृत्वेति ब्रवीत्ययम् ।
तथाप्येवंविधे तस्य विधित्वं फलमिष्यते ॥

सर्वत्रैव यत्रेदं कृत्वेदं कुर्यादिति श्रूयते तत्र यदि ताव-त्क्त्वान्तधातुवाच्या क्रिया ऽन्यत एव प्राप्ता ततो निमित्तार्थं श्रवणं भवति । अथ तु न प्राप्ता तत उत्तरस्याः करणं पूर्वनिर्वृत्त्युत्त-रकालत्वेन विहितं तामननुष्ठाय यथा कर्तुं न शक्यत इत्यर्था-दवश्यं कर्तव्या सती विहितवद्विज्ञास्यते । न चेह रेवतीवारव-न्तीयसंबन्धः प्राग्विधेः कुतश्चित्प्राप्तो येन निमित्ततया ऽश्री-येत । तस्मादनुष्ठेय एव विज्ञायते । यदि तर्ह्यनुष्ठेयत्वेन संबन्धः उपपन्नः कथमुत्तरया ऽनुष्ठेयत्वोपात्तयैव सह संबध्यते । तद-र्थमाह । द्वावेतावर्थौ कृत्वेत्येष शब्दः शक्नोति वदितुमिति । कथमेकेनानेकार्थावगतिरिति चेदत आह दृष्टा हि क्व-चिदियमपि गतिः । यथा शोणमानयेति प्रमाणान्तरप्राप्ते-प्यानयतौ रक्तोश्वश्चोद्यमानो न रक्ताश्वशब्दाभ्यामिवाभिहि-तो वाक्यभेदं जनयति । तथा ऽऽत्र क्त्वाशब्दोपात्ता निर्वृत्तिः पूर्वकालत्वं च इति । अथ वा ।

तत्रैव न विधीयेत विशेषणविशेषणम् ।
यत्र द्रव्याङ्गभूतं तत्र कर्माङ्गं प्रतीयते ॥

तत्रैकत्वमयथाङ्गभूतमर्थस्य गुणभूतत्वादिति द्रव्यविशेषणा-

र्नाविध्यसंसर्गो(१) वक्ष्यते। रेवतीवारवन्तीयसंबन्धस्तु करोतेर्विशेषणं सामान्यभूतत्वाच्च करोत्यर्थस्तदृष्टितो नानुष्ठेयत्वं प्रतिपद्यते। तेन मृष्यामहे हविषा विशेषणमिति वद्यजिभावनाविशेषणस्य करोत्यर्थस्यावश्यं रेवतीवारवन्तीयसंबन्धविशिष्टताऽभ्युपगन्तव्या। तथा च क्रियाविशेषणानामपि प्रयाजादीनां विशेषणानि द्रव्यदेवतादीनि दर्शपूर्णमासादिरूपयोच्यन्ते। तस्मान्निष्पन्नसंबन्धविशेषितायां भावनायामृक्सामयोर्नियमः सेत्स्यति। कृत्वाशब्दश्चात्र प्रतिपत्तिक्रमनियमनिर्वृत्त्यर्थ एव द्रष्टव्यो नानुष्ठाननिर्वृत्त्यर्थः अग्निष्टोमसाम्नः प्राग्यागादप्रयोगात्। अतो नैवं विज्ञायते रेवतीषु वारवन्तीयं प्रयुज्य यष्टव्यमिति, किं तर्ह्येवं करिष्यामीति परिकल्प्य यागः प्रक्रमितव्य इति। नन्वेवमपीति। यावदभिधेयं विधिकल्पनादनेकार्थत्वान्नैकवाक्यत्वमिति मन्यते। नैष दोष इति। न तावदभिधेयनानात्वेनानेकार्थत्वं भवतीत्युक्तम्। अथ प्रयोजनभूतविधेयनानात्वमेव मन्येथाः। तत्रोच्यते।

श्रूयन्ते बहवोऽत्रार्था एक एव विधीयते।
विशिष्टा भावना सा च याग इत्युपलक्षिता॥

ननु रेवत्योऽपि विधीयन्त इति। यदि श्रुतमात्रानुपात्येवानेकार्थत्वं भवेत्तत एष परिहारः स्यात्। एते तु सर्वे विधीयमानत्वात्प्रयोजनभूता,स्तस्मादनेकार्थत्वमस्त्येवेति। उच्यते।

विधेयमात्रमप्यत्र नार्थ इत्यभिधीयते।
प्रधानविधियुक्तोऽर्थः स चैकोऽत्र विधीयते॥

तथा च न त्वत्रानेकस्य प्रयोजनत्वेनाभिप्रेतस्यानेकं पदं विधाय-

---

(१) विध्यसंभव इति २ पु० पाठः।

कमिति । यथा ह्यवान्तरकर्मत्वात्तत्क्रियायां न प्राप्यङ्गि-
भावनातः पर्यवसानं, विप्रिष्टविशुक्तरकाले तु न किं चिद-
पेक्ष्यते । तस्मात्त्विदमेकार्थत्वादेकवाक्यत्वम् । गुणविधित्वे
चोक्ता वाक्यभेदाः । अथोच्येतेत्येतच्छब्दसमर्थनार्थं, सिद्धे-
पि कर्मान्तरत्वे कर्मयुक्तफलपक्षात्पक्षान्तरमिति निराक्रि-
यते । तत्रैषा वचनव्यक्तिः । रेवतीषु वारवन्तीयमग्निष्टोम-
साम कृत्वा एतस्याङ्गत्वेन यजेतेति । किमेवं भविष्यति प्रकर-
णं तावन्न बाधिष्यते । एतस्यैवेति च प्रकृतग्राहि समीपस्थि-
तसंबन्धिपदमनुग्रहीष्यते । तत्रोच्यते । न, पशुकामपदान-
र्थक्यप्रसङ्गात् । तदपरित्यागे वाक्यभेदप्रसङ्गः । न ह्येक-
स्य(१) क्रतुं फलं च प्रति युगपद्विधानमवकल्पते । अथै-
वमुच्येत रेवतीषु कृतेनेति । प्रथमोपन्यस्तमेव पक्षं दोषान्त-
राभिधित्सया पुनरुपन्यस्यतीति के चित् । अथ वा नैवं,
कथं तर्हि, गुणकामेषु याज्ञिकानां द्वयी प्रतिपत्तिः केषां
चिन्मीमांसकवदेव गुणात्फलम् । अपरेषां तु गुणः क्रत्व-
र्थ एव तद्वतस्तु क्रतोः फलान्तरसंबन्धः । अत्रैषा वचनव्य-
क्तिः । नित्यं तावदनेन ब्रह्मवर्चसकामो यजेत । यदि तु पशु-
कामः स्यात् ततोऽनेनैव रेवत्यादिविशिष्टेनेति । तथा सति च ।

प्रत्ययः संनिकृष्टार्थविधिं तावत्करिष्यति ।
न चान्यपर उत्पत्तिं विधानाच्च विशिष्टता ॥

यागं हि फले विदधत्प्रत्ययो न विप्रकृष्यते । न चानुत्प-
त्तिपरः सन्नुत्पत्तिमपि कल्पयिष्यति । अनेकार्थविधानं च य-
थैवोत्पत्तिविधौ कर्मविधाननिमित्तं लभ्यते तथा फलविधावपि

(१) यागस्येत्यधिकं ? पु० पाठः ।

फलोद्देशेन कर्मविधानादित्येवं मन्यमानो वदति। अथ रेवतीषु क्रतेन वारवन्तीयेन पशुकामो यजेतेति। स्तोत्रद्वारेण यागसाधनत्वोपपत्तेः करणतृतीयैषा। अथ वेत्थंभूतलक्षणानेनैवेत्थंभूतेन पशुकामो यजेतेति। तत्रोत्तरम्। नैवं शक्यमुगन्तरप्रमाणाद्विशेषज्ञानाद्वैगुण्यमिति। यदि तदेवेदं कर्म ततस्तस्य वायव्यास्वग्निष्टोमसाम विहितं तदगन्तरे रेवत्याख्ये गीयमानं पूर्वविहितवायव्याख्यविशेषज्ञानाद्विगुणं भवेत्। नन्विदानीमेवात्मीये पक्षे भवतैव तत्र रेवतीषु ऋत्स्वन्यान्यपि सामानि प्राप्नुवन्ति एवं पर्यनुयुक्तेनाभिहितं, नैष दोषः। क्रत्वेति हि निर्वृत्तः संबन्धो यागायो(१)च्यते। द्वावेतावर्थौ क्रत्वेत्येष शब्दः शक्नोति वदितुमिति। सिद्धान्तवादी त्वपूर्वकर्मविधावनेकार्थविधानं शक्यं नान्यत्रेति मन्यमान आह। सति वचने मत्पक्षे शक्यं भवत्पक्षे त्वसति वारवन्तीयग्रहणमात्रेण लभ्यमानासु रेवतीष्वशक्यमिति। परः पुनराह वचनं तर्हि भविष्यतीति तेनैवाभिप्रायेण। फले विशिष्टकर्मविधानात्क्रत्वाशब्दस्य चाविधायकत्वात् यजिरनुवाद इति च सत्यपि फलं प्रति विधातुमुत्पत्त्यविधानाभिप्रायेण। सिद्धान्तवादी स्वाभिप्रेतानेकार्थविध्यन्यथानुपपत्तिफलं कथयति। यदि वचनं सिद्धं तर्हि कर्मान्तरम्। न पूर्वस्यैवाग्निष्टुतो गुणविधानमिति। ननु ततो यजेतेति यागानुवादादिति। वचनेनानिराकृतत्वादद्यापि स्वपक्षमेव बलीयांसं मन्यते। नैवं शक्यमिति सिद्धान्तविवरणम्। यदि हि रेवतीगुणकं वारवन्तीयं यागं प्रति गुणत्वेन विधीयते ततोऽवश्यं स उद्देष्टव्यः। ततश्चोद्दिश्य-

(१) यागस्येति २ पु॰ पाठः।

मानत्वादेव फलपदं न तेन गुणेन वा संबध्यत इत्यनर्थकमेव स्यात्, संबध्यमानं वा वाक्यं भिन्द्यात्। गुणविशिष्टकर्मविधाने वा प्रत्यभिज्ञायमानत्वादेकान्तेन कर्मान्तरत्वम्। न च यत्पशु-कामो यजेतेत्यप्राप्तत्वादनुवादः संभवति। एतेन रेवतीवारव-न्तीयविधिं प्रत्यस्य निमित्तत्वं प्रत्युक्तम्। अतश्च न वारवन्तीयं केन चिद्बलवत्तरेण प्रमाणेन रेवतीभिः संबद्धमिति विशेषणत्वा-नादिगुणं भवेत्। अथ यागसंबन्धोऽनुवाद इति। गुणादेव फले सति प्रकरणादवगतं यागाङ्गत्वमस्मिन्वाक्येनुवदिष्यत इ-ति। कः पुनराश्रयाश्रयिसंबन्धात्पूर्वनिराकृतादस्य विशेषो येनोपन्यस्यते। स उच्यते। तत्र स्यानर्थक्यात्तदङ्गेषु इत्येत-न्निराकृत,मङ्गत्वज्ञाने तु तत्संभवादग्निष्टोमसामसंबन्धः सुलभ इत्यभिप्रायः। तन्निराकरोति। प्रकरणाद्धि वाक्यं बलवत्तरमि-ति। आश्रयाश्रयिसंबन्धो हि फलसंबन्धानुगुणत्वात्संभवन्गृह्य-ते स तु न संभवति इत्युक्तम्। अङ्गाङ्गिसंबन्धस्तु क्रतुकथंभा-वग्रहणात्स्यात्। तच्च नास्ति असंयुक्तं प्रकरणादिति वक्ष्यति। संयुक्तं चैतत्फलेन। तस्मादविरोधाद्गुणफलविशिष्टकर्मान्तर-विधानम्। तत्रैतत्स्यात्। सत्यपि कर्मान्तरत्वे तदनुगृहीतात् गुणादेव फलमिति। तद्विकल्प्य भावार्थाधिकरणन्यायेन प्रत्य-यसंनिकर्षेण यागफलसंबन्धावगमान्निराकरोति। तस्मात्कर्म-विधिः। अथ पुनर्विशिष्टे यागे विधीयमाने क्रियान्तरस्याग्नि-ष्टोमसाम्नो विशेषणेन कथं संबन्ध इति। तत्रोत्तरम्। वच-नादिति। प्रयुक्तन्याये नातिदेशिकं वचनं द्रष्टव्यम्। अग्निष्टो-मसाम्नः कार्य इति। न किं चिदग्निष्टोमाख्यं सामावस्थितं क्रि-यते यस्य वारवन्तीयं कार्यापन्नमिति कल्पते। तेन प्राकृतय-

सजातीयकार्यापत्त्यभिप्रायेणोक्तम् । अथ वाग्निष्टोमसाम्न इति स्तोत्रस्यैव कार्ये सादृश्येन वर्त्तिष्यत इत्यर्थः । तस्मात्समेषु कर्मयुक्तं फलं स्यादिति सिद्धम् ॥

## सौभरे पुरुषश्रुतेर्निधने कामसंयोगः ॥ २८ ॥

ज्योतिष्टोमे सौभरमुक्थ्यानां ब्रह्मसाम विहितम् । पुनश्च तदेव यदि रथन्तरसाम यदि बृहत्सामेति च निमित्तयोर्विहितम् । ततः पुनर्यो वृष्टिकामो योऽन्नाद्यकामः यः स्वर्गकामः स सौभरेण स्तुवीतेति नित्यस्यैव सतः फलत्रयसंबन्धः कृतः । तथा वक्ष्यति एवंजातीयकेषु कामेषु स नित्यस्य समत्वादिति क्रत्वर्थं पुरुषार्थं चैवंजातीयकं भवतीति वक्ष्यति । एकस्य तूभयत्वे संयोगपृथक्त्वमिति । एतदपि वक्ष्यति यथा विकल्पेनैतान्यस्य फलानि भवन्ति योगसिद्धिर्वाऽर्थस्योत्पत्त्ययोगित्वादिति । तदेवरूपं सौभरं प्रकृत्य पुनः श्रूयते हीषिति वृष्टिकामाय निधनं कुर्यात् । ऊर्गित्यन्नाद्यकामाय ऊँ इति स्वर्गकामायेति निधनमिति चान्त्या सामभक्तिरभिधीयते । तत्रैतद्विचार्यते किं सौभरं निरपेक्षं फलानि साधयति । इमानि वृष्ट्यादीनि हीषादिनिधनफलानि पृथगेव भवन्ति । उत सौभरस्यैव तत्तत्फलं साधयतस्तत्तन्निधनं नियम्यत इति । यद्यपि चात्र कर्मभेदाभेदौ न स्तः तथापि प्रसङ्गादुपन्यस्यते । अथ वा कर्मभेदाभेदवत्फलापूर्वभेदाभेदावपि लक्षणार्थाविति संबन्धः । एवं चानुष्ठानेपि विशेषो भवति यदा वृष्टिकामेन सौभरं प्रक्रान्तं तदेतरयोरपि निधनयोः स्वफलप्रार्थनावशेन प्रयोगोऽपि च वृष्टिप्रार्थनयो-

रपि भेदः कर्त्तव्यः यदि निधनादपरं फलम् । अथ तु निधननियमः ततो द्वीषेव प्रयोक्तव्यमेकैव वृष्टिः प्रार्थयितव्या । एवमन्नाद्यकामस्वर्गकामयोरपि दर्शयितव्यम् । कुतः संशयः । के चित्तावद्वाक्यकारकृतेन वचनव्यक्तिद्वयप्रतिभानेन वर्णयन्ति । किं द्वीषादिशब्दानां वृष्टिकामादिपदैः संबन्धः अथ निधनपदेनेति । यद्यपि चोत्तरयोर्निधनमिति न श्रूयते तथाऽप्याकाङ्क्षावशेनानुषज्यमानं सर्वसंबन्धित्वेन कथ्यते । किं तावत्प्राप्तम् ॥

पुनर्विधानसामर्थ्यात्स्वार्थत्वाच्च फलश्रुतेः ।
फलभूयस्त्वलाभाच्च द्वीषादेरपरं फलम् ॥

यदि हि सौभरफलान्ये(१)तान्यभविष्यन् ततः पुनर्वचनमनर्थकमापत्स्यत । न हि विधेयं तस्य तदा किं चिदपि लभ्यते । द्वीषादीनां शाखान्तरेषु सौभरनिधनत्वेन पाठादेव प्राप्तत्वात् । नियमार्था श्रुतिरिति चेत् । न, श्रुतिप्राप्तानां नियमेन निवर्त्तयितुमशक्यत्वात् । सर्व एव तावन्नियमो ऽन्यव्यावृत्तिफलत्वाद्न्याय्यः । तथापि तु यत्रार्थाक्षिप्तावस्थानि वस्त्वन्तराणि भवन्ति तत्रैकश्रवणवशेनेतरन्निवर्त्तते(२) । न त्विह द्वीषादीनामर्थात्प्रयोगः येनैकविधानादितरनिवृत्तिर्गम्येत । सौभरश्रुत्या हि तानि प्राप्यन्ते तत्र न शक्यं विधिमात्रप्रवृत्तया पुनःश्रुत्या गत्यन्तरे संभवति बाधनं कर्तुम् । अस्मत्पक्षे तु काम्यत्वादन्यतरद्वचन(३)क्रत्वर्थप्राप्ततरबाधेनैव भविष्यति वाक्यान्तराविहितं

(१) फलान्येवेति २ पु० पाठः ।
(२) इतराणि निवर्त्यन्ते इति २ पु० पाठः ।
(३) बलवादिति २ पु० पाठः ।

च वृष्टिद्वीपादिसंबन्धं विदधद्वाक्यमर्थवद्भवति । वृष्टिकामशब्दस्य स्वार्थत्वेन संभवन्न निधनव्यवस्थापरे वाक्ये सौभरविशेषणार्थः कल्पितो भविष्यति । पुरुषार्थभूयस्त्वं च विध्यात्मके वेदे पुरुषप्रवर्त्तनसौकर्यादिष्यते । तस्मान्निधनादपरं फलमिति ॥

## सर्वस्य चोक्तकामत्वात्तस्मिन्कामश्रुतिः स्यान्निधनार्था पुनः श्रुतिः ॥ २९ ॥

उच्यते ॥

निधनश्रुतिवैयर्थ्यान्न द्वीपः फलसंगतिः ।
निधनेन तु संबन्धे फलशिष्टं विशेषणम् ॥

द्वीपावृष्टिं कुर्यात्ता च निधनभूतेनेति वाक्यभेदः, तदसंबन्धे चानर्थक्यम् । अस्मत्पक्षे न किं चिदनर्थकं, सर्वस्य सौभरस्य वचनान्तरैरुक्तवृष्ट्यादिकामत्वेन तत्पदानां च प्राप्तत्वाद्द्वीपादिसंबन्धमात्रे विधीयमाने वाक्यभेदाभावः । न च वचनमनर्थकं निधनविशेषनियमार्थत्वात् । विनापि च गुणकामत्वेनास्त्येवात्र सामान्यविशेषलक्षणो बाधः सौभरशब्दस्य सर्वभक्तिसामान्यवचनत्वात्, सौभरश्रुत्या हि परोक्षवृत्त्या निधनान्तरं प्राप्नोति, इदं पुनः प्रत्यक्षं, तस्माद्बलीयः । यथा चार्थादाक्षिप्यमाणं श्रौतेन निवर्त्यते तथा परोक्षवृत्त्यापीति । अथ वा सौभरशब्दवाच्याया गीतेर्नैव किं चिद्बाध्यते अक्षरविधानेनाक्षरान्तरमात्रबाधनात् । यदि हि गीत्यन्तरावयवो विधीयेत ततः सौभरावयवोऽपि बाध्येत, स्तोभाक्षरबाधस्त्वयं निधनविषय इत्यदोषः । तस्मान्नि-

धननियमार्था पुनः श्रुतिरिति। एवं तु व्याख्यायमाने ऽस्ति किंचिद्वाच्यम्। तदुच्यते॥

न तावत्संशयो युक्तो वचनव्यक्तिभेदतः।
क्रोशे निधनसंबन्धो नेष्टो हि व्यवधानतः॥

क्रोशतीति निधनमिति व्यवहितकल्पनादोषादनिष्टः संबन्धः। तथोत्तरपक्षे ऽपि।

निधने क्रोशविधानं चेद्वृष्टिकामविशेषिते।
विशिष्टार्थानुवादत्वाद्वाक्यभेदः स्फुटो भवेत्॥

निधनानुवादेन क्रोशादिविधाने फलपदमनर्थकं पुनः श्रुतिवैयर्थ्यं च स्यात्। सौभरग्रहणेनैव हि निधनमात्रसंबन्धः प्राप्त इति न तन्मात्रवचनेनार्थः। तत्र यदि वृष्टिकामो(१) यद्यत्सौभरं तस्य यन्निधनमिति विशिष्टमनूद्य तत्र क्रोशपदं प्रयुञ्जीतेति विधीयते ततो ऽनेकसंबन्धकरणाद्वाक्यं भिद्येत। यद्यपि वृष्टिकामसौभरतन्निधनानि प्राप्तानि तथाप्यनेकेषामपि संनिधिरस्तीति व्यवच्छेदार्थमवश्यं यत्नः कर्त्तव्यः। ततश्चानेकार्थत्वमिति दुर्बलः सिद्धान्तः। पूर्वपक्षनिराकरणमपि न सम्यक्कृतं समाम्नायादेव क्रोशादीनां निधनत्वसिद्धेः। तस्मादेवं वर्णनीयम्॥

वृष्टिकामपदेनैव संबन्धे सति संशयः।
फलेन साधनेनेति वाक्यसामर्थ्यवीक्षणात्॥

अत्र क्रोशतीति वृष्टिकामायेत्येवमेवावस्थिते संदेहः किं साक्षात्फलेन क्रोशः संबन्धः, अथ फललक्षितेन साधनविशेषेणेति। तदा च क्रोशतीति निधनमिति एतत्फलं भवतीति वचनव्यक्तिरिव भाष्यकारेण दर्शिता। वृष्टिकामायेति सौभरविशे-

(१) वृष्टिकामोऽसि २ पु० पाठः।

षणमिति सौभरस्य निधनवाक्ये स्वपदेनानुपादानात् लक्षणा-रूपेणैव विशेषणत्वम् । न द्दोषा संबन्ध इति फलस्वरूपासंब-न्धाभिप्रायेण । तत्र तथैवं विधिपुनःश्रुत्यपेक्षं व्याख्यानं प्रयोगवचनसामर्थ्यादेव सिद्धं स्यादिति अपरा व्याख्या । यदि हि स्वार्थप्रवृत्तस्यैव सौभरस्य निधनमात्रं नियम्येत ततस्तत्प्र-योगवचनेनैवोपनीतमात्रद्दोषादिविधिसिद्धेर्विध्यानर्थक्यं भवेत्॥ फलसंबन्धपक्षे तु न प्रयोगवचनः समर्थ इत्यर्थवत्ता । किं च॥

वृष्टिकामपदेनात्र श्रुत्यैवाभिहितः पुमान् ।
साधनापेक्षिणस्तस्य द्दोषादिपदसंगतिः॥

अन्यथा ऽनेन सौभरं प्रकरणावगतमपि वृष्टिसाधनशक्तियु-क्तं लक्ष्येत । न च तदाश्रयणे किं चित्प्रयोजनमस्ति । तथा श्रु-तिलक्षणाविषये चेति ब्रुवता भाष्यकारस्याप्येतदेव व्याख्यान-मभिप्रेतमिति गम्यते । सिद्धान्तस्तु ॥

सौभरस्य समस्तस्य यः कामोभिहितः पुरा ।
नियन्तुं निधनं तस्य स एवायमनूद्यते ॥

सर्वस्यैव सौभरस्यायं कामसंयोगः पूर्वोक्त एव प्रत्यभिज्ञा-यमानः कीर्त्यतइति नापूर्वफलप्रतिपत्तिः । किमर्था तु प्राप्तस्य पुनः श्रुतिरित्यत आह । निधनार्था पुनः श्रुतिरिति॥ कस्मात्पुनः श्रुत्युपात्तेन फलेनैव द्दोषादयो न संबध्यन्ते । तत्र उच्यते ।

यथैव वारवन्तीयं नेष्टमाश्रयमाप्नवत्(१) ।
फले तथैव द्दोषादि नाप्नोत्याश्रयमीप्सितम् ॥

द्दोषा वृष्टिं साधयेदिति हि गृह्यमाणे ऽवश्यं किमाश्रितेने-त्यपेक्ष्यते, तत्र यत्सौभरं प्रकृतं तत्कावस्य प्रकृतमाश्रयत्वं प्रतिप-

(१) आप्नुयादिति २ पु० पाठः ।

त्तुं, समस्तं हि साम सौभरशब्देनोच्यते, न च तद्धोषा साधयि-
तुं शक्यं, यथा दध्ना होमः । नह्वि सकलं होमं व्याप्तुं शक्नोति,
न तु होषा सौभरं व्याप्यते बह्वक्षरसाध्यत्वा,न्न च तद्साधयत
आश्रयाश्रयिसंबन्धो ऽवकल्पते । यत्तु तेन व्याप्त्या साधयितुं
शक्यते निधनं, न तस्य प्रकरणमस्तीति न वाक्यादिनाश्रयत्वं
प्रतिपद्यते । तत्र यदि वाक्येनैव फलसंबन्धः, तेनैव चाश्रयला-
भः ततो वाक्यं भिद्यते । तथा निधनमात्रानुवादेन होषादिस-
बन्धे प्रकरणं बाधित्वा सर्वसाम(१)संबन्धप्रसङ्गे पुनः सौभरस्य
यदिति कथमपि विशेषणीयं, तत्रापि पुनर्मतिः क्लेशनीया । किं
च ॥

यद्यप्यवयवद्वारं भवेत्सौभरसाधनम् ।
तथापि भक्त्यनेकत्वान्न होषिति न गम्यते ॥

न तावत्सौभरावयवेन निधनेन साधितेन प्रकरणाम्नातसौभरं
साधितं भवति अवयवस्य सौभरत्वेनाप्रतीतेः । न च यथा शक्नु-
यात्तथा ऽश्रयेदित्येषा कल्पनास्तीत्युक्तम् । उपेत्यापि त्वाश्रय-
त्वमनेकप्रस्तावादिभक्तिनि सौभरे कतमस्यां भक्तौ होषादयः
प्रयुज्यन्तामिति नैव ज्ञायते । मुख्यं वा पूर्वचोदनाल्लोकवदिति
प्रस्तावे वा प्राप्नुवन्ति । तत्र निधनमित्यनुवादो नावकल्पते ।
अथोच्यते यथोक्थ्यादीनां फलाय चोदितानां प्रकरणाज्ज्यो-
तिष्टोममाश्रयतामसमस्तव्यापित्वेनानेकावयवत्वेपि सति वाक्या-
न्तरवशेनान्ते निवेशो भवति एवमत्रापि फले विहितानां हो-
षादीनामाश्रयत्वेन सौभरमुपसर्पतां समाम्नायवशेन लब्धस्था-
नानां निधनत्वम् अनुवदिष्यते इति ॥ तदयुक्तम् । कुतः ॥

(१) सामेति २, पु० नास्ति ।

अनन्यविषयत्वेन स्थानमुवथ्यादिषु स्थितम् ।
होषादिस्तु बहुस्थानः क स्यादिति न गम्यते ॥

युक्तमुवथ्यादीनां प्रदेशान्तरेष्वदृष्टेर्लौकिकत्वाच्च क्रत्वन्तरनिवेशित्वम् । न हि तेषां स्थानान्तरं दृष्टपूर्वम् । न चाविज्ञातस्थानविशेषाणां रूपावधारणं फलसंबन्धो वा । न चान्यत्र वर्त्तमानानां स्वरूपप्रयुक्त उवथ्यादिव्यपदेशसंभवः । योपि वचनान्तरेण स्थानविशेषलाभः सोपि पृथक् क्रत्वर्थत्वाविज्ञानादनयैव फलचोदनया गृह्यतइति तदर्थ एव विज्ञायते । होषादीनां यः पुनः समाम्नायप्राप्तः स्थानविशेषसंबन्धः स तावत्सौभरविधानेन क्रत्वर्थत्वेन फलार्थत्वेन चोपयोजितः(१) । इदानीं तु फलं प्रति स्वतन्त्रस्य होषो विधानाल्लोकवेदसामान्तरभक्त्यन्तरप्रकृतभक्तिवर्त्तित्वादिविशेषो न ज्ञायते क्वावतिष्ठताम् । यदि हि प्रकृत एव विहित इति विज्ञायेत ततस्तस्य ज्ञातस्थानत्वात्संदेहो न स्यात् । ननु चैकत्वाच्छब्दस्य य एवायं प्रकृतः स्यात्स एव लोकादिष्वपीति तद्ग्रहणेपि तदेव विशेषस्थानं भविष्यतीति । नैतदेवम् । कुतः ॥

एकत्वेपि हि शब्दस्य शक्तिभेदः प्रयोजने ।
तत्र कार्यान्तरस्थानं न स्यात्कार्यान्तरेष्वपि ॥

न शब्दैकत्वेन यत्किंचित्कार्ये स्थानं दृष्टसामर्थ्यं तदेवान्यत्रापीति शक्यते वक्तुम् । न हि यत् देवदत्तस्य युध्यमानस्य स्थानमवगतं तदेव भुञ्जानस्यापि भवतीति गम्यते । कार्यप्रयुक्ता हि स्थानविशेषादयो न स्वरूपप्रयुक्ताः । स्वरूपस्य स्थानान्तरेष्वविभागात् । अतः कार्यान्यत्वादेकस्यापि स्थानभेद-

(१) सौभरफलार्थत्वेन चोपयुज्यतइति २ पु० पाठः ।

प्राप्तिः। न च यत्सौभराङ्गभूतस्य हीषः स्थानं तदेव पुरुषार्थस्या-पीत्यवधारणं शक्यम्। प्रासङ्गिकसौभरसाधनत्वादिति चेत्। न, तस्यैव स्थानविशेषत्वाभात् प्रागसिद्धत्वात्। इतरेतराश्रयं हि स्यात् सौभरसाधनत्वेन स्थानविशेषः तस्माच्च साधनत्वमिति। ननु यथा ऽभ्युदितेष्ट्यां मध्यमादितण्डुला उपादीयमानत्वेपि प्रकृता गृह्यन्ते तथात्र हीषादयो ग्रहीष्यन्ते। युक्तं तत्र प्रकृतगामित्विभजतिवाक्यापेक्षितानां देवतासंयोगवाक्यानां तद्विषयत्वाच्छब्दोपबद्धमध्यमादिविभागस्य च प्रकृतप्रत्ययानतिरेकादन्यत्रासम्भवणम्। इह तु न हीषादीनां तादृक्कारणमस्तीति न लौकिकप्रत्ययो निवर्त्तते। तस्मान्नैवं वाक्यार्थः संभवतीत्ययमपरः परिगृह्यते। यदा सर्वप्रकारमन्विष्यमाणो ऽपि श्रौतः फलसंबन्धो न लभ्यः, तदा सा बाधितरा श्रुति,रिति प्रकृतसाधनलक्षणा विज्ञायते तत्रैषोर्थो भवति। प्रकृताय वृष्टिसाधनाय हीष्शब्दोङ्गमिति। प्रकृतगामी च वृष्टिशब्दस्तत्साधनभूतं सौभरमेव लक्षयति नान्यत्। न चान्यसाधनभूतमप्रतीतेः। सत्यामपि च हीषादीनां प्राप्तौ नियमार्थत्वादर्थवद्वाक्यमित्युक्तम्। ते च हीषादयो यथाभूताः सौभरेणाक्षिप्तास्तथाभूता एव नियम्यन्ते इति विनापि निधनशब्दसंयोगेन सिद्धं निधनत्वमनूद्यते। तद्दर्शयति। वृष्टिकामाय सौभरमस्त्येवेत्यादि। सदेतदधिकरणं गुणक्रियाफलप्रतिपादनपरयोरनन्तराधिकरणयोरुभयोरप्यपवादभूतम्। वृष्ट्यादिशब्देनेवेदं फलं साधनलक्षणीयमिति प्रतिपादनात्। यस्तु वाक्यभेदस्योदित आसीत्स निधनसंबन्धे सति श्रुत्या वा सौभरे विशेषणत्वेनोपादीयमाने भवेत्। न त्विह तदुभयमप्यस्ति। वृष्टिकामपदेनैव संबन्धात्, प्रकरण-

लभ्यत्वाच्च सौभरविशेषणत्वस्य । न च प्रकरणलभ्या विशेषा वाक्यं भिन्दन्ति । तस्माददोषः । इदं त्विह विचारयितव्यं भवति । किं यत्र क्व चन शाखायामधीतस्य सौभरस्य वृष्ट्यादिसाधनभूतस्य हीषादयो नियम्यन्ते उत यत्र हीषनिधनकं पठ्यते तच्छाखागतं वृष्टिकामस्य प्रयोक्तव्यम् । एवमूर्ङ्निधनकम् ऊनिधनकं चेति सद्दशो विचारः । तत्रानियमेन सर्वशाखागतसौभरप्रयोगविकल्पे सति वृष्टिकामादिनिमित्ते हीषादिमात्रनियम इति प्राप्ते ऽभिधीयते । यत्र तन्निधनकं पठ्यते तच्छाखागतैव वृष्टिकामादेः समस्ता गीतिरुपादातव्येति । कुतः ॥

प्रपद्यते रूपविनाशभीतेर्गीतिर्न गीत्यन्तरभक्तियोगम् ।
अतः समस्तैव विकल्प्यमाना यथासमाम्नायमसौ नियम्या ॥

सामरूपं हि समाम्नायादवगम्यते तच्चाल्पेनान्यत्वेनाप्रत्यभिज्ञानादन्यदेव भवति । तत्र यदि शाखान्तरीयायां गीतौ शाखान्तरीयनिधनं प्रयुज्येत ततो रूपान्यत्वं स्यात् । न च वचनादृते ऐरवद्विकारः । तच्छाखागतगीतिग्रहणेनाविरोधोपपत्तेः सर्वत्रासंभवाद्विकाराश्रयणम् । अस्ति चात्र गतिः । विकल्पप्राप्तौ चायं नियमः । समस्तस्य च साम्नः पदार्थत्वाद्विकल्पप्राप्तिः सावयवानाम् ॥ अतो नान्यदीयनिधनविधानम् । अत एकदेशनियमे सति काम्यभोजिन्यायेन समस्तनियमः । एषोपि चात्र वाक्यार्थः संभवति । उभयोः प्राप्तयोः संबध्यमानं विधीयते । यद्वृष्टिकामाय सौभरं यच्च हीषित्येवं निधनं तदेकत्र संपादनीयमिति । तस्मात्समस्तगीतिनियम इति सिद्धम् ॥

इति श्रीभट्टकुमारिलविरचिते वार्तिके द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

शुभं भूयात् ।

# तन्त्रवार्तिके।

## द्वितीयाध्यायस्य तृतीयः पादः।

---

श्रीगणेशाय नमः।

## गुणस्तु क्रतुसंयोगात्कर्मान्तरं प्रयोजयेत्संयोगस्याशेषभूतत्वात् ॥१॥

ज्योतिष्टोमे प्रथमं बृहद्रथंतरे वैकल्पिके पृथक्(१)पृष्ठसाधनत्वेन चोदिते ततः पुनः श्रूयते यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान्गृह्णीयाद्यदि बृहत्सामा शुक्राग्रानिति। तत्र सगुणं कर्म श्रूयमाणं संदिह्यते किं कर्मान्तरं ज्योतिष्टोमात्, उत तस्यैव ग्रहाग्रताविशेषं(२)प्रति रथंतरावच्छिन्नस्य निमित्तार्थं श्रवणमिति। तत एतत्सिद्ध्यर्थमिदं विचारयितव्यं किमयं क्रतुसंयोगो रथंतरस्य, अथ सत्तामात्रसंयोग इति। तत्सिद्ध्यर्थमप्येतच्चिन्तनीयम्, किं क्रतुविशिष्टं रथंतरमुत रथंतरविशिष्टः क्रतुरिहाश्रीयते। ननु च यदिशब्दोपबन्धादिह निमित्तं प्रतीयते तस्य चोद्दिश्यमानत्वात् विशेषणविशेष्यभावो नावकल्पेत। भवेन्निमित्तार्थत्वमेतस्य यदि यादृगयं प्रत्येष्यते तादृशस्य कुतश्चित्प्राप्तिर्विज्ञायेत। अप्राप्तिपक्षे तु वचनाद्विधानमापद्यते।

---

(१) पृथगिति ३ पु० नास्ति।

(२) विशेषमित्यस्य स्थाने विधानमिति २ पु० पाठः।

निमित्तत्वमपि च यादृशस्येह श्रूयते यदि तादृशो ज्योतिष्टोम-स्ततस्तस्यैव गुणार्थत्वेन श्रवणमिति संगंस्यते(१) यदि तु तादृङ् न भवति ततस्तादृशत्वमापाद्य निमित्तीकर्त्तव्यः। यत्संबन्धाच्च प्राङ्निमित्तत्वमेव नोपजायते भवति तन्निमित्तस्यापि विशेषणं, यथाऽऽर्त्यधिकरणे वक्ष्यते न्मृथ्यामच्चे चविषा विशेषणमिति, त-स्मान्न विशिष्टानुवाददोष इति। किं तावत् प्राप्तं प्रकरणाद्रथन्त-रसामत्वस्य बृहत्सामत्वस्य च वचनान्तरेण प्राप्तेर्यदिशब्देन च प्राप्त्यपेक्षत्वनिमित्तत्वप्रतीतेः शब्दाशताविशेषस्य च प्रयोगवच-नेन ग्रहणाद्बलीयसा च विरोधिना गुणान्तरेणानवरोधात्त-त्संनिधेर्गुणार्थेन पुनः श्रुतिरित्यकर्मान्तरत्वम। एवं सिद्धान्तं प्राप्तं तुशब्देन व्यावर्त्य सौत्रः पूर्वपक्षः परिगृह्यते कर्मान्तरमि-ति॥ कुतः॥

समासः सति सामर्थ्ये तच्चापीष्टं विशेषणे।
विशेषणं व्यवच्छेत्तृ ज्योतिष्टोमे च नास्ति तत्॥

गुणश्चापूर्वसंयोगे इति पूर्वकर्मासंबद्धो गुणो भेदक इत्युक्तम्-इह च बहुव्रीह्यर्थसद्भावस्य यदिशब्दोपबन्धेन निमित्तत्वं गम्यते न रथन्तरसत्तायाः उपसर्जनत्वात्। न च क्रतुविशिष्टं रथन्तर-मिह प्रतीयते। येन तदेव निमित्तं कल्प्येत। न च तत् क्रतुना-ऽवच्छेत्तुं शक्यते अन्यत्रापि विद्यमानत्वादेवं हि तदर्वाच्छ्यते यदि रथंतरमस्यैव सामेति, न त्वेवं संभवति। तस्माद्वश्यमेवं कर्तव्यं यदि रथन्तरमेवास्य सामेति, न चैवमात्मकत्वं ज्योति-ष्टोमस्यान्यस्य वावगतं यन्निमित्तं भवेत्। अतो निमित्तप्रतीतिं परित्यज्य तदन्यथानुपपत्त्यैव केवलरथन्तरसामककर्मान्तरवि-

(१) सम्यतवति २। ३ पु० पाठः।

भिरध्यवसीयते। शक्यं हि तदपूर्वं कर्तुम्। न च रथन्तरसत्ता-
मात्रं विशेषणमव्यापकत्वात्। न विशेषणादृते सामर्थ्यं, न च
सामर्थ्येन विना समासो ऽवकल्पते इष्यते वाभावश्चेति पूर्व-
स्याशाप्रत्यभिज्ञानम्। अथ कस्मात् स एव केवलरथन्तरसाम-
कः पक्षे न क्रियते, न शक्यमेवं कर्तुम्। साक्षाद्विहितस्तोत्र-
संबन्धिसामान्तरविरोधात्। इदं हि क्रतुसंबन्धेन श्रुतमानर्थ-
क्यात्तदङ्गेष्वित्यनेन न्यायेन स्तोत्रेष्ववतरति, गायत्र्यादीनि तु
स्तोत्रेषु साक्षाद्विधीयन्ते तस्माद्बलवन्ति। क्रत्वन्तरे तु प्रत्यक्ष-
शिष्टं रथन्तरं तेभ्यश्चोदकप्राप्तेभ्यो बलवत्तरं भवतीत्यदोषः॥
एवं चान्यपदार्थविधानात्तत्प्रधानो बहुव्रीहिरनुग्रहीष्यते। अ-
न्यथा ह्युपसर्जनपरत्वं लोहितोष्णीषादिवाक्यवदगत्या परिगृ-
ह्येत। यदि च शुद्धाशुद्धताविधानेन सहैतदेकं वाक्यं ततस्त-
स्यापि रथन्तरविधानं चानेकत्वादपूर्वभावनाविधिनैव निस्तीर्य-
ते। सोमः स्यादिति चानन्तर्यात् तत्कर्त्तव्यतैव विज्ञायते, रथ-
न्तरसामत्वकर्त्तव्यता तु व्यवहितकल्पनयैव स्यात्। सोमशब्देन
च प्रकृतिलिङ्गेन ज्योतिष्टोमप्रकृतिरेवायं भविष्यति। तस्मात्क-
र्मविधि,रिदमेव भाष्यकारो दर्शयति यदि रथन्तरसामेत्यस्य
कोऽर्थं इत्यादिना। शुद्धाशुद्धताविशेषणस्यैव क्रतोर्वाक्येनावान्त-
रप्रकरणेन वा भविष्यति। यद्यपि महावाक्येष्ववान्तरवाक्या-
न्यप्रमाणं तथाप्यर्थासंभवादविवक्षिते महावाक्ये ऽवान्तरवा-
क्याश्रयणाद्विधिशक्तेरबाधः। परित्यागादृरमध्याहृत्य पूर्व-
मिति मत्वा अथ वा यदि रोचेतेति दर्शयति॥ तत्कर्त्तव्यता-
[illegible] प्रमाणवानेवाध्याहार इति न समनीषि-
कामात्रमभिहितम्। अध्याहारादपि स्वपदवृत्तिरेव [illegible]-

तत्कल्पनया लघीयसी धर्मग्राहबाधादिति मत्वा यदि शान्तिं भुञ्जीतेत्युदाहृत्य पक्षान्तरं कल्पयति ॥ परस्तु दृष्टान्तस्यैवासिद्धेः कथं पुनरिति पृच्छति । व्यत्ययेन संबन्धः, कामप्रवेदने च लिङ्, इच्छां प्रत्याययतीति सिद्धान्तविवरणम् । तत्रैष वाक्यार्थो भवति । यद्यैन्द्रवायवान् ग्रहान् ग्रहीतुमिच्छेद्रथन्तरसामानं क्रतुं कुर्यादिति । ततश्च यदिशब्दरहितं सोमः स्यादिति पदद्वयं विधायकं, ग्रहान् गृह्णीयादिति एतत्तु यद्यप्यविधायकं तथापीच्छार्थत्वाद्या हि यदिच्छति स तत्करोतीत्येवं विधिफलं लप्स्यते । अथ वेच्छामात्रयुक्तमुपात्तं ग्रहाग्रत्वं स्यादित्येवैव लिङ् विधास्यति । विनैव व्यवहितकल्पनया ऽप्ययं पक्षो भवन् बलवत्तर इति मन्वानो ऽथ वा हेतुहेतुमतोर्लिङित्युपन्यस्यति । तत्र सोमः स्यादिति हेतौ लिङ्, गृह्णीयादिति विधावेव । तेनैतदुक्तं भवति । रथंतरसामसोमहेतुकानैन्द्रवायवाग्रान् ग्रहान् गृह्णीयादिति । न चाक्रियमाणे ऽसौ हेतुत्वं प्रतिपद्यत इत्यर्थाद्विहितो भविष्यतीति । अथ वा हेतुमति गृह्णीयादिति लिङ् सोमः स्यादिति विधावनुक्तमपि च सोमस्य हेतुत्वं हेतुमदाक्षेपात्संनिधेश्च भविष्यति । तत्राप्येषोऽर्थो ग्रहाग्रताविशेषकारणभूतः सोमयागः कर्तव्य इति ॥

यदिशब्दपरित्यागो रूढ्यध्याहारकल्पना ।
व्यवधानेन संबन्धो हेतुहेतुमतोश्च लिङ् ॥

इति पक्षविकल्पसंग्रहश्लोकः । सर्वं चैतदवेष्ट्यधिकरणसिद्धान्तएवोपयोक्ष्यत इत्यत्र प्रपञ्चितम् । किं च ।

निष्पन्नेन निमित्तेन निष्पाद्यं प्रतिभण्यते ।
न रथंतरता च निष्पन्ना क्रतुसंस्तवात् ॥

प्रातःसवने हि ग्रहाग्रता भवति माध्यन्दिने रथंतरं, न चा-निष्पन्नस्य निमित्तता युक्ता ॥ कारणपर्यायत्वान्निमित्तशब्द-स्य,मम तु नैव किं चिन्निमित्तम्। अथ वा क्रतुः स चादित एव विद्यते जगत्सामा च न ज्योतिष्टोम इति जगत्साम्नि सामा-भावादिति वच्यते। अतश्च तत्सामान्यादितरेषु तथात्वमिति कर्मान्तरत्वमिति ॥

## एकस्य तु लिङ्गभेदात्प्रयोजनार्थ-मुच्येतैकत्वं गुणवाक्यत्वात् ॥ २॥

पूर्वोक्तैरेव हेतुभिर्ज्योतिष्टोमस्य गुणविधिरयं न कर्मान्तर,-मेकस्यैव हि तेन लिङ्गेन रथन्तरसामत्वेन बृहत्सामत्वेन च ग्र-हाग्रताविधिप्रयोजनार्थमुच्चारणं क्रियते। गुणवाक्यत्वाच्चाक-र्मान्तरप्रत्यये सत्येकत्वं विज्ञायते ॥ अथ वा रथन्तरादिविधा-नाज्ज्योतिष्टोमस्य गुणवाक्यैरेवमात्मकत्वं चोदितमिति नार्था-न्तरत्वं प्रतीयते। ततश्च कर्मैकत्वम्। यत्तु विशेषणाभावान् सामान्तरसापेक्षविशेषणत्वाद्वा रथन्तरसामेति समासो ना-वकल्पत इति। तत्र ब्रूमः ॥

दृश्यते पाक्षिकं वस्तु सत्तयैव विशेषणम्।

विग्रहे यद्विशेष्यत्वं तस्य चेह निमित्तता ॥

यदि हि रथन्तरं नित्यं ज्योतिष्टोमे ऽन्यसहितं वा स्यात्त-तो न व्यवच्छिन्द्यादपि, यतस्त्वरथन्तरोपि ज्योतिष्टोमप्रयोगो-स्त्येव ततस्तद्व्यवच्छेदमुखेनास्ति विशेषणफलम्। यदि चेवकारं विना विशेषणबुद्धिर्न भवति तत एवमसौ दर्शयितव्यो यदि रथन्तरं सामास्यास्त्येवेति ॥ बहुव्रीहेश्च मत्वर्थवर्तित्वादनुप-

स्यास्तित्वयोगविषयत्वात् नैवकारस्याश्रुतसत्तासंबन्धकल्पना ॥ यद्वा यदि रन्तथरं सामैवास्य भवतीति, तत्र कोऽर्थ एवशब्दस्य तद्धि रथंतरं यद्यपि सर्वदा साम तथापि यदा क्रतौ न भवति तदा तं प्रति सामकार्यासत्त्वादसामैवेति, सत्तापक्षे रथंतरं सामेति वच्यते । अवश्यं च क्रत्वपेक्षमेवैतत्सामत्वं वक्तव्यम् । रथंतरस्वरूपे सामत्वस्य नित्यं पौनरुक्त्यात् । न च रथन्तरस्य सापेक्षत्वं ज्योतिष्टोमे, येन समासो न स्यात् । द्वन्द्वनिर्दिष्टेषु ह्येकस्तोत्रविषयेषु चैतत् भवति । केवलेषु तु भिन्नस्तोत्रविषयसाधनेषु प्रत्येकनिरपेक्षमेव साधनत्वमिति सामर्थ्यं न विहन्यते । यद्वा पौनरुक्त्याद्देव सामशब्दस्तत्साध्यस्तोत्रलक्षणार्थः सन् रथन्तरपर्युपस्थापितं पृष्ठं लक्षयति । अथ वा बृहद्रथंतरयोरवान्तरप्रकरणादवान्तरकार्ययोगाच्च विरोधिनोः स्पर्द्धमानयोर्यथावस्थितानुवादसामर्थ्यात्सामान्तराण्यनपेक्ष्य परस्परावच्छेदेनैव विशेषणत्वसिद्धिः । तेनोपपन्नं रथन्तरविशिष्टस्य क्रतोर्निमित्तत्वम् । अथ वा ऽस्तु रथन्तरं क्रतुविशिष्टं निमित्तमिति । ननु च तदेव न प्रतीयते । उच्यते । सत्यं न प्रतीयते किं तु यदा समस्तक्रतुसंयोगाभावाद्रथन्तरविशिष्टः क्रतुर्न गृहीतः तदा विगृह्यमाणे समासे यो विपरीतो विशेषणविशेष्यभावः प्रतीयते रथन्तरमस्य सामेति स ग्रहीष्यते । षष्ठ्यन्तत्वाच्च क्रतुर्विशेषणमेव समासाभिव्यङ्ग्यविशेष्यत्वभावात्तथा विवक्षिष्यते । यद्यपि च क्रत्वन्तरेष्वपि वस्तुस्वरूपेण रथंतरमस्ति तथाप्यत्र तावद्विद्यते तावन्मात्रेण च विशेषणत्वोपपत्तिः । स्ववाक्ये चासाधारणत्वं विशेषणकारणं न वस्तुतत्त्वं, मा भूत्तीव्रमुत्पन्नं देवदत्तस्य गौरत्वश्यामादीनां विशेषणत्वोच्छेदः ॥ तथा हि ।

न लोके देवदत्तस्य गोसंबन्धोऽस्ति केवलम् ।
उत्पन्नस्य च नोन्नत्वं तस्यैवोच्येत येन तत् ॥

यदि च वस्तुत एवासाधारणत्वं भवेन्नैव शब्देन विशेषणमुपादीयेत। न ह्यत्र विशेषणफलमस्ति अग्निरुष्ण इति। तस्मादवश्यं वाक्यगतमेवासाधारणत्वमाश्रयितव्यम्। अस्ति चात्रापि तत् ज्योतिष्टोमगतस्यैव रथंतरस्य निमित्तत्वेनेष्टत्वात्॥ प्रथमतरप्रतीतं च रथंतरं निमित्तत्वेनोत्सृज्य न निमित्तान्तरकल्पनायां प्रमाणं विद्यते। तस्मादुभयथाप्यदोषान्निमित्तमिति न यदिशब्दपरित्यागादीनामाश्रयणं युक्तम्। न च कामप्रवेदनहेतुमत्प्रतीतिस्तावद्भवतीति यावन्निमित्तत्वमेव न प्रतीतम्। तत्संभवे च नाप्रतीताश्रयणं युक्तम्। भूतभविष्यद्वर्तमानानां चानियमेन लोके वेदे च निमित्तत्वं दृष्टमिति रथंतरभविष्यत्त्वमचोद्यम्। अपि च। यदैकान्तेनावधारितं तत् निष्पन्नमेव, ज्योतिष्टोमप्रक्रमे चावधारितमेकान्तेन रथंतरं प्रयोज्यत इति सर्वैकल्पिकानां क्रतुप्रक्रम एवावधारणादवश्यमृत्विग्यजमानैरेवमिदं कर्तव्यमित्यवधार्य प्रवर्तितव्यम् ॥ तद्वशेन प्रयोगकौशलाभ्यासादिसिद्धिः। न च निमित्तं नैमित्तिकस्य स्वरूपसंनिधानेनोपकरोति कथं तर्हि ज्ञायमानत्वेन। तस्मादप्रयुक्तमपि संकल्पितत्वाद्रथन्तरं निमित्तं, यदा त्वेकदेशस्थेनापि तेन विशेषणः क्रतुर्निमित्तं तदासौ वर्तत एवेत्यविरोधः॥ न च लिङः कालविशेषसंबन्धेनोत्पत्तिर्येनान्यतरविषयमेव निमित्तं ब्रूयात्। सर्वथा हि शक्यं दर्शयितुं यदि रथंतरसामा सोमो भूतो भवति भविष्यति चेति। तदेवार्थवशेनैव विज्ञायते यदि रथन्तरं भविष्यतीति। यत्तु जगत्साम सामान्यतो दृष्टमुक्तं तदयुक्तम्॥

तस्यैवंजातीयकेषु अप्रमाणत्वात्। अथ वा प्रकरणे द्विरवबद्धत्वयु-
क्तप्रतिपद्विधानादिव जगत्यामत्वासंभवात्तदिति वैषम्य,मपि च
तत्रापि नैवापूर्वकर्मोत्पत्तिः, किं तर्हि अप्रकृतस्य विषयतो नि-
मित्तत्वेन ग्रहणम्। तस्मान्निमित्तार्थानि सर्वाणि श्रवणानीति ॥

## अवेष्टौ यज्ञसंयोगात् क्रतुप्रधा-
## नमुच्येत ॥ ३ ॥

राजा राजसूयेन स्वाराज्यकामो यजेतेत्यस्य प्रकरणे आग्ने-
यो ऽष्टाकपालो हिरण्यं दक्षिणेत्यादिभिर्द्रव्यदेवतासंयोगैरवे-
ष्टिसंज्ञकामिष्टिं विधाय श्रूयते। यदि ब्राह्मणो यजेत बार्हस्प-
त्यं मध्ये निधायाहुतिमाहुतिं हुत्वाभिघारयेद्यदि राजन्य ऐ-
न्द्रं यदि वैश्यो वैश्वदेवमिति। तत्र पूर्ववदेव संदेहः किं राज-
सूयमध्यस्थाया एवावेष्टेर्वर्णविशेषसंबन्धं प्राप्तमेव निमित्तत्वेनो-
द्दिश्य तत्र नैमित्तिकं विधीयते उताप्राप्तमेव ब्राह्मणादिसंबद्धं
प्रयोगान्तरमुद्दिश्यत इति। तत्सिद्ध्यर्थं चैतत् विचारयितव्यम्।
किं राजसूये ऽधिकारस्त्रयाणामपि वर्णानामुत क्षत्रियस्यैवेति।
तत्सिद्ध्यर्थमधिकारिविशेषणभूतो राजशब्दः तथैव विचारणी-
यस्ततोऽप्येतद्विचारयितव्यम्। किं क्षत्रियत्वनिमित्तो राजशब्द-
उत राज्यकरणनिमित्त इति। ननु चैतया ऽन्नाद्यकामं याजये-
दिति वर्णविशेषणासंबन्धं पृथग्राजसूयप्रयोगवचनादेवावेष्टेर्व-
चनमस्तीति वर्णत्रयस्यापि प्राप्तस्य निमित्तार्थमेव श्रवणं भवे-
त्तैतदेवम्। तदा हि निर्ज्ञातक्षत्रियकर्तृकायाः कर्मान्तरे वच-
नान्तरेणाविधीयमानायाः पृथक् प्रयोगकारणाभावाच्च राज-
सूयमध्यस्थाया एवैतस्य स्वभवतो संयोगपृथक्त्वन्यायेन न्याये-

न साधारणं च स्वाराज्यं फलं प्रात्यात्मिकं चाम्नायं विज्ञायते । पृथग्वा राजन्येनैव फलार्थिना प्रयुज्यते न वर्णान्तरसंबन्धः । तद्यथा ऽध्ययनाधानयोर्निर्ज्ञातत्रैवर्णिककर्तृकत्वात्तदधीनसिद्धीनां कर्मणामर्थिमात्रसंबन्धावगमेऽपि सत्यपशूद्रविषयत्वमेवावतिष्ठते । यथा चात्रैव स्वाराज्यकामाविशेषेऽपि राजकर्तृकत्ववशेन भोक्तृविशेषो भविष्यति । तस्माद्राजसूयाधिकारेऽवैभिर्वा वचनैः प्राप्तिरिति द्वावेव पक्षौ ॥ किं तावत् प्राप्तं पूर्वाधिकरणेनैव निमित्तार्थानि श्रवणानीति, राजसूयाधिकारस्य सर्व राजशब्देन त्रयाणामपि वर्णानां, राज्यकरणं च शब्दप्रवृत्तिनिमित्तमिति । तथा हि ॥

कर्ता राज्यस्य राजेति सर्वलोकेषु गीयते ।
सत्त्वाविषयतैवं च शास्त्रस्यापि भविष्यति ॥

उभयसंभवे तावत् त्रैवर्णिकविषयता युक्ता कल्पयितुमेवं हि निमित्तप्रतीतिस्तत्प्रकरणादीनि च न बाध्यन्ते ॥ राजसूयाधिकारश्रुतिस्थानत्वपविषयत्वेन स्वरसात् प्रवर्तमाना न निवर्तिता भविष्यति । तस्माद्राज्यं कुर्वन्तः सर्वत्रैवर्णिका राजानस्तस्य राज्यं जनपदपरिपालनं नाम सर्वलोकप्रसिद्धम् । ततश्चोद्धरणं राज्येऽपि कण्टकोद्धारणमभिप्रेतम् । आर्यावर्त्तवासिन इति शास्त्रस्था वा तन्निमित्तत्वादित्यस्य प्रदर्शनार्थम् । राज्ञः कर्म राज्यमित्येतदभियुक्ता उपदिशन्तीत्येतद् ब्रुवता ननु राजशब्दस्यैव प्रकृतिभूतस्य स्वातन्त्र्यमभ्युपगतं भवति । तथा हि ।

नैवाश्वमेधसंबन्धादश्वमेधः प्रसिध्यति ।
स्वातन्त्र्येणाश्वमेधेन स एव त्वनुगम्यते ॥ उच्यते ॥

राजा क्षत्रिय एवेह स्वातन्त्र्येण निरंतरैः ।

**तद्योगात् कल्पितं राज्यमस्माकं तु विपर्ययः ॥**

यथैव गामानयेत्यभिहिते यद्यपि व्यवहर्तृभिः यो गौः स
आनेतव्य इति वचनं कल्पितं तथापि पार्श्वावस्थितस्य यस्य
गोत्वमप्रसिद्धमानयनं च प्रसिद्धं स छेदनादिभ्य इव यूपमेवं प्र-
तिपद्यते य आनेष्यते स नूनं गौरिति । तथैवात्र यद्यपि मन्वा-
दिभिः पाणिनिप्रभृतिभिश्चैवं स्मृतं यो राजा तेन जनपदादि-
रक्षणं कर्तव्यम्, यस्य राजा तस्य कर्म राज्यमिति । तथापि
वयं संदिग्धराजकाः प्रसिद्धराज्याश्च सन्त एवं प्रतिपद्यामहे
येनैवं स्मर्तृभिरुक्तं तेन नून बन्धनसमर्थे द्रव्ये यूपवत् राज्यका-
रणसमर्थद्रव्यालम्बन एव राजा तैर्निरूपित इति । तच्च राज्य-
मविशेषेण चत्वारोपि वर्णाः कुर्वाणा दृश्यन्ते । तस्मात्सर्वे रा-
जानस्तत्र तु न्यायान्तरेण ब्राह्मणादिषु चरितार्थायां राजश्रु-
तावध्ययनादीनामभावे सति कामं शूद्रः पर्युदस्येत न त्वितर-
पर्युदासे हेतुरस्तीति त्रयाणामप्यधिकारः ॥ ननु च क्षत्रियसंब-
न्धेन राज्यं विहितमन्यायेनेतरौ कुर्वाणौ न राजानौ स्याता-
म् ॥ नैष दोषः । सर्वथा तावद्राज्यकरणात्ताभ्यामपि राजत्वं
लब्धं तावता च राजसूयचोदनायाः प्रयोजनं, यौ तु न्यायान्या-
यौ तयोः पुरुषधर्मत्वात् नैकोपि क्रतुना गृह्यत इत्यविशेषः ॥
ननु च जनपदरक्षणावृत्तिमनुपजीवत्यपीति सिद्धान्तबीजोप-
न्यासः ॥ उक्तं ह्येतद्धर्विराज्यादिशब्देषु यथैकदेशेपि जाति-
निमित्तत्वे लभ्यमाने निमित्तान्तरं न कल्पनीयमिति । परः
पुनर्यौगिकग्रहणमाश्रोपकारकमिति प्रदर्शयति प्रकरणवशा-
द्यदिशब्दसमभिव्याहाराच्चेति । न कर्मान्तरं विधास्यत इति
प्रयोगान्तराभिप्रायेण । अथ वा [illegible]

त्यादृशी वचनप्रकारा गृह्यन्ते तदेकेनैव वाक्येन ब्राह्मणसंबन्धो बार्हस्पत्याभिघारणं च न शक्यते कर्त्तुमिति मुख्यमेव कर्मान्तरत्वम्। एवं तावदुभयप्रसिद्धिं प्रमाणीकृत्योक्तमिदानीं तु राज्यरहिते प्रयोगः प्रमाणमेव न भवतीति प्रस्तूयते॥ सार्वलौकिकेन प्रयोगेणासार्वलौकिकस्य बाधात्। अपि च। विप्रगीता इति तदेव प्रत्ययितापत्ययितत्वेन पुनरुपन्यस्तम्। न हि सर्वलोकासर्वलोकविदितत्वव्यतिरेकेण विप्रगीताविप्रगीतत्वे विद्येते। यद्वा पूर्वेण प्रसिद्धेः सदसद्भावमात्रमुत्तरेण तु विप्रतिपत्त्यविप्रतिपत्ती, भवति चाज्ञानविपर्ययज्ञानयोर्भेद इत्यपौनरुक्त्यम्। तथा ऽऽर्यावर्त्तनिवासिनामिति शास्त्रस्थवल्लोयस्त्वं पूर्वोपक्षिप्तं दर्शयति। समीचीनतर आचार इति शब्दप्रयोगोऽभिधीयते। तस्मात्प्राप्तानामेव ब्राह्मणादीनां निमित्तार्थं श्रवणम्। अपि च यदि राजन्य ऐन्द्रमित्यसंदिग्धं निमित्तार्थमतस्तु तत्सामान्यादितरयोरपि तथात्वमित्येवं प्राप्ते ब्रूमः॥

क्रतुसंबन्ध एवायं ब्राह्मणादेर्विधीयते।
अप्राप्तत्वान्न राजा हि राज्ययोगात् प्रतीयते॥

क्षत्रियवचन एवायं राजशब्दो न यौगिकः, स हि राज्ययोगाद्वा भवेद्धात्वर्थानुसारेण दीप्तियोगाद्वा उभयथापि चानुपपन्नः। तद्रहितरूढिशब्ददर्शनादेकदेशस्यापि रूढिरवयवप्रसिद्धिं बाधते। न चावयवप्रसिद्धिरप्यनैकान्तिकी विद्यते, न हि दीप्यमानेष्वग्न्यादिषु राजशब्दो विद्यते। न चानभिषिक्ते जनपदपरिपालनव्यापृतेप्यायुक्तके। ननु चायुक्तकस्य परप्रयुक्तकारित्वादृत्विज इव यजमानत्वं न राजत्वं भविष्यति॥ नैवं शक्यम्। पराधीनेष्वपि केषु चित् पृथिवीश्वराभिषिक्तेषु माण्ड-

त्रिकेष्वपि प्रयोगदर्शनात् । तेन तच्छब्दव्यभिचारात्सर्वथाभिषेको निमित्तं प्राप्नोति । नैवं भविष्यति । कुतः ॥

> अभिषेकोऽपि धर्मज्ञैः क्षत्रियस्यैव पठ्यते ।
> सत्त्वासौ राजशब्देन तेन नाक्षत्रिये मतः ॥

ततोऽभिषेकस्य निमित्तत्वं ज्ञायते यद्यस्य स्वातन्त्र्यं भवेद्, यं तु क्षत्रियजातावेव स्मृतिभिर्नियतो विधानवेलायामेव लवनादिवद्बर्हिःशब्देन राजशब्देन संयुज्यते । तेनैव चोभयनिमित्तत्वं समुदायशब्दन्यायेनैतस्यानिष्टं, यदि हि जात्यभिषेकयोरत्यन्तसमुदितयोरेव प्रयुज्यते न तु केवलायां जातौ जात्यन्तरे वाभिषेको विधीयते तत उभयं निमित्तमिति कल्प्येत, स त्वभिषेकात् प्रागेव तत्संस्कार्ये प्रयुक्तो राजानमभिषेचयेदिति, तस्माद्राजजातावेव प्रज्ञायते । न च भाविसंज्ञाविज्ञानं भूतत्वेनैवोपपद्यमानत्वात् । अगत्या हि सा ऽन्यत्राश्रीयते । न चैकस्मिन्निमित्ते सिद्धे निमित्तान्तरं कल्पयितुं शक्यं विनापि तत्कल्पनेन प्रयोगोपपत्तेरभिषेकनिमित्तत्वेऽपि च न्यायानुसारिणां नैवाक्षत्रियविषयत्वं सिध्यति । यस्तु धर्मशास्त्रातिक्रमेण क्रियेत न तस्य निमित्तत्वं स्यात् । यथा शूद्रकृतस्याधानस्य नाहवनीयादिप्रयोगनिमित्तत्वम् । अपि च ॥

> नित्याः शब्दार्थसंबन्धा यथावस्थितगामिनः ।
> नाश्रयन्त्यध्रुवं चैतु स्वच्छन्दपरिकल्पितम् ॥

नित्यस्य हि राजशब्दस्य नित्येनैव निमित्तेन भवितव्यं नित्यानित्ययोः संयोगाभावात् ॥ सा च नित्यता वस्त्वपेक्षया वा विध्यपेक्षया वा निरूप्यते ॥ तत्र न तावदभिषेको वस्तुरूपेणैव जातिवत् केषुचित्स्वभावतो दृश्यते । तेनावश्यं विधानापेक्षयैव

लिङ्गप्रयोगाच्छ्रयणीयम् । न च विधानमन्तरेण क्षत्रिये राजशब्दस्या-
स्तीति जात्यव्यभिचार एवापद्यते । ततश्च सैव निमित्तमेतेन
राज्यनिमित्तत्वं प्रत्युक्तम् । तदपि हि विधानात् प्रभृति अभि-
षेकवदेव क्षत्रियत्व संबद्धं, दृष्टश्चानभिषिक्तेऽपि अपालयति च
जनपदं क्षत्रिये राजशब्दप्रयोगः ॥ तद्वत्यपि वान्यजातीये अ-
नभिधानं द्रविडानाम् तस्मादपि न त्रैवर्णिको राजा । तथा च
राज्ञापत्यं राजन्य इत्यैकान्तिकक्षत्रियजातिवचनस्य राजन्य-
शब्दस्य राजशब्दप्रकृतित्वमेवान्वाचष्टे । अन्यथा त्रैवर्णिकानां
राजत्वात्सर्वेषां त्रैवर्णिकानामपत्येषु राजन्यशब्दप्रयोगः स्यात् ।
कुतः ।

राजन्यः क्षत्रिये रूढो राजानः सर्व एव चेत् ।
अपत्यापत्यवद्योगे वैषम्यं वद कीदृशम् ॥

नन्वेवमप्यनुपपन्न एवायमपत्यप्रत्ययः । तथा हि ॥

प्रकृतौ तदपत्ये च जातिशब्दस्य तुल्यता ।
तेन राजैव सर्वत्र राजन्योऽप्यभिधीयताम् ॥

यथैव काकस्यापत्यं काक एवं राज्ञोऽपत्यं राजेत्येव स्यात् ।
नैष दोषः ॥ पर्याय एव हि राजशब्दस्य राजन्यशब्दोऽनेन प्र-
कारेणान्वाख्यायते स त्वेकजातिविषयत्वे सति तथान्वाख्यातुं
युज्यते नान्यथा ॥ ननु राज्ञोऽपत्ये जातिग्रहणमिति वचनात्
क्षत्रियजातिवचनो भविष्यति । नैतदेवमिहान्यतमजात्यनुपा-
दानाद्राजवन्मनुष्यजातिमात्राधिकारात्तद्वचनत्वं स्यात् । ननु
च राजराजन्यशब्दयोस्तत्र तत्र कर्मभेदोपदेशेन स्मृतिविदां
याज्ञिकानां च भेदेन प्रसिद्धिर्दृष्टा । सत्यं दृष्टा सा तु ब्राह्म-
णपरिव्राजकन्यायेन राजन्यशब्दस्याभिषिक्तविशेषणार्थमिति

सामर्थ्यमभ्यस्तात् । यत्तु प्रसिद्धिद्वयसंभवे राज्यनिमित्तत्वं प्र-
करणादिभ्यो विज्ञास्यत इति तन्निराक्रियते । तथा हि ॥

नैव तावदुभौ शब्दौ स्वातन्त्र्येण प्रसिध्यतः ।
रूढायामेकशक्तौ हि द्वितीया यौगिकी वरम् ॥

तदेतद्दर्शयति यदि तावज्जातिशब्दो राजेति ततस्तस्य क-
र्म राज्यमित्यवयवप्रसिद्धिसंभवान्न तन्निरपेक्षं शक्त्यन्तरकल्पन-
मुपपद्यते । विनैव तेनार्यावर्तनिवासिनां प्रयोगो न विरोत्स्यते ।
अथ तु प्रथममेव राज्यमिति प्रतिपालनं रूढिरूपेणाभिधीय-
ते । ततस्तच्छक्त्यनुसारेणैव तत्कर्तरि राजशब्दप्रयोगसिद्धेः
शक्त्यन्तरकल्पनमन्तरेणैव द्रविडानां राज्याधिकारयोग्येषु
क्षत्रियेषु प्रयोगो न विरोत्स्यते । दाक्षिणात्यत्वसामान्येनान्ध्रा-
णामिति भाष्यकारेणोक्तम् । तस्मान्न तावदुभावपि रूढिश-
ब्दौ नापि यौगिकौ । अन्यतररूढित्वे तु राजशब्दस्य तत्कल्प-
ना युक्ता । कुतः ॥

आचारयोरसंबन्धे संदेहे सति निर्णयः ।
सन्निबन्धनया स्मृत्या बलीयस्त्वादवाप्यते ॥

राज्यशब्दाभिधेयं परिपालनादि कर्म क्षत्रियस्येति मन्वाद-
यः स्मरन्ति । पाणिनिप्रभृतयोऽपि राज्ञः कर्मेदं राज्यमित्येवं व्यु-
त्पादयन्ति । गुणवचनब्राह्मणादिभ्यः कर्मणि चेत्यधिकृत्य स-
मन्तरूढात् राजप्रातिपदिकात प्रत्ययविधिस्तत्र ष्यञ्प्रत्ययं वि-
दधतीत्यत्र वदन्ति । पत्यन्तपुरोहितादिपाठाद्राजशब्दस्य विशे-
षविहितेन यका भवितव्यम् । तथा च यक्प्रत्ययस्वर इत्योपल-
भ्यते साधुदात्तत्वं तस्माद्राजशब्दाद्राज्यशब्दव्युत्पत्तिर्न तु विप-
रीतत्वेनाख्यानपरमेव भाष्यं द्रष्टव्यम् । राज्यशब्दाद्धि राजनि

व्युत्पाद्यमाने यत्नोपात्तानं वा राजशब्दादेशात्मकं वा स्मरणं
स्यात् ॥ तस्मादियमेव वचनव्यक्ती राज्ञः कर्म राज्यमिति ॥ न
त्वर्थापत्त्या राज्यस्य कर्त्ता राजेति कल्पनीयं देशान्तरे विशा-
मत्वाद्राज्ञः कल्पितायामपि चार्थापत्तौ मन्वादिस्मृतिवशेन क्ष-
त्रियस्यैतत्कर्मेत्यवधारणात्स एव राजा विज्ञायते । सकलस्य रा-
जेतिशब्दो राज्येनुप्रविष्ट इति स यौगिको युक्तः । ननु राज्य-
शब्दो राजन्यनुस्यूतः सकल इत्ययौगिकत्वम् । सत्यमेवं राज्य-
शब्दस्य यौगिकत्वमुपपद्यते ॥ यस्तु तत्कारिणि जात्यन्तरे रा-
जशब्दप्रयोगः स क्षत्रियत्वाभावान्न प्राप्नोति तेन नार्यावर्तनि-
वासिनां प्रयोगः सकलो न विरुध्यते । यथा न शूद्रराज्ये निव-
सेदित्यादीनामाप्तप्रयोगाणां बाधः स्यादित्यत आह । योगा-
त्तोक्तः प्रयुङ्क्तइति । प्रथमं तावद्राजयोगाद्राज्यं पुनस्तद्योगाद्
ब्राह्मणादिषु राजशब्दोपचार इति । नन्वेवं सति राज्ययोगा-
दपि राजेत्येतदभ्युपगतमेव । नैष दोषः । गौणत्वाभ्युपगमात्
मुख्यत्वाभ्युपगमे ह्यधिकरणं परावर्तेत । गौणत्वं तु मु-
ख्येन बाधितत्वादभ्युपगतमपि सिद्धान्तं न विरुणद्धि । तेन
तत्कार्यापन्ने प्रतिनिधिन्यायेन ब्राह्मणादौ राजशब्द इति
द्रष्टव्यम् । तथा च दर्शयति न त्वेवं स्मरन्ति राज्ययोगा-
द्राजेति । तच्चैतदाचारस्य दौर्बल्याद्गौणकल्पनाश्रयणमि-
त्येवमेव भाष्यं नेयम् । यत्त्वोदमेधिशब्दादिवत् प्रकृत्यर्था-
नुमानं तद् द्रविडप्रयोगेण प्रत्यक्षेण बाध्यते । अथ राज्यस्य क-
र्त्तैवमभिधीयते इति । निमित्तभूतोपि कर्मकर्तृसंबन्धस्तस्य च
स्मरणमनुमातव्यम् । राज्ञः कर्म राज्यमिति प्रत्यक्षं स्मरणं त-
स्मादुत्तरम् । पर आह । यो यो राज्यं करोतीति सर्वेषां

ऽन्वयव्यतिरेकाभ्यां वाच्यवाचकसंबन्धो विज्ञायते। स च राज-
शब्दस्याव्यभिचारेण राज्यनिमित्ततया च गम्यते न तु राजक-
र्मनिमित्तत्वेन, स्मृतेः पुनः शब्दापशब्दविभागमात्रविषयत्वा-
दविषय एवायम्। उभौ हि राजराज्यशब्दौ साधू, तस्मादयुक्तः
स्मरणोपन्यास इति। तच्चोच्यते। सत्यं प्रयोगएव न च स्मृतेः
कस्य किं योगनिमित्तत्वमित्येष व्यापारस्तथापि तु साध्वसाधु-
त्वपरतयैवान्वाख्यानान्निमित्तत्वमवगम्यते। राज्ञः कर्म राज्य-
मिति हि व्युत्पादने तद्योगनिमित्ते राज्यमित्यर्थादुक्तं भवति।
तेन स्मृतिबलीयस्त्वाद्राजशब्द एव स्वतन्त्र इति। प्रयोगोऽपि च
द्रविडेषु व्यभिचारीत्युक्तमेव। भवत्वे तु प्रयोगस्यातन्त्रत्वाद्व्य-
भिचारित्वमदूषणम्। यत्र तावत् प्रयोगस्तत्रास्ति राजकर्मत्वं ते-
न प्रयुक्तस्यान्वाख्यानकरणादप्रयुक्तनिमित्तान्वाख्यानाभावा-
च्चादोषः। किं च ॥

असाधारणभावेन सर्वत्रेष्टं विशेषणम्।
तेन तस्यैव कर्मेति चिन्तितादि न गृह्यते ॥

जनपदरक्षणं ह्यसाधारणं राजकर्म तेन राज्यमित्युच्यते
चिन्तितनिमिषितादि तु राज्ञस्यान्येषां चेत्यव्यवच्छेदान्न राज्य-
शब्दाभिधेयं भवतीति। तेन सार्वलौकिकादपि प्रयोगात्
शास्त्रस्था वा तन्निमित्तत्वादित्यनेनैव राजशब्दस्य क्षत्रियवच-
नत्वम्। तुल्यस्यान्त्यजनपदवासिनामपि दृष्टार्थत्वात् शाब्दव्यव-
हारे प्रमाणाभाव इत्युक्तं चोदितं तु प्रतीयेतेति। तस्मात्क्षत्रिय-
स्यैव राजसूयोऽस्तीति ब्राह्मणादीनां प्रापकानि श्रवणानि। तत-
श्चैतयान्नाद्यकाममित्येदपि फलं बहिरेव प्रयोगाद्भविष्यतीति।
कुतः ॥

क्रतुमध्यप्रयोगो हि स्वाराज्येनैव पूरितः ।
साकाङ्क्षित्वमतस्तस्मात्तस्यैव फलसंगतिः ॥

ननु चैतयेति प्रत्यक्षविशेषवचनात्परोक्षसामान्यप्रवृत्तां राजसूयचोदनां बाधित्वा अन्नाद्यफलतयैव भवितव्यम् । नैतदेवं विरोधाभावात् । तथा हि ॥

विरोधित्वात्प्रसज्येते विकल्पावृत्तिकल्पने ।
बाधस्तेनाभ्युपेतव्यो व्यवस्थायां तु नैव ते ॥

न ह्यनेकफलमेकस्य विरुद्धं प्रयोगान्तरस्य वचनान्तरेणैव कल्पितत्वात् । समुच्चयेन ह्यावृत्तिदोषो ऽन्यत्राभिधीयते । सा त्वत्रावृत्तिर्ब्राह्मणादिसम्बन्धात् राजसूयग्रहणाच्चावश्यंभाविनी । यदि चैतयान्नाद्यकाममित्युत्पत्तिवाक्यं भवेत्ततः पश्चात्प्रवर्त्तमाना राजसूयचोदना बाध्येत, न द्वयोरपि ह्याग्नेयादिचोदनोत्पादितेषु कर्मसु प्रवृत्तेषु युगपत्कालत्वेनागृह्यमाणविशेषत्वात्तुल्यबलत्वम । यथैव हि राजसूयचोदनासंनिहितानालोच्य प्रवर्त्तते तथैवान्नाद्यकामचोदनापि, न हि तत्रावेष्टिः केन चिदपि शब्देनोपात्ता॥ न च राजसूयेनेति सामान्यशब्दः पौर्णमासीशब्दवत्, प्रकृत(१)समुदायविशिष्टसमुदायिवचनत्वात । अत एव तत्कृतमपि न दौर्बल्यं लभते । इयांस्तु विशेष एकेन बहवो गृह्यन्ते अन्येनाल्पे । न च तावता कश्चिदतिशयो ऽस्ति । ननु चैतयेति श्रुत्यैव प्रत्यक्षवचनादस्ति विशेषः । स्याद्विशेषो यदि एतच्छब्दः फलेन संबध्यते । यदि वा ऽथैष ज्योतिरित्यादिवत् प्रस्तूयमानं ब्रूयात्, प्रत्ययसंनिकर्षात्तत्रापि यजिशब्दगृहीतैवावेष्टिरन्नाद्येन संबध्येत । एतावच्च राजसूययजावप्यस्तीत्यविशे-

(१) प्रकृतीति २ पु० पाठ. ।

षः । प्रक्रममपि च सुवर्गेनत्वन्द्र आग्नेयादिवाक्योपगमादृते नैव ब्रवीतीति । ततश्च राजसूययाजिरपि तावता यत्नेन शक्नोति ग्रहीतुमिति तुल्यवत्त्वम् । नन्वत्रान्तराधिकारस्यास्ति विशेषः ॥ उच्यते ॥ अयमेव विशेषो यदेकत्र बहूनां ग्रहणमपरत्र चाल्पानाम् । ग्रहणवेला तु तुल्यैव । यदि चैकान्तिकमत्राकर्मान्तरत्वं स्यात् तत एवमुच्येत, कर्मान्तरमपि चैतदिति दर्शितम् । ततश्च विषयान्तरत्वादेव स्वाराज्याम्नाययोरविरोधः । कर्मान्तरत्वेऽपि च वार्त्रघ्न्यादिलिङ्गदर्शनात्प्रकृतावेष्टिप्रकृतित्वमेव प्रतिपत्तव्यम् । राजन्यस्यापि तुल्यप्रवृत्तेः फलप्रदानप्रसङ्गाच्च ब्राह्मणवैश्यवदेव कर्मान्तरेण प्रयोगान्तरेण वा संबन्धः । एवं च तस्यापि मध्ये निधानवाक्यं तन्त्रप्रयोगे सत्युपपत्स्यते ॥ राजसूयमध्यस्थायां तु दक्षिणाभेदात् प्रतीष्टि प्रयोगान्यत्वे मध्ये निधानविधिरवरुध्येत । तस्मात्प्रापकाण्येतानि श्रवणानीति सिद्धम् ॥

## आधाने सर्व्वशेषत्वात् ॥४॥

वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यादिषु प्रापकप्राप्त्याशङ्कायां पूर्ववदेव संदेहः ॥ तत्र यदि कथं चिदपि प्राप्तिरस्ति ततो विनापि यदिशब्दान्निमित्तार्थत्वं, तदा च ब्राह्मणवसन्तादिसंबन्धः परस्परनियमात्मकं फलं भविष्यति । अथ त्वप्राप्तिस्ततः प्रापकाणि ब्राह्मणवसन्तादिविशिष्टस्याधानस्य, तदा च पूर्वत्र पूर्वोत्पत्तिवाक्यशिष्टगुणावरोधात् उत्तर उत्तरो गुणः कर्मान्तरं कल्पयतीति त्रीण्याधानानि भविष्यन्ति । स्वार्था एव वाग्नय आत्मनेपदनिर्देशादि शास्यन्ते ॥ शूद्रस्य चाप्राप्तिः । निमित्तार्थप-

क्षे तु सर्वं विपरीतमेव । एतेन वसन्ते ब्राह्मणमुपनयेदिति एव-
मादीन्यपि तुल्यहेतुत्वाद्विचारितानि द्रष्टव्यानि । तत्रैतावान्सं-
क्षेपार्थः ॥

सामर्थ्यात्सिद्धमाधानं सामान्यवचनेन वा ।
तस्माद्वर्णविशेषाणां निमित्तार्था पुनः श्रुतिः ॥

एकस्तावत् पूर्वपक्षहेतुरग्निहोत्रादिचोदनाभिरेवाधाननिष्पा-
द्या हवनीयादिसाधनत्वादिनानुपपद्यमानाभिः प्रापितत्वात् ब्रा-
ह्मणादीनामाधानं निमित्तार्थं श्रूयत इति । यदि तु प्रत्यक्षवचने
सति सामर्थ्यमप्रापकमिति कल्प्यते ततो ऽस्मात्गुणापहृतश-
क्तिकाद्विधेरनपहृतशक्तिरपरो निर्गुणो विधिरस्ति । य एवं वि-
द्वानग्निमाधत्त इति तेन प्राप्तेरप्रापकत्वमिति ॥ सिद्धान्तहेतुस्तु ॥

प्रत्यक्षविधिसद्भावाल्लभ्यते नानुमानिकः ।
प्रापकत्वमतो नार्थवर्त्तमानापदेशयोः ॥

न तावन्नित्यमर्थस्य प्रापकत्वमस्ति, उपायान्तरेणापि प्रति-
ग्रहादिना पुरुषान्तरार्जितानामात्मनेपदेनानियतानां सुलभ-
त्वात् । प्रत्यक्षवचने सत्यन्यथानुपपत्तिपक्षे सत्यर्थापत्तिलभ्य-
श्रुत्यपरिग्रहाच्च । य एवं विद्वानित्यपि वर्त्तमानापदेशः प्रत्य-
क्षायां लिङि ब्राह्मणादिवाक्येषु उपलभ्यमानायां न विधिशक्तिं
लभते । अस्ति चैतदुपन्यासस्य प्रत्यक्षविधियुक्तोदकोपसर्जना-
दिसंभारविधानार्थत्वमित्यप्राप्तमेव ब्राह्मणादिविशिष्टमाधानं
विधीयत इति । किं निमित्तसारूप्यमिति यदिशब्दाद्यनुपबन्धा-
भिप्रायम् । ब्राह्मणादीनां च वसन्तादिविधिभिः समुच्चारणा-
दिति परपदसंबन्धसंचारितायां विधिशक्तौ निमित्तफलत्वा-
त् ॥ ननु ब्राह्मणादीनामादधातिनापीत्यप्राप्तौ विशिष्टविधा-

नोपपद्यतेऽभिप्रायम्। इतरस्तु प्राप्तत्वेन विधेयत्वं निवर्त्तयति॥ न त्वेषामाधानसंबन्धो न विदित इति॥ केन प्राप्तो विदित इति। प्रापकाक्षेपः। इतरस्तु निराकरणमपश्यन् बलीयांसं च प्रत्यक्षविधिं किमर्थं प्रथममेवोपन्यस्यामीति मत्वा कामश्रुतिभिरित्याह। काः कामश्रुतय इति। सक्रोधं प्रापणशक्तावाक्षिप्तायां स्वरूपमेवैष न जानातीति मन्यमानो दर्शयति। अग्निहोत्रादिफलविषय इति। कथमन्यपराभिः सतीभिस्तत्प्रापितमित्याशङ्क्यार्थापत्तिं दर्शयति। तेन कर्मजे कर्मयूपवदित्याहवनीयादिशब्दितैः कर्मभिरनन्योपायत्वात् गृहीतमाधानमिति। सर्वप्रकारासंभवे च विशिष्टविधिर्भवतीति संभवापेक्षया वाक्यभेदमाह॥ एवं प्राप्ते ब्रूमः॥ आधानेपि पूर्ववदेव प्रापकाणि अवचनानि। कथम्। असर्वशेषत्वात्। यदि हि कर्मणां (१) शेषभूतमाधानं भवेत् ततस्तैराक्षिप्येत वा न वा। तेषां तु रूपं वा शेषभूतत्वादित्यनेनैव न्यायेनाहवनीयादिशब्दणमात्रपर्यवसानात् न कश्चिदप्याधानाङ्गत्वप्रतिपादने हेतुरस्ति। यत्तु सर्वार्थं वेति वक्ष्यति तत्सर्वकर्मार्थान्यर्थत्वादिति व्याख्यास्यते। किमतो यद्येवमित्यङ्गाङ्गमप्यन्यथानुपपत्त्या शक्यमाक्षेप्तुमिति मन्यते। सिद्धान्तवादी त्वन्यथानुपपद्यमानत्वादग्नयः कामश्रुतिभिः प्राप्नुवन्ति नाधानमित्याह॥ न त्वाधानमग्नीनामभ्युपाय इति। तत्र नाम रूपमात्रं गृह्यते यल्लौकिकोपायसाध्यं भवति वस्त्रशकटादि न चाहवनीयादयो लौकिकोपायास्तस्मादवश्यमेषां वेदेनैवोपायोऽप्याश्रेतव्यः। स तु नाधानव्यतिरिक्तोऽस्तीति तदप्याक्षिप्तमिति। उच्यते॥ नानैकान्तिकत्वात्। अग्नीनां

(१) सर्वकर्मणामिति २ पु॰ पाठः

हि याञ्चाक्रयापहारादयोऽभ्युपायाः सन्ति सर्वैश्च तैराहवनी-
यादिमात्रप्रार्थिन्यः कामश्रुतयो निराकाङ्क्षाः क्रियन्ते । तस्मा-
न्नैकान्तेनाधानं प्राप्तमित्यस्ति नियमविधेरवकाशः ॥ नन्वेत-
स्यात् नैवोपायान्तरोपात्तानामाहवनीयादित्वं संभवति सं-
स्कारनिमित्तत्वादिति । तत्रोच्यते ॥

सत्यं प्रथममाधानादुत्पद्यन्तेऽग्नयस्त्रयः ।
पश्चात्तु ब्रीहिवत्तेषां नोपायान्तरवारणम् ॥

यथैव हि ब्रीह्यादीनां न तावत् कृषिमन्तरेणोत्पत्तिरथ च
न सर्वपुरुषैस्तथैवाप्यन्ते क्रयादिभिरपि लभ्यमानत्वात् । एवं
तावत् प्रथममेकस्याधानेनोत्पादयिष्यन्ति अपरे तु तस्मादु-
पायान्तरेण प्राप्स्यन्ति ॥ ततश्च यथा घटादीन् कुम्भकार उ-
त्पाद्योत्पाद्य विक्रीणाति ददाति च तथैवैकः कश्चित् पुनः पुन-
रग्नीनाधायापरेभ्यो दद्यात्, अतः प्रतिपुरुषमाधानं पक्षे प्राप्तं
पक्षे नेत्यस्ति विधानस्य विषयः । पक्षेऽपि वा नैव प्राप्तिरस्तीति
वक्ष्यामः ॥ प्रत्यक्षविधिपक्षे पुनरुपायान्तराणि निवर्त्तन्ते । सदा
ग्न्यादधीतेत्यात्मनेपदेनाधातृगाम्येवाधानफलमिति गम्यते ।
तस्य च फलमाहवनीयादि तदकर्तुर्न भवतीति तं प्रत्यनाहव-
नीयत्वमेव स्यात् ॥ अर्थाक्षेपपक्षे त्वानुमानिक्याः श्रुतेरात्मने-
पदपरस्मैपदविवेकाभावादकर्तृविषयेऽप्यविरोधादुपायान्तरा-
णि न निवर्त्तेरन् अतोऽवश्यमेव विधेयमेतदिति । अपि च ।
सतीष्वेवाधानश्रुतिष्विति पाक्षिकीमपि प्राप्तिं निराकरोति ।
पूर्वमेव हि व्याख्यातं नियमादीनामप्राप्तविधित्वं श्रुतसंभाव-
नायामश्रुतकल्पनानवसरात् ॥ सन्ति चाधानस्य प्रत्यक्षाः श्रुतय-
इति नान्याः कल्पयितुं लभ्यन्ते । यदि ह्येता न स्युस्तत आधाना-

इति अग्निहोत्रादीनामशक्यानुष्ठानत्वाद्विधयोऽनर्थका भवन्तीति स्वमिज्यर्थमाधानश्रुतिं परिगृह्णीयुः। सतीषु तु अश्रुतकल्पनाभयात् येषामेताभिः प्रापितं तेषामेव कामश्रुतयः प्रयोजिका इति न कल्पयन्ति। सर्वपूर्वोक्तदोषपरिहारेणेदानीं प्रत्यवतिष्ठते। प्रत्यक्षमन्यद्विधायकमस्त्याधानस्य वचनम्। यस्मिन्सति निमित्तार्थोनीतरागोऽग्नीति य एवं विद्वानग्निमाधत्त इति। तत्र प्रतिविधत्ते संभारविधानार्था पुनःश्रुतिरपेषेति। परः पुनः प्रकरणेन संभारसंबन्धं मन्वानः पृथग्वाक्यत्वमापाद्यैतदेवोत्पत्तिवाक्यमित्याह॥ न ह्यनुपसर्जनादीनामाधानेनैकवाक्यता संभवति। भवेदत्रार्थभेदे नानावाक्यत्वं यद्याधानं विधीयेत। तत् ब्राह्मणादिसंयुक्तैर्विहितमिति गुणार्थमेवेह पुनः श्रूयते। कुतो नु खलु निर्णयः कतरदनयोरुत्पत्तिवाक्यमिति। तदुच्यते॥

ब्राह्मणत्वादिसंयुक्तो प्रत्यक्षः श्रूयते विधिः।
इतरत्रार्थवादेन कल्पनीयो बलादसौ॥

यदि ह्येते द्वे अपि वाक्ये विधातृणी स्यातां ततः समानविषये सती स्पर्द्धेयातां कतरद्विधत्तामिति। अत्र पुनरेकं विधायकमेकं स्तावकम्। न च स्तावकेन ब्राह्मणादिसंयुक्तस्य विधायकत्वं निवार्यते तदानुगुण्यात्,यदि तु य एवं विद्वानित्यपि विधिसरूपं स्यात्ततो विहितस्य पुनर्विधानानुपपत्तेरस्यात्यन्तं निरुन्ध्यात्. लिङ्गा तु विहितस्य संबन्धिसंभारविधिप्ररोचनार्थं तु स्तुतिसहितस्य पुनः श्रवणमित्यविधायकम्। लिङ्गा च सावद्यत्वर्थविधानं स्वपदेनोपात्तत्वात् श्रौतं प्राशस्त्यं पुनर्वाक्येन, ततश्चानुमानिको विधिरिति विप्रकृष्यते। नन्विदमपि वाक्यमिति ब्राह्मणादिपदार्थापरित्यागाभिप्रायम्। विद्वान्तवादो

भवति आधानं तावत् श्रुत्या शेषं वाक्येन नाम भवतु स्वपदोपात्ताया: स्तुतेरभावात् । एवं द्विषन्तं भ्रातृव्यमवर्त्तिं सचतइत्यादिपदसंबन्धेनैव स्तुतिरिति वाक्यम् । कर्तृकालविशिष्टप्रधानाधानविधानाच्च वाक्यभेदपरिहारात् सिद्धं प्रापकत्वम् ॥

## अयनेषु चोदनान्तरं संज्ञोपबन्धात् ॥ ५ ॥

युक्तं दध्नेन्द्रियकामस्येति गुणात्फलं, न हि तत्र दध्यादीनां होमसामानाधिकरण्यं येन संज्ञालक्षणो भेद: स्यात् ॥ दाक्षायणयज्ञादीनां तु यागसामानाधिकरण्यात्पूर्वयागे चाप्रयुक्तत्वा(१)दात्मरूपावच्छिन्नयागान्तरप्रतिपादनमविरुद्धम् । न च कश्चिद्दध्यादिभि: तुल्य एवंसंज्ञो गुण: प्रसिद्धस्तस्माद्भावार्थाधिकरणन्यायेन फले योगविधानात् यागान्तरम् ॥

## अगुणा कर्मचोदना ॥ ६ ॥

विधिशक्ति: क्रियातो नोत्तारितेत्यभिप्राय: ॥

## समाप्तं च फले वाक्यम् ॥ ७ ॥

फलस्यानुपादेयत्वान्न व्रीहिभिर्यजतइत्यादिवत्कर्मोद्देशेन विधि: संभवतीत्यवश्यं कर्म तच्च विधातव्यम् । ततश्च सिद्धो भेद: ॥

## विकारो वा प्रकरणात् ॥ ८ ॥

सत्यपि फलं प्रति विधाने संनिधौ त्वविभागादित्यनेनाक-

(१) अप्रयुक्तत्वादिति २ पु० पाठ: ।

र्मान्तरता, दध्यादिवच्च गुण(१)फलसंबन्धप्रत्ययात् प्रकृतय गबुद्धेः । यत्तु गुणो न प्रसिद्ध इति । नैष दोषः ॥ उक्तथ्यादिव त्प्रकरणानभ्यत्वात् । एवंविधा च (२) वाक्यान्तरेण गुणरूप विधानादस्ति प्रसिद्धिः ॥ दध्यादिवदेवाचापि वैयधिकरण्येनै संबन्धः ॥ किं च ।

अवस्थान्तररूपत्वाद्दध्यादेरविलक्षणाः ।
प्रत्यासत्तेः प्रतीयन्ते सामानाधिकरण्यवत् ॥

तस्माद्दर्शपूर्णमासयोरेवावस्थान्तररूपात् विकारात् फलं न कर्मान्तरात् ॥ एवं च प्रकरणविच्छेदो नात्यन्तं कृतो भविष्य ति । यद्यपि फलवतः कथंभावेनाग्रयणादेतद्विषयोस्त्येव प्रक रणबाधः तथाप्याश्रयत्वेन संबन्धादुत्तराणि च वाक्यानि प्रत्य नुषङ्गसिद्धेरनुग्रह इत्युच्यते ॥

## लिङ्गदर्शनाच्च ॥९॥

त्रिंशत्पूरणं (३) पौर्णमास्यमावास्यासंकीर्तनं वा भेदं बोधय ति । न हि दर्शपूर्णमासिकास्त्रिंशद्वर्षपक्षः कर्मान्तरेण पूरयितुं शक्यते । न च नियमस्यातिदेशो, येन कर्मान्तरस्यैवैतत् पञ्चद शवर्षपक्षविधानं स्या,न्न च दाक्षिणायनयाजित्वेन निमित्तेन दर्शपूर्णमासयोरेव पञ्चदशवर्षपक्ष उपजायते संबन्धाभावात् । द्वे हि पौर्णमास्यौ द्वे अमावास्ये इति चास्यानुपपत्तिः ॥

## गुणात्संज्ञोपबन्धः ॥१०॥

(१) गुणरूपेति २ पु० पाठः ।
(२) एवं विधायकवाक्येति० २ पु० पाठः ।
(३) त्रिंशत्संवत्सरपूरणमिति २ पु० पाठः ।

उत्पत्तिसंयोगे पूर्वा संबन्धे च संज्ञा भेत्त्री भवति। न चेयमुत्पत्तिसंयुक्ता अथैष ज्योतिरित्यादेरिव प्रक्रमाभावात्, संभवति च पूर्वकर्माश्रितगुणवाचित्वे नैवेति न भिनत्ति। दाक्षायणयज्ञे हि वाक्यान्तरवशादवयवप्रसिद्धेश्चाभ्यस्तत्वमभिधीयते, तेन च प्रकरणात् दर्शपूर्णमासाश्रितेनैव फलं साध्यते। दक्ष इति चोत्साही शीघ्रकारी यजमानस्तदीया ऋत्विजो दाक्षास्तेषामयनं प्रयोगो यज्ञाश्रितत्वाद्दाक्षायणो इत्युच्यते। साकंप्रस्थायीयेऽपि सान्नाय्यमनवदाय कुम्भीभ्यामेव साकं प्रस्थीयत इत्येवमभिधीयते। तस्मान्न प्रकृतप्रत्यभिज्ञानबाधः॥

## समाप्तिरविशिष्टा ॥ ११ ॥

यद्यपि कर्मोद्देशेन न फलं विधीयते तथापि कर्मफलसंबन्धाभावादकर्मान्तरता। यथैव हि कर्मणः फलमिति भावार्थाधिकरणे साधितं तथैवानुल्यत्वात्तु वाक्ययोरित्यत्र गुणफलसंबन्धापर्यवसायित्वमप्युक्तमिति संदेहे सति पदान्तरानुग्रहार्थं गुणादेव फलं न कर्मण इति सिद्धम्॥

## संस्कारश्चाप्रकरणे

## अकर्मशब्दत्वात् ॥ १२ ॥

न कस्य चिदपि कर्मणः प्रकरणे श्रूयते श्वेतमालभेत चरुं निर्वपेदिति। तत्र संदेहः। किमनारभ्यवादानां प्रकृत्यर्थत्वात् प्रकृतयोरेवालम्भनिर्वापयोः श्वेतचरू गुणौ विधीयेते, किं वा कर्मान्तरे यावच्छ्रुते, उत यजिमती वेति। तत्रानारभ्याधीतत्वोपन्यासः संशयबीजापेक्षस्य प्रथमपक्षपरिग्रहस्तन्निराकर-

णार्थः ॥ कथम् । यदि तावदाग्नेयनिर्वापौ प्रकृत्य श्रूयेयातां ततः प्रकृतप्रत्ययानुवृत्तिरेव प्रसज्येतेति कर्मान्तराशङ्का न स्यात्, तदनारभ्यवादे तु सति श्वेतादिगुणस्योपादेयत्वात्कदाचिद्रस्यानुवादेन गुणो विधीयते कदाचिद्वा विपरिवृत्त्यभावात्कर्मान्तरमिति जायते संदेहः ॥ तथा द्रव्यसंयोगाच्चोदना पशुसोमयोरित्यनेन गतप्रायमिवात्र यजिमत्कर्मविधानं लक्ष्यते । तत्तु प्रकृतयागाभावादनुवादशङ्कायामसत्यां श्वेतादेश्च गुणस्यौत्पत्तिकद्रव्यसंयुक्तेऽपि कर्मणि विधानोपपत्तेः कथं स्यादिति पुनरुपन्यस्यते । पूर्वपक्षश्चान्ययोराग्नेयनिर्वापयोरप्रकरणादवश्यं प्रकृताविव ग्रहीतव्याविन्येवं प्रवर्तते ॥ तन्निराकरणमपि च प्रकरणाभावादसाधारणोपलक्षणाभावाच्च न प्राकृतयोर्लौकिकव्यापृत्तरूपयोः प्रतीतिरस्तीत्येवं भविष्यति । गुणविधिविषयत्वाच्चाग्नेयनिर्वापौ गुणविधिशब्देनोक्तौ । किं तावत् प्राप्तम् । यथैवायनेषु गुणसंबन्धपरे वाक्ये कर्मविधिशब्दाभावादकर्मान्तरत्वं तथेहापि भविष्यतीति चशब्देनातिदिश्यते । क्व चासौ गुणविधिरिति विषयावधारणार्थमप्रकरणग्रहणम् । अथ वा यद्यप्येतावत् पूर्ववैलक्षण्येनाप्रकरणे श्रूयते तथापि कर्मणो विधिशब्दानवरोधाद्गुणार्थैव पुनः श्रुतिरिति दर्शपूर्णमासयोः प्रकृतेषा सा श्वेतीकृत्याग्नेय्या निर्वापश्च चरौ कर्तव्यः चरुपरिमितो वा । भूतिब्रह्मवर्चसकामयोश्च सर्वेभ्यो दर्शपूर्णमासावित्येवं प्राप्तयोरनुवाद, स्तथा वायव्यमिति सर्ववनस्पतीनां वायुदेवतात्वात् कथं चिदीषाया एवानुवादः । सौर्यमिति चाग्नेयस्यैव तेजोदेवत्यसामान्यादनुवादस्तस्माद्गुणो विधीयत इति ॥

## यावदुक्तं वा कर्मणः श्रुतिमूलत्वात् ॥१३॥

यदि ह्यालम्भनिर्वापौ विधेयत्वं न मृष्यतः ।
ततो गुणविधित्वं स्यात् विधेयौ त्वत्र तौ मतौ ॥

वायव्यपदं पूर्ववदेवोपेक्ष्य फलपदपरिग्रहेण तावत् प्रत्यवस्थीयते । यदि ह्यालम्भनिर्वापावनूद्य श्वेतचरू विधीयेते ततः फलपदमनर्थकमेव स्यात् । सर्वकामप्राप्तानुवादेऽपि पाक्षिकत्वान्नित्यवद्ग्रहणं विरुध्येत । विशेषणत्वे वाक्यभेदः स्यात् ॥ अथ गुणफलसंबन्धो विधीयते तथाप्यालम्भादेः प्रकृतस्याश्रयस्याभावाद्वाक्येनैव तत्संबन्धकरणे वाक्यं भिद्येत ॥ गुणविशिष्टालम्भविधाने तु न कश्चिद्दोषः । तेनोच्यते कर्मणः श्रुतिमूलत्वादिति । कर्मात्र विधेयत्वेन श्रुतिमूलं न गुणः, स ह्यचोदनालक्षण एव स्यात् । अथ वा यावदुक्तमेव स्यात् न यजिमत् । कुतः कर्मणः श्रुतिमूलत्वात् ॥ न ह्यचोदितो यज्यर्थोऽध्यवसातुं शक्यते । न च तेन विनेह किं चिन्न सिध्यति । आलम्भनिर्वापयोरेव फलवत्त्वेन प्राधान्योपपत्ते, र्न हि यदेकत्र गुणभूतं दृष्टं तेनान्यत्र प्राधान्यं वाचनिकमपि न प्रतिपत्तव्यमिति किं चित् प्रमाणं, यथावचनं हि गुणप्रधानभावौ न स्वाभाविकौ, वायव्यादिशब्दस्यात्र सर्वत्र द्रव्याणां यथा कथं चिद्देवतासंबन्धोपपत्तेरनुवादः । अथ वा यत् केन चित् वाय्वादिभ्यः संकल्पितं तदालम्भादिभिर्योज्यमानमभ्युदयकारि भवति । विशिष्टविधानाच्च न तत्परिग्रहेऽप्यतिभारः । अथ वा वायुसूर्यावेवोद्दिश्य स्पृष्टं निरुप्तं

वेति एतावतैवेष्टिताग्निर्भविष्यति। न चावश्यं याग एव देवतोद्देष्टव्या। यच्च यत्र हि चोद्यते तत्र तत्रोद्दिश्यमाना न विरुध्यते। तस्मात्त्वन्निकं चित ऽवैतं वायूद्देशेन स्प्रष्टव्यमिति यावदुक्तचोदनानुसारात्, गुणविधिपक्षे फलपदसंबन्धे वाक्यभेदमभिधायेदानीं तत्परित्यागमभ्युपेत्यापि ब्रवीतीति। अथ वा योसौ विधायकः शब्द इत्यादि। तस्याभिप्रायो यदिदमनारभ्यवादानां प्रकृत्यर्थत्वमभिधास्यते नैतद्वाचनिकं, कथं तर्हि द्वारान्यथानुपपत्तिकारितम्। न चालम्भनिर्वापावन्यत्रानुपपन्नौ। लोकेपि विद्यमानत्वादिति। तत्र यदि तावत् लौकिकव्यावृत्त्यर्थं विहितत्वेन विशिष्यते ततो ऽन्यविशेषणाभावाल्लिङ्गेव विशेष्टव्यौ। यश्चालम्भः कर्तव्यतया चोदित इति। तावता चोपक्षीणशक्तौ विधायके गुणविधानं नोपपद्यते। न ह्यसौ विधातुं लक्षयितुं च सकृदुच्चारितः समर्थः। केवलधात्वर्थानुवादे च लोकेपि गुणविधित्वप्रसङ्गः। तत्र च निष्फलत्वादानर्थक्यं, न चैतावन्मात्रेणैव (१) प्रकरणादिभिर्वैदिकालम्भनिर्वापग्रहणमुपपद्यते। तस्मात्प्राक्तनप्रमाणाभावादपूर्वयोर्विधानमिति॥

## यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसंबन्धात्॥१४॥

यथा फलपदं प्रेक्ष्य गुणपक्षो निराकृतः।
देवतापदमालोक्य तथैवालम्भसाचता॥

विधिस्तावदुत्तरोत्तरपदानुरोधेन द्रव्यदेवतापदसंबन्धसंक्रा-

---

(१) चिनैवेत्यधिकं उ पु० पाठः।

न्तः । स चान्यथानुपपत्तेराक्षिप्तयजिक्रियः सन् विधीयते, न ह्यो-
नमन्या क्रिया संपादयितुं समर्था । यदि देवतोद्देशेनापरित्य-
जन्नेव द्रव्यमालभेत न तद्दायव्यं कृतं स्यात् । न च प्रसिद्धवायु-
देवत्यमेवं स्प्रष्टव्यमित्यवगम्यतेऽनुष्ठानसंपाद्यत्वात् देवतात्वस्य,
तेनावश्यं वायुमुद्दिश्य श्वेतगुणकं द्रव्यं दातव्य,मतश्च यजिवि-
धानमेतदिति निश्चीयते । तथा च लक्षणं करिष्यति यजिचो-
दना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वादिति । ततश्चालम्भ-
निर्वापौ चोदकप्राप्तावेवानुवदिष्येते । तत्रालम्भविशिष्टत्वाति-
गौरवोपन्यासः फल्गुरेव कथं चिदभ्युपेत्यवादेनोपन्यस्त इति
नातीवादर्त्तव्यः ॥

## लिङ्गदर्शनाच्च ॥१५॥

सौमारौद्रमित्युक्ते विनापि यजतिशब्देन परिश्रयणविधि-
परे वाक्ये यजतिनानूद्यमाने यजतिमत्कर्मविधायित्वमेवमादी-
नामित्यवगम्यते । अग्नीषोमीयेऽपि चानेनैव यजिमत्त्वसिद्धिः ।
पूर्वं चैतावदेव विचारितं किं प्रकृतानुवादित्वमुत विधायकत्व-
मिति । सिद्धे तु विधायकत्वे किमात्मकं तत्कर्मेत्येतदधिकर-
णाधीनमेवैतदित्यपौनरुक्त्यम् ॥

## विशये प्रायदर्शनात् ॥१६॥

सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्त्तिके ।
सूत्रं योनिरिहार्थानां सर्वं सूत्रे प्रतिष्ठितम् ॥

इति ये वदन्ति तान् प्रत्युच्यते न किं चित्साधनमप्रद-
र्शितविषयं स्वार्थं साधयति । सूत्रकारेण चेह हेतुमात्रमु-

पात्तम् । न चार्थप्रकरणादिभिरप्युदाहरणप्रतिज्ञासंशयहे-
तूनामन्यतममुपलभ्यते । तस्मादगमके सूत्रे सत्यवश्यं दो-
षप्रतिसमाधानार्थं वृत्तिकारादिभिर्यतितव्यम् । सत्येव सं-
भवे ऽध्याहारादिवर्जनमुक्तम् । सर्वथा शिष्यप्रज्ञासंस्कारे
सूत्रकारादीनां प्रवर्त्तमानानां येनैव तदनुगुणं यत्कृतं त-
देव ग्रहीतव्यम् नासदाग्रहः कर्तव्यः । यदं सूत्रकारेण नो-
पात्तमिदं वृत्तिकारेणात्येतत्प्रदर्शनार्थमेतद्दर्शयन्ति । तदिह
भगवानुपवर्षः किलाग्निहोत्रे धेनुदोहाधिकारे श्रुतमिदं
वाक्यमुदाहृतवान् वत्समालभेतेति, तत्र च पूर्ववदेव त्रेधा
संशयमुपन्यस्तवान् । किं प्राकृतएवालम्भे वत्सो विधीयते
तथालम्भमात्रमुभयं यजतिमदेतत्कर्मेति । तत्र विशेषणा-
भावात् प्राकृतप्रत्ययो नास्तीति पूर्वाधिकरणसिद्धमेवेति नो-
पन्यस्तं तेनैवानुक्रमेण यजिमदभिधानबुद्धौ प्रसक्तायामप-
वादोयं क्रियते । तत्र भोक्तृसंयोगप्रत्युदाहरणत्वाद्गतप्रायोपि
पूर्वपक्षः श्रोतृबुद्धिवैचित्र्यात् क्रियते, यो नाम तार्किकवासन-
या सामान्यतो दृष्टेन वेदार्थमन्विनीषेत् तस्य तन्निवृत्तिरप्रद-
र्शिताशङ्का न शक्या कर्तुमिति प्रदर्श्यते। तत्र केषां चित् पूर्वा-
धिकरणएवालभतिर्यजतिपर्यायत्वेन प्रसिद्धो, ऽन्येषां यज्ञ्यनु-
मापकत्वेन, तदुभयमत्रापि तथैव मन्यन्ते। तत्रापूर्वयागविधा-
नं प्राप्ते वा वत्सविधानमिति पूर्वपक्षे द्वैतम्। सिद्धान्तस्तु द्रव्यदे-
वतासंबन्धान्यथानुपपत्त्या पूर्वमस्माभिर्यजिः कल्पितो नादृष्टपू-
र्वशक्त्या लभत्यभिधानेन व्यभिचार्यनुमानाभासेन वा, न चेहा-
सावस्तीति यावदुक्तता। तथा च दोहनादिसंस्कारकर्मप्रायद-
र्शनमुपपद्यते दृष्टार्थत्वं च गोप्रस्रवनहेतुत्वात् ॥

## अर्थवादोपपत्तेश्च ॥१७॥

वत्सनिकान्ता हीति प्रस्तावनार्थं च वत्सोपचारस्पर्शनविधौ हेतुवन्निगदोऽर्थवाद उपपद्यते । मारणार्थत्वे त्वालभ्यमाने वत्सप्रियत्वं पशूनामुच्यमानमसंबद्धमेव स्यात् । यस्मादसौ मातुः प्रियो वत्सस्तस्मात्संज्ञपनार्थमालब्धव्य इत्यसंबद्धमेव स्यात् । इतरत्र पुनर्वत्सप्रिया माता पुत्रचाटुकरणात्तेन वा कृतचाटुना संयुज्यमाना स्नेहात् प्रस्नविष्यतीत्युपपद्यते ॥ तस्मादपि प्रयोजनवत्संस्कारभूतालम्भमात्रविधानमेतदिति सिद्धम् ॥

## संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् ॥१८॥

पूर्वमालम्भस्य प्रत्युदाहरणमिदं तु चरुद्वारेण निर्वापस्य, देवताशङ्का चात्राभ्यन्तरेऽधिकेत्यारम्भ,स्तत्रौत्पत्तिकमेव चरुपुरोडाशादीनां यागाङ्गत्वं, सर्वथा चैतस्यात्मीयत्वपरित्यागः कर्तव्यः । चरुमुपदधातीति च द्वितीयानिर्देशात् उपधानं प्रतिपत्तिः । न चान्यत्रानुपयुक्तस्य प्रतिपत्तियुक्ता इत्याकाङ्क्षिते योग्यत्वात् यागोपयोगित्वमेव विज्ञायते । वाक्यशेषे च बृहस्पतिः श्रूयमाणो यदि विध्युद्देशेन संबध्यते आनर्थक्यमेव स्यात् । तस्मादाग्नेयप्रकृतिकं बार्हस्पत्यचरुयागं निर्वर्त्य शेषकार्यान्तराण्यकृत्वा उपधातव्यश्चरुरित्येवं प्राप्तम् । एवं प्राप्ते ब्रूमः ॥

चर्वादीनां स्वभावेन नैदमर्थ्यमवस्थितम् ।
यथाप्रमाणमेवैषां विनियोगोऽवगम्यते ॥

नैवारश्चरुर्भवतीति श्रुत्पन्नमात्रस्यैव प्रयोजनापेक्षायां सत्यां

यागाङ्गभूताग्निधारणार्थस्य निर्दिष्टविशेषत्वेन प्रत्यक्षविधानं दृश्यते यदेनं चरुमुपदधातीति। तथा निराकाङ्क्षस्य च चरोः श्रुतेनापि कार्यान्तरेण संबन्धो न स्यात् किमुताश्रुतेनैव यागेन॥ न चेयं प्रतिपत्तिरिति प्रथमं प्रयोजनवत्त्वानवगमात्। अर्थकर्मण्यपि चोपधानं प्रति प्राधान्यमस्ति तेनासंस्कृतस्यैव न निर्वर्त्तयतीति द्वितीयानिर्देशाविरोधः॥

चेष्टा च देवतायोगस्तयोरस्यानुमानिकः।
नीवारस्यार्थवादस्थतद्धितादिविवर्जनात्॥

नीवारसंबन्धः सन् बृहस्पतिस्तरावनुमातव्यः। तथा वाक्यशेषस्थो विश्वदेशमनाकाङ्क्षितदेवतासंबन्धं नेतव्यः॥ तद्धितचतुर्थीमन्त्रवर्णादिभिश्च विना कथमपि देवतात्वं कल्पनीयम्। यागाद्यनुमानक्रमश्च स्थित एव। तस्मादुपधानार्थत्वमेव युक्तमिति॥ येषां च बार्हस्पत्यो भवतीति चरुसामानाधिकरण्येन तद्धितेन वाक्यशेषे देवताश्रयणं तेषामपि प्रथममुपधानार्थत्वे विध्युद्देशात् सिद्धनाकाङ्क्षितत्वाद्देवता विधानुमशक्येति वर्तमानापदेशानुरोधेन यादृशं वयमस्य बार्हस्पत्यत्वं वर्तमानं पश्यामस्तादृशमेवैतत् प्रशंसार्थं कीर्तितमित्यवगमात् य एव शाखान्तरीयस्य वचनस्य बृहस्पतेर्वा एतदन्नमित्येतस्यार्थः स एव बार्हस्पत्यो भवतीत्यस्यापि तैत्तिरीयवचनस्य निश्चीयते। तस्माद्देशोऽपि न यजिमद्वचन इति यावदुक्तत्वसिद्धिः॥

## पात्नीवते तु पूर्वत्वादवच्छेदः॥१९॥

एतेनैवाधिकारेणोत्पत्तिरपि यजिमदभिधानो न वेति विचार्यते। त्वाष्ट्रं पात्नीवतमालभतइत्येवं यागं विधाय पुनराम्ना-

यते पर्यग्निकृतं पात्नीवतमुत्सृजन्तीति । तत्र गुणविधिः उत कर्मान्तरमिति वचनव्यक्तिद्वयप्रतिभानेन संदेहे सति वायव्यश्वेतालम्भवदेव विधिशक्तेर्द्रव्यदेवतासंबन्धविषयत्वेन कर्मान्तरत्वम् । किं च ॥

न च त्वष्टुरभावेन प्रत्यभिज्ञायते ऽत्र सः ।
पर्यग्निकृतयोगाच्च वाक्यभेदः प्रसज्यते ॥

यदि त्वत्रापि पूर्ववदेवोभे विशेषणे श्रूयेयातां ततस्तदेव कर्मेति विज्ञायेत । न त्वत्र महेन्द्रस्येवेन्द्रप्रगाथे कश्चिदपि प्रत्यभिज्ञानलेशोऽस्तीति देवतान्तरसंयोगादपि वाजिनयागवत् भिद्यते । पात्नीवतोद्देशेन चोत्सृज्यमानार्थे विधीयमाने पर्यग्निकरणावस्थाविशेषणात् वाक्यं भिद्येत । व्यवहितकल्पनया चोत्सृजतिः संबध्येत । प्राप्त एव च तस्योत्पत्तिवाक्येनोत्सर्ग इति व्यर्था पुनः श्रुतिर्भवेत् । न च पर्यग्निकरणविधानेनार्थं,तस्यातिदेशेनैव प्राप्तत्वात् । न च केवलपात्नीवतताविधिर्वैकल्पिकः शक्य आश्रयितुमुत्पत्तिवाक्यशिष्टत्वविरोधात् । न च प्राकृतसृष्टोपकारकेवलपर्यग्निकरणपुनःश्रुत्या गृहमेधीयवदपूर्वता शक्या दर्शयितुम् । सिद्धवदुपसर्जनीभूतपर्यग्निकरणनिर्देशात् । न च पर्यग्निकरणशब्दस्तदन्ताया अङ्गरीतेर्वाचकः । येन तन्मात्रश्रवणाश्रयणादुत्तरकर्मावच्छेदो विज्ञायते ॥ न चासौ कालस्य वक्ता येन पर्यग्निकरणकाल एवोत्सृजतीति कल्प्येत । न च लक्षणाश्रयणहेतुरस्ति, श्रुत्यापि वाक्यसमवायोपपत्तेः । सर्वाङ्गेषु चोदकप्राप्तेषु वचनान्तरेणानिषिद्धेषु पर्यग्निवेलायां समस्तेष्वनुष्ठीयमानेषु सत्सु नैव ज्ञायते किं क्रियतामिति । सर्वकरणे काललोपात् तत्काले करणे चाङ्गान्तरलोपात् ॥ एतेनावस्थावि-

धिः प्रत्युक्तः । चोदकेनैव तावत् पर्यग्निकरणावस्था उत्सृज्यत-
इति प्रापितम् । अथोत्तरावस्था परिसंख्योच्यते तच्च त्रिदोष-
त्वमुक्तमेव । तस्मान्न पूर्वकर्मणि किंचिद्विधेयमस्य वाक्यस्येति
कर्मान्तरमेव द्रव्यदेवतासंयुक्तं, देवतागुणसामान्येन च पूर्वप्र-
कृतिकमग्निषोमीयप्रकृतिकमेव वा विधीयतइति प्राप्ते ऽभि-
धीयते ॥

प्रकृतप्रत्यभिज्ञानात् न यागो ऽन्यो ऽवगम्यते ।
पर्यग्निकरणात्तस्मिन्नङ्गरीतिर्विधीयते ॥

पात्नीवतशब्दस्तावत् मनोतायामिवाग्निशब्दः सत्यप्युभय-
विशिष्टत्वे शक्नोति प्रकृतं यागं वक्तुं, पर्यग्निकृतमुत्सृजतीति
प्रकरणात् तस्यैव गुणविधिर्विज्ञायते ॥ ननु च सर्वे गुणविधि-
प्रकारा निराकृताः । सत्यं शेषा निराकृताः । पर्यग्निकरणा-
न्ताङ्गरीतिपक्षस्तु न निराक्रियते । यद्यप्येष शब्द इडान्तादिव-
त्तदन्तत्वं न ब्रवीति तथापि गमयितुं शक्नोति । न हि निर्वृत्तप-
र्यग्निकरणता पूर्वाङ्गेष्वकृतेषु संभवति । तस्मात्तदुपादानादे-
वानुक्तापि तदन्तता ऽवगम्यते । कथंभावापेक्षी च त्वाष्ट्रप्रयोग-
वचनः प्रकृतौ दृष्टसामर्थ्यपर्यग्निकरणान्ताङ्गकलापस्यातिक्र-
मकारणाभावात् न प्रकृतिस्थानि सर्वाण्यङ्गान्यपेक्षते ॥ तत-
श्चैतावन्त्येवास्याङ्गानीत्यवधारणात् स्वरूपप्राप्तिमात्रस्य च चो-
दकेनापि सिद्धेरुत्तराङ्गावच्छेदार्थमेवेदं वाक्यमिति फलेन व्य-
पदिश्यते । तेनोच्यते पूर्वत्वावच्छेद इति । एवं च सति या-
गान्तरापूर्वान्तरानुमानादिक्लेशो न भवतीति । न च परप-
दसंबन्धविधानविप्रकर्षः । पर्यग्निकरणान्तविशिष्टे तूत्सर्गे विधी-
यमाने यद्यप्युत्सर्गस्वरूपं प्राप्तमेव तथापि तदुद्देशेनाङ्गकलाप-

विधानादनत्यन्तविप्रकर्षात्स एव विधेयत्वेनोक्तः । तत्पक्षे तु दध्नेन्द्रियकामस्येत्यादिष्विव धातोरत्यन्तपारार्थ्यं स्या,त्तस्मा-दप्यकर्मान्तरत्वम् । प्रकरणादपि च पर्यग्निकरणान्ताङ्गग्रह-णसिद्धेः पात्नीवतग्रहणं नित्यानुवादत्वादतन्त्रमिति विशिष्टा-नुवादैकदेशे व्यपदेशो(१)ऽत्रालम्भपरिहार,स्तस्माद्गुणविधिरिति सिद्धम् ॥

## अद्रव्यत्वात्केवले कर्मशेषः स्यात् ॥ २० ॥

अनारभ्याधीतयोरंशुदाभ्यग्रहयोरालम्भादिवत् द्वेधा सं-देहः । तद्वदेव च पक्षद्वयं निराकृत्य यजिमतो चोदनेति प्रति-विज्ञायते (२) । किं च ॥

प्रकृतादपि भेत्तृत्वं नामधेये व्यवस्थितम् ।
किमुताप्रकृतिभ्यो ऽत्र यत्र नैवास्त्यभेदधीः ॥

न ह्येतन्नामधेयं प्रकृतौ कस्य चित् प्रसिद्धं यस्य पुनः श्रु-तिसामर्थ्याद् द्विरभ्यासः क्रियते । तस्माद्गृहपतिचोदनासामा-न्येन ज्योतिष्टोमप्रकृतिरेकाहोयं चोद्यत इति मन्यामहे । न च वत्सालम्भतुल्यत्वम् । एकत्र यजतेः प्रत्यक्षत्वात् अन्यत्र चा-व्यभिचारिण्या संज्ञया ऽन्यत्वे कल्पिते गृहपतिना समस्तज्यो-तिष्टोमधर्मप्राप्तेर्द्रव्यदेवतासंबन्धसिद्धिः । अतो यागान्तरत्वमि-ति प्राप्ते ऽभिधीयते ॥

---

(१) एकदेशव्यपदेशेति समस्तः २ पु० पाठः ।
(२) प्रतिज्ञायतइति २ पु० पाठः ।

श्रवणं नामधेयं च केवलं यत्र गम्यते ।

तस्मात्तस्मादपि न्यूनं तदद्रव्यतयेष्यते ॥

देवता तावत् द्रव्यश्रुत्यैव यदि गृह्यमाणं द्रव्यं तदपि न केनचिदुपात्तम् । न हि जात्या गुणेन च विना द्रव्यमुपलक्षयितुं शक्यम् । न च यागे ऽनवधारिते ज्योतिष्टोमवद्धातोरस्ति येन सोमग्रहणमेतदिति विज्ञायते । न च गृह्णातिर्ज्योतिष्टोमं न व्यभिचरति उपादानमात्रवचनत्वात् । न चैते यागनामनी येन तं भिन्द्यातां; ग्रहणसामानाधिकरण्याद्धि तन्नामत्वमनयोरिष्यत एवास्माभिरत्र ग्रहणभेदः । न च तावता यागान्तरत्वं भवति । द्रव्यदेवतासंयोगेऽपि चैवंजातीयकानां यजिमत्त्वं निराकृतम । अचोदकाश्च संस्कारा इत्यत्र पुनस्तदपि न विद्यते ॥ योऽप्यदाभ्यवाक्ये यजतिः सोऽपि रेवतीवारवन्तीयपूर्वपक्षन्यायेन संक्रान्तविधिशक्तिना प्रत्ययेन विधीयते । तस्माद्यागमनूद्य ग्रहणविधानमेवैतत् । अंशोः कथं यागसंबन्ध इति चेत् । गृह्णातिसामान्योपस्थितेन ज्योतिष्टोमेनेति केचित् । अस्त्येव त्वनयोस्तैत्तिरीयाणां ज्योतिष्टोमप्रकरणे पुनः श्रवणं तदन्यत्र प्रयोजनत्वात् कर्मविनियोगं करिष्यति । यथा साप्तदश्यस्यानारभ्यवादेन सामिधेनीसंबन्धिमयोत्पत्तेः प्राकरणिकैश्च वचनैर्विनियोगादर्थवत्त्वमेवमिहापि द्रष्टव्यम् । तेन संस्कारस्याप्रकरणे कर्मशब्दत्वादित्ययमेव पक्षः ॥

अग्निस्तु लिङ्गदर्शनात् क्रतुशब्दः प्रतीयेत ॥ २१ ॥

अग्निं चिनुत इत्यत्रापि चैवमेव संदेहः ॥ किमपूर्वयागविधि-रुत चयनमात्रविधानमुत प्रकृतिविकृतिषु गुणविधानमिति । तत्राश्वदाभ्यवत् प्रकरणे पुनरसंकीर्त्तनात् संस्कारमात्रस्य च केवलस्य प्रयोजनासंभवात् संज्ञयैव क्रत्वन्तरं कल्प्यते। तथा च फलश्रवणमुपोद्बल्यति । न च गुणात्फलमिति शक्यं वक्तुं प्रकृताश्रयानुपपत्तेः। तथा चैकान्तिकसोमयागचिह्नानि उपसदादीन्युभयत्र संबद्धानि श्रूयन्ते। तथेमानि वचनानि अथातोऽग्निमग्निष्टोमेनैवानुयजतीति। तत्राग्निं यजतीति समिधो यजतीतिवत् तत्प्रख्यं चान्यशास्त्रमित्येवंसिद्धनामधेयविशिष्टयागविधानं विज्ञायते । तस्यैव चाग्निष्टोमादिसंस्थत्वं विशेषणम् । द्विरात्रादयश्च कालविशेषा विकल्पन्ते । अथ वा संस्थाविधिपरे वाक्ये यजत्यनुवाद एवमवकल्पते । यद्युत्पत्तिवाक्ये चिनोतिर्यजतिमद्वचनस्तस्मादुत्तरकालदृष्टेन यजतिसामानाधिकरण्येनादावेवाग्निशब्दः क्रतुनामधेयमिति निर्णीयते । अनुशब्दश्च य एतेनानिष्ट्वेत्यनेन प्राप्तं ज्योतिष्टोमात् पश्चाद्भावमनुवदति ॥ यदा ऽग्निमग्निष्टोमादिसंस्थैर्यागैरनुयजतीत्युक्ते यद्यग्निर्याग एवमसावनुयष्टुं शक्यते । सर्वत्र हि तुल्यरूपाणां तुल्यधर्मणां विभागे पौर्वापर्यं भवति । तद्यथा देवदत्तमनुगच्छतीति यदि देवदत्तोपि गच्छत्येवमनुगमनमवकल्पते तथा ऽनुयजनमपि। तस्मात् श्रुतानुमितेतिकर्त्तव्यताकत्क्रतुविधानमेतदिति पश्चिमे तु व्याख्याने ऽग्निष्टोमादिभ्यः पश्चात् क्रियमाणोयं तदङ्गमेव भवतीति फलश्रुतिरर्थवादः स्यात्। पूर्वत्र तु स्वतन्त्रत्वात् फलमात्रेयो निर्देशादिति फलविधित्वात्पुरुषार्थमिति विशेषः ॥

## द्रव्यं वा स्यात् चोदनायास्तदर्थ-त्वात् ॥२२॥

अत्यन्तरूढिशब्दत्वाद् वाक्यभेदादिभिर्विना ।
ज्वलनं न परित्यज्य क्रतुरग्निः प्रतीयते ॥

न ह्यग्निशब्दः उद्भिदादिवद्यौगिकः ॥ नापि वाक्यभेद-तत्प्रख्यतद्व्यपदेशत्वैर्युक्तो येन कर्मनामधेयत्वं विज्ञायते । यत्तु तत्प्रख्यमस्तीत्युक्तं भवेत्तद्यदि क्रत्वङ्गत्वेनाग्निर्विधीयते, स तु प्राप्तक्रत्वङ्गभाव एव चयनसंस्कारतया श्रूयते ॥ न च तादृप्येण कुतश्चित् प्राप्त इति तत्प्रख्यान्यशास्त्राभावस्तस्माद् द्रव्यमेवाग्निरिति ॥ कतमद्द्रव्यमिति चयन-सामानाधिकरण्यविरोधाभिप्रायेण प्रश्नः ॥ सिद्धान्तवादी तु व्रीहीनवहन्तीतिवत् वैयधिकरण्येनैव संस्कार्यसंस्कारसंबन्धो-पपत्तेरविरोधं मत्वाह यदेतत् ज्वलनइति। तस्मादग्निशब्दस्य प्रसिद्धार्थशायित्वाच्चिनोतेश्च यागाभिधानाशक्तेर्द्रव्यदेवता-भावाच्चाग्निं चयनेन संस्करोतीत्येतावानेव चोदनार्थोऽव-धार्यते ॥ तथा च द्वितीया समर्थिता भवति । कर्मनाम-धेयत्वे त्वग्निहोत्रवत् क्लेशः स्यात् । अनुयजतीति शब्दः कथमिति चेत् । उच्यते ॥

एकाहाहीनसत्राणि यजिस्तावद् ग्रहीष्यति ।
अनुशब्दाश्रिते तेषामनुष्ठानं वदिष्यति ॥

यदि ह्ययमग्निशब्दः समानाधिकरणः स्यात्ततो दुखं नी-येत । यदि वैषा कर्मणि द्वितीया स्यात् । अयं तु व्यधिकरणः

कर्मप्रवचनीययुक्ते द्वितीया अत्रायमर्थो अग्निचयनमन्वग्निष्टोमादिभिर्यष्टव्यमिति ॥ अग्निशब्दस्य सामान्यवचनोपि सन्नत्र प्रकरणवशाच्चयनसंस्कृते वन्हौ प्रवर्तते । चयनसंस्कारोत्तरकालं यष्टव्यमित्यर्थः । तेन क्रत्वङ्गभावोपनदनार्थत्वेनैवैतानि वचनानि । चोदकेनैव प्राप्तानां विकृतिषु पुनः श्रुतिः किमर्थेति चेत् । दशमे वक्ष्यते ग्रहणे समानविधानं स्यादिति ॥ न चावश्यं तुल्यजातीययोरेव पौर्वापर्यं भवति । अतुल्यजातीययोरपि पौर्वापर्यं भवति । तथा पाकमनुभुङ्क्त इति अविरोधोपपत्तेः ॥ यत्तु देवदत्तो यज्ञदत्तमनुगच्छतीत्येतत्तुल्यकर्मत्वं गम्यत इति, युक्तं तत्र कर्तृमात्रोपादाने सति क्रियान्तरानुपादानात् । इह पुनरग्निसंस्कारोपात्तं चयनकर्मैव विद्यत इत्यसमानम् ॥

## तत्संयोगात् क्रतुस्तदाख्यः स्यात्तेन धर्मविधानानि ॥२३॥

अग्नेः स्तोत्रमित्यादिष्वगत्याश्रयणं (१) ज्वलनेन संबद्धं स्तोत्रं लक्ष्यते नापि तद्वान् क्रतुः । न चैकत्र लक्षणाश्रयणमिति सर्वत्रैव सा ऽऽश्रयितव्येति । तस्मात्तस्यां गतौ द्रव्यवचनत्वमेव युक्तम् । यत्त्वत्रैवाधिकरणे भाष्यकारान्तरेणाग्नेः फलवदफलत्वप्राकृतवैकृतत्वनित्यानित्यत्वोत्तरवेदिविकाराविकारत्वविचारः कृतः स उदाहरणान्तरेष्वधिकरणान्तरसिद्ध इहासंबद्धोपि स्मरणमात्रदर्पेणोपन्यस्त इत्युपेक्षितव्यः ॥ तस्मान्नैवंजातीयको गुणो भेदक इति सिद्धम् ॥

(१) श्रवणमिति २ पु० पाठः ।

## प्रकरणान्तरे प्रयोजनान्यत्वम्॥२४॥

गतं गुणलक्षणभेदप्रसक्तानुप्रसक्तं कीदृशो गुणः पूर्वमासं-भवन् भिनत्ति कीदृशो वा तत्रैव संभवतीति। इदानीं पर्यवसि-तेषु पञ्चसु भेदकारणेषु प्रकरणान्तरलक्षणो भेदः प्रस्तूयते। तत्र तावद्॥

अग्निहोत्रादिशब्देन पूर्वं कर्मावबोधितम्।
न विप्रकर्षमात्रेण भेदमात्रं (१) प्रपद्यते॥

यथैव वलभ्यां पाटलिपुत्रे वा अग्निहोत्रादिशब्द उच्चार्य-माणो नार्थान्तरं प्रतिपादयति एवं प्रकरणान्तरेपि। न हि प्र-करणान्तरं तस्यार्थाभिधानशक्तिमभिव्यनक्ति॥ तद्विशेषिता-स्य यजतिजुहोत्यादयोपि नार्थान्तरे वर्तन्ते। नार्थान्तरेण विना किं चिदनर्थकं भवति। न च प्राप्तविधानं तेषु न संभ-वति यावज्जीवादिविधिभिः सह तुल्यबलत्वेन विकल्पोपपत्तेः। यो वै तेषां काम्यप्रयोगः तस्यानवगतकालविशेषत्वात् मासप-रिमाणविधानमित्यदोषः। प्रकरणस्य च वाक्यं बाधकमिष्ट-मेव। अथ वा दीक्षितत्वनिमित्तेन प्रतिषिद्धानामपि मासपरि-मितः प्रतिप्रसवः स तु प्रयोगमध्यएव क्रियते। अथ वा तान्ये-वाग्निहोत्रादीन्यत्र पर्युपस्थाप्य सोमयागसहितानि सत्रप्रयो-गवचनेन फले विधीयन्ते। न हि केवलभोजी देवदत्तो ऽन्यैः सह पङ्क्त्यां भुञ्जानो ऽन्यत्वं प्रतिपद्यते। न च फलान्तरसंब-न्धः कर्मान्तरत्वेन विना न घटतइत्युक्तमवेष्ट्यधिकरणे॥ न चा-वश्यमङ्गैरेव क्रत्वन्तरं गन्तव्यं प्रधानमपि ह्यपरिपूर्णे करणांशे

(१) भेदरूपमिति २ पु० पाठः।

स्वशब्देन विधीयमानं विरुध्यते । तस्मादेवमपि तान्येवाग्निहो-त्रादीनीति प्राप्त उच्यते ॥

उपसद्भ्यः परं ह्येतदग्निहोत्रं विधीयते ।
न च नैयमिकास्त्वेताः सन्तीत्येतेन भिन्नता ॥

यदि हि मासः शुद्धो विधीयेत ततः पूर्वकर्मानुवादे बुद्धि-र्भवेदपि । न त्वेतदस्ति उपसदुत्तरकालत्वेन श्रवणात् विद्यमा-नाभिरुपसद्भिः शक्यः कालो लक्षयितुम् । न च नैयमिके ताः स्वार्थाः परार्था वा विद्यन्ते । यदि तु तास्तदुत्तरकालत्वं मासस्य विधीयेरन् एवं सत्यनेकार्थविधानाद्वाक्यभेदः स्यात् ॥ एतस्मा-देव हेतोर्दीक्षितदानहोमपाकप्रतिषेधेन प्रतिषिद्धस्य प्रतिप्र-सवरूपेण वा सत्रैकदेशत्वेन वा ऽयं विधिः प्रत्युक्तः । तस्यापि ह्युपसदुत्तरकालत्वं मासस्येत्यनेकार्थत्वमेव । कर्मान्तरविधाने त्वनेकार्थत्वमदोषः । तस्मात्कर्मान्तरमिति भाष्यकारः । इदं त्विह वक्तव्यं, यदि वाक्यभेदप्रसङ्गात् कर्मान्तरत्वमेवं तर्हि स एव भेदहेतुः प्राप्नोति । न प्रकरणान्तरम् । अथ वा गुणा-देवानेकात्मकत्वेन पूर्वस्यासंभवात् भेद इति प्रकरणान्तरान-वकाशः । तथा हि ॥

यद्यपि प्रकृते तस्मिन्नग्निहोत्रे भवेदिदम् ।
तथाप्यसंभवात्तस्मिन् भूयात्कर्मान्तरे गुणः ॥

किंच ।

अग्निहोत्रस्य चैतेन भेदः क्रमेण संभवेत् ।
उत्तरेषां तु नैव स्यादुपसत्संगतेर्विना ॥

मासं दर्शपूर्णमासाभ्यां यजेतेत्यादिषु हि केवलमाससं-बन्धविधानान्न वाक्यभेदः प्राप्नोतीत्यकर्मान्तरत्वप्रसङ्गः ॥ तत्रै-

तस्यादिष्वप्युपसद्भिश्चरित्वेत्यनुषङ्गादग्निहोत्रतुल्यत्वमिति। त-
दयुक्तम्। कुतः॥

विना यत्रानुषङ्गेण भवेत् श्रुतिरनर्थिका।
तत्रैव स्यादुक्तार्थानामनुषङ्गो न चेह सः॥

तत्रानुषङ्गो युक्तो यत्र तेन विना न किं चिदुक्तं भवति।
यथा ऽत्रैव मासं वैश्वदेवेनेत्यादिषु यावत् यजतइति नानुषज्य-
ते तावन्न किं चिदुक्तमित्यवश्यमनुषक्तव्यम्। इह पुनर्दर्शपू-
र्णमासादिवाक्यानि तावत् स्वपदैरेव निराकाङ्क्षीभूतानि।
उपसद्भिश्चरित्वेत्ययमपि पूर्वत्रैव चरितार्थत्वान्न किं चिदपेक्षते
तत्र न कश्चिदपि हेतुरस्ति येनानुषज्येत। यस्तु वाक्यभेदप्रस-
ङ्गार्थमेवानुषङ्गमिच्छेत् कुर्यादपि सः। तत्र तु पुनः पुनश्चरित्वे-
त्यस्य विधानात् यावदनुषङ्गमुपसदामनुष्ठानं प्राप्नोति। अनिष्टं
चैतत् वेदाध्ययनुष्ठानाभावात्। यथाग्निहोत्रस्यैव पुरस्तात्कृ-
ताभिः सर्वानुषङ्गार्थसंपादनमित्युच्येत तथा सति शब्दोच्चा-
रणमप्येवमेवावस्थितम् अग्निहोत्रादीनां पाठक्रमानुरोधेन
उपकरिष्यसीति नार्थो ऽनुषङ्गेण। तस्माच्चैतद्व्याख्यानमुपपद्य-
तइत्येवं वर्णनीयम्॥

उपादेयो ऽगुणो यत्र भवेत् प्रकरणान्तरे।
तत्राकर्मान्तरं युक्तमुद्दश्ये त्वन्यकर्मता॥

इह तावत् नैव प्रकरणान्तरसद्भावात् भेदो ऽवगम्यते किं
तर्हि पूर्वं प्रकरणविच्छेदात्॥ अविपरिवर्तमाने हि पूर्वकर्मणि
केनापि प्रकारेणोत्तरस्य भेदः प्रतीयते। न तु प्रकरणान्तरं
मदपि किं चिदुपकरोति। तथा च फलं चाकर्मसन्निधावित्य-
त्र वक्ष्यामः॥ सर्वत्र च विच्छिन्नप्रकरणस्य कर्मणः संबन्धि

द्विप्रकारं श्रूयते । उपादेयमनुपादेयं च । तत्र यदुपादेयं यथाऽऽहवनीयप्रतिपदादि तत्प्रदेशान्तरस्थोद्देशेनापि शक्यं विधातुम् । यत्त्वनुपादेयं देशकालनिमित्तफलसंस्कार्यात्मकं तस्य प्रदेशान्तरावस्थितस्य कर्मप्रतिविध्यशक्तेरेषा वचनव्यक्तिर्भवति । तत्रैव कर्म कर्तव्यमिति ॥ परोद्देशेन च कर्म विधीयमानं यद्यन्येन तद्रूपमेव वाक्येनोपस्थाप्यते ततस्तदेवेत्य-कर्मान्तरबुद्धिर्भवति । अथ त्वीषदपि तिरोधानान्नोपतिष्ठेत ततः परं विधीयमानत्वेनैव विहितादन्यत्वबुद्धिः स्थिता न शक्या ऽपनेतुमिति कर्मान्तरत्वं भवति । एवं हि स विधायकस्तत्रोपदिशति अविधेयं पदार्थं प्रति मयैतत् कर्म विधीयते । तच्च स्वरूपेणानुत्पन्नं न शक्यं तत्र विधातुमिति बलादुत्पाद्यते । तद्यदि कश्चिदेवंविधं शक्नोत्युत्पादयितुं तत उत्पादयतु, यावदहमप्यत्र विधिं करोमि, अथ नोत्पादयति ततो मयैवोत्पादिते मा कश्चित्पश्चादागत्य ममापराधं मंस्तेति । तेनैवमाक्रोशिते यदि कश्चित्तथाविधमुपनयति ततो ऽसावपि तदेव देशादौ विधत्ते ॥ अथ नोपनयति ततः स एवोत्पादयत्यपीति निरूप्यते । तदिह मासस्तावत् दूरस्थहोमानुवादेन न शक्यते विधातुं, न हि कश्चिद्धोमाद्यनुरोधेनाद्यैव मासं संपादयितुं समर्थ,स्तेनात्यन्तं स्वतन्त्रमनुपादेयं मासमेव प्रतिहोमादिषु विधीयमानेषु दूरस्थैरुत्पत्तिविधिभिरुत्पादनशक्तावनुप्यमानायामिदानीमेवोत्पत्तिः क्रियते । न चोत्पन्नस्य पुनरुत्पत्तिः संभवतीत्यपूर्वविधानं विज्ञायते । ननु चाग्निहोत्रादिपदेनोत्पत्तिसहचारिणा तत्कर्मोत्पत्तावपनीयमानीयां माससंबन्धमात्रव्याप्तौ ऽयं विधि-

त्वादकत्वाद्विस्यन्येन। ततश्च॥

सन्निधानोपनीतं चेत् कर्म नोत्पद्यते पुनः।
नामधेयोपनीतं तत्तत्र नोत्पद्यतेतराम्॥

यत्र वाक्यान्तरगतमपि सन्निधानमात्रादेव प्रत्यभिज्ञायमानं न भिद्यते तत्र स्ववाक्यगतेन नाम्नोपनीयमानं न प्रत्यभिज्ञास्यतइति कुत एतत्। उच्यते॥

यथाभिलषितं यत्र दुर्बलेनापि हेतुना।
कर्मोपस्थाप्यते तत्र तदेवेत्यवसीयते॥

सन्निधानेन हि यादृगेव देशादिवाक्येषु कर्मावगम्यते तादृगेवोपतिष्ठतइति न भिद्यते। नामधेयं पुनराख्यातस्यावदाख्यातपरतन्त्रत्वात् नैव भेदाभेदयोर्व्याप्रियते। तस्मिंस्त्वाख्यातप्रवृत्तिप्रतीक्षिण्यवस्थिते मासं जुहोति मासं यजतइति जुहोतियजतिपदमात्रसंगतावालोच्यमानायामन्यस्य जुहोत्यादेः स्ववाक्यस्वप्रकरणेष्वविपरिवर्तमानत्वादप्रत्यभिज्ञानम्। किं च॥

नाम्ना धात्वर्थमात्रं च संनिधाप्येत शक्तितः।
भावना त्वनुपस्थानाद्भिद्यमाना ऽवधार्यते॥

सामानाधिकरण्येन हि सर्वनामधेयानि धात्वर्थानां नामधेयत्वेनावस्थितानि न भावनाया,स्तेन भावनान्यत्वानन्यत्वपरीक्षावेलायां सत्यपि धात्वर्थैकत्वे भावना तावदनन्यप्रमाणत्वादाख्यातप्रत्ययान्तरेणानुपनीयमाना न कथं चित् प्रत्यभिज्ञायतइति उपपन्नं प्रयोजनान्यत्वम्। अथ वा॥

धात्वर्थोऽपि यथा ऽऽख्याते सत्त्वभूतः प्रतीयते।
सत्त्वाभिधायिना नाम्ना तादृगेवोपनीयते॥

असत्त्वभूतो हि धात्वर्थोऽत्र जुहोतिना विधेयतयोपनीयते ॥ न च तादृशस्यैव द्रव्यभूतलिङ्गसंख्यायोग्यार्थाभिधायिभिरग्निहोत्रादिपदैरभिधीयमानत्वमित्यप्रत्यभिज्ञानात्सोऽपि भिद्यते ॥ यत्र तु प्रकरणान्तरेऽपि तथाभूतेनोपादास्यते भावना तावदनुरक्तात्मना न विवक्ष्यते तस्मादेव कर्मैकेन वचनेन पर्युपस्थाप्यापरेण फले विधीयत इत्यवगमात् कामं कर्मान्तरं भवतु तद्यथातिरात्रस्तु त्रिवृतः प्रायणीयमहश्चत्वारोऽभिप्लवाः षडहाः पृष्ठः षडहश्च इत्यादिषु यथा च वरुणप्रघासेष्ववभृथं यन्तीति । यदा तु प्रकरणान्तरगतफलादिसंबद्धं विधित्वमुत्पत्तिमपि संस्पृश्य यावद्बलीयस्योत्पत्तिविधिविपरिवृत्त्या विप्रकर्षादनिवार्यमाणं भिनत्तीति निश्चीयते तदेवमादिष्वपि भेदे एवेत्यवगम्यते परमार्थेन तु ॥

भिद्यते भावनामात्रं धात्वर्थो नायजिश्रुतेः ।
नाम्ना हि तदुपादानमात्मनोपायि चोदिते ॥

नामविलक्षणधातुश्रवणे हि तदर्थभेदो भवति । सत्रे तु यज्यश्रवणात् नाममात्रोपनीतप्रकृतयागप्रत्यभिज्ञानात्तद्भावनामात्रभेदः । तस्मात्साधूक्तं प्रकरणान्तरे प्रयोजनान्यत्वमिति । भाष्यकार उपसद्भिश्चरित्वेति तत्रचितकालमेवानुपादेयरूपं भेदहेतुत्वेन दर्शयतीति द्रष्टव्यम् । अथोच्येत उपसदोऽपि विधीयन्त इत्यादि चाभ्यासाधिकरणवदभ्युपेत्यवादेन समर्थयितव्यम् ॥

## फलं चाकर्मसन्निधौ ॥ २५ ॥

एवं षडपि भेदहेतवः पर्यवसिताः, संप्रति प्रकरणान्तरस्यैव

प्रकारान्तरप्रदर्शनं क्रियते । यो नाम प्रकरणान्तरकृतमेव का-
लसंबन्धकृतं वा भेदं मन्यते नासंनिधानानुपादेयवस्तुसंबन्ध-
मात्रकृतं तं प्रति विस्पष्टीकरणार्थं फलं चाकर्मसंनिधावित्या-
रभ्यते । तत्त्वेतत् सप्तमं भेदाधिकरणं यत्र देशनिमित्तयोर-
नुपादेयत्वं सुज्ञानमिति पूर्वाधिकरणे सिद्धत्वादिहानुदाहरणं
पूर्वत्रैव त्विवमादि दर्शयितव्यम् । तद्यथा सत्रायावगूर्य विश्व-
जिता यजेत साद्युत्थाने विश्वजिदित्यादीनि निमित्ते । देशेपि
दक्षिणेन तीरेण सरस्वत्या आग्नेयेनाष्टाकपालेन शम्या परा-
समीयादित्यादीनि । यद्यप्यत्रातिरात्रादिवदेव यज्यश्रवणं त-
थापि प्राक् यज्यनुमानात्तद्धितान्तपदयुक्तवाक्यपरिसमाप्ते-
र्वाक्यान्तरस्यानपेक्षणात् कर्मान्तरत्वम् । फलसंस्कार्ययोस्तु
तुल्यहेतुत्वादिह विचारः ॥ तत्र फलमुदाहृतमेव संस्कार्यम-
प्युदाहर्तव्यम् । वैधातव्या दीक्षणीयेति यजमानसंस्कारार्थ-
त्वेनोपादानात् । अनारभ्य किं चिदिति प्रकरणान्तरावरोधा-
भावज्ञापनार्थं, तत्र यागोद्देशेनाहवनीयादिवत् फलं विधेयं,
शक्यं हि तत्पुरुषेण दर्शपूर्णमासस्थेनापि कामयितुमिति म-
त्वाह प्राकृतेषु फलविधिरिति । सिद्धान्तवादी तु स्वर्गकामा-
धिकरणसिद्धं प्रत्यर्थं चाभिसंयोगादिति फलोद्देश्यत्वं मत्वा
वदति न शक्यते फलं विधातुमिति । विधीयमानं क्रियाङ्ग-
त्वादफलमेव प्राप्नोति । क्रियापि वा विधीयमाना तादर्थ्यं प्र-
तिपद्यमाना निष्फलैव स्यात् ॥ न चोभयोरुद्दिश्यमानयोरुपा-
दीयमानयोर्वा संबन्धो ऽस्तीत्यैकान्तेन फलमुद्दिश्य कर्म वि-
धातव्यम् । ततश्च पूर्ववदेव सिद्धो भेदः ॥ एतेन संस्कार्यमपि

व्याचक्षीत ॥ किंच ।

न चानित्यस्य कामस्य नित्यैरग्न्यादिकर्मभिः ।
कथंचिदपि संबन्धः साध्यसाधनरूपतः ॥

तस्मात् कर्मान्तराणीति सिद्धम् ।

## संनिधौ त्वविभागात् फलार्थेन पुनः श्रुतिः ॥ २६ ॥

सर्वेषामेवासन्निध्यंशप्रत्युदाहरणार्थमिदमारभ्यते ॥

फलग्रहणं प्रदर्शनमात्रं सर्वाणि तु देशादीन्यप्युदाहर्तव्यानीति सर्वे दर्शपूर्णमासाभ्यां यजेत पौर्णमास्यां पौर्णमास्या यजेत यावज्जीवं दर्शपूर्णमासाभ्यां यजेत दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत शेषात् स्विष्टकृते यजतीति सर्वत्र पूर्वाधिकरणेन देशादीनि प्रति विधीयमानत्वात् कर्मान्तरत्वं प्राप्तम् । आह च ॥

विहितस्य विधिर्नास्तीत्यनुवादः प्रसज्यते ।
अनूद्यमानमुद्देश्यं न चात्रोद्देशसंभवः ॥

अनूद्यमानानि त्वेकान्तेनोद्देष्टव्यानि कर्माणि न चोद्देश्यानामुद्देश्यैः संबन्धोऽवकल्पते ॥ देशाद्युद्देशेन तु विधीयमानानां कर्मणां स्वरूपानुवादकल्पनं युगपद्विध्यनुवाददोषादयुक्तम् । तस्मात्कर्मान्तराणीति प्राप्तेऽभिधीयते ॥

भिन्ने हि विधिसामर्थ्ये उत्पत्तिविनियोगयोः ।
तत्र सत्यां गतावेकमसत्यां तद्द्वयं भवेत् ॥

अगत्या हि तेनैवोत्पत्तिस्तेनैव च विनियोगः क्रियते । सत्यां तु गतौ विनियोजकस्योत्पत्तिविध्यर्थापत्त्यनुत्पादाद-

न्येनैवोत्पादितानां च विपरिवर्तमानानां विनियोगसामर्थ्य-मात्रमेव ज्ञायते ॥

न चाप्युद्दिश्यमानत्वमनुवादत्वकारणम् ।
नोपादानं विधेयत्वे प्राप्त्यप्राप्तिवशे हि ते ॥

यद्यपि देशादीन्यनुवादयस्वभावत्वादुद्दिश्यन्ते तथाप्यप्राप्तत्वात्तेषामेव ज्ञायते विधेयत्वम् । उपादीयमानस्य च कर्मणस्तादृशस्यैवान्येन पर्युपस्थापनादनुवादत्वम् । असन्निधाने त्वपर्युपस्थापनात् विधिर्नोपादानमात्रादित्यविरोधस्तस्मादभेदः ॥ विपरिवृत्तिरेव चेष्टाविभागशब्देनोक्ता विशेषेण त्ववेष्टावितच्छब्दप्रत्ययादिति । प्रयोजने तु चोदयन्ति कर्मान्तरेऽपि किन्नैतच्छब्दकृतात् सादृश्यप्रत्ययात् आग्नेयादीन्येव हवींषीति कथमन्यहविष्को याग इति । तत्त्वशोध्यम् । ज्योतिरादिवदेतच्छब्दस्य प्रस्तूयमानमुख्यार्थोपपत्तौ सत्यां सादृश्यलक्षणानुपपत्तेः । तस्मात्सूक्तं कर्मान्तरेऽन्यहविष्को याग इति । एवमुक्तानि सापवादानि षट् भेदकारणानि । वृत्त्यन्तरे तु चत्वार्येव भेदकारणानि शब्दान्तरसंज्ञागुणफलान्युदाहृतानि । पुनःश्रुतिसंख्ययोः शब्दान्तरएवान्तर्भावात् प्रकरणान्तरस्य च फलाद्यनुग्रहमात्रार्थत्वात् । तत्त्वयुक्तमिव दृश्यते ॥ न हि पञ्चकृत्वोऽभ्यस्तो यजतिः शब्दान्तरत्वं प्रतिपद्यते । नाप्यशेषेण तन्त्रोच्चारिताः सप्तदश प्राजापत्यशब्दाः संभवन्ति शब्दैकत्वप्रत्यभिज्ञानात् । तथा चोक्तमादित्यवत् यौगपद्यमिति । संख्याभावादिति च ॥ वक्ष्यति चैवंजातीयकानामेकत्वमपि चाव्यतिरेकाद्रूपशब्दाविभागाद्वेति ॥ तस्मादेकशब्दये सत्येव कारणान्तराद्भेदमपश्यतः शब्दान्तरकल्पनं तत्र भवतो भाष्या-

न्तरत्वतः, प्रकरणान्तरत्वाच्च विना फलादीनामभेदकत्वमुक्तमपि न दृष्टं 'सन्निधौ त्वविभागात्'। तत्सन्निधेर्गुणार्थेन पुनः श्रुति'रित्यादौ। तेन प्रत्यभिज्ञाननिमित्तत्वात् फलाद्यनुगृहीतं प्रकरणान्तरमेव भेदकारणं भवेदप्युपेक्षितम्। फलं च प्रकरणान्तरान्तर्भूतत्वेन न निरीक्षितम्। यदप्येकं वा संयोगरूपचोदनाख्याविशेषादित्येकत्वे हेतुविपर्ययचतुष्टयमस्य ज्ञापकमित्युक्तम्। तदपि प्रस्तुते ऽधिकरणे ऽन्येषामसंभवादिति मालोचितम्। तस्माद्यथोक्ताः षडेव भेदहेतवः। तत्रापि सु सिद्धान्ते संज्ञाशब्दान्तरयोर्गुणसंख्ययोश्च भेदो वक्तव्यः स नोक्त इत्यभिधीयते॥

स्वरूपानभिधानत्वात् संज्ञाशब्दान्तरात् पृथक्।
व्यासज्यसमवायाच्च संख्या भिन्ना गुणान्तरात्॥

संज्ञा हि द्रव्यरूपापन्नामपि क्रियामभिदधाना विच्छेदमात्रात् भिनत्ति॥ संख्यापि युगपदनेकोत्पद्यमानसमवेता पूर्वासंभवद्गुणान्तराद्भिद्यतइति॥

## आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत॥ २७॥

आग्नेयो ऽष्टाकपालो ऽमावास्यायां भवतीति श्रूयते। किं य एवासावुभयत्राप्यच्युतस्तस्यैवैषा पुनः श्रुतिः केनापि प्रयोजनेन अथ कर्मान्तरमिति संदेहस्तत्र सन्निधौ त्वविभागादिति सत्यप्यनुपादेयाममावास्यां प्रत्युपादाने तदेव कर्मेति सिद्धान्ते प्राप्ते ऽभिधीयते॥

पुनःश्रुतिरनन्यार्था भेदिकेत्यवधारिता।

तादृशी चेयमित्येव द्विराग्नेयः प्रयुज्यताम् ॥

प्रयोगद्वित्वद्वारेण च कर्मद्वित्वप्रतिज्ञानमेवैतत् द्रष्टव्यमिति ॥ तत्र पक्षान्तरमाह ॥

## अविभागात्तु कर्मणो द्विरुक्तेन विधीयेत ॥ २८ ॥

यदुक्तं समिदादिषु प्रत्यक्षयागपुनःश्रुतेर्भेदकत्वमिह तु द्रव्यदेवतासंबन्धादभावनुमातव्यः । तच्च द्रव्यदेवतमभिन्नमुपलभ्यमानं पूर्वसंबन्धानुभववशादेकान्तेन तमेव यागं बोधयति । द्रव्यदेवतमप्यन्यदिति चेत् न, विभागप्रत्ययोपलम्भात् । यदि तु व्यक्तिकृतो भेद आश्रीयते स प्रयोगान्तरे तस्याप्याग्नेयस्याविशिष्टः । तस्मादैकल्पिकेन वचनद्वयेनामावास्यायामाग्नेयविधानम् । अथ वा युगपत्प्रवृत्तेर्यथा स्यात् सत्त्वदर्शनमित्यनेन न्यायेन तदेव कर्म एकेनेतरेण च प्रतिपाद्यते । न च गम्यते विशेषः कतरेण प्रतिपाद्यते कतरत् पौनरुक्त्यादनर्थकमिति । कामं भवत्वानर्थक्यं, तदेव हि युक्त्यान्विष्यमाणमिहोपपन्नतरं भवेन्नार्थान्तरवचनत्वं, शब्दार्थानित्यत्वप्रसङ्गात्, तस्मात् सकृदेव प्रयोग इति सर्वं त्विदमभ्यासाधिकरणे निराकृतमपि सदुत्तरसूत्रदर्पेण विस्रब्धमभिधीयते । न तु परमार्थेनानर्थक्याभ्युपगमं वेदः क्षमते ॥

## अन्यार्था वा पुनःश्रुतिः ॥ २९ ॥

सर्वथा पुनःश्रुतिप्रयोजनेष्वन्विष्यमाणेषु गुणस्याश्रवणात् परिसंख्यायाश्च त्रिदोषत्वादर्थवादार्थत्वेऽभ्युपगते कस्यार्थवाद

इति विविच्यासंकीर्त्तनात् नूनमाग्नेयस्यैवेति मत्वा वदति सा- र्थवादकेन विहितेन किं प्रदेशान्तरस्थेनैकवाक्यतामनागच्छ- ता ऽर्थवादेनेति । विधिशेषत्वं ह्यर्थवादानामवस्थितम् । परि- चोदना तु पूर्वपक्षाभिप्रायेण कृता तत्र यथा स्तुता वा ऽस्तुता वा सैव देवतेत्यविवरणान्न विज्ञायते किंविषयमिति । न त्वेत- दातिक्रान्ताध्यायेनेन मन्त्रेन्द्राधिकारणे गुणाख्यानशंकाः स्यादि- त्यत्र सूत्रे ऽभिहितं परामृष्टमिति दृश्यते ॥ यथैव हि मन्त्रत्वं देवतानन्तर्गतमिति पक्षे केवलस्यैवेन्द्रस्य साधनत्वाद्विध्युद्देशे ऽर्थवादेवस्थितमनर्थकं प्राप्नोति । तथैवेदं स्तनन्वस्तुतिमात्र- मिति मन्यते । तत्रोच्यते ॥

प्रशस्तशब्दैरवधारितेन वाक्यान्तरात् केवलदेवतेन ।
कर्तुं सहेन्द्रेण पुनः प्रशंसां पुनः श्रुतिः सम्यगिहाश्रितेयम् ॥

इति श्रीभट्टकुमारिलकृतौ तन्त्रटीकायां द्वितीयाध्यायस्य तृतीयः पादः ॥

---

# यावज्जीविको ऽभ्यासः कर्मधर्मः प्रकरणात् ॥ १ ॥

बह्वृचब्राह्मणे अध्वर्युब्राह्मणे वा श्रूयतइति नातीवाभिनि- वेष्टव्यम् । ननु कर्तृधर्मः कर्मधर्म इति शेषलक्षणविषयत्वा- दिह न संबध्यते ॥ केचिदाहुः । पर्यवसिते लक्षणार्थे तदी- योपि विचारः प्रत्यासत्त्या क्रियमाणो न विरुध्यतइति । तत्त्व- युक्तम् । शाखान्तरे कर्मभेदविचारस्याद्याप्यपर्यवसानात् ॥

अत एवं संबन्धनीयम् । यथैव भेदकारणानि कर्मस्वरूपभेदे व्याप्रियन्ते तथैव प्रयोगभेदेऽपि । तदिह यावज्जीवगुणसंयुक्तानामग्निहोत्रादीनां किं प्रयोगा भिद्यन्ते उतैक एवायं प्रयोगः काम्यः स एव यावज्जीवकालपरिमित इति ॥ तत्र यदि यावज्जीवकालः कर्मधर्मत्वेन विधीयते ततः सायंप्रातर्वाक्यवशेन तत्कालसमापनमग्निहोत्रं न शक्नोति तावन्तं कालं पूरयितुमित्यर्थात् ज्योतिष्टोमवदभ्यस्तरूपमेव प्रयोगं प्रतिपत्स्यते ॥ यदि पुनर्जीवनं निमित्तत्वेनोद्दिश्य कर्म विधीयते ततो यावत्कर्तृभाविनि नियते निमित्ते विना कामसंबन्धेन चोद्यमानमकरणे दोषप्रसक्तेरवश्यं पुरुषेण जीवता स्वार्थमिष्टार्थमनर्थपरिहाराय वा कर्तव्यमिति कर्तृधर्मो नियमोऽनेन चोदितो भवतीति । तदा च सायंप्रातःकालयोर्जीवनस्य च संहतानां निमित्तत्वात् प्रतिदिवसं निमित्ते तत् पर्यवसितं कर्म पुनः पुनः क्रियत इति प्रयोगान्यत्वं, तेन प्रयोगभेदाभेदाविवेतत्फलत्वात् (१) भाष्यकारेणोपन्यस्ताविति मन्तव्यम् । किं प्राप्तमेकः प्रयोगोऽभ्यस्तरूपः कर्मधर्मो यावज्जीवकता कालोपदेशश्चायमिति । कुतः ॥

> कर्मस्थो हि कथंभावस्तदङ्गमभिकाङ्क्षति ।
> कालोपदेशपक्षे च तत्तथैवोपपद्यते ॥

कालो ह्युद्दिश्यमानस्तन्निमित्तश्चाभ्यासः कर्माङ्गं भवति ततश्च प्रकरणमनुगृह्यते । ननु च पुरुषधर्मत्वेऽपि तस्यैव कर्मणो जीवने विधानान्नैव प्रकरणं बाध्येत । सत्यमधिकारो न बाध्यते । कथंभावात्मकं पुनः प्रकरणं क्रतुधर्ममपेक्षमाणं पुरु-

(१) प्रयोगभेदाभेदफलत्वादिति २ पु० पाठः ।

षधर्मे विधीयमाने ऽत्यन्तं बाधितं भवति । यद्यपि कालस्य (१) निमित्तवद्देवानुपादेयत्वात्तुल्या वचनव्यक्तिः तथापि फलतः कालविधानं यागानुवादश्चेति विपरीतं कथ्यते ॥ अथ वा जीवनपरिमितकालद्वारेणाभ्यासश्चोदयिष्यते । स च कर्मोद्देशेन शक्यतएव विधातुमित्येवमुपदिश्यते । कर्तृधर्मपक्षे पुनर्न कथंचित कर्मोद्देशः । एवं चैकप्रयोगत्वे सति दीर्घसत्रप्रयोगसंस्तव उपपन्नो भविष्यति । इतरथा पुनः प्रतिदिनं पर्यवसानान्न कथंचित् सत्रसादृश्यं भवेत्, तस्मात्कर्मधर्मो ऽभ्यास इति ॥

## कर्तुर्वा श्रुतिसंयोगात् ॥ २ ॥

धर्म इत्यनुवर्तते तेनैषा प्रतिज्ञा कर्तृधर्मोयं चोद्यतइति । सोपि च नियमो न यथाकाम्यम् । कुतः ॥

यावज्जीवपदाख्यातश्रुतिवृत्तित्वसंभवः ।
मत्पक्षे, भवतस्तत्र लक्षणावृत्तता भवेत् ॥

इह हि यावज्जीवमिति यावत्कर्तृभावजीवनं निमित्तभूतं श्रुत्यैव प्रतिपादितम् । जुहोति यजतीत्यपि धात्वर्थानुरक्तभावनामात्रवाची प्रत्ययांशः श्रौत एव तदुभयमपि मत्पक्षे ऽनुगृह्यते । भवत्पक्षे तु जीवनेन कालो लक्ष्येत ॥ जुहोतियजतिभ्यामप्यभ्यासः यत्र हि विधिः समाप्यते स चोदनार्थो भवति । भवतस्तु जीवनधात्वर्थपरित्यागेन कालाभ्यासौ विधीयेते । तेन लक्षणापर्यवसायी विधिः प्राप्नोति । तत्रैतत् स्याद्यावज्जीवमिति यावच्छब्दः श्रुत्यैव कालं ब्रवीति । तद्यथा यावद्दोहं स्वपिति । युक्तमत्र कालग्रहणं वर्तमानापदेशो ह्ययं

(१) कालस्यापीति २ पु० पाठः ।

नात्र काचिन्निमित्तापेक्षा तेन प्रतिवृत्तं दोहनमतिक्रम्य कालो गृह्यते। यदि त्विहापि यावद्दोहं स्वप्यादासीत वेति विधीयेत ततः केन वा दोहस्य निमित्तत्वं वार्येत॥ यावज्जीवचोदनतायां तु न किंचिदतिक्रमकारणमस्ति। प्राणधारणक्रियाया एव निमित्तत्वोपपत्तेः॥ न च यावच्छब्दः कालवचनः क्वचित् प्रसिद्धः क्रियामेव तु समाप्तिपर्यन्तत्वेन विशिनष्टि। क्रियाकालयोरभेदात् न लक्षणेति चेत्॥ अत्र वैशेषिकानपराजित्य परिहारायोपस्थातव्यम्। अपि च सत्यपि क्रियाणां कालत्वे काचित् व्यवस्था विद्यते यतो न सर्वासु कालप्रतिपत्तिर्लोकस्य, तत्र शेषाः क्रिया उपलक्षणीकृत्य चन्द्रादित्यपरिवर्त्तनक्रियासु कालव्यवहारो व्यवस्थितः ता एवावान्तरक्रियापरिमाणेन प्रत्यासत्तेरन्यक्रियापरिच्छेदार्थमुपादीयमानेनोपलक्ष्यन्ते। तथा हि॥

अनवस्थितमानत्वात् गोदोहादिषु रूपतः।
चिन्हं व्यवस्थयेच्छन्ति नित्यं सूर्यादिचेष्टितम्॥

कियता कालेन गौर्दुह्यतइत्युक्ते नियतान्येव मुहूर्त्तादीनि परिच्छेदकत्वेनोपादीयन्ते॥ तत्परिच्छेदश्च नाडिकालक्षणालवत्रुटिनिमेषादिभिर्व्यावहारिकक्रियाव्यतिरिक्तैरेव क्रियते॥ तदभ्यासवशेन तु व्यावहारिकाणामपि प्रायिकपरिमाणज्ञानात् परिच्छेदकत्वं भवति। न च जीवनं नाम निमेषादिवन्नियतपरिमाणं येन परिच्छेदकत्वसामर्थ्यात् कालत्वेनाश्रीयते॥ तस्मात् व्यतिरिक्तकाललक्षणा दुष्परिहरा। पुनश्चाभ्यासलक्षणा। कथम्॥

न ह्येकेन प्रयोगेण जीवकालोऽवरुध्यते।

विततेनापरिज्ञानादन्यथा वा वृथाश्रुतिः ॥

अनभ्यस्तं प्रयुञ्जानो यदि तावत् विततं प्रयुङ्क्ते जीवनपरिमितस्य कालस्यान्तरा किं चित् कर्मावयवं यदा कदा चित् कुर्वाणः ततो मरणस्यानिरूपितकालत्वाद्यदि कथं चिदन्त्यायामवस्थायां समापयेत् न च म्रियेत तदूने काले समापनादयथाचोदितापत्तिः । अथासमाप्य म्रियेत तथापि प्रक्रान्तासमापनं दोषः स्यात् । न च सर्वस्यावदुचनमस्ति येन मृतेऽपि समाप्येत । सायंप्रातश्चोदने च यावज्जीवकाम्यचोदनासमीपाम्नाते सत्यां विना प्रमाणेन केवलकाम्यविषये कल्पनीये स्यातामस्मिन्पक्षे, यदि तु तदनुरोधेन सकृदेव प्रयुज्योभयं संभावितमिति मन्येत तथा पौर्णमास्यां पौर्णमास्या यजेतेति चोदिते तदेकदेशकरणेनापि शास्त्रार्थः संभाव्यतइति न व्याप्यते ॥ तथा जीवितपरिच्छिन्नकालैकदेशवर्तिनोः सायंप्रातःकालयोरनुष्ठानाच्चोदनाद्वयमप्यनुष्ठितार्थं भविष्यतीति । तच्चोच्यते ॥

पौर्णमास्यतिरिक्ताऽव्यवच्छेदफला श्रुतिः ।

अव्याप्तावपि तत्र स्यान्न त्विहैवं प्रतीयते ॥

यद्यपि ततानत्वात् कर्मणः पूर्वोक्तचोदनावशेन वा पौर्णमासी न व्याप्यते न किं चिद्दुष्यति ॥ सर्वथा दिवसान्तराण्यतिक्रम्य पौर्णमास्यां तावत् कृतं कर्म तावन्मात्रं च शास्त्रेणोक्तं न व्याप्तिरितरच्च पुनर्जीवितव्यतिरिक्तकालासंभवाद्व्यवच्छेद्यं न किं चिदस्तीति व्याप्त्यावसत्यां समस्तमेव वाक्यमनर्थकं स्यात् । सायंप्रातश्चोदनयोरपि जीवनकालान्तर्गतेः सिद्धत्वात् यावच्छब्दस्य समस्तजीवितावधिपरिग्रहार्थं एकदेशानुष्ठाने

बाधितः स्यात् । अतः सायंप्रातश्चोदनामिश्रेयमभ्यासमनाक्षि-
पन्ती न शक्नोति पुरुषं नियोक्तुमित्यपरिहार्या लक्षणा ॥
ननु चार्थादभ्यासो जायमानस्त्वत्पक्षवदेव न दोषं जनयेत् ॥
तथा हि ॥

सकृदेव श्रुतो होमः क्रियमाणः पुनः पुनः ।
न शब्दे भारमाधत्ते सामर्थ्यारोपितश्रमः ॥

अथ योयं मम दोषः स तवापि दोष एव, वक्तव्यो वा वि-
शेषः ॥ उच्यते ॥

मम प्रतिदिनं सर्वश्चोदनार्थः समाप्यते ।
काम्यवच्च पृथक्त्वेन तव त्वन्ते समाप्यते ॥

मम जीवनसंबन्धितसायंप्रातःकालोपजनने हि सकलं कर्म
कृत्वा निराकाङ्क्षे पुरुषे सति पुनरपि तादृशनिमित्तसंभवात्
द्वितीयादिष्वहःस्वनुष्ठानम् । तत्र च प्रतिदिनं समाप्ते(१)र्नो-
भ्यास इति शक्यं वदितुम् । तद्यथा काम्ये यः फलभूमार्थी पुनः
पुनः प्रयुङ्क्ते न तस्याभ्यस्तरूपमेतत् कर्मेत्येवं बुद्धिर्जायते
तथा ऽत्रेति ॥ तव पुनर्जीवितपरिमितकालविधानात् कर्मणो
ऽपरिसमाप्तस्यैवैन्द्रवायवादिग्रहाभ्यासवत्त्वमनुष्ठानं तच्चैतत्
यावज्जीवचोदनाकृतमित्यापन्नमभ्यासविधानम् । यत्त्वर्थाद-
भ्यास इति । सत्यमेतत्तेनैव तु लक्षणा ऽन्यथा श्रुतिरेव स्यात् ।
तस्मादुभयतः श्रुत्यनुरोधेन प्रकरणं बाधित्वा जीवनमुद्दिश्य
होमयागविधानात् कर्तृकर्मविधिरित्युपपन्नम् ॥

## लिङ्गदर्शनाच्च कर्मधर्मे हि प्रक्रमेण

(१) कर्मसमाप्तेरिति २ पु॰ पाठः ।

नियम्येत तत्र चानर्थकमन्य-
त्स्यात् ॥ ३ ॥

अतिपत्तिरिति स्वधर्मातिक्रमोऽभिधीयते ॥ जीवनपरिमितस्य दर्शपूर्णमासयोः कालः न च तदतिक्रमः कथंचिदपि संभवति ॥ प्रक्रमेण हि कर्मकालं संस्पृशदनतिक्रान्तमित्यभिधीयते । न च कश्चिदपि पूर्णमासयाजी सन्नप्रक्रममाण एव जीवनमतिलङ्घयति न ह्यसौ दर्शपूर्णमासयाजी स्यात् । अथ स्वकालापरिसमापनमतिपातनमुच्येत तथा मृतस्य तद्भवतीत्यनर्थकमेव प्रायश्चित्तविधानम् । मत्पक्षे हि प्रतिमासं दर्शपूर्णमासप्रक्रमसमाप्त्योर्जीवने निमित्ते विधानात् संभवति अतिक्रमस्तदुत्तरकालस्य प्रायश्चित्तविषयत्वेन । ननु पूर्वपक्षेऽपि प्रतिमासमभ्यासाभ्युपगमात् तदतिक्रमनिमित्तप्रायश्चित्तविधानं भविष्यति । न शक्यमेवं वदितुम् । यत्र हि निमित्ते यच्चोदितं तेन तत्र भवितव्यम् न यथेष्टं,मिह च पौर्णमास्यमावास्यातिपत्तिर्निमित्तत्वेन श्रुता न चाभ्यासस्तच्छब्दवाच्यः ॥ यथा न ह्यभ्यासः कश्चित् ज्योतिष्टोमशब्दवाच्यस्तेन जीवितपरिमिताभ्याससंयुक्तयोरेव पौर्णमास्यमावास्याशब्दवाच्यत्वमिष्टमिति नावयवानामतिपातनं निमित्तं स्यात् । ननु च पौर्णमास्यमावास्याशब्देनात्र कालोऽभिधीयते, स चावयवविषय एवेत्यवयवातिक्रमो निमित्तं स्यात् । नैतदेव,मतिपातनं नामातिपद्यमानस्य भवति, न च कालस्यातिपन्नत्वं धर्मोऽनतिपत्तेरविधाना,-
यस्य हि यावान् विषयोऽनतिक्रमणीयत्वेन चोदितस्तस्य तद-

तिलङ्घनमतिपत्तिरित्युच्यते ॥ न च कालस्य कर्मानतिक्रमणीयत्वेन चोदितं किं तर्हि कर्मणः कालः । तस्य हि सोऽङ्गं न तस्य कर्म, तदेव च तत्सद्भावासद्भावयोः सगुणं निर्गुणं च भवति न कालः, तदेव चानुष्ठानात्मकत्वादतिक्रमानतिक्रमौ प्रतिपद्यते न कालः, तस्य स्वभावसिद्धत्वात्, तस्माद्यः पौर्णमासीं स्वं कालमभिपद्यमानामतिपादयेदित्यवधारणात् कर्मण एव निमित्तत्वं, न चावयवस्तच्छब्दवाच्य इत्युक्तम् ॥

# अपवर्गं च दर्शयति कालश्चेत्कर्मभेदः स्यात् ॥ ४ ॥

दर्शपूर्णमासाविष्टेति पूर्वेणैव न्यायेनाशेषाभ्यामनिर्वृत्तयुक्तरकालं सोमयागः स्यात् । न च मृतेनासौ कर्तुं शक्यः ॥ अथ त्वस्ति सोमानुष्ठानकालः तत एकान्तेनैव दर्शपूर्णमासाभ्यां जीवितकालो नावरोद्धव्यः । स च कर्तृधर्मे पक्षे (१) कर्मप्रयोगभेदात् नावरुध्यते नान्यथा । सूत्रमप्येवमस्ति चेत् दर्शपूर्णमासविनिर्मुक्तः सोमकालः ततो यथोक्त एव कर्मप्रयोगभेदः स्यात् । कालश्चेत्कर्मभेदः स्यादित्यस्यापरा व्याख्या । यदि यावज्जीविकः कर्मधर्मकालश्चोद्येत ततो दर्शपूर्णमासमध्य एव सोमोऽन्यानि च कर्माणि कर्तव्यानि स्युः, ततश्च विततस्य कर्मणः कर्मान्तरेण भेदे सति दर्शपूर्णमासाविष्टेति बाध्येत । अथ वा एष स्वर्गात् लोकात् छिद्यते एतद्यज्ञः छिद्यत इत्येवमादिभिश्च निन्दितमनुष्ठीयेत । तस्मादपि न कालविधानमिति

(१) कर्तृधर्मपक्षे इति समस्तः २ पु० पाठः ।

मुक्तकान्यार्थदर्शनद्वयं पूर्वसूत्रगोचरभूतं दर्शयति । तद्यथा । आहिताग्निर्वा एष सन्निति दीक्षितस्य दानादौ निषिद्धे विध्यन्तरशेषभूतः परिवेदनमत्रूपार्थवादो भवति । एतावन्तं हि कालमसावग्निहोत्रादिदेवताभ्यो भागमदत्त्वा ता अनुध्यायिनीः करोति नायमस्मभ्यं ददातीत्येव चिन्तायुक्ताः करोतीत्येतन्नियमपक्षे युज्यते । कालविधिपक्षे तु काम्यत्वादग्निहोत्रस्य यथेष्टप्रयोगे सति नियोगतो दातव्याभावादनुध्यायिनीवचनं नोपपद्यते । तस्मादपि नियमवचनम् । एतेन जरामर्यवचनविधानं व्याख्यातम् । काम्यत्वकल्पनायामप्रयोगादपि निर्मोके सति जरामरणनिर्मोकवचनवैयर्थ्यप्रसङ्गः ॥

## अनित्यत्वात्तु नैवं स्यात् ॥ ५ ॥

यदेतन्मुक्तकमभिहितमेतदेव सूत्राकूढं करोति । नियमपक्षे ह्येतदेवं स्यात् । अनित्यत्वात्तु भवत्पक्षे नैवं स्यात् । अथ वा यावज्जीवशब्देन काले गृह्यमाणे लक्षणादोष उक्तः तमभ्युपेत्याभिधीयते सत्यामपि लक्षणायामनित्यत्वात् नैवं स्यात् । तन्नाम कालोपलक्षणं युक्तं यन्नित्यं कियतापि कालेनाविनाभूतं, यद्वच्चन्द्रमा न दृश्यते तामसावास्या विद्यादित्यादिवत् । न च सर्वप्राणभृतामेव जीवनपरिसमाप्तिर्यतः कुतश्चित् व्यवस्थितस्वरूपा यया कालो लक्ष्येत, तदेतदेवमापद्यते यदैवेदं भवति ततश्चानित्यत्वान्निमित्तमेवैतदिति सिद्धम् । कथं तर्हि नियतनिमित्तत्वान्नित्यमित्युच्यते यावच्छरीरभावित्वाभिप्रायमेतदित्यदोषः ॥

## विरोधश्चापि पूर्ववत् ॥ ६ ॥

नियमः सन् पुरुषधर्मत्वान्नातिदिश्यत इति च वक्ष्यते । कालः सन्नतिदिश्येत । ननु कालोऽपि देयद्रव्यवत् सद्यःकालतया बाध्येत । नैतदेवं यावज्जीवं पौर्णमास्यमावास्ययोः सद्यः कुर्यादित्यवधारणप्रसङ्गात् ॥

## कर्तुस्तद्धर्मनियमात्कालशास्त्रं निमित्तं स्यात् ॥ ७ ॥

कर्तृधर्मपक्षे यदिदं त्वदभिमतं यावज्जीवमिति कालशास्त्रमिदं निमित्तं भविष्यतीत्येतावत्सूत्रम् । यत्तु भाष्यकारेण व्यपवर्गादर्शनमुक्तं तद्यदि दर्शपूर्णमासाविष्टैतदेवा(१)भिप्रेतं ततः पुनरुक्तं,अथान्यत्तदप्यनुदाहृतत्वान्न ज्ञायते । तेनानन्तरालोचनयैवं योजयितव्यम् । त्वत्पक्षे विकृतीनामव्यपवर्गः स्यात् मत्पक्षे तु तासां व्यपवर्गदर्शनं सिद्धान्त उपपत्स्यते । अथ वा निगमनसूत्रमेतदिति व्याख्येयम् । अथ वा सूत्रकारेण कर्तृधर्मो नियमोऽयमित्युक्तम् । यावज्जीवशब्दस्य तु का गतिरिति नाभिहितमत आह । एवं सति कालशास्त्रमेव निमित्तं स्यात् । अथ वाऽग्निहोत्रे दर्शपूर्णमासयोस्तावत् यावज्जीवग्रहणात् कर्तृधर्मनियमत्वं भवेत् पशुसोमचातुर्मास्ये तु कथम् । तदुच्यते । तत्रापि वीप्सायुक्तं कालशास्त्रमेव निमित्तं स्या,द्वसन्ते वसन्ते ज्योतिषेत्यादि । न तावदेतत् काम्यस्योपदिश्यते । स हि यावदिच्छमङ्गत्वेनैव स्थित-

---

(१) दृष्टवेत्प्रेतरेवेति २ पु० पाठः ।

त्वात् नैवं वक्तुं शक्यते । अथापि नैयमिकस्य सकृत्प्रयोगः स्या-त्तत्रापि वीप्सानर्थिका भवेत् । न च वसन्तेयत्तावधारणाप्र-माणमस्ति । तस्माद्यावज्जीवं ये वसन्तास्तेष्विति विज्ञायते । सप्तम्यपि च भिन्ने जुहोतीत्यादिवत् निमित्तार्था भविष्यति, ते-नोच्यते सर्वत्रैवंजातीयके कर्तृधर्मनियमावधारणात्कालशा-स्त्रं निमित्तशास्त्रं प्रत्येतव्यम् । एतेनैव पशुचातुर्मास्यादिष्व-पि नैयमिकत्वसिद्धिः ॥

## नामरूपधर्मविशेषपुनरुक्तनिन्दा-ऽशक्तिसमाप्तिवचनप्रायश्चित्ता-न्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदः स्यात् ॥ ८॥

उक्तभेदकारणषट्कव्यतिरिक्तकारणनिराकरणार्थमिदमा-रभ्यते । तत्रैव कानि चित् केन चित्प्रकारान्तरेणाशङ्क्य प्रतिषिध्यन्ते । तत्तु प्रत्युदाहरणं प्रविविञ्चन्तो (१) योजयि-ष्यामः । कथं पुनरत्र वेदान्तराणि नोदाह्रियन्ते । के चि-दाहुः । शाखान्तरशब्देन तान्यप्युदाहृतानीति । न त्वेत-द्युक्तम् । कुतः ॥

शाखान्तरे यथा कर्म कृत्स्नरूपं प्रतीयते ।
किंचिद्गुणसमाम्नानान्नैवं वेदान्तरेषु तत् ॥

यत्र हि कर्म निराकाङ्क्षमाम्नायते तत्र सद्भेदप्रतिपत्तिक्षमं भवति । यथा सर्वास्वध्वर्युशाखासु दर्शपूर्णमासज्योतिष्टोमा-

(१) प्रतिषेधयन्त इति २ पु० पाठः ।

होनि समस्तद्रव्यदेवतादियुक्तत्वादन्योन्यनिरपेक्षाणि विधीय-न्त इति भेदाशङ्कां मन्यन्ते न त्वेवं वेदान्तरेऽपि । तत्र हि द्रव्य-देवतारहितं कर्ममात्रं प्रस्तुत्य स्तोत्रशस्त्रयाज्यानुवाक्यादि-मात्रं विधीयते । न च तावतास्य नैराकाङ्क्ष्यं भवति दृष्टा-र्थानामेव द्रव्यदेवतानत्संस्कारादीनामभावात् । यत्तु तत्र द्रव्य-देवतायुक्तमाम्नायते तस्याऽऽध्वर्यवे गुणमात्रविधानात् साका-ङ्क्षत्वम् । तथा च वक्ष्यति भूयस्त्वेनोभयश्रुतीति । तस्मात् शा-खान्तराण्येवोदाहरणम् । तत्र च नामभेदस्तावत् कारणं दृ-श्यते । तद्यथा । काठकेऽग्निहोत्रे तैत्तिरीयेऽग्निहोत्रे इदं पश्यत इत्यादि । तथा रूपभेद एकादशकपालत्वादि । वैश्वानर-द्वादशाष्टत्वादिवदामिक्षावाजिनवच्च न द्वादशत्वैकादशत्वयो-रितरेतरसंक्रान्तिरुपपद्यत इति गुण एव भेत्ता । कारीर्यग्न्यश्व-मेधेष्वपि भूमिभाजनोदकुम्भाश्वघासा गुणा एव सन्त इति कर्तव्यताश्चायोग्यत्वेन बाह्यतरत्वात्पूर्वस्माद्भेदेनोपात्ताः । अ-परेऽन्यं धर्ममाचरन्तीति विरोधिगुणान्तरप्रदर्शनार्थम् । अ-श्वघासादेरिति पञ्चम्यन्तं मध्ये पठितमुभाभ्यां सह संबध्यते । पूर्वेण तावदश्वघासादेरन्यमुत्तरेणाश्वघासादेर्निष्पन्नमुपका-रमाकाङ्क्षति अश्वमेधादिरिति पुनरुक्तत्वेन पुनःश्रुतिर्भेद-कोक्ता । निन्दायामप्युदितानुदितकालसंयोगभेदात् गुण एव भेदकः । उदितहोमवादिनो ह्यनुदितहोमं निन्दन्त्यनृतवादि-त्वेन सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति ह्यनुदिते सूर्येऽभिधी-यमानमनृतं जायते । तस्मादुदितहोमः कर्तव्य इति । इतरे पुनराहुः यः पूजां पूज्याय प्रथममेव गृहीत्वोत्तिष्ठते स साधु-र्यस्त्वतिक्रान्तं व्याहृत्य पूजयति नासौ सम्यक्पूजकः । तस्माद-

नुदितहोम एव कर्तव्य इति। तत्रैकत्वे विप्रतिषिद्धधर्मसमवा-
यप्रसङ्गो, नानात्वे तु न कश्चिद्विरोधः। अशक्तिद्वारेणापि गुण
एवोपन्यस्तः शाखान्तरीयाणां गुणानामेककर्मण्युपसंहाराश-
क्तेरपूर्वसंयोगः। समाप्तिभेदोऽपि गुण एव निन्दया गतार्थोऽपि
सन् प्रायश्चित्तभेद पुनरुपन्यस्यते कदाचिदत्र वैकल्पिकत्वप-
रिहारं ब्रूयात् तत्रैवमभ्युपेत्योच्यते। वैकल्पिकेषु ह्युभयथाऽप्य-
वैगुण्यं भवत्यत्र च प्रायश्चित्तविधानादुभयत्रापि वैगुण्यं दृश्यते।
न च तत्कर्मैकत्वे घटते। तस्मादपि भेदः। परिहारसूत्रवशेन
पश्चान्यार्थदर्शनान्युच्यन्ते। यदि पुरा दीक्षिवन्तस्ततो बृह-
त्सामानमतिरात्रमुपेयुः पूर्वदीक्षायां रथन्तरस्य प्रयुक्तत्वात्
अथ न दीक्षितवन्तस्ततो रथन्तरसामानमेवोपेयुरिति। द्वाद-
शाहे ऽनिष्टप्रथमयज्ञत्वं कर्मभेदे भवति। ताण्डकवचनेन ज्यो-
तिष्टोमान्तरस्य प्राथम्यनियमे सत्येतच्छाखागतस्यानियमात्।
एकत्वे तु सर्वशाखास्थज्योतिष्टोमप्राथम्यनियमाददीक्षितानां
दर्शनं न स्यात्। तथा यूपैकादशिन्यां पश्ववदिसम्मानयोरर्थ-
प्राप्तयोरेकं निन्दित्वेतरपरिग्रहो वचनान्तरप्राप्त्यसत्त्वं द्यो-
तयति। वचनान्तरे हि किमेकस्य निन्दया, किं वेतरस्य स्फुट-
विधाने सति स्तुत्या, तस्मान्नून शाखान्तरीयो रथात्तमाचान्त-
रानविधिरेषां नास्ति। ततश्च कर्मभेद इति। द्वे स्तोत्रीये वि-
राजं (१) दशकर्नातिरिच्येते इति तिस्रो ऽतिरिच्यन्त इति च
ज्योतिष्टोमातिरात्रैकत्वे सत्यनुपपन्नं, भेदे तु यथाविधि भव-
तीत्यविरोधः। पुरोडाशिसान्नाय्यदर्शनं दीक्षितादीक्षितसं-
दर्शनेनैव गतं परिहारप्रकारान्तरत्वादुदाहृतम्। किं च॥

(१) वैराजमिति २ पु० पाठः।

पृष्ठद्वयविकल्पः स्यात् शाखान्तरविधानतः।
स च प्रकृतितः प्राप्तः कर्मैकत्वे वृथा भवेत्॥

उपहव्यभेदे तु नियमार्थायां पुनःश्रुतावर्थवत्ता। तस्मादपि कर्मभेदः॥

## एकं वा संयोगरूपचोदनाख्याविशेषात् ॥९॥

सर्वत्र प्रत्यभिज्ञानात् संज्ञारूपगुणादिभिः।
एककर्मत्वविज्ञानं न शाखास्वपगच्छति॥

सर्वब्राह्मणप्रत्ययमित्येकस्यामपि शाखायां ब्राह्मणानेकत्वेऽपि तदेकं कर्मेत्यभिप्रायः। तद्यथोद्गातॄणां पञ्चविंशषड्विंशब्राह्मणयोर्ज्योतिष्टोमद्वादशाहौ। संयोग इति प्राधान्यात् फलसंयोगग्रहणम्। रूपमिति प्रत्यासत्तेर्द्रव्यदेवतम्। चोदनेति सर्वधात्वर्थभावनाविषयो विधिः ज्योतिष्टोमादि नामधेयं च सर्वशाखास्वविशिष्टं दृश्यते। तस्मादियतः प्रत्यभिज्ञानकारणकलापादभेदसिद्धिः। न चान्यः कश्चिद्भेदहेतुरस्ति। प्रकरणान्तरवत् शाखान्तरेषु परस्परासन्निधानमिति चेत् न, तेनैवेतराग्रहणात्। येन हि प्रदेशान्तरे किंचित् कर्म गृहीतं भवति स एव तत्सदृशमन्यत्रोपलभ्यमानः (१) शक्नोति ततोऽन्यदेतदित्यध्यवसातुम्। एकशाखाविषये च सर्वशाखाध्ययनादेवं भवति। शाखान्तरे पुनरन्यशाखागतज्योतिष्टोमाद्यनवबोधादपूर्ववदृश्यमानेषु न भेदबुद्धिर्जायते। यस्तर्हि द्वे शाखे पठति

(१) उपलभमान इति २ पु० पाठः।

तस्य प्रकरणान्तरन्यासेन भवितव्यमेकशाखागतेषु च ब्राह्मणान्तरेषु । नैष दोषः । शाखान्तराध्ययनं तावदेकस्य पुंसो नैवेष्यते । किं कारणम् ॥

स्वाध्यायग्रहणेनैका शाखा हि परिगृह्यते ।
एकार्थाना विकल्पश्च कर्मैकत्वे भविष्यति ॥

यथैवाकृतिः प्रतिव्यक्ति समवैति तथैव स्वाध्यायत्वमेकैकस्यां शाखायां,मतश्च स्वाध्यायो ऽध्येतव्य इति कर्मविशेषणं प्रत्युपादीयमानत्वात् विवक्षितैकसंख्यैका शाखा ऽध्येतव्या । नन्वेवं वेदान्तरस्यापि अध्ययनं न प्रसज्यते । न, वचनान्तरेण प्रतिप्रसवात् अनया त्रय्या विद्ययेति । तथा वेदानधीत्य वेदौ वेति मानवम् । साकाङ्क्षत्वाच्च वेदान्तराणामतुल्यकार्यत्वकारितः समुच्चयो ऽवगम्यते । शाखान्तरेषु त्वन्योन्यनिरपेक्षस्वतन्त्रज्योतिष्टोमादिरूपप्रतीतेस्तुल्यार्थत्वनिमित्तो विकल्पः । साकाङ्क्षत्वादेव चैकशाखागतब्राह्मणान्तरसमुच्चयाश्रयणम् । नन्वेककर्मत्वाद्विकल्पो विकल्पाच्चैककर्मत्वमितीतरेतराश्रयत्वं भवेत् । न, प्रत्यभिज्ञानमात्रेणैकत्वे विज्ञाते संख्यावशेन विकल्पसिद्धेः । अतश्च यो नामातिमेधाविलादेकवेदगतानि शाखान्तराण्यप्यधीते स समृद्धः सन् व्रीहियवैरपि मिश्रैर्यजेत तस्मादेकं कर्मेति ॥

## न नाम्ना स्याच्चोदनाभिधानत्वात् ॥१०॥

यद्यपि तावत् काठकादिकं नामधेयं स्यात्तथाप्युत्पत्तिसंयो-

गाभावान्नैव भिन्द्यात् । इदं तु नैव कर्मनामधेय,मन्यायो ह्य-नेकार्थत्वमित्यनेन न्यायेन ग्रन्थनामत्वे सति कर्मणि लक्षणयैव प्रयोगोपपत्तेः । कथं पुनरवगम्यते यथा (१) ग्रन्थनामैतत् क-र्मण्युपचर्यते न पुनर्विपर्यय इति । तदुच्यते ॥

शाखया ह्येकया योगादृक्कर्मावबोधनम् ।

युज्यते कर्मनामात्वात् नैकशाखोपलक्षणम् ॥

काठकादिशब्दो हि परस्परासंबद्धेषु बहुषु कर्मसु प्रयुज्यते स यदि कर्मनाम स्यात् कर्मान्तरे न प्रयुज्येत । न हि तत्र लक्षणोपपद्यते संबन्धाभावात् । सर्वाभिधानं तु व्यक्तिवदुप-पादम् । तस्मात् शाखयैव कर्माणि लक्ष्यन्ते न कर्मभिः शाखाः, ततश्च संज्ञया कामं शाखा एव भिद्यन्तां न कर्माणि, संबन्धा-भावात् । तस्मात्तान्येवाग्निहोत्रादीनि संबन्धिभेदादन्यथाऽन्य-था च व्यपदिश्यन्ते ॥

## सर्वेषां चैककर्म्यं स्यात् ॥ ११ ॥

प्रायेण हेतुविपर्यये कार्यविपर्ययो दृश्यतइति काठकादि-संज्ञैकत्वादेकशाखाधीताग्निहोत्रादेरेकत्वप्रसङ्गः । साध्यव्य-भिचारित्वादियमर्थापत्तिसमा नाम जातिः पूर्वपक्षहेतोरसि-द्धत्वोपालम्भप्रदर्शनार्थमेवाभिहिता । सर्वत्र च दुष्टे पूर्वपक्षे जातीनामुत्तरत्वमिष्टम्(२) ॥

## कृतकं चाभिधानम् ॥ १२ ॥

---

(१) यथेति २ पु० नास्ति ।

(२) केषां चिदिष्टमिति २ पु० पाठः ।

कृत्रिमं काठकाद्युक्तमाख्याप्रवचनादिति ।

न वा ऽनादीनि भिद्यन्ते कर्माण्यादिमता सता ॥

यद्यपि काठकादेर्जातेर्नित्यत्वान्नित्यैवाख्या तथापि प्रवचननिमित्तेयं स्मर्यते । न च कर्माणि प्रोच्यन्ते शब्दविषयत्वात् प्रवचनस्य । तस्मादपि न संज्ञया कर्मभेद इति ॥

## एकत्वेपि परम् ॥१३॥

न च कपालसंख्याभेदाद् भेदः । तत्संबन्धिद्वारभेदानभ्युपगमात् । तस्मादेकस्मिन्नेव कर्मणि साधनविकल्पो भविष्यति । ननु चोत्पत्तिवाक्यशिष्टत्वाद्विकल्पो नास्तीत्युक्तं नैष दोषः । उभयोरुत्पत्तिवाक्यशिष्टत्वाविशेषेण तुल्यबलत्वात् । कथं पुनरनेकवाक्योत्पादितस्यैकत्वं विज्ञायत इति, तस्योत्तरसूत्रे परिहारं वक्ष्यामः ॥

## आग्नेयवत्पुनर्वचनम् ॥ १५ ॥

अनुभाषणसूचमेतत् । अथ वा पुनरुक्तत्वपरिहारार्थमेवैतत् । पुनःश्रुतेरर्थवादगुणार्थत्वेनान्यार्थत्वात् ॥

## अद्विर्वचनं वा श्रुतिसंयोगाविशेषात् ॥ १६ ॥

द्वितीयव्याख्याने परिहारान्तरनिवृत्त्यर्थो वाशब्दः । तथान्यार्था पुनःश्रुतिर्भवति यत्र तावन्मात्रमेव श्रूयते । यत्र चैकवाक्यगतं विध्यन्तरं विद्यते । न त्विह तदेकमपि, समस्तेतिकर्तव्यतोपेतप्रधानपुनःश्रुतिश्रवणात् । एतमेव श्रुतिसंयोगावि-

शेषं मन्यते। न चैषा पुनःश्रुतिः। कुतः॥

एकशाखानिबद्धानां ज्ञायते हि पुनः श्रुतिः।

कठादिचरणानां तु प्रतिशाखं सकृत् श्रुतिः॥

पूर्वोक्तेन शाखाध्ययनविकल्पेन येन काठकमग्निहोत्रं श्रुतं नासौ कदाचित्तैत्तिरीयकं शृणोति। शृण्वन्नपि वा स्वशाखयैव प्रतिपन्नत्वात्तैत्तिरीयकप्रतिपत्त्यर्थमेवैतदिति कल्पयित्वा न पुनः श्रुतिं मन्यते। एवमितरोऽपीतरदिति सर्वएवैकश्रुतिसंयोगाविशेषादग्निहोत्रादि प्रतिपद्यन्ते। न च तत्र पौर्वापर्यमस्ति येन ज्ञायेत अनया शाखया प्रथमं विहिते शाखान्तरीये पुनःश्रुतिर्भूत्वा भेत्स्यतीति। आह च॥

शाखानां युगपद्वृत्तेर्न पुनः श्रुतिकल्पना।

न हि तत्रैकशाखावत् क्रमेणाध्ययनं स्थितम्॥

तस्माद्यथैकशाखाकर्म(१)देशान्तरपुरुषान्तरादिषु पुनः श्रूयमाणमपि प्रतिपाद्यभेदान्न पुनरुक्तं भवत्येव शाखान्तरेष्विति। ननु चैकयापि शाखया समस्तपुरुषप्रतिपादने सत्यनर्थकमेव शाखान्तरम्। नानर्थकं, न हि कश्चिद् द्वे शाखे अधीते, न च पुरुषान्तरगतं तत्प्रतिपादनेनार्थवदन्यान् प्रत्यनर्थकं भवति। यस्तु तेऽपि किल शाखिनस्तामेवाधीत्य प्रतिपत्स्यन्त इत्यभिप्रायः स नित्यत्वाद्वेदस्य तदध्ययनाध्यापनसंबन्धानादित्वादनुपपन्नः। किं च॥

संप्रदायागतां मुक्त्वा स्वां समाख्यानिबन्धिनीम्।

शाखां शाखान्तरं युक्तं नाध्येतुं सदृशे श्रमे॥

---

(१) एकशाखायां कर्मेति २ पु० पाठः।

तस्मात्परकीयशाखाध्ययने ऽप्यस्यैव पुरुषाणां श्रम इति यथावस्थितशाखाध्ययनमेव । न च वेदः पुनरुक्तादिदोषद्वारं पर्यनुयोगमर्हतीति । अत्रान्तरे भाष्यकारस्य सूत्रं भ्रष्टम । वाक्यासमवायादिति । तदेवं व्याख्येयं नैकस्मिन् पुरुषे शाखान्तरवाक्यं समवैति ॥

# अर्थासंनिधेश्च ॥ १७ ॥

एकस्य वेदवृक्षस्य किंचित्कर्मफलाश्रयात् एवं शाखाः प्रसिध्यन्ति वृक्षशाखैकवृक्षवत् । यदि प्रतिशाखं कर्मभेदः स्यात् तत एकमूलाभावादादित एवारभ्य भिद्यमानत्वात् समस्तकर्मार्थ्यपुष्पफलान्तरत्वात वृक्षान्तरवत् वेदान्तराण्येवोच्येरन् न शाखान्तराणि । एककर्ममूलविधिस्कन्धरूपत्वे सत्यैतिकर्तव्यतायाः कश्चित् किंचिदधिकमित्याश्रोच्य साकल्यादुपपन्नः शाखान्तरभेदव्यपदेशः । अथ वा पौनरुक्त्यपरिहारार्थमेव सूत्रम् । तत्र नाम पुनरुक्तता भवति यत्र पूर्वोक्तो ऽर्थस्तस्यैव पुंसः सन्निहितो भवति । न त्विह शाखान्तरगतस्य सन्निधानमित्यपुनरुक्तता ॥

# न चैकं प्रति शिष्यते ॥ १८ ॥

अभ्युपेत्यवादोयं यद्यपि कर्मभेदे ये तावद्वाक्यसंयुक्ता श्रवाप्ते अग्निहोत्रादिमात्रोद्देशेन विधीयमानाः सर्वार्थत्वेन ज्ञायन्त इति सर्वत्रोपादातव्या इति नैव शाखामात्रपरितोषव्यवस्था लभ्यते । न च सूत्रकाराणामपि कश्चित् स्वशाखोपसंहारमात्रेणावस्थितो येन प्रतिशाखं कर्मव्यवस्था समर्थ्येत ।

प्रधानान्यपि प्राधान्येन यजमाननियमं प्रत्यप्रभवन्तीभिः समाख्याभिरर्थमात्रमुद्दिश्य विधीयमानानि सर्वशाखागतान्येकैकं पुरुषमुपतिष्ठन्ते। तत्रैकफलत्वादसमुच्चये(१)येन केन चित् साध्यमाने फले ऽन्येषां वैयर्थ्यप्रसङ्गः। अथ तेषां विकल्पेनार्थवत्त्वं तद्वरं शाखान्तराणामेव व्यवस्थितप्रतिपाद्यानामनाकुलतरं परिकल्पितमित्यपुनरुक्तता॥

## समाप्तिवच्च संप्रेक्षा ॥ १९ ॥

असमाप्तिवदिति वा छेदः। कर्मभेदपक्षे हि यावदेव येषां समाम्नानं तावदेव तेषां समाप्यतइति न ब्रूयुरत्रास्माकं न समाप्यतइति। अन्वारोहा नाम स्थनारोहणमन्त्रास्तेषु मैत्रायणीयानां समाप्यते नास्माकमित्यभिधानादध्येतॄणामपि कर्मैकत्वं प्रसिद्धमित्यवसीयते॥

## एकत्वेपि पराणि निन्दाशक्तिसमाप्तिवचनानि ॥ २० ॥

अन्योन्यनिन्दयेतरेतरविधाने तुल्यार्थयोरुदितानुदितत्वयोः कर्मणि विकल्पो भविष्यति। त्वत्पक्षेपि चासौ कर्मणोः फलं प्रत्यविशिष्टः तथा शक्त्यशक्ती सर्वपुरुषाणामव्यवस्थिते। सर्वशाखास्वधिकविधावेकशाखायां च स्तोकान्तरत्वादविशिष्टे। केचिच्चात्र लाघवार्थिन एवं वर्णयन्ति। यएव किल वाक्यसंयुक्ताः शाखान्तरविषयास्तएव संकीर्यन्ते, ये तु प्राकरणिकास्तेषां

---

(१) असति समुच्चये इति २ पु० पाठः।

व्यवस्थैवेति । कुतः ॥

एककर्मगताः पुंसां विकल्पन्ते विधायकाः ।
तत्समीपसमाम्नातं ग्राह्यं प्रकरणस्य च ॥

शाखान्तरेषु विकल्पमानेषु यथैव प्रधानं विधीयते ऽर्थेन-स्तदीयः कथंभावस्तामेव व्याप्नोति न शाखान्तराणि । अतस्त्वा-न्यगता गुणाः कथंभावेन नापेक्षिताः प्रयोगवचनेनानुपसंहृता नाङ्गं भवन्तीति नानुष्ठेया, स्ततश्च वाक्यसंयुक्तानामप्यत्वाद्विधी-यमानानामप्युपसंहरणशक्तिरिति । न त्वेतद्युक्तमिव । तथा हि ॥

शाखान्तरगतस्यापि यदङ्गं कर्मणः स्थितम् ।
तस्यान्यत्रापि तादर्थ्यं प्राप्तं केन निवार्यते ॥

प्रतिवेदमपि च प्रकरणं पुरुषस्य धर्मानुपदिशति । न च तत् वेदान्तरस्थं प्रत्यप्रमाणं, तथा शाखान्तरेपि द्रष्टव्यम् । क-र्मधर्माश्चैते विज्ञायन्ते तच्च कर्म शाखान्तरेष्वपि तदेवेत्यङ्ग-त्वाविशेषः । यद्यपि प्रकरणरूपमन्यत् तथापि शाखान्तरस्थेना-नेनैतेपि धर्मा गृहीता इत्यवधारणात् न स्वप्रकरणगृहीते-भ्यो विशिष्यन्ते । सर्वास्वपि च शाखास्वधिकविषयो न कथं चित् शाखया परिमिता भवन्तीत्यत एवायाम इति नाशक्तिः । समाप्तिश्चाधीनापेक्षया(१)पपन्नत्वान्न भेदं कल्पयति ॥

# प्रायश्चित्तं निमित्तेन ॥ २१ ॥

अनुभाषणसूत्रं सामान्यपरिहारसूत्रं वा ।

---

(१) स्वाधीनापेक्षयेति २. पु० पाठः ।

प्रक्रमाद्वा नियोगेन ॥ २२ ॥

वैकल्पिकानामादित एवाङ्गीकरणाद्दाशिरक्रमातिक्रमे प्रायश्चित्तविधिरुपपत्स्यते ॥

समाप्तिः पूर्ववत्त्वाद्यथाज्ञाते प्रतीयते ॥ २३ ॥

एकत्वेपि समाप्तिर्निरूढत्वेनोक्ता समाप्तिवचस्य संप्रेक्षेति समाप्तिवचनं नानात्वेपि । तत्र प्रत्ययानुसारित्वा (१) देकत्वस्यैव साधिका तद्वचनस्येयमुपपत्तिः पूर्वत्वादित्यारम्भापेक्षत्वात् । अथ वा शब्दप्रयोगस्य प्रसिद्धिपूर्वकत्वाद्यादृशीं वयं समाप्तिं पश्यामस्तादृश्यामयं प्रयुक्त इति निश्चिनुमः । स च वस्तुन्यसमाप्तेपि तच्छाखाविषयपदार्थसमाप्तौ प्रयुक्त इति दृश्यते तस्मादविरोधः ॥

लिङ्गमविशिष्टं सर्वशेषत्वान्न हि तत्र कर्मचोदना तस्माद् द्वादशाहस्याहारव्यपदेशः स्यात् ॥ २४ ॥

अदीक्षितदर्शनं द्वादशाहे तथाप्यनुपपन्नम् । तावता सर्वशाखागतज्योतिष्टोमानुवादेन प्राथम्यविधानात् । न हि तत्रा-

(१) प्रत्ययानुसारित्वादिति २ पु॰ पाठः ।

परस्यापि ज्योतिष्टोमस्योत्पत्तिरस्ति यस्य नियमः स्यात् । अत आध्वर्यवाणामेव नियमे उभयपक्षे समे च दोषे सत्यभाष्यामेषार्थौ वर्णनीयः, यदि द्वादशाहेन पुरा दिदीक्षाणा अदिदीक्षाणा वेति । तस्मादविशिष्टमेतत् ॥

द्रव्ये वा चोदितत्वाद्विधीनामव्यवस्था स्यान्निर्देशाद्व्यवतिष्ठेत तस्मान्नित्यानुवादः स्यात् ॥२५॥

अथ यदुक्तमेकादशिन्यां पशुवेदिसंमानदर्शनं न स्यादिति । तत्र ब्रूमः ॥

अन्यथापि तु नैवास्ति पशुवेद्यादिमानता ।
एकादशिन्यभावेन स्तूयते(१) त्वेकयूपता ॥

एकयूप एकादश पशव इत्यस्य विधेः शेषोयं यत्पशुसंमितामित्यादि । एकादशिन्यां हि सत्यामन्यतरसंमानाश्रयणात्क्लेशो भवेत् । तस्मादेकयूप एव वरमिति । पशुसंमानं तावदत्यन्ताप्राप्तमेवेति नित्यानुवादः । वेदिसंमानोपदेशोपि प्रशंसारूपेणैकयूपप्रशस्ततरत्वज्ञापनार्थो तथाश्वमात्रा चान्तरालता च यत्रैकादशिनी विमिता तत्र भविष्यतीत्यविरोधः । इह तु वेदिसंमानस्य प्रशंसया विधेयत्वप्रतीतेरशक्यमन्यस्तुत्यर्थत्वं कल्पयितुं, अतः पशुसंमानस्याप्राप्तस्यैव वेदिसंमानस्तुत्यर्थो नि-

(१) श्रूयते इति २ पु० पाठः ।

त्यानुवाद इति समर्थयितव्यम् । प्राकरणिकत्वाच्चास्यैवाग्नो बलीयस्त्वमित्यनारभ्याधीतो रथाश्वमात्रान्तराणां विधिस्तद्विनिर्मुक्ता विकृतीर्गमिष्यति । एवमप्येव नेयम् । यदि हि द्रव्ये वेदिसंमानं न चोद्येत तत्र ऋर्थानां पचसंमानादिविधीनामव्यवस्था स्यात् । सा च रथान्तरीयत्वेन बाध्येत न त्वेवमस्तीत्यविरोधः ॥

# विहितप्रतिषेधात्पक्षेऽतिरेकः स्यात् ॥ २६ ॥

वैकल्पिके षोडशिग्रहग्रहणे ग्रहयोरतिरेकः, क्रियमाणे त्वेकविंशतिप्रचयादुगद्वयादेकातिरेकेण तिस्रो भवन्ति तस्मादविरोधः ॥

# सारस्वते विप्रतिषेधाद्यदेति स्यात् ॥ २७ ॥

सारस्वते हि द्वादशाहन्यायेनैवोभयोः पक्षयोर्ज्योतिष्टोमपूर्वकत्वादवश्यमेवं वक्तव्यम् । यदा पुरोडाशिनः पौर्णमासीपक्षे तदोपवसन्ति, यदा सान्नाय्यिनोऽमावास्या पक्षे तदा वत्सानपाकुर्वन्तीति भवति हि कालभेदादपि कर्तृभेदोपचारस्तस्मादप्यदोषः ॥

# उपहव्ये प्रतिप्रसवः ॥ २८ ॥

अनुभाषणसामान्यपरिहारो वा ॥

## गुणार्था वा पुनः श्रुतिः ॥ २९ ॥

संख्याव्यवस्थार्था वा बृहद्रथन्तरयोः पुनः श्रुतिर्भविष्यति ॥

## प्रत्ययं चापि दर्शयति ॥ ३० ॥

शाखान्तरविहितप्रयाजानुवादेन यज्ञ होमं वदन्नन्यशाखाधीतं च कुटरुरसीति मन्त्रमश्मादाने विदधत्सर्वशाखाप्रत्ययत्वं दर्शयति ॥

## अपि वा क्रम(१)संयोगात् विधिपृथक्त्वमेकस्यां व्यवतिष्ठेत ॥ ३१ ॥

प्रतिशाखं वा विधिपृथक्त्वं व्यवतिष्ठेत । तथा सति हि क्रमभेदं न यास्यन्ति स्वशाखाविहिताः क्रियाः, परिमाणं च तद्वर्ति नान्यत्वं प्रतिपत्स्यते ॥

## विरोधिनां त्वसंयोगादैककर्म्ये तत्संयोगाद्विधीनां सर्वकर्मप्रत्ययः स्यात् ॥ ३२ ॥

यत्र स्मार्ताः पदार्था न क्रमकालपरिमाणानुरोधेन बाधितास्तत्र श्रौता बाधिष्यन्त इति कुतएतत ॥ तेनैव गतत्वादवाच्यमिति चेत् न सूत्रकारस्यात्रैव प्रथमाभिधानात् ॥ तत्र हि कारणाग्रहणमात्रमुपपत्तिरुक्ता शेषं त्विह सिद्धमप्युचितमि-

(१) श्रुति इति २ पु० पाठः ।

त्यपुनरुक्तत्वम्॥

तस्मात्तदेवेति मतेन कर्म
भिन्नं कथं चित् प्रतिशाखमिष्टम्।
न कारणं सप्तममस्ति चान्य-
दतो यथोक्तैव तु भेदसिद्धिः॥

इति भट्टकुमारिलकृतौ तन्त्रटीकायां द्वितीयाध्यायस्य तुरीयचरणः समाप्तः॥

समाप्तश्च द्वितीयाध्यायः॥

शुभम्॥

# तन्त्रवार्त्तिके ।

## तृतीयाध्यायस्य प्रथमः पादः ।

---

श्रीमन्महागणपतये नमः ॥

### अथातः शेषलक्षणम् ॥ १ ॥

द्विलक्षण्याः परं शिष्टं यावत्किंचन लक्षणम् ।
तत्सर्वं वक्तुमारब्धमथातः शेषलक्षणम् ॥

तथा च प्रथमसूत्रोपात्तप्रतिज्ञापिण्डव्याख्याप्रदेशप्रदर्शनेन (१) धर्मप्रमाणस्वरूपविषयलक्षणद्वयार्थं चोदनालक्षणसूत्रेणैकेनैव सूचितं वर्णयित्वा कान्यस्य साधनान्यङ्गानि कानि च साधनाभासान्यनङ्गानीति फलार्थत्वात्तदर्थत्वाभ्यां कः पुरुषः प्रधानं धर्मस्य, को वा पुरुषो गुणभूत इत्यादि यावत्किंचन मीमांसितव्यं तत्सर्वं शेषलक्षणेनैव व्याख्यातम् । शेषैः समस्तैरेव लक्षणैरित्यर्थः । इह लक्षणानां बहुत्वेऽपि यदेकवचनं कृतं तल्लक्षणा-त्वसामान्यसंख्यामात्रविवक्षया ॥

यत्तु शेषः परार्थत्वादित्यनन्तरलक्षणम् ।
तदङ्गत्वस्य वाच्यत्वादादौ तन्मात्रगोचरम् ॥

बहुष्वपि हि लक्षणार्थेषु विवक्षितेषु क्रमवशादेकस्तावदङ्गत्वरूपः शेष एतल्लक्षणगोचरः परार्थत्वहेतुकः प्रतिपाद्यते ॥ समासस्य द्वेधा विग्रहो द्वयोर्वाक्यार्थयोः प्रदर्शनीयः ॥ शेषं च तल्लक्षणं च शेषस्य वार्थस्य लक्षणमिति । षष्ठीसमाससमाना-

अयत्नेन वा यथाव्याख्यायमानार्थम् ॥

अङ्गलक्षणमेवेदमित्येकं शेषलक्षणम् ।
तद्विशेषप्रपञ्चत्वात्तत्रान्यान्तर्गतिस्थितेः ॥

सर्वेषां हि लक्षणान्तरार्थानां प्रयोज्याप्रयोज्यप्रयोजकाप्रयोजकप्रवृत्तिक्रमनियमफलवत्कर्मविषयकर्त्रधिकाररूपाणां तावदङ्गात्मकशेषविशेषप्रकारत्वाल्लक्षणान्तरगोचराणामपि शेषलक्षणान्तर्गतत्वावधारणस्थितिः ॥ तथा हि ॥

प्रयोजकाः प्रयोक्तारः शेषाणामेव शेषिणः ।
क्रमोऽपि शेष एवैकप्रयोगवचनाश्रयः ॥

एकफलसाधनानामर्थानां ह्येकफलवदुपकारोपनिबद्धानां वैकप्रयोगवचनचोदितानां यौगपद्यानुष्ठानाशक्तेः सामर्थ्येनाङ्गभूतः क्रम आपद्यमानः श्रुत्यर्थपठनस्थानमुख्यप्रावृत्तिकाक-माख्यप्रमाणषट्कवशेन व्यवस्थाप्यते ॥

अधिकारोऽपि यज्ञेषु कर्त्तुः शेषस्य चिन्त्यते ।
भाव्यानां भावकः कर्त्ता द्रव्यं को नाम कर्मणाम् ॥
तथा चास्य विशेषेण सूत्रवद्वैव शेषता ।
पुरुषस्य पुनः शेषः कर्मार्थत्वेन चोदनात् ॥
वक्ष्यति हि पुरुषस्य कर्मार्थत्वादिति जैमिनिः ।
तथाऽनाम्नातशेषाणां शेषिणां सप्तमादिभिः ।
शेषसद्भावतद्रूपपरिमाणादिनिर्णयः ॥

तत्र तु ॥

सप्तमेनातिदेशेन शेषाः सन्तीति साधिते ।
ततोऽष्टमे नये यस्य यतस्तेति निरूपणा ॥
नवमेऽर्थप्रधानत्वात्तद्धीनान्यरूपता ।

इयत्ता दशमे शेषबाधाभ्युच्चयचिन्तया ॥
प्रयोगपरिमाणं च तत्तन्त्रावापलक्षणम् ।
एतदेव प्रसङ्गेन परार्थाङ्गोपजीवनात् ॥
अन्यार्थानुष्ठितैः शेषैरुपकारेऽल्पकल्पना ।
प्रसङ्गे तदभावे च स्याद्नूपिष्ठप्रकल्पना ॥
अथ वास्मिन्दशैवैकं तृतीयं शेषलक्षणम् ।
तदेव सूचितं वक्तुमथातः शेषलक्षणम् ॥
अन्यानि पृथगारम्भैर्लक्षणानि करिष्यति ।
इदं सपरिवाराणां शेषाणामेव लक्षणम् ॥

तत्राथशब्द आनन्तर्यं पूर्वप्रकृतापेक्षाधिकाराणामेकं सर्वा-
न्वा विवक्षित्वा प्रयुज्यते । प्रागुक्तभेदलक्षणानन्तरोक्तत्वात्
पूर्वप्रकृतमपेक्ष्य शेषलक्षणमारभ्यते । कुत इति चेत्त्वपेक्षाया-
मत इति हेतुव्यपदेशः ॥

यस्माद्भेदमविज्ञाय न शक्यं शेषलक्षणम् ।
विज्ञातुमत एतस्य तदनन्तरमुच्यते(१) ॥
भिन्नानां हि पदार्थानां शेषशेषित्वसंभवः ।
एकत्वे नापदिश्येत कः शेषः कस्य शेषिणः ॥
भेदानन्तरवक्तव्यं शेषलक्षणमेव च ।
प्रयोजकक्रमादीनां शेषत्वाधीनचिन्तनात् ॥
अयमेव च संबन्धः संगतोऽध्याययोर्द्वयोः ।
अस्मिन् हि सति सूत्रोक्ते नान्यो भाष्यकृतोदितः ॥
पूर्वयोर्नास्ति संबन्धः सूत्रोक्तोऽध्याययोर्द्वयोः ।

---

(१) तदानन्तर्यमुच्यत इति क चित्पाठः ।

प्रथमेऽध्याय इत्यादि भाष्येणातोऽभ्यधायि सः॥

अर्थद्वारो ह्यध्यायादिसंबन्धो न ग्रन्थस्वरूपाश्रय इति सं-
क्षेपोक्तिपिण्डीकृत(१)वृत्तवर्तिष्यमाणाध्यायार्थप्रदर्शनपूर्वं भा-
ष्यकारेणैव संबन्धः पूर्वाध्याययोरभिहितः। इह तु सूत्रका-
रेणैवाथातःशब्दाभ्यामुपनिबद्ध इति स एव व्याख्यातः। ना-
नाकर्मलक्षणं वृत्तमिति च॥

प्रधानमात्रमेवोक्तं नोपोद्घातादिविस्तरः।
नानाकर्मत्वमात्रं हि शेषलक्षणसिद्धिकृत्॥

प्रथमाध्यायप्रतिपादितो हि प्रमाणविवेकविध्यर्थवादमन्त्र-
स्मृतिगुणविधिनामधेयवाक्यशेषार्थकृतसंदिग्धविधिनिर्णयप्रवि-
भागः प्रत्येकं भेदादिलक्षणेषु भेदेनोपयोक्ष्यत इति प्रपञ्चेना-
नुभाषितः॥ तथा चाम्यासाधिकरणे स्थितवेदप्रमाणलक्षणा-
वन्तेनोक्तमविशेषादनर्थकं हि स्यादिति॥ विधेयान्तररहित-
स्यानन्यपरो विधिः कर्मस्वरूपमेव विदधत्पूर्वविहितादवश्य-
मेव कर्मान्तरं करोतीति विधित्वनिर्णयफलोपजीवनम्॥

तथार्थवादविज्ञानाद्दिप्सादिगुणकाङ्क्षयः।
यागा न कल्पितास्तेषां विधिशक्तेरसंभवात्॥

जामित्वाजामित्वोपक्रमोपसंहारमध्यपातिनो हि विष्णु-
रुपांशु यष्टव्यो ऽजामित्वायेत्येवमादयो ऽन्तरालसंबन्धविधे-
कवाक्यत्वेनार्थवादत्वात्पृथग्विधित्वमलभमाना न देवताविशि-
ष्टकर्मत्रयविधानार्था विज्ञायन्ते॥

मन्त्राणामपि यत्कार्यं विहितार्थप्रकाशनम्।

---

(१) पिण्डीकृत्येति २ पु० पाठः।

तेन गोदानगोयागौ नाम्नामाङ्गेदमागतौ ॥

यच्छब्दामन्त्रणोत्तमपुरुषाद्युपह्वतविधिशक्तयो हि मन्त्रा धर्मसाधनत्वेनोच्यमाना(१) देवांश्च याभिर्यजते ददाति चेत्येवमादिभिराख्यातपदैः पुनः पुनः श्रुतैरपि न कर्मान्तरं कल्पयन्ति ॥

तथा शब्दार्थसंबन्धस्मृतितत्त्वावधारणात् ।
प्रक्षेपाधिकतामात्राद्यागाद्धोमस्य भिन्नता ॥
तथा न भिद्यते कर्म काठकादिसमाख्यया ।
ग्रन्थनामस्मृतेर्लोके निमित्तस्मरणादपि ॥
कृतकं चाभिधानं यदन्यैरादिमदुच्यते ।
निमित्तप्रभवत्वेन सूत्रकारस्य तन्मतम् ॥
कठेन प्रोक्तमित्येवं तेन प्रोक्तमिति स्मृतेः ।
ग्रन्थश्च प्रोच्यते नार्थः स ह्यनुष्ठीयते नरैः ॥
तेनानुष्ठितमित्येवं यदि नाम स्मृतिर्भवेत् ।
कर्म काठकमुच्येत कठेनानुष्ठितं हि यत् ॥
कठेनाध्यापितं प्रोक्तमित्यर्थे तद्विदो यतः ।
स्मर्यते ग्रन्थनामातस्तस्याध्यापनसंभवात् ॥
गुणश्चापूर्वसंयोगे नामधेयं च भेदकम् ।
भेदोपयोगिता तेन गुणनामत्वबोधयोः ॥
प्राजापत्येषु यागानामेकानेकत्वसंशये ।
कृतः प्रकृतिवच्छब्दवाक्यशेषेण निर्णयः ॥
पशुसप्तदशत्वस्य न यागैस्तया विना ।

(१) आश्रोच्यमाना इति २ पु० पाठः ।

सिद्धिरस्तीति चार्थेन सिद्धः संदिग्धनिर्णयः ॥

एवमत्र प्रपञ्चेन पूर्वाध्यायार्थवर्णनम् ।
उत्तराध्यायसिद्ध्यर्थमनुक्रान्तमशेषतः ॥
शेषत्वे कर्मभेदात्तु नाधिकार्थोपयोगिता ।
तस्मात्स एव वृत्तोत्र संक्षेपणोपसंहृतः ॥
ग्राह्यं न त्वेतदेकान्तात्संक्षेपोक्तिप्रयोजनम् ।
यतः पूर्ववदेवेह प्रपञ्चोप्युपयोक्ष्यते ॥
उपोद्घातादितैनैव शेषत्वमभिधास्यति ।
भावार्थफलवत्त्वेन कर्मणामपि जैमिनिः ॥
तथा च पूर्वभेदेन कर्मभेदानुसारिणा ।
आज्यौपधादिधर्माणां व्यवस्थां साधयिष्यति ॥

तथा च ॥

प्रसक्तानुप्रसक्तोक्तऋग्यजुःसामलक्षणम् ।
श्रुतेर्जाताधिकारः स्यादित्यस्मिन्नुपयोक्ष्यते ॥
तस्माद्विस्तरसंक्षेपावर्थमार्गाववुभावपि ।
व्याख्यायामुपयुज्येते इति कश्चित्क्वचित्स्थितः ॥
एवमर्थद्वये तावदथशब्दस्य वर्णनम् ।
संबन्धोध्याययोरुक्तो यदा ऽर्थात्सिद्ध एव सः ॥
ततश्चापुनरुक्तत्वाद्वक्ष्यमाणार्थगोचरा ।
अधिकारार्थता वक्तुमथशब्दस्य शक्यते ॥

प्रथमाध्यायप्रथमसूत्रे हि धर्मजिज्ञासायां वक्ष्यमाणव्याख्येयत्वेनानुपन्यासादन्तरानुष्ठेयत्वमात्रमेवोपदेष्टव्यमित्यधिकारार्थत्वं नोक्तम् । यदपि तदुपसर्जनत्वेन धर्मज्ञानमुपात्तं तदप्यर्थव्याख्यानकरणात्स्वयमेव शिष्याणां भवतीति न सूत्र-

कारभाष्यकारव्याख्यानुवचनोपात्ताधिकारकर्मत्वेनावधारितम् ॥

वक्तृवाक्यगतं यत्तु स्यात्किंचिदधिकारभाक् ।
न जिज्ञासापदं तस्य श्रोतुः स्वार्थनिरूपकम् ॥
इह त्वध्यायरूपं वा तदर्थात्मकमेव वा ।
व्याख्यायामधिकर्तुं हि शक्यते शेषलक्षणम् ॥

अतः परं शेषलक्षणमधिकृतं तद्द्वारेण श्रोतव्यम् । यतोऽध्यायान्तरावकाशोऽद्यापि नास्तीति अतः शेषलक्षणमधिकृतं वेदितव्यमिति शक्यं वक्तुम् ।

शेषस्यैवाधिकारोऽत्र युक्तो नान्यस्य कस्यचित् ।
शेषधीसिद्धपेक्षत्वादन्यलक्षणवाग्धियाम् ॥

सप्तमादिषट्कस्तावदुपदेशपूर्वकातिदेशविषयित्वादुपदेशविचारार्थप्रथमषट्कसमाप्तिं प्रतीक्षते । तथाऽधिकारोऽपि यथोपदिष्टकर्मानुष्ठानसामर्थ्येन कर्तुरवधार्यत इति क्रमनियमपर्यन्तोपदेशज्ञानोत्तरकालमारभ्यते । तथा हि ॥

भारो यो येन वोढव्यः स प्रागानीतो यदा ।
तदा कस्तस्य वोढेति शक्यं कर्तृनिरूपणम् ॥
प्रयोजकवशौ चेष्टौ मुख्यप्रावृत्तिकक्रमौ ।
चतुर्थलक्षणादूर्ध्वं क्रमतश्चिन्तयिष्यते ॥
प्रयोजकोऽपि शेषाणां शेष्यन्यस्त्वप्रयोजकः ।
करिष्यते परा तस्मात्तच्चिन्ता शेषलक्षणात् ॥
तेनाद्यैवेदमारभ्यमिति सिद्धेऽभिधीयते ।
प्रकारैर्बहुभिश्चेदं कर्तव्यं शेषलक्षणम् ॥

स्वरूपहेतुसंबन्धतत्प्रमाणत्वलावलैः ।
ननु ज्ञेया यथा शेषाः शेषिणोऽपि तथैव नः ॥
नैकस्मिन्नप्यविज्ञाते व्यवहारो हि सिध्यति ।

उच्यते ॥

ज्ञातव्या उभये सत्यं सूत्रणीया न तूभये ।
अर्थापत्त्या हि सिध्यन्ति द्वितीया एकलक्षणात् ॥
तत्र सूत्राणि शेषाणां किं कार्याण्युत शेषिणाम् ।
फलप्रयासतुल्यत्वात्तत्सज्ज्येत यथारुचि ॥
प्राधान्याच्छेषिणां सासाद्युक्तं वा शेषिलक्षणम् ।
न तु तत्क्रियते तत्र कर्तव्यं हि द्वयं भवेत् ॥
शेषोऽस्यास्तीति मत्वर्थाद्देवं शेषी निरूप्यते ।
न स शेषमविज्ञाय ज्ञातुं शक्येत केन चित् ॥
तेनोभसर्जनस्यापि शेषस्यैवेह लक्षणम् ।
क्रियते शेषिणस्त्वर्थात्तज्ज्ञानेनैव सेत्स्यति ॥
श्रुत्यादिभिः प्रमाणैश्च शेषत्वस्यैव निर्णयः ।
शेषी तद्विषयत्वेन लभ्यते नान्तरीयकः ॥
श्रुत्यादिसमवाये च वक्ष्यते यद्बलाबलम् ।
तच्छेषिण्यविरुद्धत्वाच्छेषगोचरमेव नः ॥

तस्माच्छेषलक्षणमेव समस्ततद्गतप्रकारविशिष्टं वक्तुमिदं प्रतिज्ञानम् अथातः शेषलक्षणमिति ॥ तत्र कः शेष इति स्वरूपाभिधानप्रतिज्ञा । केन हेतुनेति येनासौ शेष इत्युच्यते । तस्य च कारकहेतोस्तद्धर्मस्यैव लक्षणं वक्ष्यत इति प्रतिज्ञायते ॥ तथा विनियोगप्रकारज्ञानं क्व शेषिणि कः शेषः क-

तमेन प्रमाणेन कतमत् प्रमाणान्तरं बाधित्वा विना बाधेन वा विनियुज्यते। तथा विनियोजकश्रुत्यादिषट्कस्वरूपज्ञानं तेषां बलाबलज्ञानं च। तत्र प्रथमे पादे तावच्छ्रुतिविनियोगः किं चिच्च प्रासङ्गिकं, द्वितीयपादादौ लिङ्गविनियोगः॥ तृतीयपादादौ तदेव प्रमाणद्वयमुपन्यस्य उपक्रमोपसंहारद्वारेण एकवाक्यत्वेन सिद्धान्तस्थापनात् विनापि वाक्यग्रहणेन प्रायदर्शनादिति वाक्यविनियोगमुक्त्वा प्रकरणक्रमसमाख्याभिर्विनियोगः सूत्रोपनिबद्ध एव वक्ष्यते। ततो बलाबलाधिकरणम्। ततः परं च श्रुतिलिङ्गवाक्यानां प्रकरणेन सह विरोधाविरोधचिन्ता तावद्यावत्तुल्यः सर्वेषां पशुविधिरिति॥ ततश्चतुर्णां क्रमेण सह पुनः सैव चिन्ता यावच्छास्त्रफलं प्रयोक्तरीति। तत उपोद्घातपूर्वकं पञ्चभिः सह समाख्याया विरोधाविरोधविषयविचारेणाध्यायपरिसमाप्तिः॥ एतत्तात्पर्येण अन्यदुपोद्घातप्रसक्तानुप्रसक्तैरिति वक्ष्यमाणमनुसंकीर्त्यते॥ प्रदर्शितमुच्यमानं सुखं ग्राहयिष्यते। सर्वं चैतच्छेषलक्षणप्रतिज्ञयैव पिण्डीकृतं प्रतिज्ञातमिति न भेदेन सूचितम्। किं च॥

शेषलक्षणमाचोक्तावर्थात्स्याच्छेषिलक्षणम्।
अतः शेषः परार्थत्वादित्युक्तं शेषलक्षणम्॥

शेषशब्दस्यानेकाधिकाद्यर्थवचनत्वादिहाङ्गगुणधर्मादिपर्यायवाचित्वपरिग्रहार्थं हेतुविशेषाभिधानं परार्थत्वादिति॥

यच्चान्यदविनाभावप्रयोज्यत्वादिकारणम्।
तच्च सर्वं निराकर्तुं पारार्थ्यमिह गृह्यते॥

द्वावपि चार्थौ श्रुत्यर्थापत्तिभ्यामुपात्ताविति चोदनालक्षण-सूत्रवद्वाक्यभेददोषं परिहृत्य व्याख्येयम । तथा हि ॥

न शेषो ऽन्यः परार्थत्वान्न च हेत्वन्तरेण सः ।
अन्योन्यनियमेनैवं पक्षहेत्वोः परिग्रहः ॥

इह च ॥

शेषत्वं केचिदिच्छन्ति ह्यविनाभावलक्षणम् ।
प्रयोज्यलक्षणं त्वन्ये तदाधिक्येन चापरे ॥
अन्ये त्वन्ततया तस्य(१) विध्यन्तत्वपरिग्रहात् ।
उपकारेण शेषत्वं बहुभिश्चैव लक्षितम् ॥

तद्भावभावित्वेन तावद्यो येन विना न भवति स तस्य शेषः । तद्यथाङ्कुरस्तोयादिभिर्विना न भवति । घटस्य मृत्पिण्डदण्ड-चक्रादिभिरिति तयोस्तानि शेषत्वेन ज्ञायन्ते । तच्चोच्यते ॥

अयुक्तमेवं शेषत्वमविनाभावलक्षणम् ।
व्यभिचारात्तथा ह्येदमशेषेष्वपि दृश्यते ॥
सर्वदा ह्यविनाभूता रूपस्पर्शादयः क्षितौ ।
न चैषां तुल्यकल्पत्वाद्भवत्यन्योन्यशेषता ॥
स्वामिना च विना दासा न भवन्ति कदाचन ।
तथा गृहादयस्तेषां शेषः स्वामी च नेष्यते ॥
प्रधानानां प्रधानैश्च विनाभावो न दृश्यते ।
तत्र स्यात्क्षेपशेषित्वं तेषामपि परस्परम् ॥
एवमङ्गप्रधानानामङ्गानां च परस्परम् ।
प्रसज्यतेव शेषत्वमविनाभावलक्षणम् ।

(१) स्वरूपेति २ पु० पाठः ।

एतेनाध्ययनाधानकृषिद्रव्यार्जनादिषु ॥
वाच्यं प्रसङ्गिशेषित्वं तैर्विना क्रत्वसंभवात् ।
तस्मात्सत्यविनाभावे विनाभावेऽपि वा क्वचित् ॥
प्रयोज्यो यस्य यस्तस्य स शेष इति निश्चयः ।

न च स्वामी दासेन रूपस्पर्शादिभिर्वा यथोदाहृतैरन्योन्यं प्रयुज्यते येनातिप्रसङ्गः स्यात् । न त्वेतदपि शेषत्वलक्षणं घटते । कुतः ॥

लक्ष्यलक्षणयोर्दृष्टो व्यभिचारो द्वयोरपि ।
पुरोडाशकपालं हि न च तावत् प्रयुज्यते ॥
सिद्धिस्तूपापवादेन शेषत्वं तस्य चेष्यते ।
तथा होमाः प्रयुज्यन्ते भेदनस्कन्दनादिभिः ॥
निमित्तैर्न च तेष्वेषां होमानां शेषता मता ।
तस्माद्यो विहिते यस्मिन्नधिको ऽन्यो विधीयते ॥
तस्य तं प्रति शेषत्वमतिरेकेण लक्ष्यते ।

सर्वत्रैव फलवत्प्रधानविधेरङ्गविधयोऽङ्गानि प्रधानेभ्यो ऽतिरिच्यन्त इत्येतदेवातिरेकलक्षणं शेषत्वं युक्तमित्युक्ते ऽभिधीयते ॥

व्यभिचार्यतिरेकोऽपि प्रधानेष्वपि दर्शनात् ।
तान्यपि ह्यतिरिच्यन्ते शेषेभ्यो ऽधिकशेषवत् ॥
अन्ये विध्यादिनिर्दिष्टप्रधानेभ्यः परान्विधीन् ।
दृष्ट्वाङ्गान्यध्यवस्यन्ति विध्यन्तत्वपरिग्रहात् ॥
विध्यन्तो वा प्रवर्तेत विकृतौ प्रकृताविव ।
विध्यन्तविहितांस्तत्र शेषान्वक्ष्यति जैमिनिः ॥

तस्माद्विध्यादिविहितप्रधानकथंभावाकाङ्क्षापूरणसमर्थविध्यन्तविहितत्वलक्षणमेव शेषत्वं सूत्रकाराभिप्रेतमित्युक्तेऽभिधीयते ॥

उपक्रमोपसंहारमध्याम्नातेषु शेषताम् ।
विचित्रामुपलभ्यैतन्नेष्यते शेषलक्षणम् ॥

यदि हि नियोगतो वाक्यप्रकरणान्तेष्वेव व्यवस्थिताः शेषविधयः समाम्नायेरन् तत एतदव्यभिचाराल्लक्षणमाश्रीयेत ॥ न त्वेवमाम्नायन्ते । निष्वणादिमध्यावसानेषु समाम्नानात् ॥

प्रधानादौ विधीयन्ते ये शाखाच्छेदनादयः ।
विध्यादिविहितत्वात्ते नाप्नुयुर्दर्शशेषताम् ॥
कर्मणा सह चोद्यन्ते ये हविर्देवतादयः ।
शेषास्तेऽपि न युज्येरन् तदन्ताम्नानवर्जनात् ॥

अङ्गविध्युपक्रमेषु तावद्वाक्यप्रकरणेषु तदङ्गकिंभावाकाङ्क्षितप्रयोजनकल्पनाविलम्बायां कथंभावाकाङ्क्षायुक्तप्रधानविधिदर्शनात् तदपेक्षितोपकारसिद्ध्यर्थत्वेन तेषामवधार्यमाणानां विध्यादिगतानामपि शेषत्वमस्तीति न विध्यन्तविधानमेवैकं शेषलक्षणत्वेनावकल्पते ॥

शेषं तस्यैव तं विद्यादुपकारेण लक्षितम् ।
भवत्येवं च होमादेर्भिन्नादि प्रत्यशेषता ॥
न हि भिन्नोपकारार्थः स तत्रैवोपकारकम् ।
वेदे च नान्यदङ्गत्वकारणं दृश्यते क्वचित् ॥
न ह्यनुपकुर्वत्किंचिदप्यङ्गं कस्यचिद्भवेत् ॥

तस्मादुपपन्नमिदं लक्षणमिति ॥ तथा चोपरिष्टादपि तत्र तत्र प्रदेशे भाष्यकारो वक्ष्यति यो यस्योपकरोति स तस्य शेषः उपकारलक्षणं हि शेषत्वमित्येवमादि ॥

तादर्थ्यमपि नैवान्यदुपकारात्प्रतीयते ।
तेनोपकार एवैको विज्ञेयं शेषलक्षणम् ॥

न त्वेतदपि घटते । कुतः ॥

एवं सति प्रधानानामङ्गानां च परस्परम् ।
अङ्गाङ्गानां च सर्वेषां संकीर्येतैव शेषता ॥

यथैव ह्यङ्गानि प्रधानानामुपकुर्वन्ति तथैवानुष्ठापकेनोपकारप्रतिग्रहणाच्च प्रधानान्यप्यङ्गानामुपकुर्वन्त्येव । कुतः ॥

प्रधानैरप्रयुक्तानि कुर्यान्नाङ्गानि कश्चन ।
उपकार्यैर्विना तानि नोपकर्तुं च शक्नुयुः ॥
प्रधानान्यप्यतोऽङ्गानामङ्गानि स्युरनुग्रहात् ।
स्यादन्योन्योपकाराच्च तेषामन्योन्यशेषता ॥
नैकेनापि प्रधानेन विनान्यैः साध्यते फलम् ।
तेनैतान्युपकुर्वन्ति फलसिद्धौ परस्परम् ॥
तस्मात्परस्पराङ्गत्वमुपकारात् प्रसज्यते ।
नायमङ्गक्रमादेषामुपकारादिलक्षणः ॥

एवमङ्गानामप्यन्योन्यापादनं दर्शयितव्यम् । ततश्चैकप्रधानविकारेऽनेकाङ्गगमनेऽपि समस्तसाङ्गप्रधानगमनादनियमः प्राप्नोति ॥

तथा द्रव्यार्जनाधानस्वाध्यायाध्ययनादिषु ।
सर्वकर्माङ्गताप्राप्तिः कार्यैः सर्वोपकारिषु ॥

न हि तदनुग्रहरहितं किंचित्सिध्यति ॥ ततश्चार्थिमात्रविषयकामश्रुतिपरिग्रहाद्वसन्ते ब्राह्मण इत्यादीनां निमित्तार्थत्वाच्छूद्राधिकारादिदोषप्रसङ्गः ॥

ज्ञातं च लक्षणं सर्वं लक्ष्यं लक्षयितुं क्षमम् ।
तत्र दृष्टोपकाराणां तत्कृता शेषता भवेत् ॥
अदृष्टार्थे तु संस्कारे पर्यग्निकरणादिके ।
प्रयाजादिष्वपूर्वांशैः तथारादुपकारिषु ॥

अनवगतशेषत्वावस्थायामुपकारादर्शनात्तदधीनावधारणं शेषत्वं न स्यात् । कल्पितउपकारे भविष्यतीति चेत् न । प्रागङ्गत्वादुपकारकल्पनाप्रमाणाभावात् । यो हि यस्य फलस्य फलवतो वा शेषत्वेनावधारितो भवति स कथं तस्योपकरिष्यतीत्यपेक्षिते सति दृष्टमुपकारमपश्यद्भिः तस्माददृष्टः परिकल्प्यते । यावत्तु शेषत्वमेव नावगम्यते तावत्केन प्रमाणेनादृष्टकल्पना स्यात् ॥ ततश्चेतरेतराश्रयः प्रसज्यते । तथा हि ।

उपकारेण शेषत्वं शेषत्वाच्चोपकारिता ।
स्वातन्त्र्येण प्रसिद्धं हि न ह्यन्यतरदेतयोः ॥

दृष्टार्थानामपि चावहन्त्यादीनां नियमान्न कश्चिदुपकारो दृश्यत इति न नियोगतोऽङ्गत्वं स्यात् ॥ न च प्रासङ्गिकत्वाच्छास्त्रेणोपकारः प्रतिपाद्यत इति प्रत्यक्षादिभिरेवोपकारं गृहीत्वा शेषत्वं गम्येत ॥ ततश्च श्रुत्यादिप्रमाणकं शेषलक्षणं नैवानेनाश्रीयेत । तथा प्रासङ्गिकान्यन्यप्रयोजनान्यङ्गान्यन्यार्थान्यप्यन्यस्योपकारीणीति तन्त्रिप्रयोजकवदितरस्यापि शेषत्वं गच्छेयुः । तत्र प्रासङ्गिकं च नोत्कर्षेत । प्रासङ्गिके प्रायश्चित्तं

न विद्यते । न वा पात्रत्वादपात्रत्वैकदेशत्वात् अपि वा शेषभाजां स्यादित्यादिन्यायविरोधः ॥ एवमेतस्मिन्नपि पक्षे सर्वं तन्त्रं विघटते । तस्मादुच्यते शेषः परार्थत्वादिति ।॥

उपकारमलब्ध्वैव यो यदर्थोऽवगम्यते ।
तादर्थ्यत्वाच्छेषत्वः स तस्योपकरिष्यति ॥

आह ॥ किं तादर्थ्योपकारयोर्भेदोऽप्यस्ति । बाढमस्ति । कुतः ॥

अपकुर्वन्नपीष्टो हि तदर्थव्यपदेशभाक् ।
उपकुर्वन्नपि त्वन्यस्तदर्थ इति नोच्यते ॥

उद्देशमात्रेण तावत्तादर्थ्यप्रसिद्धिः सा चोपकारापकारयोस्तुल्या ॥ तद्यथा मशकार्थो धूम इत्यपकारिण्यपि प्रयुज्यते । तथोपकुर्वन्नपि प्रसङ्गप्रयोजकयोर्न तादर्थ्येन व्यपदिश्यते । न हि कश्चिदपि शालिकुल्यास्थमुदकं पिबन्तादर्थमेताः प्रणीता इत्यध्यवस्यति ॥ तस्मादन्यत्तादर्थ्यमन्यश्चोपकार इति विज्ञायते । नन्वेवं सत्यपकारकोऽपि शेषः प्राप्नोति । लोके तावत्प्राप्नोतु नाम वेदे पुनरनपेक्षितत्वान्न भविष्यतीति । यो हि तादर्थ्येनावधारितः स किमुपकरिष्यति अथापकरिष्यतीति संदिग्धे शेषिभिरपकारो नापेक्षित इति तं परित्यज्यापेक्षासामर्थ्यादुपकारः कल्प्यते ॥ ननु चोपकारनिरपेक्षं नैव तादर्थ्यं शक्यं कल्पयितुम् । कुतः ॥

आकाङ्क्षति प्रधानं हि न यावदुपकारकम् ।
तावत्सामीप्ययुक्तोऽपि नाङ्गमित्यवधार्यते ॥

न हि प्रयाजादयः सामीप्यमात्रेणैवोपकारनिरपेक्षास्ता-

दर्थ्यं प्रतिपद्यन्ते ॥ तस्मादुपकारपूर्वकमेव तादर्थ्यमिति स एव शेषत्वकारणं प्राप्नोति ॥ नैष दोषः ॥

श्रुत्या तावत्तदर्थत्वं क्वचित्पूर्वं प्रतीयते ।
अन्यत्राप्युपकारित्वादपेक्षामात्रपूर्वकम् ॥

दशापवित्रेण ग्रहं संमार्ष्टि व्रीहीन् प्रोक्षति इत्यादिषु तावच्छ्रुत्यैव तादर्थ्यमिति तेऽङ्गत्वमवधार्योपकारः कल्प्यते । यत्रापि तु प्रयाजादौ तादर्थ्याभिधानाभावादुपकारपूर्वकत्वं लक्ष्यते तत्राप्यपेक्षामात्रमेव तस्य प्रथमं न निष्पत्तिः ॥ न ह्यनवगताङ्गत्वेषु प्रयाजादिषूपकारदर्शनं कल्पनं वास्तीत्युक्तम् । अतो दर्शपूर्णमासयोरुपकारमपेक्षमाणयोः प्रयाजादिषु चोपकार्यमपेक्षमाणेष्वनिष्पन्नावस्थ एवोपकारे प्रकरणात्तादर्थ्यं तावत्प्रतीयते ॥ तदन्यथानुपपत्तिमात्रेणोपकारकल्पना ॥ तेनोपकारापेक्षामात्रमिह तादर्थ्यप्रमाणानुमाने व्याप्रियते ॥ नोपकारादेव शेषत्वं तादर्थ्यं वेत्यनवद्यम् । एवं च सति श्रुत्यादीन्येव तादर्थ्यप्रतिपादनरूपेण शेषस्य विनियोजकानीति तद्विवेकार्थं लक्षणमारब्धव्यम् सत्यपि चाङ्गप्रधानादीनामुपकारसंकरेऽतादर्थ्यादसंकरस्येति सिद्धिः । तस्मात्परार्थत्वलक्षणमेव शेषत्वं निर्दोषं यः परस्योपकारे वर्तत इति पारार्थ्यमेवोपकारेण फलेनाभिधीयत इत्यवगन्तव्यं न त्वत्रैव लक्षणोक्तिभ्रान्तिः(१) कर्तव्या ॥ तथा च स्फुटीकरोति । ये परार्थास्ते वक्तारो भवन्तीति । परः पुनरुपकारलक्षणभ्रान्त्या वदति । मनूपाध्यायः शिष्याणामिति । सत्यं वर्तत इति तादर्थ्या-

(१) लक्षणभ्रान्तिरिति २ पु० पाठः ।

पकारव्यतिकर(१)दर्शनादिहाव्यक्तितं शेषत्वमित्युपेक्ष्यैतदुदा-
हरणमैकान्तिकपारार्थ्ययुक्तमुदाहरति । तद्यथा गर्भदास इ-
ति स ह्युत्पत्त्यैव स्वाम्यर्थेन प्रसिद्धः स्वसङ्ख्यश्च वचनार्थतया ।
न तु स्वामी तादर्थ्येनावगम्यत इति विवेकः ॥ परस्तु तत्राप्यु-
पकारकत्वादस्त्येव कश्चित्तादर्थ्यलेश इति मन्यमानस्तिष्ठते ॥ ननु
गर्भदासस्यापीति । सिद्धान्तवादी त्वाह । आत्मन एवासौ
सविदधान इति । उद्देशेन हि तादर्थ्यं विवक्ष्यते न च स्वा-
मिनो गर्भदासायुद्देशेन तदुपकाराय प्रवृत्तिः किं तर्हि स्वा-
र्थसिद्धिप्रयुक्ता नान्तरीयकतत्संविधानाद्दशेषत्वम् । येस्तु द्रव्यं
चिकीर्ष्यत इति पुनरुक्तशङ्कयोपन्यासः ॥ नम् च तदध्यायोक्ते-
नैव लक्षणेन गतार्थत्वान्नात्र वक्तव्यम । अत आह तत्रापूर्वो-
र्थता व्यावर्त्तितेति । तच्च केचिदेवं व्याचक्षते ॥ तत्र दृष्टार्था-
नामवहन्त्यादीनां शेषत्वमुक्तम् । इह तु सर्वेषामेव दृष्टार्थाना-
मदृष्टार्थानां च द्रव्यविषयाणां कर्मविषयाणां च शेषाणां लक्ष-
णमुच्यत इत्येवं तु सत्येतस्यापुनरुक्तता स्यात् । तत्पुनरनेन ग-
तार्थमित्यपरिहृतमेव । तस्मादेव वर्णयितव्यम । अथ तत्र किं
वृत्त येस्तु द्रव्यं चिकीर्ष्यत इति ॥ तदभिधीयते ॥

हन्त्यादावपि शेषत्वमतस्मादेव लक्षणात् ।

दृष्टार्थत्वादपूर्वं तु ततो नेति पुरोदितम् ॥

सर्वविषयव्यापि शेषत्वम इह लभ्यमेव(२)तत्र नीतमपूर्वभे-
दनिराकरणार्थम । अथ वा पूर्वोक्तं गुणप्रधानभावलक्षणमम-
पेक्ष्यापूर्वंवत्त्वंप्रति कारणान्तरनिरासेन परार्थत्वलक्षणे शेषत्वे

(१) व्यतिरेकेति २ पु० पाठः ।

(२) इहलभ्यमेवेति २ पु० पाठः ।

ऽभिहिते येस्तु द्रव्यं चिकीर्ष्यतइत्यनेनोपकारलक्षणाभ्युपगमा-
द्विरोधमाशङ्क्य परिहरति । तत्रापूर्वभेदकल्पनानिवृत्त्यर्थ-
मुपकारदर्शनमुक्तं न शेषलक्षणत्वेन,न पुनः सर्वशेषाणां पा-
रमार्थिकं लक्षणमेवोच्यतइति भिन्नविषयत्वादविरोध इति ॥

## द्रव्यगुणसंस्कारेषु बादरिः ॥ ३ ॥

इदानीं शेषत्वस्य विषयं कथयति । तत्र बादरिमतेन तावत्त्रय एव शेषाः । द्रव्यं हि द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्ध इति स्वभावतः (१) शेषभूतं नियमान्निष्प्रयोजनत्वेन केवलं व्यावर्त्यते॥ गुणोप्यरूणादिः क्रियायाः स्वसाधनभूतद्रव्यपरिच्छेदसामर्थ्यादुत्पत्त्यैव शेषः ॥ तथा संस्कारोप्यवहन्त्यादिर्यागसाधनपुरोडाशादिनिर्वृत्तये संदितानां व्रीह्यादीनां स्वरूपेणायोग्यत्वादवहतानां योग्यत्वादवहतानां योग्यत्वमापादयन्नुत्पत्त्यैवाङ्गं भवतीति । न तु यागादावौत्पत्तिकं शेषत्वं दृश्यते । न च शब्देन चोद्यते । यागस्तावत्सर्वकारकैरनुष्ठीयते । न चान्यत्र व्याप्रियमाणो दृश्यते । फलइति चेत् न । चिरनिर्वृत्ते यागे फलोत्पत्तिप्रतीतेः ॥ ननु च भावार्थाधिकरणे करणत्वं यागस्योक्तं सत्यमुक्तं न तु साधितम् । स्वर्गकामाधिकरणाधीनसिद्धिना तेन नामपदकरणत्वमात्रनिराकरणात् ॥ अत इदानीमसिद्धावस्थेनैव करणत्वेन व्यवहरति ॥ फलमपि यागं प्रति साध्यमानत्वात्प्रधानं पुरुषं प्रति तस्य शेषभावो नैवोपात्तः ॥ काम्यमानत्वेन सुतरां प्रधानत्वात्पुरुष एव तु कामं द्रव्यत्वाद्यागे गुणत्वेन स्यात् । तस्माद् द्रव्यगुणसंस्कारेष्वेव शेष-

---

(१) स्वभावत एवेति २ पु० पाठः ।

भाव इति ॥

## कर्माण्यपि जैमिनिः फलार्थत्वात् ॥ ४ ॥

गतार्थमेतत् ॥

## फलं च पुरुषार्थत्वात् ॥ ५ ॥

कामपदोपादानादेव फलस्य पुरुषार्थत्वं गम्यते ॥ न हि कश्चिद्बुद्धिपूर्वकार्येवं कामयते स्वर्ग आत्मानं लभतामिति । किन्तर्हि मम उपभोग्यः स्यादिति ॥ पुनश्चात्मनेपदनिर्देशात्कर्त्तुरेवोपभोग्यो नान्यस्येति गम्यते ॥ तेनोपभोक्तारं प्रति फलमपि शेषभूतम् ॥

## पुरुषश्च कर्मार्थत्वात् ॥ ६ ॥

पुरुषोऽपि यजेतेत्याख्यातेन गुणभूत आश्रितः । औदुम्बरीसंमानादेर्विहित इति शेषः ॥ एवं चतुःसूत्रेणाधिकरणेन समस्तः शेषत्वविषयः प्रतिपादितः ॥ अत्र चोद्यते ॥ यत्तावद् द्रव्यगुणसंस्कारेष्वित्यत्र न तु यागफलपुरुषेषु शेषत्वमित्यभिधायान्ते पुरुषस्य शेषित्वनिराकरणं तदसंबद्धम् । यत्तु प्रत्यक्षश्चास्य द्रव्यत्वात्कर्म प्रतिगुणभाव इति । तदपि व्याहतं पुनरुक्तं च पूर्वमेवाभिहितत्वात् । न च यागफलाभ्यां शेषत्वनिराकरणवदृश्यां सद्वास्यानुल्यप्रवृत्तित्वादुच्चारणं युक्तं तस्मादसदेतत् ॥ यदप्यधिकरणसमाप्तावुक्तम् अथेदानीमत्र भगवान्वृत्तिकारः परिनिश्चिकायेति ॥ तदपि प्रथममेव द्रव्यगुणसंस्काराणां शि-

रपेक्षशेषत्वाभिधानात्कर्मफलपुरुषाणां च द्रव्यादीनि प्रति प्राधान्येवस्थिते सूत्रैरेव परस्परापेक्षशेषत्वप्रतिपादनादुक्तार्थमिति मन्दफलं दृश्यते॥ तेनैवं परिहर्तव्यम्। अस्याधिकरणस्य व्याख्यानद्वयं कृतं तत्र प्रथमं तावत्स्वमतेन शेषः परार्थत्वादित्यस्मिन्हि बादरिमतमुपकारलक्षणशेषत्वाभिप्रायेण द्रव्यगुणसंस्कारेष्वेव शेषत्वमित्येवं पूर्वपक्षीकृत्य जैमिनिमतमेव सिद्धान्तत्वेन वर्णितम्। तथा च पूर्वेत्र दृष्टोपकारानुक्रमणमेव भाष्ये दृश्यते। तत्र च पुरुषस्य द्रव्यत्वात्प्रत्यक्षमेव क्रियानिर्वृत्तिहेतुत्वादिष्टमेव शेषत्वम्। यागफलयोस्तु न किं चित्प्रति प्रत्यक्षं साधनत्वमुपलभ्यतइति अशेषत्वम्। यत्तु न यागफलं पुरुषेष्विति त्रयाणामपि भाष्ये संकीर्तनं न तत्प्रकृतशेषपदानुषङ्गादेवं कल्पयितव्यं न तेषां शेषत्वमिति, किं तर्हि यत्सिद्धान्तवादिसंमतं तन्न भवतीत्येवं संबन्धः। सर्वत्र हि पूर्वपक्षवादिना सिद्धान्तवादिमतं प्रतिषिद्धव्यं न यत्किं चित्, शेषत्वमेव ह्यसौ तदभिप्रेतमेवेति प्रतिषेधति न स्वरूपमात्रेण। सिद्धान्तवादिनश्चैतन्मतं यदुत यागफलपुरुषाणां द्व्याकारत्वं किं चिदपेक्ष्य शेषत्वं किं चिदपेक्ष्य शेषित्वमिति, तद्बादरिमतानुसारी भाष्यकारः प्रतिषेधति॥ न तु यागफलपुरुषेषु सिद्धान्तवादिसंमतं द्व्याकारत्वम्। यागफलयोरेकान्तेनैव शेषित्वात्पुरुषस्य चात्यन्तशेषत्वा,त्सर्वथा य एवैक आकारः प्रतिषिद्धस्तेनैव तद्द्व्याकारत्वनिराकरणं शक्यमिति त्रयाणामप्येतावता तुल्यधर्मत्वात्सह निर्देशः। कर्माण्यपि जैमिनिरित्यादिभिरन्तर्णीतद्व्याकारमेव शेषत्वं प्रतिपादितम्। पारार्थ्यलक्षणशेषत्वाङ्गीकरणात्। नन्वेवं सति पुरुषस्य द्रव्यत्वात्पूर्वपक्षवादिनै-

साभ्युपगम्य(१) शेषत्वं शेषित्वे निराकृते सिद्धान्तवादिना तदेव प्रतिपादनीयमिति न वक्तव्यं पुरुषश्च कर्मार्थत्वादिति । नैष दोषः ॥ तेन हि यागफलयोरशेषत्वात् तस्य शेषित्वं निराकृतं ततश्च यावदेव सूत्रद्वयेन(२) यागफलयोः शेषत्वं प्रतिपादितं तावदेव यागोपसर्जनं फलं प्रति प्रधानत्वादुभौ प्रति केवलं शेषित्वमेव प्रसक्तमिति प्रत्नोने ह्याकारत्वे पुनः शेषत्वप्रतिप्रसवार्थमुच्यते पुरुषश्च कर्मार्थत्वादिति । अथ वा परेणोपकारद्वारेण शेषत्वमभ्युपगतं तदयुक्तं मन्यमानः फलयागयोरिवास्यापि पारार्थ्यकृतमेवेति प्रतिपादयिष्यन्नाह । पुरुषश्च कर्मार्थत्वान्न तदुपकारित्वादिति ॥ वृत्तिकारमतेन सूत्रचतुष्टयमन्यथा व्याख्यास्यन्नाह ॥ अथात्र भगवानिति । नैवेदानीं बादरिमतं पूर्वपक्षः । किं तर्हि शेषः परार्थत्वादिति सामान्येन लक्षणमुक्त्वा तस्यैव विषयप्रदर्शनद्वारेणोत्तरः प्रपञ्चः क्रियते । तत्र पूर्वव्याख्यायां द्रव्यगुणसंस्कारेष्वेव शेषत्वमित्येवमवधारणं पूर्वपक्षे कृतम् । इदानीं तु सिद्धान्तरूपेणैव बादरिमतमप्रतिषेधेनानुमतं कृत्वा लक्षणप्रपञ्चाभ्यां शेषत्वं वर्णयिष्यते ॥ द्रव्यगुणसंस्कारेषु शेषत्वमेवेत्यवधारयति ॥ अतश्च द्रव्यगुणसंस्काराः शेषत्वेन नियताः शेषत्वं न प्रतिपद्यन्ते । शेषत्वं पुनरनियतत्वाद्यागफलपुरुषेष्वप्यस्त्येवेति तत्प्रतिपादनार्थान्युत्तरसूत्राण्यवकल्पन्ते ॥ तस्मादापेक्षिकशेषशेषित्वमात्रमेवैभिः सूत्रैः प्रतिपाद्यते ॥ तथा च भाष्ये दर्शितम् । ततश्च द्विप्रकार एव शेषविषयो नैयमिक आपेक्षिकश्चेत्युक्तं भवति ॥ ननु च द्रव्य-

---

(१) अभ्युपगम्यते इति २ पु० पाठः ।

(२) पूर्वसूत्रद्वयेनेति २ पु० पाठः ।

गुणसंस्काराणामपि स्वाङ्गानि प्रति प्रधानत्वाद्यागं च प्रति गुणभावादापेक्षिकमेव शेषशेषित्वम् । तथा हि ॥

व्रीह्यादीनां प्रधानत्वमवघातादिषु स्थितम् ।
मुसलादीन्यपेक्ष्यैवमवघातप्रधानता ॥

व्रीह्यादयो ह्यवघातादीन्प्रति प्रधानभूताः पुरोडाशनिर्वृत्तिं प्रति गुणभूताः । तथा गुणः संख्यादिः संख्येयं प्रति परिच्छेदात्शेषः ॥ येषां तु गुणानां निष्पाद्या सा तान्प्रति शेषिणी । तथा संस्कारः संमार्गावघातादिरग्निव्रीह्यादेः शेषः स्वसाधनानामिध्मसन्नहनोलूखलमुसलादीनां शेषी । तस्मात्तावधारणं सिध्यतीति । तदुच्यते ॥

द्रव्यादेर्यच्च शेषत्वं तत्र नैवास्ति शेषिता ।
फलयागनराणां तु ह्याकारत्वं परस्परम् ॥

द्रव्यगुणसंस्कारा हि फलवन्तं यागं प्रति नियोगतः शेषभूताः सत्यपि स्वाङ्गानि प्रति शेषित्वे तं प्रति नास्तीत्यभिधीयते ॥ अत एव भाष्यकारोऽपि नियोगतो यज्ञिं प्रति शेषभाव इत्याह । न ब्रवीति नियतः शेषभाव इत्यापेक्षिक इतरेषामित्यत्रापि यज्ञिं प्रतीत्यनुवर्तते । तथा ह्येकैकस्य द्वौ द्वौ प्रति गुणत्वं प्राधान्यं च दृश्यते । यागस्य तावद् द्रव्यात्मकं निर्वर्तकं पुरुषं प्रति प्राधान्यं फलं प्रति गुणता । यश्च फलं प्रति गुणः स (१) शक्यते फलस्य स्वामिनं पुरुषमपि प्रति सुतरां गुण इति वक्तुम् । तथा यस्य पुरुषं प्रति प्राधान्यं तस्य तदुपसर्जनं फलं प्रति सुतरां तदित्यपि शक्यनिरूपणम् । एवं फलस्य यागं प्रति प्राधान्यात्तत्साधनं पुरुषमपि

(१) स इति २ पु० नास्ति ।

प्रति प्राधान्यं, पुरुषं प्रति गुणत्वात्तदनुष्ठेये यागेपि गुणत्वं, तथा पुरुषस्य फलं प्रति प्राधान्यात् तत्साधनं यागमपि प्रति प्रधानत्वम, यागं च प्रति गुणाभावात्तत्साध्ये फलेपि गुणत्वम, न त्वेवं द्रव्यगुणसंस्कारेष्विति विशेषः। यत्त्विदं पारंपर्येणापि शेषत्वं प्राधान्यं चोक्तम इदमर्थलक्षणं वस्तुमात्ररूपमित्यवगन्तव्यम्। न व्यवहारार्थं मा भूदङ्गत्वांशेन विकृतौ फलपुरुषयोरप्यतिदेशात्सिद्धान्तविरोधः॥ तस्मादेतावत्प्रकार एव वक्ष्यमाणप्रपञ्चशेषत्वविषयसंक्षेप इति सिद्धम्॥

# तेषामर्थेन संबन्धः॥७॥

उक्तः सहेतुः सविषयश्च शेषः॥ इदानीं कथं च विनियुज्यन्त इत्ययमंशो विचार्यते। तत्र त्रिष्वधिकरणेषु क्रमेण संस्कारद्रव्यगुणानां विनियोगः कथ्यते। तत्रापि किल प्रथमे लिङ्गेन द्वितीये वाक्येन तृतीये श्रुत्या विनियोग इति केचित्॥ तत्त्वाचार्या नेच्छन्ति। यद्यप्यत्र विचित्रप्रमाणव्यापारपरामर्शः तथापि श्रुतिविनियोगगणवात्र पाठे लिङ्गादिविनियोगस्तु द्वितीयपादात्प्रभृति भविष्यतीत्युक्तम्(१)। श्रौपधधर्मा इत्याद्येन(२)दधिकरणमाद्यमपि सिद्धान्ताभिप्रायेणोक्तम्। ननु संयुक्ता एवैतइति सिद्धान्तवादी श्रुतिबलेन संशयमाक्षिपति॥ परः पुनः पदान्तरसंबन्धकृतं व्रीह्यादिसंबन्धं शुद्धावघातविधिना बाध्यमानं मन्यमान आह॥ अवघातादयस्तु पदार्था विधीयन्ते श्रुत्येति। तच्चैतदयुक्तमिव कुतः॥

---

(१) इत्युक्तं तैरिति ३ पु॰ पाठः।

(२) इत्याद्यप्येतदिति २। ३। पु॰ पाठः।

प्रयुज्यते पदं किं चिद्विना न हि पदान्तरात्।
वाक्याधिकरणे चोक्ता श्रुतिबाधप्रतिक्रिया॥

न हि व्रीह्यादिभिः सबध्यमाना अवघातादयो नावघातादयो(१) भवन्ति। यदि ह्येवं भवेयुः ततः श्रुतिविरुद्धत्वाद्वाक्यं बाध्येत॥ अत्र पुनः केवलानामेवावघातादीनामनुष्ठातुमशक्यत्वात् अवश्यमेव संबन्ध्यन्तरे कार्याः(२)। न हि भवत्यत्रप्यवघातादयः केवलाः क्रियन्ते॥ तत्र प्रकरणान्नियद्रव्यमात्रसंबन्धः क्रमान्तरेण कल्प्यते। अथापि किं चिदध्याहृत्य संबन्धः क्रियते तथापि क्रमः। अथारादुपकारकत्वेन प्रधानसंबन्ध इष्यते तत्रापि विप्रकर्षः॥ अथ तु नैव केन चित्संबध्यते ततो विध्यानर्थक्यप्रसङ्गः॥ तस्मादसदेतत॥ तेनैवं व्याख्येयम्॥

वाक्यभेदतदेकत्वसंदेहान्नात्र संशयः।
परमावान्तरापूर्वप्रयुक्तत्वकृतो ह्ययम्॥

नैवात्रायं पूर्वपक्षहेतुरवघातादयः पदार्थाः स्वतन्त्राः श्रुत्या विधीयन्ते॥ वाक्येन व्रीह्यादिभिः संबध्यन्ते। तच्च श्रुत्या बाध्यते। तस्मात्केवलविधानात्किं सर्वार्थाः किं वा दृष्टोपकारसामर्थ्येन यथासंयोगमेव भवन्तीति। किं तर्हि॥

विधीयते ऽवघातादिः श्रुत्या व्रीह्यादिसंगतः।
व्रीहित्वाद्यर्थता चास्य निष्फलत्वेन नेष्यते॥

यदि ह्येषां यथाश्रुतव्रीह्याद्यर्थत्वमध्यवसीयते॥ ततः संयुक्तत्वात्सर्वे सर्वत्र न प्राप्नुयुः। एते पुनर्नवमाद्याधिकरणन्यायेन श्रौतं व्रीहित्वमुक्ताङ्ख्यापूर्वसाधनत्वेन संबध्यन्ते। तच्च प्र-

(१) द्वितीयमवघातादय इति ३ पु॰ नास्ति।

(२) संबन्ध्यन्तरेण कार्यमिति ३ पु॰ पाठः।

करणापेक्षापूर्वसाधनांशलक्षणागम्यत्वाद्वाक्यगम्यमिति मन्यमान आह ॥ वाक्येनैषां व्रीह्यादिसंबन्धो न श्रुत्या । यच्च तदपूर्वसाधनांशलक्षणात्मकं वाक्यं तत्प्रकरणाविशेषाद्यथौषधे तथा आज्यसांनाय्ययोरप्यविशिष्टम् । एवमुत्पवनविलापनशाखाहरणादीनां लक्षणयैवाश्रुतद्रव्यान्तरसंबन्धो दर्शयितव्यः । तत्र किमेकं दर्शपूर्णमासापूर्वं धर्माणां प्रयोजकम् उतानेकम् । यद्यप्यनेकं तदापि किमपूर्वमात्रमुत किं चिदेवेति । यद्येकमपूर्वं सर्वाणि वा सर्वेषां प्रयोजकानि ततः संकरो धर्माणाम् । अथ त्वनेकमपूर्वं किं चिदेव प्रयोजकं ततः प्रत्येकं व्यवस्थेति । तत्र सिद्धान्तेनैव तावदुपक्रमते ॥ तेषामर्थेन संबन्धः । यद्यपि तावत्केवलपदवाच्याः श्रूयेरन् तथापि क्व क्रियेरन् इत्यपेक्षिते यत्र क्रियमाणाः प्रयोजनवन्तो भवन्ति तत्र कर्तव्याः । न चैते संकीर्यमाणाः सर्वत्र प्रयोजनवन्तो दृश्यन्ते । सत्यपि चापूर्वप्रयुक्तत्वे दृष्टप्रयोजनद्वार एव संबन्धोऽवकल्पते । अथ वा शास्त्रेणैव यत्र क्रियमाणाः प्रयोजनवन्तो विज्ञायन्ते यदपूर्वसाधनं(१)व्रीह्यादिशब्दैः स्वाभिधेयजात्येकार्थसमवायि लक्षितं तदर्थत्वेनावघातादयो विज्ञायमानाः संबन्धाभावादपूर्वान्तरसाधनेऽलक्षिते न भविष्यन्ति । ननु श्रूयन्ते सर्वे सर्वत्रत्यपूर्वैकत्वाद्भेदे चासति लक्षणानियमापरिज्ञानात्प्रयोजनस्य च विध्युत्तरकालगम्यत्वान्न तद्दर्शनद्वारेण व्यवस्थेति मत्वा परिचोदना । एतदेव न जानीम इति । नावश्यमेकमेवापूर्वं प्रयोजकमपूर्वमात्रं वेत्यभिप्रायः ॥ सत्यपि ह्यविशेषश्र-

(१) यदपूर्वसाधनान्तरमिति पु० पाठः ।

वणेऽर्थाद्वा कल्पनैकदेशत्वादित्यविरुद्धैव व्यवस्था। अथ वै-
कापूर्वापूर्वमात्रप्रयुक्तत्वपक्षयोः संकरो नानापूर्वप्रयुक्तव्रीह्या-
दिजातिलक्षितसाधनसंबन्धे तु व्यवस्था। न चैतयोरन्यतर-
स्यावधारणम्। अतो न जानीमः सर्वं सर्वत्र प्रयुज्यन्ते नेति॥

## विहितस्तु सर्वधर्मः स्यात् संयोगतो विशेषात्प्रकरणाविशेषाच्च ॥ ८॥

परः स्वाभिप्रायं विवृणोति। फलस्य हि सूक्ष्मसामर्थ्यरू-
पावस्थाऽङ्कुरस्थानीया पूर्वानुत्पन्नोत्पत्तेरपूर्वमित्युक्तं प्राक्। त-
च्च फलैकत्वादेकमेवाध्यवसीयते। तत्साधनत्वं चाज्यौषधसा-
न्नाय्यानां सर्वेषामविशिष्टम्। अतस्तदुद्देशेन विहितानां
सर्वधर्मत्वं विज्ञायते। यद्यपि चाग्नेयादीनामवान्तरापूर्वाणि
प्रात्यात्मिकानि भवेयुः तथापि तेषां निष्फलत्वाद्रागादिस्वरू-
पवदेव प्रयोजकशक्तिर्नास्तीति परमापूर्वमेव प्रयोजकमवधा-
र्यते। भिन्नापूर्वप्रयुक्तत्वेऽपि प्रकरणगतापूर्वसाधनमात्रोद्देशेन
विधीयमानानां शेषाणां(१) विशेषणानुपादानादुपादाने च वा-
क्यभेदप्रसङ्गात् सार्वत्रिकविधानमस्तीति सर्वधर्मत्वे हेतुः। त-
त्सिद्ध्यर्थं च संयोगतो विशेषात्प्रकरणाविशेषाच्चेत्युक्तम्। यदे-
कत्वापूर्वसाधनत्वं धर्मसंबन्धकारणं तदितरत्राप्यविशिष्टम्। य-
त्तु विशिष्टं व्रीहित्वादि तल्लक्षणामात्रौपयिकत्वादनियामक-
म्। यदपि कारकत्वं लभ्यते तदपि सर्वेषां प्रदेयत्वादविशिष्टम्।
तस्मादपूर्वासंबद्धमप्रदेयमप्रकृतापूर्वसाधनं च वर्जयित्वा सर्वे

(१) विशेषाणामिति २ पु० पाठः।

सर्वत्र कर्तव्याः । यो ह्यर्थात्प्राप्नोतीत्यचोदितः सन् सामर्थ्ये-न लौकिकप्रयोजनेन वा यः प्राप्नोति स तद्वशेन व्यवतिष्ठते ॥ अथ वा यत्र पूर्वतरप्राप्तप्रयोजनद्वारेण धर्माः प्राप्नुवन्ति न च धर्मेभ्य एव प्रयोजनकल्पना, यथा विकृतिषु, तत्र यावदर्थत्वं भवेत् । अत्र पुनः प्रकृतावुपदेशेन प्राक् प्रयोजनेभ्यः स्वरूप-मात्रेण कल्पयिष्यमाणप्रयोजनाः मन्त्रा विधीयन्ते ॥ तेन नैषा वचनव्यक्तिः । यत्र प्रयोजनं तत्रैते, किं तर्हि यत्रैते तत्र दृ-ष्टमदृष्टं वा प्रयोजनमिति । तस्मात्सर्वधर्माः ॥

## अर्थलोपादकर्म स्यात् ॥ ९ ॥

दृष्टार्थे लोपाच्छासनस्यार्थलोपादिति निगदव्याख्यातं भा-ष्यम् ।

## फलं तु सह चेष्टया शब्दार्थोऽभा-वाद्विप्रयोगे स्यात् ॥ १० ॥

यदुक्तमदृष्टकल्पनान्नैवेतरत्राप्यर्थलोप इति ॥ तत्राभिधी-यते ॥

यद्याहत्य विधीयेरन्नाज्येऽपि प्रथनादयः ।
अदृष्टार्था अगत्या स्युर्दृष्टं वा न भवेद्यदि ॥

आम्नानान्यथानुपपत्त्या ह्यदृष्टं कल्प्यते ॥ तच्चाम्नानमन्य-थैव दृष्टार्थतयोपपन्नमित्यर्थापत्तेरसंभवः ॥ तद्दर्शयति । अव-घातादीनामनुष्ठानसहितं फलं व्रीहिषु दृश्यते ॥ अन्यत्र तु चेष्टामात्रम् । न च सफलचेष्टानुष्ठानसंभवे विफलानुष्ठाने वि-

दृश्यते॥

न चासौ समुदायार्थः शक्यो वक्तुमिह त्वया।
अन्वयव्यतिरेकाभ्यामर्थभेदो हि दृश्यते॥

तत्र समुदायप्रसिद्धिर्भवति यत्रावयवार्थौ तिरोधाय त्वर्थ-भेदः समुदाय एव प्रतीयते। गम्यते त्वचाग्निशब्दस्य पैङ्गल्यं माणवकशब्दस्य च पिण्डस्वरूपं विविक्तं वाच्यमत उभावपि प्रात्यात्मिकयोरपि वाचकत्वान्मुख्याविति। इदानीमवयवा-नुसारेणैव समुदायार्थत्वं समर्थयमान आह। अनुगतस्वार्थ-पदद्वयगम्यत्वान्नीलोत्पलवद्वाक्यार्थो (१)ऽयमस्य तस्य पदार्थप्र-त्याय्यत्वाच्छब्दं प्रति पूर्ववदेव गौणत्वमिति तन्निराकरोति॥

अग्निमाणवकत्वाभ्यां यद्येकोर्थो विशेषितः।
नीलोत्पलवदिष्येत ततो वाक्यार्थता भवेत्॥

न त्वत्र तदीयो मुख्यार्थो ऽग्नित्वमस्ति। न च भवतः पैङ्गल्यं वाच्यमस्मात्पक्षाभेदप्रसङ्गात्तस्मान्न वाक्यार्थः। तेन ज्व-लने माणवकस्य च पैङ्गल्ये तुल्यवच्छब्दप्रवृत्तिरिति मुख्यत्व-म्। माणवकस्येति भाष्ये पैङ्गल्यव्यतिरेकजनिता षष्ठी नाभि-धातृव्यतिरेकजनिता। न हि माणवकस्वरूपमग्निशब्दाद्गम्य-ते। न हि पर्यायत्वे माणवकशब्दः प्रयुज्येत। अथोच्येत यः सुष्ठु प्रसिद्ध इति मुख्योपपदव्यापारं यत्कृतं तस्याश्रयणमना-श्रयणं च त एव मन्दसुष्ठुप्रसिद्धी गौणमुख्यविभागाय दर्शय-ति। तच्चोत्तरम्॥

प्रसिद्धिरिति विज्ञानं न चास्योनातिरिक्तते(२)।

(१) वाक्यार्थो ऽयमिति २। ३ पु० पाठः॥
(२) न चास्योनातिरिक्तता इति २। ३ पु० पाठः॥

तस्मात्र तत्कृतः शक्यो विशेषो वक्तुमञ्जसा ॥

इदानीं श्रोतृगतप्रसिद्धिभेदमूलं वक्तृगतं वह्वल्पप्रयोगित्वं(१) विभागार्थं दर्शयति । यस्य च वह्वशः प्रयोग इत्यादि । तन्निराक्रियते ॥

अल्पशोऽपि प्रयुक्तस्य सकृच्छक्तिर्निरूपिता ।
न निवर्त्तत इत्येवमुभयोस्तुल्यता पुनः ॥

इहापि च गोशब्दस्य पृथिव्यादौ मन्दस्पष्टप्रसिद्धिप्रयोगौ दर्शयितव्यौ । तथा चाहुः ॥

मण्डकैर्वहुशस्तृप्तिः कदा चित्खण्डमोदकैः ।
न चात्र मण्डका मुख्या गौणा वा खण्डमोदकाः ॥

इदानीं विशेषं कथयति । सत्यपि तावन्माणवकसामानाधिकरण्ये ऽरुणाशब्दन्यायेन सति सादृश्ये ऽभिधानादसति चानभिधानादन्यत्रासादृश्यवति वृत्तिदर्शनादसति चादर्शनाद्विशेषणत्वादवश्यंभाविप्रथमप्रत्यायने सादृश्यमेव प्रथमं प्रत्याययितव्यम् । न चानवगते ऽग्नौ तत्प्रतीयत इति प्रथमतरमग्नेरभिधानम् । ततश्च तत्संबन्धादेव शेषप्रतीते(२)र्व्यक्तिवदनभिधेयत्वम् । सन्ति चैवमादिषु कानि चिद्रूपादिसामान्यानीत्युक्तम् । तस्मादस्ति गौणमुख्यविभाग इत्यारभ्यमधिकरणम् । एवं च(३) तत्सिद्धिसूत्रोक्ताः सप्त नव गौणपक्षा द्रष्टव्याः ॥

जहत्स्वार्थाभिधायित्वं संघातः परिकल्पना ।
तथा सोपपदा वृत्तिः समुदायप्रसिद्धिता ॥

---

(१) प्रयोगमिति २ । ३ पु० पाठः ॥

(२) अशेषप्रतीतेरिति ३ पु० पाठः ॥

(३) एते चेति २ । ३ पु० पाठः ॥

वाक्यार्थो ऽल्पप्रसिद्धित्वमेवमल्पप्रयोगिता ।
अष्टावेतान्निराकृत्य साधिता गुणलक्षणा ॥
तच्च नित्यं परार्थत्वादुभयत्र प्रयोगिता ।
साक्षान्न ह्यभिधानस्य किं चिदभ्यधिकं फलम् ॥

एवं च सति गौण्या वृत्त्या पूषादिशब्दैरग्न्याद्यभिधानादनुत्कर्षो भविष्यत्यथा यत्र पूषादयस्तत्र नीयेरंस्तथाग्न्यादिशब्दैः सूर्याद्यभिधानादविकारे सत्यार्षचोदको ऽनुग्रहीष्यते । इत्येवं प्राप्ते ब्रूमः ॥

अर्थाभिधानसंयोगान्मन्त्राणां क्रतुशेषता ।
मुख्येन च कृतार्थानां न गौणे श्रुतिकल्पना ॥

अपि वा प्रयोगसामर्थ्यादित्यनेन हि न्यायेनाभिधेये तावद्विनियोगाय मन्त्राः श्रुतिं परिकल्पयन्ति । तच्च यदि जघन्यार्था गौणी वृत्तिर्भवेत् ततस्तुल्यवदुभयत्रापि श्रुतिः कल्प्येत । यदि तु गौणमपि वदता पूर्वतरं स्वार्थोभिधेयः तदा तदतिक्रमकारणाभावात्तद्विनियोगश्रुतौ कल्पितायां निराकाङ्क्षेषु मन्त्रप्रकरणि(१)स्वाध्यायाध्ययनविधिषु न पुनः श्रुतिकल्पनाहेतुरस्तीति न विनियोगः । किं च ॥

कृतार्थे मन्त्रपाठे च गौणानां स्मारकान्तरम् ।
अनिवारितसामर्थ्यप्राप्तं (२)किमिति बाध्यते(३) ॥

अपि च ॥

मुख्यः प्रत्याय्यते कस्माद्गौणेप्यर्थे विवक्षिते ।

---

(१) प्राकरणिकेति २ । ३ पु० पाठः ॥
(२) सामर्थ्यमिति २ । ३ पु० पाठः ॥
(३) वार्यतइति २ । ३ पु० पाठः ॥

अन्यथानुपपत्त्या चेन्न ध्यानाद्युपपत्तितः ॥
पाक्षिकत्वे ऽप्यनित्यत्वात्पक्षेनर्थकता भवेत् ।
नित्यं मुख्यापरित्यागान्मन्त्रस्यास्याश्रितो भवेत् ॥
न चार्थप्रत्यये सिद्धे मन्त्रः कार्यो ऽभिधायकः ।
मन्त्राम्नानार्थवत्त्वं च मुख्येनार्थेन सेत्स्यति ॥

तेनैव सूत्रार्थो यस्मादर्थाभिधानसंयोगान्मन्त्रेषु शेषभावस्तस्मादौत्पत्तिकेनैवार्थेनैषां संयोगः स्यात् । कुत,स्तेनैवाव्यभिचारितया नित्यसंयोगात् ॥

## संस्कारत्वादचोदिते न स्यात् ॥ २ ॥

अचोदिते पूषादौ दर्शपूर्णमासयोर्यन्मन्त्रा न विनियुज्यन्ते युक्तमेव तत्संस्कारस्य संस्कार्यपरत्वाल्लिङ्गेन च प्रकरणबाधात् । कथं पुनरेषामनुक्तानां वैदिकैः कर्मभिर्योगः । कथं वा क्रत्वङ्गसामान्यविनियोगमन्तरेण लिङ्गं देवतायामेव केवलायां विनियोजकमिति । तदुच्यते ॥

यागानुमन्त्रणानीति समाख्या क्रतुयोजिनी ।
तस्मात्क्रत्वनुरोधेन प्राप्तिस्तद्देवते क्रतौ ॥

यागानुमन्त्रणसमाख्या ह्येषां यागसंबन्धादृते ऽनुपपद्यमाना यागसामान्याङ्गत्वं गमयति ॥

अतो विशेषचिन्तायामशक्येष्वनियोजनात् ।
शब्दार्थ(१)विनियोगाय लिङ्गव्यापारसंभवः ॥

## वचनात्त्वयथार्थमैन्द्री स्यात् ॥ ३ ॥

(१) शक्यार्थेति २ । ३ पु० पाठः ॥

अपवाद आरभ्यते । निवेशनः संगमनो वसूनामिति ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति यद्यपि मन्त्रार्थोऽग्नावप्युपपद्यते तथापि तद्धितश्रुत्यैवेन्द्राभिधानसामर्थ्यमत्र(१) मुख्यमिति विज्ञायते । केषांचित्तु कदाचन स्तरीरसीत्येषा ऋक् पठ्यते । तत्र पूर्ववदेव संदेहः किं मुख्यत्वादिन्द्रोऽभिधातव्यः उत वचनसामर्थ्यादग्निर्गार्हपत्य इति । सत्यपि च संयुक्तश्रवणेऽरुणावदशक्तेः संदेहो योजनीयः । तत्र द्रव्यपरिच्छेदद्वारापि क्रयसंबन्धो लब्ध इह तु शब्दार्थसंबन्धस्यौत्पत्तिकत्वेनाशास्त्रहेतुत्वादत्यन्ताशक्तत्वम् । न हि कथंचिदिन्द्रशब्दो गार्हपत्यं ब्रवीति । अभिधानं वेदं चोदितमुपतिष्ठत इत्यात्मनेपदनिर्देशात् । मन्त्रकरणव्यापाराभिधानं(२) ह्येतत् । न चाभिधानं मुक्त्वाऽन्यत्र मन्त्रः करणं भवति । तेनैन्द्र्योपतिष्ठत इत्येतावता तावदिन्द्रोपस्थानं विज्ञायते । गार्हपत्यमिति च द्वितीयया ऽग्नेः प्रकाश्यत्वम् । तत्र किं समञ्जसं किमसमञ्जसमिति जायते संशयः । न ह्येन्द्रोपस्थानएव साधनान्तरं गार्हपत्यो ज्ञायते । किं प्राप्तं पूर्वाधिकरणेनेन्द्रोपस्थानमिति । कथं द्वितीयेति चेत् । सक्तुवत्साधनान्तरमधिकरणापादानादि लक्षयिष्यति । शक्नोति विरोधादीप्सिततमत्वमविवक्ष्यमाणं कारकमात्रं लक्षयितुम् । तत्र च द्रव्याणां कर्मसंयोग इत्यनेन गार्हपत्यस्याङ्गत्वं भविष्यति । यद्वोपस्थानविशेषणं संबन्धाद्गार्हपत्यशब्द इन्द्रलक्षणार्थ इति केचित् । एतदुक्तं भवति । विभक्तिर्वा लक्षणावृत्त्या प्रातिपदिकं श्रुतिवृत्तं प्रातिपदिकं वा यज्ञसाधन-

(१) अस्येति २ । ३ । पु० पाठः ।

(२) अभिधाने इति २ । ३ पु० पाठः ।

साधर्म्याल्लक्षणार्थं द्वितीया मुख्येति । अथ वोपस्थानविशेषणमित्यत्र धात्वर्थमात्रमुक्तम् । एककर्मविषयत्वं हि गार्हपत्यमन्त्रयोर्विप्रतिषिद्धम् । यस्य मन्त्रः करणं न तस्य गार्हपत्यः कर्म । यस्यासौ कर्म न तस्य मन्त्रः करणं, द्वौ चेह प्रकृतिप्रत्ययसमूहेन व्यापारावुक्तौ । प्रकृत्या समीपस्थानं प्रत्ययेन प्रकाशनम् । तत्र प्रकाशने यादृशं गार्हपत्यस्य कारकत्वं तादृशं व्याख्यातम् । इदानीं मुख्यमेव कर्मत्वं प्रकृत्यर्थं प्रत्युच्यते । तेनैतदुक्तं भवति । गार्हपत्यं समासीदन्निन्द्रं प्रकाशयेदिति । यद्यपि च प्रत्ययार्थप्राधान्यात्तत्कर्मत्वं युक्तं तथाप्ययोग्यत्वात्ततो निवृत्तं संबन्धात्प्रकृत्यर्थमुपसंक्रामति । तस्मान्मुख्यमेव कार्य्यं मन्त्राणामित्येवं प्राप्ते ब्रूमः । वचनादयथार्थत्वं मन्त्राणामिति । कुतः ॥

गौणत्वं यत्र नाम स्यात्क्व चिद् ब्राह्मणमन्त्रयोः ।
तत्रानुवादरूपत्वान्मन्त्राणां गौणतेष्यते ॥

गार्हपत्यस्तावद् द्वितीयया प्रधानस्य प्रत्ययार्थस्य कर्मेति श्रुत्या गम्यते । तेनैन्द्या स प्रकाशयितव्यः । तत्र यद्यथार्थत्वं(१) वचनानुरोधेन संजातं तथा नामेत्यध्यवसातव्यम् । अवश्यं भावि ह्यत्र ब्राह्मणस्य मन्त्रस्य वा गौणत्वम् । तत्र ब्राह्मणस्यात्यन्ताप्राप्तविधित्वात्प्रथमप्रवृत्तेस्तानन्यप्रमाणके ऽर्थे गौणत्वमयुक्तम् । मन्त्रस्य तु ब्राह्मणचोदितार्थप्रकाशनात् तत्परतन्त्रवृत्तेः विरोधिनं स्वार्थमतीत्य मुख्यं युक्तो हि गौणार्थनिमित्तभावः ॥

तेन कारकसामान्यं लक्ष्यते न द्वितीयया ।

(१) यद्ययथार्थत्वमिति २ । ३ पु० पाठः ।

येनात्र गार्हपत्योपि(१) संबन्धात्स्याद्विशेषणम् ॥
न चावयवसंबन्धादिन्द्रो गृहपतेर्यतः ।
तेन गार्हपत्यः स्याद्रूढ्या ऽग्निप्रत्ययाद् दृढात् ॥

## गुणाद्वाप्यभिधानं स्यात्संबन्धस्याशास्त्रहेतुत्वात् ॥ ४ ॥

ननु च मन्त्रोप्यशक्य एव गार्हपत्ये विनियोक्तुम् । तथा हि ॥

गौणोपि तावदेतस्य वृत्तिः क्लेशेन जायते ।
अत्यन्तासदृशत्वात्तु न गौणोप्यत्र दृश्यते ॥

न हि वचनशतेने(२)न्द्रशब्दः शक्यो गार्हपत्याभिधानसमर्थः कर्तुम् ॥

न वाद्गुणवत्त्वात्स्यादिन्द्रोऽग्निः पारिभाषिकः ।
न हि शब्दार्थसंबन्धः प्रसिद्धः शास्त्रहेतुकः ॥

अत्रोच्यते ॥

स्यादग्नेर्गौणमिन्द्रत्वं यज्ञसंबन्धकारितम् ।
इन्दत्यर्थानुसाराद्वा स्वकार्ये सोपि हीश्वरः ॥

तस्मादन्यथानुपपत्तेर्गौणमभिधानमिति सिद्धम् ।

## तथाह्वानमपीति चेत् ॥ ५ ॥

एवं तावन्मुख्यं कार्यं मन्त्राणामिति सापवादमवस्थितम् ।

---

(१) गार्हपत्योयमिति २ । ३ पु० पाठः ।
(२) वचनेनेति २ । ३ । पु० पाठः ।

अतः परमेत(१)द्विचार्यते क उत्सर्गस्य विषयः कोपवादस्येति। तत्र हविष्कृदेहीति या हविः करोति यजमानस्य पत्नी तदाह्वानप्रकाशनसमर्थो मन्त्रः, स किं तत्रैव विनियुज्येतावहन्तिसंयोगस्य काला(२)र्थत्वेनाविरोधात्। अथ वा वचनादयथार्थं पूर्वतरप्रतीतावघाताङ्गमेवेति । यदि हविष्कृदेहीत्यनेनावघ्नन्नाह्वयतीति विधीयते ततोऽवघाताङ्गत्वम्। अथावघ्नन्तेनाह्वयतीत्येवं संबन्ध्य रूपादेव प्राप्तमाह्वानकाले मन्त्रमनूद्य त्रिरिति विधीयते ततोऽवघ्नन्नित्यस्य स्वकाललक्षणार्थत्वान्नायथार्थं वचनमिति यथार्थ एव मन्त्रः । किं प्राप्तमवहन्तिश्रुत्यनुग्रहादाह्वयतेश्च मन्त्ररूपादेव प्राप्तत्वादवहन्तेरेव हविःकरणे कर्तृत्वं कथं चिदस्तीत्ययथार्थत्वम्। गुणयोगात्प्रत्यायनं च ॥

## न कालविधिश्चोदितत्वात् ॥ ६ ॥

त्रिरभ्यासपरत्वात्तु न मन्त्रोऽत्र विधीयते ।
लक्षणे च शतुर्वृत्तिः प्राप्तं चान्यदनूद्यते ॥

अवघ्नन्नित्यत्र हि धात्वर्थोपसर्जनः कर्ता लक्षणार्थयुक्तः प्रतीयते। लक्षणहेत्वोः क्रियाया इति शतृप्रत्ययात्। तेन न काचिच्छ्रुतिपीडा। तस्मात्सर्वमेतदनूद्य त्रिरिति विधीयते नान्यद्वाक्यभेदप्रसङ्गात् ॥

योग्यत्वेन च सिद्धत्वात्कालोऽपि न विधीयते ।
अभिधामात्रमेवास्य विधिरित्यभिधीयते ॥

---

(१) परमप्येतदिति २ । ३ । पु० पाठः ।

(२) काललक्षणार्थत्वेनेति २ । ३ । पु० पाठः ।

सकृदुच्चारणाद्यो वा त्रिरभ्यासेन जायते ।
अभ्यासे विहिते ऽर्थेन सकृत्त्वोक्तिर्न्निधीयते ॥

तथा च यावज्जीवकोऽभ्यास इत्यत्र कालाभ्यासयोरन्योन्यविधिहेतुत्वं व्याख्यातम् । अथ यदुक्तं हन्तिरेव(१) हविष्कृद्विष्यतीति । तत्रोच्यते ॥

## गुणाभावात् ॥ ७ ॥

गुणाभावाद्धविष्कृत्त्वमन्त्राभावो यदोच्यते ।
आमन्त्रणादिसामर्थ्यं लिङ्गमाश्रीयते तदा ॥

अथ वा पदोत्तरमेतत्सूत्रम् ।

त्रिरभ्यासपरत्वात्तु न मन्त्रोऽत्र विधीयते ।
रूपादेवावघाताङ्गं भवत्विति तदुच्यते ॥
यद्यप्यस्य हविष्कृत्त्वं कथं चित्कल्प्यते त्वया ।
तथाप्याह्वयतीत्येतद्युर्थं तस्मिन्नचेतने ॥
आमन्त्रणविभक्तिश्च प्रेषश्चैहीति मध्यमः ।
व्यर्थं मन्त्रे(२) भवेत्सर्वमवघातपरे सति ॥

चेतनावत्त्वात्तु पत्न्यामर्थवत्तस्मान्न रूपादेवावघाताङ्गत्वमिति ॥

## लिङ्गाच्च ॥ ८ ॥

एवं च वागित्यर्थरूपेणैकान्तिकेनैव स्त्रीत्वेन संस्तवो भविष्यति । अन्यथा ऽनुपात्तस्त्रीलिङ्गक्रियादिपदेनानेकान्ताव्य-

(१) अवहन्तिरेवेति २ । ३ पु० पाठः ।
(२) व्यर्थमन्त्रेति २ पु० पाठः ।

क्तलिङ्गेन शब्दधर्मतया कथं चित्कल्प्यः स्यात्तस्मादाङ्गानाङ्गत्वमिति ॥

## विधिकोपश्चोपदेशे स्यात् ॥ ९ ॥

अवघातमन्त्रान्तरविरोधश्चान्याय्यः स्या,दाङ्गाने त्वयमेवेत्यविरोधः ॥

## तथोत्थानविसर्ज्जने ॥ १० ॥

अतिदेशसूत्रत्वात्सर्वे पूर्वसूत्रार्था योजयितव्याः । पूर्वत्रानुवादे कालार्थत्वमुक्तम् इदानीं विधानार्थेपीति विशेषः । विरम्यासपरत्वाच्च तत्र मन्त्रोपदेशो न जातो न लिङ्ग तथेति पूर्वपक्षे बीजम् । उत्थानेनाग्निरिध्यतइत्यनेनोत्थानं प्रकाश्यतइति प्रतिपाद्यते ॥ यदायमुत्थानाङ्गं भवति तदा प्रैषाभावात्पराधिकारो नास्तीति प्राप्तकालतायां लोटं कल्पयित्वाऽध्वर्युकर्तृकाण्येवाग्निविहरणादीनि भवेयुः । अतश्च तदीयमुत्थानं तेषां कर्तृत्वेन विवक्ष्यमाणमग्नीत्यादिभिः शक्यं प्रकाशयितुम् । एवं व्रतं कृणुतेति वागभिधानं वाक्प्रयत्नितवदास्याधारत्वाद्वाचो यदास्यस्य व्रतकरणे कर्तृत्वं तच्छक्यं वाच्येवोपचरितुं तत्र व्रतं कर्तुं प्राप्तः काल इति । ताल्वाद्यधिष्ठानभेदाच्च बहुवचनम् । गुणाभावान्मन्त्रगुणाभावादित्येतद्देवादृष्टार्थत्वप्रसङ्गमुखेनोत्तरम् । न हि मध्यमपुरुषः परप्रेषणमन्तरेणोपपद्यतइति वक्ष्यामः । लिङ्गमपि किं चिदन्वेष्टव्यम् । विधिकोपश्च वाग्विसर्ज्जने याः पशूनामृषभे वाच इति मन्त्रान्तराम्नानात् ॥

## सूक्तवाके च कालविधिः परार्थत्वात् ॥ ११ ॥

देवताप्रकाशनस्मारणाभ्यां कृतार्थत्वादङ्गाङ्गिभावापेक्षा नास्तीति कालार्थता । सर्वत्र च कृतार्थयोः संबन्धे कालार्थत्वं स्यात्स्यति तृतीयां चेत्थंभूतलक्षणार्थां मन्यते । प्रस्तरकृतार्थत्वाभिधानं च प्रतिपाद्यमानप्रधानत्वादस्य सूक्तवाकाङ्गत्वं तद्वाच्यदेवताङ्गत्वं वा न घटतइत्यस्य प्रतिपादनार्थम् । तथा सदेव तस्य सूक्तवाकस्यापि तदङ्गत्वमिति ॥

## उपदेशो वा याज्याशब्दो हि नाकस्मात् ॥ १२ ॥

सूक्तवाकेन प्रस्तरं प्रहरतीति प्रत्यक्षात्क्रियासंबन्धात्करणत्वं गम्यमानं न शक्यमुत्स्रष्टुं कारकविभक्तिर्बलीयस्त्वा,देवं च श्रुतिवृत्तः सूक्तवाक एव कार्येण संभंत्स्यते ऽन्यथा तल्लक्षितः कालः संबध्येत । तथा चाङ्गत्वे सति साधर्म्याद्याज्याशब्द उपपत्स्यते । सूक्तवाक एव याज्येति । किं पुनरस्य पारमार्थिकमेव याज्यात्वमुतोपचारमात्रम् । कस्मात्र विशेषः । सति याज्यात्वे तद्धर्मैर्भवितव्यम् । आसीनो यजत्यनवानं यजति । याज्याया अधि वषट्करोति । पुरोनुवाक्यां च प्रथमं प्रयुङ्क्त इत्यादिभिः । अथ स्तुतिमात्रं ततो नैषां कश्चिदादर्तव्य इति । किं प्राप्तं भवितव्यं धर्मैः ययेज्यते सा याज्या सूक्तवाकेन चेज्यते तस्मादस्ति याज्यात्वम् । तत्रैतत्स्यादस्त्रीलिङ्गत्वादनुचि

स्त्रीप्रत्ययो न प्राप्नोति । नैष दोषः । समिदादियाज्यास्वन्‌-
त्स्वपि याज्यात्वप्रसिद्धेः । अथोच्येताध्वर्य्यवेषु दर्विहोमसाधनेषु
सत्यपि यागकरणत्वे याज्यात्वं न दृष्टमतो नैतदैकान्तिकं का-
रणमिति । यत्रैव याज्याशब्दः प्रयुक्तः सैव केवला याज्या
तेन तर्हि सूक्तवाक एव याज्येत्यत्रापि प्रयोगाद्भवितव्यं ध-
र्मैः,न्न चास्यौपचारिकत्वं मुख्यकारणसन्निधेः प्रत्यक्षत्वात् । अ-
पि च सामान्यशब्दोयं याज्येति स न शक्यो लक्षणम-
न्तरेण प्रयोगतो विविक्तविषयो ऽवधारयितुम् । तत्रैतल्लक्षणं
स्यात् । हौत्रेण येनेज्यते तदस्तु याज्येति । तथा सति सू-
क्तवाकेपि प्रसङ्गः । तस्मान्मुख्यमेवास्य याज्यात्वमित्येवं प्राप्ते
ब्रूमः ॥

येन मन्त्रेण यागाङ्गं होता यजति देवताम् ।
प्रसिद्धिस्तस्य याज्यात्वं सूक्तवाको हि नेदृशः (१) ॥

प्रकृतौ हि सर्वमेव तादर्थ्योत्पत्त्या वस्तु निरूप्यते । याज्या-
त्वं च त्यज्यमानहविर्द्देवतोद्देशार्थविहितमन्त्रत्वेनावधारितम् ।
न च सूक्तवाकस्त्यज्यमानप्रस्तरदेवतोद्देशार्थमुत्पन्नः । इष्ट-
देवताभिधानस्वरूपत्वा,ल्लिङ्गं श्रुत्या बाध्यतइति चेत् न । श्रु-
तेर्लिङ्गविनियोगाभ्यनुज्ञामन्तरेणाग्निसेकादिवदसामर्थ्यात्तथा
चोत्तरसूत्रे वक्ष्यामः । तेन स्वतस्तावन्न याज्यात्वम् । न चान्या
का चिदेवंविषया याज्यास्ति यस्याः कार्य्ये वर्त्तमानो याज्या-
धर्मांल्लभेत । प्राक्च यस्य यागत्वमवधारितं तस्य साधनं
पश्चाच्चोद्यमानं याज्येत्यवगम्यते । न त्वत्र प्राक्सूक्तवाकसं-
बन्धात्केन चिद्यागत्वमवधारितम् । तदितरेतराश्रयं प्राप्नो-

(१) न चेदृशइति २ । ३ पु० पाठः ।

ति । याज्यायोगाद्यागो यागसंबन्धाद्याज्येति । अथैवं परि-ह्रियेत विनैव तावद्याज्याव्यपदेशेन सूक्तवाकमात्रतया गृ-ह्यमाणो यागे विनियुज्येत ततो याज्यातस्तदभिधेयदेवतासं-बन्धलभ्ययागत्वप्रधानप्रहरणसंबन्धाद्याज्यात्वं लभ्यतइति । त-दुच्यते ॥

येनोत्पत्तौ न याज्यात्वं विनियोगे च लभ्यते ।
तस्य पश्चात्कथं नाम तल्लाभोऽध्यवसीयते ॥

यो हि यूपादिशब्दो न क्कचित्प्रसिद्धिः स एवं प्रसिद्धं लभ-ते । अयं पुनर्याज्याशब्द उत्पत्तिवेलायामेव विनियोगवेलायां वार्थं लभमानो नोत्तरकालभावमपेक्षते । येपि च याज्याधर्मा-स्तेपि प्रथमसिद्धेषु यागेषु लब्धात्मानो नेदं क्लेशेन लभ्यमानं याज्यात्वं प्रतीक्षन्ते । यदि तु विकृतिर्भवेत्ततः परिधिखल्लेवा-ल्योरिव यूपत्वं कार्येण याज्यात्वमध्यवसीयेत । प्रकृतिस्त्वियं ना-त्र कार्यपूर्वकं धर्मनिरूपणमतोपि न याज्याधर्माः । तथा च सूक्तवाक एव याज्येत्येवकार उपचारं द्योतयत्ययाज्यायां हि याज्योपचारे सत्येवमुपपद्यते न मुख्यएव याज्यात्वे । मुख्यायां त्वाकृतौ नैवकारः प्रयुक्तः तदाकृतिः पारमार्थिकी ॥

न च प्रहरणं यागमात्ररूपेऽवतिष्ठते ।
होम एव त्वयं स्पष्टः प्रक्षेपाधिक्यचोदनात् ॥
आघारादि यथा द्रव्यक्षारणाद्धोमतां गतम् ।
तथा प्रक्षेपरूपत्वाद्धरणस्यापि होमता ॥
होमाङ्गस्य च याज्यात्वं न कस्य चिदपीष्यते ।
निगदत्वाद्विशेषेण सूक्तवाके निषिध्यते ॥
नितरां गद्यमानत्वान्निगदो ह्येष गद्यते ।

निगदानां च याज्यात्वमाश्रित्य प्रतिषिध्यते ॥
अयाज्या एव निगदा ऋचैव यजतीति हि ।
निषिद्धमपि याज्यात्वं प्रशंसार्थमिहोदितम् ॥

तस्मादन्यात्तु सूक्तवाको याज्यात्वेन स्तूयते । न चोभयोः स्तुतिरत्यन्तं निरालम्बनत्वप्रसङ्गात् ॥

## स देवतार्थस्तत्संयोगात् ॥ १३ ॥

यत्त्विष्टदेवतासंकीर्तनेन सूक्तवाकस्य कृतार्थत्वान्न भूयो विनियोगः संभवतीति तत्राभिधीयते ॥

भेदेन श्रुतिलिङ्गाभ्यां सूक्तवाकाङ्गता यदि ।
स्याद्विरोधस्ततः किं तु तुल्यार्थत्वेन नास्त्यसौ ॥

यत्त्वस्य स्वसामर्थ्येन देवताप्रकाशनसाधनत्वं प्रस्तरप्रहरणेऽपि विनियुज्यमानस्य तन्नैवापगच्छति । तत्रापि प्रकारान्तरेणानुपयुज्यमानत्वादिह हि यदिष्टदेवताभिधानसामर्थ्यं तत्सूक्तवाकेनेत्यनया श्रुत्या सत्त्वाविरोधं प्रार्थ्यते । श्रुतिरपि च प्रस्तरप्रहरणानभिधायिनं सन्तमसति सामर्थ्ये विनियोक्तुमशक्नुवन्ती सामर्थ्यान्तरं चानुत्पादयन्ती यदयमभिधातुं समर्थः कथं नाम तदेवाभिदधन्मदर्थं कुर्यादित्येवमपेक्षते । सर्वत्र क्रियां तत्साधनं वाभिदधन्मन्त्रोऽङ्गभावं गच्छति । तत्रापि प्रथमं तावदियं गतिः यत्प्रसिद्धं शेषिणि रूपं तन्मन्त्रेणाभिधातव्यमिति । यदा त्वसामर्थ्यात्तादर्थ्यं न प्रतिपद्यते तदार्थाद्विपर्ययो भवति । यदयमभिधत्ते तन्नूनमस्यां क्रियायामस्तीति । न ह्यन्यथा तस्य श्रुतमङ्गत्वमुपपद्यते । तस्मात्सूक्तवाकेनेत्यनया श्रुत्यैतत्प्रतिपाद्यते । यत्त्वमभिधत्से

तदेवाभिदधानः प्रस्तरप्रहरणं साधयेति । मन्त्रोपि चेत्थ-
मेव ब्रवीति । इष्टदेवताभिधानं कुर्वन्नहं यत्करोमि तत्सर्वं
करोमीति । तच्च यदीष्टा देवताः पूर्वयागसंबन्धिन्य एव
केवला भवन्ति ततो न किंचित्प्रहरणस्य कृतं स्या,दथ तु
ता एवास्याप्यङ्गभूतास्ततस्तत्प्रकाशनद्वारेण सूक्तवाकेन प्रस्त-
रः प्रहृतो भवति । न च तासां देवतात्वादन्येन प्रका-
रेणोपयोगो विज्ञायतेऽत्यत्रापि देवतात्वमतस्य प्रस्तरद्रव्यस्य
हविष्ट्वसंकीर्तनादग्न्यादीनां च देवतात्वाद्यागोयं विज्ञा-
यमानो हरणे तु जुहोतिरिति प्रक्षेपाधिकत्वाद्धोम इत्य-
वधार्यते । तस्मादविरोधः श्रुतिलिङ्गयोः । एवं च सू-
त्रमिहापि स देवतार्थ एव । कुतः । ताभिरस्यापि हरतेः
संयोगा(१)त्कालार्थतापि च प्रसङ्गाद्भविष्यत्येव मन्त्रपाठक्रमेण
सूक्तवाकस्य ज्ञानकालत्वाद्यच्चाग्निरिदं हविरजुषतेत्येवमा-
द्येव श्रूयेतेति । प्रागपि सूक्तवाकेनेति श्रुतेरस्यैवैकदेशस्य
प्रहरणं प्रति सामर्थ्यमिति दर्शयति । यद्यपि च साधारणं
मन्त्रस्य सामर्थ्यं तथापि श्रुत्यनुग्रहार्थं प्रस्तर एव यदनेन
हविषेति निर्दिष्टव्यः । अथ वाऽऽदित एवारभ्येदंशब्देन प्रस्त-
रनिर्देशः पुरोडाशादीनामप्रत्यक्षत्वात् । अजुषतेत्यनर्थक-
मिति चेत् न । पूर्वसेवितप्रसिद्धिद्वारेण स्तुत्यर्थत्वादत उप
पन्नगाङ्गत्वम् ॥

## प्रतिपत्तिरिति चेत् ॥ १४ ॥

अनुभाषणं परिचोदना वा ॥

(१) संयोगादितीति २ । ३ पु० पाठः ।

कथमप्रधानकर्मणः सूक्तवाको ऽग्न्यादयो वाङ्गमित्यत उत्तरसूत्रं पठति ॥

## स्विष्टकृद्वदुभयसंस्कारः स्यात् ॥१५॥

स्विष्टकृद्वदुभयसंस्कारः स्यात्। आचार्यशैल्या द्वे सूत्रे मन्यामहे । यथैव स्विष्टकृत्प्रतिपत्तिर्यागश्च तथायमपि भविष्यति । यथा च तत्र मन्त्राणामङ्गत्वं तथेह । न हि प्रतिपत्तित्वेन यागत्वं विरुध्यते। द्रव्यदेवतासंबन्धेन हि यागो भवति । तस्य च स्वरूपावधारणोत्तरकालप्रतिपत्त्यर्थकर्मत्वादिविचारे सत्युत्पत्तौ येन संयुक्तमित्यनेन लक्षणेन प्रतिपत्तित्वम्। न च तावता कश्चिद्दोषः। तेन यागप्रतिपत्त्यात्मकत्वमुभयसंस्कारशब्देनोच्यते। अथ वा यथा स्विष्टकृद् द्रव्यसंस्कारार्थः स्विष्टकृतो ऽग्नेः कृतार्थत्वेन शेषत्वात् । अथ च यागत्वं न जहाति एवमुभयोः कृतार्थयोः संस्कारः परस्परनियमाच्चादृष्टं साधयन्यागो भविष्यत्यथ वा स्विष्टकृत्यप्ययाडग्निरग्नेः प्रिया धामानीत्येवमादिभिरिष्टदेवताप्रकाशनमस्तीत्युभयसंस्कारत्वेनैव दृष्टान्तः। न च प्रतिपत्तेर्मन्त्रोऽङ्गं न भवति निष्प्रयोजनस्य त्वङ्गं नेष्यते । प्रतिपत्तिस्तु दृष्टार्थत्वेन सुतरां प्रयोजनवती नियमादृष्टसिद्ध्यर्थं चापेक्षते वैदिकानि साधनानीत्यविरुद्धं सूक्तवाकग्रहणम् ॥

## कृत्स्नोपदेशादुभयत्र सर्ववचनम् ॥ १६ ॥

अधिकारमुपजीवन्विचारयति। किमुभयोर्दर्शपूर्णमासयोः सकलः सूक्तवाकः प्रयोक्तव्यः उतेष्टदेवतानुरोधेन निष्कर्ष इति। किं प्राप्तम्। एकैकत्र सकल इति। कुतः॥

मन्त्रो यथा समाम्नातः सूक्तवाकोऽभिधीयते।
तस्य निष्कृष्यमाणस्य नैव स्यात्सूक्तवाकता॥
ततश्चासूक्तवाकेनैव प्रहृतः स्यात्।

## यथार्थं वा शेषभूतसंस्कारात्॥१७॥

एवमादीनामपकर्ष इत्युक्तं स्तुतशस्त्राधिकरणे पूषाद्यनुमन्त्रणेषु चोक्तम्। यद्येतानि केवलप्रहरणाङ्गभूतानि देवतान्तराणि भवेयुस्तत उभयत्र सकलः प्रयुज्येत। तएव त्विन्द्राग्न्यादयः प्रत्यभिज्ञायन्तइति न भेदहेतुरस्त्यतश्चेष्टदेवताप्रकाशनोपजीवित्वादप्रयोजकं प्रहरणं सूक्तवाकस्य प्रधानप्रयुक्तदेवताश्रयत्वात्तु तदधीनं विज्ञायते। तानि च प्रधानानि यथादेवतं प्रयुज्यन्ते नाविशेषेण। तस्मादपकर्ष इति॥

## वचनादिति चेत्॥१८॥

सूक्तवाकशब्दः कथमिति चेदत आह।

## प्रकरणाविभागादुभे प्रति कृत्स्नशब्दः॥१९॥

द्वौ हि प्रस्तरप्रहरणप्रयोगौ भिन्नकालपौर्णमास्यमावास्याधीनत्वात्। अतश्चोभे प्रति कृत्स्नः सूक्तवाकशब्दः तयोरुभयोरपि सकलसूक्तवाकः साधनं प्रकरणस्याविभक्तत्वाद्विज्ञायते।

यदा तु भेदेन प्रकरणमात्रमालोच्यते तदा प्राणीयोदयनीयैकादशिनीवच्चातुर्विधधनवच्चावयवशः संबन्धो भवति । तस्माच्छ्रुतिलिङ्गप्रकरणानामविरोध इति सूत्रम् । तदिदानीं भाष्यकारो दूषयति । नैतदेवम् । न हि सापेक्षाणामितिकर्तव्यतया संबन्ध इति । कुतः ॥

विधिर्यदि प्रधानानामितिकर्तव्यतां प्रति ।
उभे प्रति ततः कृत्स्नः सूक्तवाको भवेदयम् ॥

प्रधानानि हि फलं प्रति विधीयन्ते नेतिकर्तव्यतायामतस्तेषां फले विवक्षितं साहित्यं नेतिकर्तव्यतायामितिकर्तव्यतां हि प्रति ता उद्दिश्यमानानि भवन्त्यविधीयमानायास्तस्या गुणत्वाभावप्रसङ्गात् । सा चेद्विधीयते द्वयोरन्योन्यं प्रति विधानासंभवादसंबन्धादवश्यं प्रधानोद्देशेन भवितव्यम् । ततश्चोद्दिश्यमानानां द्वन्द्वावगमितमितरेतरसाहित्यं न विवक्ष्यते । तेन प्रत्येकमितिकर्तव्यतावाक्यसमाप्तिरेकैकं प्रधानं समस्तेतिकर्तव्यतायुक्तमवगतं तथैवानुष्ठानेपि प्राप्ते सकृत्कृतानामिवैककालवर्तिनां प्रत्येकं कात्स्न्र्यमस्तीति तन्त्रेणानुष्ठानं भविष्यति । तदिहापि प्रत्याग्नेयादि प्रधानं मा नाम सूक्तवाक आवर्तिष्ट प्रयाजादिवत्तु पौर्णमास्यमावास्यायां(१) च सकलेन भवितव्यम् । इतरथा वा प्रयाजादयोपि विभज्यैव प्रयुज्येरन्न चेदं प्रमाणवदतः श्रुतिबलीयस्त्वाल्लिङ्गं बाधित्वा गौणत्वमदृष्टार्थत्वं तद्विषयं वा प्रकरणस्य देवतान्तरमध्यवस्यामः । कथं पुनः समुदाये फलसाधनत्वेन चोद्यमाने साधनत्वरहितानामवयवानामितिकर्तव्यतासंबन्ध-

(१) पौर्णमास्यमावास्ययोरिति २ । ३ पु० पाठः ।

इति । उच्यते ॥

यागस्य फलसंबन्धात्प्रत्येकसमवायिनः ।

समुदायः फलार्थः स्यादिति केनावगम्यते ॥

यागत्वं हि प्रत्येकं समवेतं तद्वाचिना च धातुना एकैकस्येतरानपेक्षस्य साधनशक्तिरवधार्यते । ननु समुदायवाचिनामविशेषितत्वाद्धातुरपि समुदायलक्षणार्थ एव भवेत् । न नाम्न एव च धात्वधीनत्वेन प्रत्येकवृत्तित्वात्तदुक्तं पौर्णमास्यधिकरणे । तेन सत्यपि नाम्नेतरेतरयुक्तत्वमात्रमेव धर्मोऽयधिको न समुदायः फलवान् । नन्वेवमपि यथैव साधनत्वमितरेतरयुक्तानामेवं तदनुग्रहार्थत्वादितिकर्तव्यतापि तथैव स्यात् । न तस्यैव साहित्यस्योद्दिश्यमानत्वेनेतिकर्तव्यतां प्रत्यविवक्षितत्वादेकमपि हि वस्तु लक्षणतः क्वचिदेव विवक्ष्यते न सर्वत्र । कथमेकस्य युगपदुद्दिश्यमानोपादीयमानत्वमिति चेदपेक्षाहेतुभेदादीदृशान्यपि भवन्तीत्युक्तम् । ननु वैरूप्याद्वाक्यभेदः स्यात्को वा प्रधानोद्देशेनेतिकर्तव्यतां विदधतः प्रकरणाम्नानानुमितस्य श्रुताद्वाक्यान्तरत्वं नेच्छति । ननु चायमितरेतरयोगः फलार्थमपि विवक्ष्यमाण इतिकर्तव्यतासंबन्धवेलायां (१)बलात्प्रसज्यमानो न शक्यते वारयितुम् । सत्यं प्रतीतितो न शक्यते विधितस्तु शक्यते । कथमिह हि विशिष्टभावनाविध्युत्तरकालमवान्तरविधिषु कल्प्यमानेषु कर्मणः फलसाधनांशे पुरुषः प्रवर्त्यमानः कर्मसाहित्येपि पश्येकत्ववत्प्रवर्तितः प्रधानेतिकर्तव्यतासंबन्धांशे प्रधानानि प्रत्यप्रवर्त्यमानत्वात्तदीयसाहित्येपि प्रवर्तितोऽङ्गानि तु सहितानि प्रति नियुक्त-

(१) वेलायामपीति २ । ३ पु० पाठः ।

त्तस्मादितिकर्तव्यतां प्रति ग्रहैकत्ववत्प्रधानसाहित्यमविवक्षितम्। न ह्येकेनैव प्रधानशब्देन प्रधानान्यङ्गार्थमुद्दिशता तत्साहित्यमुपादातुं शक्यं वचनव्यक्तिभेदात्तस्मात्प्रत्येकमितिकर्तव्यता। तद्दर्शयति। सन्निधानाविशेषात्साधनत्वेन च सर्वेषां निर्देशादेकस्यापि चेतिकर्तव्यतान्तरानुपदेशादस्य च कथंभावरूपस्य प्रकरणसामर्थ्यस्याविशेषादेकैकस्य कृत्स्नमन्योन्यनिरपेक्षस्य प्रकरणमिति। ततश्च वचनादिति चेदित्ययमेव पक्षो ऽवशिष्यते। एवं च भङ्क्त्वा सूत्रमचोच्यते। नैतदेवमिति स्वयमुत्तरपक्षमभिधत्ते। न तावद्गौणत्वमदृष्टार्थत्वं देवतान्तरं वा युक्तं पुरस्तान्निराकरणादतो यथार्थनिष्कर्षे सति सूक्तवाकशब्द उपपद्यते सूक्तवाकवक्तृत्वात्, न हि भिन्नकर्मगतभिन्नदेवताप्रकाशनसमर्थानामन्योन्यनिरपेक्षनानाप्रयोजनयुक्तानामग्निरिदं हविरजुषतेत्येवमादीनामेकवाक्यतालक्षणमस्ति। तस्मात्पुरस्तात्परस्ताच्चानुषङ्गयुक्ता बहव एते सूक्तवाका ईदृशा द्रष्टव्याः। इदं द्यावापृथिवी इत्यारभ्याग्निरिदं हविरजुषतावीवृधत महो ज्यायो ऽकतास्मिन्यज्ञे ऽध्योचायां देवंगमायामिति यावत्समाप्तिस्ततः पुनरिदं द्यावापृथिवी इत्यारभ्य सोम इदमित्युक्त्वा ऽस्मिन्यज्ञे ऽध्योचायामिति समाप्यते तेन प्रतिदैवतं भिन्नानां सूक्तवाकानां समानप्रयोगभाजामाम्नानवचनतन्त्रेण कतिपयानां पाठो येन केन चित्तु प्रहृते सूक्तवाकेन प्रहृतं भवति जातिवदेकं सूक्तवाकत्वस्य सुभाषितयोगात्मकस्य समाप्तत्वात्तत्रोपपन्ने सूक्तवाकशब्दे यदन्यदेवतावाचीन्यन्यत्र न प्रयुज्यन्ते न तत्र श्रुतिः पीड्यते किं तर्हि लिङ्गवाक्याभ्यां प्रकरणं, तच्च न्याय्यमेवेति निष्कृष्य प्रयोगः। इदमपि तु

न युक्तमभिहितं तन्त्रपदे वैश्वानरवाक्यवदेकवाक्यतायाः प्रत्य-
स्तत्वा,न्न हि प्रतिपदं परस्पराकाङ्क्षा संबन्धो वा भवति। किं
तर्हि केन चिदेकेन संबध्यमानानि सर्वाण्येकवाक्यतां गच्छ-
न्ति। तद्यथा अरुणया पिङ्गाक्ष्यैकहायन्येति परस्परेणासंब-
द्धानामपि क्रीणातिनाभिसंबन्धादेकवाक्यत्व,मेवमिहापि य-
दनेन हविषा ऽऽशास्ते इत्यादिभिः संबन्धा(१)देकवाक्यत्वं भ-
विष्यति। अस्ति चेष्टदेवताप्रकाशनं नामैकं प्रयोजनं तन्त्रपद-
वशेन साकाङ्क्षावयवत्वम्। तस्माद्यद्यपि तावदर्थतः प्रत्येकं वा-
क्यपरिसमाप्तिस्तथापि शब्दतः सिद्धमेवैकवाक्यत्वम् । किमुत
हरतिं प्रत्युपादीयमानत्वेन समुदाये वाक्यपरिसमाप्त्यङ्गीक-
रणात्। यदि च भिन्नानि वाक्यानि भवेयुः तत उपसद्वृक्षिणा-
दिमन्त्रवत्प्रयोगकाले देवतापदप्राधान्याङ्गिदेनैव प्रयोगः प्रा-
प्नोति। प्रस्तरप्रहरणे च विवक्षितैकसंख्यत्वात्तावता कृतार्थ-
त्वादेकदेवत्यस्यायं कस्य चित्प्रयोगः प्राप्नोति । तस्मात्समस्त-
मेकं वाक्यमतश्च वक्तव्यः कृत्स्नवचनस्य परिहारः । स उ-
च्यते ॥

बिन्दौ च समुदाये च तोयशब्दो यथेष्यते ।
संसर्गिद्रव्यरूपत्वात्सूक्तवाकपदं तथा ॥

सूक्तवाको हि सामर्थ्यतः प्रयोजनतश्चेदृगवधार्यते। प्रयो-
गमध्यवर्तिदेवतापदसहितमभितः श्रूयमाणतन्त्रपदोपेतमिष्ट-
देवताप्रकाशनं कुर्वद्वाक्यं सूक्तवाक,स्ततश्चैकस्मिन्देवतापदे स-
त्यनेकस्मिंश्च प्राकृते वैकृते च तन्त्रपदमध्यस्थे सकलः सूक्तवा-
कः। प्रयोगासंबद्धदेवतापदसाहित्ये तु दुरुक्तवाको भवति ।

(१) सर्वेषामित्यधिकं २ । ३ पु० पाठः ।

काम्यं याज्याकाण्डमित्येतावतैव सर्वं सिद्धमिति मन्यते । त-
च्चाभिधीयते । सत्यमैन्द्राग्नादिषु लिङ्गक्रममात्रेणापि सिध्येद्याचा
याज्यानुवाक्यात्वा(१)दन्यत्राविनियोगा,द्यानि त्वाग्नेयादीनि
कर्माण्यग्नये व्रतपतय इत्येवमादिचोदितानि तत्र स्यानदयम्नृ-
चामग्निप्रकाशने सामिधेनीत्वं याज्यानुवाक्यात्वं च । साप्रद-
श्याम्नानाच्चास्ति सामिधेनीनां द्वे ऋचौ प्रत्यपेक्षा । तत्र यदि
याज्यासमाख्या विनियोजिका नाश्रीयेत ततः सामिधेनीष्वपि
लिङ्गक्रमावुपपद्येते इति । प्रथमातिक्रमे कारणाभावात्तत्रैव
विनियोगः प्राप्नोति । समाख्यया तु तन्निवर्त्तितं भवति । तेन तर्हि
तन्मात्रमेवास्तु नार्थो लिङ्गक्रमाभ्यामिति । तदुच्यते । यद्यत्रेष्टि-
परिमिता एवात्यन्तं तद्दैवत्या आम्नायेरन् तत एतदेवं स्यात्,इ-
ह त्वन्यदैवत्यस्य स्वानुरूपयाज्यानुवाक्यापूरितस्य कर्मणः क्र-
मे या आग्नेय्य ऋचः पठ्यन्ते ताः समाख्यया केवलया विनि-
युज्यमाना याज्याकार्ये विनियुज्येरन् । न चास्ति संभवः वि-
लिङ्गत्वादन्याभ्यां तल्लिङ्गाभ्यां बाधितत्वात् । तेनाविनियोग-
एव स्याल्लिङ्गक्रमाश्रयणे पुनः समाख्यायां निवृत्तव्यापारायां
ताभ्यां विनियोगे सति सामिधेनीषु प्रयोगः सिद्धो भवति । तं
विषयं दर्शयति । आग्निवारुण्या इष्टेर्याज्यापुरोनुवाक्ये पठित्वा
सौमारौद्रीणामिष्टीनां याज्यापुरोनुवाक्यास्वनागतासु मनोऋ-
चः पठ्यन्ते । ताः सामिधेनीषु धाय्या भवन्तीति । तथा पृथुपा-
जवत्यावपि द्रष्टव्ये । तत्रापि पूर्वस्याः सामिधेनीक्रममतिक्रम्य
याज्यापुरोनुवाक्योत्तरकालपाठादुत्तरेष्टिविषयत्वं विज्ञायते ।
यदि च क्रमो नाश्रीयेत ततो लिङ्गसमाख्यामात्रेण प्रथममे-

(१) अनुवाक्यात्वमिति २ पु० पाठः ।

न्द्राग्नयुगलं द्वितीयस्यामैन्द्राग्न्यां विनियुज्येत द्वितीयं च प्रथमायां, क्रमे तु सति समाख्यातः पूर्वतरं तेन क्रतुसंबन्धकरणात्तत्संनिरुद्धमेव लिङ्गं श्रुतिं कल्पयतीति अक्रमविनियोगः परिहृतो भवति । तस्मात्सम्यक् सूचितमिति ॥

## अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात् ॥ २१ ॥

ज्योतिष्टोमे प्रथममाग्नेय्यैन्द्र्यादयः स्तोत्रशस्त्रादिसाधनत्वेनाग्न आयाहि वीतयइत्येवमादयो विशेषरूपेणाम्नाता विहिताश्च पुनश्च सामान्येनाग्नेय्याग्नीध्रमुपतिष्ठतइत्यादिषूपदिश्यन्ते । तत्र संदेहः किं तद्व्यतिरिक्ता ग्रहीतव्या उत ता वा अन्या वा ऽथ वा ता एवेति ग्रन्थास्त्रयः पक्षाः प्रतिभान्ति । न त्विहाप्रकृता एवेत्यस्य पक्षस्य प्रमाणमस्ति । महता हि प्रबन्धेनाविशेषग्रहणं प्रतिपाद्यते न केवलाप्रकृतनिश्चयो येन हि प्रमाणेनाग्नेयीशब्दाविशेषेणाप्रकृता गृह्येरंस्तेनैव प्रकृता अपि । न च किं चित्कारणमस्ति येन प्रकृताः परित्यज्येर,-न्न च भाष्यकारेण त्रयः पक्षाः प्रदर्शिताः किं तर्हि अविशेषपक्ष एवादावपिशब्दरहितेनाप्रकृतशब्देन परिगृहीतः । येनाप्रकृता एवेति भ्रान्तिर्भवति । यत्तु तत्र प्रमाणं तदविशेषपक्षमेव साधयति । तथा च परस्ताद्दिवृतमप्रकृतेपि प्रत्ययो भवति प्रकृतमप्युपाददीरन्निति च । यदि त्ववश्यं तृतीयोपि पक्षः समर्थनीयस्तत एतावती औचित्योपपत्तिः । प्रकृतस्य कार्यान्तरोपयोगेन यातयामत्वादग्रहणम् । अथ वा सामान्यविधानमि-

दन्तानि त्वाग्नेयोविशेषविधानानि, परिहृत्य च विशेषविधि-
विषयं सामान्यशास्त्राणि प्रवर्त्तन्ते । यदि तु तत्रापि विशेषग्र-
हणं न स्यात् ततस्तदप्यनेनैव तुल्यमित्युदाहरणत्वेन गृह्येत ।
तस्मादप्रकृता एव ग्रहीतव्याः । अथ वाग्नेयादिशब्दैरविशेष-
प्रत्ययो जातः । न चान्यत् प्रकृतग्रहणक्षमं विशेषणं पश्यामः ।
प्रकरणस्य ग्राहकत्वेनाविशेषकत्वात् । सन्निधिलक्षणलौकि-
कप्रकरणस्य च यौगिकश्रुतिजनिताविशेषप्रत्ययेन बाध्यमान-
त्वात्तस्मात्सर्वप्रत्ययः । उपदिष्टोपदेशो हि न न्याय्य इति । इह
उपदिष्टस्यैवेत्यर्थः । एवंजातीयकस्येति विशेषणरहितस्येत्यर्थः ।
कथंजातीयकस्येति । अस्ति विनापि विशेषणेन विशेषग्रह-
णप्रमाणं प्रकरणमिति सिद्धान्तवादी मन्यते । परः पुनः स्वाभि-
प्रायेणैव सिद्धान्तवाद्यभिमतां विशेषग्रहणोपपत्तिमनभिम-
तामेव परिकल्प्य कथं यदि तल्लिङ्गं तस्योपलक्षणत्वेनेत्याह ।
न चात्रोपरि वक्ष्यमाणदेवतालिङ्गाभिप्रायेण लिङ्गपदं प्रयुक्तम् ।
किं तर्ह्याख्यातप्रत्ययसामर्थ्यं तद्विहितत्वं वा । तदुपन्यासश-
क्तौ तस्मिन्विध्यभावप्रसङ्गोपन्यासात् । नासौ सामान्येन त-
ल्लिङ्गेनेत्यग्निना चिह्नेन सर्वासु प्रतीयमानासु स्फुटेन वि-
शेषणेन विना न शक्यो मन्त्रविशेषः प्रतिपत्तुमित्यभिप्रायः ।
तदिह यदि विशेषणमिष्यते ततो दार्शपौर्णमासिकनिर्वापा-
लम्भन्यायेन कर्तव्यतावचनेन लिङ्गेन विशेष्टव्यम् । तच्चक-
र्माङ्गभूतेभ्यो दाशतयेभ्यो(१) निवृत्तमत एव विशेषणं तथा
दर्शयति । येनानेनैवंलिङ्गेनैतत्करोतीति कर्तव्यम् । येनानेनै-
वं लिङ्गेनाग्निलिङ्गेनेन्द्रलिङ्गेन वा किं चित्करोतीति आख्या-

(१) मताभ्यो दाशतयीभ्य इति २ पु० पाठः । एवमग्रेपि स्त्रीलिङ्गम ।

तप्रत्ययविच्छिन्नत्वेनोपलक्षितेनाग्नीध्रोपस्थानमिति ततो विधा-
यकस्योपलक्षणत्वेनोपक्षीणत्वान्नोपदिष्टो भवति । अथोपदि-
श्येताग्नेय्यादिना करोतीति ततो न विशेषितो भवति । तत-
स्याविशेषिताग्नेयीमात्रग्रहणप्रसङ्गः । तेनोपदिष्टस्यैव तदुप-
लक्षितस्य पुनरुपदेश इत्यप्रमाणकम् । तस्मात्कर्तव्यतावचन-
वर्जितकेवलाग्न्यादिदेवतोपलक्षणसामर्थ्या(१)त्पुनर्दाशतया
अपि गृहीतव्या इति । ननु प्रकरणसामर्थ्यादिति सिद्धान्ताभि-
प्रायेणोक्तम् । लिङ्गं प्रकरणाद्बलीय इति लिङ्गशब्देनात्र देवता-
संबन्धाद्यौगिकी श्रुतिरभिधीयते न सामर्थ्यमात्रम् । उपरिष्टात्
बहुप्रयोगगतोपि लिङ्गशब्द एवमेव यौगिकश्रुतिवचनो व्या-
ख्येयः । आह विरोधे सतीति यदि प्रकृतमनाग्नेयं गृह्णीमः
ततो विरोधो भवेत्प्रकृताग्नेयग्रहणे तु द्वयमप्यनुगृह्यते ।
तथा तद्भूताधिकरणे श्रुतिवाक्ययोरविरुद्धत्वमुक्तम् । नैतदेव-
मिति । दाशतयानामपि विकल्पेन प्राप्तानां न युक्तः प्रकरणा-
नुरोधेन बाधः । तस्मान्नोभयमनुग्रहीतव्यमिति । सामान्यस्य
प्रतिव्यक्ति समाप्तेः प्रकृतायामपि व्यक्तौ समस्तपदार्थसंभवान्न
कश्चिद्विरोध इति मत्वाह । तल्लिङ्गवत्तानेनानुग्रहीतव्येति ।
तस्माल्लिङ्गयुक्तस्य वाक्यस्य सामान्यविषयत्वात्प्रकरणेन तदा-
काङ्क्षितविशेषसमर्पणादसति समवायविरोधे न युक्तो बाधः ।
इतरस्तु व्यक्त्यभिधानाभिप्रायेण दाशतयप्राप्तिनिवर्तनाद्विरोधं
समर्थयते । ननु व्यक्तिरपदार्थ इत्यभिप्रायप्रत्यादेशः । परस्त्वा-
ह । एतदेव न विजानीमस्तल्लिङ्गवत्ता सामान्यभूतात्राङ्गं न
वेति । यदि हि गवादिशब्दवद्व्यक्त्यभिधानासम्भवस्ततः सामा-

(१) सामान्यादिति २. पु० पाठः ।

न्यचोदनायां सत्यामश्रुतव्यक्तिग्रहणानुषङ्गिणी प्रकृतव्यक्तिग्रहणेप्यदोषोऽथ तु देवतोपलक्षिता व्यक्तिरेव शब्दार्थः ततः प्रकृतग्रहणे सति श्रुतिजनितप्रत्ययैकदेशबाधः स्यात्मा चेह व्यक्तिरेव साधनं न सामान्यं नाम किं चित्। किं पुनरिदानीमाकृत्यधिकरणोक्तसामान्यापन्हवं भाष्यकारः करोति । नेति ब्रूमः । तस्माद्भृत्वासंभवमात्रमाहेति के चि,त्तदयुक्तम्। तथा सति व्यक्तीनामश्रुतत्वादपरिग्रहेपि दोषाभावा,दतः प्रकृतापेक्षया सामान्यमपह्नूयतइति वक्तव्यम्। व्यक्तिशब्दो ह्ययं यौगिकत्वात् न जातिशब्दत्वं प्रतिपद्यते। न चात्र जातिः का चित्प्रतीयते नानारूपासु नानाच्छन्दस्कास्वपि च देवतैकत्वमात्रेणाग्नेय्यादिशब्दप्रयोगात् । न ह्यग्नआयाहि वीतयेग्निं होतारं मन्ये दास्वन्तमित्येतयोर्देवताव्यतिरिक्तं किं चित्सामान्यं दृश्यते । देवतासंबन्धमेवैष न व्यभिचरति व्यभिचरति तु ऋग्जातिं द्रव्यकर्मादिष्वपि प्रयोगात् । अतो देवतैवात्र समानेत्याह । संबन्धस्तु समानः सन्नपि नाभिधेयत्वेनार्थसिद्धत्वाद्भाष्यकारेणोपन्यस्तः । तस्या एव च देवतायाः समानत्वाद्व्यक्त्यानन्त्यादिदोषनिवृत्तिः । पूर्वाभिहिते ऽपि च विशेषणे प्रकृतिप्रत्यययोः शक्तिभेदात्प्रत्ययेन विशेष्याभिधानमविरुद्धम् । यत्र तु तावानेव शब्द उभयत्र व्यापारयितव्यस्तत्र विशेष्यानभिधानं यथा गवादौ। न चात्र विशेषणाभिधानमात्रस्याग्निशब्दस्य कदा चिदपि विशेष्येषु प्रयोगो नाप्याग्नेयीशब्दस्याग्नौ यतो विशेष्यं यावन्नीयेत । यदि चेह विशेषणमात्रमभिधीयेत ततस्तस्यैव कार्यक्षमत्वान्नैव विशेष्यं परिगृह्येत । तस्माद्व्यक्तय एवात्राभिधेयाः । तदुक्तं पिङ्गाक्ष्यैकहायनीशब्दयोः ।

ततश्च पक्षे प्रकृतमप्युपाददीरन्। नन्वेतदुक्तमित्याद्यपक्षाभिप्रायेण। ननु त्वयैव यातयामत्वादिदोषात्तस्यानुपादानमुक्तम्। परस्तु मध्यमपक्षं परिगृह्याह। केवलप्रकृतग्रहणे हि प्रत्ययस्य युगपद्विधिलक्षणव्यापाराद्विरोधोऽभिहितः गत्यक्षे तु न नियोगतः स एवात्राग्नीध्राद्युपस्थाने किं तर्हि अविशेषवचनेन स चान्यश्चेत्यविरोधः। नन्वेतद्दृश्यतीति विना कारणेन प्रकरणपीडामसहमानो वदति। परस्तु देवतालिङ्गयुक्तिश्रुतिबलीयस्त्वमेवोत्तरं ददाति। अपि च। न लिङ्गयौगिकश्रुत्यात्मकं प्रकरणं चानुग्रहीतव्यमिति लोकस्यातिसंमुग्धां वाचोयुक्तिं निराकर्तुमुपन्यस्यति। सर्वप्रमाणव्यवहारेष्वेव न प्रमाणमनुग्रहीतुं पुरुषाः प्रमेयेषु प्रवर्तन्ते किं तर्ह्यात्मानम् ततः किमिति चेदत आह। एतदुक्तो भवति। बहुष्वप्येकरूपं प्रमाणं क्वचिदनुगृहीतमिति कृतार्थत्वान्न पुरुषार्थौपयिकान्यपि सन्त्यर्थान्तराणि न गृह्यन्ते। सकृत्प्रयुक्ते वा काम्ये फलभूमार्थिनामपि न भूयः प्रयोगो भवेत्,तस्मात्प्रमाणानुग्रहमनादृत्यात्मानुग्रहार्थं तत्र तत्र प्रवर्तितव्यमित्यविशेषग्रहणसामर्थ्यम्। लिङ्गप्रत्ययविरुद्धत्वादित्यत्रापि लिङ्गशब्दस्तल्लिङ्गेनैव प्रयुक्त इति द्रष्टव्यम्। सूत्रमप्यतदाख्यप्रापणं करोतीति नातदाख्यमात्रनियमार्थमिति व्याख्येयम्। तदाख्येषु त्वसंवाद एवेति न परामृश्यन्ते॥

## तदाख्यो वा प्रकरणोपपत्तिभ्याम्॥ २२॥

अधिकाराख्यो अधिकृतसंज्ञक इति । अथ वा तत्राख्याय-
तइत्येवं तदाख्यस्तदीयत्वेन वा य आख्यातः स ग्रहीतव्य इ-
ति । कुतः ॥

क्रतुकार्यविशेषो ऽयं मन्त्रस्याग्नोपदिश्यते ।
सामान्यप्राप्त्यपेक्षश्च विशेषो नित्यमिष्यते ॥

आग्नेय्याग्नीध्रमिति हि नाग्नीध्रस्वरूपप्रयुक्तमुपस्थानं
नापि स्वतन्त्रं पुरुषार्थं फलाश्रवणा,दतो ऽवश्यमेवमाश्रयितव्यं
ज्योतिष्टोमापूर्वसिद्ध्यर्थमाग्नीध्रोपस्थानं करोतीति । ततश्च
ज्योतिष्टोमकार्यविशेषविधानमेतदिति निश्चीयते। स च विशेषः
(१)सामान्यप्राप्तौ सत्यां शक्यो विधातुं नान्यथा तत्र यदि द्वाव-
पि सामान्यविशेषसंबन्धाविदमेव वाक्यं कुर्यात्ततो वाक्यं भि-
द्येत । ननु चानेन विशेषमात्रमाग्नीध्रसंबन्धः क्रियते(२) प्रक-
रणात् सामान्यसंबन्धः सेत्स्यतीति । सत्यं प्रकरणात्सिध्यति न तु
श्रुतिमकल्पयित्वा, सा च श्रुतिः क्लृप्तायां सत्यां कल्पयितुं न
शक्यते । ननु विशेषे विधीयमाने ऽर्थादेव सामान्यमन्तर्भवि-
ष्यति। ना,र्थस्यापि(३) प्रकरणातुल्यत्वाद्यदि त्वाग्नीध्रसंबन्धे कृते
भोजनादिवत्तृप्तिर्ज्योतिष्टोमसंबन्धो नान्तरीयकत्वेनानुनिष्पा-
दी स्यात्ततः शास्त्रं नापेक्षेत,दयं तु द्रव्यस्वरूपेण संबन्धस्य नि-
ष्फलत्वात् प्रथमतरमाश्रीयते । न च शास्त्रादृते तदुपपद्यतइ-
त्यस्येवाश्रुतकल्पनाक्लेशः । किं च ॥

लौकिके ऽप्युपपन्नत्वात्संबन्धोयं यथाश्रुतः ।

(१) कार्यविशेष इति २ पु० पाठः ।

(२) क्रियतामिति २ पु० पाठः ।

(३) नास्यापीति २ पु० पाठः ।

नैकान्तात्क्रमसंबन्धमुपपादयितुं क्षमः ॥

तेनावश्यं प्रकरणानुमितैव श्रुतिः कल्पयितव्या। सर्वत्र चैवमादावर्थापत्तेः प्रामाण्यम् सा चान्यथानुपपत्त्या भवति। तद्यदीदं विशेषसंबन्धवाक्यं सामान्यसंबन्धश्रुतिमकल्पयन्नोपपद्येत ततः कल्पयेत्। उपपद्यते त्वस्य क्लृप्तसामान्यसंबन्धास्वृत्तु स्वार्थमात्रविधानं तावता च सिद्धार्थत्वान्न गुर्वी कल्पनामवलम्बते। तद्दर्शयति। न ज्योतिष्टोमं प्रति मन्त्रस्य व्यापारविधानमुपपद्यते अन्यत एव प्राप्तत्वा,द्यथा वसन्तादिश्रुतिभिः प्राप्तेर्न कामश्रुतय आधानक्षेपसमर्था इत्याद्वितागन्तोनेवाधिकुर्वन्ति तथैताः प्राप्तज्योतिष्टोमसंबन्धाधिकारिण्य इत्यभिप्रायः। इतरथा यदि तावदप्रकृता एव गृह्यन्ते ततो गत्यन्तरसंभवे सति वेदेनानभ्युपगतः सन्ततिभारो निष्प्रमाणक आपद्येत। अथाविशेषग्रहणं तथाप्येकत्र प्राप्तसामान्या(१)नुवादेन विशेषमात्रकरणादपरत्र च सामान्यविशेषप्रापणाद्वैरूप्यनिमित्तोपि वाक्यभेदः स्यात्। प्रकृतग्रहणे न कश्चिद्दोषः। एवं च प्रत्यासत्तेः प्रत्ययविप्रकर्षो न भविष्यति। ननु च प्रकरणेपि यथाभिलषितः सामान्यसंबन्धो नैव कस्य चिदस्ति। यद्यपि स्यात्तथापि कार्यान्तरे विनियुक्त इत्यादि विरुध्येत। उच्यते। नैष दोषः। कार्यान्तरविनियुक्तानामेव ग्रहणात्। नन्वेवं सति सामान्यसंबन्धप्राप्तिवाचोयुक्तिर्न घटते। कथं न घटते यदा सर्वविशेषेषु सामान्यमन्तर्गतम्। तेन यत्तत्र विशेषरूपं तद्विशेषान्तरे ऽनुपयुज्यमानत्वादविवक्षितं कृत्वा तद्द्वारसिद्धसामान्याश्रयणमविरुद्धम्। यस्तु भाष्यकारेण वाक्यभेदो दर्शितः स सर्वविशिष्टविधानेषु

(१) सामान्यसंबन्धेति २ पु० पाठः ।

तुल्यो यागं कुर्यात्तं च सोमेनेत्यपि शक्यं दर्शयितुम् । अपूर्वकर्मविधानाच्च नायमन्येभ्यो विशिष्टविधानेभ्यो न्यूनतरो विज्ञायते । सिद्धान्तेपि चान्यलिङ्गानाश्रयणात्तच्चैवं लिङ्गेनेत्येतदस्त्येव । न ह्यविधीयमानः प्रकृतोप्येवंलिङ्गमुपस्थानाङ्गम् । तस्मादन्यथा कथं चित्पूर्वोक्त एवात्र वाक्यभेदो योजयितव्यः । तत्रोपस्थानं च कुर्यादित्येतज्ज्योतिष्टोमकार्यविशेषप्रदर्शनं तच्चैवंलिङ्गेनेति प्रकरणनिरपेक्षाप्राप्तज्योतिष्टोमसंबन्धदेवतालिङ्गोपलक्षितमन्त्रमात्रप्रदर्शनार्थम् । अथ वाक्यभेदं परिहर्तुं यथा श्रुतानीध्राद्युपस्थानसंबन्धमात्रमित्युच्यते तत्राह ॥

## अनर्थकश्चोपदेशः स्यादसंबन्धात्फलवतेति ॥ २३ ॥

ननु प्रकरणाज्ज्योतिष्टोमस्योपकारकः स्यादित्यन्यतः सामान्यसंबन्धसिद्धिं मन्यते । न त्वसावप्यविधीयमानः संभवतीति दर्शयति । यद्युपस्थानज्योतिष्टोमसंबन्धो विवक्ष्येत ततस्तेनैकवाक्यतामियात् । यदा तु खलु तमविधायोपस्थानमनूद्य विशिष्टविधानेन वा मन्त्रसंबन्धो विधीयेत तदा लैङ्गिके निष्फले शुद्ध एवोपस्थाने मन्त्रः प्राप्नोति अननुमितश्रुतिप्रकरणं बाधित्वा, न हि तदा प्रकरणाद्विशेषप्रत्ययो, लिङ्गात्मके तु प्रथममेव ज्योतिष्टोमेन स्वीकृतत्वान्नान्यत्र प्राप्तिरित्यर्थवत्ता लाघवं च । अथ वाऽऽग्नीध्रादीनां कर्माङ्गभूतानां मन्त्राणां च करणानां संबन्धे विधीयमाने उपस्थानमप्यनूद्यतइति लघुतरम् ॥

## सर्वेषां चोपदिष्टत्वात् ॥ २४ ॥

यत्तु यातयामत्वात्सामान्यविशेषबाधाद्वा न प्रकृतग्रहणमिति । तन्न । वचनाद्यातयामविधानाद्गुणभूतमन्त्रावृत्त्या च समुच्चये सति विरोधाभावादुभयमप्यदोषं तस्मा(१)द्येनैवं लिङ्गेनैवं कुर्यादित्येषापि वचनव्यक्तिर्नाश्रीयते । सर्वेषां क्व चिदुपदिष्टत्वेनाविशेषणत्वात् । यत्तु प्रत्ययेन विशेष्टव्यमिति । तदन्यथैव विशेषसिद्धेरसंबद्धाध्यारोपणमात्रमेव शोभते । तथा हि ॥

यद्यप्यहमृचां कुर्यां प्रत्ययेन विशेषणम् ।
तथापि नैव मुच्येयं सर्वासां ग्रहणादिह ॥
सर्वा ह्यध्ययनस्थेन ब्रह्मयज्ञाश्रितेन च ।
वाचस्तोमाश्विनावस्थागतेन विहिता हि ताः ॥
अतो नैवेदमाशक्यमाख्यातेन विशेषणम् ।
सर्वप्रत्यय एव स्यात्कृतेपि हि विशेषणे ॥
तस्मादर्थापत्तिप्रतिबन्धमात्रेणैव प्रकृतप्रत्ययसिद्धिः ।

## लिङ्गसमाख्यानाभ्यां भक्षार्थता ऽनुवाकस्य ॥ २५ ॥

समस्तानुवाकोदाहरणं कानि पदानि क्व समर्थानीति वक्ष्यमाणविषयविवेकार्थम् । अत्र सूक्तवाकवदेव प्रातःसवनादिशब्दास्तत्सामानाधिकरण्यसंस्तुताश्च वसुमद्गणादयो गायत्रच्छन्दःप्रभृतय इन्द्रपीतादयश्च क्रमेण यथासवनं निष्कृष्य प्रयोक्तव्याः । इदं तु विचार्यते किं समस्तो ऽनुवाको भक्षणएव विनियोक्तव्यः । उत ग्रहणावेक्षणमध्यजरणेष्वपि यथालिङ्ग-

(१) तयेति २ पु० पाठः ।

मिति। तत्र भक्षस्य चोदितत्वात् भक्षयामिपदस्य च तत्प्रका-शनसामर्थ्याद्द्यन्तपदसंदंशं गृहीतेतरपदानामनन्यगामि-त्वात्। ततश्चावचनं तेषामितरार्थं प्रयुज्यतेतिवद् ग्रहणादीना-मपि चोदितभक्षविशेषणत्वेनैकप्रधानार्थानामेकवाक्यत्वात्तत्रैव विनियोग इत्युक्ते परिचोदना। भक्षेहि मा विशेत्यस्य भक्षणे-ष्वुपपत्तिरेहि वसो इत्यादेस्तु सख्यासमित्येवमन्तस्य ग्रहणार्थ-त्वम्। यद्यपि वधिर्हिंसायामिति पाठात्सुघ्यासमित्यस्य ग्रहणा-र्थता न विस्पष्टा तथापि बाह्नकरणकत्वान्निर्वपतिवद् ग्रहणप्र-तीतिः। अस्ति चानेकार्थत्वं धातूनां ग्रहणकृतैव वा हिंसा वि-वक्ष्येत इत्यदोषः। तथा नृचक्षसम् इत्यादेरवेक्षणार्थत्वं यद्यपि चक्षिङ् व्यक्तायां वाचीति स्मर्यते तथापि प्रयोगेषु प्रकाशन-मात्रार्थता गम्यते। तेन नृषु यः ख्यातः स नृचक्षास्तमचख्ये-षमिति चक्षिङः ख्याङित्यत्र ख्येङित्युपसंख्यायते। तेनावेक्ष-णार्थत्वम्। हिन्व मे गात्राणीति सम्यक्परिणतः शक्नोति गा-त्राणि प्रीणयितुं नाभेश्चाधस्तादगन्तुमिति सम्यग्जरणार्थता। तस्माल्लिङ्गविरोधादयुक्तमेकवाक्यत्वमिति। तदुच्यते। सर्वा-ण्येतानि भक्षणस्य प्रागूर्ध्वं च वर्तमानानि विशेषणं भवन्ति। तेन विशिष्टभक्षप्रकाशनेऽर्थाद्विशेषणाक्षेपादेकार्थत्वाविरोधः। यद्यपि च ग्रहणादीनां स्वप्राधान्यापरित्यागाच्छ्रौतत्वाच्च भेदे-न प्रकाशनं युक्तम् तथापि अचोदितप्रकाशने न किंचित्फ-लमस्तीति चोदितशेषत्वमेव युक्ततरम्। तदुक्तं निर्वापमन्त्रे। तस्माल्लिङ्गमविरुद्धम्। तथा च समाख्याऽनुग्रहीष्यते। तत्र चोदयन्ति सा नाम समाख्या विनियोक्त्री युक्ता या वेदएव पठ्यते। भक्षानुवाकसमाख्या त्वसमाम्नानात्कथं विनियोक्त्र्य-

तइति । तदुच्यते ॥

लौकिकं वैदिकं वापि प्रमाणं दोषवर्जितम् ।

सर्वमाश्रीयते स्वार्थे न चास्मिन्दोषसंभवः ॥

यथैव वेदस्य वक्तृदोषरहितत्वात्प्रामाण्यम् एवं लौकिकस्यापि पदस्यानादित्वाविशेषात् । न चात्रान्धपरंपरान्यायः अभिधानाभिधेययोः सर्वप्रत्यक्षत्वा,न्न ह्यग्निहोत्रस्वर्गादिसाध्यसाधनभाववदनुवाकस्याप्रत्यक्षत्वम् । अतो भक्षानुवाकशब्दवाच्योयमित्येतत्तावत्प्रमाणम् । अतश्च प्रकरणे पठ्यमानमनुवाकमालोच्य समाख्या हृदयमागच्छति । सा च भक्षस्यानुवाक इत्येवं विगृह्यमाणा भक्षसंबन्ध इत्येवं मनसि निधापयति । ततश्चोभयोर्बुद्धावुपश्लवमानयोरपेक्षावशेन तदेव सम्बन्धसामान्यं विशेषसंबन्धो भवति । भक्षोपि हि स्मारकमपेक्षते अनुवाकोपि प्रकाश्य,मस्ति चोभयोरपि योग्यत्वमिति । तथा ऽवस्थितयोः प्रकाश्यप्रकाशकयोः प्रयोगवचनेन विधानं तेनापि भक्षार्थत्वमिति ॥

## तस्य रूपोपदेशाभ्यामपकर्षो ऽर्थस्य चोदितत्वात् ॥ २६ ॥

परिचोदनोक्तेनैव मार्गेणापकर्षः कर्तव्यः श्रुतिप्राधान्यानुग्रहात् । ग्रहणादिवच्च रूपेण सामर्थ्यात्प्रकरणेन लिङ्गेन वाक्यस्य बाधितत्वात् । ननु भक्षणैकवाक्यत्वमपि लिङ्गकृतमेव । सत्यम् । तथापि श्रुतिविप्रकर्षात् दौर्बल्यम् । ग्रहणाद्यभिधानसामर्थ्येन हि श्रुतिमनुमाय शीघ्रं विनियोगः क्रियते इतरेण

पुनरेकवाक्यता । ततो लक्षणाद्वारेण भक्षं प्रति सामर्थ्यं ततः श्रुत्यनुमानमिति विप्रकर्षः । तेन भक्षस्य प्रत्यासन्नतरेण मन्त्रादिना ऽवरुद्धत्वादेतेषामपि च स्वयमन्यथाप्रवृत्तेरपकर्षः । नन्वर्थप्राप्तानां प्रकाशनं निष्प्रयोजनम् । कथं निष्प्रयोजनम् यदा तान्यप्यप्रकाशितानि नैव शक्यन्ते ऽनुष्ठातुम् । तन्नामार्थप्राप्तं न प्रकाश्यते यदेवमेव विना प्रयत्नेन निष्पद्यते । ग्रहणादीनि तु सर्वाणि पृथक्प्रयत्नसाध्यानि तानि अस्मृतानि न शक्यन्ते कर्तुमित्यवश्यं स्मर्तव्यानि । भक्षविधिरपि तान्यचोदयित्वा न शक्नोति स्वार्थमनुष्ठापयितुमिति तान्यपि चोदयति । अतो मन्त्रस्वरूपात्तेषां चोपदेशात्सम्यग्जरणतन्मन्त्रयोस्तोपदेशादेवापकर्षो ऽर्थस्यैव चोदितत्वात्तेन यद्यप्यनुदाहृतत्वात्प्रत्यक्षोपदेशोऽत्र न शक्यो वक्तुं तथाप्यदोषः । सम्यग्जरणं तु वमनविरेचनयोः प्रायश्चित्ताम्नानात्प्रत्यक्षोपदिष्टमेव(१) द्रष्टव्यम् ॥

## गुणाभिधानान्मद्रादिरेकमन्त्रः स्यात्तयोरेकार्थसंयोगात् ॥ २७ ॥

ग्रहणादिवदेकार्थोच्चिष्टप्तिप्रकाशनात् ।
द्व्यप्यत्वन्तः पृथङ्मन्त्र इति प्राप्ते ऽभिधीयते ॥
येषां पृथगनुष्ठानमर्थाच्चिप्तं प्रतीयते ।
तेषां मन्त्रप्रकाश्यत्वं नानुनिष्पादिनां भवेत् ॥

ग्रहणादीन्यकृत्वा भक्षानुष्ठानाशक्तेस्तेषु पृथक्पुरुषस्य शा-

(१) प्रत्यक्षमेवेति २ पु० पाठः ।

स्तस्य च व्यापारो युज्यते । न त्वेवं (१) भक्षणादन्यस्तृप्तौ व्यापार इति नार्थस्तत्प्रकाशनेन। तस्मात्प्रार्थनायां प्राप्तकालतायां वा लोटमन्वाख्यायैकवाक्यतामापाद्य तृप्तिविशिष्टभक्षप्रकाशनार्थः सकल इत्यभ्युपगम्यते ॥

## लिङ्गविशेषनिर्देशात्समानविधानेष्वनैन्द्राणाममन्त्रत्वम् ॥२८॥

इन्द्रपीतस्येति सोमसामानाधिकरण्यादनैन्द्राणां विलिङ्गत्वात् प्रकृतौ चोदनाभावादमन्त्रकं भक्षणमिति ॥

## यथादेवतं वा तत्प्रकृतित्वं हि दर्शयति ॥२९॥

अनैन्द्रेष्वप्यूहेन प्रयोगो विकृतित्वात्समानेपि कर्मणि प्रदानाभेदात्प्रकृतिविकारभावो भविष्यति। ध्रुवसोमचमसा(२)स्त्वैन्द्राः प्रकृतिभूताः। कथमवगम्यते ग्रहणमन्त्रेण सोमस्येन्द्रप्रदानविषयत्वा,द्भवति हि साधनवशेन साध्यस्य नियमः तद्यथाऽऽहवनीयादिवशेनाग्निहोत्रादेः। यत्र च सोमस्तत्र सर्वे तद्धर्माः तेनैन्द्राणि प्रदानानि धर्मवन्ति इतराणि त्वधर्मकत्वादतिदेशेन ग्रहीष्यन्ति। ततश्च सिद्ध ऊहः। तथा च सिद्धवन्नमतीत्यानूह्यानुष्टुप्छन्दस इति विशेषविधानमुपपद्यते। संस्थानां च विकारत्वमद्याप्यसिद्धमिति दर्शनं मन्यते। विकारत्वे

---

(१) न ह्येवमिति २ पु० पाठः।

(२) ध्रुवचमसा इति २ पु० पाठः।

त्वन्यथास्येवोह इत्यदर्शनमेव स्यात् । ननु संस्था विकारभूता एवेत्यनिङ्गं विपरिणामदर्शनान्नेति ब्रूमः । अग्निष्टोमान्तानां हि प्रदानानां समानविधानत्वे संस्थानां विकारत्वेपि प्रकृतिवद्विकृतावप्यविकृतस्यैवोपकारकत्वसंभवात्कृतो विपरिणामदर्शनम् । ऐन्द्राणां तु प्रकृतित्वे तार्तीयसवनिकेष्वपि अग्निष्टोमादिषु विपरिणत एवेत्युपपन्नं विपरिणामदर्शनम् । विशिष्टपदाक्षेपस्यैव विपरिणामव्यपदेशः । न विधिनानुष्टुप्छन्दःशब्दाक्षेपइति । तस्माद्यथादेवतमूह इति ॥

## पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् ॥३०॥

एवं पूर्वपक्षस्यैवाधिकरणे कृत्वा चिन्तयोऽहविषयत्वं चिन्तयति । कृतेषु चमसेषु भक्षशेषेष्वेवाभ्युन्नीताः सोमाः पुनरभ्युन्नीता इत्युच्यन्ते । तेषां तु यथापुनरभ्युन्नीतत्वं यथा चोहचिन्ताविषयता तथा विभज्य दर्शयति । सन्ति दश चमसास्तेषां ये मध्यतःकारिणां ब्रह्मादीनां चत्वारस्तैर्होतुर्वषट्कारानुवषट्कारयोर्द्विर्द्विर्हुतं होत्रकचमसैस्तु सकृद्वषट्कार एव हुतं सर्वेषु चेन्द्रो देवता । ततश्चमसेषु भक्षशेषेष्वेव सोमोभ्युन्नीय हूयते । कथमवगम्यते तत्सर्वं प्रैषेण दर्शयति । तत्र द्वितीये होमे होत्रका नानादेवता यजति मैत्रावरुणो मित्रावरुणौ मित्रं वयं हवामह इत्यादियाज्याभिरेव दर्शयति । तच यदैते चमसा हुत्वा भक्षणार्थमानीयन्ते तदा द्वौ द्वौ शेषौ दृश्येते । पूर्वहोमशेषस्त्वैन्द्र उत्तरस्तु मित्रावरुणादिदेवत्यः त-

स्योपलक्षणे क्रियमाणे संदेहः किं प्रस्थितदेवतातिक्रान्तोपीन्द्र उपलक्षयितव्यः उत्तरास्य मित्रावरुणाद्या इन्द्रमित्रावरुणपीत-स्येत्येवमुत इन्द्रमित्रावरुणादय एव केवला इति। कुतः संशयः। किं देवतान्तरसंचारेण पूर्वदेवतासंबन्धोऽपनीतः उत नेति। यद्यपनीतस्ततः केवलमित्रावरुणाद्युपलक्षणम्। अथानपनीतस्तत इन्द्रोऽप्युपलक्षणीय इति। किं प्राप्तम्। (१) सिद्धान्तेनैव तावदुपक्रमः सर्वेषामुपलक्षणं विशेषत्वादिति॥

## अपनयाद्वा पूर्वस्यानुपलक्षणम्॥३१॥

आश्रावणप्रत्याश्रावणादिभिः प्रदानकाले देवतान्तरसंवादादस्य द्रव्यस्यापनीता पूर्वदेवता। न च प्रकृतावपनीतदेवता-संबन्धोपलक्षणं कृतम्। तस्मादिहापि न कर्तव्यमिति।

## अग्रहणाद्वाऽनपायः स्यात्॥३२॥

अथ वा नापनीतमिन्द्रस्य देवतात्वम् कुतः।

देवतां यां यदुद्दिश्य द्रव्यं स्वत्वेन गृह्यते।
तस्यास्तदेव संबन्धि नान्यत्तन्मध्यपात्यपि॥

शास्त्रलक्षणो हि देवतासंबन्धः शास्त्रेणैव ग्रहणवेलायां देवतार्थत्वं प्रक्रम्यते। यच्च प्रक्रम्यते तदेव समाप्यते नान्यत्। इह च वचनात्सशेषेषु चमसेष्वन्यदुत्तरदेवतार्थं द्रव्यं ग्रहीतव्यमिति गम्यते। तत्र चमसोपलक्षणत्वेनोपपन्नः शेषः। यदा च ग्रहणवेलायामस्य देवतार्थत्वं नावधृतं तदा प्रदानवेलायां यथागृहीतहोमात्सन्निहितोऽप्यसावसंकल्पितत्वान्न देवतार्थो

---

(१) तत इत्यधिकं २ पु० पाठः।

भवति । न चास्य तदानीं संकल्पान्तरमस्ति वचनाभा-
वात् । न चेतरसंकल्पेन प्रसङ्गात्संस्पृश्यते । विभक्तवेलायां
संकल्पितत्वात् । न च प्रदानकाले पुनः संकल्पान्तरमस्ति ।
सकृत्संकल्पितस्य पुनः संकल्पयितुमशक्यत्वात् । न ह्येकमेव
द्रव्यमसकृत्त्यज्यते । तस्मान्न प्रदानकाले संकल्पोऽस्तीति ।
यद्यपि तावद्देवता प्रत्यक्षं भुञ्जीत तथापि हंस इवोदकात्क्षीरं
पश्चात्तमेव सा सोमं विविच्य भुञ्जीत किमुतो(१)द्देशमात्रो-
पकारिणी देवता पुनरभ्युन्नीतस्यैवोद्दिश्यते न पूर्वशेषस्य ।
तेन पुनरभ्युन्नीते दीयमाने पूर्वशेषः केवलमुत्सृज्यते न तु
दीयते । यस्तु भक्षणवेलायां तदेकदेशः कश्चित्सो ऽपनीतेन्द्र-
संबन्धित्वात् तथैवोपलक्षयितव्य इति ॥

## पात्नीवते तु पूर्ववत् ॥३३॥

पूर्वापवादार्थमारम्भः । द्विदेवत्यानामैन्द्रवायवादीनां शेषा
आदित्यस्थाल्यां निक्षिप्यन्ते ततोपि पुनराग्रयणस्थाल्यामाग-
च्छन्ति । ततश्च पात्नीवतग्रहणं श्रूयते उपांशुपात्रेण पात्नीवत-
माग्रयणात् गृह्णातीति । तस्य हुतशेषे भक्ष्यमाणे पूर्ववदैन्द्र-
न्द्रवायुपत्नीवत्पीतस्येवमाद्युपलक्षणं कर्त्तव्यमिति पूर्वपक्षः ॥

## ग्रहणाद्वा ऽपनीतं स्यात् ॥३४॥

नैतत्पूर्वेण सदृशम् । कुतः ।

यस्य ग्रहणवेलायां सन्निधिः सोपनीयते ।
संहतेन हि संकल्पः कर्त्तव्यस्तत्र चोद्यते ॥

---

(१) किमुत यदेति २ पु० पाठः ।

आग्रयणप्राप्तेषु हि द्विदेवत्येषु पत्नीवत्संकल्पश्चोद्यते । तत्र यद्यपि तावत्परकीय एव सङ्कल्पस्तथापि प्रसङ्गसिद्धिरनिवार्या किमुत यदा सोपि संकल्पनीयः श्रुत एव । तथा हि ॥

योपैत्याग्रयणात्सोमः स पात्नीवत इष्यते ।
शेषस्यैव ततो ऽपैति तेन संकल्प्यते तदा ॥

यदा ह्याग्रयणं (१) पात्नीवतं करोतीति श्रूयेत ततः सन्निहितोप्यनाग्रयणत्वाच्छास्त्रबलेन शेषः कथं चित्संकल्पादपनीयेत । अत्र पुनराग्रयणाद्गृह्णातीति श्रूयते । नाग्रयणस्याग्रयणमिति वा । तद्यथा वृक्षात्पर्णं पततीत्युक्ते कङ्कुरादिपत्रमपि प्रतीयते वृक्षस्यापादानमात्रोपक्षीणत्वात् । एवमिहाप्याग्रयणादपेतत्वं पत्नीवत्संबन्धकारणं नाग्रयणत्वम् । समानदेशयोश्च संपाताग्रयणयोर्य एवापैति स एवाग्रयणादपेत इति शक्यते वक्तुम् । तावच्चेह निमित्तम् । यत्तु तन्मिश्रादनाग्रयणादप्यपैति न तत्प्रतिषेधे विधौ वोपयुज्यते । न ह्यनाग्रयणादपेतो न पात्नीवत इति वचनमस्ति । यदि वायमर्थः स्यात्ततो योप्याग्रयणस्ततोपैति सोप्याग्रयणानाश्रयणापेतत्वादपात्नीवतः प्राप्नोति । तस्मादाग्रयणादेवेत्यस्याशक्यत्वादप्रमाणकत्वाच्चावश्यमेवमाश्रयितव्यम् । आग्रयणात्तावदपेत इति । तच्च संपातस्याप्यविशिष्टमित्युपपन्नं देवतासंबन्धित्वम् । न च पूर्वदेवतार्थत्वमनपनीयोत्तरसंबन्धो ऽवकल्पत इत्युपपन्नं पूर्णकभोजनवदनुपलक्षणम् । ननु योसौ पूर्वदेवतार्थस्तस्यैवायमवयव इति भूतपूर्वगत्यभिप्रायम् । अत्रा-

---

(१) यदि ह्याग्रयणमिति २ पु० पाठः ।

यस्तु स्वयमेवैनमभ्युपगमयामीति मन्वानः परिहरति तावत् । न हि कृतस्यावयवो दृश्यतइति । न हि कृतादन्यस्तस्या देवताया विद्यते तस्यापनीतत्वादित्यभिप्रायः । परस्त्वव्युत्पन्नाभिप्राय आह । ननु प्रकृतावपीति । संकल्पवेलायां तत्र देवताव्यपदेश इत्युत्तरम् । इतर आह । अत्राप्येवमेवासीदिति । सिद्धान्तवादी वदति । एतदेव प्रकृतिविलक्षणमिति । न चापनीतस्य तत्रोपलक्षणं कृतम् । इह तु स्फुटमपनीतत्वमुक्तं तस्मात्पत्नीवानेवोपलक्षणीय इति सिद्धम् ॥

## त्वष्टारं तूपलक्षयेत्पानात् ॥३५॥

तस्मिन्नेव पात्नीवते पत्नीवता सह पातृत्वनिर्देशान्मान्त्रवर्णिकं त्वष्टुर्देवतात्वमिति पूर्वपक्षः ॥

## अतुल्यत्वात्तु नैवं स्यात् ॥३६॥

नैवोपलक्षयितव्यस्त्वष्टा कुतः ।

मन्त्रचोदकयोस्तावदतुल्यत्वं बलाबले ।
पातृत्वेनाप्यतुल्यत्वं सह मात्राभिधानतः ॥

विधौ हि केवलः पत्नीवान्देवता नान्यसहितस्तद्धितेनासौ चोद्यते न च तद्धितोऽन्यसापेक्षादुत्पद्यते । तेनापि मान्त्रवर्णिकी दुर्बला । न च मन्त्रवर्णस्य तद्देवतात्वकल्पनया विना कर्मानङ्गत्वम् । पत्नीवदभिधानेन तत्सिद्धेः । न च त्वष्टुरभिधानमन्यथा नोपपद्यते स्तुत्यर्थमात्रत्वेनोपपद्यमानत्वात् । अत एव च मन्त्रार्थो भवति यस्त्वं त्वष्ट्रा सहितः स सोमं पिबेति । इतरथा पातृत्वेनैव तावत्कीदृशं देवताभिधानं देवताया उद्देश-

मात्रोपकारित्वात्। किं पुनर्यदा तत्रापि साहित्यमात्रश्रवणात्केवलमुत्प्रेक्षा न चासावैकान्तिकी, विनापि कार्ययोगित्वेन सहशब्दप्रयोगात्। तद्यथा। सहैव दशभिः पुत्रैर्भारं वहति गर्दभी। तत्र ह्येतावानेवार्थो विज्ञायते सत्स्वपि दशसु पुत्रेषु सैव वहतीति। तस्मान्न त्वष्टुर्देवतात्वमवगम्यते। अतो नोपलक्षयितव्यः॥

## त्रिंशच्च परार्थत्वात्॥३७॥

अधिकरणातिदेशोऽयम्। एतावता तु विशेषणातुल्यत्वाशङ्का येन य एवासावग्निर्देवताभूतः स एवात्र त्रयस्त्रिंशद्देवेषु भोक्तृषु परिवेष्टृत्वेन विनियुज्यते। तेन मन्त्रवर्णात्तेषामेव प्राधान्येन देवतात्वं विज्ञायते। गुणभूतोऽग्निः। पूर्वत्र च सहत्वमात्राभिधानादतुल्यत्वेन त्वष्टा निराकृतः। तदिह विपरीतमतुल्यत्वम्। पत्नीवत्त्वगुणमात्रदेवतात्वप्रतिपादनमात्रार्था च तद्धितचोदना। सा यथाऽग्नये पत्नीवन्तेति मन्त्रवर्णात्प्राप्नुवताग्निना गुणिना न विरुध्यते एवं त्रयस्त्रिंशतापि देवैः। अविशिष्टो हि तेषामपि मन्त्रवर्णः पत्नीवतस्त्रिंशतं त्रींश्च देवानिति। न च चोदनया देवतान्तरं प्रतिषिद्धम् येन मन्त्रवर्णगम्यं नेष्यते। न च मान्त्रवर्णिक्यां चोदितापरित्यागेन गृह्यमाणायां कश्चिद्विरोधः। न च प्रमाणान्तरगम्यायां तद्धितस्य सापेक्षत्वम्। यदि स एव त्रिंशदपेक्षं पत्नीवन्तं विदध्यात्ततः सापेक्षदोषं प्रतिपद्येत। मन्त्रस्य तु सापेक्षमपि वदतो नैव कश्चिद्विरोधः। समुच्चयाश्रयणाच्चाविरोधित्वम्। कथं

तुल्यार्थयोः (१) समुच्चय इति चेत् । न स्यात्समुच्चयः यदि मन्त्रेणोभयपरामर्शो न क्रियते स तु चोदनावगतमग्निमपरित्यजन्नेव परिवेष्टृत्वेन च सिद्धं देवतात्वमभिदधत्त्रयस्त्रिंशतो देवतात्वमाह । तस्मात्समुच्चये सति सर्वेषामुपलक्षणम् । तन्मन्त्रव्याख्यानेन दर्शयति याज्यामभिदधदेवं ह्यग्नेरग्नीदध्येषणं करोति । सन्मानपूर्वको नियोगोऽध्येषणं तदेवं क्रियते । आयाहीति । छन्दसि व्यवहिताश्चेति व्यवहितस्याङः प्रयोगः । एभिरित्युपरि वक्ष्यमाणत्वात्त्रयस्त्रिंशता देवैः सह एकरथारूढोऽश्वविभावाद्वा नानारथारूढाः । ततश्चार्वागागत्य तांश्च पत्नीवतस्त्रिंशतं देवाननुष्वधं स्वधामन्नं सोमाख्यमनु आवह ततश्च मादय संतर्पयेत्यर्थः । तेन स्फुटमेषां भोक्तृत्वमित्येवं प्राप्ते ब्रूमः । त्रयस्त्रिंशतो नोपलक्षणीया इति ॥ कुतः ।

चोदितार्थानुरोधेन मन्त्रः सर्वः प्रवर्तते ।
तेन त्वष्टृवद्देवात्र त्रिंशताग्नेरभिष्टुतिः ॥

पात्नीवतचोदनार्थस्मरणहेतुना मन्त्रेण न शक्यमचोदितमग्नेः परिवेष्टृत्वमितरेषां च भोक्तृत्वं प्रकाशयितुम् । अतो मन्त्रस्य परार्थत्वान्न चोदनामतिक्रम्य स्वातन्त्र्येण त्रयस्त्रिंश(२)त्प्रकाशनसामर्थ्यमवकल्पते । विधानसामर्थ्यं तु दूरभ्रष्टमेव । न च त्रिंशतो देवतात्वमेव स्मारयति चोदिताग्न्यैश्वर्यप्रकाशनपरत्वेन त्रयस्त्रिंशत्प्रकीर्तनात् ॥ कथम् ।

अप्रसिद्धेश्वरत्वस्य दातृत्वं यस्य कीर्त्यते ।
तदसंभाव्य मुख्यार्थमैश्वर्यार्थं प्रतीयते ॥

---

* (१) तुल्यार्थानामिति २ पु० पाठः ।
(२) त्रिंशदिति २ पु० पाठः ।

यदि त्वप्रकाशावस्थमेव द्रव्यत्वं देहीति मुख्यमेवोच्यते ततः प्रतारणमेव स्यात्। अथ तु त्वमेवात्र दाता स्वामी न वयं स्वामिन इत्येतत्परं भवति यथा लोके कश्चिदुच्यते किं त्वयि भवति निमन्त्रिते त्वय्येवान्ये निमन्त्रणीया इति ततो वाक्यं संबद्धं भवति। चोदितकरणाच्च दृष्टार्थं भवति। मादयस्वेत्यपि मुख्यस्य मन्त्रार्थस्या(१)संभवादेतेभ्य इत्येतल्लक्षयति। दातृत्वमप्ययनेर्दृष्टार्थमेवेति संप्रदानलक्षणार्थं विज्ञायते। विस्पष्टं च तद्धितेन यदन्यनिरपेक्षमवगतं तन्मन्त्रानुरोधेन बाधितं न स्यात्। कथं पुनः पात्नीवतमिति चोदितेऽग्निर्देवतावगम्यते न पुनस्त्रिंशद्देवता स्यात्। अत आह। पत्नीवांश्चाग्निरिह गृह्यते। न त्रयस्त्रिंशदग्नआइ (२) पत्नीवन्निति सामानाधिकरण्यदर्शनात्। ननु त्रिंशतापि सह सामानाधिकरण्यमस्ति पत्नीवतस्त्रिंशतमिति। सत्यमस्ति। तथाप्यत्राग्निः पत्नीवान् गृह्यते। तद्धितनिर्देशेन हि प्रातिपदिकार्थस्य संख्याविशेषाभिव्यक्तिर्भवति। तच्च प्रातिपदिकार्थानन्यथासंभवादेकवचनान्तेन विग्रहो भवति। पत्नीवान्देवतास्येति। त्रिंशच्च नित्यं बहुवचनान्तः। तस्मान्न तेभ्यस्तद्धित इति देवतात्वाभाव इति॥

## वषट्कारश्च कर्तृवत्॥३८॥

अनुवषट्कारं देवतायाश्चोदनया मन्त्रवर्णेन च देवतात्वमैकान्तिकं तस्मादुपलक्षणीया इति। एवं प्राप्ते ऽभिधीयते॥

यथा पश्चात्तनः पाता पूर्वपात्रुपलक्षणम्।

---

(१) मदस्येति २ पु० पाठः।

(२) अग्ने इति २ पु० पाठः।

अप्राकृतं न कुर्वीत तथैतामपि देवताम् ॥

न ह्येषा प्रकृतावुपलक्षिता । न चेह प्राकृतकार्यापन्ना त-त्स्थाने उपलक्षयितव्येति ॥

# छन्दःप्रतिषेधस्तु सर्वगामित्वा-त् ॥ ३९ ॥

स्थितादुत्तरम् । न यथादेवतमृचः किं तर्ह्यनैन्द्राणामम-न्त्रकमेवेति ॥ कुतः ।

तुल्यप्रकरणा ह्येषा ज्योतिष्टोमक्रियेष्यते ।
प्रकृतिर्विकृतिस्तेषां न चात्मैवात्मनः क्व चित् ॥

यदि ह्यभ्यासाः (१) पृथक्कर्माणि भवेयुस्ततः प्रकृतिविका-रभावः स्यान्न त्वेवमस्ति । न चैषां सोमो धर्मा वा केन चिद्विहिताः । येन तु प्रकारेणैको गृह्णाति तेन सर्वे । यथा वक्ष्यति तद्वत्सवनान्तरे ग्रहाम्नानमिति । न च मन्त्र-वशेनैन्द्रविषयता सोमस्य । प्रत्यक्षया श्रुत्या सर्वविषयत्व-बोधात् । न च यथा ऽनारभ्यवादेनाहवनीयः सर्वहोमार्थ इति तद्विहितकर्मान्तराभावादनाहिताग्नेरधिकारः एवमिह मन्त्रः सर्वसोमार्थः (२) । प्रकरणपठितः सामर्थ्यादिन्द्रार्थं प्र-काशयिष्यति । अन्यस्तु तेनाप्रकाशित एव ग्रहीष्यते मास्यते वा । अथ वा विवेकाभावात्सर्वस्मिन्नेव गृह्यमाणे संकल्पमात्रेण व्यवस्थास्यते । अथ वा सुब्रह्मण्यावन्मुख्यतयेन्द्रप्रकाशनार्थो

(१) अभ्यासादेतानीति २ पु० पाठः ।

(२) सर्वहोमार्थ इति २ पु० पाठः ।

भवति। तत्प्रभृतये देवतासमुदायायेत्यर्थः। अथ वा विधिशब्दे वस्तुसत्त्वस्याभावात्तद्गुणप्रकाशनं व्यर्थमिति वस्तुसत्त्वेनेतरदेवतासहितायेत्येतदभिधीयते। तस्मात्सर्वत्र समानविधानः सोमः। ततश्च विकारत्वाभावः। यत्त्वनुष्टुप्छन्दसो विनामविधानादिकृतित्वमिति तत्समानविधानत्वेपि तृतीयसवनत्वाज्जगच्छन्दस्त्वे प्राप्ते विशिष्टविधानत्वेनोपपत्स्यते। अथ वा संस्थानां विकारत्वादुपपन्न एवात्रोह इत्यदर्शनमेव (१)। तस्मादैन्द्रेष्वेव भक्षणमन्त्रः मानग्रहणवच्च न तदंशेन भक्षनियम इत्यन्येषाममन्त्रकं भक्षणम्॥

## ऐन्द्राग्ने तु लिङ्गभावात्स्यात्॥४०॥

अथ यत्रान्यसहित इन्द्रो देवता तत्र किमिन्द्रपीतव्यपदेशोस्ति नेति संदेहे ऽस्तीति ब्रूमः॥ कुतः।

न देवतात्वमिन्द्रस्य तत्पीतत्वेन कथ्यते (२)।
तेन नाग्नेयतुल्यत्वमसामर्थ्यादिहेष्यते॥

आग्नेये हि यजमानसंकल्पो विशेषणत्वेन संकीर्त्यते। स च तद्धितेनान्यनिरपेक्षाग्निविषय उपात्त इति सापेक्षं न प्रतिपादयति। अत्र पुनरिन्द्रपीत इति संप्रदानव्यापारो विशेषणं स चोभयोरपि संकल्प्यमानयोः प्रत्येकं केन चिदंशेन विद्यते। यस्य च यावान्व्यापारः स तेन पातेत्युपलक्ष्यते। तेनैन्द्राग्नस्येन्द्राग्निभ्यां पिबद्भ्यामर्द्धमिन्द्रपीतमर्द्धमग्निपीतमिति शक्यं वदितुम्। न च वर्तमानस्य साक्षादिन्द्रपीत-

(१) स्यादित्यधिकं २ पु० पाठः।
(२) कीर्त्यते इति २ पु० पाठः।

त्वमिति कृतावयवद्वारेण व्यपदेशः । न च तस्येयत्तानियमोऽस्ति एतावता पीतेन व्यपदेष्टव्य इति । तस्माद्विशेषणोपपत्तेर्मन्त्रवर्ज्जनमिति ॥

# एकस्मिन्वा देवतान्तराद्विभागवत् ॥ ४१ ॥

सत्यं यदि देवताव्यापारः पातृत्वमिह विशेषणं स्यात् । तत ऐन्द्राग्नोऽपि गृह्येत । न त्वस्माकं देवता पिबति । किं तर्हि संकल्पविषयत्वेनैवोपयुज्यते । न च मिश्रसंकल्पेऽन्यतरव्यपदेशः संभवति तद्धितवत्समासस्य सापेक्षप्रवृत्तेः । तस्मादाग्नेयचतुर्द्धाकरणवदेव केवलेन्द्रदेवत्यविषयत्वान्नैव व्यपदेश उभयदेवत्यः संभवतीति मन्त्रनिवृत्तिरनेनैव च विशेषणस्यापुनरुक्तत्वम् । यत् पूर्वपक्षवादी न देवतात्वमिह विशेषणं किं तर्हि संप्रदानगतं पातृत्वं तच्च प्रत्येकमप्यस्तीति मन्यते । सिद्धान्तवादी तु मुख्यपातृत्वासंभवाद्देवतात्वमेवानेन लक्ष्यत इत्यापादयति । यद्यपि च मुख्यं पातृत्वं देवतायां भवेत्तथापि द्रव्यस्य तत्पीतत्वमशक्यं वक्तुम् । कथम् ॥

> यो हि तावद्धुतः सोमः स नैवमभिधीयते ।
> न च तस्येन्द्रपीतत्वादहुतस्येन्द्रपीतता ॥

चमसस्थो हि इन्द्रपीतत्वेन व्यपदिश्यते । न चासाविन्द्रपीतः कृतविषयत्वादिन्द्रपीतव्यपदेशस्य । तस्मादवश्यविद्यमानधर्माभिधानादिन्द्राय संकल्पित इन्द्रपीतः प्रत्येतव्यः । ततश्चापन्नं देवतात्वमेवोपलक्षणमिति । न च कृतसोमगतं पीतत्वं

तत्रोपचरितुं शक्यम्। आत्मधर्मेणैव संकल्पेनाभिधानोपपत्तेः। एकदेशेपि हि ह्रूयमाने सर्वमिदं द्रव्यं देवतोद्देशेन त्यज्यमानं यागं साधयति। अतोसौ निर्वपतेरिव यजिरेवात्र पिबतेरर्थः। तेनैन्द्रयागसाधनादिन्द्रपीतप्रत्ययसामर्थ्यान्मन्त्रनिवृत्तिः॥

## छन्दश्च देवतावत्॥४२॥

इदमपवादाधिकरणम्। तत्र पूर्ववदेव तावत्सापेक्षगायत्रच्छन्दःसाधनके समासाभावात् गायत्रच्छन्दस्त्वानुपपत्तेर्यत्र केवला गायत्र्युपयुक्ता स एव मन्त्रेणाभिधातव्यो नान्य इति प्राप्ते ऽभिधीयते॥

## सर्वेषु वाभावादेकच्छन्दसः॥४३॥

यत्र नामोपपद्येत निरपेक्षं विशेषणम्।
सापेक्षस्याग्रहस्तत्र न तु यत्रापि नास्ति तत्॥

उक्तं ह्येतत् चतुर्द्धाकरणेपि। यदि केवलाग्निदैवत्यः प्रकरणेन स्यात्ततः सापेक्षदैवत्योपि गृह्येतेति। तदिह केवलेन्द्रदैवत्यसद्भावादिन्द्रपीतत्वं सापेक्षेन्द्रदैवत्यान्निवृत्तं न तु केवलगायत्रच्छन्दस्त्वं कस्य चिदस्ति। त्रयाणामपि वेदानां क्व चित्साधनांशे छन्दोन्तराणामवश्यंभावित्वात्। अतो रथन्तरसामत्वमिव नानाछन्दस्कास्वेव गायत्रच्छन्दस्त्वम्। अत एव नित्यसापेक्षेषु नैतद्भविष्यति सापेक्षमसमर्थमिति। तस्मान्नानाछन्दस्केपि मन्त्र इति सिद्धम्॥

## सर्वेषां वैकमन्त्र्यमैतिशायनस्य भ-

क्तिपानत्वात्सवनाधिकारो हि॥४४॥

स्थितादुत्तर,मनिन्द्रपीतेष्वपि अविकृत एव मन्त्रः प्रयोक्तव्यो नामन्त्रकं भक्षणम्। कुतः।

इन्द्रेण यस्मिन्सवने पीतः सोमो निरूप्यते।
तस्य योऽन्योऽपि संबन्धी स एवं व्यपदिश्यते॥

नैवमभिसंबन्धः इन्द्रपीतस्य सोमस्येति किं तर्हि इन्द्रपीतस्य प्रातःसवनस्य यः संबन्धीति। न च प्रातःसवनशब्दः सोमसमानाधिकरणः क्रतुभागवचनत्वात्। तद्गतसोमवाचित्वे च प्रातःसवनीयस्येति प्रसङ्गात्। अतः सवनस्येन्द्रपीतस्येति च समानाधिकरणे सोमसंबन्धव्यतिरेकजनिते षष्ठ्यौ। सोमस्येति तु व्यधिकरणा सोमविषया ऽवयवव्यतिरेकनिमित्ता षष्ठी। तेन पदान्तरसामर्थ्यात्संयोगप्रकरणाविशेषाच्च प्रयोक्तव्य एव एष मन्त्रः। कस्मादेवं गृह्यतइति चेत्। सोमे भाक्तत्वप्रसङ्गात्। पूर्वसंकल्पितो हि समुदाय इन्द्रपीतो मुख्यः तस्य चायमवयवः उपचारादेवमभिधीयेत। न चैतद्युक्तम्। तस्मात्सर्वसोमानामिन्द्रपीतसवनसंबन्धित्वान्मन्त्रवद्भक्षणमिति सिद्धमिति। इति श्रीभट्टकुमारिलस्वामिविरचिते मीमांसावार्त्तिके तृतीयाध्यायस्य द्वितीयः पादः समाप्तिमगमत्॥

श्रीरामचन्द्राय नमः।

## तृतीयाध्यायस्य तृतीयः पादः ।

---

श्रीगणेशाय नमः ।

# श्रुतेर्जाताधिकारः स्यात् ॥१॥

एवं लिङ्गविनियोगमुपवर्ण्य संप्रति वाक्यविनियोगः प्रस्तूयते । तत्रोदाहरणम् । उच्चैर्ऋचा क्रियते इत्यादि वाक्यम् । तद्यदि ऋक्त उल्बणं क्रियते गार्हपत्यं परेत्य भूः स्वाहेति जुहुयाद्यदि यजुष्टो यदि सामत इत्यादि च । तत्र किमृग्यजुःसामशब्दैः उच्चैस्त्वोपांशुत्वधर्मविधौ महाव्याहृत्यग्नित्रयसंबद्धहोमविधौ च पूर्वोत्तरपद (१) निरपेक्षाभिधानश्रुतिवशेन तेषामृग्यत्वार्थवशेन पादव्यवस्थेत्येवंलक्षणानामृगादिजातानां ग्रहणम् उत समस्तमन्त्रब्राह्मणात्मकानां वेदानामिति । कुतः संशयः एकवाक्योपक्रमोपसंहारश्रुत्योर्विप्रतिपत्तेः । उपक्रमे हि वेदाः श्रूयन्ते । उपसंहारे तु ऋगादिजातानि । तत्र यदि वोपक्रमस्थवेदपदमवयवभूतजातलक्षणार्थम् अथ वोपसंहारस्थमृगादिजातं सब्राह्मणकसमुदायलक्षणार्थमिति समञ्जसासमञ्जसयोः संदेहः स चाक्ताः शर्करा इतिवदाक्षेपपरिहाराभ्यां समर्थनीयः । एवं तर्हि तेनैव गतत्वान्नैतदारब्धव्यम् । नायमुपालम्भः संदिग्धेषु हि वाक्यशेषस्य तत्र प्रामाण्यमुक्तम् । इह पुनर्विध्युद्देशवर्त्तिनामृगादिशब्दानां निःसंदि-

---

(१) पूर्वोत्तरपदसंबन्धेति २ पु० पाठः ।

वयमन्त्रभेदजातवचनत्वादसंदिग्ध एव विध्युद्देशः। तेन व्यवधारणकल्पनयान्यतरपक्षावधारणं कार्यमित्यारभ्यते। किं प्राप्तम्। तदीयपूर्वपक्षन्यायेनैव विध्युद्देशश्रुतिबलीयस्त्वाज्जाताधिकार इति ।किं च॥

यथा च द्रव्यसामान्यं क्रिया वा न विरुध्यते ।
विशेषैर्वाक्यशेषस्थैर्नैवं वेदैर्ऋगादयः॥

न कथं चित् ऋगादिशब्देन ब्राह्मणं वक्तुं शक्यम्। शक्नोति तु वेदशब्द एकदेशेपि वर्त्तितुं समुदायशब्दानामेकदेशेष्वप्युपलब्धेः यथा ग्राम आयात इति । तथा चाध्येतारस्तत्रैव सुतरां प्रयुञ्जते वेदमधीमहे वेदो वर्त्तत इति। न च ब्राह्मणमधीयानास्तथा वदन्ति। किं च॥

जातस्य हि व्यवस्थानाच्छक्यं धर्मावधारणम्।
संकीर्णत्वात्तु वेदानां भवेत्तद्धर्मसंकरः॥

ऋचो हि ता एव काश्चित्त्रिष्वपि वेदेषु पठ्यन्ते तथा यजूंषि। तत्र यदि वेदत्वं धर्मसंबन्धहेतुस्ततस्तादृशेषु न ज्ञायते को धर्मः क्रियतामित्यन्याय्यो वा विकल्प आश्रीयते वेदान्तरव्यपदेशस्य तुल्यबलत्वात्। जातिपक्षे तु नैष दोषो न ह्येकस्मिन्वर्णसमूहे जातिद्वयं समवेतम् । ज्योतिष्टोमप्रकरणं चैवमनुगृह्यते अन्यथा वेदस्य समस्तेष्टिपश्वेकाहाहीनसत्त्रविषयत्वाद्यावद्वेदानुसारी धर्मः प्रकरणमुल्लङ्घ्य सार्वत्रिकः स्यात्। ननु जाताधिकारेपि वेदवज्जातस्य प्रकरणान्तरेष्वपि भावात्तुल्यमेतत्। अथ प्रकृतजातातिक्रमकारणाभावादिह व्यवस्था सा वेदपक्षेप्यविशिष्टा यावान्प्रकरणे वेद इत्यवधारणात्। नैतत्तुल्यम्॥ कुतः।

प्रतिसंघातवर्तित्वाज्जातं प्रकरणेऽस्ति नः ।
वेदो मन्त्रसमूहत्वात्प्रकृतौ न समाप्यते ॥
सर्वर्गादिसमूहेषु जातं व्यासक्ति चेद्भवेत् ।
प्रकृतौ न समाप्येत ततस्तदपि वेदवत् ॥
मन्त्रब्राह्मणतर्काणां समूहे काठकादिके ।
वेदत्वं वर्त्तते नित्यमनेकक्रतुगामिनि ॥
समूहास्त्वेकवाक्यानां ये पादपदपर्वणाम् ।
ऋग्यजुःसामजातानि प्रत्येकं तेषु सन्ति नः ॥
यथा वनादिसंघाताः प्राक्सामान्यसमन्विताः ।
तथर्गादिसमूहानां सामान्यं जातमुच्यते ॥
जातिरेव तु यज्जातं भाष्यकारेण वर्णितम् ।
व्याख्यातृभिस्तु तन्नैवमृगादौ जात्यसंभवात् ॥
द्विवर्णे च पदे जातिर्गोशब्दत्वं न कल्पितम् ।
वाक्यत्ववत्कथं नु स्युर्ऋग्यजुःसामजातयः ॥

यथैव हि वाक्यत्वं नाम जातिर्भिन्नस्थानकरणप्रयत्नाभिव्यङ्ग्यक्रमवद्वर्णात्मकपदसमूहेऽन्यवर्णे वा विलक्षणावयवपदार्थसंबन्धप्रत्ययाकाङ्क्षां व्यवधानाद् भ्रमणत्वादिन्यायेन कल्पयितुं तद्भूताधिकरणेनाध्यवसितम् । तथैव ऋक्त्वयजुष्ट्वसामत्वानि क्रमवद्वर्णस्वराश्रयाणि न शक्यानि कल्पयितुम् ॥

किं त्वेकार्थसमूहस्थमृग्यजुःसामसंज्ञितम् ।
जातं समूहसामान्यं न जातिर्नाम का चन ॥
यौगिकानां यथा जातेरन्यत्सामान्यमिष्यते ।
तथा समूहसामान्यं ज्ञातं जातिविलक्षणम् ॥

लोकेऽपि चैवैव जातिजातशब्दार्थप्रसिद्धिरित्येवमेव व्याख्ये-

यम् ॥

# वेदो वा प्रायदर्शनात् ॥ २ ॥

किमिदं प्रायदर्शनादिति । नेदमन्यैः प्रायदर्शनैः तुल्यमिति पश्यन्पृच्छति । प्रायवचनाच्चेत्यत्र हि प्रधानप्राये यत्रान्यानि प्रधानानि तत्र वचनादित्युक्तम् । तथा विषये प्रायदर्शनादिति संस्कारप्राये यत्रान्ये संस्कारा गोदोहनादयस्तत्रास्य दर्शनमिति । न त्विह यत्रान्ये वेदास्तत्रैषामृगादीनां दर्शनमित्यपि शक्यं वक्तुम् । न ह्येतद्व्यतिरिक्ता वेदाः सन्ति येषां मध्यपाते संकीर्त्येरन् अतो नेह प्रायदर्शनमस्तीति । तत्रोत्तरमाह वेदप्राये वेदोपक्रमे वेदबुद्धिजनितसंस्कारव्याप्ते मनसि इमे शब्दाः श्रूयन्ते तद्दर्शयति प्रजापतिर्वा इदमेक आसीत् । यत्तु विध्युद्देशवत्तीयस्त्वादर्थवादपदस्थो वेदशब्दोऽवयवविषयो भविष्यतीति । तत्र ब्रूमः ॥

> विध्यर्थवादसंबद्धमन्यदेव बलाबलम् ।
> मुख्यपश्चात्तनत्वेन ज्ञानानामन्यदेव तत् ॥

ये हि विध्युद्देशात्परस्तादर्थवादाः श्रूयन्ते तेषामस्ति दौर्बल्यं ये पुरस्तात् श्रूयन्ते ते मुख्यत्वाद्बलीयांसो भवन्ति । सर्वस्यैव हि शब्दस्य स्वार्थातिलङ्घने विरोधः कारणं, स च प्रयोगिदृष्टे विरोधो विज्ञायते, तदिह यदा त्रयो वेदा असृज्यन्ताग्नेर्ऋग्वेद इत्यादि श्रूयते न तदा जातवचनानामृगादीनामुच्चारणमस्ति, यद्दर्शनेन वेदशब्दोऽवयवलक्षणार्थो भवेत् । अतस्तेन तावत् श्रुतिवृत्तेनैव व्याप्ता बुद्धिरथेदानीमृगादिशब्दाः स्वार्थपराः सन्तो न संबध्यन्त इति बलात् लक्षणां प्रतिपद्यन्त इति तेन

सत्यपि विध्युद्देशगतत्वे दौर्बल्यं मुख्यं वा पूर्वचोदनाल्लोकव-
दित्येवमितरबलीयस्त्वात् । ननु पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिव-
दित्यनेनोत्पन्नमप्यर्थवादान्मुख्यवेदज्ञानं बाधित्वा विध्युद्देश-
ज्ञानमेव गृह्णीत । नैतदेवम् ॥

पौर्वापर्यबलीयस्त्वं तत्र नाम प्रतीयते ।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ॥

ये हि भिन्नवाक्यगताः परस्परनिरपेक्षा विरोधिनोऽर्थाः
श्रूयन्ते तेषां पूर्वस्योत्तरानुपमर्द्देनैव लब्धात्मकत्वादुत्तरस्य
पूर्वोपमर्द्देन विनात्मलाभानुपपत्तेः पौर्वापर्यबलीयस्त्वन्यायो
भवति । यत्र त्वेकवाक्यतया परस्परापेक्षाणां श्रवणं न तत्रैतद्भ-
वति । तत्र ह्याकाङ्क्षावशेन एकवाक्यता भवति, पूर्वप्रतीतिश्चो-
त्तरमात्मानुगुणमधिकं वाकाङ्क्षति, अतश्च यदनधिकमननुगुणं
वा तदनपेक्षितत्वात् नैव तस्मिन्वाक्येऽस्ति । न चाविद्यमानेन
पूर्वबाधः शक्यत इति पूर्वबलीयस्त्वं भवति । तदिह विध्यर्थवा-
दयोः समानविषयत्वात् यावदेवार्थवादे वेदाः संकीर्त्तिताः
तावदेव किमप्येषां विधास्यत इत्येतदवधृतम् । ततश्च किमेषां
विधेयमित्येतावन्मात्रमपेक्षते न तु कस्य किं विधास्यत इति ।
तेनोत्तरस्मादवयवादपेक्षितमात्रं गृह्णाति विधेयं वापेक्षितं न
विधिविषय इत्युच्चैस्त्वादिमात्रं संबध्यते न तु ऋगादयः । तत-
श्चाविवक्षितत्वान्नैवेषां विध्युद्देशेऽस्तित्वमिति नार्थवादं बाधन्ते
अर्थवादस्थ एव तु विध्युद्देशविषयत्वेनापि वेदोवधार्यते ।
तस्माद्वेदलक्षणार्थत्वमृगादीनाम् । वेदश्च व्यापकत्वाद्धेतुल-
क्षणायुक्तः सन् शक्नोत्येवावयवं लक्षयितुं,ऋगादयस्तु नियम्य-
त्वात्समुदायं लक्षयन्ति यथा चान्यत्रार्थवादानामनुवादत्वाद्ग-

श्रुत्याश्रुतिरदोषः तथा चार्थवादावगतविषये विधौ ऋगादिश-
ब्दानामनुवादकत्वात् लक्षणायामप्यदोष,स्तेनैषा वचनव्यक्तिः
यस्मादेवमेते वेदा जातास्तस्मादेषामुच्चैस्त्वादि कर्त्तव्यमिति
वक्तव्ये तमेवार्थसिद्धमङ्गीकृत्य ऋगादय उच्चार्यन्ते अन्यथा
ह्यसंबद्धमेव स्यात् । विध्यर्थवादयोर्न्नानाविषयत्वात्तस्माद्वेदा-
धिकार इति ॥

## लिङ्गाच्च ॥ ३ ॥

लक्षणापि च या दृष्टपूर्वा तस्यामेव शीघ्रतरबुद्धिर्भवति । ऋ-
गादयश्च वेदे दृष्टपूर्वास्तद्दर्शयति ऋग्भिः प्रातरिति । त्रिष्वेव
तावत् पादेषु वेदशब्दमाचचर्याद्दृक्शब्दस्य वेदविषयत्वं ज्ञातं
चतुर्थे तु वेदैरशून्य इत्यवश्यमृक्शब्दः सब्राह्मणके वेदे प्रयु-
क्त इति गृह्यते । यत्तु वृद्धैरनृणां वेदशब्दप्रयोगो मन्त्रेषु दृष्ट इति
सत्यमस्ति अत्रापि लक्षणा तथापि तु शास्त्रस्था वा तन्निमि-
त्तत्वादितीयमेव ज्यायसी ॥ (१)

## त्रयी विद्याख्या च तद्विदि ॥ ५ ॥

यदि च लौकिकेनापि प्रयोगेन कार्यं सोऽप्यस्ति वेदे ऋगा-
दीनाम् । कथमृग्यजुःसामानि तावत्त्रयीत्येव प्रसिद्धानि, ततश्च
त्रयी विद्यास्येत्येवं त्रयीविद्यशब्दव्युत्पत्तिः, स च वेदत्रयाध्या-
यिनि प्रयुज्यते न जातत्रयविदि, छन्दोगेषु जातत्रयश्चेष्वप्यप्र-
योगा,दतस्त्रयीविद्यशब्दे त्रयीशब्दो वेदेषु प्रयुक्त इति तत्स-
मानाधिकरणानामृगादिशब्दानामपि तद्विषयत्वं विज्ञायते,

(१) चतुर्थसूत्रमग्रे व्याख्यातम् ।

तस्मादपि वेदेषु ऋगादिप्रसिद्धिः ॥

## व्यतिक्रमे यथाश्रुतीति चेत् ॥ ६ ॥

अनुभाषणमेतत् ॥

## न सर्वस्मिन्निवेशात् ॥ ७ ॥

न पाठमात्रेण वेदान्तरव्यपदेशो भवति। यत्र (१) येन वेदेन विधीयते तत्तेनैव प्रमाणेन क्रियतइत्युच्यते। ततश्च यस्यैव मन्त्रस्य यत्र विधानं स एव तेन व्यपदेक्ष्यते। यदि तूभयत्र विधास्यते तत्रोभयत्र भूयस्त्वेनोभयश्रुतीत्यादिनास्ति तत्रागत्या विकल्पो ग्रहीष्यते ॥

## वेदसंयोगान्न प्रकरणेन बाध्येत ॥ ८ ॥

बाधेतेति वा पाठः। (२)

## धर्मोपदेशाच्च न हि द्रव्येण संबन्धः ॥ ४ ॥

ज्ञातधर्मपक्षे ऋच्यध्यूढं साम गायत्यृक्सामयोरवियोगादृग्धर्मेणैव सामधर्मसिद्धेर्वृथा पुनरुपदेशः। न हि कश्चित्सामाधारभूतामृचमुच्चैरुच्चारयन् सामान्यथोच्चारयितुं समर्थो, वेदाधिकारे त्वन्यदृग्वेदेन विधीयते अन्यच्च सामवेदेनेत्यर्थवदुपदेशद्वयम्। अनूक्प्रजापतिहृदयाद्यर्थमितरच्चापि भ-

(१) यदिति २ पु० पाठः।

(२) अत्र चतुर्थसूत्रं व्याख्यातम्।

विध्यतीति चेत् न । तस्य ज्योतिष्टोमानङ्गत्वात् । प्रकरणे ह्ययं स्तोत्रसाम्नामुपदेशः । न च तेषामनङ्गानां प्रयोगो ऽल्पविषयत्वाच्च मन्दपरिहृतमेवानर्थक्यम् । तस्मादपि वेदाधिकार इति सिद्धम् ॥

## गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ॥९॥

इदानीं यत्र वेदान्तरीयस्य प्रधानस्य वेदान्तरीयमङ्गं भवति तत्राङ्गस्य वेदधर्मः कमतः कर्त्तव्य इति संदेहे प्राप्तात्मकत्वाद्युपदेशधर्माणां यस्य यत्र समाम्नानं तदीयो धर्मः स्यादिति प्राप्ते ऽभिधीयते ॥

गुणे स्वरूपतो धर्मः प्रधानद्वारतो ऽपरः ।
यत्र स्यात्तत्र विज्ञेयं गुणधर्मस्य बाधनम् ॥

अवश्यं कर्त्तव्ये ऽन्यतरधर्मातिक्रमे गुणधर्मो ऽतिक्रमितव्यः । तथा हि प्रधानमविगुणं कृतं भवति । तच्च गुणस्यापि कार्यम् । सोपि हि तदर्थमेव प्रवर्तते । यदि त्वात्मीयधर्मानुरोधेन प्रधानं विगुणं कुर्यात्ततोस्य यदर्थैव प्रवृत्तिस्तदेव हीयेत । तत्स्वरूपे सगुणे जाते यद्यप्यङ्गं विगुणमेव तथापि तत्र गुणत्वस्याचिकीर्षितत्वान्न कश्चिद्विरोधः । तस्मादाधानस्य याजुर्वैदिकत्वात्तदङ्गभूतानां साम्नामुपांशुत्वं कर्त्तव्यमिति । ननु यावन्मात्रमाधानस्य यजुर्वेदविहितं तन्मात्रस्यैवोपांशुत्वमित्यवगमान्नैव सामगानस्य प्राप्नोति प्रधानमात्रं चाङ्गान्तराणि च याजुर्वैदिकानि तेन तेषां केवलमुपांशुत्वमिति । नैतदेवं वक्ष्यति हि अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरन्निति । तथा विधेस्त्वेकश्रुति-

त्वादपर्यायविधानादिति। तस्मात्प्रधानप्रयोगवचनपरिगृहीतत्वादन्यत्राश्रुतत्वेनानामङ्गानां यत्रैव प्रधानं तत्रैव विधि,रतश्च साङ्गस्यैव प्रधानस्य याजुर्वेदिकत्वादुपांशुत्वेनैव भवितव्यमिति। एवं तर्हि स्वयमेवाङ्गानां याजुर्वेदिकत्वादुपांशुत्वं न गुणप्रधानधर्मविरोधद्वारं यच्च सामगतमुपांशुत्वं तदङ्गवर्त्तित्वादुच्चैस्त्वेन तुल्यं, नैतत्तत्र वर्त्तमानं प्रधानस्येति शक्यं वदितुं, नापि तद्गते बाधिते प्रधानधर्मबाधो न हि तदा प्रधानमुपांशु न कृतं स्या,दथ केन चित्प्रकारेणाङ्गधर्मोऽपि प्रधानस्याभिधीयते तत उच्चैस्त्वमपि प्रधानधर्म एव स्यादिति पुनस्तुल्यबलत्वम्। उच्यते॥

उत्पत्तिविधिमालोच्य साम्नां वेदान्तरीयता।
साङ्गप्रधानसंबन्धादुपांशुत्वं तु गम्यते॥

यदि हि यजुर्वेदएवैषामुत्पत्तिः स्यात् तत्स्वरूपनिमित्तमेवोपांशुत्व स्या,देतेषां तु सामवेदोत्पन्नानां स्वरूपत उच्चैस्त्वप्रसङ्गे प्रधानसंस्पर्शनिमित्तमुपांशुत्वमिति प्रधानधर्मता। ननु यजुर्वेदेन साङ्गं कुर्यादित्युपबन्धात्साङ्गस्यैवोपांशुत्वमित्यवधारणादस्येवाङ्गस्वरूपसंस्पर्श इति। न। साङ्गकथनेनैवाप्राधान्यनिर्देशात्। उपसर्जनभूताङ्गं हि प्रधानमेवं निर्दिश्यते। तेन प्रधानमेव याजुर्वेदिकमुपांशुत्वं तु तद्धर्म एव सन्नङ्गान्युपसर्पन्नेवं कथ्यते। न त्वेवमेव चोदनाप्यस्ति। ततः प्रधानधर्मोऽयमङ्गं प्राप्नोतिकल्प्येत, प्रधानेन हि स्वधर्मोऽङ्गेषु विक्षिप्तः स यत्रैव बाधितस्तत्रैव प्रधानं विगुणं न त्वेवमुच्चैस्त्वं प्रधानधर्म इत्यवधार्यते। न ह्यङ्गधर्माः प्रधानानि संक्रामन्ति। नन्वेवमप्यङ्गधर्मः साक्षात्प्राप्नोति प्रधानधर्मः पुनः परद्वारेण परोक्ष

इति विपरीतं बलाबलं प्राप्नोति । सत्यं साक्षात्प्राप्ताङ्गधर्मः शी-
घ्रतरमवगम्यते प्रयोगवचनग्रहणोत्तरकालं तु पश्चात्तन एव
प्रधानधर्मः पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदित्येव बाधते । ननु
याजुर्वेदिकज्योतिष्टोमाद्यङ्गानां स्तोत्रशस्त्रादीनामप्यनेनैव
न्यायेनोपांशुत्वं प्राप्नोति । सत्यं प्राप्नोति वचनात्तु सर्वत्र स्व-
रान्तरलाभः । कथं दर्शपूर्णमासयोस्तावद्वेदद्वयविहितेष्वङ्गेषु
नानावेदस्वरे प्राप्ते गुणमुख्यव्यतिक्रमन्यायेन याजुर्वेदिकप्रधा-
नधर्म उपांशुत्वं प्राप्नोति । ततो वाचनिकः स्वरो भवति म-
न्द्रयाज्यभागान्तं परं मध्यमयोत्तमयानुयाजादीति । तथा
विकृतीनामिष्टिपशुबन्धादीनामेतस्मिन्नेव प्राकृते स्वरत्रये प्रा-
प्नुवति प्रत्यक्षोपदेशवशेन प्रधानवेदस्वरप्रसक्तौ तद्ग्रहणाद्वा
स्वधर्मा स्यादित्यनेन न्यायेन प्रयोगवचनस्य चोदकापेक्षित्वेन
दुर्बलत्वाच्चोदकप्रापितस्वरग्रहणमेवेष्टम् । एवं ज्योतिष्टोमा-
ङ्गानामपि दीक्षणीयादीनां प्राकृते स्वरे प्राप्ते प्रत्यक्षोपदेशव-
शेन बाध्यमाने चोदकबलीयस्त्वेन पुनरुत्थिते ज्योतिष्टोमस्य
याजुर्वेदिकत्वात् कृतोपकारप्राकृतधर्माग्रहणाच्च गुणमुख्य-
व्यतिक्रमन्यायेनैव तदङ्गानोपांशुत्वधर्मप्रसङ्गे (१) सति यावत्या
वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयादित्येते स्वराः गु-
णमुख्यव्यतिक्रमन्यायबाधेनैव साङ्गानां प्राप्ताः । तथा ज्योति-
ष्टोमस्य वाचनिकसवनविभागविहितमन्द्रमध्यमोत्तमोच्चारणा-
वधारणात्तदङ्गानामपि सर्वेषां प्राकृततुल्यमन्द्रमध्यमोत्तमो-
च्चारणान्येव प्रधानद्वारेण प्राप्तानि । ततो यत्किंचित् प्राचीन-
मग्नीषोमीयात्तेनोपांशु चरन्तीत्युपांशुत्वे साङ्गानां दीक्षणी-

(१) उपांशुत्वधर्मप्रसक्ते इति २ पु० पाठः ।

यादीनां प्राप्ते प्रधानमात्रवाचिदीक्षणीयादिशब्दोद्देशेन वि-
हिताः प्रधानमात्रेष्वेवैते स्वरविशेषा भवन्ति। यावत्या वाचा
कामयेत तावत्या दीक्षणीयायामनुब्रूयान्मन्द्रं प्रायणीयायां
मन्द्रतरमातिथ्यायामुपांशूपसत्स्विति तत्रोपांशुत्वस्य पूर्वेणैव
सर्वव्यापिनोपांशुत्वविधिना प्राप्तत्वाद्दीक्षणीयादिस्वरप्रशंसार्थो
नित्यानुवाद एव। अग्निषोमीये तु सवनविभागस्वरेणैव मन्द्र-
याज्यभागान्तमित्यादिप्राकृतस्वरप्रतिप्रसवः सवनविभागतुल्यं
वा साङ्गं प्रयोगं त्रेधा विभज्य मन्द्रमध्योत्तमोच्चारणसंपादनं
कार्यम्। एतेनानूबन्ध्यावभृथोदयनीयोदवसानीयास्वप्युच्चार-
णविशेषा व्याख्याताः। सुत्याकालसवनीयादीनामप्येवं स्वरे प्राप्ते
प्रातःसवनाद्यन्तर्गतत्वाद्यथासवनमेव स्वरा भवन्ति। ननु सव-
नशब्दानां सोमयागावयववचनत्वाद्दीक्षणीयाद्यङ्गवत्तदीयस्व-
राभावप्रसङ्ग इति चेत् न। सप्तमीनिर्देशेन तत्कालप्रयुज्यमा-
नत्वमात्राश्रयणात्॥

यदि षष्ठी भवेदत्र सवनेभ्यः परा ततः।
तदङ्गमन्त्रमात्रेषु मन्द्रत्वादिविधिर्भवेत॥
सप्तम्यां तु तदाधारो यावान्मन्त्रः प्रयुज्यते।
तस्य सर्वस्य मन्द्रादिस्वरयोगोऽङ्गमाश्रितः॥
केचिदाहुर्यदाधारमात्रत्वं सवनेष्विह।
तदा तेषां न मन्द्रादिः स्यादनाधेयताश्रुतेः॥
आधारे सवने भिन्नं यदाधेयतया श्रुतम्।
सवनीयादि तस्यैव मन्द्राद्युच्चारणं भवेत॥
स्तोत्रशस्त्रानुवाक्यादिशेषस्तु सवनस्य यः।
षष्ठ्यभावान्न तस्यैते युक्ता मन्द्रादयः स्वराः॥

इत्युक्ते नैष दोषोस्ति यतः षष्ठ्या विनाप्ययम् ।
षष्ठ्यर्थः संभवत्येव तदाधारत्वकल्पितः ॥
यथा हि प्रकृतिर्दृष्टे पुष्याद्यपि तथेष्यते ।
ततस्त्वाधेयधर्मोर्थः स द्वयेपि विधीयते ॥
यदि वा स्तोत्रशस्त्रादि कृत्स्नं सुत्याङ्गमेव नः ।
आधार एव तस्यापि सवनातीतराङ्गवत् ॥
नानावेदस्वरस्तस्मात् स्तोत्रादेः प्राप्त आदितः ।
प्रधानाङ्गतया पश्चादुपांशुत्वेन बाधितः ॥
ततो वाचनिकेनैव यथासवनभाविना ।
मन्त्रादिना समस्तानि सुत्यङ्गानि प्रयुञ्जमहे ॥

एतेन सर्वे ज्योतिष्टोमविकारा व्याख्याताः । क्व पुनरिदानीं नानावेदस्वरस्यावकाशो भविष्यति । उच्यते । तद्ग्रहणाद्वा स्वधर्मा स्यादधिकारसामर्थ्यादव्यक्तः शेषे इतिवत्कल्पनीयः यत्प्राकृतस्वराङ्गयुक्तायां विकृतौ वेदान्तरीयमपूर्वमङ्गं चोद्यतइति । ननु तत्रापि गुणमुख्यव्यतिक्रमन्यायेन प्रधानधर्मभाव एव । एवं तर्हि या विकृतिर्यस्मिन्वेदे भवति तस्याः शेषेष्वङ्गेषु यथाप्रकृति प्राप्तेषु यत्तस्मिन्नेव वेदेङ्गान्तरमपूर्वं चोद्यते स विषय इति सोपि प्रधानद्वारेणैव लब्धत्वात्तदेव तर्हि प्रधानं विषय इति न । तस्यापि प्रकृतावरुद्धत्वान्न तर्हि प्रधानद्वारेणापूर्वस्याङ्गस्य प्राप्तिरिति तदेव विषय इति नैवमपि यः प्रधानस्य धर्मस्तस्यैव तत्रापि भावात् । अपि च त्रेधा विभक्तेषु यज्ञभागधर्मे च स्वरे स्थिते यदपूर्वमपि तद्भागपाति भवति तस्य न यूपावटस्तरणबर्हिस्तुल्यत्वमिति भवितव्यमेव प्राकृतेन धर्मेण । तस्मादपि नास्ति विषयः । प्रकरणाम्नानं चात्यन्तमेवानर्थकं

स्यात् । अत्र समाधिः उपांशु यजुषेति तावत्सर्ववेदविहोमेष्वर्थवद्दक्सामवेदयोरपि काम्यनैमित्तिकेष्वङ्गेष्वर्थवत्ता । मन्द्रं प्रातःसवनइत्यादि हि नित्यत्वादनित्यैः काम्यनैमित्तिकैरसंबध्यमानं नित्याङ्गविषयमेव भवति । तेन यदृग्वेदसामवेदाभ्यां किं चित्काम्यं नैमित्तिकं वा चोद्यते तत्सर्वमुच्चैः कर्त्तव्यम् । तथा तं भिन्नमभिम्हशेद्यदते चिदभिश्रिष इत्यादि । एवं याजुर्वेदिकमप्युपांशुत्वमुदाहर्त्तव्यम् । तथा यानि सुत्योत्तरकालान्यङ्गानि तेषु सवनग्रहणाभावाद्यथावेदमेव स्वर इत्यवभृथसामादीनामप्युच्चैस्त्वसिद्धिः अन्यथा हि यथेष्टं प्रयोगः स्यात् । दीक्षणीयादिपरिमासस्तु तु प्राचीनमग्नीषोमीयादित्यनेनोपांशुत्वं प्रवर्ग्यसाम्नां पुनरुच्चैः प्रवर्ग्येणेत्येवमुच्चैस्त्वम् । आधानसाम्नां तु याजुर्वैदिकप्रधानविधिविहितत्वादेवोपांशुत्वम् । य एवं विद्वान्वामदेव्यं गायति इत्यादीनि यजुर्वेदवाक्यान्येव तस्मादिहानुदाहरणम् । तत्र के चिदाहुः । स्वरूपोत्पत्तिमात्रापेक्षया तेन क्रियतइति न कारकहेत्वभिप्रायेणोपन्यास इति । तत्तु न युक्तमेवं सति ह्युत्पत्तिविनियोगबलाबलचिन्तैव क्रियते न गुणमुख्यविरोधचिन्ता । तत्र च विनियोगाधीनत्वादनुष्ठानस्य तद्बलीयस्त्वमित्येष निर्णयः स्यात् । तस्मात्सामवेदशाखायामपि कस्यां चिदस्येषां विधिरस्त उदाहरणमित्यपरे । तदा तु यजुर्वेदपुनःश्रुतेर्मन्दं फलं स्यात् । अथापि शाखान्तरविधिवदाश्रीयेत स्वरविकल्पस्य पूर्वपक्षे क्रियेत यदि उदाहृयेतानुदाहरणात्तु नैतदुपपद्यते । तस्मादुत्पत्तिविनियोगयोरेव गुणमुख्यत्वमित्येवमधिकरणमारभ्यते यत्र वेदान्तरोत्पन्नं वस्तु वेदान्तरेण विनियज्यते तत्र किमुत्पत्तिवेदधर्मः कर्तव्यः उत

विनियोगवेदधर्म्म इति उत्पत्तिपूर्वकत्वाद्विनियोगस्योत्पत्तिवेदधर्म इति प्राप्ते विनियोगवेदधर्म इति गृह्यते । कुतः । उत्पत्तेस्तदर्थत्वाद्विनियुज्यमानस्य च स्वरापेक्षित्वात्तदानीमेव यः स्वरोऽवगम्यते स एव चोदितो नोत्पत्तिस्थस्तत्काले विधानाभावात् । अथ वा नैवात्र व्यतिक्रमशब्देन बाधो विरोधो वाभिधीयते किं तर्हि व्यभिचारोऽन्यत्रान्यत्र च वृत्तिस्तेनैवं चिन्त्यते यत्रोत्पत्तिविनियोगौ व्यतिक्रान्तौ अन्यत्रोत्पत्तिरन्यत्र विनियोगस्तत्र कतरवेदसंयोगो (१) भवत्विति । तथैवोत्पत्तिसंयोगे विकल्पे वा प्राप्ते विनियोगवेदसंयोगः प्राधान्यादित्युत्तरम् । अथ वैवं चिन्ता यत्रान्यत्र च प्रधानम् अन्यत्र चाङ्गं तत्राङ्गस्य केन वेदेन व्यपदेशोऽस्त्विति । ततश्च तथैव प्रधानवेदेन व्यपदेश इति निर्णयः । अस्मिंस्तु पक्षे तद्ग्रहणाद्वा स्वधर्मा स्यादित्येतद्बाधित्वा प्रधानसमाख्यात एक एव प्रकृतौ विकृतौ च कर्त्ता प्राप्नोति । अथ तु चोदकबलीयस्त्वादङ्गवेदसमाख्यानकर्तृग्रहणं ततः स्वरोऽपि तथैवेत्ययुक्तं प्रधानस्वरग्रहणम् । अत उत्पत्तिविनियोगापेक्षयैवैष विचार इत्येषैव व्याख्या शोभना । तथैवाधानोदाहरणं समर्थितं भवति । यदि तु गुणमुख्यव्यतिक्रमोऽङ्गप्रधानधर्मविरोधो व्याख्यायते ततोऽङ्गगुणविरोधे च तादर्थ्यादित्यनेन सहापौनरुक्त्यं संप्रधारणीयम् ॥

## भूयस्त्वेनोभयश्रुति ॥ १० ॥

इदानीं यानि वेदान्तरेषु श्रूयन्ते प्रधानानि तानि केन व्यपदेष्टव्यानीति विचार्यते । तत्रैष निर्णयो यत्रोत्पद्यन्ते न यत्र

(१) वेदधर्म्म-संयोग इति २ पु० पाठः ।

गुणार्थं श्रूयन्ते किं प्राप्तम्। शाखान्तरवत्सर्वंश्चोत्पद्यन्ते ततश्च धर्मविकल्पोऽयं वोभयत्र स्वरूपस्य गुणानां च श्रवणात् कदाचित्किं चिदुत्पत्त्यर्थमेव विकल्पप्राप्तावुच्यते॥

न शाखान्तरवद्युक्तो विकल्पो वेदगोचरः।
तस्मादेको गुणार्थोऽत्र कश्चिदेको विधायकः॥
स तु ज्योतिष्टोमादेः कतम इति।
गुणानां यत्र भूयस्त्वमितिकर्त्तव्यतात्मकम्।
तत्र तेनैव लिङ्गेन तस्य कर्तव्यतेष्यते॥

यजुर्वेदज्योतिष्टोमस्य दीक्षणीयादिकेतिकर्तव्यता बह्वी। तस्मात्तत्रैवास्योत्पत्तिरतश्चासौ यजुर्वेदेन क्रियत इत्युच्यते तेन प्रमीयमाणत्वात्तेन प्रमाणेन क्रियतइत्यर्थोऽथ वा तेनैव व्यापारेणानुष्ठानमपि तेनैव क्रियतइति व्यपदिश्यते। न त्वेतद्भूयस्त्वव्याख्यानं युक्तम्। कुतः॥

यद्यस्य गमकत्वेन स्वशक्तेरवधारितम्।
तदल्पं बहु वा तस्य प्रतीतौ न विशिष्यते॥
यादृशस्य हि धूमस्य गमकत्वावधारणा।
स तादृग् बहुरल्पो वा वह्निं गमयति ध्रुवम्॥

तथेहेतिकर्त्तव्यता लिङ्गत्वेनोपन्यस्ता सा यत्राप्यल्पा तत्रापि कर्त्तव्यतया विनाऽनुपपद्यमाना शक्नोत्येव गमयितुम्॥

नैव ह्येवाङ्गभूयस्त्वमितिकर्त्तव्यता मता।
किं तर्ह्यङ्गं यदेवाङ्गैरितिकर्त्तव्यतापि सा॥

तत्र यदि वेदान्तरस्थप्रधानानुवादेनाल्पा विधीयतइत्युच्यते शक्यं वक्तुं बह्वप्यपि तथैव विधास्यतइति। तच्चैतत्स्यादल्पा सुखं वेदान्तरस्थस्य विधीयते बह्वी तु दुःखमिति। नैतदेवं बह्वाम-

पि वाक्यवक्तृत्वस्य समत्वात् तस्मादकारणमिति । एवं वर्णनीयमिदं द्रव्यदेवताक्रियं कर्मस्वरूपत्वेनावधार्य तच्च यजुर्वेदे सकलमाम्नायते वेदान्तरे तु क्रियामात्रं संकीर्त्य स्तोत्रशस्त्रादीनि पठ्यन्ते । ततश्च द्रव्यदेवताकाङ्क्षित्वमपनीतमिति अशक्यं स्वतन्त्रक्रियाविधानम् । तथा च शाखान्तराधिकरणे व्याख्यातम् । यजुर्वेदे तु समस्तस्वरूपाम्नानादपि स्तोत्रादिभिः शक्यते यागो निर्वर्त्तयितुम् । वचनसामर्थ्याददृष्टार्थानां स्तोत्रादीनां ग्रहणं,मतोयं सूत्रार्थो यदुभयवेदश्रुति कर्म तद्रूपभूयस्त्वेन सामस्त्येन निराकाङ्क्षीकरणसमर्थेन निर्णेतव्यमिति । ऋक्सामवेदयोश्च तुल्यधर्मत्वात्तद्गतभेदोपादानं निष्फलमिति मत्वोभयश्रुतीत्युक्तम् ॥

## असंयुक्तं प्रकरणादितिकर्त्तव्यतार्थित्वात् ॥११॥

एवं तावत् श्रुतिलिङ्गवाक्यानि प्रधानशेषसंकीर्णविविक्तविषयाणि प्रत्युदाहरणं व्याख्यातानि । तत्र विधिविनियोगाभिधानात्मिकायाः श्रुतेर्विनियोगसामर्थ्यात्मकस्य च लिङ्गस्य केवलपदप्रयोगाभावात्पदान्तरसंनिधेरवश्यंभावित्वाद्वाक्यमन्तर्गतप्रायमेवेति न साक्षाद्ग्रहणेन सूचितम् । अथ वा वेदो वा प्रायदर्शनादित्युपक्रमोपसंहारवशेनैव वेदधर्मत्वावधारणादिदमेव वाक्यविनियोगसूत्रमिति न पूर्वान्तर्गतिमात्रेण वाक्यस्य विनियोजकत्वं व्याख्येयम् । यत्तु भाष्यकारेणारुणयेत्युदाहृतं शक्यं तत्राप्यैन्द्रीवत्तृतीयाश्रुतिरेव विनियोजिकेति वक्तु-

म् । अथ क्रियामात्रसंबन्धे श्रुत्या कृते विशेषसंबन्धो वाक्येने-त्यभिप्रायः स ऐन्द्र्यामपि तुल्यः । तत्रापि श्लौन्द्र्येत्युपस्थातव्य-मात्रापेक्षणाद्गार्हपत्यमिति च साधनमात्रापेक्षित्वाद्विशेषसंब-न्धो वाक्येनैव । तस्मादुभयत्रापि तदन्तर्गतिः शक्या दर्शयितु-मिति उभयोः श्रुतिवाक्ययोरुभयमुदाहरणम् । इदानीं बलाब-लचिन्ता प्रत्यासन्नेत्युत्तराण्यपि त्रीणि प्रमाणानि स्वरूपेण वि-नियोगसामर्थ्येन च दर्शयति । तत्र प्रकरणं विनियोगाज्ञान-संशयविपर्ययाणामन्यतमेनोपन्यस्यति स्म । यावच्चान्यत्र कथ्यते तावदज्ञानं भवति । अथ वासदपि प्रसङ्गाभावान्नाख्यातं स्या-दिति संदेहो ऽथ वा नैवाक्षरश्रवणात्तत्सामर्थ्यानुसरणाका-ङ्क्षितयोग्यार्थपदान्तरसंनिधानेभ्यो ऽन्यः शब्दप्रकारोस्ति । त-स्मान्न प्रकरणादीनि प्रमाणान्तराणीति प्राप्ते ऽभिधीयते ॥

अविच्छिन्ने कथंभावे यत्प्रधानस्य पठ्यते ।
अनिर्ज्ञातफलं कर्म तस्य प्रकरणाङ्गता ॥

दर्शपूर्णमासाभ्यां स्वर्गं साधयेत्कथमित्येतस्यामाकाङ्क्षाया-मविच्छिन्नं यान्यश्रुतप्रयोजनानि कर्माणि पठ्यन्ते समिधो य-जति तनूनपातं यजतीत्येवमादीनि ततस्य दर्शपूर्णमासयोः कु-तश्चिदनुग्रहस्तिद्धा भवितव्यम् । प्रयाजादीनां च केन चित्साध्ये-न । न च दर्शपूर्णमासयोः सिद्धमुपकारं स्वपदस्ववाक्यस्वप्रक-रणप्रकरणान्तरेषु प्रत्यक्षादिपञ्चकेन प्रत्यक्षादिपञ्चकावगतेन वा शब्देनोपलभामहे । तथा प्रयाजादीनामवश्यं चोभयेनापि कुतश्चिद्भवितव्यम् । यदि तु केन चित्प्रकारेण नावगमिष्या-मः ततो नास्तीत्यवगमिष्यामः अस्ति च प्रमाणं प्रकरणम् । न ह्यत्यन्तसंनिकर्ष एवैकं संबन्धकारणम् । यथा यथा हि

सन्निकृष्टं न लभ्यते तथा तथा विप्रकृष्टे वेदशक्तिः संभ-
वति । तद्धि द्दोपकारकल्पनाप्रमाणम् । सन्निकृष्टमलब्ध्वा
विप्रकृष्टमप्यनुज्ञातमित्युभयाकाङ्क्षावशेनैवं विज्ञायते यं दर्श-
पूर्णमासावुपकारमाकाङ्क्षतः स नूनमेभिः प्रयाजादिभिः क्रि-
यते यच्च प्रयाजादयः प्रयोजनमपेक्षन्ते तद्दर्शपूर्णमासोपकार
इति । न ह्युभयोरप्यन्यत्संनिकृष्टतरमस्ति यच्चान्यत्कल्प्यते त-
स्यान्येन सह संबध्य निराकाङ्क्षीभूतस्य नेह संबन्धाकाङ्क्षा
विद्यते तेन प्रयाजादीनां विश्वजिदादिवत्फलकल्पनम् । नापि
दर्शपूर्णमासफलानुषङ्गः उभयाकाङ्क्षालक्षणसंबन्धाभावे ह्य-
न्यतराकाङ्क्षालक्षणः संबन्धो गृह्यते न संभवे । तस्मान्नष्टा-
श्वदग्धरथवदेव परस्परनियमः सिद्धः । असंयुक्तग्रहणं कि-
मर्थं श्रुतिलिङ्गवाक्यैः संयुक्तानां द्वित्वबहुत्वयुक्तप्रतिपद्विधा-
नपूषादिशब्दलक्षेषाणां प्रकरणविनियोगनिवृत्त्यर्थं प्रकरणा-
विरोधिना वा असंयुक्तमिति द्रष्टव्यम् । अविरोधिसंयुक्तानां
व्रीहीन्प्रोक्षति बर्हिर्देवसदनं दामि अरुणया क्रीणातीत्येवमा-
दीनां प्रकरणस्थव्रीहिबर्हिःक्रयैः संबध्यमानानां प्रकरणसमा-
वेशोपपत्तेस्तत्तु सामर्थ्यसिद्धत्वात्सूत्रकारेण नोक्तम् ॥

## क्रमश्च देशसामान्यात् ॥१२॥

पूर्ववदेव क्रमसमाख्ययोरप्यज्ञानादिभिरुपन्यासः कर्त्तव्यः ॥

तत्र क्रमो द्विधेवेष्टो देशसामान्यलक्षणः ।

पाठानुष्ठानसादेश्यादिनियोगस्य कारणम् ॥

विनाप्यनुष्ठानदेशसाम्येन यावति प्रदेशे ब्राह्मणे प्रधानं पठ्यते
तावत्येव मन्त्रेषु मन्त्रस्तयोस्साकाङ्क्ष्यपेक्षावेलायां यथासंख्य-

न्यायेन समानदेशत्वाद्बुद्धौ सन्निधानं भवति । प्रथमस्य हि प्रधानस्य मन्त्रमन्विच्छन्नवश्यं मन्त्रसमाम्नायमादित आरभ्यालोचयति । ततश्च प्रथम एव मन्त्रः प्रथमं हृदयमागच्छति । न चास्यातिक्रमे हेतुरस्तीति स एव गृह्यते । तथा मन्त्रस्य शेषिणमपेक्षमाणस्यानयैव प्रक्रियया येन शेषिणा सह संबन्धो भवति ततश्च तन्निराकाङ्क्षतया द्वितीयादीनामप्येवमेव द्वितीयादिभिरेव योगेन भवितव्यम् । तत्राग्नेयाद्यनुमन्त्रणानामाग्नेयादिलिङ्गत्वात्तेनापि व्यवस्था सिध्यतीत्यव्यक्तलिङ्गमुपांशुयाजक्रमाधीतं दब्धिर्नामासीत्युदाहरति । ननु वाक्यप्रकरणात्सर्वार्थत्वं विज्ञायते तच्च बलीय इत्यन्यत्रापि विनियोगः प्राप्नोति । अत्र केचिदाहुः । उपांशुयाजग्रहणाद्द्वयमप्यनुगृह्यते तस्मात्तद्ग्रहणमिति । शक्यं तु वक्तुम् । अननुग्राह्य एव क्रमः प्रकरणप्रत्ययविरुद्धत्वादिति । शेषस्य हि सर्वार्थत्वे प्रतिप्रधानावृत्तेः प्रकरणावगतं न शक्यं बाधितुम् । तत्रैतावदुत्तरं भवति येन्ये शेषिण आग्नेयादयस्ते विस्पष्टलिङ्गैः क्रमप्रकरणवद्भिर्मन्त्रान्तरैरेवरुद्धत्वान्नैनमपेक्षन्ते । न च विकल्पोऽस्पष्टलिङ्गत्वेन वैषम्यात् । अदृष्टार्थानां समुच्चय इति चेन्न । प्रकृतयागप्रत्यवेक्षणेन दृष्टार्थत्वात्सत्यपि चादृष्टार्थत्वे निरपेक्षाणां गत्यन्तरे सति समुच्चयानाश्रयणादाग्नेयादिभिः कृतार्थैरुपेक्षितः सन्नगत्या पुनस्तेष्वेव भवेदस्ति चास्य गतिरुपांशुयाज इति । किं च ॥

न वा विस्पष्टलिङ्गानां प्रक्रिया विनियोजिका ।
असीत्यस्य च सामर्थ्यं सन्निधावुपसंहृतम् ॥

दब्धिर्नामासीत्यस्पष्टलिङ्गोयम् । न चेदृशं सन्तं प्रकरणं वि-

नियोक्तुं समं मम (१) त्वमिशब्दो युष्मदर्थविषयत्वात्सन्निहित-मभिमुखं वाभिधत्ते नान्य,मुपांशुयाजस्य सन्निहितोभिमुखश्चे-त्यभिधानसामर्थ्यं क्रमादुपांशुयाजविषयं विज्ञायते । ततश्च लिङ्गेन प्रकरणं बाध्यतएवेत्यदोषः । काम्ययाज्याकाण्डक्रमस्तु व्याख्यात एवानुष्ठानदेशक्रमोपि पशुधर्माणामग्नीषोमीयार्थ-त्वेन भविष्यति ॥

## आख्या चैवं तदर्थत्वात् ॥ १३ ॥

यौगिकी या समाख्या सा संबन्धप्रतिपादिनी ।
सोपि बुद्धावुपस्थाप्य शेषसंबन्धबोधकः ॥

आध्वर्यवादिसमाख्यानां वेदएव प्रयोग इति न लौकिक-त्वचोद्यं क्रियते । तत्राध्वर्युरुक्तमात्रमेवापेक्षते किं मया कर्त्त-व्यमिति । तदपेक्षमाणस्य च यदि न कुतश्चिद्विशेषो ऽवगम्यते ततो यत्किञ्चिदिति भविष्यति । तथाध्वर्यवसंज्ञितं कर्म को मे कर्त्ता भविष्यतीत्येवमेव शेषमपेक्षते । तत्र शब्दज्ञस्यादित एवैषोत्प्रेक्षा प्रत्येकं भवति यदस्याध्वर्योः कर्म तदाध्वर्यवशब्द-वाच्यं भविष्यति । तथाप्यस्याध्वर्यवस्य यः कर्त्ता तस्याध्वर्युर्ना-मेति प्रकृतेर्वा विकारस्तदनुरूपो ऽनुमीयते विकाराद्वा प्रकृतिः । यद्यपि शब्दान्तरं विकार इत्युभावप्येतौ परस्परनिरपेक्षौ नि-त्यसंबन्धौ च तथापि नित्याया एव शब्दप्रवृत्तेर्नित्यः संबन्धो निमित्तमिति सर्वयौगिकानामेवमन्वाख्यानम् । न हि राज्य शब्दस्याप्यादिमती प्रवृत्तिरित्युक्तम् । निमित्तनैमित्तिकभा-वस्वनादित्वेपि शब्दार्थयोरिवेष्टाविरुद्धः । तत्र केचिद्वदन्ति

(१) अयमिति २ पु० पाठः ।

प्रागेतस्मात्समाख्या विनियोगादध्वर्य्वाध्वर्यवयोरसंबन्धादशक्यं यौगिकत्वं समाख्यया विज्ञातुम्। अथ तु प्रथमं सिद्धे संबन्धे पश्चात्समाख्यायाः प्रवृत्तिः ततो न समाख्या विनियोजिका स्यात्, इतः परस्परनिरपेक्षयोरेव रूढयोः सारूप्यादुपतिष्ठमानयोरेष विनियोग इति। न त्वेतद्युक्तम्। न हि रूढानां सारूप्यादुपस्थापनसामर्थ्यं धर्मसंबन्धे प्यस्ति। यथा कण्वरथन्तरे रथन्तरधर्मान्निराकरिष्यति किमुतात्र क्रियाकर्तृसंबन्धे। पावकाद्युदाहरणं वा युक्तं स्यात्तस्माद् यौगिकत्वमेवाभ्युपगन्तव्यम्। यत्तु प्राक् प्रयोगात्प्रमाणं नास्तीति सत्यं प्रत्यक्षं नास्तीति समाख्ययैवानुमीयमानं भविष्यति। वेदे हि प्रथममेव क्रियाकर्तृसंबन्धो निष्पन्नस्तस्मिन्सति समाख्या प्रवृत्ता वयं तु तं संबन्धं प्रमाणान्तरेणाप्रतिपाद्यमानाः समाख्यादर्शनेन प्रतिपद्यामहे तेन ज्ञायते पूर्वं समाख्या पश्चात्संबन्ध इति। वस्तुतस्तु प्रथममेव संबन्धः स चाप्रतीतोपि सत्तामात्रेणैव समाख्यां प्रवर्त्तितवान् यदि ह्यौषादिमतो स्यात्ततः प्रयोक्तुः प्रथमं संबन्धावगत्या भवितव्यम्। न च सा न भवतीति पर्यनुयुज्येमहि नित्यसंबन्धाश्रयणे। ननु तत्र नित्यप्रयुक्तया समाख्यया नूनं कश्चिदस्ति संबन्ध इति प्रतिपादिते ऽन्यथानुपपत्त्या शेषशेषिभावः पश्चाद्विज्ञायते तस्माद्यौगिक्यैव समाख्यया विनियोग इति सिद्धम्॥

## श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यम-

र्थविप्रकर्षात् ॥ १४ ॥

इदानीं षण्णामपि श्रुत्यादीनां बलाबलं विचार्यते । तच्च भिन्नविषयाणां न संभवतीति समवाये एकार्थोपनिपातो विषयत्वेनोदाहृतस्तत्र के चिदाहुर्विरोधग्रहणं कर्त्तव्यमिति । कुतः ॥

क्षीणात्यरुणयेत्यत्र समवाये हि सत्यपि ।
विरोधाभावतो नैव चिन्तयन्ति बलाबलम् ॥

एक एव ह्यरुणादिः शेषः श्रुत्या सामान्यक्रियासंबन्धी वाक्येन तद्विशेषस्य क्रयस्य प्रकरणेन ज्योतिष्टोमिकस्य सत्यपि वाचनिकप्रकरणसमवाये परस्परानुग्रहनिमित्तत्वादविरोध इति बलाबलविचारो न भवति निर्विशेषसामान्यानुपपत्तेः । क्रयस्वरूपमात्रप्रयुक्तत्वे चानर्थकत्वादपेक्षिते हि श्रुतिवाक्याभ्यां वाक्यप्रकरणे । तस्मात्कर्त्तव्यं विरोधग्रहणमिति । न वा कर्त्तव्यम् । कुतः ॥

समानविषयत्वं हि समवायोऽभिधीयते ।
स चैकार्थ्ये प्रमाणानां शेषाणामवगम्यते ॥

अरुणादौ तावन्नैव प्रमाणसमवायोऽस्ति । न ह्येकत्र संभवमात्रं समवायः किं तर्हि विषयैकत्वम् । इह चारुणस्य क्रियासंबन्धः श्रुत्या तस्य तु श्रुतिकल्पितस्य क्रियाकारकसंबन्धस्य भूयोऽप्यपेक्षावशेन क्रयविषयत्वम् । तावता च प्रयोजनानवाप्तेरपेक्षान्तरे सत्यपूर्वसंबन्धवतः क्रयस्य ज्योतिष्टोमार्थत्वमिति विषयनानात्वमतश्च सर्वेषां विनियोजकत्वमविरुद्धम् । न चात्र विप्रकृष्टग्रहणे सन्निकृष्टस्य बाधो दृश्यते न हि क्रयं गृह्णन्नरुणायाः क्रियासंबन्धं बाधते नापि ज्योतिष्टोमे कुर्वन्क्रय-

संबन्धम्। यत्र त्वेकः शेषस्तावानेव च संबन्धान्तरविरोधिनै-
केन प्रमाणेनान्यशेष्यर्थो विज्ञायते। परेण तद्बाधानुपपत्ति-
ना शेष्यन्तरार्थः। एकसंबन्धे च कृतार्थस्याकाङ्क्षाभावात्पुनर्वि-
नियोगान्तरानुपपत्तिः। तत्र प्रमाणयोः परस्परापहार्यसमान-
विषयत्वलक्षणः समवायः तथा यत्र शेषभेदेऽप्येकस्मिन्नेव
शेषिणि तुल्योपकारनिबन्धन एकेन प्रमाणेनान्यः शेषः
साधनत्वेन प्रतीयते अन्येनापरो न चैकसाधितोपकारः
शेषो शेषान्तरमपेक्षते तत्राप्येकविषयापहारित्वात्समवायः स
च विरोध एवं सति भवतीति समवायग्रहणेनैव सिद्धो विरो-
धः। यत्र पुनः स्पष्ट एव शेषभेदो यथा समिधो यजतीत्यादिषु
यत्र वा तस्यैव किं चिदाधिक्यं भवति यथाऽरुणायां व्या-
ख्यातम् तथा यत्र शेषिभेदो यथाग्नेयादिष्वष्टाकपालादी-
नां यत्र वा तद्गतमाधिक्यं यथा दर्शपूर्णमासाङ्गानामेवोपका-
रभेदस्तत्रापि विषयान्यत्वादसमवाय इति। यच्च श्रुत्या वि-
नियुज्यते यच्च समाख्यया तत्सर्वं तुल्यं यस्तु सर्वाङ्गजन्य
एकः प्रधानोपकारः तत्रैषामपर्यायविधानादेकमेव प्रमा-
णं शेषत्वं चेति व्यापारभेदादसमवायः। तथा यत्र स
एव शेषस्तस्मिन्नेव शेषिणि सन्निकृष्टेन विप्रकृष्टेन च प्रमा-
णेन विनियुज्यते तत्राप्येकस्यैव प्रमाणत्वेनेतरस्य प्रयोजना-
न्तरार्थत्वादसमवाय इति। तस्माद्विरोधविषयमेव समवाय-
ग्रहणम्। तत्र षण्णामपि एकत्रैव बलाबले कथयितव्ये क्रमव-
र्त्तित्वाद्वाचो युगपदशक्तेरेकैकस्य संप्रधारणा। यत्तु द्वितीयो-
पादानं तत्प्रतियोगिना विना बलाबलकथनाशक्तेस्तेनोच्यते
द्वयोर्द्वयोरिति। एकार्थवर्त्तित्वाद्वाच इत्यस्यापरा व्याख्या।

येयं बलाबलविशेषा प्रत्येकं श्रुत्यादिषु समवैति न समुदाये ।
तानि हि शेषविनियोगेनार्थवन्ति न बलाबलमतस्तस्याः प्रति-
प्रधानवृत्तित्वाद्यौगपद्येनैकैकस्य संप्रधारणायां कर्त्तव्यायां
द्वितीयोपादानविरोधबलाबलबाधानां प्रतियोगिन्यनुपपत्तिं
दर्शयितुमसंभवाद् द्वयोर्द्वयोः संप्रधारणेत्युक्तम् । तत्रैकैकस्य
पञ्चभिः पञ्चभिः सह विचारे कर्त्तव्ये यदेकैकेन सह क्रियते
तद्बाधितबाध्यस्य बाधकबाधकेन बाधस्य सुज्ञानत्वाद्यानि हि
श्रुतिबाध्यैर्लिङ्गादिभिर्बाध्यन्ते तानि श्रुत्या बाध्यन्तेतरामिति
न तया सह संप्रधारयिष्यन्ते । तत्र प्रथमं तावत्क्रमप्राप्तं श्रुति-
लिङ्गयोः संप्रधारणमिति । किमिहोदाहरणमिति । केवलपद-
प्रयोगाभावात्सर्वत्र वाक्यत्वे सति न श्रुतिलिङ्गयोः स्वसामर्थ्या-
तिरेको लक्ष्यते इति मन्यमानस्य प्रश्नः । वक्ष्यमाणविवेकाभि-
प्रायेणैन्द्र्या गार्हपत्यमुपतिष्ठत इति किमिन्द्रस्यैवोपस्थानं क-
र्त्तव्यमुतेन्द्रस्य गार्हपत्यस्य वाऽथ वा समुच्चितयोरथ वा गा-
र्हपत्यस्यैवेति । यदि लिङ्गं बलीयस्तत इन्द्रोपस्थानमथ तुल्य-
बलत्वं विरोधश्च ततो विकल्पोऽथ तुल्यबलत्वेऽविरोधस्ततः स-
मुच्चयोऽथ विरोधः श्रुतिबलीयस्त्वं च ततो गार्हपत्यस्यैवोप-
स्थानमिति । यत्तु सिद्धवद्गार्हपत्यार्थत्वाङ्गीकरणेन वचनात्त्व-
यथार्थमैन्द्री स्यादित्युक्तम् तदिह स्थापयिष्यमाणश्रुतिबली-
यस्त्वाभिप्रायेण । तेनैव सर्ववाक्यत्वाभिप्रायेण श्रुतिलिङ्गेर्थे वा-
क्यत्वभ्रान्त्या पुनः पृच्छति । का पुनरत्र श्रुतिः किं लिङ्गमिति ।
तत्रोत्तरं गार्हपत्यशब्दश्रवणं मन्त्रसामर्थ्यं चेति । परः पुनराह ।
यद्येवंविधपदसमूहात्मके श्रुतिलिङ्गे स्त तर्हि वाक्यं नाम न
किंचिदप्यस्ति । तदुच्यताम् अथ वाक्यं नाम किमिति । सिद्धा-

ग्तवादो तु तथैव शक्यविवेकज्ञानत्वं मन्यमान आह। संहत्यार्थमभिदधति पदानि वाक्यमिति। यद्यपि च न संहतानां कश्चिदेकोभिधेयस्तथापि गम्यमानाभिप्रायेणोक्तम्। अथ वैकवाक्यमाणार्थप्रयुक्ततया संघातत्वमापादितानि यदा स्वार्थमभिदधति तदा तद्भूतान्येव सन्ति वाक्यत्वं प्रतिपद्यन्तइति। यद्येवं तत उभयोरप्युदाहृतयोर्मन्त्रब्राह्मणयोर्वाक्यलक्षणयोगात् वाक्ययोरियं संप्रधारणा न श्रुतिलिङ्गयोरिति। यदि वावश्यं श्रुतिलिङ्गयोर्विरोधः समर्थनीयः ततः श्रुतिलिङ्गवाक्यानि लक्षणतो विवेक्तव्यानीदं नाम तेषां परस्परमन्तरमिति। तदभिधीयते॥

यच्छब्दस्योक्तिसामर्थ्यं तल्लिङ्गं त्रिविधा श्रुतिः।

विध्युक्तिविनियोगाख्या वाक्यं तु प्राङ्निदर्शितम्॥

ननु सामर्थ्यपूर्वकत्वादुक्तिविधिविनियोगानामैन्द्र्या गार्हपत्यमित्यत्रापि शब्दसामर्थ्यमस्ति। कदाचन स्तरीरसीत्यत्रापि चेन्द्राभिधानमित्यविशेष एव श्रुतिलिङ्गयोः प्राप्नोति। तथा हि॥

विध्युक्तिविनियोगा हि न विना शब्दशक्तिभिः।

न चेन्द्रशब्दसामर्थ्यमभिधाश्रुतिवर्ज्जितम्॥

सत्यमुभयत्रोभयमप्यस्ति।

किं त्वैन्द्र्याङ्गार्हपत्यस्य नोक्तिशक्त्यावगम्यते।

इन्द्राङ्गत्वमतिस्तस्या नाश्वरश्रुतिकारिता॥

या ह्यैन्द्र्या गार्हपत्यमित्येषा शक्तिस्तथैतान्येव पदानि प्रत्यर्थं लोके विनियुक्तानि.न मन्त्र ऐन्द्र्या गार्हपत्याङ्गम्। अन्यत्र गतया शक्त्यान्यस्याविनियोगात्स्वसामर्थ्यप्रवृत्तैस्तु शा-

ह्मणपदैः शक्त्या शक्त्यनपेक्षमङ्गत्वमभिधीयते । न चात्र सा-मर्थ्यं प्रथमं गृह्यते निवृत्ताभिधानान्यथानुपपत्त्यैव तस्य गम्यमानत्वात्, तेन ज्ञाते विनियोगे शक्तिः कल्प्यतइति नासौ विनियोगकारणम् । यद्यपि वस्तुतः प्रथमं विद्यते तथापि प्रमाणतः पश्चाद्गृह्यतइति कारकहेतुत्वे सत्यपि ज्ञापकत्वेनाकारणमित्युच्यते । यदि तु पौरुषेयमिदं भवेत्तथा सति वक्तुरभिधानशक्तिज्ञानं विनियोगाभिधानात्प्रथमतरं भवेत् । न त्वेवमस्ति वेदस्यापौरुषेयत्वात्तस्मात्सर्वपुरुषाणां प्रतिपत्तृत्वात्पश्चात्तनं शक्तिज्ञानमित्यक्षरश्रवणकृत एवायं गार्हपत्याङ्गत्वप्रत्ययः । कदाचन स्तरीरसीत्यत्र पुनर्यद्यपि इन्द्रशब्देनेन्द्रोऽभिधीयते तथाऽपि विनियोगो नाभिधीयतइति श्रुतेरव्यापारो न ह्यत्र कस्यचिच्छब्दस्य श्रवणादिन्द्रस्य शेषित्वं मन्त्रस्य शेषत्वं प्रतीयते । यथेतरत्र द्वितीयाश्रवणाद्गार्हपत्यस्येप्सिततमत्वमैन्द्याश्च तृतीयाश्रुत्या करणत्वं केवलं तु मन्त्रस्याभिधानसामर्थ्याद्विनियोगयोग्यता दृश्यते । न च तावता विनियोगोऽभिहितो भवति । न च विहितो मन्त्रस्याविधायकत्वात् ब्राह्मणवाक्ये त्वविधानं विधानं चोभयमपि निष्पन्नम् । ननु मन्त्रस्याप्यभिधानपूर्वकमेव सामर्थ्यकल्पनम् । सत्यमेवं न तु तद्विनियोगस्याभिधानम् किं तर्हि अर्थस्वरूपमात्रस्यान्यैव च तेन प्रथमं तदभिधानशक्तिः कल्प्यते अन्या च तद्बलेन विनियोगशक्तिः । कथम् ॥

यो हि यस्याभिधानाय शक्त इत्यवगम्यते ।
विनियोगे ऽप्यसौ शक्तो न ह्यशक्तो नियुज्यते ॥

ततश्च द्वितीयासामर्थ्याद्विनियोगः कल्पयिष्यते न प्रथमात्प्रथमेन हि विनियोगनिरपेक्षमिन्द्राभिधानमात्रं कृतमत

इत्येवंरूपो विवेकः प्रतिपत्तव्यः ॥

एकत्रासति सामर्थ्ये मन्त्रः शेषोऽभिधीयते।
अन्यत्रानुक्तशेषत्वं सामर्थ्यं संप्रतीयते ॥

अविद्यमानमेवैन्द्या गार्हपत्याभिधानसामर्थ्यमभिहितवि-
नियोगविधानात्कल्पनीयम्। विनियोगस्तु प्रथममेव क्लृप्तः।
इन्द्रं प्रति तु सामर्थ्यं क्लृप्तमालोच्य विनियोगोऽभिहितो
विहितो वेत्येतत्कल्पनीयम्। वाक्ये पुनः ॥

अर्थं प्रति न सामर्थ्यं न च शेषत्वमुच्यते।
केवलः पदसंघातः प्रत्यक्षमुपलभ्यते ॥

कथंभावदेशसामान्ययौगिकरूपाणां तु प्रकरणक्रमसमा-
ख्यानविवेकः सुज्ञान एवेति न पृष्टो न निरूपितः। तदेतत्सर्वे-
ष्वेव वाक्येषु समवेतं विविक्तं च दृश्यतइति। न हि किं चिदपि
वाक्यं शब्दसामर्थ्येनार्थाभिधानेन पदान्तरसन्निधानेन वा
विना विद्यते विवेकस्य पुरोदितः क्व चित्कस्य चित्पूर्वतरप्रती-
तेस्तद्दर्शयति। इह तावत्कदा चन स्तरीरसीति न विनियो-
गोऽभिधीयते न पदान्तरसन्निधेर्वा गम्यते किं तर्ह्येतस्यामृचि
न्द्रशब्द इन्द्राभिधानसमर्थो विद्यते शेषाणि च पदानि तेनैक-
वाक्यतां गतानीति समस्तो मन्त्र इन्द्राभिधानसमर्थो गम्यते
सोऽपि चेन्द्रः कर्माङ्गत्वाद् अभिधानार्ह इत्यसत्यपि वचने भ-
वत्यभिधीयतामित्युत्प्रेक्षा। गार्हपत्ये पुनर्विनैव मन्त्रसामर्थ्ये-
न विनियोगं ब्राह्मणमभिधत्ते इति बलाबलं चिन्तयितव्यम्।
अत्र के चिदाहुः। एवं तर्हि लिङ्गवाक्ये इत्येतस्मात्प्रागयं ग्र-
न्थो योजयितव्योऽथ वा नात्रैकवाक्यत्वादिन्द्रप्राधान्यमित्या-
दिः। कुतः ॥

लिङ्गत्वमभ्युपेतं चेदिन्द्रोपस्थानकल्पने ।
उभयत्रापि वाक्यत्वं कथं भूयोवकल्पते ॥

यत्र वाक्यद्वयमेतदित्युपन्यस्तं तत्रैवैतद् युज्यते वक्तुम्। अथ वा नानैकवाक्यत्वादिन्द्रप्राधान्यं गार्हपत्ये प्राधान्यं चोपस्थानस्येति। तथा ह्युभयत्राप्येकवाक्यत्वव्यापारनिराकरणमवकल्पते। अन्यथा तु मन्त्रस्य लिङ्गविनियोज्यत्वे पूर्वपक्षवादिनैवाभ्युपगते पुनस्तदनपेक्षमिन्द्रोपस्थानमप्येकवाक्यत्वकृतमेवेत्याशङ्क्य निराकरणमसंबद्धमेव स्यात्तस्मात्प्रमादादुत्कृष्टस्य ग्रन्थस्यापकृष्य व्याख्यानं कर्त्तव्यम्। न त्ववश्यमेतदादर्त्तव्यम्। भवत्येव हि बह्वीनां परिचोदनानां मध्ये परिचोदनापरिहारकालेपि पूर्वपरिचोदनापरिहारः। अपि च। यदाप्यथ वा नानैकवाक्यत्वादित्येतत्प्रथममुक्तं तदापि पुनरेवं तर्हि लिङ्गवाक्ये द्वृत्यत्र वाक्यग्रहणमसंबद्धमेव स्यात्। ततो यथान्यासमवस्थितेऽभ्युपेत्यवादमात्रेण पूर्वपक्षवादिनैकत्र लिङ्गत्वमुक्तमतोस्य वाक्यत्वानुशयशेषमपनयामीत्येवमाहाथ वा नानैकवाक्यत्वादिति। यद्वा ब्राह्मणगतमेवैकवाक्यत्वमकारणं विवक्षन् प्रसङ्गान्मन्त्रेप्युक्तवानिति व्याख्येयम्। तत्र वाक्यं ह्येतदैन्द्या गार्हपत्यमुपतिष्ठतइत्यस्याभिप्रायो यदैन्द्यास्तृतीयाश्रुत्या शेषत्वमात्रमनवगतशेषिविशेषं प्रतीयते। यत्तु गार्हपत्यमिति द्वितीयया किमपि प्रति शेषित्वमात्रं न तस्य लिङ्गेन सह कश्चिद्विरोधः। पदान्तरसंबन्धे ह्यसति यथार्थमेवैन्द्याः करणत्वं स्यात्। गार्हपत्यस्य वा यां कां चिदन्येयीं प्रति शेषित्वं भवेत्परस्परसंनिधानं तूभयोरिन्द्रोपस्थानं बाधते तच्च वाक्यमिति। नैतदेवमिति गार्हपत्याभिधानश्रुतिं तावदुपन्यस्यति। परस्परसंनिधानमपि

हि श्रुतिं पीडयित्वा शक्यमविरोधेन नेतुम्। यदि तु गार्हपत्यशब्दो गृहपतेरयमित्येवमिन्द्रमभिवदेत् यज्ञसाधनत्वेन वा लक्षयेदग्निसमीपं वा ततो लिङ्गाविरोधेनैव तत्संनिधिरुपपद्यते यतस्स्वयं समुदायप्रसिद्धाभिधेयापरित्यागेन वर्त्तते ततो विरुध्यतइति श्रुतिविरोधः। अथ वा नात्रैकवाक्यत्वादिति विभक्तिश्रुतिविरोधोपन्यासः। यदि हि सप्तम्यर्थं वा तृतीयार्थं वा द्वितीया वदेत्ततोपि नैव विरोधः स्याद्यतस्त्वोपिततमत्वमात्र तेन विरुध्यते। लिङ्गविरोधस्तु प्रागुक्त एवैकवाक्यत्वव्यापारनिराकरणमात्रार्थमुपन्यस्यते। कथं पुन(१)र्यथोक्तेन न्यायेनोभयथा विरोधसंभवे श्रुतिलिङ्गविरोध एव परिगृह्यते न वाक्यविरोधः। उच्यते॥

यथा शीघ्रप्रवृत्तित्वाल्लिङ्गादेर्बाधिका श्रुतिः।
तथैव विनियोगेपि सैव पूर्वं प्रवर्त्तते॥

यच्च शीघ्रतरं विनियुङ्क्ते तस्यैव प्रतियोगिना सह विरोधो लक्ष्यते। ननु च श्रुतिमात्रं न विरुध्यतइत्युक्तं कथं न विरुध्यते यदा प्रतिनियतावेतौ श्रुतिवाक्यसंबन्धावेकः शेषशेषिरूपोऽन्यो विशेषणविशेष्यात्मकः तत्र च श्रुतिरेवं वदति वाक्यलभ्यस्य विशेषस्यैवंविधं शेषशेषित्वमिति। लिङ्गं तु शेषशेषिसंबन्धेनैव सह विरुध्यते न वाक्यगम्येन विशेषणविशेष्यभावेनातस्त निष्प्रतिद्वन्द्विना वाक्येन यदा विशेषणविशेष्यभावः कृतः तदा श्रुत्या सह लिङ्गविरोध उपलभ्यमानो विचारयितव्योऽथ वा यदैवैन्द्र्येत्युक्तं तदैव तदर्थशास्त्रन्यायेनेन्द्रव्यतिरिक्तः

(१) पुनरयमिति क पु० पाठः।

कोऽप्युपस्थानाख्यः स च लिङ्गगम्येन्द्रविरोधीत्येतत्प्रतीयते । त-स्मात् श्रुतिलिङ्गयोरेवैष विरोध इत्युपपन्नो विचारः । किं ताव-त्प्राप्तं सर्वप्रमाणानि तुल्यबलानीत्यवगन्तव्यम् । कुतः ॥

> कचिद्यस्य प्रमाणत्वं स्वशक्तेरवधारितम् ।
>
> न ह्यन्यापेक्षया तस्य सा शक्तिरपगच्छति ॥

सर्वत्र प्रत्यक्षादावपि ह्ययेव गतिः प्रमाणस्वरूपं प्रमाणा-भासं च न तत्र यत्प्रमाणं तत्कदाचिदपि प्रमाणाभासो भव-ति योऽपि तदाभासः सोऽपि नैव प्रमाणं भवति । नित्यं च प्रमा-णाभासबाधो न प्रमाणस्यैव । न च तत्र बाध्यस्य प्रामाण्य-मभ्युपगतसाधनाश्रमत्वात्प्रमाणस्य श्रुत्यादिषट्कस्य च सम-स्तस्य स्वविषये प्रामाण्यं स्थापितम् । चैषां विषयान्तरसंचारो ऽस्ति यत्र दौर्बल्यमाशङ्क्यते न चैतदुपस्थापितं ज्ञानमनुत्प-न्नं शक्यं च वेदितुम् । न चोत्पन्नस्य स्वरसभङ्गुरत्वादुत्तरेण विनाशो न च संस्कारापनयनं स्मृतिहेतोः संस्कारस्य सर्वथा-नुच्छेदान्नाप्यनुष्ठानाख्यात्फलादिनियोगः शक्यते कर्तुम् । अनुष्ठानप्रत्ययस्य दृढत्वात्तस्मात्सर्वत्र तुल्यबलत्वादिकल्पः ॥

> बाधस्तु यदि कल्प्येत विपरीतः प्रसज्यते ।
>
> न हि पूर्वमबाधित्वा परेषां जन्म लभ्यते ॥

श्रुत्यादीनां हि पूर्वं पूर्वं शीघ्रतरं प्रवर्तते तेन पश्चात्तनस्य तदुपमर्देनैवात्मलाभेन भवितव्यम् । अतस्स विपरीतबाधप्र-सङ्गः । किं च ॥

> श्रुत्यादिनासमर्थस्य विनियोगो न कल्पते ।
>
> न सामर्थ्यादिरूपं स्यादेकवाक्यादिभिर्विना ॥

उत्पत्तिकाले यस्यान्यविषयसामर्थ्यमनवधृतं न तस्य तद्विनि-

योगकाले परावर्तयितुं शक्यते विनियोगस्तु सामर्थ्यानुसारीति युक्तमध्यवसातुम्। एवं यस्य येन सह संबन्ध एकवाक्यतया न विद्यते न तस्य तद्विषया शक्तिः कल्प्यते संबन्धे सति तदन्यथानुपपत्त्यैव शक्तिसिद्धिरिति वाक्यस्य बलीयस्त्वम् । तथा सर्वत्रैकवाक्यत्वमाकाङ्क्षामूलम्। अतस्तस्यामुपलभ्यमानायां तदेकान्तेन प्रतीयते तदभावे तु नैतदस्तीति पूर्वतरभावित्वादाकाङ्क्षात्मकं प्रकरणमेव ज्यायः। तद्विरोधिनी तु यान्येन सहैकवाक्यतावगतिः सा भ्रान्तिः तथा सर्वाकाङ्क्षाः सन्निहितावलम्बिन्यो भवन्ति । न ह्यसन्निहितमपेक्षितुं संबन्धुं वा शक्यमतो यत्र सन्निधिस्तत्र सर्वमिति बलीयस्त्वम्। समाख्या पुनः प्रत्यक्षमेव संबन्धं वदति तस्माद्विपरीतं बलाबलम्। अथ वा विरोधे सत्येतच्चिन्त्यते। न चेह विरोध उभयत्रापि विनियोगोपपत्तेः अतः समवायेपि सर्वेषां प्रामाण्यमिति प्राप्ते ऽभिधीयते। श्रुत्यर्थविप्रकर्षात्परं परमेषां बाध्यतइति। कुतः॥

विनियोक्त्री श्रुतिस्तावत्सर्वेष्वेतेषु संमता।
धीस्तस्याः सन्निकर्षेण विप्रकर्षेण च स्थिता॥

यदि श्रुतिवल्लिङ्गादीनामपि स्वतन्त्राणां प्रामाण्यमभविष्यत् तत एतदुपापत्स्यत । तेषां तु स्मृतिवत् श्रुत्यनुमानद्वारं प्रामाण्यं श्रुतिरेव ह्येकं प्रमाणम् । सा तु ग्रहणोपायषट्कानुरोधेन षोढावतिष्ठते। कथं पुनरेषां स्वातन्त्र्येण प्रामाण्यं न भवति। उच्यते । चोदनालक्षणो ऽर्थो धर्म इति स्थापितम्। तथा चोक्तमशब्दमनपेक्षं स्यादिति। नत्र प्रत्यक्षगृहीतानि यान्यक्षराणि विनियुङ्क्ते सा श्रोत्रग्रहणत्वात्

श्रुतिरित्युच्यते । यत्र त्वविनियोजकान्यक्षराणि प्रत्यक्षेण गृहीत्वा विनियोजकान्यर्थापत्त्या कल्प्यन्ते तत्र लिङ्गादीनि भवन्ति । ततश्चैवमर्थविप्रकर्षो भवति ऐन्द्रीविनियोगं हि प्रति श्रुतिलिङ्गयोः सह प्रस्थितयोर्यदा श्रुतेर्विनियोजकानि अक्षराणि दृश्यन्ते तदा लिङ्गं स्मरणसमर्थानि ततो यावत्तेषां प्रकरणाम्नानान्यथानुपपत्त्या विनियोजकानि कल्पयितुमारभ्यन्ते तावदितरैः प्रत्यक्षैर्विनियोगः प्रत्यायितः तस्मिंश्च प्रतीते मन्त्रोपि प्रकरणिनं प्रति निराकाङ्क्षीभूतः प्रकरण्यपि मन्त्रं प्रति तथा सति प्रकरणाम्नानस्यान्यथाप्युपपद्यमानत्वान्नेन्द्राभिधानश्रुतिकल्पनायामर्थापत्तिः प्रभवति । न च श्रुतिमन्तरेण विनियोगः सिध्यति । बहुधा वर्णितं चैतत्पुरस्ताद्यथा साकाङ्क्षे वेदार्थे यत् कल्प्यते तद्वैदिकं नेतरदिति । तस्मात् श्रुतिर्बलीयसी । न हि तस्याः किंचिदन्यदपेक्षणीयमस्ति यथा लिङ्गस्य श्रुतिरेवम् । आह च ॥

नापेक्षा यस्य यत्रास्ति स तस्माद्बलवान्भवेत् ।
यः पराधीनवृत्तिः स तद्बाधं कथमाचरेत् ॥

श्रुत्यादीनां हि पूर्वं पूर्वमुत्तरोत्तरनिरपेक्षं प्रवर्त्तमानं बलवद् भवति । परं परं तु पूर्वाधीनप्रामाण्यं न प्राप्नोति तस्यैव बाधं कर्तुम् । न हि श्रुतिमननुमाय लिङ्गादेः प्रामाण्यमध्यवसीयते इत्युक्तम् । नन्वेतदप्युक्तं नासमर्थं विनियुज्यत इति । सत्यमुक्तम् । अयुक्तं तूक्तम् । कुतः ॥

न श्रुतेर्विनियोक्तृत्वं लिङ्गाधीनं प्रतीयते ।
विज्ञाते विनियोगे तु तद्वशाच्छक्तिनिर्णयः ॥

विनियोगोत्तरकालं हि कथमेतत्प्रयोक्ष्यमाणीयत्वेऽप्यपेक्षिते

यथा शक्नोतीत्यवधारणा भवति । तत्र यद्यपि स्वरूपेण तद्विषया शक्तिर्न दृश्यते तथापि विनियोगदर्शनादेवानुमीयते तदुक्तम् । वचनात्त्वयथार्थमैन्द्री स्यादित्यत्र । ननु च प्रागविद्यमानसामर्थ्यस्य विनियोगो न संभवतीति पूर्वतरं सामर्थ्यमनुमातव्यम् । ततश्च प्रत्यक्षाल्लिङ्गाद् दुर्बलत्वापत्तिः । सत्यम् पूर्वभावित्वेन तत्कल्प्यते न तु पूर्वमेव गम्यते । न ह्यविनियुक्ताया ऐन्द्र्या गार्हपत्याभिधानसामर्थ्यप्रतिपत्तिकारणमस्ति निर्वृत्तविनियोगान्यथानुपपत्त्या पूर्वमपि विद्यमानं पश्चादेवानुमीयते । नन्वेवमपि तुल्योर्थविप्रकर्षः । तथा हि ॥

विक्षेपो यावता लिङ्गे स्यात् श्रुतेरनुमापके ।
लिङ्गानुमानभूतायां तावतैव श्रुतावपि ॥

सर्वथा ह्यदृश्यमानानुमानेन प्रत्ययविप्रकर्षो भवति । तच्चोभयत्रापि समानम् । सत्यमेतावत्समानं न तु तद्दुर्बलत्वं प्रत्युपयुज्यते । कुतः ॥

विनियोगाभिधानस्य दूरत्वाद्दुर्बलत्वधीः ।
तच्च पूर्वानुमायां स्यान्नोत्तरत्र कथं चन ॥

लिङ्गे हि प्रागभाविना श्रुत्यनुमानेन विना विनियोगाभिधानाभावाद्दूरत्वं भवति । श्रुतौ पुनरवगते विनियोगाभिधाने यस्मादेतदेवं तस्मान्नूनं किमपि सामर्थ्यमस्तीति पश्चात्प्रवर्तमानमनुमानं न विनियोगप्रत्ययविक्षेपं करोति । सत्र प्रस्थितयोर्हि प्रमाणयोर्येन विनियोगदेशं चिरेण प्राप्तिर्भवति स विक्षेपो दौर्बल्यकरो भवत्यवधारिते तु विनियोगे यद्यपि पश्चादनुमानसद्भावः भवति न तथापि कश्चिद्विप्रकर्षः । एतेन लिङ्गवाक्यादियुगलानि व्याख्येयानि । सर्वत्र हि परस्य पूर्व-

मननुमाय विनियोगानुपपत्तिः पूर्वेण तु कृते विनियोगे परस्य नान्तरीयकं सद्भावमात्रकल्पनमिति प्रतिपत्तिः स्याद्व । श्रुतेस्तावत्प्रत्यक्षत्वेन लिङ्गाद्बलीयस्त्वं युक्तम् । अथ लिङ्गवाक्यादीनामनुमीयमानश्रुतित्वादविशेषे सति किं कृतं बलाबलमिति । तदुच्यते ॥

एकद्वित्रिचतुःपञ्चवस्त्वन्तरणकारितम् ।
श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनामपीष्यते ॥

श्रुतिमात्रानुमानान्तरितो हि लिङ्गस्य श्रुत्यर्थः वाक्यस्य पुनर्लिङ्गश्रुत्यनुमानव्यवहितः । कथम् ॥

वाचकोऽनैकवाक्यत्वादिष्टातद्वाचिनां सताम् ।
कल्पयित्वाभिधाशक्तिश्रुतिः पश्चात्प्रकल्प्यते ॥

सर्वत्र हि मन्त्रे किंचिदेव पदं कर्मसमवेतमर्थं वदति । यथाग्नये जुष्टं निर्वपामीत्यग्निर्निर्वपामिपदे शिष्टानि त्वसमवेतार्थाभिधायित्वादप्रयोगार्हाणि सन्ति दृश्यमानैकवाक्यतान्यथानुपपत्त्याऽनुमितसामर्थ्याभिधानानि सन्ति स्वार्थमुपसर्जनीकृत्य तद्विशिष्टसमवेतार्थप्रकाशनेन प्रयोगार्थत्वं प्रतिपद्यन्ते । ततश्च श्रुतिमनुमाय विनियुज्यन्ते तत्राविरोधे सति सर्वमप्यनुज्ञायते । यदा दृश्यमानैकवाक्यत्वयोर्मन्त्रयोः पृथक् पृथक् प्रकाशयितव्यावर्थौ कर्मसमवेतौ दृश्येते तदोभयोरपि भेदेन प्रकाशकापेक्षणात् प्रकाशकयोश्च प्रकाश्यापेक्षणाद् विनियोगाय प्रस्थिते सति यस्य यत्र क्लृप्तं सामर्थ्यं स तत्र शीघ्रतरं प्राप्तवन्नान्यत्रैकवाक्यतया नेतुं शक्यते । नाप्यन्येभ्यस्तत्रागच्छद्भ्यः सावकाशं ददाति । कथम् ॥

एकवाक्यतया यावत्सामर्थ्यमनुमीयते।
सामर्थ्येन श्रुतिस्तावत्कल्प्यते विनियोजिका॥

समुदायो हि विनियुज्यमानो नावयवानविनियुज्य विनियोक्तुं शक्यते। तत्र पूर्वोत्तरयोर्भागयोरेकवाक्यत्वं प्रत्यक्षम् नैकार्थाभिधानसामर्थ्यं, भिन्नार्थाभिधानसामर्थ्यं त्वार्थं प्रत्ययदर्शनात्सिद्धम्। तत्र समुदायावयवविनियोगाय वाक्यसामर्थ्ययोः सह प्रस्थितयोरसमर्थविनियोगासंभवाद्यावद्वाक्येन पूर्वो भाग उत्तरार्थाभिधानसमर्थ उत्तरो वा पूर्वसमर्थ इत्यनुमीयते तावत्प्रत्येकभागवर्तिना सामर्थ्येन पूर्वस्यापि स्वार्थे परस्यापि स्वार्थे श्रुतिरनुमिता ततश्च यावदितरत्र विनियोजिका श्रुत्यनुमानाय प्रयत्यते तावदिह विनियोगे सिद्धे निराकाङ्क्षत्वात्प्रकरणाम्नानस्य न कश्चिदपि हेतुः श्रुत्यनुमानइत्यनुपजातमूलो विनियोगो बाध्यते। मन्त्रस्यापि हि पूर्वस्य पूर्वत्रार्थे शीघ्रं विनियोग उत्तरस्य चिरेण। तथोत्तरोत्तरस्य शीघ्रं पूर्वस्य तत्र चिरेण। शीघ्रविनियुक्तश्च मन्त्रश्चिरविनियोगमाद्रियते। तथार्थोपि प्रथमावगतमन्त्रावरुद्धो नेतरं गृह्णाति। स्वप्राधान्ये च संभवति न परोपसर्जनत्वं प्रतिपद्यते तस्माल्लिङ्गं बलीय इति भित्त्वा वाक्यं विनियोग इति। नन्वेवं सति निर्वपामीत्यादिना क्लृप्तसामर्थ्येन शीघ्रतरप्राप्तेनावरुद्धेर्थे विप्रकृष्टप्राप्तानां देवस्य त्वेत्यादीनां बाधादविनियोगः प्राप्नोति। न चैषां भिन्नप्रयोजनत्वात्समुच्चयस्तथा सत्येकवाक्यत्वाभावात्, दवश्यं चैतैर्यथा कथं चिन्निर्वाप एव प्रकाशयितव्यः नान्यप्रकाशनं कर्मानङ्गत्वप्रसङ्गात्। अतः समान-

विषयत्वात्समवाये सति वाक्यप्राप्यपदान्तरबाधेन भवितव्यमिति । अत्रोच्यते ॥

पदान्तराणि यत्राथं वदेयुः क्रमवर्त्तिनम् ।
तत्रैवमितरेषां तु वाक्यमप्यगतेर्वरम् ॥

यानि ह्यसमवेतार्थवचनानि तानि यदि स्वतन्त्रीक्रियन्ते ततोऽनर्थकानि भवन्ति । तेन क्लृप्तसंबन्धैर्निराकाङ्क्षीकृतोऽप्यर्थ इतरेषां साकाङ्क्षत्वात्पुनस्तत्प्रकाश्यत्वं प्रतिपद्यते । यथा प्रकरणपूरितानामपि क्रमेण पुनस्तद्धर्मप्राप्तिर्भवति । यथा प्रकृतौ निराकाङ्क्षीभूता धर्मा विकृतीर्गमिष्यन्ति तथा च क्लृप्तौ व्याख्यातम् । तस्मादेवमादीन्यपि संबध्यन्ते । येषां तु प्रकाश्योऽर्थः समवेतो दृश्यते तेषामनभिधेयेनासंबध्यमानानामप्यर्थवत्तास्तीति नानर्थक्यनिमित्तमवकाशं लभन्ते । सर्वेषामेव च श्रुत्यादीनामानर्थक्यप्रतिहतानां दुर्बलैरपि बाध्यत्वमिष्यते । तद्यथा व्रीह्यादीनां प्रोक्षणादीन् प्रति श्रुत्या शेषित्वं प्राप्नुवदप्यतिलङ्घ्य प्रकरणलभ्यापूर्वसाधनत्वकृतः संबन्धो भविष्यति । ततोऽवस्थितवाक्याङ्गस्य बलीयस्त्वम् । तथा च भक्षानुवाके दर्शितम् । वाक्यप्रकरणयोः प्रकरणमर्थविप्रकर्षाद्दुर्बलम् । तथा हि ।

प्रत्यक्षा संगतिर्वाक्ये न च प्रकरणेऽस्त्यसौ ।
आकाङ्क्षातोऽनुमातव्या तावता विप्रकृष्टता ॥

प्रकरणे हि स्वार्थपरिपूर्णानामङ्गाङ्गिवाक्यानामुपकार्योपकारकत्वाकाङ्क्षामात्रं दृश्यते वाक्ये तु प्रत्यक्षः संबन्धः । ततश्च यावत् प्रश्नितयोर्यावत्प्रकरणेनैकवाक्यता कल्प्यते तावद्वा-

क्येनाभिधानसामर्थ्यं यावदितरत्र वाक्येन सामर्थ्यं तावदिह सामर्थ्येन श्रुतिर्यावदितरत्र सामर्थ्येन श्रुतिस्तावदितरत्र श्रुत्या विनियोगोऽभिहित इति विच्छिन्नायामाकाङ्क्षायां अत्यनुमाने मूलाभावादिहते ऽकल्पितमपि शेषत्वं निष्पत्तिमगत्वान्तरैव विलीयते तस्माद्वाक्यं बलीयः । तथा क्रमप्रकरणयोः क्रमस्यार्थविप्रकर्षः । कथम् ॥

आकाङ्क्षातः प्रभृत्येकं श्रुत्यर्थं प्रति गच्छति ।
तामपि त्वन्यतो लब्ध्वा श्रुतिरेकस्य कल्प्यते ॥

क्रमो नाम निरपेक्षाणां सतां पाठानुष्ठानदेशसाम्यमात्रम् यदि त्वाकाङ्क्षावतः सन्निधावाम्नायेत ततः प्रकरणमेव स्याद्‌च च प्रायेण महाप्रकरणेऽनिपातिन्यो विकृतय उदाहरणम् ॥ तासु हि यस्माकृताङ्गमध्यपातित्वेन नोत्पन्नं तत्पुरस्तात्परस्ताद्वा व्यवस्थितक्रमभावभवति । प्रकरणस्य कृप्तोपकारैः प्राकृतैर्व्यावर्त्तितत्वात्तत्र यन्निवृत्ताकाङ्क्षस्य कस्य चित्समीपे पठ्यते ऽन्यस्य चाकाङ्क्षा तत्तद्भाभ्यां गृह्यमाणं यावत् क्रमवतो निवृत्तमसतीमाकाङ्क्षामुपजनयति तावत्प्रकरणवता सहैकवाक्यतां गच्छति यावच्चेतरत्रैकवाक्यता भवति तावत्प्रकरणिनं प्रत्युपकारसामर्थ्यकल्पना । यावदितरत्रासौ तावदिह श्रुत्यनुमानं यावदितरत्र श्रुतिरनुमास्यते तावदिह सिद्धे विनियोगे ऽनुमानबीजहीनेनाकृप्तश्रुति सर्वमप्रमाणीभवति ॥ तथा क्रमसमाख्ययोः क्रमे वेदकल्पितमेवाङ्गाङ्गिनोर्देशसामान्यनिमित्तं परस्परपर्युपस्थापनम् । सर्वत्र हि केन चिदभिसद्देशेन संबन्धोवकल्पते न च समाख्यानवतः किं चिद्देशसामान्यं वेदकृप्तमुपलभामहे येन संबन्धाभिमुख्यसंभ-

वः । ननु च समाख्या संबन्धमेवाभिदधाना प्रवर्त्तत इति श्रुतितुल्या प्राप्नोति ॥ नैतदेवम् ॥

अन्य एव हि संबन्धः कल्प्यते यः समाख्यया ।
अन्यश्च शेषशेषित्वं यच्छ्रुत्या प्रतिपाद्यते ॥

अर्थानां प्रथमं केन चित्प्रकारेणानवगतसंबन्धानां समाख्या प्रवर्त्तते । सा च शेषशेषित्वं तावन्नैव प्रतिपादयति केन चित्संबन्धेनोपपद्यमानत्वात्संबन्धमात्रमपि नैवाभिधत्ते । नहि यौगिकैः संबन्धोभिधीयत इत्युक्तम् । समाख्या ऽन्यथानुपपत्त्या ऽनुमीयते संबन्धमात्रस्य चैतद्रूपं किं चिदभिन्नमेषामस्तीत्यवगमः ततश्चापन्नं क्रमाज्जघन्यत्वम् । न हि किं चिदत्र सामान्यमनुमातव्यं देशसामान्यस्य प्रत्यक्षत्वात् इह तु तत्पदस्याप्रत्यक्षत्वादानुमानिकत्वमिति विप्रकर्षः । समाख्या हि यावत्किं चित्सामान्यमस्तीति कल्पयति तावत्क्रमेण नूनमनयोः का चिदपेक्षास्ति येनेत्थं समानदेशौ पठिताविति प्रकरणं कल्प्यते । यावच्च किं चित्सामान्यमपेक्षा कल्पयति तावदितरश्चैकवाक्यता क्लृप्ता तथा यावदिहैकवाक्यता भवति तावदितरश्चोपकारसामर्थ्यसिद्धिः । यावच्चेहोपकारसामर्थ्यकल्पना तावदितरेण श्रुतिरुत्पादिता(१) । ततश्च यावदिह श्रुतिमनुमातुमुपक्रमते तावदितरत्र विनियोगे सिद्धे निराकाङ्क्षीभूते प्रकरणपाठे सर्वमेतत्प्रचितमप्यरिपक्वविच्छेदादामसस्यमिव लूनं निर्बीजं भवति । तस्मादर्थविप्रकर्षात्तु परं परं बाध्यत इति सिद्धम् । आह च ॥

निःश्रेण्यारोहणप्राप्यं प्रतिमाश्चोपपादि च ।

(१) आसादितेति २ पु० पाठः ॥

एकमेव फलं प्राप्नुमुभावारोहतो यदा॥
एकसोपानवर्त्यैको भूमिष्ठश्चापरस्तयोः।
उभयोश्च जवस्तुल्यः प्रतिबन्धश्च नान्तरा॥
विरोधिनोस्तदेको हि तत् फलं प्राप्नुयात्तयोः।
प्रथमेन गृहीतेऽस्मिन्पश्चिमो ऽवतरेन्मुधा॥
तेन यद्यपि सामर्थ्यं प्रत्येकं सिद्धमन्यदा।
तथापि युगपद्भावे जघन्यस्य निराक्रिया॥
अन्यथैव हि ग्रन्थेषु दुर्बलैरपि चर्यते।
अन्यथा बलवद्भिस्तैः सर्वशक्तिश्रये सति॥

तस्मान्नैतदालम्बनं युक्तं यत् क्व चिदुत्तरेषां प्रामाण्यमिष्टं तस्माद्बलवद्विरोधेऽपि तेन भवितव्यमिति। यत्तु प्रमाणाभासो बाध्यते न प्रमाणमिति तच्च ब्रूमो ऽयमपि प्रमाणाभास एव। कथम्॥

नैवैतेषां प्रमाणत्वमासीदत्र कदा चन।
अन्यत्र दृष्टमेतत्तु समारोपेण कल्पितम्॥

न हि यत्र विषये बाधस्तत्रैषां प्रमाणत्वम्। किं तर्हि प्रदेशान्तरे केवलानामुपलक्षितं सामान्यतो दृष्टरूपेणात्रापि प्रतिभाति। तत्तु बलीयसा ऽपहृतविषयत्वात्सीदतीति पश्चाद्भ्रान्तित्वेनाध्यवसीयते। अथ वा यस्तत्रास्य व्यापार आसीत्तमिहापि प्रक्रमतएव। स तु जववतान्येन विषये ऽपहृते मूलच्छेदाद्यदा तं न गच्छति तत्किं क्रियतां तेन भृगतृष्णादिवदेवाप्राप्य प्रमाणमेव बाध्यते। अनुत्पन्नमेव चेह श्रुत्यभावाल्लैङ्गिकज्ञानं बाध्यते आन्तरालिकज्ञानमिथ्यात्वकल्पनयेति नोत्पत्तिसामान्येन तुल्यबलत्वमतश्च ज्ञानरूक-

रोच्छेदनादिरूपो बाधो नैवाशङ्कितव्यः । यो ऽपि चो-त्पन्नबाधः तमपि फलवियोगात्मनोपपादयिष्यामः । ए-वं तावद् द्वयोर्द्वयोर्विरोधे वर्णितम् अर्थसिद्धत्वात्तु भाष्य-कारेणेतरैः सह न प्रदर्शितं व्याख्यातृभिस्त्वेवं प्रपञ्चयि-तव्यम् । यथा श्रुतिवाक्ययोर्विरोधे अरुणादिर्वाक्यसामर्थ्या-दानन्तर्यसामानाधिकरण्याभ्यामेकहायन्यादिशेषत्वं प्राप्नु-वत्तृतीयाश्रुत्या क्रयसंबन्धित्वेन विज्ञायते द्वितीयसोपानभू-गतारोहकयोरिव ह्यत्र यावद्वाक्यं सामर्थ्यं कल्पयति ता-वच्छ्रुत्या विनियोगः कल्पित इति महदन्तरम् । श्रुति-प्रकरणयोर्विरोधे प्रकरणादेकविंशत्याद्यनुवचनानां दर्शपूर्ण-मासाङ्गत्वे प्राप्ते श्रुत्यैव प्रतिष्ठाकामादिषु पुरुषार्थावधा-रणात्प्रकरणबाधः । अनुवचनानां च क्रियात्मकत्वादितिक-र्त्तव्यतारूपत्वात्प्रकरणग्राह्यत्वेन तद्विरोधोदाहरणत्वं तिस्र एव साह्नस्योपसदो द्वादशाहीनस्येति तु द्वादशत्वस्याक्रि-यात्वादितिकर्त्तव्यतात्मकत्वे सति कथंभावरूपप्रकरणग्रा-ह्यत्वानुपपत्तेः सन्निधिमात्रेण प्रकरणकल्पनापूर्वकसंबन्धा-ध्यवसानाच्छ्रुतिस्थानविरोधोदाहरणत्वं युक्तमित्येके । त-त्तु नैवमाश्रितम् । कुतः ॥

> यदि द्रव्यगता संख्या स्वतन्त्रा वा भवेदियम् ।
> नेत्थंभावेन गृह्येत क्रियारूपेण वर्जनात् ॥
> इतिकर्त्तव्यताप्रस्थां येनोद्दिश्योपसत्क्रियाम् ।
> द्वादशत्वविधिस्तेन कथंभावेन गृह्यते ॥
> इहापि च कथंभावविनियुक्तोपसद्गता ।
> यावत्संख्यैकवाक्यत्वसामर्थ्यं कल्पयिष्यति ॥

तावत्प्रत्यक्षया श्रुत्या षष्ठ्यं ऽहीनाङ्गतां गता।
नैव ह्यहर्गणादन्यदहीनाख्यं हीनमुच्यते ॥
श्रुतिक्रमविरोधे किमुदाहरणमिति।
उच्यते रशनाधर्मा दर्भमय्यादयः क्रमात्।
अग्निषोमीयशेषाः स्युः श्रुत्या यूपाङ्गतां गताः ॥
एतद्यूपपरिव्याणशेषो हि रशना श्रुता।
सह धर्मैर्न सा याति क्रमेण पशुशेषताम् ॥
यावत्प्रकरणादीनि तस्याः कल्पयति क्रमः।
चतुर्भिस्तैर्व्यपेतत्वाच्छ्रुत्या तावत्स जीयते ॥
आकाङ्क्षामात्रमेवैकं यावत्कल्पयति क्रमः।
दूरेण तावदप्राप्तां रशनां हरति श्रुतिः ॥

श्रुतिसमाख्ययोर्विरोधे किमुदाहरणम्। पौरोडाशिकमिति समाख्याते दर्शपूर्णमासकाण्डे पठितो मन्त्रः साधारणे प्रकरणे वर्त्तमानः क्रमेण चानुमीलितलिङ्गेनाविनियुज्यमानः पुरोडाशस्यैव वा प्राथम्यात्प्राप्तवन् श्रुत्या सान्नाय्यार्थशाखाङ्गत्वेन विधीयते। इषे त्वेति शाखां छिनत्तीति। तत्रापि यावत्समाख्यया किं चित्सामान्यं कल्प्यते तावच्छ्रुत्या विनियुक्तत्वात् प्रकरणवाक्यसामर्थ्यश्रुतिव्यकल्पितास्त्वेव बाधः। एवं लिङ्गस्य प्रकरणादिविरोध उदाहर्त्तव्यः। तत्र प्रकरणविरोधे तावत्पूषानुमन्त्रणान्युदाहर्त्तव्यानि। यावच्च प्रकरणेनैकवाक्यत्वं कल्प्यते तावल्लिङ्गेन श्रुतिस्तथा यावदितरत्र प्रकृताग्न्यादिप्रकाशनसामर्थ्यं तावदिह विनियोग इति बाधः। लिङ्गक्रमयोर्विरोधः स्तुतशस्त्राधिकरणे दर्शितोऽर्थेन त्वपकृष्येतेति स्थितोदाहरणमपि यथाभ्यनुज्ञापना-

भ्यनुज्ञयोः प्रज्ञातक्रमयोरुपह्वत उपह्वयस्वेत्येवं मन्त्रावाम्नातौ । तौ देशसामान्यात्तथैवाङ्गतया प्राप्तौ । उपहूत इत्यनुज्ञापने(१) उपह्वयस्वेत्यनुज्ञायाम् । न तु तथा सामर्थ्यमस्तीति विपरीतं शेषत्वम् । यावद्धि स्थानेन प्रकरणामुत्यायैकवाक्यत्वं कल्प्यते तावल्लिङ्गेन श्रुतिं कल्पयित्वा साधितो विनियोग इत्यकल्पितलिङ्गश्रुतिपदकस्यैव क्रमस्य बाधः । तथा परिव्याणकरणक्रियमाणानुवादिनोः परिवीरसि युवा सुवासा इति वाग्नीषोमीयपरिव्याणाङ्गत्वे प्राप्ते लिङ्गात्सवनीयार्थद्वितीयपरिव्याणाङ्गत्वमपि । कथम् । न मनोताग्नीषोमीयक्रमबाधनसमर्थेन(२) लिङ्गेनाग्नेयसवनीयपशुयागाङ्गमिति चेत् न ॥ वचनात्त्वयथार्थमैन्द्री स्यादितिवत् बलवत्तरश्रुतिकृतविनियोगकल्पितलक्षणाद्वारेणाग्नीषोमीयाङ्गत्वादेवं ह्याह ॥ यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्येति ॥ अनया हि श्रुत्या लिङ्गेनोत्कृष्यमाणा मनोता वारिता द्विदेवत्येऽप्येकदैवत्यैव न केवलाग्निदैवत्यत्वेनाग्नीषोमीयादुत्कारणीयेत्यर्थः । यद्देवकारं स्वस्थानादपनीय यथाक्रमं कार्यैवेत्यत्र संयोजना कार्येत्यवधार्यते । लिङ्गसमाख्याविरोधे तु भक्षानुवाके ग्रहणादिवाक्यानि समाख्यानाद्भक्षाङ्गत्वेन संबन्धसामान्यादिकल्पनया भक्षाङ्गत्वविनियोगाय प्रस्थितानि लिङ्गेन ग्रहणावेक्षणसम्यक्करणेषु विनियुज्यन्त इति स्थितम् । याज्यासमाख्याबाधेन च मनोदृचा पृथुपाजवत्योश्च लिङ्गेन सामिधेनीत्वेन विनियोग इत्युक्तम् । वाक्यक्रमयोर्विरोधे

(१) अनुज्ञायते इति २ पु० पाठः ॥

(२) सामर्थ्येनेति २ पु० पाठः ॥

परिव्याणकरणक्रियमाणानुवादिपरिवीरसिपरिवीतपदव्यतिरि-क्तपदानां युवां सुवासा आगात् स उ श्रेयानित्येवमा-दीनां लिङ्गविनियुक्तपरिवीतपदैकवाक्यत्वात्सवनीयपरिव्याणे विनियोगः। वाक्यसमाख्ययोर्विरोधे भक्षानुवाक एव भक्षा-समित्येवमादिषु ग्रहणादौ विनियुज्यमानेषु तदेकवाक्यग-तशेषपदावृत्तिरुदाहर्त्तव्या॥ तथाध्वर्यवादिसमाख्यानात् ज्यो तिष्टोमादिप्रधानेषु तदर्थेष्वेव प्राप्नुवत्सु स्वर्गकामाद्येकवा-क्यत्वादर्थमात्रविषयत्वं विज्ञायते। ननु च श्रुतिरेवैषा. भवेन्नात्र कस्य चिच्छब्दस्य श्रवणादेतद्विज्ञायते लिङ्गा क-र्तुरनभिधानात्। किं तर्हि पदद्वयसन्निकर्षादेवैतल्लक्षणा-या सामानाधिकरण्यादवगम्यते तस्माद्वाक्येनैव समाख्या बा-ध्यते इति। प्रकरणसमाख्ययोर्विरोधे पौरोडाशिकसमा-ख्यातब्राह्मणाख्यातानां(१) प्रकरणात्साान्नाय्योपांशुयाजार्थ-त्वमित्युदाहरणम्। एवं तावदेकस्य शेषस्यानेकं शेषिणं प्र-ति नीयमानस्य विरोध उदाहृतम्(२)। एतयैव तु दिशा ऽनेक-स्य शेषस्यैकं शेषिणं प्रति नीयमानस्य विरोध इदानीमुदा-हर्तव्यः। तद्यथा श्रुतिलिङ्गयोर्विरोधे ऐन्द्र्या गार्हपत्यमुपतिष्ठत-इति मन्त्रकरणकव्यापारविधाने कृते लिङ्गात्कस्मिंश्चिदाग्नेये मन्त्रे शेषत्वेन प्राप्नुवति श्रुत्यैन्द्री विनियुज्यते तदवरुद्धे चोपस्थाने नेतरस्यावकाशो विद्यते। श्रुतिवाक्ययोर्विरोधे य-ज्ञायज्ञीयप्रगाथैकवाक्यभूतगिरापदप्राप्ताविरापदविधानमुदा-हरणम्। तथा विश्वेषां देवानां श्रुत्यामित्येव शेषो हि

---

(१) ब्राह्मणाम्नातानां प्रयाजादीनामिति २ पु० पाठः॥

(२) विरोध उदाहृत इति २ पु० पाठः॥

तेषां वाक्येन बाधिते तद्दुर्बलप्रमाणत्वात्तया श्रुत्या निराकृतम् । श्रुतिप्रकरणयोर्विरोधे प्रतिष्ठाकामदर्शपूर्णमासप्रयोगे प्रकरणात्पञ्चदशसंख्यसामिधेन्यनुवचनेऽङ्गत्वेन प्राप्ते श्रुत्यैकविंशतिसंख्यानुवचनान्तराङ्गत्वावगमात् प्राकरणिकनित्यानुवचनबाधः । श्रुतिक्रमविरोधे

पशुकामप्रयोगे च क्रमेण चमसाङ्गता ।
श्रौताद्गोदोहनात्तत्र चमसस्य निराक्रिया ॥

श्रुतिसमाख्याविरोधे

वाजपेयः समाख्यानात्प्राप्तोऽध्वर्युकर्तृकः ।
श्रुत्या स्वाराज्यकामस्य तथाध्वर्योर्निराक्रिया ॥

तथा च यजमानस्य याज्येत्युदाहरणम् । क्रतुयाजेषु हि हौत्रसमाख्यया होतुः प्राप्ता याज्या यजमानकर्तृकत्वेन कर्तृसंबन्धवाचिन्या षष्ठीश्रुत्या प्रतिपाद्यते (१) लिङ्गवाक्यविरोधे

स्योनादेरपि शेषत्वं वाक्येन सदनं प्रति ।
सीदेत्यस्यैव लिङ्गेन तेनायं पूर्वबाधनः ॥
तथा निर्धारणे तस्मिन्सीदेत्यस्यापि शेषता ।
स्योनादेरेव लिङ्गेन तस्मात्स परबाधनः ॥
अनेकशेषिशेषत्वात्पूर्वमेतावुदाहृतौ ।
अनेकशेषसंबन्धात्संप्रत्येकस्य शेषिणः ॥
पूर्वं स्योनं तइत्यादि सदने साभिघारणे ।
वाक्येनाङ्गतया प्राप्तं लिङ्गात्कुर्वे ऽभिघारणे ॥
तस्मिन्सीदेत्ययं वाक्यात्प्राप्तः शेषो ऽभिघारणे ।
लिङ्गात्तु सदनस्यैव तत्रैवातः प्रयुज्यते ॥

(१) प्रतिपद्यते इति २ पु० पाठः ॥

एकैकस्मिंस्तु शेषत्वं वाक्यात्प्राप्तं द्वयोर्द्वयोः।
एकैकस्य तु लिङ्गेन तच्च संप्रति गृह्यते॥
एकस्मिन्नेव मार्गे तु यत्संकीर्णचतुष्टयम्।
अभाणि भाष्यकारेण विवेक्तव्यं तदात्मना॥

लिङ्गस्य प्रकरणक्रमसमाख्याविरोधे निर्वापादिषु लिङ्गेन देवस्य त्वेत्यादिना प्रकरणप्राप्तमन्त्रान्तरबाधः प्रथमस्य काम्यस्यैन्द्राग्नस्य क्रमात्सामिधेनीकार्यप्राप्तस्य याज्यानुवाक्यायुगलस्य लिङ्गेन बाधः समाख्यया मनोताच्चर्चा सोमारौद्रियेषु याज्यानुवाक्यात्वेन प्राप्तानां सोमरुद्रलिङ्गाभिर्याज्यानुवाक्याभिर्बाध इत्युदाहरणानि। वाक्यप्रकरणयोर्विरोधे पूर्वेद्युरमावास्यायां वेदिं करोतीति उदाहरणम्। प्रकरणेन हि हविरधिवासनोत्तरकालं यद्विधानं तस्य ग्रहणं प्राप्नोति अमावास्यासमभिव्याहारेण तु पूर्वेद्युः। न चात्र श्रुतित्वं न हि सप्तमी शेषशेषिसंबन्धं वदति, यत्त्वधिकरणत्वमभिधत्ते तत्तत्कर्मणो ऽनुपपन्नमेव तस्मात्पदसन्निधानेनैष संबन्धः स च शीघ्रतरं भवतीत्युक्तम्। वाक्यक्रमयोर्विरोधे किमुदाहरणम्। ज्योतिष्टोमे काम्यनैमित्तिकेषु प्रति यत्कल्पेषु प्रतीकग्रहणात्पादमात्रं श्रुत्वा विनियुज्यते तत्र द्वितीयपादात्प्रभृति यथासंख्यक्रमेण नित्यानामेवर्चां प्रसङ्गस्तद्यथा वृषा पवस्व धारयेति राजन्याय प्रतिपदं कुर्यादित्यत्र पवमानायेन्दवे अभि देवां इयक्षते इत्येताविव द्वितीयतृतीयपादौ प्राप्नुतः वाक्यात्तु मरुत्वते चमत्सरः विश्वा दधान ओजसा इति। ननु विभक्तिभेदादत्र लिङ्गविरोधः स्यात्। नैष दोषः। सर्वेषां सोमलिङ्गत्वाद्विभक्तिभेदेन त्वेकवाक्यत्वमेव नोपपद्यते। तथावद्धाकाङ्क्षापूर्वकमेकवाक्यत्वादि

कल्प्यते तावदितरेणान्तर्यामसमानविषयत्वाच्च सामर्थ्यादि क-
ल्पयित्वा विनियोगः कृत इति बलीयस्त्वम् । वाक्यसमाख्य-
योर्विरोधे तस्मान्मैत्रावरुणः प्रेष्यति चानु चाहेति हौत्रसमा-
ख्याते प्रवचने प्रैषानुवचनमाम्नातं तस्य कर्तृविशेषाकाङ्क्षि-
णः समाख्यया होता प्राप्नोति वाक्येन मैत्रावरुणः एकेन च कृ-
तार्थस्य न कर्त्रन्तरापेक्षा भवति । तत्र शीघ्रतरप्राप्ते मैत्राव-
रुणे प्रकरणकल्पनां यावत् प्राप्ता समाख्या बाध्यते । न चायं
श्रुतिविरोध आख्यातपदेन कर्त्तुरनभिधानान्मैत्रावरुणपदे
च कारकविभक्तिप्रयोगाभावात् । प्रकरणक्रमयोर्विरोधे (१)
गिरापदैरापद एव स्तोत्रापेक्षयोदाहरणम् । अग्निष्टोमसाम्नः
क्रमेण गिरापदं प्राप्नोति प्रकरणादैरापदम् । तच्च बलीयः
पूर्वं तु सामापेक्षयोदाहृतमासीदित्यसंकीर्णविषयत्वम् । प्रक्रि-
यासमाख्ययोर्विरोधे तस्मान्मैत्रावरुणः प्रेष्यति चानु चाहेति ए-
तदेव ज्योतिष्टोमं प्रत्युदाहरणम् । तस्य हि समाख्यया हो-
तृकर्तृकं प्रैषानुवचनं प्राप्नोति । प्रकरणात्तु मैत्रावरुणकर्तृ-
कं निर्णीयते प्रैषानुवचनस्वरूपापेक्षं च पूर्वत्रोदाहरणमिति
भेदः । क्रमसमाख्ययोर्विरोधे किमुदाहरणम् । काम्ययाज्या-
काण्डाधीतयोरैन्द्राग्नयुगलयोरुभयोरपि विकल्पेन कर्मद्वये-
ऽपि प्रयोगः समाख्यानुरोधेन प्राप्नोति क्रमबलीयस्त्वात्तु प्र-
थमस्य प्रथमं द्वितीयस्य द्वितीयमेवेति व्यवस्था लिङ्गं तु पक्ष-
द्वयेऽपि तुल्यार्थमिति क्रमसमाख्ययोरेव विरोधः । एवं शेषैकत्वे
शेष्येकत्वे च श्रुत्यादिसमवायश्चिन्तितः यथा चैषामर्थविप्रक-

(१) क्रमप्रकरणयोर्विरोधे इति २ पु० पाठः ॥

पादिजातीयैः सह बलाबलमेवं सजातीयैरपि यत्र हेतुसामान्यं तत्र दर्शयितव्यम्। तद्यथा श्रुतेरेव तावत्सामान्यविशेषादिभावेन शेषविषयः समवायः पुरोडाशं चतुर्द्धा करोतीत्यविशेषश्रवणादग्नीषोमीयादावपि प्राप्तवदाग्नेयं चतुर्द्धेति तु विशेषश्रवणेन विशेषे चतुर्द्धाकरणमुपसंह्रियते। तथा शेषिसमवाये यदाहवनीये जुहोतीति सप्तमीश्रुत्या जुहोतिसामानाधिकरण्येनावभृथे ऽप्याहवनीयः प्राप्यमाणो विशेषसंयुक्तया ऽप्यवभृथे नेत्यनया बाध्यते। संदिग्धासंदिग्धत्वेन च बलाबलविशेषो भविष्यति। एवं पौर्वापर्याविरोधाङ्गगुणविरोधादिष्वपि श्रुतिद्वयमुदाहर्त्तव्यम्॥

तथा पशवङ्गमेकत्वं पदश्रुत्या प्रतीयते।
समानप्रत्ययश्रुत्या बलीयस्या क्रियाङ्गता॥
तथा धात्वर्थकर्मत्वे पदश्रुत्योपपादिते।
भावनाया विधिश्रुत्या पुरुषार्थस्य साध्यता॥

तथा लिङ्गद्वयविरोधे स्योनं ते सदनं कृणोमीत्येवोदाहरणं द्वे हि तत्र लिङ्गे परस्परैकवाक्यतागमनसामर्थ्यात्मकमेकमर्थाभिधानशक्तिरूपमपरं तच्च श्रुत्यनुमानस्य प्रत्यासन्नविप्रकृष्टमितरद्वाक्यादपि जघन्यत्वादित्युक्तं भाष्ये। वाक्ययोर्विरोधे पञ्चदश सामिधेनीरनुब्रूयात् सप्तदश वैश्यस्येत्येतदुदाहरणम्। उभयत्रापि हि सामानाधिकरण्यादेकवाक्यत्वे कृते विनियोगे सति निमित्तविशेषसंयोगात्सप्तदश्यं बलीयो भवति। प्रकरणयोर्विरोधे अभिक्रामं जुहोतीत्युदाहरणम्। महाप्रकरणेन ह्यस्य दर्शपूर्णमासार्थता ऽवान्तरप्रकरणेन तु प्रयाजार्थता। तच्च बलीयस्तत्र हि प्रत्यासत्तेरननुभूते महाप्र-

करणासंस्पर्शे पूर्वतरं वाक्यस्थानीयः संबन्धोवकल्पते । क्रमयोर्विरोधे काम्ये एव याज्याकाण्डे पौर्वापर्यप्रत्यासत्तिक्रमेण तयोरैन्द्राग्नीययोर्युगलयोरनियमेनेष्टिद्वयेप्यनियमेन प्राप्तवतोर्यथासंख्यक्रमेणात्यन्तदेशसाम्येन प्रत्यासन्नत्वादिनियोगो भवति। समाख्ययोस्तु विरोधे सामान्यविशेषसमाख्ययोः सूत्रवद्धे एव बाधो भविष्यति। तस्योपदेशसमाख्यानेन निर्देश इति। शेषशेषिसमवायस्य प्रत्येकं विविच्योदाहर्त्तव्यः। एवं तावत्प्रत्यक्षेषु श्रुत्यादिषु विचारितमेतयैव दिशा अनुमानादिगम्येष्वपि सजातीयविजातीयसमवाये विचारयितव्यम् (१) तत्र च प्रत्यक्षगम्यानामानुमानिकैरानुमानिकानां चानुमानिकैः सह पूर्वोक्तेनैव मार्गेण सजातीयविजातीयबलाबलं व्याख्येयम् । तद्यथातिदेशप्राप्ताः श्रुत्यादयः प्रत्यक्षैर्वैकृतिष बाधिष्यन्ते। विपरीतोपि चेह बाधो भवति पूर्वं पूर्वमपि ह्यानुमानिकं परेणापि प्रत्यक्षेण बाध्यते। यथा कृष्णलेषु सामर्थ्येनावघातः सर्ववस्तुविषयं च सामर्थ्यं लिङ्गेन केवलं मन्त्रगतमेवावगन्तव्यम्। तथा च यान्यप्यन्यार्थदर्शनानि अनन्यगतीनि तेषामपि लिङ्गत्वमभिधास्यते। का पुनरस्य लिङ्गस्य प्राप्तिरन्यथासंभव इत्यादि। यत्र पुनः श्रुतिरानुमानिकी लिङ्गं च प्रत्यक्षं तत्र कथम्। यथा स्मृतिवैदिकलिङ्गविरोधे । तत्र स्मृतेर्मूलान्तरमपि संभाव्यते न तु लिङ्गस्येति तदेव बलवदित्यनुसर्त्तव्यम् । सर्वत्र दुर्बलस्यापि प्रमाणस्य बाधे यदि किंचिदनर्थकीभवति ततो विपरीतो बाधो योजयितव्यः। तदुक्तं प्रोक्षणीष्वोत्सतोत्यत्र श्रुतिमुत्सृज्यापूर्वसाधनत्वलक्षणमिति । तथा ॥

(१) विजातीयसमवायो विचारयितव्यः इति २ पु० पाठः ॥

दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा ।
तदापि विपरीतत्वं शिष्टाकोपे यथोदितम् ॥

सर्वप्रमाणानामेवार्थद्वारः परस्परविरोधः न स्वरूपनिमित्तः । तत्र यदा पदार्थतद्धर्मविषये प्रमाणे विरुध्येते तत्र यद्यपि प्रमाणतो ऽन्यादृशं बलाबलं तथापि प्रमेयानुरोधेन तदाश्रयणात्स्वरूपदुर्बलेनापि बलवद्बाध्यमानं तदानुगुण्यं प्रतिपद्यते । तदुक्तमाचमनादयः पदार्थानां गुणाः क्रम इति ॥ तथा च लोके ॥

अत्यन्तबलवन्तोपि पौरजानपदा जनाः ।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः ॥

एवं सूत्रं श्रुतिलिङ्गविरोधापादनान्तं च भाष्यं व्याख्यातम् । इदानीं साध्यशेषमनुक्रमिष्यामः ॥

तत्र तुल्यबलत्वोक्तिः स्वतः प्रामाण्यविभ्रमात् ।
प्रदेशान्तरदृष्टं च रूपं तुल्यं द्वयोरपि ॥

स्वत एव मन्त्ररूपं दृष्ट्वा युक्त्यनुमानमन्तरेणैव विनियोगबुद्धिर्भवतीति श्रुतितुल्यत्वम् ॥ न हि विज्ञानस्य विज्ञानस्य च विशेष उपलभ्यत इति । मन्त्राम्नानवेलायामिन्द्रार्थत्वं जातं श्रुत्युच्चारणकालेपि गार्हपत्यार्थत्वमित्युक्तयोर्लब्धात्मनोरविशिष्टत्वम् । न ह्यविज्ञातरूपो मन्त्रः श्रुत्या शक्यो विनियोक्तुमिति श्रुत्या प्रथमं रूपनिरूपणं कर्तव्यमतश्च तदवधारणवेलायामिन्द्रोपस्थानप्रत्ययो जातो न शक्यो निवर्तयितुमिति मन्यते । ननु लिङ्गस्य भङ्गुरस्येव रूपं सविचिकित्सो ह्येति । श्रुतौ दृश्यमानायामनुमानासंभवाद्भङ्गुरत्वं सविचिकित्सो हि लिङ्गं विक्षेपजन्मत्वात्र ह्यस्य स्वतः प्रामाण्यमित्यभिप्रायः । परः पुनः प्रत्य-

योत्पादनमैकान्तिकं गृहीत्वा सविचिकित्सत्वं संदेहविपर्ययानध्यवसायानामन्यतमं मन्यमान आह॥ नैतदेवं यतो लिङ्गात्सविचिकित्सः प्रत्ययः तस्य श्रुतेश्च नैव संप्रधारणास्तीति किमियमैन्द्री भवति न भवतीत्यनिश्चितः तस्य श्रुत्यविरोधेऽप्यप्रमाणत्वान्नैव तया सह बलाबलचिन्ता॥ यतस्तु निर्विचिकित्स एकान्तेनैतद्देवत्योऽयं मन्त्र इति प्रत्ययः स श्रुत्या सह तुल्यबलत्वादिकल्पितुमर्हति। ननु नैव कदा चिदिति पूर्ववदेव कदा चिन्निर्विक्षेप इति मन्यते॥ इतरस्तु स्वाभिप्रेतमेवं सविचिकित्सत्वं गृहीत्वाहैवं च सति नैव लिङ्गं नाम किं चित्प्रमाणमभविष्यदिति। सिद्धान्तवादी तु वदति यदि स विक्षेपप्रत्ययोत्पादनमात्रेण कुपितं लिङ्गं प्रामाण्यमेव मुञ्चति कामं मा भूत्प्रमाणं भवति तु संशयो लिङ्गपरिज्ञातेऽप्यर्थे भवति॥ कथं पुनः सविक्षेपत्वं परित्यज्य संशय एव सविचिकित्सत्वमुदाह्रियते॥ कथं वा लिङ्गपरिज्ञातत्वं सिद्धवदभिधीयते। नैष दोषो लिङ्गपरिज्ञातत्वं तावदविरोधवेलाभिप्रायं संदिग्धत्वं विरोधवेलायाम्॥ एतदुक्तं भवति॥ यदविरोधकाले लिङ्गस्यावगतं विनियोजकत्वं तन्न तथैव सर्वत्रैवावतिष्ठते किं तर्हि संदिह्यते अन्यत्राविरोधाद्विनियोगोऽङ्गीकृतः स इह किं तथैव भवत्यथ केन चिद्व्यावर्त्तिष्यत इति॥ यदि वा विस्पष्टमेवाप्रामाण्यमिति तावदेव संदेहो भवति। यावत्प्रत्यक्षा श्रुतिर्नोपलभ्यते तस्यां तु सत्यामितरकल्पनानुपपत्तेरप्रामाण्यम्॥ लिङ्गे हि सामर्थ्यमात्रं प्रत्यक्षं न च तावता विनियोग उक्तो भवति॥ न चानुक्तस्य क्रियायां प्रामाण्यमस्ति। यथा सत्यपि सामर्थ्ये विप्रराजन्यौ न वैश्यस्तोमं कुरुतः तस्मान्न लिङ्गं विनि-

योजकमिति । परस्तु विरोधविषयमप्रामाण्याभिधानमशक्त्वा सार्वत्रिकमेवेदमुक्तमिति भीतः प्रामाण्यमार्गं दर्शयति ॥ प्रकरणवतो ऽर्थस्य सन्निधाने यमर्थमामनन्तीति तदेतदपि वा प्रयोगसामर्थ्यान्मन्त्रोभिधानवाची स्यादित्यत्राविशिष्टस्तु वाक्यार्थ इत्यत्र वर्णितम् । अथ वा सिद्धान्तवादिनापि विरोधे सुखतरमप्रमाणत्वं वक्ष्यामीति मन्यमानेन प्रथमं स्वतन्त्रमेव तावदप्रामाण्यं दर्शितम् । तथा च कृते स्वयमेवैतस्य श्रुत्यनुमानद्वारप्रामाण्यकल्पनमापत्स्यते ॥ ततश्च मम सुजयो भविष्यति । तत्रेतरेण विरोधविषयमनादृत्य प्रामाण्यं तावदस्तीति निरूप्य तुल्यबलत्वमभिप्रेतमभ्युपगम्यापि बलाबलमविरोधादबाधः ॥ तद्यथोपदेशातिदेशाभ्यां प्रयाजाद्युपकारस्य प्रकृतिविकृत्यर्थत्वादविरोधः सकृच्च तस्यामकृत्स्नकरणे ऽपि प्रधानानुरोधेन गुणानुवृत्तेः सर्वत्रेष्टत्वादिन्द्रशब्दस्य गार्हपत्ये गौणत्वादवयवप्रसिद्धेर्वेन्द्रे मुख्यत्वात्समुदायप्रसिद्धेर्विरोध इति चेत्त । प्रयोगभेदेन परिहारादयुगपदुपदिश्यमानं ह्येतत्संभवासंभवाश्रयणादिरुध्यते ॥ प्रयोगभेदे तु सति गार्हपत्याभिधानवेलायां यज्ञसाधनत्वं वा गुणमभिवदति क्रियाख्यैश्वर्ययोगं वाङ्गीकृत्य प्रवर्त्स्यतीन्द्राभिधानकाले तु मुख्य इत्यविरोधः । तस्मान्नास्ति बाध इत्येवं प्राप्ते ब्रूमः । श्रुतिर्लिङ्गाद्बलीयसी । कुतः ॥

मन्त्रोयं गार्हपत्याङ्गं शब्देनैवाभिधीयते ।
इन्द्राङ्गत्वं तु सामर्थ्यादशब्दमनुमीयते ॥

यत्तु प्रकरणात् सामर्थ्याच्चाङ्गत्वानुमानमुक्तं तच्छब्देनासंस्पृष्टमीदृशेष्वर्थेष्वप्रमाणमित्युक्तम् ॥ परस्तु सार्वत्रिकमेव लिङ्गस्याशाब्दत्वमुक्तमिति मन्यमानो न तर्हि विरोधाद्बाधः किं त-

र्थ्यप्रमाणत्वादेवेति विवक्षन्यद्येवमित्याह । सिद्धान्तवादी तु यथा प्रथमं पूर्वपक्षवादिना लिङ्गस्य प्रामाण्यमुक्तमासीत्तथेदानीं स्वयं प्रतिपादयति । भवति हि प्रकरणादेपार्थो यथा शक्नुयात्तथा यागस्थानेनोपकुर्यादिति । न च स्वार्थाभिधाना(१)दन्यथा शक्नोत्यसावुपकर्त्तुमिति तत्र विनियोगश्चोदितो भवति । परस्तु मदीयमेवायं पूर्वोक्तं मार्गमायातः क्वेदानीं गमिष्यतीत्युपालम्भेनाह । यदि श्रुतिमूलो न श्रुत्यन्तरेण बाधितुं शक्यः तेन यदि तावदशाब्दोयमर्थस्ततो नैव प्रमाणम् । अथ शाब्दस्ततस्तुल्यबल इति । सिद्धान्तवादी तु द्वयमपि परिहरति नापीति । आनुमानिक्याः श्रुतेरविरोधे सत्यात्मलाभो विरोधे चानुत्पादाद्यत्र हि प्रत्यक्षया श्रुत्या मन्त्रो न विनियोगं प्रति निराकाङ्क्षीकृतस्तत्रास्य विनियोगसिद्ध्यर्थं यावत्कल्प्यते तत्सर्वमाम्नानान्यथानुपपत्तिमुद्रामुद्रितत्वाद्वैदिकं भवति ॥ यत्र विस्पष्टमेवावगतमनेन गार्हपत्य उपस्थेय इति तत्राम्नानप्रयोजने न साध्ये । प्रयोगोपकारे विज्ञाते नैतावत्कल्प्यमानं वेदः सहते ऽनेनेन्द्रोपस्थानं कर्त्तव्यमिति । तस्माद्दुर्बलं लिङ्गम् । किं च ॥

सर्वत्रैव विकल्पानामन्याय्यत्वमवस्थितम् ।
पक्षे हि सदसद्भावावेकत्रार्थे दुराश्रयौ ॥

स्वतन्त्रया श्रुत्या नित्यमेव गार्हपत्योपस्थानं चोदितं लिङ्गेन स्वतन्त्रेणेन्द्रोपस्थानं तत्रान्यतराश्रयणे सतीतरच्चोदितं सन्न क्रियते तदपेक्षया चेतरदचोदितं सत्कृतं तदकरणमप्यचोदितं श्रुतहान्यश्रुतकल्पनयोश्च तुल्यो दोषः । प्रसिद्धिबा-

(१) स्वार्थमभिधानादिति २. पु० पाठः ॥

धाचोदितस्य कर्त्तव्यताप्रसिद्धिरितरस्याकर्त्तव्यत्वं तदुभयमतिक्रम्येत। तस्मात्तावन्न विकल्पः। यस्तु विरोधपरिहारार्थं समुच्चयोऽभिहितः तत्र ब्रूमोऽस्त्येव विरोधः। कथम्॥

श्रुत्या ह्यत्र निराकाङ्क्षे मन्त्रप्रकरणे कृते।
लिङ्गं साकाङ्क्षमाध्यार्थं तयैकान्तादिरुध्यते॥

एकोऽयं मन्त्र एकं च प्रकरणं सकृच्चाम्नातस्यैकरूपेण भवितव्यम्। तत्र श्रुतिविनियोगवेलायां मन्त्रप्रकरणयोर्निराकाङ्क्षत्वं भवेद्वा न वा। तद्यदि तावन्नास्ति ततो विनियोग·एवासिद्धो न हि विनियुक्तस्याकाङ्क्षा युज्यते। अथ त्वस्ति ततस्याकाङ्क्षाधीनसिद्धित्वाल्लैङ्गिकविनियोगानुपपत्तिर्युगपद्भावाश्रयणे ह्यस्त्याकाङ्क्षा नास्ति वेति विप्रतिषिद्धं स्यात्। एवं सत्यपि तु यदि प्रमाणयोस्तुल्यप्रवृत्तित्वं भवेत्ततो विशेषाग्रहणान्न ज्ञायेत केन प्रथमतरं निराकाङ्क्ष (१)इति युगपदेवोभाभ्यान्निराकाङ्क्षीक्रियमाण उभयार्थो भवेत्। अस्ति तु प्रमाणयोर्विशेषः। अतः शीघ्रतरप्रवृत्तित्वादतस्तया विनियुक्ते मन्त्रेण न लिङ्गस्यावकाशोऽस्तीति श्रुतिबलीयस्त्वसिद्धिः॥

सूत्रेण परदौर्बल्ये सूचिते सति भाष्यकृत्।
स्वार्थं पूर्वबलीयस्त्वं व्याचष्टे तदनादरात्॥

लिङ्गवाक्ययोर्विरोधएकं तावदिदमुदाहरणम्। ज्योतिष्टोमे हौत्रप्रवचनाधीनाः प्रैषाः वाक्येन मैत्रावरुणस्य विधीयन्ते। तस्मान्मैत्रावरुणः प्रेष्यति चानु चाहेति। तेषां मध्ये कश्चित्प्रैष एवं पठ्यते। प्रशास्तर्यजेति। सोयं समा-

(१) निराकाङ्क्षीकृत इति २ पु० पाठः॥

मर्थेन मैत्रावरुणं नियुङ्क्ते ॥ तत्र यदि वाक्यं बलीयस्त-तो मैत्रावरुणः प्रेष्येत्यात्मनि च प्रैषासंभवाद्धोता यजेदथ तु लिङ्गं बलीयस्ततो मन्त्रेण मैत्रावरुणो नियोक्तव्यः ॥ न चा-त्मनैवात्मानं नियोक्तुमर्हतीति परेण विनियोक्तव्यः । स च तेषां यतो विशेषः स्यादित्येवं विज्ञायते ॥ सामान्य-समाख्यया पूर्वमयं होतुरेव प्रापितः सन्वाक्येन बाधित आ-सीत्तद्यदा वाक्यं लिङ्गेन बाध्यते तदा समाख्ययैव प्रतिप्रसू-तया होतृकर्तृकत्वं विज्ञायते ॥ प्रैषार्थकारी तु मैत्रावरु-णो विज्ञायतएव यद्यपि तस्मान्मैत्रावरुण इत्येतद्ब्राह्मणं तथापि पदसन्निधिमात्रात्मकत्वेनाश्रुतित्वात्प्रत्यासन्नतरश्रुति-कल्पनेन लिङ्गेन बाध्यते ॥ यदि हि मैत्रावरुणः प्रेष्येत्ततः प्रशास्तृशब्दो होतर्यनर्थकः स्यात ॥ ननु च मैत्रावरुणोऽ-पि प्रेष्यमाणो होता यक्षदित्यादिरेवार्थशून्यः स्याद्गौण इति चेन्न । प्रशास्तृशब्देऽप्येवं प्रसङ्गा,दपि च पश्चात्तनत्वादुपजात-विरोधः प्रशास्तृशब्द एव वरं गौणो न प्रथमोच्चारितो विनैव विरोधेन होतृशब्दः । तस्माल्लिङ्गयोरेवैष विरोधो न लिङ्गवा-क्ययोरिति ॥ अत्र ब्रूमः । सर्वथा तावदनयोरन्यतरस्य विरोधे गौणत्वं कल्पनीयम् । तत्र प्रशास्तृशब्दस्य होतर्यत्यन्तमनि-मित्तः प्रयोगो होतृशब्दस्य तु होतृकार्योपन्नमैत्रावरुणोऽ-स्ति निमित्तम् । सर्वएव प्रधानल्लिङ्गवचनास्तत्प्ररूपेषु प्रयुज्य-माना दृष्टा न तु विपर्ययः । तस्मात्प्रशास्तृलिङ्गत्वान्मन्त्रस्तमेव विनियुञ्जीत । न चैतद्वाक्यमत्यन्तमनर्थकमेव भवति प्रैषा-न्तरेषु चरितार्थत्वाद्दोतोऽस्मिन्विषये बाध्येतेति ॥ स्योनं ते सद-नं कृणोमीत्यत्रोदाहरणे चोद्यते ॥

भिन्ने एते यतो वाक्ये पुरस्तात्प्रतिपादिते ।

तस्मान्न समुदायोयं वाक्येन विनियुज्यते ॥

सत्यपि विभज्यमानसाकाङ्क्षत्वेर्थभेदाद्भिन्नवाक्यत्वेनैते पुरस्तात्प्रतिपादिते(१) तस्मान्न समुदायस्यैव सदनाभिधारणे पुरोडाशप्रतिष्ठापने च समुच्चयेन विकल्पेन वा विनियोग आशङ्कितव्यः । तत्र केचिदाहुः ॥ नैवात्र सकलेन वाक्येन सह विचारः किं तर्ह्यंशेनैव सहाथ वा ॥

साकाङ्क्षावयवत्वेन प्रायेणेष्टैकवाक्यता ।

सिद्धा लिङ्गबलीयस्त्वात्प्रत्युक्ता भिन्नवाक्यता ॥

तस्मिन्सीदेत्येतत्कृतं साकाङ्क्षत्वमाश्रित्यैकवाक्यत्वेनोदाहृतमिदमेव प्रधानकारणं शक्यते तद्वशेन यथेष्टं विशेषणविशेष्यभावं कल्पयित्वैकार्थत्वेनैकवाक्यत्वम् । तद्यथा पूर्वस्य तावदुत्तरेण सह यदहं घृतस्य धारया सुमुखं तव सदनं कल्पयामि तस्मिन्नेवमितिकर्त्तव्यताके प्रतितिष्ठ त्वमितीतिकर्त्तव्यताविशिष्टपुरोडाशप्रतिष्ठापनमेकं प्रयोजनम् । अथ वा पुरोडाशप्रतिष्ठापनफलं सदनाभिधारणं करोमीत्येवं विशिष्टफलसदनकरणं प्रकाशनं प्रयोजनमिति शक्यमेकवाक्यत्वम् । यत्तु पुरस्तादर्थनानात्वान्नानावाक्यत्वमुक्तं तदिह स्थितं लिङ्गबलीयस्त्वेन यदि हि लिङ्गं बलीयस्ततः संभवदन्यतरविशेषणत्वेनैकवाक्यत्वं परित्यज्योभयोः प्रत्येकं स्वप्राधान्यं लिङ्गावगतमाश्रित्य विशेषणबुद्धितिरस्कारेण प्रयोजनभेदाद्वाक्यभेदो भवति तेनायं विनियोगद्वारेण वाक्यात्मलाभस्य लिङ्गप्राधान्यस्याच(२) बला-

(१) सत्युदाहृते इति २ पु० पाठः ॥

(२) लिङ्गस्य चेति २ पु० पाठः ॥

बलविचारः तत्रापि प्रतीतो तन्व्यात्मके वाक्ये सति बाधकप्रत्ययसद्सद्भावविचार इति द्रष्टव्यम् । किं प्राप्तम् । तुल्यबले इति । तदा चेदमं कर्म कदा चिद्विभज्य मन्त्रौ प्रयोक्तव्यौ । कदा चित्समुदायोन्यतरश्च कदा चित्स एवोभयश्चेति ॥ कथं पुनरयमित्थमनवस्थितः शास्त्रार्थो भवति ॥ सर्वथा यदि प्रमाणात एवमवगम्यते किन्नो बाध्यते ॥ लिङ्गवाक्यतुल्यबलत्वालोचने सर्वमेतत्प्रतिभाति । यदा तु श्रुतिवल्लिङ्गात् प्रमाणान्तरत्वाद्वाक्यमेव बाधकमित्यवधार्यते । तदा नियत एव समुदायप्रयोग इत्येवं प्राप्ते ब्रूमः ॥

स्योनादिः कल्पयाम्यन्तः स्वसामर्थ्येन शक्यते ।
निराकाङ्क्षः स्वकार्याय साकाङ्क्षत्वं पराश्रयम् ॥

सर्वस्तावदादित आरभ्य विनियोगं निरीक्ष्यते । तदिह कल्पयाम्यन्तो ऽस्य न कदा चित्परत्वापेक्षा दृश्यतइति तावति पर्यवसानं निश्चित्य प्रयोजनाकाङ्क्षानिवृत्तेरभिधारणाङ्गत्वेनाश्रीयते तेनैव तावत्प्रतिष्ठापनं यावन्न कदा चिन्नीयते ॥ न च परस्यैतेन विनानर्थकत्वापत्तिर्यतस्तद्द्वयेन नीयते सोपि चि प्रतिष्ठापनाङ्गत्वेनार्थवान् भविष्यति । यद्यपि च तच्छब्दः पूर्वापेक्षस्तथापि प्रकाशितं निवृत्तञ्च पूर्ववाक्यार्थमालोच्य भिन्नस्यापि प्रवर्तमानस्य न कश्चिद्विरोधः ॥ तद्यथा तप्ते पयसि दध्यानयतीति संस्कारविधाने पर्यवसिते सा वैश्वदेव्यामिक्षेति वाक्यान्तरेणैव द्रव्यदेवतासंबन्धः क्रियते । तस्माद् भेदेन विनियोगस्य प्रत्यासन्नतरश्रुतित्वान्नेतरेतरविषयसंक्रान्तिर्विद्यते । एवमुपस्तरणे तस्मिन्त्सीदेत्यस्य नास्ति सामर्थ्यमिति पूर्वेणैव गतार्थप्रायं सन्निहृपणदार्ढ्यार्थं पुनः परामृश्यते । यश्चैकत्वोक्तं तस्येतरत्वाभावं दर्शयित्वा पुनरात्मधर्ममुपनीयेतरधर्मनिरा-

करणमिति ग्रन्थो निराकुलीकर्तव्यः। पूर्वः प्रस्तावः प्रमाणसद्सद्भावाभ्यां मध्यमः श्रुतयश्क्तिभ्यामन्त्यश्च दृष्टार्थत्वादृष्टार्थत्वाभ्यामिति विवेकः॥ तस्माद्वाक्याल्लिङ्गं बलीय इति सिद्धम्॥ किं पुनः प्रकरणं नामेति। सर्वत्र सिद्धवत्प्रकरणेन व्यवहारो न चैतत्क्वचिन्निरूपितपूर्वं तदिहापि तावदस्य स्वरूपं निरूप्यतां निर्ज्ञातस्वरूपस्य हि बलाबलं सुज्ञायतइत्य,थ वा नैवास्य वाक्यक्रमाभ्यां भेदः साकाङ्क्षपदसन्निधिमात्रं हि वाक्यमित्युच्यते तच्च प्रकरणे ऽप्यविशिष्टम्॥ न च वाक्यस्य परियत्तायां प्रमाणमस्ति। विभज्यमानसाकाङ्क्षसंहन्यमानैकप्रयोजनमात्रोपलक्षणत्वात्तेन वाक्यमेवैकमल्पपदमपरं बहुपदमवान्तरार्थवशीकृतानां महाप्रयोजनवशेन महासंघातापत्तेर्वक्ष्यति हि वाक्यं त्वेकं दर्शपूर्णमासाभ्यां सहधर्माणामिति। अथ वा सन्निध्यात्मकः क्रम इत्युच्यते स च प्रकरणे ऽप्यवश्यंभावी सन्निधिरतः क्रमादप्यभिन्नं प्रकरणमिति मन्यते। तदिदानीं तत्त्वभेदपर्यायैर्निरूपयति। तत्र तत्त्वं तावदुच्यते। कर्तव्यस्येतिकर्तव्यताकाङ्क्षस्य वचनं प्रकरणमिति। कर्तव्यमिति साध्यभूतमपूर्वमथ वा विधेयत्वानुष्ठेयत्वाभ्यां भाव एव प्रत्ययवाच्यो ऽभिधीयते साध्यांशोपनिपातात्स्वर्गादिफलं कर्तव्यमिति चेन्न। तस्य कालान्तरभावित्वेन प्रयोगासमवायित्वे सति तत्सिद्ध्यर्थापूर्वस्यैव कर्तव्यत्वावधारणात्तेनापूर्वं कृत्वा नान्यथा। तथा यज्ञकर्म प्रधानं तद्धि चोदनाभूतमिति तस्यैव प्रयोजकत्वं वक्ष्यते। फलदेवतयोश्चेत्युपन्यस्य निराकरिष्यते। तत्र कथमित्यनयशेषोपायाकाङ्क्षणमाकाङ्क्षेति प-

अन्तं व्याख्यायते। यद्वेतिकर्त्तव्यतामाकाङ्क्षतीतिकर्त्तव्यताकाङ्क्षं भावापूर्वयोरेवैकं तस्य यद्वचनमिति समानाधिकरणे षष्ठ्य- न्ते । वचनमिति शब्देन प्रत्यायनम् । एतदुक्तं भवति । वस्तुरूपेण विद्यमानाप्याकाङ्क्षा न प्रकरणमित्यभिधीय- ते किं तर्हि प्रतीयमाना सापि च कर्त्तव्यतार्थोपसर्ज- नत्वेन गृह्यमाणा न स्वातन्त्र्येण तेनाकाङ्क्षाभिधीयमा- ना प्रकरणमाकाङ्क्षावती वा भावनेति द्रष्टव्यम्। इदा- नीमवयवव्युत्पत्त्यात्मकेन भेदेन कथयति । तत्र प्रशब्दस्ता- वत्प्रारम्भमाह करणशब्दः क्रिया प्रकरणं प्रक्रियेत्यर्थः । का पुनरिह क्रिया गृह्यते तामाह। वचनक्रियाया अर्था- भिधानक्रियाया इति यावत्। भावनाभिधानक्रियाया हि प्र- योगवाक्यप्रवृत्तिरारम्भः फलकरणांशपूरणं पदद्वयमात्रसाध्य- मितिकर्त्तव्यतालाभस्त्वनेकवाक्यान्तरायत्तसिद्धिरतः तत्समस्ता- लोचनापेक्षया कथंभावः प्रकरणमभिधानविधानक्रिययोरा- रम्भ इत्युच्यते। करणशब्दश्च क्रियामात्रवाच्यपि सन्नागमवि- षयः प्रयुज्यमानोऽभिधानक्रियायां वर्त्तते स एष विध्यादिरिति- पर्यायकथनम्। आद्यन्तयोः संबन्धिशब्दत्वात्किमपेक्ष्यादित्व- मित्यत आह। विध्यन्तापेक्ष इति। विध्यन्तो नामेत्थंभावरूप- मितिकर्त्तव्यतावधारणम्। तस्य चानेकाङ्गवाक्यतदर्थतत्प्रयो- जनालोचनसाध्यस्य कथंभाव आदिरित्याचार्याणां विध्यादित्वेन प्रसिद्धिः। तत्र च स्वपदगणेन कियत्यपि प्रयोजनेऽवसितानामेव वाक्यानां पुनः कार्यान्तरापेक्षावशेन संबन्ध इति वाक्याद्विशेषः। तथादितः क्व चिदपि प्रयोजनलेशे विभज्यमानानां वृत्तिर्नास्ति संबन्धेनैवार्थलाभः क्रमेण तु सह वैलक्षण्यमनन्तरमेव वक्ष्या-

मस्तम्मात्प्रमाणान्तरं प्रकरणम्। किमिचोदाहरणमिति। ते-नैवैकवाक्यतानयनाभिप्रायेण पृच्छति। सिद्धान्तवादी तु वि-धायकस्मारकत्वेन भिन्नवृत्तित्वान्मन्त्रब्राह्मणयोर्न कथं चि-देकवाक्यता घटत इति सूक्तवाकमुदाहरति। लिङ्गाद्देवतापदेषु निष्कृष्टेषु तच्छेषाः किमुत्कृष्यन्ताम् अथ तद्रहिता अपि प्रयुज्यन्तामिति। प्रकरणेन तावत्सर्वशेषा उत यत्र प्रा-प्नुवन्ति लिङ्गमपि साधारणं द्विवचनैकवचनयोरुभयत्र विद्य-मानार्थत्वात्। ननु चात्मीयेनैव शेषेणावरुद्धेषु देवतापदेषु शे-षान्तरमनवकाशमेव स्यात। सत्यमेवमपि तु वाक्यप्रकरणयो-र्विरोधो नैवापैति। प्रकरणेन ह्यपनीतदेवताकोऽपि शेषः प्र-योज्यः प्राप्नोति वाक्येनेतर इति वाक्यबलीयस्त्वादेव तदाश्रय-णम्। अथवा प्रकरणेन तावत् प्रयोगः प्राप्नोति वाक्येन तु यथा देवतापदानुसारात्स्यादिति विरोधः। क्रतुसंबन्धत्वाच्च वाक्यं बलीयः। कथं भावेन चेत्थं यजेतेति प्रकरणिना सह संब-न्धमनुमाय यावदस्मानं शेषप्रयोगः तथा क्रतुप्रयोगशेषैरात्मी-यैर्देवतापदैः सह पुनः संबन्धकल्पनमिति विप्रकर्षः। तस्मा-द्वाधः ततश्च देवताशेषाणां नित्यमेवापकर्षो न पाक्षिकः। स-र्वदा वा विनियोग इति सिद्धम्। अथ क्रमप्रकरणयोः विरो-धे किमुदाहरणमिति। यथासंख्यलक्षणक्रमविरोधोदाहर-णासंभवात्पुरस्तात्परस्ताद्वा ऽम्नातस्य सन्निधिलक्षणेनावान्तर-प्रकरणेन प्राप्तेनैव किं चिदुदाहरणमिति विपर्ययदृढत्वेना-प्यासंशयावतिकस्यापि प्रश्नः। शक्यं त्विचावान्तरप्रकरणत्व-प्रसङ्गनिराकरणमित्यभिप्रेत्योदाहरणोपन्यासः। राजसूयप्र-करणे ऽभिषेचनीयस्योपरि शौनःशेफमाख्यापयति, राजन्यं

जिनाति, षष्ठौहीं दीव्यति, अभिषिच्यत इत्येवमादीन्याम्ना-यन्ते । तेषां चाङ्गत्वेनैव कस्य चित्संदेहः विप्रतिपत्तिर्वेति शेषि-शेषसंबन्धनिश्चयार्थमिदं विचार्यते किं समस्तराजसूयस्यैतान्य-ङ्गान्युताभिषेचनीयस्यैवाथ विकल्पः समुच्चयपक्षासंभवादि-ति । प्रकरणस्य क्रमस्य च बलाबलादेतद्विज्ञातव्यम् । ननु चा-भिषेचनीयस्यावान्तरप्रकरणात्प्राप्तिरिति महाप्रकरणं बाध्ये-त । नैष दोषः । यद्यपि निराकाङ्क्षीकृते ऽभिषेचनीये तेषां पाठः स्यात्ततो ऽवान्तरप्रकरणमवगम्येत । स तु प्रागेव विदेवनादि-भ्यः प्राकृतैर्द्धर्मैर्निराकाङ्क्षीकृतः सत्यामपि प्रत्यासत्तावकृतोप-कारानेतानुपकारापेक्षः क्रतुदक्षस्य प्रकृतिमपेक्षते । तया च योग्योपकारप्रदानेन पूरिते कथंभावे निवृत्तं प्रकरणम् । स-मीपाम्नातधर्मानर्थक्यापत्तिभयादेव पुनरुत्पाद्येत ततस्य क्र-मत्वं भवति निराकाङ्क्षस्य हि सतः आकाङ्क्षा यावदभिषेचनी-यस्योत्पाद्यते तावद्राजसूयकथंभावेन प्रत्यक्षेण सिद्धो विनियो-गः । तदीयो हि कथंभावः पवित्रादारभ्य चत्रस्य धृतिं यावदनु-वृत्तः शक्नोति विदेवनादीनि संग्रहीतुम् । अतो नास्त्यत्रावान्त-रप्रकरणमभिषेचनीयस्य । यस्यां तु विकृतौ प्राकृतं किं चिदङ्गं संकीर्त्य तस्य पुरस्तात्परस्ताद्वा वैकृतमङ्गमाम्नायते तत्र कथं-भावगृहीताङ्गमध्यवर्तित्वात्प्रकरणपाठो विज्ञायते न चेह तद-स्तीति क्रमस्यैव व्यापारः । संनिधावाम्नानेन च पूर्णतापीति । वाक्यार्थपूर्णत्वाभिप्राय,मनेकस्याम्नायमानस्य संनिधिविशेषा-म्नानमात्रं हि क्रम इति । केन चित्संनिधानस्य नान्तरीयकत्वं दर्शयति । यो हि बहूनामर्थेनाम्नायते तस्य सर्वप्रधानप्रत्या-सन्नप्रदेशासंभवादवश्यंभाविनी केन चित्सह प्रत्यासत्तिः । न

तु प्रकरणपाठस्यैवं नान्तरीयकत्व,मतः सह प्रवृत्तयोः क्रमप्रकरणयोः प्रकरणस्य शीघ्रतरं श्रुत्यर्थप्राप्तिरिति बलीयस्त्वम् । क्रमसमाख्ययोर्विरोधे किमुदाहरणमित्यत्राप्यज्ञानसंशयकृतप्रश्नानन्तरं यौगिकत्वात्समाख्यायाः श्रुतिवच्छब्दं संबन्धहेतुत्वमिति बलीयस्त्वं मन्यमानस्य विपर्यस्तमतेः प्रश्नः । पौरोडाशिकमिति समस्तमेव दर्शपूर्णमासकाण्डमभिधीयते । तत्र सान्नाय्यपात्रशुन्धनक्रमे शुन्धध्वमिति मन्त्रः पठितः स च प्रकरणाल्लिङ्गाच्च दार्शपौर्णमासिकपात्रशुन्धनार्थ इति सामान्येनावधारिते तद्विशेषे जिज्ञासायां संदिह्यते । किं समाख्यया पुरोडाशपात्रार्थो भवत्यथ क्रमेण सान्नाय्यपात्रार्थ इति यतरद्बलीयस्तेन विनियोक्ष्यते । तुल्यबलत्वाद्विकल्पो विरोधाभावाद्वा समुच्चयः । क्रमस्य च दृष्टबाधस्य संबन्धानभिधायिनश्चादृष्टबाधया संबन्धाभिधायिन्या च समाख्यया बाध इति प्राप्ते अर्थविप्रकर्षात्समाख्या बाध्यतइति ब्रूमः । तथा हि ।

> वैदिकं देशसामान्यं प्रत्यक्षं दृश्यते क्रमे ।
> समाख्यायां तु सामान्यं कल्प्यत्वाद्विप्रकृष्यते ॥

कः पुनरत्रार्थविप्रकर्ष इति । समाख्यायामन्तर्णीतसंबन्धसंबन्ध्यभिधायित्वान्न संभवतीति मन्यते । निर्ज्ञाते प्रकरणे न केनापि सहैकवाक्यत्वे इति । प्रकरणाविरोधिनं क्रमविनियोगं केवलसमाख्याप्रतियोगित्वेन च दर्शयति । कथं पुनः प्रकरणं न विरुध्यते । यदा तेन सर्वार्थत्वं ज्ञायमानमुत्सृज्य क्रमवशेन केवलसान्नाय्यार्थत्वं विज्ञायते । नैष दोषः । यदि ह्यप्रकृते वयं क्रमविनियोगमभ्युपगच्छेम तत एवं स्यादिह तु प्रकरणेन

दर्शपूर्णमासान्यतरार्थत्वे ऽवधारिते तद्विशेषाकाङ्क्षायां केवल एव क्रमो व्याप्रियत इत्यविरोधः । ननु सर्वार्थत्वेनावधारणाद्यतः कुतश्चिदपि निवृत्तौ प्रकरणं बाध्यते । न चावश्यं सर्वार्थत्वं प्रकरणेनावधार्यते मन्त्रस्यैकेनापि संबध्य कृतार्थत्वात्प्रकरणिनां च मन्त्रान्तरैरप्यर्थसिद्धेः । सामान्यविनियोगश्रुतिमात्रमेव चेह क्रमात्पूर्वतरं निष्पद्यते । तत्र यावद्विशेषश्रुतिमेकैकं प्रतिकल्पयति तावत् क्रमेणापि कल्पितैवेति प्राकरणिकी विशेषश्रुति(१)रुपसंह्रियते । समाख्या पुनः क्रमविपरीतार्थत्वाद्विरुध्यते । विप्रकर्षाच्च दुर्बला । सर्वो हि संबन्धः केनचिद्वाक्यसामान्येन भवति । न च मन्त्रपुरोडाशयोस्तादृक्कश्चित्किंचिदस्ति । यथा सान्नाय्येन सह देशसामान्यम् । लौकिकस्तु शब्दः समाख्येति भक्षानुवाके परिहृतमपि सद्वैदिकसंबन्धविप्रकर्षार्थमुपन्यस्यते । परस्तु लिङ्गानिराकरणोक्तेनैव मार्गेण मूलोत्कर्तनेनैव समाख्यां निराकृतां मन्यमान आह । यद्येवमित्यादि । सिद्धान्तवादी तु भक्षानुवाकोक्तमेवोत्तरं दर्शयति ।

यदि ह्यङ्गाङ्गिभावोऽत्र पुरुषप्रत्ययाद्भवेत् ।
ततः स्यादप्रमाणत्वं स तु वैदिक एव नः ॥

पौरोडाशिकशब्दो मन्त्रब्राह्मणयोरपठितत्वादवैदिको नाङ्गाङ्गिभावः । स च शब्दस्यावैदिकत्वे ऽप्यनादिसंबन्धत्वाद्विद्यमानश्रुतिमूलत्वाच्च प्रमाणम् । पौरोडाशिकशब्दो ऽस्य वाचक इति नैतदतीन्द्रियम् । शब्दार्थव्यवहारिणां वृद्धादिभ्य एव प्रत्यक्षत्वात्संभवति हि सर्वेषामन्यत उपलभ्य प्रयोगः । त-

(१) श्रुतिर्बुद्धिरिति २ पु० पाठः ॥

दर्शयति भवति चास्मिन्नर्थे पुरुषः प्रमाणं यथा साम्नायक्रम-माम्नातं प्रकरणमेकवाक्यत्वं वेदशब्दस्यायमिति सर्वत्र हि पुरुषान्तरस्यादर्शनपूर्विका पुरुषान्तराणां प्रवृत्तिः समानदे शाम्नानं प्रकरणपाठं पदानां परस्परसन्निधिं संबन्धं वा न वेदो वदति। किं तर्हि पुरुषेष्वामनत्स् तथा दृश्यते। तैरप्येव-मन्येभ्यो दृष्टमित्यनादित्वेऽपि सर्वेषां दर्शनसंभवात्। अन्धपर-म्परान्याये निवृत्ते भवति प्रामाण्यम्। अन्यथा हि वेदादेव प्र-करणाप्रकरणादीन्यप्रमाणकान्येव भवेयुरनेकपुरुषस्थत्वाच्च नात्र कस्य चित्स्वातन्त्र्यं यद्दोषेण दोषाशङ्का स्यात्। तस्माद्भव-त्येवान्यत्र प्रामाण्ये ऽर्थविप्रकर्षादत्र बाधः स चोक्तः सूत्रव्या-ख्यायाम्। एवमेतेषां यथाभाष्यमवस्थितानां श्रुत्यादीनाम्॥

बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा।

मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षया॥

इदानीं बाधस्य स्वरूपमाक्षेपद्वारेण कथयत्यथ यत्तत्र तत्रो-च्यते द्वयोर्द्वयोर्विरोधे इदमनेन बाध्यते इदमनेनेति। श्रुत्या लिङ्गं लिङ्गेन वाक्यमित्यादि। तद्बाधकविषयं प्राप्तं बाध्येताप्राप्तं वा। तद्यदि तावदप्राप्तं ततः समवाय एव नास्तीति किं बाध्येत। समवायसिद्ध्यर्थं त्वथ प्राप्तं बाध्यते तत उभ-योरपि प्राप्तप्रमेयत्वात्तुल्यबलत्वमिति न बाधस्य प्रामाण्य-म्(१)। तत्रोत्तरम्।

सामान्यकारणात्प्राप्तं पूर्वं बाधकगोचरम्।

बाधकेन बलीयस्त्वान्मृषैतदिति कल्प्यते॥

यथैव मृगतृष्णादिज्ञानान्युत्पन्नानि मिथ्यात्वकल्पनया बा-

(१) न बाध्यं प्रमाणमिति २ पु० पाठः॥

ध्यन्ते हानोपादानादिफलवियोगाच्च बाध्यव्यपदेशं लभन्ते तथा लिङ्गादिनाज्ञानमप्युत्पन्नं सच्छ्रुत्यादिज्ञानेनानुष्ठानरूपा- त्फलादियुज्यमानं बाधिष्यते । न त्वेतदप्युपपद्यते । कुतः ॥

बाधस्योक्तप्रकारत्वात्प्रश्नस्तावन्न युज्यते ।
स्थिते चाप्राप्तबाधत्वे प्राप्तबाधेपि नोत्तरम् ॥

तत्र नाम प्रश्नो भवति यत्प्रथमं नोक्तम् । एतानि तु लिङ्गा- दीन्यर्थविप्रकर्षादननुमितश्रुतीनि बाध्यन्ते इति ज्ञातत्वान्नैव प्रश्नमर्हन्ति । यद्यपि च पृच्छ्यते तथाप्यपसिद्धान्तेनोत्त- रं न दातव्यमननुमितश्रुतिबाधेन ह्यप्राप्तबाधः स्थितः स इ- दानीं प्राप्तबाधापवर्णनेन प्रत्यर्थ्येत विनोपपत्त्या । यदुच्यते सामान्यस्य कारणस्य विद्यमानत्वादिति । तल्लिङ्गादीनां सा- क्षात्प्रमाणत्वात्प्रमाणभूतायाश्च श्रुतेरविद्यमानत्वादनुपपद्यमा- नत्वात्तामनुमाय(१) प्राप्तिरिष्यते ततो लब्धात्मकत्वादानुमा- निक्याः श्रुतेः प्रत्यक्षायाश्च न कश्चिद्विशेष इति तुल्यबलत्वमेव प्राप्नोति । यदि वा मिथ्यात्वकल्पनरूपबाधाभ्युपगमाद्विरोधे सति तत्कल्पनाद्विपरीतबाधप्रसङ्गः । कथम् ॥

पूर्वं परमजातत्वादबाधित्वैव जायते ।
परस्यानन्यथोत्पादान्न त्वबाधेन संभवः ॥

श्रुत्यादौ शीघ्रतरत्वात्प्रथमं प्रवृत्ते लिङ्गादीनि प्रवर्त्तन्ते तच्च यदि प्राप्तबाधमिदृश्यर्थं पश्चात्प्रवर्त्तमानमपि लिङ्गं श्रुतिमनु- मापयति ततः सा तुल्यविषयसंनिविष्टां पूर्वामबाधित्वा ना- त्मानं लभतइति मृगतृष्णादिष्विव मिथ्यात्वं कल्पयन्त्येव

(१) अनुपपन्नमथ तु तामनुमायेति २ पु० पाठः ॥

जायमाना बाधिका स्यात्। तस्मान्नैव श्रुत्यादिषु ग्रन्थो घटतइति । यद्यप्यधिकरणान्तोपसंहारात्तद्विषयः प्रतिभाति तथापि सामर्थ्यात्पूषाद्यनुमन्त्रणवदुत्कृष्यते विज्ञातप्रकारत्वा,न्नैवायमथ यत्तत्र तत्रेति श्रुत्यादिषु बाधः संबध्यते किं तर्हि बाधाधिकारादिहाचार्यस्य यावन्तः शास्त्रोपनिबद्धा बाधभेदास्ते सर्वे हृदयमनुप्राप्ताः तेषां च न श्रुत्यादिसदृशो बाध उपपद्यते सर्वत्र चैकरूपेण बाधमार्गेण भवितव्यम् । अतो यदि वा तदीयः प्रकारः श्रुत्यादिष्वस्तु श्रुत्यादिप्रकारो वा तेषु । तत्र श्रुत्यादिगतस्तावत्संप्रत्येव कथित इति किं तेन पृष्टेन । ये त्वेतद्व्यतिरिक्तास्तेषु कथमिति मन्यमानो वदति । अथ यत्तत्र तत्रोच्यतइदमनेन बाध्यते । प्रत्यक्षेणानुमानं मृगतृष्णादिप्रत्ययाश्च यथास्वं षड्भिरपि प्रमाणैः प्रमाणाभासः, श्रुत्या स्मृति,राम्नाविगीतस्मृत्यानाम्नविगीतस्मृति,रदृष्टार्थया दृष्टार्था, श्रुतिप्रभवया लिङ्गादिप्रभवा ऽर्थवादप्रभवा च, स्मृत्या ऽप्याचारः, सो ऽप्यभियुक्ततराचारेण, संदिग्धमसंदिग्धेन, दुर्बलाश्रयं बलवदाश्रयेण, उपसंहारस्थमुपक्रमस्थेन, अत्यन्तादृष्टार्थं नियमादृष्टार्थेन, आरादुपकारकत्वं सामवायिकत्वेन, अनेकार्थविधानमेकार्थविधानेना,नेकशब्दार्थत्वमेकशब्दार्थत्वेन, बहुबाधो ऽल्पबाधेन, वेदान्तरोत्पन्नं वेदान्तरविहितत्वेन, परशाखाविहितं स्वशाखाविहितेन, नित्यं नैमित्तिकेन, द्विः प्रकारमध्यैतत्क्रत्वर्थं पुरुषार्थेन, अनारभ्याधीतं प्रकरणाधीतेन, पौर्वापर्येण विरोधे पूर्वं परेण, प्राकृतं वैकृतेन, प्रयोगवचनाश्रितं चोदकाश्रयेण, निष्प्रयोजनं सप्रयोजनेन, आम्नानक्रमो मन्त्रक्रमेण, देवताश्रयं द्रव्याश्रयेण, पश्चादाम्नातं पूर्वाम्नातेन, अल्पं भूयसा, गौणं

मुखयेन, सामान्यविहितं विशेषविहितेन, सावकाशं निरवकाशेना,ङ्गं प्रधानेना,ङ्गधर्मः प्रधानधर्मेण, तत्सर्वमेव किं प्राप्तं बाध्यते अथ श्रुत्यादिवदेवाप्राप्तमिति। तद्यदि तावत् श्रुत्यादिवत्सामान्यविशेषातिदेशोपदेशिकादिष्वपि अप्राप्तबाधः ततो ऽवश्यं लिङ्गादाविव श्रुतेर्विनियोजकस्य शास्त्रस्याभावो भ्युपगन्तव्यः । तथा सति तस्यैकत्वाद्विरोधविषयवदितरत्राप्यभाव इति सार्वत्रिकबाधप्रसङ्गः । अथाविरोधापेक्षया सद्भावो ऽभ्युपगम्येत तत इतरत्रापि सद्भाव एवेति तुल्यबलत्वापत्तिः। विशेषशास्त्राद्यनुपमर्द्देन चात्मलाभाभावात्तदभ्युपगमे विपरीतबाधप्रसङ्गः। न ह्येकस्यैव शास्त्रस्य किं चित्प्रति सद्भावः किं चित्प्रत्यसत्त्वमिति युज्यते। तेन दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय, प्रकृतिवत्कुर्याच्छरमयं बर्हिरित्यादौ प्रतिब्राह्मणं प्रत्यङ्गं च शास्त्राभावादेकं शास्त्रम् । तद्यदि शरतक्रालोचनेन कुशकौण्डिन्ययोर्नास्तीत्यवधार्यते ततः प्रयाजादिमाठरादिष्वप्यप्रवृत्तिः । अथ तेष्वस्ति ततः कुशकौण्डिन्ययोरपि भवितव्यम्। अथ तौ प्रति नास्तीतरान्प्रत्यस्तीत्येतदप्येकवस्तुनि विप्रतिषेधान्निष्प्रमाणकम् । न चात्र प्रतिपत्तृभेदो विद्यते येन संबन्धग्रहणादविरोधः स्यान्न च सकृद् गृह्यमाणत्वाच्छास्त्रभेदो ऽवगम्यते येनान्यस्यैव सत्त्वमन्यस्य चासत्त्वमित्यभिधीयेत। व्यक्तिपक्षे च कदा चिदेतद्भवेदाकृतिपक्षे तु यागगतव्यापारातिदेशपक्षे च विषयैकत्वाद्युगपदेकमेव शास्त्रं प्रवर्त्तते। एतेनैवोत्कालनबाधनं प्रत्युक्तम्। ब्राह्मणप्रकृतिवच्छब्दयोस्तुल्यहेतुत्वेन किं चिद्दर्शनासंभवात्तथा च तद्दर्शी तु वचनप्राप्तेरित्युक्त्वा न चोदनार्थकात्स्न्यादि-

त्युत्तरं दास्यति। पौरुषेयेपि तावद्वाक्ये हृदयार्थतया विना शब्दव्यापारेणैवं तदर्जं मया प्रयुक्तमित्येवमीश्वराज्ञानरूपेण भवेन्न त्वेतदेदे ऽवकल्पते। न चेह सामान्यशास्त्रात्परतो विशेषशास्त्राणि कल्प्यन्ते येन सामान्यशास्त्रस्य तत्प्रकृतित्वमात्रमाश्रित्य विशेषशास्त्रापेक्षया सदसद्भावविरोधः परिह्रियेत । तस्मादवश्यंभाविन्यैकरूप्ये नाभिप्रेतबाधो ऽवकल्पते । अथ कथं चित्प्राप्तबाधमेव मिथ्यात्वकल्पनया ऽऽश्रित्यैवमादिष्वविरोध इत्युच्यते तत एवं श्रुत्यादीनामपि प्राप्तबाधोऽङ्गीकर्त्तव्यः। तत्र चोक्तगतौ न बाधमार्गैकरूप्यं घटत इति। तदुच्यते ॥

न बाधस्यैकरूपत्वमेषितव्यं नियोगतः।
न किं चिद्विरुणद्धीह नानारूप्यं प्रमाणवत् ॥

यथैवैते पुरस्ताद्बाधगोचरा भेदा वर्णिता नैतेष्वैकरूप्यमङ्गीकृतम्। तथात्र न बाधप्रकारनानात्वेपि गम्यमाने कश्चिद्विरोधः। तत्र श्रुत्यादिषु तावद्यथोक्त एवाप्राप्तबाधः। न च तत्र किं चिद्विरुध्यते तद्विषयप्राप्त्यन्तरानभ्युपगमात्। ये प्येतच्छायानुपातिनो ऽर्थविप्रकर्षादेव स्मृत्यादिबाधा भवन्ति तेपि हेतुसामर्थ्यकथनात् श्रुत्यादिबाधेनैव व्याख्याताः। ये तु प्रमाणतदाभासनित्यनैमित्तिकक्रत्वर्थपुरुषार्थपौर्वापर्यप्राकृतवैकृतसामान्यविशेषनिष्प्रयोजनसप्रयोजनाभूयस्त्वसावकाशानवकाशाङ्गप्रधानतद्धर्मबाधास्तेष्विदमुक्तं प्राप्तं बाध्यत इति ॥

कथमिति श्रुत्यादिवैलक्षण्यविवक्षितस्य प्रश्नः। उत्तरमाह सामान्यस्य कारणस्य विद्यमानत्वादिति। दर्शितमेतद् ब्राह्मणप-

कृतिवच्छब्दयोः । यत्तु प्राप्तस्य ज्ञानस्यानुत्पादोच्छेदसंस्काराविच्छेदानामशक्यत्वान्नास्ति बाधनमिति । तत्राह नैव निवर्त्तते किं तर्हि मिथ्याज्ञानमेतदिति प्रत्ययान्तरं भवतीति। ज्ञानान्तरं ह्यनन्यगति दृष्ट्वा मृगतृष्णादिवदेव सामान्यापहृतबुद्धेर्ममेयं भ्रान्तिः पूर्वमेतद्विषयपरिकल्पनया जातेत्यध्यवस्यति । तस्मात्प्रयाजादिमाठरादिप्राप्तिवेलायामुपजातापि कुशकौशिकादिबुद्धिर्भ्रान्तिरिति निश्चित्य फलविमुक्तत्वानुबद्धार्थं शास्त्रं वा बाधितुं मन्यते । किं नु खल्वमिथ्याज्ञानस्य रूपमिति । यद्युत्पन्ना अपि प्रत्ययाः प्रत्ययान्तरैरित्थं निराक्रियन्ते ततोऽन्यत्रापि क आश्वास इति मन्यते तत्कथयति । यस्यान्वेषणे ऽपि कृते बाधकप्रत्ययान्तरं नोत्पद्यत इति । यत्तु कारणदोषज्ञानं द्वितीयमुपलक्षणं तल्लोकविषयत्वान्न वेदे संभवतीति नोपन्यस्तम् । प्रासङ्गिकमुक्त्वा इदानीमधिकरणमुपसंहृत्याधिकरणान्तरमारभ्यते ॥

## अहीनो वा प्रकरणाद् गौणः ॥१५॥

ननु बाधायादौ(१) यावानर्थः प्रतिज्ञातः स सर्वः पर्यवसितः किमिदानीमवशिष्यते येन चतुर्थलक्षणं नारभ्यते । तदुच्यते ।

बलाबलविविक्तानां श्रुत्यादीनामतः परम् ।
विरोधः क्वास्ति नास्तीति विषयः परिशोध्यते ॥

तत्र प्रकरणस्य तावच्छ्रुतिलिङ्गवाक्यैः सह विरोधाविरोधौ संप्रधार्येते । ज्योतिष्टोमे श्रूयते तिस्र एव साह्नस्योपसदः कार्या द्वादशाहीनस्येति । तत्र साह्नशब्देन तावदह्ना समाप्य-

(१) अध्यायादौ इति २ पु० पाठः ॥

मानत्वात्तं सर्वैवाह्ना संस्थापयन्तीत्येवं ज्योतिष्टोमो गृह्यते इति व्युपसत्त्वं तस्य । द्वादशाहीनस्येति तु द्वादशोपसत्त्वं किं ज्योतिष्टोमस्याथाहीनस्य द्वादशाहादेरिति संदिह्यते । यद्य-हीनशब्दः कथं चित् ज्योतिष्टोमे ऽप्युपपद्यते ततः प्रकरणस्या-विरोधात्तस्मिन्नेव निवेशः । अथाहीन इत्यहर्गणनामधेयं ततः श्रुत्या संयुक्तत्वादसंयुक्तग्रहणस्वभावेन प्रकरणेनाग्रहणमस्ति हि तदानीं श्रुतिप्रकरणयोर्विरोधः । किं प्राप्तम् । सिद्धा-न्तेनोपक्रमं वाशब्देन व्यावर्त्य प्रकरणाद् ज्योतिष्टोमार्थत्वमि-ति प्रतिजानीमहे । न च श्रुतिविरोधः प्रकरणादेवाहीनशब्द-स्यापि ज्योतिष्टोमगामित्वाद्दस्ति च नञ्समासान्वाख्यानेन त-दभिधानसामर्थ्यमतो यद्यप्यन्हः खः क्रतुसमूहे इत्येवं व्युत्पा-द्यमानो ऽहर्गणवाच्यहीनशब्दो भवति तथापि विरोधपरिहा-रार्थमहानिगुणयोगादेव ज्योतिष्टोमार्थः स मर्षणीयः(१) । स हि क्रत्स्नविधानात्सर्वप्रकृतित्वाच्च न कुतश्चिद्धीयते । न चैनं के चिदपि क्रतवः प्रकृतित्वेन जहति । यत्तु भाष्यकारेणोक्तं दक्षि-णाभिः क्रतुकरणैर्वा न हीयत इति ॥ तदसंबद्धम् । दक्षिणाक्र-तुकरणप्रतिपत्तिनिमित्तानुपादानाद्यथारुचि विकल्पनायां वा ऽनवस्थितसमासार्थप्रसङ्गात् । सहस्रदक्षिणादिक्रतुभ्यस्तु दक्षि-णाभिर्हीनत्वात्क्रतुकरणैरपि विकारभूतोक्थ्यादिसंस्थाभ्यो ऽग्नि-ष्टोमसंस्थस्य न्यूनत्वात् । तस्माद्विध्यन्तदानेनायं न किं चिज्ज-हाति, केन चिद्वा न हीयत इत्यहीनः । प्रकरणसामर्थ्याद-नेन गुणयोगेनोच्यत इति गौणो न गौणवृत्त्याश्रयणात् ॥

(१) समर्थनीय इति २ पु० पाठः ॥

# असंयोगात्तु मुख्यस्य तस्मादपकृष्येत ॥ १६ ॥

मुख्यः प्रथमकार्यत्वाज् ज्योतिष्टोमो ऽभिधीयते।
अहीनशब्दसंयोगो न तु तस्य कथं चन॥
असंयोगाच्च तेनास्य या संख्या तेन संगता।
न सा प्रकरणात्तस्य तेनास्मादपकृष्यते॥
द्वादशत्वमहीनेन षष्ठीश्रुत्यैव संगतम्।
अहीनो ऽहःसमूहश्च ज्योतिष्टोमे हि साह्नता॥

यत्तु गुणात्तत्र प्रवर्त्स्यतीति तद्विकल्प्य निराकरोति। यदि तावद्गौण इत्युपचारात्प्रवृत्तो ऽभिधीयते ततो न प्रकरणानुरोधेन श्रुत्यर्थपरित्यागो युक्तः। न चेदमर्थवादार्थं येनैकाहोपि प्रशंसितुमहर्गणवदुपचर्यते। न चास्य शब्दान्तरं नास्ति येन सिंहगुणसमूह इवेत्थं क्लेशेन प्रतिपाद्यते। तस्मादौपचारिकत्वं तावदयुक्तम्। न च नञ्समासेनावयवव्युत्पत्तिः समुदायप्रसिद्ध्या तन्निराकरणात्। न च नञ्समासस्य लक्षणमस्ति नञ्समासे हि सत्यव्ययपूर्वपदप्रकृतिस्वरसत्त्वात् आद्युदात्तत्वं स्यात्। मध्योदात्तस्त्वयं पठ्यते तेन खप्रत्ययान्तताध्यवसानम्। तथा हि सति. आयन्नादिषु उपदेशिवद्वचनं स्वरसिद्ध्यर्थमित्येवमीनादेशे आश्रीयमाणे प्रत्ययाद्युदात्तत्वेन ईकारे स्वरः सिध्यति तस्मादहर्गणनामधेयमेतत्। अपि च॥

साह्नशब्देनैव द्वादशत्वसंबन्धे ऽप्यवकल्प्यमाने ऽहीनपदोपादानादस्य शास्त्रस्यार्थान्तरवाचित्वं विज्ञायते। प्रकरणाद्वा नित्य-

साह्नद्वादशत्वयोः संबन्धे लब्धे द्वावपि साह्नाहीनशब्दावनर्थकौ स्याताम्। अर्थान्तरत्वे त्वहीनस्य स तावद्वश्योपादातव्यः॥ ततश्चानन्तर्यात्त्रित्वस्यापि तत्संबन्ध एव प्रसज्यतइति व्यवस्थार्थं साह्नग्रहणमप्यर्थवत्। तस्मादुत्कर्ष इति। न तु किञ्चैतद्युक्तम्। परप्रकरणेन्यधर्मविधेरन्याय्यत्वात्तेन वा संबन्धपदव्यवायविच्छिन्नस्य प्रकरणस्य पुनरनुसंधानक्लेशाद् द्वादशोपसद इति च द्वादशाहप्रकरणे विहितत्वात्तत्प्रकृतित्वेन सर्वाहीनेषु तत्प्राप्तेरतस्त्रित्वमेवास्मिन् वाक्ये सर्वदोषरहितत्वाद्विधीयते। द्वादशत्वं त्वहीनसंबन्धिवाक्यान्तरादेव प्राप्तमैष्टिकरूपेणास्य स्तुत्यर्थं निवीतादिवदनूद्यत इति। कथं तर्ह्यधिकरणं नेतव्यम्। तदुच्यते॥

> ज्योतिषो यद्यहीनत्वं ततो विधिरयं भवेत्।
>
> अहर्गणे तु तस्येदं प्राप्तं स्तुत्यर्थमुच्यते॥

एतदुक्तं भवति। किं ज्योतिष्टोमोऽहीनस्तस्य चेदं(१) प्रकरणादङ्गं विधीयते अथाहर्गणस्तस्य च प्राप्तमेवान्यार्थमनूद्यतइति। नन्वेवं सत्यहर्गणसंबद्धमप्येतत् ज्योतिष्टोमस्यैव स्तुत्यर्थमुपयुक्तमिति प्रकरणाविरोधाविरोधविचाराभावः प्राप्नोति। नैष दोषः। पूर्वपक्षे हि द्वादशत्वस्य विधीयमानस्य प्रकरणं बाधकं भवतीत्यनूद्यते(२)। सिद्धान्ते त्वहर्गणसंयुक्तस्य प्रकरणं नेष्टम् इति बाध्येत। अन्यत्वे तद्यत्तथा सत्यपि प्रकारान्तरेण प्रकरणएवोपयुक्तमिति। यदा तु द्वित्ववत्त्रित्वन्यायेनोत्कर्षोपि कथं चिदाश्रीयते शाखान्तरविधौ च सत्यपि शाखान्तरीयस्य

(१) तस्यैवेदमिति २ पु० पाठः॥

(२) अनुगृह्यते इति २ पु० पाठः॥

प्रयोजनान्तररहितस्य विधित्वमुपपद्यते तदा यथाभाष्यमेव शक्यं समर्थयितुम् । सर्वथा द्वादशाहीनस्येत्येतत्तावद्वर्गण-विषयत्वात्प्रकरणादुत्कृष्यत इति सिद्धम् ॥

## द्वित्वबहुत्वयुक्तं वा चोदनात्त-स्य ॥ १७ ॥

पूर्ववदेव विचारः । एतावत्तु भिद्यते । पूर्वत्र प्रधानान्तरेण प्रकृतासमर्थशब्दाभिधेयेन सह संबन्ध आसीदिह तु गुणेन यजमानद्वित्वादिना कथं चिदाशङ्कितप्रकृतसंबन्धेन । तच्च पूर्व-न्यायेनैव सिद्धान्तोपक्रमं सूत्रम् । न तावदिह यजमानद्वित्वब-हुत्वे विधीयेते सिद्धानुवादेन निमित्तीकृत्य प्रवृत्तेः प्रतिपद्वि-धिपरत्वात् । अनेकविधौ च वाक्यभेदात् । अविहितत्वाच्च न ज्योतिष्टोमे यजमानद्वित्वबहुत्वे विद्येते कुलायादिषु त्वेका-हेष्वहीनेषु च प्रत्यक्षविहिते विद्येते । राजा पुरोहितश्च यजेयाताम् । एतेनैव द्वौ याजयेदेतेनैव चीन्याजयेदेको द्वौ बहवो वाहीनैर्यजेरन्निति तस्मादुत्कर्षः ॥

## पक्षेणार्थकृतस्येति चेत् ॥ १८ ॥

प्रकरणाज्ज्योतिष्टोमे निवेशः । न चाहीनवदप्रकृतयज्ञसंब-न्धोस्ति यजमानद्वित्वादिसंबन्धस्तु निमित्तमात्रोपयिकत्वा-न्नाङ्गाङ्गिभावाय प्रभवति । न च तद्द्वारेण क्रतुसंबन्धो घटते लक्षणाप्रसङ्गात् ॥ न हि श्रुत्योपयुक्तानां लक्षणयोपयोगा-न्तरं युज्यते । द्वित्वादिस्वरूपसंबन्धे तु विधिरेवानर्थको भ-वेत् । फलकल्पनायाश्च प्रकरणसंबन्धकल्पना ज्यायसी ॥ यत्तु

निमित्तं प्रकरणे नास्तीति तदुच्यते ऽर्थाद्भविष्यति ॥ न हि विहितमेवैकं निमित्तं भवत्यर्थप्राप्तस्याप्युपपद्यमानत्वा,द्दृ-ष्टि चैका शक्तिपक्षे द्वित्र्यादियजमानप्राप्तिः ॥ न चात्रापि यजमानैकत्वविवक्षामवधारयामः ॥ सत्यामपि च विवक्षायामपि वाप्येकदेशे स्यादित्यनेन यथैवाशक्तेरन्यत्किं चिदङ्गं हा-प्यते तथैव यजमानैकत्वमपि कदा चित्परित्याज्य द्वौ बहवो वा यजेरन् ततश्चास्ति निमित्तम् ॥ अथ वैतदेव प्रतिपद्विधानं दृष्टार्थाद् द्विबहुयजमानकर्तृश्रुतिं कल्पयिष्यामः ॥ सा चैतस्मि-न्नेव पक्षे भवति न प्रतिपदन्तरपक्षेष्विति नैकत्वचोदना विरो-त्स्यते ॥

## न प्रकृतेरेकसंयोगात् ॥ १९ ॥

प्रकृतिग्रहणं प्रकृतप्रतिपत्त्यर्थमैापदेशिकत्वाद्वात्यन्तानतिक्र-मार्थम् ॥ आतिदेशिकं ह्यर्थवशेन बाध्येतापि । प्रत्यक्षविहितं त्वेतत्काम्ये नित्ये च यजेतेत्येकवचनश्रवणात् ॥ न चास्याविवक्षायां कारणमस्ति ॥ यथा च विवक्षा तथा षष्ठे प्रतिपादयिष्यते ॥ यद्यप्यशक्तिकृतं त्यापनं तदप्येको यथा शक्नुयादित्युपव-न्धादन्याङ्गविषयं विज्ञायते शक्नोति हि दक्षिणापरिमाणं प-रित्यज्यैकोपि निर्वर्त्तयितुम् । उत्पत्तिप्रयोगचोदनास्थत्वाच्च संख्यानुग्रह एव युक्तः तस्मादेकयजमानकत्वान्न प्रकृतौ नि-मित्तमस्तीत्युत्कृष्यते । यत्त्विदमेव वचनं सामर्थ्याद्वाचेत्स्यतीति . तस्यान्यथाप्युपपद्यमानत्वात् ॥ यदि ह्येतन्निमित्तमनाक्षिपदनर्थकोभवेत्तत आक्षिपे,त्कथं चैतदनर्थकं भवेद्यदि प्रकृताविवान्यत्रापि द्वित्वबहुत्वे न स्याताम् । ननु ते अन्यत्र न स्तः

कुलायादौ विद्यमानत्वादिह च सिद्धवन्निमित्तत्वेनोपादानाद्वा-
क्यभेदप्रसङ्गाच्च नार्थादाक्षेपमर्हतः ॥ पत्न्यभिप्राये तु द्वित्वे नि-
त्यत्वान्निमित्तोपादानानर्थक्यम् ॥ बहुभ्य इति च विरूपैकशे-
षः स्वरमतः पुंबहुत्वप्रतीतौ सत्यां विधिर्न्निष्प्रमाणः कल्प्येत ॥
चोमे वमानाविथ च त्वगत्या पत्न्यां द्वितीयशब्द इष्टो न चि
द्वियज्ञवद् द्विपुरुषकमाधानं क्वचिद्विहितम् । एकद्विपत्नीकप्र-
योगावरोधाच्च नित्यायाः प्रतिपद आनर्थक्यं भवेत् विषमशिष्ट-
विकल्पो वाभ्युपगम्येत तस्मादप्युत्कृष्यते । यत्तु क्रतुसंबन्धो ना-
भिहित इति नैष दोषः ॥ प्रतिपच्छब्दादेव क्रतुगामित्वप्रतीतौ
सत्यां द्वित्वादिना विशेषप्रतिपत्तिसिद्धेः ॥ यजमानशब्दो वान्य-
थानुपपत्त्या यज्ञमुपस्थापयिष्यति ॥ तस्माद्यानि रक्तसंयोगे स-
त्यपि प्रकरणविरोधस्तत्र च श्रुतेर्बलीयस्त्वम् ॥

# जाघनी चैकदेशत्वात् ॥ २० ॥

उत्कर्षबुद्धेरपवादः प्रस्तूयते ॥ जाघन्या पत्नीः संयाजयन्ती-
ति गुणप्रधानत्ववचनव्यक्तिद्वयात्सन्देहो यदि जाघनीं संस्का-
र्यत्वेनोद्दिश्य पत्नीसंयाजाः संस्कारका विधीयन्ते ततः संस्का-
र्यस्य प्राधान्यात्स्वस्थानापरित्यागे सति यत्र जाघनी तत्र पत्नी-
संयाजा न यत्र ते तत्रासौ । सा च लोकस्था निष्प्रयोजनत्वान्न
संस्क्रियतइत्यग्नीषोमीयगता कृतार्थत्वात्संस्कर्त्तव्या ॥ यदि
तु पत्नीसंयाजोद्देशेन जाघनी विधीयते ततः प्रकृतानुवाद-
बुद्ध्यनपायाद्दर्शपूर्णमासयोरेव जाघनीविधानम् ॥ किं प्राप्तम् ।
आरादुपकारकत्वात्समवायिकत्वस्याभ्यर्हितत्वादन्यत्र चात्व-
र्थविधानादिधिप्रत्यासत्तेरेकदेशद्रव्याणां चाप्रयोजकत्वात्त-

था सति च परप्रयुक्तकृतार्थग्रहणेन प्रतिपत्तिलक्षणापत्तेर-ग्नीषोमीयजाघनीसंस्कारविधानादुत्कर्ष इति सा तत्संब-द्धा कर्त्तव्येत्युच्यतइति च्छेदः ॥ परं च कर्मकथनमेवं सती-त्यादि। यदि पुनरुच्यते एवं सतीति योज्यते ततः परिचोदना-च्छायापत्तेर्न च तद्युक्तमुत्तरानभिधानात्तस्मादात्मवचनत्वेनै-व योज्यम्॥ नन्वेवं सति प्रतिपदादिवदेवोत्कर्षात्प्रकृतौ पत्नी-संयाजानामकरणं प्राप्नोति ॥ प्राप्नुयादेवम्॥ यदि पशौ प-त्नीसंयाजा न स्युस्ते त्वतिदेशप्राप्तास्तत्र विद्यमाना एव केवलं जाघनीसंबन्धित्वेन विधीयन्ते नैव तर्ह्युत्कर्ष इति वक्तव्यम्। सत्यम्। न कस्य चित्पदार्थस्योत्कर्ष इदमेव तु वाक्यं विकृतौ कार्यं कुर्वदुत्कृष्यत इत्युच्यते ॥

## चोदना वा ऽपूर्वत्वात् ॥ २१ ॥

न चास्य विधेरुत्कर्ष इति ॥ कुतः।

जाघन्या विद्यमाना स्यात्संस्कार्योत्कर्षकारणम्
इहोपादीयते ऽङ्गत्वाद्यागेष्वाज्यवदेव सा ॥

सर्वत्रैवंविधे वाक्ये गुणे विधिशक्तिः संचरतीत्युक्तम्॥ प-त्नीसंयाजास्थानन्तरविहिता सन्तोऽस्य वर्त्तन्तइति न विधातुं शक्यन्ते। न चेह स्थितेन पशुगतपत्नीसंयाजानुवादो युक्तस्त-द्धुद्ध्यभावात्। न च जाघन्याः कालादिवदनुपादेयत्वं येनेमं विधिमाकर्षेत्संस्कार्यत्वादिति चेद् न। तृतीयावगतगुणत्वाति-क्रमप्रमाणाभावात्। यदि च कृतार्थां जाघनीं प्रस्तुत्यायं वि-धिः प्रवर्त्तेत तथापि तावत्कदाचित्प्रयाजशेषवद् द्वितीयार्थे तृ-तीयेति व्याख्यायेत। सा त्वपूर्वा विधीयते। तस्मान्नोत्कर्ष-

मर्हति । न च प्रकरणाबद्धत्वादेते पत्नीसंयाजा उत्कर्षं सह-न्ते । वाक्यबलीयस्त्वादिति चेन्न । वाक्यस्याप्येवमादेरधिकृता-पेक्षित्वेन प्रकरणाद् दुर्बलतरत्वाद्यदि ह्येतदेव पत्नीसंयाजा-नामुत्पत्तिवाक्यं भवेत् ततः प्रकरणादाच्छिन्द्यात् । एते तु वा-क्यान्तरोत्पत्तित्वात्सन्निधिवशेन यावता कालेनैतेन वाक्येन संगृह्यन्ते तावता दर्शपूर्णमासाभ्यामपि शक्या ग्रहीतुम् । न च जाघन्याः फलवत्त्वं विज्ञातं येनैषां प्रयोजनाकाङ्क्षामपनये-त् । अतो यावदसौ किमर्थेत्यालोच्यते तावत्फलवद्दर्शपूर्णमा-सप्रसृतेन कथंभावेनाङ्गत्वमापादितम् । न चेहापूर्वयागविधा-नं यजिमात्रत्वेनाश्रवणात् । पत्नीसंबद्धयागश्रवणं ह्येतत् तत्र यदि जाघन्युद्देशेन च कर्म विधीयते पत्न्यश्चास्य विधीयन्ते ततोनेकार्थविधानादेकशब्दे परार्थवदिति वैरूप्यलक्षणो वा-भेदः स्यात् । अल्पार्थविधिसंभवाच्च न विशिष्टविधानेन परि-हारो घटते । तस्माद्विशिष्टं यागमुद्दिश्य द्रव्यं विधीयते । नन्वे-वमपि विशिष्टानुवादात्सुतरां वाक्यं भिद्येत । नैष दोषः । प्र-करणप्राप्तेः पत्नीशब्दस्यातन्त्रत्वाद्यथैवाभिक्रामं जुहोतीति सामान्यशब्दोऽप्यधिकारात् प्रयाजविषयो भवति । तथैव य-त्संयाजयन्तीत्येतावतैवाधिकृताः पत्नीसंयाजाः प्रत्येष्यन्ते तस्मा-दनुत्कर्षः ॥

## एकदेश इति चेत् ॥ २२ ॥

यदुक्तमेकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगादप्रयोजक इ-ति तत्रोच्यते ॥

## न प्रकृतेरशास्त्रनिष्पत्तेः ॥ २३ ॥

स नामाप्रयोजको भवति यस्य प्रकृतग्रहणादिनार्थो न ज्ञायते यथोत्तरार्द्धात्त्रिश्छृते समवद्यतीति। जाघनीशब्दस्तु हृदयादिशब्दवदाकृतिवचनः सा चान्तरेणापि पशूपादानं परप्रयुक्तपशूपजीवनं वा शक्योपादातुम्। रूपं वा शेषभूतत्वादिति यथा कथं चिदुत्पन्ना येन केन चिदुपादाय शक्याऽनुष्ठातुम्। न चेयमवयवभूता लोके न प्रचरति। मांसविक्रयिणो हि प्रत्यङ्गविभक्तानेव पशून्विक्रीणते। तत्र शक्या जाघनी क्रयादिनोपादातुम्। न चावश्यमियं छागादेव ग्रहीतव्या। जाघनावयवमात्रत्वेन श्रवणादग्नीषोमीयेऽपि हृदयादीनां संभवत्येव लोकादुपादानं तथा सत्यपि तु तेषां भेदेनैव जातिविशेष उत्पत्तिप्रकारस्य संज्ञपनादिर्नियत इति क्रयाद्यनाश्रयणम्। न त्विह तथा शास्त्रकृता निष्पत्तिः प्रकृतिग्रहणं च दर्शपूर्णमासप्रतिपत्त्यर्थम। तस्माद्दर्शपौर्णमासिकपत्नीसंयाजाङ्गभूतेन आज्येन सह विकल्प्यमाना जाघनीति सिद्धम् ॥

## संतर्दनं प्रकृतौ क्रयणवदनर्थलोपात् स्यात् ॥ २४ ॥

इह वाक्यप्रकरणयोर्विरोधाविरोधचिन्ता। ज्योतिष्टोमे सोमाभिषवाधारत्वेन फलकद्वयमाम्नातं तत्प्रकृत्य श्रूयते दीर्घसोमे संतृण्याद्धृत्याइति भित्त्वा संघातयेदित्यर्थः। तत्र दीर्घसोमशब्दः किं प्रकृतावेव कथं चिदुपपद्यते ततस्याविरोधः प्रकरणस्याथ दीर्घकालसत्राहीनयाचित्वादनुपपद्यमान उत्क-

र्षेदिति संशयः । एते चात्र पक्षा भविष्यन्ति किं प्राद्व एव ज्योतिष्टोमे निवेशो दीर्घयजमानके वाथ षोडश्यादिसंस्थास्वेवाथ वा सत्राहीनयोरेवाथ वाग्निष्टोमान्यमात्र इति । किं प्राप्तं दीर्घसोमशब्दस्येष्टिपशुदर्विहोमापेक्षया प्रकृतावेवोपपत्तेः । संतर्द्दनप्रयोजनस्य च दीर्घस्य(१) संभवात् । असंतर्द्दनविधिना च सत्र ओष्ठियववद्विकल्पसिद्धेः प्रकरणानुग्रहायानुत्कर्ष इति । क्रयणवद्विकल्प इत्युपरिष्टात्समुच्चयस्थापनात्पूर्वपक्षेण दृष्टान्त इति व्याख्येयम । न चावश्यं सर्वत्र सिद्धान्त एव दृष्टान्तो भवति । यस्य कस्य चिन्निदर्शनस्य प्रतिपत्तिकारणत्वसिद्धेः ॥ असंतर्द्दनवाक्यमनुपन्यस्यैव चानर्थक्योपदृष्टान्तः क्रयवदिति समर्थनीयः । तत्रैवं योजना भवति । नन्वल्पकालत्वात्सोमस्य प्रकृतौ मन्दफलं संतर्द्दनम । नैष दोषः । क्रयणवदर्थत्वात् । यथाल्पमूल्यत्वात्सोमस्य वासःप्रभृतीनामेकेन केन चित् क्रये सिद्धे शेषाणि वचनसामर्थ्याद्दीयमानानि तस्यैवानतस्य सुतरामानतिं कुर्वन्तीति न लुप्तार्थानि भवन्ति स्वानतात्क्रीतः सोमो ऽभ्युदयकारी भवतीति च शास्त्रार्थो विज्ञायते । तथात्र सत्यप्यसंतर्पयोरपि प्राकृताभिषवक्षमत्वे वचनसामर्थ्याद् दृढतरकृतो ऽभिषवः श्रेयस्कर इत्यवगमात् अलुप्तार्थत्वं तस्मादनुत्कर्ष इति ॥

# उत्कर्षो वा ग्रहणाद्विशेषस्य ॥ २५ ॥

वाक्यकृताद्वा दीर्घसोमसंयोगादुत्कर्षः । कुतः ॥

दृष्टा ह्रस्वं सजातीयं दीर्घबुद्धिः प्रवर्त्तते ।

(१) दार्ढ्यस्येति २ पु० पाठः ॥

तस्मात्सोमस्य दीर्घत्वं भवेत्सोमान्तरेक्षया ॥

न चोद्भिपशुदर्विहोमापेक्षया सोमस्य दीर्घत्वं युक्तं विजातीयत्वादनुपात्तत्वाच्च । सर्वत्र प्रतियोगिन्युपात्ते दीर्घह्रस्वादिविभागो भवति । न चाग्निष्टुदादय उपात्ता यानालोच्य ज्योतिष्टोमो दीर्घ इत्युच्येत । ननु सोमयागभेदो ऽप्यनुपात्त एव । यद्यप्यनुपात्तस्तथापि तुल्यजातीयत्वं तावदस्त्यपेक्षाकारणं विशेषणविशेष्यभावाच्च सोमत्वे सति दीर्घत्वमुपादीयमानं सोमान्तरस्य व्यवच्छेदार्थमेव विज्ञायते । तेषां कः पुनर्दीर्घः कुतो वा दीर्घ इत्यपेक्षिते ज्योतिष्टोमस्तावन्न कुतश्चिद्दीर्घ इति ततो ऽन्ये गृह्यन्ते तेषां च प्राथम्यात्स एवापेक्षाकारणं भवति ।

## कर्तृतो वा विशेषस्य तन्निमित्तत्वात् ॥ २६ ॥

यथा कथं चिद्दीर्घसोमशब्दे ऽवकल्प्यमाने न युक्तः प्रकरणबाधः ॥ स च कर्तृद्वारेणोपपत्स्यते । न च स्वरगतः कश्चित्समासे विशेषो ऽस्त्युभयथा ऽप्यन्तोदात्तत्वादतः षष्ठीसमास इति ॥

## क्रतुतो वार्थवादानुपपत्तेः स्यात् ॥ २७ ॥

क्रतुत एव दैर्घ्यं समानाधिकरणसमास इत्यर्थः ॥ किं कारणमेवमुभयोः स्वार्थ एव वादो भविष्यत्यन्यथैकस्य परविशेषणत्वात्स्वप्रधानभूतार्थवादानुपपत्तिर्भवेदेवं च बहुसोमाभिषवा-

दृढत्वाकाङ्क्षायां सत्यां दृष्टार्थोऽयं वादो भविष्यत्यन्यथा मन्दत्वाद्दृढत्वाकाङ्क्षायास्तदनुपपत्तिः स्यात् । तथा धृत्यादृत्यर्थवादो ऽमुमेवार्थं द्योतयति । तस्माद्यत्र फलकयोर्दारणाशङ्का तत्रैवैतद्विधानमितरथा दीर्घेण कर्त्रा विशेषणमत्यन्तादृष्टार्थं भवेत् ॥ दीर्घे ह्रस्वे च कर्त्तरि कर्मणस्तुल्यरूपत्वाद्द्वाभ्यां चैतत्कर्त्रा विशेषणम् । स्वतो विशेषणं त्वन्तरङ्गम् ॥ तस्मादुत्कर्षः ॥

## संस्थासु कर्तृवद्धारणार्थाविशेषात् ॥ २८ ॥

परिचोदनापदोत्तरभूतमेतत्सूत्रम् । मा नामाग्निष्टोमसंस्थायां निवेशो भूदुक्थ्यादिषु त्वग्निष्टोमापेक्षया दीर्घसोमशब्द उपपद्यते प्रकरणं चानुगृह्यते । तस्मात्तिसृष्वपि संस्थासु निवेश इति प्रकरणाविशेषः ॥ संस्थाधिकरणेनाद्यापि न निराकृत इत्येव युक्तमथ वास्त्येव संस्थानां प्रकरणं तत्र येषां धर्माणामग्निष्टोमार्थता संभवति तेषु नित्यानित्यसंयोगविरोधाद्या वर्त्तते ॥ संतर्दनस्य पुनर्नित्येनाग्रहणात्केवलानित्यविषयत्वं न विरुध्यते । तस्मात्संस्थासु निवेश इत्युक्ते ऽभिधीयते ॥

संस्थास्वपि तु तावत्त्वात्सोमस्याभिषवः समः ।
कर्तृपक्षवदेवातो धृत्यादृति वृथा स्तुतिः ॥

सत्यप्यत्र कर्मकालयोर्दीर्घत्वे तावानेवातिदेशप्राप्तो दशमुष्टिः सोमो ऽभिषूयते धारणस्य तु तुल्यत्वाद्दृष्टार्थवादयोरनुपपत्तिः स्यात् । प्रदानविवृद्ध्या न्यूनपात्राग्रहणाच्च सोमवृद्धिर्भ-

षिष्यतीति चेन्न दशमुष्टित्रिपर्वपरिमाणयोः शाब्दत्वात्प्रदान-विवृद्धिस्तोयादिवृद्ध्या संपादनीया तस्मादविशिष्टं धारणमित्यु-त्कर्षः ॥(१)

## स्यादनित्यत्वात् ॥ २९ ॥

स्याद्वा तेनैव हेतुना संस्थासु निवेशः । प्रदानविवृद्ध्या च प्र-देयविवृद्धौ सत्यामर्थवाद उपपत्स्यते । तोयेन विवृद्धिरिति चे-न्न । सोमसाधनकत्वे सति वचनादिना द्रव्यान्तरप्रक्षेपानुपप-त्तेस्तस्मात्सोम एव वर्द्धनीयः स च स्थौल्यबहुपर्वत्वयोरसंभवा-द्दीर्घपर्वा ग्रहीष्यते । तथा सति प्रदानविवृद्धिर्यथोक्तं च परि-माणं संभावितं भविष्यति प्रकरणाद्दीर्घसोमशब्दौ चोपपत्स्येते । शक्यं चेदानीं लतादैर्घ्येणापि सोमो दीर्घ इति वक्तुम् ॥ अनि-त्यत्वादिति नियतपरिमाणत्वस्यानियतत्वादिति मन्यते ॥ श-क्यं ह्युपायान्तरेण पूर्वपरिमाणमतिक्रमितुमित्यर्थः ॥ न त्वेत-द्युक्तम् ॥ सत्राहीनेष्वसंभवादतो ऽवशिष्टानंशूनभ्यूहेदित्यभ्यू-हो यो ऽनियतपरिमाणस्तदभिप्रायं स्यादनित्यत्वादित्येतद्व्या-ख्येयम् । संस्थाधिकरणन्यायेनैव वा प्रकरणविरोधं ब्रु-वाणस्य नित्येनाग्रहणादित्यनित्यत्वमुत्तरमभिधीयते । तृती-यसवने अंशुरेको गृह्यते इत्यत्र विवदन्ते तस्यापि तत एव सोमादुपादानादतोऽपि विप्रकृष्टपर्वत्वमात्रमेव का-रणं वक्तव्यम् । तस्मादपि संस्थासु निवेश इति । न त्वत्र सं-स्थास्वेवेत्यवधारयितव्यम् ॥ कुतः ॥

---

(१) अत्र उक्थ्यादिषु वार्यस्य विद्यमानत्वात् । अविशेषात् स्तुतिर्व्यर्थेति चेत् । इति सूत्रद्वयं न मुद्रितमर्थतस्तु व्याख्यातम् ॥

अग्निष्टोमान्यमात्रे हि दीर्घशब्दोऽवकल्पते ।
अथान्येनेति वक्तस्मात्संस्थाकल्वन्तरग्रहः ॥

यथैव य एतेनानिष्ट्वान्येन यजेतेत्येतन्न संस्थास्वेव स्थास्यति किं तर्ह्यग्निष्टोमव्यतिरिक्तमात्रे तथा दीर्घत्वमप्यग्निष्टोमातिरिक्तमात्रावलम्बनमशक्यं प्रकरणेन संस्थास्वेव स्थापयितुम् ॥ प्रकृतिवच्छब्दपूर्णत्वाच्च न तासां प्रकरणमस्ति । न ह्येतद् गृहीतं प्राकृतं किं चिदङ्गं पुनरुच्चार्य विधीयते प्रथमोपदिश्यमानज्योतिष्टोमधर्ममध्यपातित्वादितस्य न संस्थानां प्रकरणमस्ति । कथम् ॥

असंबद्धव्यवाये हि सति तद्धि निवर्त्तते ।
तेनासां ज्योतिषैर्धर्मैर्विच्छिन्ने नानुषङ्गधीः ॥

यदि हि संतर्द्दनमुक्थ्यादीन्विधायावान्तरप्रकरणे श्रूयेत ततः स्यादपि प्रकरणग्रहणमिदं तु संस्थाधिकरणन्यायेन तद्ग्राह्यैर्ज्योतिष्टोमधर्मैरन्तरितत्वान्न संस्थाकथंभावानुषङ्गेन संस्पृश्यते । तस्मान्न प्रकरणं संस्थानं वा संस्थासु विनियोजकम् । किं तर्हि वाक्यमेव तच्च दीर्घसोमत्वाविशेषात्सर्वाहीनेष्वपि तुल्यमिति सर्वधर्मता ॥

## संख्यायुक्तं क्रतोः प्रकरणात्स्यात् ॥ ३० ॥

प्रवर्ग्यानारभ्य कं चित्क्रतुविशेषमाम्नायते । यत्प्रवर्ग्यं प्रवृञ्जन्तीति स च वाक्यसंयोगेन क्रतुसंबन्धं प्रतिपद्यते । पुरस्तादुपसदां प्रवर्ग्येण चरन्तीति । स च प्रवृत्तौ वा द्विरुक्तत्वादिद्व्येवं ज्योतिष्टोमं गच्छति । तत्र ह्युपसदः प्रत्यक्षविहिताः स-

न्ति विकृतौ तु यावदनुमानेन ताः गमिष्यन्ति तावत्प्रवर्ग्योऽपि यास्यत्येवेति नार्थ उपदेशेन। तेनाह ज्योतिष्टोमे प्रवर्ग्यं प्रकृत्य श्रूयते इति। यदा कौषीतकिब्राह्मणे ज्योतिष्टोमप्रकरण एव स्वक्रमस्थस्य प्रवर्ग्यस्योत्पत्तिस्तदा तद्विषयः श्रवणोपन्यासो यथाश्रुत एव भवति। तं प्रवर्ग्यं प्रकृत्य श्रूयते न प्रथमे यज्ञे प्रवृञ्ज्यादिति। तत्र संदेहः। किं प्रथमयज्ञग्रहणेन सर्वसंस्थः सर्वप्रयोगावस्थश्च ज्योतिष्टोमो गृह्यते उत प्रथमप्रयोगमात्रमिति॥ तत्र किं प्राप्तम्॥ यज्ञशब्दसामानाधिकरण्यादेष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम इति च प्रयोगात्प्रथमशब्दस्य ज्योतिष्टोमपर्यायत्वं विज्ञायते। य एतेनानिष्ट्वेति च सर्वयज्ञेभ्यः प्रथमं प्रयुज्यमानत्वेन विधानादेतस्यैव ग्रहणम्। तथा च प्रकरणमनुगृह्यते। ननु च तदीयप्रथमप्रयोगेऽपि प्रकरणानपकर्षादस्त्येवानुग्रहः। कथमनुग्रहो यदा दीक्षितहोमदानपाकादिप्रतिषेधवदयं सर्वप्रयोगविषयः प्राप्नुवन्वाक्येनैकप्रयोगनिबन्धनः क्रियते। न हि तदा प्रकरणेन किंचन व्याप्रियते। ज्योतिष्टोमिकप्रयोगाश्रयणस्यापि वाक्यकृतत्वा,द्यदो ह्यान्यः कश्चित्प्रथमप्रयोगार्हः स्यात्तैनैवैष प्रतिषेधो ज्योतिष्टोमएवावतिष्ठेत, तदभावात्तु यदि परिशेषादिदं वाक्यं संयुक्तप्राथम्यानुरोधेन ज्योतिष्टोमगामि भवेत्ततः प्रकरणस्य किमित्यवधारणाद्बाधः प्रसज्येतैव। तस्मात्प्रकरणानुग्रहार्थमपि प्रथमशब्दोपात्तादिसंख्यायुक्तमिदं ज्योतिष्टोमे स्यादिति॥

## नैमित्तिकं वा कर्तृसंयोगाल्लिङ्ग-

# स्य तन्निमित्तत्वात् ॥ ३२ ॥ (१)

यदि प्रथमशब्दोऽयं नाम स्यात् ज्योतिषः स्वतः ।
तत एवं भवेदेष प्रयोगक्रतुवाचकः (२) ॥

प्रथमशब्देन हि यत्कर्त्तुरप्रवृत्तपूर्वस्याद्यं प्रवर्त्तनं तदभिधीयते । न कर्म किं चित्तद्योगात्तु कर्मणि प्रतीतिः स्यात्सापि च तत्प्रयोगगतस्यैव । न हि द्वितीयादीन्प्रयुञ्जानः कश्चित्प्रथमं यजत इत्युच्यते । न चैवमयजमानस्य प्रथमयज्ञो नाम भवति । ततश्च पूर्वाभिहितप्राथम्यगुणलक्षणया तद्वति गृह्यमाणेऽर्थविप्रकर्ष आपद्यते । तत्र च स आश्रीयते यत्र तेन विनैकवाक्यत्वं नावकल्पते यथैष वाव प्रथमो यज्ञानामित्यत्र । न त्विह प्राथम्यस्य प्रतिषेधनिमित्तता न संभवति येन पूर्वप्रतीतं सत्तदुल्लङ्घ्य तत्प्रयोगस्योऽपि तावत्क्रतुर्गृह्येत । प्रयोगान्तरस्य तु दूरविप्रकृष्ट एव । नन्वेवं सति यस्य कस्य चित्प्रथमप्रयोगो निमित्तं प्राप्नोति । प्राप्नुयाद्यदि विधिरेष स्यात् । अयं तु प्रतिषेधत्वात्प्राप्तिमपेक्षमाणो लौकिकव्यापारेभ्यो वैदिकेभ्यश्चाध्ययनाधानाग्निहोत्रदर्शपूर्णमासादिभ्यः प्रवर्ग्यप्राप्त्यभावान्निवर्त्तमानः सामर्थ्येन सोमं गच्छति, तत्राप्यनारभ्यवादन्यायेन ज्योतिष्टोमं, प्रथमशब्दाच्च तस्याद्यं प्रयोगम् । एवं च सजातीयत्वेन प्रत्यासत्तेश्च तस्यैव द्वितीयादिप्रयोगापेक्षणं युक्ततरं भविष्यतीतरथा तु दूरस्थयज्ञान्तरापेक्षायां सत्यां विप्रकृष्टतरत्वं भवे,त्तस्मात्प्रकरणं बाधित्वा वाक्येन प्रथमप्रयोगविषयता सि-

(१) पूर्वत्र २९ । ३० सूत्रद्वयं टिप्पण्यां निवेशितमिति २९ । ३० सूत्राङ्कस्थाने ३१ । ३२ अङ्कौ बोध्यौ तदनुसारेणेतःप्रभृति ३३ प्रभृतयोऽङ्काः ॥

(२) प्रयोगस्य तु वाचक इति २ पु० पाठः ॥

दा ॥ तत्र तु केषां चित्तैत्तिरीयादीनामग्निष्टोमे प्रवृणक्तीति पुनर्विधानमस्ति तद्यदि तावद् द्वितीयादिप्रयोगविषयं कल्प्यते ततः प्रतिषेधाभावात्पूर्ववचनेनैव सिद्धेर्विधानानर्थक्यम् । तस्मादाद्यप्रयोगविषयमेवैतत् । ततश्च प्रतिषेधो बाध्यमानः क्रत्वन्तरप्रथमप्रयोगं सावकाशत्वाद् गच्छतीति केचित् । तत्तु न युक्तम् ॥ अग्निष्टोमस्यापि संस्थारूपस्यान्यत्र विद्यमानत्वात् । न च प्राथम्यं सावकाशम् । य एतेनानिष्ट्वेति केवलज्योतिष्टोमविषयत्वात् । प्रथमं हि यजनं प्रथमं यज्ञो न चैतदन्यस्य क्रतोरस्ति । तस्माज् ज्योतिष्टोमस्यैवातिरात्रसंस्थस्य प्रथमाहारे प्रतिषेधोऽग्निष्टोमे विधिरित्यपरे । विहितस्यातिरात्रस्यापि पाक्षिकः प्रथमाहारः तस्मात्प्रथमां यजमानोऽतिरात्रेण यजेतेति । सोयं सामान्येनोभयोः संस्थयोः प्रतिषेधोऽग्निष्टोमे तु विशेषविधिः स बलीयान् । एतदपि न युक्तम् । अग्निष्टोमस्यापि बहुप्रयोगान्तरक्रत्वन्तरगामित्वेन सुतरां सामान्यरूपत्वात् । अतोऽतिरात्रप्रथमाहारे नित्यं प्रतिषेधोऽग्निष्टोमे तु विहितप्रतिषिद्धत्वा(१)द्विकल्प इति केचित् । अत्र पुनश्चोदयन्ति । यद्येष प्रतिषेधस्तत एवं स्यात् पर्युदासास्त्वेवंविधा इति दशमे वक्ष्यते । अपि तु वाक्यशेषः स्यादिति । न चासावग्निष्टोमवाक्यशेषो भवति । यदि ह्यप्रथमयज्ञेऽग्निष्टोमे प्रवृणक्तीति कल्प्येत ततस्तस्मादेव सामान्यशास्त्रात्प्राप्तत्वादग्निष्टोमयुक्तविध्यानर्थक्यमापद्यते, तेन सामान्यविधेरेवैष शेषो यत्प्रवर्ग्यं कुर्वन्ति तदप्रथमयज्ञ इति, ततश्चातिरात्रविषयत्वमेव फलतो भवति । न चैक एव शेष उभयोर्वाक्ययोः संभवत्येकसंबन्धेनैव

(१) विहितप्रतिषेधाद्विति २ पु० पाठः ॥

कृतार्थत्वात् । तस्मादग्निष्टोमविशेषैर्निरपवादत्वान्नित्यमेव तत्र भवितव्यमिति । उच्यते । स्यादेतदेवं यद्ययं पर्युदासो भवेन्न त्वयं पर्युदासो वाक्यशेषत्वानुपपत्तेस्तत्राग्निष्टोमवाक्ये ताव-द्भवतैव प्रतिपादितम् । अतिरात्रवाक्येऽपि यदि तदीयकथंभा-वपूरणापेक्षायामेतदुच्येत ततः शेषो भवेत् । न तु तथोक्तम् । संस्थास्तु नाम समाननामत्वा(१)दवान्तरप्रकरणे च प्रतिषेधा-श्रवणान्न ह्यनेकज्योतिष्टोमिकवाक्यान्तरव्यवहितातिरात्रप्रकृ-तिवच्छब्दस्यैष शेषोऽवकल्पते । तस्मात्तौ न पशाविति वत्प्रति-षेध एवायं विज्ञायते । ननु प्रतिषेधोऽपि सन्प्रकृतिविषय एव प्राप्नोति । प्राप्नुयाद्यदि विकृतावपि नोपपद्येत स तु प्राप्तिमा-त्रापेक्षित्वादुपदेशमतिदेशं वानादृत्योभयत्रापि प्रवर्त्तते । शक्यं त्विह वक्तुं प्रकृतौ वा द्विरुक्तत्वादिति । ननु च तुल्यार्थत्वएतदे-वं युक्त,मस्ति चेहार्थभेदः, प्रकृतौ वैकल्पिकत्वात् । अतिरात्रे च चोदकप्राप्तस्य नित्यप्रतिषेधात् । नैतदस्ति । वक्ष्यति ह्येतत्प्रति-षेधः प्रदेशेऽनारभ्य विधाने च प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यादि-ति । यस्य शास्त्रादृते प्राप्तिर्नास्ति तस्य प्राप्तिमनभ्यनुज्ञाय प्रति-षेधासंभवादवश्यं प्रतिषेधेनैव तद्विषयोऽपि विधिरङ्गीकर्त्तव्यः । स चेदङ्गीकृतः शास्त्रत्वाविशेषात्तुल्यबलत्वमतः सर्वथातिरा-त्रे विकल्पेन भवितव्यम् । तस्माद् द्विरुक्तत्वादुपदेशातिदेशयो-स्तु प्राप्तिकालवैषम्यात्प्रकृत्यर्थतैव वरमिति । नन्वेवं सत्यग्नि-ष्टोमे प्रवृत्तोत्पत्त्यनेनैव प्रकृतिविधेः सिद्धत्वादनारभ्यवादो ऽनर्थकः प्राप्नोति । नैष दोषः । तेनोत्पत्तिरनेन विनियोग इत्ये-वं व्यापारभेदादथ वानारभ्यवादो ऽग्निष्टोमव्यतिरिक्तविषयो

---

(१) संस्थानामसमानविधानत्वादिति २ पु० पाठः ॥

भविष्यति। न त्वग्निमवाक्येनोपसंह्रियते। न शक्यमेतदुपसंह-र्तुम्॥ तन्नाम विशेषवचनेनोपसंह्रियते यत् क्रतुसंयोगायास-मर्थं कथं चित्परोक्षवृत्त्या संयुज्यते यथा साम्रदृय्यम्॥ अयं तु साक्षाद्यज्ञसंबन्धसामर्थ्यान्नोपसंहारमर्हत्यतश्च विकृत्यर्थो भ-विष्यति। तथा सति च न प्रथमयज्ञ इत्यनारभ्यवादशेष उपपद्यते इत्यतिरात्रप्रथमाहारे नित्यमप्रयोगो ऽग्निष्टोमे च केवलवि-धिसंस्पर्शान्नित्यं प्रयोगो, न हि तद्वाक्यशेषो ऽप्ययं भवतीत्युक्त-म्॥ एतावत्त्विहावधारयितुं शक्यम्। नायमनारभ्यवादः प्र-कृतेरन्यत्र गच्छति। यदि गच्छेत्तत इष्टिपशुबन्धानपि गच्छेन्न च गन्तुमर्हति परस्तादुपसदामिति। स्थाननियमस्य तत्रानुपप-त्तेः। अतो यत्रोपसदस्तत्र गच्छति। ततश्च प्राप्तिकालवैषम्यात्प्र-कृतौ तावत्ताः सन्तीत्यन्तरेणापि वचनं गच्छेत्किमुत यदा वि-स्पष्टमेव वचनं, स्फुटसामान्यसंबन्धस्यापि चैवमादेरुपसंहार इ-ति व्याख्यातं चतुर्थाकरणे। तस्मादुत्पत्तिविनियोगाभ्यामेवापुन-रुक्तत्व,मेवं सति येषां प्रकरणएव प्रवर्ग्यपाठस्तैः सह संगता-र्थता भविष्यति। यदि तर्हि द्वयोरप्येकवाक्यत्वेनाग्निष्टोमे प्रवृ-णक्तीत्ययमर्थो निष्पन्नस्ततो न प्रथमयज्ञे इत्येतस्याप्रथमयज्ञे अग्निष्टोम इत्येवं प्रवर्त्तमानस्य न कश्चिद्विरोध(१) इति पर्युदा-सान्नित्यमेवाकरणेन भवितव्यमत एवं वर्णनीयम्॥ अनारभ्य-वादस्य प्रकृत्यर्थतायां सिद्धायामग्निष्टोमे प्रवृणक्तीत्येतस्यान-न्यप्रयोजनत्वात्प्रतिषिद्धप्रतिप्रसवार्थता गम्यते। ननु नैवायं प्र-तिषेध इत्युक्तमग्निष्टोमयुक्तवाक्यार्थवत्त्वाय प्रतिषेध इति

(१) विशेष इति २ पु० पाठः॥

ब्रूमः । न ह्यनेन सह पर्युदासो ऽवकल्पते इति दर्शितम् । न चानारभ्यवादो ऽनग्निष्टोमार्थो यतस्तद्विषयः पर्युदासो ऽवकल्पते तेन द्वयोरप्येतयोरग्निष्टोमविषयत्वम् । अतश्च यद्यप्ययं पर्युदासस्तथाप्युभयोः सामर्थ्याद्विकल्पेनैव भवितव्यम् ॥ कुतः ॥

नित्यं हि क्रियमाणेऽस्मिन्पर्युदासो वृथा भवेत् ।
नित्यमक्रियमाणे वा पुनर्विधिरनर्थकः ॥

. ततश्च यस्माद्विकल्पाद्बिभ्यद्भिः पर्युदास आश्रीयते स तस्मिन्सत्यप्यागत इति वरं शब्दस्वरसलभ्यः प्रतिषेध एवाश्रितः, तेन प्रथमाहारे ऽग्निष्टोमे विकल्पः । तत्रापि यदा केषांचिदीदृशं वचनं कामं योऽनूचानः श्रोत्रियः स्यात्तस्य प्रवृञ्ज्यादिति तदा प्रतिप्रसववचनस्य विकल्पकारिणः कर्तृविशेषगामित्वात्तद्विषय एव विकल्पोऽन्येषां नित्यमेवाभावः ॥ कथं पुनरश्रोत्रियस्य कर्मणि प्रवृत्तिर्येन तद्विशेषणत्वेन श्रूयते ॥ सत्यं प्राप्तस्य पुनर्वचनं तावन्मात्रफलमनर्थकमिति सामर्थ्यात् प्रकर्षगतिर्विज्ञास्यते । यथाभिरूपाय कन्या देयेत्यत्राभिरूपतरायेति गम्यते । अनूचानग्रहणं तु ब्राह्मणस्यानुवचनसंबन्धात् क्षत्रियवैश्यनिवृत्त्यर्थं भविष्यति । तदेतदतिरात्रेष्येवमेव प्राप्नोति । तत्र प्रथमयज्ञ इति प्रतिषेधादनग्निष्टोमत्वेन च प्रतिप्रसवाभावान्नित्यमेव न कर्त्तव्यः । विकृत्यन्तरेषु प्रथमप्रयोगानुपपत्तेर्नित्यमेव करणम् । ननु तत्रापि न प्रथमयज्ञ इत्यतिदेशादग्निष्टोमस्वरूपस्य च प्रतिप्रसवनिमित्तस्याभावात्प्रथमप्रयोगेष्वभाव एव प्राप्नोति । नैतदेवम् । प्रथमशब्दस्याविशेषितस्य सर्वाद्ये प्रवर्त्तमानस्यान्यत्राप्रवृत्तेः तस्मात्केवलज्योतिष्टोमप्रथमप्रयोग-

विषय एव चैष प्रतिषेध इति सिद्धम्॥

## पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ ॥ ३४ ॥

संनर्दनादिन्यायेनैव वाक्यप्रकरणविरोधे सति विकृत्यर्थत्व सिद्धमुत्तरविवक्षार्थं प्रारभ्यते॥

## तत्सर्वार्थमविशेषात् ॥ ३५ ॥

## चरौ वार्थोक्तं पुरोडाशे विप्रतिषेधात्पशौ न स्यात् ॥ ३६ ॥

यदि कश्चिद्ददेल्लौकिकपिष्टोपादानेनापि पुरोडाशसिद्धेर्नैकान्तेनार्थाक्षेप इति तं प्रत्युच्यते। अर्थो नाम प्राकृत उपकारः तस्य प्रकृतौ पेषणं साधनमासीदतस्तेन पूर्वतरप्राप्तेनोक्तं पुरोडाशे पेषणम्। पशौ च प्रधानवैगुण्यं स्यात्तद्धि हृदयाद्याकृतिकेन ततस्थावत्तेन साधयितव्यम्। न च पिष्टे तदाकृतिकादवदीयेत पुनस्तदाकारकरणेपि मृद्गवयादिवङ्गोणादवदीयमाने वैगुण्यमेव। उत्पादनदेशादवद्यतीति च श्रूयते। न च हृदयादेः पिष्टस्य ज्ञायेत कतरेण प्रदेशेनेदं पशोरुत्कृत्तमिति। तस्माच्चरावप्रतिषिद्धमनर्थप्राप्तं च पेषणमिति तत्रैव विधीयते। नन्वदन्तको ह्रीतिहेत्वविशेषात्पशुपुरोडाशयोरपि प्राप्तेर्ह्यवदानानि तच्छेषास्तु पिष्टा दास्यन्ते। न च प्राप्तिविप्रतिषेधौ भविष्यतः। उच्यते। ह्यवदानस्य प्रदानप्रक्रमत्वात् नान्तरा पेषणेन व्यवधानं युक्तं, हेतुवन्निगदस्य च स्तुतिमात्रार्थत्वं वक्ष्यते। तेन स्वक्रमस्यस्यैव

पेषणस्य विधिः । उपनीतमात्रमेव च पेषणं पुरोडाशे ऽनुवाद-बुद्ध्या गृह्यते । चरौ च निवर्त्तमानं प्रतिप्रसवत्वेन पशौ पुनर-त्यन्ताप्राप्तविधित्वेन । न चैतान्येकस्यैव वाक्यस्यैतावन्ति रूपाणि विज्ञायन्ते । तत्रावश्यमेकरूप्ये ऽभ्युपगन्तव्ये लाघवादर्थवत्त्वाच्च प्रतिप्रसवत्वमेवावधारणीयम् । एवं सिद्धं केवलचरुविषयत्वम् ॥

## चरावर्पीति चेत् ॥ ३७ ॥

## न पक्तिनामत्वात् ॥ ३८ ॥

न चरावर्थविप्रतिषेधः ॥ कथम् ।

गतिः सर्वपदार्थानां लौकिकव्यवहारतः ।
तत्र पाकविशेषस्य चरुत्वेनावधार्यते ॥

ओदनपिष्टकचरुप्रयुक्तस्य चरुशब्दस्यानेकार्थत्वमन्याय्यमि-त्युभयसामान्यवचनत्वं विज्ञायते । तयोश्च सामान्यमनवस्रावि-तान्तरूष्मपक्वत्वं तस्मादविप्रतिषेधः ॥ पचोक्तं प्रयोजनमिति मन्दं फलमुक्तम् । एतावान्समाधिः अविशेषेपि न पुरोडाशार्थ-त्वं प्रयोजनं किं तर्हि पश्वर्थत्वमिति ॥

## एकस्मिन्नेकसंयोगात् ॥ ३९ ॥

इदानीं किमन्यसहिते पूषणि देवतायामैन्द्रापौष्णे चरौ पेषणं भवत्युत एकस्मिन्नेवेति संदेहे चतुर्द्धाकरणेन्द्रपीतन्याया-त्सिद्धान्तेनैव तावदुपक्रमते । पूषेत्येकसंयोगश्रवणात्तथाभूत एवार्थे स्यादिति ॥

## धर्मविप्रतिषेधाच्च ॥ ४० ॥

द्रतस्यैकदैवत्ये ॥ कुतः ॥

पिंष्यादर्धं समस्तं वा द्विदैवत्ये चरौ भवान् ।
पूर्वस्मिन्पाकवैषम्यं परस्मिन्भागसंकरः ॥

अर्द्धपेषणे हि पिष्टांशः शीघ्रतरं सिध्यतीतरश्चिरेण तत्र पिष्टपाकानन्तरमुद्वासने सतीतरस्यामत्वं भवेत् । तत्पाकप्रतीक्षणेपि वा पिष्टस्य विलपनादचरुत्वं स्यात् । पाकवैषम्येन हि पिष्टकचरुरपि चरुर्भवति । न चैतदस्मिन्पक्षे भवत्यथ तण्डुलान् पूर्वं प्रक्षिप्य पश्चात्पिष्टं निक्षिपेत्ततो यौगपद्यं गम्यमानं बाध्येत । पूषानुरोधेन त्वैन्द्रेपि भागे पिष्यमाणे भागसंकरादन्यदीये भागेन्यस्मै दीयमाने वैगुण्यं प्राप्नोति ॥ ननु चैतत्सर्वं द्विदैवत्येषु भवतोपि समानं तथा हि ॥

चरौ पशौ पुरोडाशे दीयमाने द्विदैवते ।
एवं हविष एकत्वात् जायते भागसंकरः ॥

स चाङ्गीकृतो मिश्रस्य हविषो मिश्रदेवतोद्देशेन युगपद्दाने विरोधाभावात् ॥ उच्यते ॥

यागापूर्वप्रयुक्तेषु धर्मेष्वेवं भवदिदम् ।
भवतः पेषणं त्वेतद्देवताधर्मसंमतम् ॥

अस्मत्पक्षे पुनः पूषदेवत्ययागापूर्वप्रयुक्तं पेषणम् । न च तद् द्विदेवत्ये तथावस्थितमित्यप्रवृत्तिरेव । हविरन्तरेष्वपि च द्विदैवत्येष्वेवंप्रकारत्वमेवेति देवता गुणभूता ॥ न च गुणानुरोधेन प्रधानमावर्त्तनीयमिति सकृद्दानाभ्युपगमात् सर्वस्मिन्सह क्रियमाणे संकरदोषानाश्रयणम् ॥ भवता पुनरस्मदभ्युपगमेन द्विदैवत्ये पेषणं वक्तुमशक्नुवता ऽवश्यं देवतानिमित्त-

त्वमभ्युपगन्तव्यम् ॥ ततश्च देवतयोः प्राधान्यादेकैका स्वभाग-मसंकीर्णं प्रार्थयत इति तथैव दानमनुष्ठेयम् ॥ आदितश्चैक एव भागः पेषणार्थ इत्यवधारितम् ततश्च पङ्क्तिदोषः स्यात्, इत्थ-मखण्डुलात्मकोऽपि भागः पाकसाम्यार्थं पिष्यते ॥ तत्र ब्रूमः ॥ या-वदनुत्पन्नभागविवेकं हविस्तावत्कियान्कस्य भाग इत्यनवधा-रणात् संकरदोषो न जायते कल्पिते तु विवेके वचनादृते पुनरेकीकरणानुपपत्तेरसंकीर्णदानं प्राप्नोति ॥ तत्रान्यस्य भा-गादन्यस्मै अवदीयमाने वैगुण्यं भवति ॥ पात्रभेदेन पच्य-तीति चेन्न ॥ चरुमिति यागं प्रत्युपादीयमानत्वेन विवक्षितैक-संख्यस्य पात्रकृतभेदाश्रयणे शास्त्रबाधप्रसङ्गात्, ततो न कथं-चिदपि प्रतिषिद्धधर्मकं द्विदेवत्ये पेषणं भवतीति न कर्तव्यम् ॥

## अपि वा सद्वितीये स्याद् देवतानि-मित्तत्वात् ॥ ४१ ॥

सद्वितीयेऽपि वा पूषणि स्यादेव पेषणम् ॥ कुतः ॥

हविषो यदि पौष्णस्य तद्भागाङ्गस्य वा भवेत् ।
अनुक्तत्वाद् द्विदेवत्ये न भवेत्पेषणं ततः ॥

पूषसद्भावनिमित्तमेतत्पेषणं न च तद्विशेषितवस्तुनिमित्तं व्यासङ्गित्वाच्च देवतात्वस्य द्विदेवत्ये पूषविशिष्टता न स्यात्, न तु पूषा तद्भागो वा नास्तीति, यथा मनोतायां वक्ष्यति तत्राग्नि-र्देवता न त्वसमवेत इति ॥ तेनासत्यप्यत्र पूष्णो देवतात्वे सम-वायमात्रेणोपलक्षणत्वाद् द्वयोर्द्वैधेनापि च त्यज्यमानस्य समं स्यादर्धभुक्तत्वादित्यनेन न्यायेनार्धं पूष्णो भाग इति गम्यते ॥

तस्य पेषणे क्रियमाणे यदि तावत्कांस्यभोजिन्यायेना(१)मुख्ये-पीत्येवमितरभागपेषणमपि क्रियते तथापि न किं चिद् दुष्य-ति ॥ अथापि किं न एतेनाश्रुतेन कृतेनेत्येवमद्रुमात्रपेषणमे-वाध्यवसीयते तथापि केन चित्कौशलेन पाकसंपादनयौगप-द्यनिक्षेपणान्तैकत्वयोर्वा गुणत्वाद्दरं बाध इति निरूप्यकार्यमेव पेषणमिति ॥ अथ यदुक्तं चतुर्द्धाकरणेन्द्रपीतवदिति ॥ तत्राभि-धीयते ॥

समासतद्धितोत्पत्तिर्नासमर्थपदाश्रया ।

असमर्थत्वमेकस्य द्विदेवत्येषु चेष्यते ॥

तेनाग्नेयेन्द्रपीतशब्दाभ्यां समर्थाग्नीन्द्रशब्दाभ्यां द्विदेव-त्याग्रहणं युक्तमिह पुनः पूषपदस्यासमासभाक्त्वात् प्रपिष्ट-भागशब्दयोश्च सापेक्षेपि पूषणि सामर्थ्याविघातात् न किं चि-द् दुष्यतीत्युपलक्षणता ॥

## लिङ्गदर्शनाच्च ॥ ४२ ॥

अदन्तको हीति हेतुर्देवताधर्मत्वं दर्शयति ॥ न च सद्वितीयस्य पूष्णो दन्ता जायन्त इति हेतुसाम्याद्युक्तं पेषणम् ॥ तथा च सोमापौष्णे नेमपिष्टतानुवादो ऽन्यत्र च द्विदेवत्येष्वर्द्धं पिष्ट-मर्द्धमपिष्टं द्विदेवतत्वायेति देवताधर्मत्वदर्शनमवकल्पिष्यते ॥

## वचनात्सर्वपेषणं तं प्रति शास्त्र-त्वादर्थाभावाद्धि चरावपेषणं

(१) कांस्यभोजिवदिति २ पु० पाठः ॥

भवति ॥ ४३ ॥

विधित्वान्नेमपिष्टत्वमलिङ्गं विपर्ययसाधनं चेत्यत आह ॥
यद्येतद्वचनं भवेत्ततोनेकार्थविध्यसंभवान्नेमपिष्टत्वं विधीयमा-
नं चरुं वोद्दिश्य विधीयेत, सोमापौष्णं वा, तत्र य एवोद्दि-
ष्टस्तस्यैवेतरेण विशेष्टुमशक्यत्वात्सार्वत्रिकत्वप्रतीतेः सर्वपेषणं
प्राप्नोति ततस्त्वान्यतरपदानर्थक्यप्रसङ्गः ॥ तद्यदि ता-
वद्यश्चरुः स नेमपिष्ट इति विधीयते ततः सर्वचरुविषयावधार-
णे सति सोमापौष्णशब्द एकदेशानुवादोनर्थकः स्यात् । अथ
सोमापौष्णमात्रमुद्दिश्यते ततोपि सर्वपेषणमेव तद्देवत्यहवि-
र्मात्रप्रतीत्या पशुपुरोडाशयोरपि ग्रहणात् । ततश्च पूर्ववच्चरु-
शब्दानर्थक्यप्रसङ्गः । तं प्रति हि सोमापौष्णमविशेषितं प्रति-
पेषणस्य शास्त्रवत्त्वं विशेषणार्थाभावात् । एतस्मिन्पक्षे चराव-
पेषणंभवति ॥ नन्वर्थप्राप्तत्वात्पुरोडाशस्यावक्तव्यं पशोश्चार्थ-
विप्रतिषेधादित्युक्तं भवेन्नात्र तयोरुभयोरप्यप्रसङ्गात्सर्वपेष-
णे हि प्राप्ते पुरोडाशस्यार्द्धपेषणं विधीयते तावतापि च कथं
चित्पुरोडाशो निष्पद्येत । हृदयादीनामप्युत्सादादेशैकदेशवर्जं
पिष्यमाणानां नार्थविप्रतिषेधो भवति ॥ न चात्यन्ताकृतिनि-
र्णयेन चोत्सादादेशमोक्षः स्यादितरोत्सादादेशस्य स्पष्टत्वेन च
पिष्टोपि सन् पूषभाग उपलक्ष्यते न सर्वपेषणवन्मुख्येन । अ-
थ वास्मिन्पक्षे वाचनिकत्वाददृष्टार्थे पेषणे सत्यपिष्टादेवावदी-
येत । न हि तदैतद्देवतानिमित्तं पेषणं स्यात् । तस्मात्सार्वत्रि-
कत्वप्रसङ्गान्न परिशेषसिद्धं चरोः पेषणमिति तच्छ्रुतिरनर्थिका
प्राप्नोत्येवेति चरुदेवतासंबन्धविधिपरे वाक्ये नेमपिष्टत्वम-

नूयतइत्यवश्यमभ्युपगन्तव्यम्॥ अतश्च लिङ्गत्वसिद्धिः॥

## एकस्मिन्वार्थधर्मत्वादैन्द्राग्नवदुभयो र्न स्यादचोदितत्वात् ॥ ४४ ॥

एकस्मिन्नेव पूषणि देवतायामेतत्पेषणं भवेत् न सद्वितीये॥

न ह्येष देवताधर्मो न तद्भागस्य गम्यते।
पूषद्देवत्ययागार्थं धर्मस्त्वेष प्रतीयते॥

न तावद्देवताया भागोस्ति यस्यैष धर्मः कल्प्येत॥ न हि तदुद्देशत्यागमात्रेण भागो भवति किं तर्हि परिग्रहेण। कर्मसाधनो हि भागशब्दो भज्यतइति भागः सेव्यतइत्यर्थः॥ तेन यं यो भजते स तस्य भागः॥ न च हविरंशं देवता भजते भोक्तृत्वस्य नवमे निषेधात्। अथापि भजेत्तथापि तस्याः प्रयोजकत्वं तत्रैव निवारयिष्यते। तेन देवतावद्भागधर्मत्वानुपपत्तेर्यागद्वारापूर्वधर्म एवायं। नवमाद्यन्यायेन देवताधिकरणन्यायेन च विज्ञायते। भाष्यकारेण तु देवताधर्मत्वनिराकरणपरेण यागधर्मत्वमभिहितमिति द्रष्टव्यम्॥ कथं तर्हि प्रकरणान्तरे समाम्नातो यागधर्मो भविष्यतीति। वाक्यसंयोगस्य देवताविषयत्वात्प्रकरणेन च विना ऽपूर्वसाधनत्वलक्षणानुपपत्तेर्न कथं चिद्यागेनापूर्वेण वा संबन्ध इति मन्यमानस्य प्रश्नः॥ तत्र वाक्यसंयोगादित्युक्ते परेण स्वाभिप्राये विवृते भागशब्देनैव मुख्यार्थासंभवाद्यागोपादानमिति दर्शयति। परस्वीकरणात्मकस्य भागरूपस्याविद्यमानत्वा,द्यस्तदुद्देशेन त्यज्यमानत्वनामांशो विद्यते तेन यागो लक्ष्यते, स चैकदेवत्ये

पूर्वविशिष्टा भवतीति तद्भागव्यपदेशो घटते, द्विदेवत्ये पुनर्व्यासङ्गो मिश्रः संकल्पोऽन्यतरेण व्यपदेष्टुमशक्य इति । यथैवैन्द्राग्नस्य पुरोडाशस्य ग्रहस्य चाग्नेयेन्द्रपीतशब्दाभ्यामग्रहणं तथैन्द्रापौष्णादेः पूर्वभागत्वेन यद्यपि चैवंविधशब्दोच्चारणादिह समासोपालम्भो नास्ति तथाप्यर्थ एव भागशब्दग्राह्यो न विद्यत इत्यप्रवृत्तिः ॥ यद्यपि च द्वयोरर्थयोर्देवतात्वं प्रतिपद्यमानयोः समुदायप्रसिद्ध्यर्थत्वेनावयवावुपयुज्येते तथापि संकल्पस्यान्यतरेणाव्यपदेशादनुपलक्षणत्वं सिद्धम् ॥

## हेतुमात्रमदन्तत्वम् ॥ ४५ ॥

यत्त्वदन्तको हीति हेतुनिदर्शनाद्देवताधर्मत्वमिति । तच्चोच्यते ॥ हेतुवन्निगदार्थवादत्वादस्य यागधर्मप्रशंसार्थत्वमप्यविरुद्धमिति अकारणता ॥

## वचनं परम् ॥४६ ॥

नेमपिष्टादिषु प्राप्त्यभावाद्वचनं भविष्यति ॥ विशिष्टविधानाच्च वाक्यभेदाभावः ॥ अरुणैकहायनीवच्च परस्परनियमादसर्वविषयत्वम् ॥ अविशिष्टविधिं चापेक्ष्य विशिष्टविधिर्दुर्बलो भवति न त्वत्रासावस्ति ॥ तस्माल्लिङ्गमित्येकदेवताविषयत्वमिति ॥ इति श्रीभट्टकुमारिलस्वामिविरचिते तन्त्रवार्त्तिके तृतीयाध्यायस्य तृतीयः पादः समाप्तः ॥

---

## तन्त्रवार्तिके।

### तृतीयाध्यायस्य चतुर्थः पादः।

---

श्रीगणेशाय नमः॥

## निवीतमिति मनुष्यधर्मः शब्दस्य तत्प्रधानत्वात्॥ १॥

स एव श्रुत्यादित्रितयस्य प्रकरणेन सह विरोधाविरोध-विचारः। तत्र निवीतं मनुष्याणामित्यत्रैते पक्षा भवन्ति किमयं शुद्धमनुष्यधर्मः कर्मयुक्तमनुष्यधर्मो वा अथ शुद्धकर्मधर्मः। अथ वा प्रकरणे यन्मनुष्यप्रधानं कर्म अन्वाहार्यपचनादि त-स्य धर्मः उताप्रकरणे या मनुष्यपूजातिथ्यात्मिका तस्या निवेश इति। यौ तु विध्यर्थवादपक्षौ तौ शेषलक्षणेऽनैपयिकौ प्रमा-णलक्षणविषयत्वाद्विधिवन्निगदार्थवादमध्ये च निर्णीतत्वाद्विह नैवोपन्यसनीयौ। यस्तु भाष्यकारेणोपन्यासः कृतः स कृत्वा-चिन्तान्यायेनेति द्रष्टव्यम्। न हि विधित्वमनभ्युपेत्य मनुष्य-धर्मादिपक्ष(१) उपपद्यते इति। विधिरिति कृत्वा प्रथमं प्रस्तुत्य पश्चाल्लक्षणानुरूपं विचार्यान्ते पूर्वावस्थितमेवार्थवादत्वमुपसंह-रिष्यति। परेष्वप्यधिकरणेष्वेतद्यथासंभवं योजयितव्यम्। तत्र विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकमित्यनेनैव ता-वद्विधिः अधीनाद्यधिकरणन्यायेन च षष्ठीश्रुत्या मनुष्यधर्मः।

---

(१) पक्षपरिग्रह इति २ पु० पाठः॥

तेषां स्वत्वेन तत्प्रतीयते न मनुष्यास्तदङ्गत्वेन । गुणविभक्तिनिर्देशाभावात् । अर्थादेव च तत्प्राप्तौ सत्यां नैव मनुष्यग्रहणं क्रियेत, कृतं चैतत्, अतोऽपि मनुष्यधर्म इत्यवगच्छामः ॥

## अपदेशो वार्थस्य विद्यमानत्वात् ॥ २ ॥

निवीतं केचिद्गलवेणिकाबन्धं स्मरन्ति । केचित्पुनः परिकरबन्धम् । तत्र गलवेणिकाबन्धो युद्धादन्यत्र न प्राप्नोति परिकरबन्धस्तु सर्वकर्मस्वव्यग्रताकरत्वात्प्राप्त इति तदाश्रयणेनानुवादमात्रं । स तु किंप्रयोजन इत्युत्तरत्र वक्ष्यते ॥

## विधिस्त्वपूर्ववत्त्वात्स्यात् ॥ ३ ॥

विधिरेवायम् । कुतः । पूर्ववत्त्वाद्ध्यनुवादो भवेदत्यन्तप्राप्ताविव्यर्थः । न चायमत्यन्तप्राप्तः । तेन विनाप्यव्यग्रतायाः शक्यत्वात् । कण्ठबन्धः पुनः प्रायेणाप्राप्त एवेत्यस्ति नियमविधेरवकाशः ॥

## स प्रायात्कर्मधर्मः स्यात् ॥ ४ ॥

सति विधित्वे कर्मधर्मप्रायप्रदेशाम्नानात्कथंभावसंस्पर्शात्कर्मधर्मः ॥

## वाक्यस्य शेषवत्त्वात् ॥ ५ ॥

द्वेधा संभवे तादृशी प्रमाणगतिराश्रयणीया या प्रमाणान्तरं न बाधते यजुर्वेदाम्नानाच्च निवीतादेराध्वर्यवसमाख्योपबद्धं वाक्यम् । तत्र यदि कर्मधर्मोऽयं ततः कर्तृविशेषप्रा-

पेक्षायां सत्यां समाख्यया ऽध्वर्युनियमात्समाख्यार्थवती भविष्यति । मनुष्यधर्माणां तु न समाख्या नियामिकेति वक्ष्यामः ॥ तत्रासौ बाध्येत इतरथानुग्रहीष्यते तस्मादपि कर्मधर्मः ॥

## तत्प्रकरणे यत्तत्संयुक्तमविप्रतिषेधात् ॥ ६ ॥

प्रथमं तावन्मनुष्यधर्मवत्तीयस्त्वेन कर्मधर्मत्वं निराकरोति । तथा हि सुखं सूचितः पक्षः परिग्रहीष्यते । श्रुत्या हि प्रकरणसमाख्ये बाधित्वा मनुष्यधर्म एव प्राप्नोति । तदुच्यते सर्वानुग्रहार्थमयं पक्षोऽस्तु मनुष्याणामिति तत्प्रधानकर्मव्यतिरेकजनिता षष्ठी न निवीतं गृह्णाति । तदपि च प्रकरणादन्वाहार्यदानादि प्रतीयते नान्यत् । अत एष वाक्यार्थो यदिह मनुष्याणां कर्म तत्र निव्यातव्यमिति ॥

## तत्प्रधाने वा तुल्यवत्प्रसंख्यानादितरस्य तदर्थत्वात् ॥ ७ ॥

प्रकरणरहितमनुष्यप्रधानो वा स्यात् । कुतः ॥

तुल्यवद्धि प्रसंख्यानं दृश्यते स्मिन्विधित्रये ।
तस्मात्तत्प्रधाने स्यात्पितृदेवप्रधानवत् ॥

यथैवोपवीतं देवानां प्राचीनावीतं पितॄणामिति च परस्परनिरपेक्षदेवपितृप्रधानकर्मण्येष विधिरेवं तद्बुद्ध्यनुवृत्तेर्मनुष्याणामित्यपि तत्प्रधानकर्म प्रत्येष्यामः । कथं गम्यतइति पृष्टे मनुष्याणामिति षष्ठ्यन्तेन संबन्धादित्येतावत्युत्तरे दत्ते मनुष्या-

णामेव प्राप्नोतीति पुनश्चोदयति । अथ वा समस्त एव चैकः प्रश्नः । सत्यमेवं प्राप्नोति फलकल्पनाप्रसङ्गगौरवात्तु परित्यज्यते । तस्मात्तदीयकर्मव्यतिरेकादेव षष्ठी । तत्संबद्धस्य निवीतस्य नासंबद्धफलकल्पना भविष्यति । मनुष्यग्रहणं च तत्प्रधानकर्मप्रतिपत्त्यर्थमिति नानुपात्तसंबन्धापत्तिः । न च तस्मिन् सति प्रकृतैकवाक्यता घटते ॥

# अर्थवादो वा प्रकरणात् ॥८॥

सर्वथा नात्रैकोपि पक्षो निर्दोषः । प्रकरणसंबन्धे वाक्यसंबन्धबाधादन्वाहार्यादिसंबन्धे वाक्यभेदात्प्रकरणस्य च विशेषकत्वानुपपत्तेरतिथ्यादिसंबन्धोत्यन्तनिर्मूल एव । षड्भिरपि श्रुत्यादिभिरसंस्पर्शात् मनुष्यसंबन्धेन तदनुमीयते । तच्च न युक्तम् । तस्या अपि षष्ठ्या निवीतपदसंबन्धिव्यतिरेकजनितत्वप्रतीतेः । न ह्यनुपात्तसंबन्धिव्यतिरेके विभक्तय उत्पद्यन्ते । तस्मान्मनुष्यार्थतैव प्राप्नोति । तत्रापि च प्रकरणसमाख्याबाधफलकल्पनाप्रसङ्गः(१) । सति च गत्यन्तरे न युक्तं तदाश्रयणमस्ति चौदुम्बराधिकरणसिद्धमर्थवादत्वं गतिः ॥

# विधिना चैकवाक्यत्वात् ॥ ९ ॥

उपव्ययत इत्यनेन च विधिनैकवाक्यत्वं निवीतप्राचीनावीतयोर्दृश्यते । तच्चानुवादद्वारेण स्तुतौ सत्यामवकल्पते न विधौ । न ह्यङ्गाङ्गित्वरहितयोरुभयोः स्वतन्त्रयोः परस्परासम्बद्धयोर्विधीयमानयोरेकवाक्यता भवति । वचनव्यक्तिभेदात् । अन्या हि प्रधानविधेस्तावन्मात्रोपसंचारिणी व-

(१) प्रसङ्गादिति २ पु० पाठः ॥

अनव्यक्तिरन्या च स्तुतेः पराङ्गभावानुगतरूपा । न चात्र विधायको दृश्यते । स यदि वा ऽध्याहर्त्तव्यो ऽथ वा तिथ्यादिगतस्याप्यङ्गत्वाय परिकल्पेत । न च तत्कल्पनं युक्तमविहितस्यानङ्गत्वादनङ्गस्य च प्रयोगवचनेनाग्रहणात् वक्ष्यति हि न चाविहितमङ्गं भवतीति । तत्राङ्गत्वाद्विधिर्विधेश्चाङ्गत्वं कल्प्यतइतीतरेतराश्रयत्वं प्राप्नोतीति । प्रत्यक्षेण च विधिना यथा कथं चिदेकवाक्यतायां संभवत्यां न परोक्षैकवाक्यता युक्ता । तथा सति चानेकादृष्टकल्पना स्यात् । तस्मादौचित्येन स्तुतिर्यथा निवीतप्राचीनावीते मनुष्याणां पितॄणां च प्रशस्ते तथोपवीतं देवानामिति । लोके ऽपि चैवं दृश्यते । यथा, वसिष्ठस्यारुन्धती यथा शशाङ्कस्य रोहिणी यथा नलस्य दमयन्ती तथा देवदत्तस्य यज्ञदत्तेति । विपर्ययेण वा स्तुतिरिति तयोः पितृमनुष्यविषयत्वेन देवान्प्रत्ययोग्यत्वादुपवीतमेव देवानां प्रशस्तम् अतस्तु देवकर्मणि दर्शपौर्णमासाख्ये तदेव कर्त्तव्यमिति ॥

## उपवीतं लिङ्गदर्शनात्सर्वधर्मः स्यात् ॥ (१)

अतः परं षट् सूत्राणि भाष्यकारेण न लिखितानि तत्र व्याख्यातारो विवदन्ते । के चिदाहुर्विस्मृतानि । लिखितो ग्रन्थः प्रक्षीन इत्यपरे । फल्गुत्वादुपेक्षितानीत्यन्ये । अनार्षेयत्वादित्यपरे । तथा च द्विविभागस्य तद्वदिति निवीताधिकरणातिदेशः तदानन्तर्यादुपपद्यत इति । वृत्त्यन्तरकारैस्तु

(१) अतः परं षट् सूत्राणि शाबरभाष्ये न धृतानीति तदनुसारेणात्र सूत्राङ्का न दत्ताः ॥

सर्वैर्व्याख्यातानि। सन्ति च जैमिनेरेवम्प्रकाराण्यप्यनत्यन्त-सारभूतानि सूत्राणि। व्यवहितातिदेशास्तु या न व्यापन्नं तद्व-दित्यादिष्वाश्रिताः। तस्मात्सूत्रमात्रं(१) व्याख्येयम्। तत्र केषांचि-त्त्रीण्यधिकरणानि कल्पितानि। अपरैश्चत्वारि। प्रथमं ताव-दिदं चिन्त्यते। यदेतत्पूर्वाधिकरणे दर्शपूर्णमासयोर्विधीय-मानत्वेनोपवीतमुदाहृतं तत्र संदेहः। किं तद्दर्शपूर्णमासयो-रेवावतिष्ठते अथ वा सर्वकर्मार्थमिति। ये त्वधिकरणत्रयं समर्थयन्ते तेषामेवं सन्देहः किं दर्शपूर्णमासयोरवस्थानं विधिस्तस्याथ सर्वकर्मार्थत्वमनुवादस्येति॥ किं प्राप्तं सर्वधर्मः स्यात्। कुतः॥

कर्मान्तरेऽनुवादोऽस्य सिद्धवत्त्वः प्रतीयते।
सोऽन्यथानुपपत्त्यैतां लिङ्गत्वात्प्रक्रियां जयेत्॥

मृताग्निहोत्रे हि पितृदेवत्ये श्रूयते प्राचीनावीती दोहये-त्। यज्ञोपवीती हि देवेभ्यो दोहयतीति। तद्यदि सर्वार्थमुप-वीतं ततोऽयं पित्र्येऽग्निहोत्रसम्बन्धी नित्यवत् यज्ञोपवीता-नुवादोऽवकल्पते। न चायं दर्शपूर्णमासस्यैवानुवादः वि-प्रकृष्टत्वात्। हेतुवन्निगदार्थवादानर्थक्याच्च। यदि हि तस्मि-न्नेव कर्मण्यन्यावस्थेयं धर्मो भवति ततस्तु तदवस्थापरिजिहीर्षया हेतुवन्निगदोऽवकल्पते। न तु कालान्तरस्थं परिहर्त-व्यमत्यन्तविप्रकर्षेणैवाप्रसक्तत्वात्। न च देवेभ्य इति बहुवच-नं दर्शपूर्णमासयोरवकल्पते। वैकल्पिकेन्द्रमहेन्द्रैकदेवत्यत्वा-त् सान्नाय्यस्य। अग्निहोत्रे तु सायंप्रातर्दैवतालोचनेनोपपन्नं बहुत्वम्। तस्मादग्निहोत्रस्योपवीतानुवादान्यथानुपपत्तेः सर्व-

(१) सूत्रार्थमात्रमिति २ पु॰ पाठः॥

धर्मत्वमिति ॥

## न वा प्रकरणात्तस्य दर्शनम् ॥

न वा सर्वधर्मः । कुतः । प्रकरणाद्दर्शपौर्णमासार्थत्वप्रतीतेः । अथ यदुक्तं लिङ्गदर्शनादिति । परिहृतं तत् । तस्यैवैतद्दर्शनं दर्शपूर्णमासस्थस्येति । सन्निकृष्टानुवादासम्भवे च विप्रकृष्टानुवादो ऽप्याश्रीयते । यथाप्राप्त्यपेक्षो हि स भवति । बहुवचनं चाविवक्षितम् । अथ वा प्रकृतिविकृतिदेवतालोचनेनोपपत्स्यते । ततश्चायमर्थो भवति । यस्मादेवयुक्तकर्मान्तरधर्मोयमतः पित्र्ये ऽग्निहोत्रे न कर्त्तव्य इति ॥

## विधिर्वा स्यादपूर्वत्वात् ॥

तदेवोदाहरणमुपव्ययते देवलक्ष्ममेव तत्कुरुत इति तच्च विधिरनुवाद इति सन्देहः । कथं पुनरनवधारिते विधित्वे सर्वार्थत्वदर्शपूर्णमासार्थत्वविचारो वृत्तः । सिद्धेन व्यवहारादिदमर्थतो ऽधिकरणं पूर्वं द्रष्टव्यम् । किं प्राप्तमनुवाद इति । कुतः ॥

स्मृतिभिः पुरुषो नित्यं कृतो यज्ञोपवीतवान् ।
वर्त्तमानापदेशश्च न विधावुपपद्यते ॥

नित्योदकी नित्ययज्ञोपवीतीति हि सर्वदा यज्ञोपवीतं प्राप्तं क्रतावप्यस्ति । न चैष विधिसरूपः शब्दः तस्मादनुवाद इति । एवं च निवीतप्राचीनावीताभ्यामवैलक्षण्यं भविष्यतीत्येवं प्राप्ते ब्रूमः ॥

विधिरेष भवेदेवमपूर्वोर्थो विधास्यते ।

सर्वानुवादो व्यर्थो हि स्तुतेश्च विधिकल्पना ॥

न हि समस्तानुवादवाक्यस्य किञ्चित्फलमस्ति निवीतप्राचीनावीतसंकीर्त्तनमपि च विधीयमानोपवीतस्तुत्यर्थत्वेनैवार्थवद्भविष्यति । वर्त्तमानापदेशानामपि च तदाभासत्वात्प्रयोगवचनार्थवादपञ्चमलकारेभ्यो विधिशक्तिर्व्याख्याता । तस्माद्विधिः । यत्तु स्मृतेरेव प्राप्तमिति । तत्राप्यपूर्वत्वादिदमेवोत्तरमन्य एव ह्यसौ पुरुषधर्मं प्राप्तो ऽन्यश्चायमपूर्वः क्रतुधर्मो विधीयते । तस्मान्नानुवादः ॥ अस्य च प्रयोजनं कर्त्रधिकरणे वक्ष्यामः । एवं वा । यत्तु मृताग्निहोत्रे श्रूयते प्राचीनावीती दोहयेत् यज्ञोपवीती हि देवेभ्यो दोहयतीति । तत्रैवं विचार्यते किमिदमहीनस्थितमिव द्वादशत्वं दर्शपौर्णमासगतमेव स्तुत्यर्थमुक्तम् । उत जीवदग्निहोत्रे विधानार्थमिति । किं प्राप्तं ततः पूर्ववदेव सूत्रं व्याख्यातव्यम् । एवं च सति प्रकरणबहुवचनयोरनुग्रहो भविष्यति । तस्मात्सत्यप्यनुवादसरूपत्वे ऽर्थवत्त्वाय प्रयोगवचनादिभ्यो विधित्वं कल्पनीयम् । एतस्मिंश्च व्याख्याने स्थितं तावदपर्यवसितमित्येवमुत्तरमधिकरणमारब्धव्यम् ॥

## उदकत्वं वा ऽपूर्वत्वात् ॥

तस्मिन्नेव मृताग्निहोत्रे श्रूयते । ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रांस्तृणीयादिति । केचित्तु महापितृयज्ञे श्रूयतइत्युदाहरन्ति । तत्र ये पुरोदञ्चइत्यत्र संदेहः । किं विधिरनुवाद इति । किं प्राप्तम् ॥ ततश्च शब्देनान्वादिश्यते अयमपि विधिरपूर्वत्वादिति । प्राप्तिपूर्वको ह्यनुवादो भवति । न चा-

स्य पुरुषार्थतया ऽपि प्राप्तिरस्ति। न चास्य स्तुत्यर्थता ऽपि युज्यते यच्छब्दाद्यप्रयोगात्। तस्मात्सिद्धवदुक्तान्यथानुपपत्त्यैवास्यापि विधित्वमिति॥

## सतो वा लिङ्गदर्शनम्॥

आचारप्राप्तस्योदगग्रत्वस्य द्योतकमात्रं लिङ्गदर्शनमेतन्न विधिः। कुतः॥

लिङादिरहिते वाक्ये तदा विधिरुपेयते।
न कथंचिद्यदा युक्त्या प्राप्तिलेशो ऽपिगम्यते॥

यच्छब्दयोगादाख्याततद्विशेषरहितत्वाच्च स्फुटमिहानुवादत्वमवधारितम्। तद्यथा कथञ्चिदपि प्राप्तौ सत्यां नातिक्रमितव्यम्। अस्ति चात्र प्राप्तिरग्रवन्ति प्रागग्राणि उदगग्राणि वा ऽपवर्गवन्ति प्रागपवर्गाण्युदगपवर्गाणि वेति स्मृतेः। तस्मात्तत्समानार्थ एवायं सिद्धवदनुवादः। तथैव च स्तुत्यर्थः। पुरा ह्येतदुक्तं न तु साम्प्रतं स्मृतावस्थायामिति। स्थितादप्येतदेवोत्तरम्। यच्छब्दवदाख्यातेन यतः कुतश्चित्प्राप्तेरपेक्षितत्वात्। प्रकरणे च तदभावात्किमनवगम्यमानमेव विधित्वं कल्पितम् उत यत्रतत्रस्था प्राप्तिराश्रीयतामिति। तत्र प्राप्त्याश्रयणमपेक्षितं न तु विधित्वमिति तदेव ज्यायः। प्रकरणबहुवचनयोश्चोक्तम् अस्त्येव चान्यो ऽत्र विधिरिति नानर्थक्यम्॥ तस्मादनुवाद इति नित्ये ऽग्निहोत्रे होहे विनाप्युपवीतेनावैगुण्यम्॥

## विधिस्तु धारणे ऽपूर्वत्वात्॥

इदानीमेवंविधशब्दाभावे ऽनुवादत्वस्यातिप्रसक्तस्यापवाद आरभ्यते । तत्रैव दिष्टगताग्निहोत्रे महापितृयज्ञे वा श्रूयते अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयतीति । तत्रोपरि हि देवेभ्य इत्यत्र पूर्ववदेव विध्यनुवादत्वसन्देहे हिशब्दयोगाद्वर्त्तमानापदेशाद्विध्यन्तरेण चैकवाक्यत्वादाचारतस्य प्राप्तेरनुवाद इति प्राप्नोति । कथमाचारतः प्राप्तिरिति चेत् । उच्यते ॥

सर्वमभ्यर्हितं द्रव्यं प्रच्छादनमपेक्षते ।
यत्र क्व चन च प्राप्ते समित्तत्र नियम्यते ॥

देवार्थस्य स्रुचि प्रक्षिप्तस्य हविषः आहवनीयदेशं नीयमानस्यावश्यमेव हस्तो वा ऽन्यद्वा किं चिद् द्रव्यमाचारादुपरि दातव्यम् । तत्र प्रत्यासत्तेः समिन्नियम्यते । स्रुग्दण्डे समिधमुपगृह्यानुद्रवतीति चास्यापि विधेराचारापेक्षितार्थविधानादेतदेव फलं विज्ञायते । तस्मादुपरि धारयतीति प्राप्तस्योपवीतादेरिवाऽनुवादः । सतो वा लिङ्गदर्शनमिति प्राप्ते ऽभिधीयते ॥

धारणे विधिरेव स्यात् न हि प्राप्तिः कुतश्चन ।
समित्प्रच्छादनाशक्तेर्नाचारादुपरिस्थता ॥

सत्यमाचारात् प्रच्छादनं कर्त्तव्यं न तु तत्र समित्पक्षे ऽपि प्राप्नोति या सन्निधेर्नियम्येत । हस्तादेव हि तत्र योग्यत्वात्प्राप्नुयान्न समित् । ननु च सोमचमसादीनां वचनसामर्थ्याद्या का चिद्दानत्यर्थता भवत्येवमत्रापि या का चित्प्रक्षिप्तिर्भविष्यतीति । भवेदेवं यदि तदीयदक्षिणासंयोगवदिहाऽपि प्रच्छादनसंयोगः श्रूयेत न तु श्रूयते । उपसङ्ग्रहमात्रविधाना-

त् । यदि सोमचमसेऽपि दक्षिणासंयोगरहितं दानमात्रमश्रोष्यत ततो नैवानर्थक्यमर्थत्वमाश्रयिष्यत । स्रुग्दण्ड इति च देशनियमात्सुतरां हविषः प्रागसौ धारयितव्या तेनोपरि धारणमप्राप्तम् ॥ न चाप्राप्तं हेतुवन्निगदेन वर्त्तमानापदेशेन वाऽनुवदितुं शक्यम् । अतोऽस्य व्यवधारणकल्पनयाऽनुवादस्वरूपत्वं भङ्क्त्वा वाक्यं भित्त्वा विधित्वमाश्रीयते । पित्र्ये होमेऽधस्तात् स्रुग्दण्डस्य समिद्धारयितव्या । दैवे च पुनरुपरिष्टादिति । विधित्वे चैवमादीनामुक्तः कल्पनाप्रकारः । तस्माद्विधिरिति ॥

दिग्विभागश्च तद्वत् ॥ १० ॥

परुषि दितपूर्णघृतविदग्धं च तद्वत् ॥ ११ ॥

दिग्विभागपरुषिदितघृतादीनां निवीताधिकरणवत्सर्वे प्रकारा अवगमयितव्याः । का पुनरत्रानुत्याशङ्कायां व्यावर्त्तयितुमतिदेशः क्रियते । किमर्थं वाऽधिकरणद्वयमारभ्यत । तदुच्यते ॥

पुराकल्पस्वरूपेण भजत्यर्थानुषङ्गिणा ।
दिग्विभागस्य सम्बन्धान्निवीतानुत्यतामतिः ॥
इतरेषां तु षष्ठ्यन्तसंबन्धेऽपि फलोदयः ।
पुरुषं प्रति विस्पष्टस्तत्क्रियान्तर्गतात्मनाम् ॥

स्वाभाविकं दिगादीनां सर्वक्रियाङ्गत्वं न निवीतवदपूर्वं विधातव्यम् । तत्र मनुष्यसंबन्धेऽपि नियमफलमात्रकल्पनमेव

न क्रियाफलकल्पना । तदपि च लौकिकीनामेव क्रियाणामविघ्नसमापनमपेक्षावशात्कल्प्यते नान्यत्स्वर्गादि । तेनैवमाभाति । यावत्किंचिन्मनुष्याः स्वार्थं कर्मानुतिष्ठन्ति तत्र प्रतीच्युदीची चाङ्गं भवति । यावच्च दर्भलवनं तदन्तरा कर्त्तव्यं यावन्मीयते तत्पूर्णेन मातव्यम् । यावच्च स्नेहकार्यं तत्सर्वं विलीननवनीतेन निष्पक्वाद्युतशब्दवाच्येन कर्त्तव्यम् । नैर्ऋतरौद्रयोस्तु विदग्धत्वाश्रितत्वे कर्त्तव्ये इति । तेनाऽत्रापि पूर्वतुल्यत्वं साधयितव्यमित्यारम्भः । तत्र मनुष्यधर्मः शब्दस्य तत्प्रधानत्वादिति विनापि षष्ठीनिर्देशादभजन्तेति मनुष्यसंबन्धात्तादर्थ्यम् इतरेषु षष्ठ्येव । तथाऽपदेशो वेति सौकर्यात्प्राप्तिरभिधीयते पूर्वाह्णे हि पृष्ठत आदित्यं कृत्वा सुखं व्याप्रियन्त इति प्रतिचीप्राप्तिः । तथान्तरालवनपूर्णयोरप्रयत्नसाध्यत्वात्प्राप्तिः ॥ तथा विदग्धे कृष्णत्वादेकवर्णनिर्ऋत्याख्यपृथिवीसम्बन्धप्राप्तिरशृते च रोगदत्वात् रौद्रता नियोगतस्त्वप्राप्तेः सर्वत्र नियमविधिः ॥ प्रकरणसमाख्याभ्यां च कर्मधर्मः ॥ सर्वप्रमाणानुग्रहार्थं प्रकरणे मनुष्यप्रधाने निवेशः । वाक्येन प्रकरणसमाख्ययोर्बाधात्फलकल्पनाभयाच्चातिथ्यादौ निवेशः । तेनापि सह सम्बन्धप्रमाणाभावात्प्रकरणे सम्भावितस्यानुत्कर्षात्प्राचीनविधिशेषत्वाच्चार्थवाद इति सिद्धान्तः । सम्यक् श्रुतयथाविदितविषयान्यविषयस्तुतिविवेकसिद्धिः ॥

अकर्मक्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यात् ॥ १२ ॥

तेनैव श्रुत्यादित्रयस्य प्रकरणेन सह विरोधाविरोधविचार-प्रस्तावेन दर्शपौर्णमासादिप्रकरणगताः पूर्वमनवधारितक्रत्वर्थ-पुरुषार्थपदार्थविषया नानृतं वदेदित्येवमादयः प्रतिषेधाः सामर्थ्यप्राप्तानृतवदनादीनि प्रतिषेधन्त उदाहरणं तेषु सन्देहः। किं क्रत्वर्थाः पुरुषार्था इति। ततः सर्वप्रतिषेधानां प्रवृत्तिविषयत्वात्तदवधारणाधीनो निर्णय इति सैव प्रथमं विचारयितव्या किमर्था सती प्रतिषिध्यतइति। यदर्था चासौ निर्धारयिष्यते तदर्थप्रतिषेधो विज्ञास्यते। न ह्यन्यार्थायाः प्रतिषेधो ऽन्यार्थो भवत्यनाकाङ्क्षितत्वात्। सर्व एव यो यदर्थ-प्रवृत्तः सन्निवार्यते स तदर्थमेव प्रतिषिद्धो भवतीति अवधार्यते॥ तस्मात्प्रवृत्तिर्क्रमर्थ्यचिन्ताप्रवृत्तीनामप्यभिधायकाख्यातवशेनेदमर्थ्यं निरूप्यतइत्याख्यातशब्दाश्चिन्तयितव्याः॥ किमर्थाः पुनः प्रवृत्तीरुपादातुं शक्नुवन्तीति। तावच्च प्रतिषेधैरुदासितव्यं यावदाख्यातनिर्णयो न जातः। तेनैतदुक्तं भवति। ये पुरुषार्थपदान्तरेणासम्बद्धाः प्रकरणगता विधयस्ते किमर्थां भावनामभिदधतीति। ततश्चैतस्मिन्नेव काले समिधो यजति तनूनपातं यजतीत्येवमादयोपि सर्वउदाहरणम्। किं क्रत्वर्थं समिधो यजति उत पुरुषार्थमिति। तथा किं क्रत्वर्थं वदेत् उत पुरुषार्थमिति। यदर्थं च वदनं तदर्थस्यैवानृतपदं विशेषणम्। प्रतिषेधवेलायां च तत्परो विधिरिति शेषमवधारितेदमर्थ्यमनुवदितव्यम्। ततश्चैकत्रैवं वचनं व्यज्यते यत्पुरुषार्थमनृतवदनं तन्न कुर्यादपरत्र त्वेवं यत्क्रत्वर्थमनृतं वदेत् तन्नेति॥ ततश्चैतस्य सर्वस्याख्यातनिरूपणायत्तत्वात्तद्गतोयं विचारो भविष्यति। किमाख्यातेन कर्त्ता ऽभिधीयते ने-

ति। तत्र यद्यभिधीयते ततः श्रौतत्वात्प्रयोजनाकाङ्क्षिणी भा-
वना प्रकरणगम्यक्रत्वर्थत्वबाधनेन पुरुषार्था भवति। अथ ना-
भिधीयते ततः श्रुतिविरोधाभावात्प्रकरणेन क्रत्वर्थता। ननु
सत्यपि कर्त्तुरभिधाने भावनाप्रधानत्वादाख्यातेन तां प्रत्यु-
पादीयमानस्य श्रौतोऽपि सम्बन्धः प्रकरणानुगुणत्वादविरुद्धो
नैव क्रत्वर्थतां बाधते विरोधिनौ हि तुल्यकक्षौ सम्बन्धौ पर-
स्परं बाधेयातां न गुणप्रधानभूतौ। तद्यथा दशापवित्रेण
ग्रहं सम्मार्ष्टीत्यत्र दशापवित्रोपसर्जनस्य संमार्गस्य ग्रहं प्रत्यु-
पादीयमानस्य नैवमाशङ्का भवति। किं दशापवित्रेण सम्ब-
ध्यतामुत ग्रहेणेति। तथाऽत्रापि गुणभूतकर्तृकायाः क्रिया-
याः क्रतुं प्रत्युपादीयमानाया न कश्चिद्विरोधः। यदि त्वाख्या-
तेन कर्त्तुः प्राधान्यमुच्येत ततः प्रकरणगम्येन क्रतुप्राधान्येन
विरोधः स्यात्। यदि वा कर्त्तुरिव क्रतोरपि गुणत्वं स्यात्।
तत उभयोः शेषयोः शेषिसमवायविरोधो लक्ष्यते। न तु तदु-
भयमप्यस्ति। अतः श्रुत्या कर्त्तुर्गुणभावात्प्रकरणेन च क्रतोः
प्राधान्यान्नानाविषयत्वेनासमवायादविरोधः तदभावाद्बाधः
स्यादिति। नैतदेवम्॥

यद्यप्यादौ गुणत्वेन कर्त्ता कर्मणि गम्यते।
तथाप्यस्य प्रधानत्वं न पश्चात्प्रतिषिध्यते॥

यद्यपि प्रथमं साधकमपेक्षमाणा क्रिया कर्त्तारं गुणत्वेन गृ-
ह्णाति तथापि तस्याः प्रयोजनाकाङ्क्षावेलायामपि कर्त्रैव सन्नि-
हितस्तां निर्वर्त्तयितुं समर्थः सोऽपि च साधकत्वं प्रतिपद्यमानः
किमयं ममोपकरिष्यतीत्येवमपेक्षते। तयोश्चैकसम्बन्धोपात्तयोः

परस्परसंबन्धे निर्वर्त्तमाने विप्रकर्षाद्यागसम्बन्धो न गृह्यते न च सामवायिकत्वे संभवत्याराद्उपकारकत्वकल्पना युक्ता। तद्यथा ऽग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमनुनिर्वपतीत्यत्र सत्यपि तद्धितेन देवतोपसर्जनत्वोपादाने यागस्य प्रयोजनाकाङ्क्षायां सत्यामग्नीषोमयोरेव सन्निहितयोः संस्कार्यत्वं विज्ञायतइति न पशोराराद्उपकारकत्वेन कल्प्यते। न हि एवं गुणत्वमन्तरेण प्राधान्येन विरुध्यते। अवश्यंभाविन्यां प्रयोजनकल्पनायां कस्य चित्प्राधान्यमेवमत्रापीति। अथ वाख्यातेन कर्त्ता केवलमभिधीयते गुणप्रधानभावस्त्वर्थाद्यथेष्टं यथायोग्यं भविष्यतीति। तेनोभयोः क्रियाकर्त्रोरपेक्षासन्निधियोग्यत्वैरन्योन्यं गुणप्रधानभावावुपपत्स्येते॥

यद्वैतदविशेषेण स्थितं क्रमवशादुभौ।
प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययाविति॥
तेनाख्याते ऽपि कर्त्तैव प्रकृत्यर्थोपसर्जनः।
प्राधान्येनाभिधीयेत द्वाभ्यामपि कृदन्तवत्॥

न ह्यस्यौत्सर्गिकस्य न्यायस्य स्मरणस्य वापवादभूतं न्यायान्तरं स्मरणान्तरं चोपलभ्यते। तेन कृत्तद्धितान्तवदेव प्रत्ययार्थप्राधान्यं प्राप्नोति। ततश्च शब्देनैव धात्वर्थस्य शेषत्वमुक्तं नातिक्रमितुं शक्यते। ननु सामान्यमुत्सृष्टं प्रतीतिविशेषेणापोद्येत। तथा हि॥

धात्वर्थस्य प्रधानत्वमाख्यातेषु प्रतीयते।
कर्त्तोपसर्जनं तस्य प्रधानत्वे ह्यसङ्गतिः॥

द्वयोस्तावत्प्रधानयोर्गुणयोर्वा सर्वत्रैव सम्बन्धो नावकल्पते। तत्रावश्यं कल्पनीये गुणप्रधानत्वे यथाप्रतीति व्यवस्था

ऽवधार्यते। तत्प्रतीतिश्च यथा ऽन्यत्र प्रकृत्यर्थोपसर्जनप्रत्ययार्थविषयत्वेनोपलभ्यते तथा ऽत्र प्रत्ययार्थोपसर्जनप्रकृत्यर्थविषया सर्वस्य स्वसंवेद्या। न च ततो ऽन्यत् बलवत्कारणमस्ति। तस्माद्प्रसङ्गः कर्त्तुः प्रधानत्वस्येति॥ उच्यते॥

धात्वर्थस्य प्रधानत्वं न तावदिह जन्मनि।
औत्सर्गिको न च न्यायो मन्यते हि निवर्त्स्यति॥

भावप्रधानत्वादाख्यातेषु न कदा चिद्धात्वर्थस्य नित्यं कारणभूतस्य प्राधान्यमिति स्थितम्। न च धात्वर्थ एव भाव इत्युक्तम्। ननु प्रतीतिवशात्कर्तृप्राधान्यं तावन्निवृत्तम्। सत्यं निवृत्तं न तु भवत्यर्थे किं तर्ह्यस्मत्पक्षे। यो हि भावमेव प्रत्ययार्थं वदति तस्य प्रकृतिप्रत्ययार्थप्राधान्यन्यायो लौकिकी प्रतीतिरुभयमपि न विरुध्यते। यस्य तु कर्त्तैव शुद्धः प्रत्ययार्थस्तस्य नैव केन चिद्भावोपादानमिति तत्प्राधान्यानुगमलक्षणं न स्यात् लक्षणत एव कर्त्तुः प्राधान्यं प्राप्नोति तच्च प्रतीतिविरुद्धम्। तत्र यदि प्रतीतिरनुगन्तव्या ततस्तदनुसारेणैव प्रत्ययार्थलक्षणं प्रणेतव्यम्। तच्च भावप्रत्ययार्थवादिभिरेव प्रणीतं नेतरैरतस्तैरतिक्रान्तायां लौकिकप्रसिद्धावभिधेयत्ववत्कर्त्तुः प्राधान्यमभ्युपगन्तव्यमिति क्रियायास्तादर्थ्यप्रसङ्गः। आह नन्वेतत्प्रसज्यते यत्र तादर्थ्यसम्बन्धमेव श्रुतिरुपादत्ते। प्रकृतिप्रत्ययार्थयोः पुनरपेततादर्थ्यं विशेषणविशेष्यभावमात्रं प्रतीयते। तत्र यद्यपि विशेषणत्वेन धात्वर्थस्योपसर्जनता तथाऽपि राजपुरुष इत्यादिष्विव कदा चिदङ्गाङ्गिभावो विपरीतः स्यात्। तथा हि॥

विशेषणतया राजा पुरुषस्योपसर्जनम्।

पुरस्तादर्थवादे दातृव्यापारस्तुतिरापो वै शान्ता इति-वत्संबन्धिद्वारेण प्रतिग्रहीतृविषया ऽवधारयितव्या । तेन दानप्रतिग्रहकर्मणोर्भेदात्प्रतिग्रहसंबन्धित्वेन श्रुतमेतत्कर्म दातुरचोदितमिति मन्यामहे । तुशब्दस्य स्थाने चशब्दः । किं चेहभवत इतिवत् गमयितव्यः । यजमानं वा स्यात्कर्तृत्वेनाचोदितं विजानीमः । तत्कर्म चेष्टिनिमित्तत्वेनाचोदितमिति सूत्रार्थः ।

## सा लिङ्गादार्त्विजे स्यात् ॥ ३७ ॥

सा खल्विष्टिरार्त्विजे स्यात् । यजमाने स्यादित्यर्थः । स ह्यार्त्विजामयमित्येवमार्त्विजो ऽभिधीयते । अथ वा स्वामिसप्तदशाः कर्मसामान्यादिति यजमानस्यापि ब्रह्मादिवदृत्विक्त्वं वक्ष्यति । तेन शक्यं याजमानमपि प्रदानमार्त्विजमित्यभिधातुम् । अथ वा स्वामिकर्मार्त्विजयोः कतरस्मिन्स्यादिति संदिग्धे यत्र लिङ्गं सामर्थ्यात्मकमवकल्पते तत्रेति सूत्रार्थः । कथं पुनर्यजमानव्यापारो निमित्तमिति लिङ्गेन गम्यते । तदुच्यते ।

सामर्थ्यं कर्मणस्तावदेकं लिङ्गं विवक्षितम् ।
अपरं वाक्यसामर्थ्यं पौर्वापर्यनिरीक्षणात् ॥

पूर्वाधिकरणेनैवैतत्प्रतिपादितप्रायं यदुत दातुरिष्टिरिति । यदा ह्यश्वप्रतिग्रहवतः कर्मणो ऽङ्गमेवेत्यवधारितं तदा ऽङ्गप्रधानानामेकदेशकालकर्तृकन्यायाद्य एव क्रतोः कर्ता तेनैवेयमपि कर्तव्या यस्य क्रतोः कर्ता स स्वामिकर्मपरिक्रीयै इत्येवमश्वस्य दाता तस्मादसंदिग्धमेव दातुरिष्ट्या भवितव्यम् । एतच्चाङ्गस्य सा-

मर्थ्यं यत्प्रधानेनैककर्तृकं सदुपकारं शक्नोति कर्त्तुं न भिन्नकर्तृकम् । तेन प्रधानवदेवैतदैस्सामर्थ्यादार्त्विज्यं कर्त्तव्यम् न याजमानमिति । एवं सिद्धे ऽपि वाक्योपक्रमोपसंहारविरोधकृतभ्रान्तिसंशयव्युदासमात्रार्थमुत्तरमधिकरणमारब्धव्यम् । तस्यापि च वाक्यसंबन्धोपक्रमोपसंहारस्येदृशमेव सामर्थ्यं यद्दातुर्विषये न च्चैतावदेव वाक्यं यावतो ऽश्वान् प्रतिगृह्णीयात्तावतश्चतुष्कपालान्वारुणान्निर्वपेदिति । किं तर्ह्यन्यो ऽप्युपक्रमः प्रजापतिर्वरुणायाश्वमनयदित्यादिरस्य विद्यते । स च दातुरिष्टिं प्रतिपादयतीत्युक्तम् । नन्वेतदप्युक्तं विध्युद्देशबलीयस्त्वाद्बाध्यते ऽसाविति । नैतदस्ति । कुतः ।

स्तुतिर्लब्धात्मकत्वेन विध्युद्देशेन बाध्यते ।
प्रतिग्रहीतरि त्वत्र विध्युद्देशो न कल्पितः ॥

यदि लब्धात्मको ऽत्र प्रतिगृहीतृविषयो विध्युद्देशो भवेत्ततो विचार एव न क्रियेत न त्वसौ लब्धात्मकः । कुतः ।

परस्तादर्थवादेषु स्वतन्त्रो जायते ह्यसौ ।
पुरस्तादर्थवादेषु तत्पूर्वा विधिकल्पना ॥

सत्यपि प्रधानगुणभावे विध्यर्थवादानां पूर्वापरोच्चारणाकृतो ऽन्यो विशेषो भवति । सर्वत्रैव तावन्मुख्यं वा ऽपूर्वचोदनाल्लोकवदिति च श्रुतिलिङ्गाधिकरणन्यायेन च पूर्वं विज्ञानमनुपजातप्रतिद्वन्द्वि द्वितीयविज्ञानान्तरानुत्पत्त्यवस्थत्वादासुखेनात्मानं लभते पश्चात्तनं तु पूर्वविज्ञानावरुद्धज्ञानविषयउपजायमानं सत्यां विरोधावस्थायां तदानुगुण्यातिरिक्तेन रूपेणोत्पत्तुमेव न शक्नोतीति अन्यथात्वमपि प्रतिपद्यते । तदिह विध्यर्थवा-

दत्त्वकृतं विशेषं पूर्वपक्षाङ्गाविततया ऽनाश्रित्योपक्रमोप-संहारयोर्दातृप्रतिग्रहीतृविषयत्वेन विप्रतिपद्यमानार्थ-त्वात्तथा सति चैकवाक्यत्वासम्भवात्। पृथक्त्वे चोभयो-रपि परस्परसंनिधिवशेनाक्लृप्तविध्यन्तरप्ररोचनाक्त-रशक्त्योः साकाङ्क्षत्वेनापरिपूर्णार्थयोरानर्थक्यप्रसङ्गादव-श्यंभाव्येकवाक्यत्ववशेन समानविषयत्वे कल्प्यमाने ऽनु-पजातविरोधावस्थपूर्वावधारितदातृगामित्वपरित्यागा-संभवादुत्तरमलब्धावस्थमेव प्रतिग्रहीतृज्ञानं गौणगृ-ह्णातिकल्पनया दातृविषयत्वेनाध्यवसीयते। किं च।

भूयसां च सधर्मत्वमस्मिन्पक्षे भविष्यति।
अन्यथा हि भवेत्पूर्वं सर्वमेवासमञ्जसम्॥

प्रजापतिर्वरुणायाश्वं प्रत्यगृह्णात्स्वां देवतामपादान-भूतां वरुणमेवेति बह्वसमञ्जसं स्यात् मम तु गृह्णाति-रेव कथं चित्प्रयोजकव्यापारे वर्त्तयितव्यः। यत्तु विधि-रर्थवादाद्बलवत्तर इति। सत्यम्। यो विधिः स बलीया-न् भवति। न तु प्रतिग्रहीतुरिष्टिरिति विधिः सर्वत्र हि वाक्ये यत्पूर्वं पदैरनवगतमपेक्षितं च तदुत्तरपदेभ्यः प-रिगृह्यते नेतरत्प्रतीयमानमपि। तद्यथा सत्राद्दुव-सायेति क्त्वाप्रत्ययेनैवोत्तरस्यां क्रियायामुदवसानवदन्यो-न्यनिरपेक्षा बहवः कर्त्तारो ऽवधारिताः उद्दिश्यमान-त्वाच्च विवक्षितसाहित्या इति पृष्ठशमनीयेन यजेरन्नि-त्यत्र सत्यप्युपादीयमानत्वे संहतबहुकर्तृप्रत्ययः पूर्वेणा-नपेक्षितत्वादविवक्षितो भविष्यति। एवमिह यावदेव प्रजापतिर्वरुणायाश्वमनयदित्यर्थवादेन दातुर्वरुणनिर्मो-चने हेतुत्वेनेष्टिः प्रशस्यमानावगता तावदेव तस्य कि-मपि वक्तव्यमितीयमेवेष्टिर्विधास्यतइत्यवधार्यते। ततश्च

पूर्वावधारितविधिविषयः पुरुषो विध्यनुमानाभिमुख-स्तन्मात्रमेवोच्यमानं प्रार्थयते नाधिकम्" । तुल्या च विषयावबोधने विध्यर्थवादयोः शक्तिः । यस्त्वर्थवादस्य विधिशक्तिर्नास्ति तावन्मात्रं विधायकाद् गृह्यतएव न तु तावता सर्वमेव तद्गतं विवक्ष्यतेऽनपेक्षितत्वात् । अतो निमित्तार्थं लिङ्ग्रहणं धातुमन्तरेण न संभवतीति यत्र क्व चन धातौ प्रयुक्तव्ये दातृव्यापारार्थगृहीतौ गृह्णा-तिः प्रयुक्त इति द्रष्टव्यम् । अन्यथा हि यस्मात्पुरा-कल्पे दातुरेवं दृष्टं तस्माददातृत्वेपि प्रतिगृहीतृभिरेवं क-र्त्तव्यमित्यसंबद्धमेव वाक्यं स्यात् । तस्माद्विध्युद्देशेनैवेत्थं प्रवृत्तेन दाता ऽऽश्रित इत्यविरोधः । तदेतच्छ्रुतेर्जाता-धिकारः स्यादित्यत्र प्रपञ्चितम् । ननु च तेनैव गतत्वा-दिह नारब्धव्यमेतत् । सत्यं गतप्रायमेतद् भाष्यान्त-रजनितभ्रान्त्यपनयार्थं तु पुनरारम्भः । इतरथा हि श-क्यमिदं सूत्रद्वयं पूर्वाधिकरणे ऽपि व्याख्यातुम् । यो नामालम्भनिर्वापवल्लौकिकवेदयोरश्वप्रतिग्रहाविशेषाद-नेकान्ते मति न नियोगतः कर्माङ्गत्वं गम्यतइति म-न्यमानो वदेत् यावत्ऽप्यचोदितमेतत्कर्मभेदे सति निर्णयकारणाभावादिति तस्योत्तरम् सा लिङ्गा-दार्त्विजे स्यादिति । यदृत्विग्भ्योऽश्वदानं तत्र स्याद्वैदि-कत्वयज्ञियत्वलिङ्गविशेषान्निमित्तत्वोपयुक्तस्यापि लिङ एव लिङ्गत्वात् । वैदिको हि लिङ् संबद्धो दृष्टो न लौ-किकः । अथ वैतदेव चोद्यं विना सूत्रेण कृतत्वात् सूत्रद्व-यमप्येकीकृत्य परिहारो वर्णनीयः । यस्मादचोदितं लौ-किकं न तत्र निमित्तत्वेन बुद्धिरिति पूर्ववदेव योज्यम् । तत्रैतत्स्यादेकमिदं कर्म यथा वैदिकं सत् निमित्तं भव-

ति तथा लौकिकमपि संभवतीति अत आह। नैतत् कुतः। कर्मभेदात्। अस्ति हि चोदिताचोदितत्वकृतो देशादिभेदकृतकर्मव्यक्तिकृतोपि कर्मभेदो येन निमित्तव्यवस्था भविष्यति। प्रतिषिद्धत्वाच्च लौकिकस्याभाव एव वेदसिद्धान्तेन। अतो यस्यासंदिग्धः सद्भावस्तस्यैव निमित्तत्वम्। न चावश्यमस्य निमित्तार्थं श्रवणं संबन्धमात्रपर्यवसानात्। अतस्याश्वदानस्यैवेयमितिकर्तव्यतेति प्रयोजनवत्त्वेन वैदिकं गमिष्यति। तस्मान्नाचोदितेन संबन्धः इत्येवं संभवत्यपि व्याख्याने ऽर्थवशेनाधिकरणान्तरकरणम्। गृह्णातिशब्दस्य प्रयोजकक्रियायामदृष्टपूर्वो दृढां भ्रान्तिं कुर्वंल्लक्षणाद्वृत्त्या नेतव्यः। प्रयोजकव्यापारे प्रयोज्यवदुपचारात्। अथ वा हेतुकर्त्तर्यपि कर्तृत्वमस्ति तत्र यदा हेतुत्वं विवक्ष्यते तदा हेतुमद्व्यापारे विवक्षिते ऽपि णिजुत्पद्यते। कर्तृत्वमात्रविवक्षायां विनैव णिचा यो ऽश्वप्रतिग्रहं यथा कथं चिन्निर्वर्तयति स प्रतिगृह्णातीति शक्यते वक्तुम्। यथा षड्भिर्हलैः कृषतीति विलिखनवचनः सन्कृषिः षड्ढलोपादानसामर्थ्यात् विलिखितृविषयासंभवात्तत्प्रयोजकव्यापारे वर्त्तते। न हि हलषट्केनैकः कर्त्ता विलेखितुं शक्नोति तेन षण्णामेव विलिखितॄणां यः संविधानेन प्रयोजकः स तद्व्यापारेण कृषेरपि कर्त्ता भवतीत्येवमभिधीयते। तद्वद्दर्थवादवशेन वर्त्तमानो गृह्णातिः तत्प्रयोजकव्यापारे वर्त्तिष्यते। विचित्रशक्तयो हि धातवः प्रयोज्यप्रयोजकोभयव्यापारवचनत्वेन भावार्थाधिकरणे दर्शितास्तेषां सहकारिकारणसन्निधानात्कदा चित्का चित्प्रसिद्धिव्यतिरेकेणापि शक्तिरभिव्यज्यते। तस्माद्दानार्थे प्रतिगृह्णाति-

शब्दः प्रयुक्त इति दातुरिष्टिः । एवं स्थिते केचिच्चोदयन्ति । यथा किल मैत्रायणीयानां स एषो ऽश्वः प्रतिगृह्यतइत्येकरूपोपक्रमोपसंहारविधिना विस्पष्टमेव प्रतिग्रहीतुरिष्टिरिति गम्यते । तत्र च वदन्ति न्यायेन तावद्वयं बलीयांसो यदि तु वचनान्तरेण जीयामहे किं क्रियतामिति । स तु निष्कारणत्रास इति पश्यामः । कथम् ।

> प्रतिग्रहीतरि स्पष्टं यदि वाक्यान्तरं ततः ।
> भवेत्तस्यापि तेनेष्टिर्दातुस्तु न निवार्यते ॥

यथोदाहृतेन तावत्तैत्तिरीयशाखावाक्येन दातुरिष्टिः सिद्धा सा न न्यायान्तरेणापनीयते न वचनान्तरेण । यद्यपि प्रतिषेधवचनं स्यात् तथापि विहितप्रतिषिद्धत्वाद्विकल्पो भवेन्न स्वीकृतन्यायव्युदासः । यत्तु प्रतिग्रहीतुर्विधायकं तद्यदि तावत्कर्माङ्गवशेन विनाप्युपक्रमविशेषात्पूर्ववाक्यार्थानुमायेव भवति ततस्तेनापि दातुरेव । अथ तु स्वातन्त्र्यात् प्रतिगृह्णातिवशात् प्रतिग्रहीतुस्ततः पूर्ववाक्याच्च दातुरित्युभौ करिष्यतस्तत्प्रतिग्रहीतृगता च कर्माङ्गत्वाभावात्पुरुषार्थी सती लौकिकेपि स्यात् । यस्त्वार्त्विज्ये स्यादित्येतत्सूत्रपरः सन् पूर्ववाक्येनापि प्रतिग्रहीतुरेव वदति तेन तत्कर्तृकायाः कर्माङ्गत्वाभावादृत्विजामितरेषां च पुरुषार्थफलकल्पनातुल्यत्वेन लौकिकेपि प्राप्तौ सत्यां केन प्रमाणेन तस्माद्यज्ञे प्रतीयतेत्येतदभिधीयतइति वक्तव्यम् । तस्मादनेन तावद्दातुरिति सिद्धम् ।

## पानव्यापच्च तद्वत् ॥ ३८ ॥

अयमप्यनारभ्यवाद एव। सौमेन्द्रं चरुं निर्वपेद्यः सोमं वमतीति। तत्रापि पूर्ववदेवाधिकरणद्वयमपि विचार्यते। लौकिकसोमपाने रसायनाद्यर्थं कृते वमनेन व्यापन्ने सोमेन्द्रयागः उत वैदिके उतोभयत्रापि। तत्र तद्वदित्यनेन सामान्यपक्षो दोषात्त्विष्टिर्लौकिके स्यादित्ययं चातिदिश्यते। अथ वाधिकरणद्वयमपि सिद्धान्तरूपेणाधिकरणद्वये ऽप्यतिदिश्यते केन चिद्विशेषेण पूर्वपक्षरचना। तत्रेह तावद्वैदिकेन पानेन द्रव्यप्रतिपादनस्य कृतत्वान्न कदा चिद्दोषे पुनः प्रतिसमाधानापेक्षा ऽस्तीत्यनर्थकमिष्टिविधानम्। लौकिके तु वमनेन व्यापन्ने रसायनगुणाभावादिन्द्रियेण वीर्येण च व्यृद्धिः संभाव्यते। न ज्वलोदरवदत्यन्तासंभावना। तत्संयोगे च श्रूयमाणेष्टिस्तत्समाध्यर्थैव विज्ञायते। तस्मात्तत्र स्यादिति।

## दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न दोषः स्यात्॥ ३८॥

तैरेव वैदिकत्वसामान्यादिभिर्वैदिके भवतीति कस्मान्नोच्यते। न हि वमने वैदिकत्वं संभवति अचोदितत्वात् अतो य एव दोषो लौकिकगामित्वे हेतुः स एवेह वैदिकविषयत्वे स्यात्। तथा हि।

> सम्यक्करणरूपान्ता प्रतिपत्तिर्विधीयते।
> तद्व्यापदि प्रधानस्य न भवेत्पूर्ववत्फलम्॥

न च तावल्लौकिकपानव्यापदि दोषोऽस्ति। वमनार्थमेव पानात्। यथापि भवति तथापि वैद्यकेनैव तस्य

प्रतिसमाधानमिति न वैदिकोपायापेक्षा । वैदिके तु पाने सम्यक् जरणापाठाज्जरणान्ता प्रतिपत्तिरवधारिता । सा च वमनेन व्यापद्यते । ततश्च प्रधानफलवैगुण्याशङ्कायां तत्समाधानार्थेष्टिर्विज्ञायते । अथ त्वयं फलार्थवादस्ततः सुतरां फलकल्पनाभयाल्लौकिकान्निर्दृश्यते। वैदिके तु वमने न पानं प्रत्याधितम् । तेन क्रतुस्थस्येष्टिरङ्गमिति सुकरः संबन्धः ।

## तत्सर्वत्राविशेषात् ॥ ४० ॥

अश्वप्रतिग्रहेष्टिवदेव कर्माङ्गत्वात्स्वामिकर्तृकत्वे सिद्धेपि तस्य किमात्मीयं वमनं निमित्तम् उतार्त्विजमपि इति विचार्यते। किं प्राप्तम् । विशेषानुपादानादुभयत्रापि स्यात् । यथा च स्वामिवमनेन प्रतिपत्तिविनाशः तथार्त्विजेनाप्युभयोर्द्रव्यसंस्कारात्मकत्वात् । तस्माद्यदि दोषनिर्घातार्थमेतत्कर्माथाप्यपूर्वोपकारार्थमुभयथा वमनद्वये ऽपि कर्त्तव्यम् ।

## स्वामिनो वा तदर्थत्वात् ॥ ४१ ॥

यद्यपि तावद्द्वारादुपकारकत्वं तथा ऽपि स्वामिवमने भवितव्यम् । कुतः ।

पूर्वं यच्छब्दसंबन्धान्निमित्तत्वं न ज्ञायते ।

तत्संबन्धात्परस्तात्तु कर्त्तैकः संप्रतीयते ॥

यः सोमं वमति स निर्वपेदिति यच्छब्दतच्छब्दयोगाद्यागवमनयोरेकः कर्त्ता गम्यते । तत्र नैमित्तिकं तावत्स्वामिकर्तृकत्वेनासंदिग्धं तेनासंदिग्धेन संदिग्धं व-

मनं निर्णीयते। तदपि स्वामिकर्तृकमेव सन्निमित्त-मिति। न च स्वतन्त्रमेव निमित्तं शुद्धेनाख्यातेन निमित्तप्रत्ययानुत्पादात्। यच्छब्दोपबद्धं तन्निमित्तं प्रतिपादयति। तेन चेत्संबद्धं पूर्वेतरं समानकर्तृकत्वं पश्चान्निमित्तत्वप्रतीतिः। अथर्त्विजो देवतार्थमृत्विक्-परिक्रयार्थं च द्रव्यं त्यजन्ति ततस्तेषां स्वात्मनि परिक्रयविरोधादवश्यं तैरप्यन्ये ऽध्वर्य्वादयो वरीतव्याः। आधानगतेन त्वात्मनेपदेनाग्नीनामाधातृव्यतिरिक्तपुरुषसंबन्धाभावात्स्वात्मार्थेष्वग्निषु यष्टव्यम्। ततश्च यदि ता-वद्दान्तसोमकर्मोपकारबुद्ध्या कुर्वन्ति ततो देशकालकर्तृभेदाद्विगुणं न तेन प्रधानेम गृह्यते। न चात्रत्य देशादिभेद आम्नायते येन तत्सद्भावे ऽप्यवैगुण्यमाश्रीयेत। स्वामिवमनेन च कृतार्थत्वान्नानेनैव शास्त्रेण देशान्तरादीनामनुष्ठानम्। कथं वैकमेव शास्त्रं स्वामिवमनपक्षे समानदेशादित्वमाश्रयेदृत्विग्वमने च तद्भेदम् अथ स्वात्मार्थबुद्ध्यैव ते प्रयुञ्जीरन्। एवमपि क्रत्वर्थेनावधारितस्य पुनः पुरुषार्थत्वाभावात्तादर्थ्येन क्रियमाणस्य आनर्थक्यमेव स्यात्। अथ तु एतत्सिद्ध्यर्थं पुरुषार्थतैव शास्त्रेणाश्रीयते तथा सति उपस्थितक्रतुत्यागादसन्निहितस्वर्गादिकल्पनाच्च विप्रकर्षः। सदृशं लौकिकवमने ऽप्येतदिति न यात्रं स्यात् तच्च पूर्वमेव निराकृतम्। तस्मात्स्वामिवमने स्यात्। अथ त्वध्वर्य्वादिवमने ऽपि स्वाम्येव द्रव्यं त्यजेत् तथा सति तदेव भिन्नकर्तृकत्व-मापद्यते। तत्समर्थने वा ऽश्रुतषष्ठ्यर्थकल्पना सामानाधिकरण्यबाधश्च तथा कल्पनायां च स्वामिवमनस्यानिमित्तत्वप्रसङ्गः। उभयाश्रयणे वा वैरूप्यनिमित्तो वा-

त्र्यभेदः स्यात् । यः सोमं वमति यस्य सोमऋत्विग्वमतीति चाश्रयणादन्यतरपरिग्रहे तु स्वामिवमनग्रहणं युक्तम् शब्दसामर्थ्यात् । एवं तावदारादुपकारकत्वे । यदा तु वाक्यशेषोपनीतयागशेषद्रव्यप्रतिपत्तिनियमभ्रेषोपजनितं फललाभायोग्यत्वमतो न प्रतिसमाधीयते इति कल्प्यते तदा यजमानफलोत्पत्तेरत्यन्तादृष्टत्वात्तदाशङ्कैति तेनैव प्रतिसमाधानेष्टिः कर्त्तव्येत्यसंदिग्धम् । यत्तु दक्षिणालाभात्मकमृत्विजां फलं तत्प्रति चासीति वमने लभ्यमानं दृश्यतइति निराशङ्कत्वादनपेक्षितप्रतिसमाधानं नेष्टिं गृह्णाति । यदा ऽपि प्रक्रान्तकर्मकर्तृनियमांशेन भक्षयितृसंस्कारार्थं भक्षणमतस्तद्भ्रेषे कर्त्तुर्वैगुण्यमुपजातं द्रव्यसंस्कारस्य तदुपयोगात्मकस्य निवृत्तत्वादिति कल्प्यते तदा ऽपि तद्भ्रेषकृतयाजमानफलविघ्नप्रसङ्गात् तन्निवृत्त्यर्थत्वाद्यच्छब्दनिर्देशाच्च यजमानवमनएव भवितव्यम् । एतेनापूर्वसंस्कारार्थत्वमपि व्याख्यातम् । यदा ऽपि हि सोमवमनान्न विहिताकरणं नापि प्रतिषिद्धसेवनमापद्यतइति कृत्वा दोषनिर्घातार्थत्वमिष्टेरनाश्रित्य निमित्तं कर्माङ्गं तदापि च यच्छब्देन पुरुषस्योपात्तत्वाज्जञ्जभ्यमानन्यायेन प्रकरणागतपुरुषसंस्कारता ऽध्यवसीयते तदापि याजमानास्त्विज्येनैव तत्कर्तृकता । वमवसमानविषयत्वाच्च यजमानवमनमेव निमित्तम् । यत्त्वध्वर्य्वादिवमनेपि द्रव्यप्रतिपत्तिभ्रेषः कर्तृसंस्कारात् विनाशो वा समाधिमपेक्षतइति । यद्यप्यपेक्षते तथाप्यविधानान्न गृह्यते । सर्वेषु च क्रत्वर्थपुरुषार्थपक्षेषु चर्त्विग्वमने विधानमित्युक्तम् । अतश्च यदि तद्वमनमदृष्टमेव ततस्तूष्णीमेवासि-

तव्यम्। अथ दृष्टं ततस्सामान्यविहितं किंचित्कर्त्तव्यम्। न चात्र कृत्वर्थोद्यन्यतमपचावधारणप्रयोजनमस्तीति नातीवावधारणे यतितव्यम्। अथापि तत्त्वज्ञानं प्रयोजनं ततो जञ्जभ्यमानपक्षः परिग्रहीतव्यः। तथा च सूत्रकारः स्वामिनो ऽतदर्थत्वादित्याह।

## लिङ्गदर्शनाच्च ॥४२॥

व्यृध्यत इति स वक्तव्यो यस्य सोमपानाद्वृद्धिः प्रार्थ्यते। तद्वैगुण्याच्च व्यृद्धिराशङ्क्यते स्वामिनश्च तद्भयमस्तीति तस्यैवेष्टिः।

## सर्वप्रदानं हविषस्तदर्थत्वात् ॥४३॥

अष्टाकपालादिशब्दैः समस्तं द्रव्यं देवतार्थमवगमितम्। हवनीयप्रक्षेपेण च हविषो देवतार्थता भवति। यदाहवनीये जुह्वतीति विधेरग्निमुखा वै देवा इति चार्थवादात्। एवं च सति ततश्चेत् किंचिदपनीयेत तदा ऽन्यत् श्रुतमन्यत्क्रियेत तस्मात्सर्वप्रक्षेपः। किं पुनरयं पूर्वपक्षवादी शेषकार्याणां स्विष्टकृदिडाप्राशित्रशंयुवाककालभक्षचतुर्धाकरणानां विधिं न पश्यति। सत्यं न पश्यतीति केचित्। न त्वेतद्युक्तमिव न ह्येवं कश्चित्पूर्वपक्षो न भवेत्। अतः पश्यन्नेवानेनाभिप्रायेण मन्यत इति वक्तव्यम्।

विद्यमानेषु शेषेषु द्रव्याणामप्रयोजकाः।
भवेयुः शेषभाजो हि निःशेषे तु प्रयोजकाः॥

यदा हि ह्यवदानमात्रे हुत पुरोडाशादयः सशेषाः क्रियन्ते तदोत्तरार्धात्स्विष्टकृते समवद्यतीत्येवमादिचो-

दनावशेनैकदेशद्रव्यस्योत्पत्तौ विद्यमानसंयोगादित्येवं स्विष्टकृदादीनामप्रयोजकत्वं भवति । यदा तु खलु सर्वप्रदानमवगम्यते तदा विद्यमानसंयोगासंभवाच्चोदितैकदेशानुष्ठानानुपपत्त्या शक्यमेकदेशयुत्पादनमध्यवसातुमिति स्विष्टकृदाद्यर्थं पुरोडाशान्तराण्युत्पादेरन् । शेषशब्दः शेषात्स्विष्टकृते समवद्यतीत्यादिषु कथमिति चेत् । उच्यते ।

हविरन्तरमालोच्य शेषशब्दो भविष्यति ।
आज्येन शेषमितिवत्तच्छेषेणेतिवच्च नः ॥

यथैवाज्येन शेषं संस्थापयतीति पूर्वकर्मणः पर्यवसानादधिके पूर्वसदृशे वा शेषशब्दः प्रयुज्यते यथा च ततः शेषेण विशिष्टदेशजात्यादिमन्तो जन्म प्रतिपद्यन्ते इति स्वर्गफलकर्मणो निःशेषोपयोगादन्यफलस्य चान्यत्र व्यापारासंभवात्ततोऽन्येनेति वक्तव्ये ततः शेषेणेति गौतमाचार्येणोक्तम् । एवमिहापि यत्प्रधानहविर्भ्योऽन्यद्धविस्तेनैवान्यत्वेनाधिक्येन वा भविष्यति । अथ वा गुणत्वेन वा शेषादित्येवमभिधास्यते शेषशब्दो ह्युपयुक्ततरद्विद्यमानं ब्रवीति । न च प्रधानहविषां किंचिद्विद्यतेऽन्येषां च सर्वमेतद्रूपमस्ति तस्माद् द्रव्यान्तराणि गृह्णीरन् । यथा वक्ष्यति । निर्देशात्तस्यान्यदर्थादिति चेत् इति । अथाप्यत्यन्तं शेषशब्दानुरोधं कृत्वा तेषामेव किंचिच्छेष्यते तथाऽप्यस्त्येवाऽव्यभिचारस्य प्रयोजनं नावश्यं पञ्चोक्तेनैव प्रयोजनेन भवितव्यमिदमपि संभवति । यदा प्रधानवाक्यादशेषप्रदानप्रसक्तौ सत्यां शेषकार्यवशेन शेषाः स्थाप्यन्ते तदा यथैव प्रधानं तस्य हविषः प्रयोजकमेवं स्विष्टकृदादीन्यपीति । तद-

र्थावदाननाशदोषापहारेष्वपि प्रधानवदेव हविरन्तर-मुत्पाद्येत । यदा पुनः प्रधानचोदनाचिप्तस्यैव शेषस्य स्विष्टकृदादीनि ग्राहकाणि भवन्ति तदा तेषां परप्रयु-क्तद्रव्योपजीवनादप्रयोजकत्वे सति नाशदोषापहारे-ष्वपि अक्रिया सिद्धा भवति। तस्मात्सत्यप्युभयोः पक्षयो-रसर्वप्रदाने ऽस्ति प्रयोजनमित्यर्थवानिविचारः ।

## निरवदानात्तु शेषः स्यात् ॥४४॥

यद्याग्नेयो ऽष्टाकपाल इत्येवमाद्येव भवेत्ततः सर्वप्र-दानमेवावधार्येत । अत्र पुनस्तस्मात्पुरोडाशादेर्निष्कृष्य किं चिदेव होतव्यं श्रूयते द्विर्हविषो ऽवद्यति मध्यात्पू-र्वार्द्धाच्च द्विरवद्यति अङ्गुष्ठपर्वमात्रमवदानं भवति । द्य-वदानं जुहोतीत्येवमादिवाक्यालोचनेन हि किं चिदेव होतव्यमवगतमतः शेषयितव्यं किं चित् ।

## उपायो वा तदर्थत्वात् ॥४५॥

यद्येतानि वाक्यान्युत्पत्तिवाक्यावगतमशेषहोममबा-धमानानि न निविशेरन् यदि चैतानि प्रधानस्य प्र-त्यासन्नतराणि भवेयुस्ततो बाधेरन्नेतानि तु संस्कार-वाक्यानि अविरोधेनैवोपपद्यन्ते । शक्यते ह्यङ्गुष्ठपर्वमा-त्रैर्मध्यपूर्वार्द्धोद्धृतैर्दिशः प्रदृत्तैरवदानैः संस्कृत्य संस्कृत्य निःशेषं हविः प्रदातुम् । अतः सर्ववाक्यवशेनैवं शास्त्रा-र्थो भवति । यदशेषं हविर्जुहोति तदेवमुपायमिति तेन न कस्य चिद्धोमः प्रतिषिध्यते । तस्मात्सर्वप्रदानं कर्त्त-व्यम् । यत्तु यथाश्रुतेतिकर्त्तव्यताको युगपन्न शक्यते क-र्तुमद्यवदानहोमप्रसङ्गादिति । ज्योतिष्टोमवदभ्यसि-

तव्यो होमः । तदर्थत्वाद्देवतार्थत्वाद्यागार्थत्वादपूर्वार्थत्वाद्वा कृत्स्नस्याष्टाकपालस्य । नैकदेशमात्रहोमेनोत्पत्तिवाक्यार्थसंभावना भवेत् । अथ वा ऽवदानसंस्कारस्य द्रव्यार्थत्वात् ।

## कृतत्वात्तु कर्मणः सकृत्स्याद्
## द्रव्यस्य गुणभूतत्वात् ॥४६॥

नैतदस्ति । पुनःपुनर्हविरवखण्डनं तद्वांश्च होमो ऽभ्यसितव्य इति । कुतः ।

खण्डनं गुणभूतत्वादभ्यस्येतेह यद्यपि ।
होमः प्रधानभावात्तु नावृत्तिं प्रतिपद्यते ॥

हविर्हविषो ऽवद्यतीत्येतस्य संस्कारत्वाद्यावत्संस्कार्यं ध्रियते तावदावृत्तिर्भवत्विति शक्यते वक्तुम् । होमस्य फलवत्त्वाद्धोमस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्ध इति च प्राधान्यावगमादेकेन द्व्यवदानेन निवृत्तस्य न द्रव्यमस्तीति पुनरावृत्तिर्युक्ता । तस्मिंश्चानावर्त्तमाने ऽर्थाभावादवद्यतिरपि नावर्त्तते कार्ये हि प्रवर्तमानं द्रव्यं संस्कारं गृह्णाति नोदासीनम् । न च द्व्यवदानव्यतिरिक्तस्य हविषः कार्यमस्तीति न संस्कारमपेक्षते । तस्मात्सो ऽपि नावर्त्तते । यदि हि द्रव्यार्थो होमो भवेत् ततस्तद्वशेन स्वयमावर्त्ततावखण्डनं चावर्त्तयेत् । अतदर्थस्य नावृत्तिः । न चैष वाक्यार्थो यज्जुहोतीति हूयमानस्य हविरवखण्डनमुपायो विधीयतइति । न हि जुहोतिशब्देन द्रव्यमुपादीयते । न चैष कर्मणि लकारो यतो हूयमा-

नानुवादत्वं प्रतिपद्यते । क्रियायामेव त्विदं ह्यवदानं विधीयते । या ऽपि यत् जुहोतीति यच्छब्दात् द्रव्यप्रत्ययो भवति सो ऽपि यच्छब्दस्यावैदिकत्वात्क्रियाविशेषणभूतस्यानुवादत्वप्रदर्शनार्थं व्याख्यातृभिरुच्चारितस्य परमार्थानालोचनाद्भविष्यतीत्युपेक्षणीयः । यत्तु ज्योतिष्टोमवदुत्पत्तिवाक्यावगतस्य समस्तद्रव्यप्राप्त्यर्थमावर्त्तिष्यते इति तदयुक्तम् । कुतः ।

अशेषग्रहणे सिद्धे भवेत्सोमेन तुल्यता ।
अपवादात्तदेवेह न तु सिद्धं कथं च न ॥

आग्नेयचोदनाया ह्यानुमानिको होमसंबन्धः सर्वपुरोडाशावयवसामान्यप्रवृत्तश्च स यावन्नैव निर्वर्तते तावदस्यैव ह्यवदानं जुहोतीत्यनेन निष्कृष्य संबन्धः कल्पितः । तस्मिंश्च सिद्धे नानुमानिको ऽवकल्पते । तेन यत्सामान्यप्रवृत्तमाग्नेयत्वं तद् ह्यवदानचोदनया साप्रदश्यमिव प्राकरणिकैर्ह्यवदानविषयमेवोपसंह्रियते । तत्रैषो ऽर्थो विज्ञायते ह्यवदानमाग्नेयं करोतीत्यतो ऽवयवान्तराणामचोदितत्वान्न होमप्रसङ्गः । किं च ।

न चावश्य प्रदानेन हविराग्नेयमिष्यते ।
ह्यवदाने गृहीते हि सर्वाग्नेयत्वसंभवः ॥

तद्धितेन हि तादर्थ्यमात्रमुक्तं न प्रदानम् । द्वेधा ऽपि च तादर्थ्यं भवति प्रदानेन प्रदानार्थद्रव्यसाधनत्वेन वा । तथा हि । व्रीहिभिर्यजेतेति वचनान्न तावद् व्रीहयः साक्षात्प्रदीयन्ते ऽथ च प्रदेयप्रकृतित्वादेवमुपदिश्यते । तस्माद्यद्यपि पुरोडाशः समस्तः साक्षान्न प्रदीयते तथा ऽपि ह्यवदानप्रकृतित्वादाग्नेयो भविष्यति । तेन ह्यवदानेनैव तावद्धीयमानेन तस्याग्नेयत्वं कृतं भ-

वति द्वावेव च तौ व्याख्याप्रकारौ । एको देवतासंबन्धस्य द्व्यवदाने संक्रान्तिरिति । अपरः पुनरिदमेव पुरोडाशस्याग्नेयत्वं द्व्यवदानं ततो गृह्यतइति तस्मान्न सर्वहोमः ।

## शेषदर्शनाच्च ॥ ४७ ॥

एवं च शेषशब्दो मुख्य एवोपयुक्तेतरविद्यमानवचनो भविष्यति । उत्तरार्द्धादिशब्दस्य नावयवविधिकल्पनार्थापत्तिक्लेशमाश्रयिष्यति । अत्राभिधीयते । यत्तावदुक्तं साप्तदश्यवदाग्नेयत्वं द्व्यवदानमात्रे उपसंहृतमिति । तन्न घटते । कथम् ।

सामान्यविधिरस्पष्टः संक्रियेत विशेषतः ।
स्पष्टस्य तु विधेर्नान्यैरुपसंहारसंभवः ॥

साप्तदश्यं हि सामिधेनीनामुक्तमनारभ्यवादेन न क्रतूनाम् । तस्य तु क्रतुसंबन्धस्तद्द्वारेणानुमानिकः कल्प्यो न च प्रत्यक्षसंबन्धे सत्यानुमानिकः कल्प्यतइति युक्त उपसंहारः । न त्वष्टाकपालस्यास्फुटो देवतासंबन्धस्तद्धितश्रुत्याऽभिहितत्वात् । स हि द्व्यवदानस्यैवानुमानिकः स्यात् । उत्पत्तिवाक्ये च कर्मणोऽष्टाकपालेन संबन्धः श्रूयते । द्व्यवदानेन पुनरुत्पन्नवाक्ये । तस्मैतत्स्यात् । कर्मसंबन्धोऽष्टाकपालस्यानुमानिको द्व्यवदानस्य प्रत्यक्षस्तद्भावे वाऽऽनुमानिककल्पनं न संभवतीति । नैतद्युक्तम् । एवं सति द्व्यवदानं जुहोतीत्येतदेवोत्पत्तिवाक्यमभ्युपगतं भवेत् । यदि ह्यष्टाकपालवाक्यं जुहोतिवाक्येनोपसंहृतं ततोऽनेनैव कर्मोत्पत्तिः क्रियेत । ततश्चाग्नेयवाक्ये चोदिते हि तदर्थत्वात्तस्य तस्योपदि-

ग्रयेतित्येवं वाक्यभेदः प्राप्नोति। न चाननुमाय यागमा-
ग्नेयादिवाक्यानां वाक्यान्तरापेक्षा तत्संबन्धो वा ऽव-
कल्पते इत्युक्तम्। अतो यद्यप्यानुमानिकः संबन्धस्तथा
ऽपि स्वार्थपर्यवसायित्वान्यथानुपपत्तेः प्रथमतरमनुमित
इति सिद्धे संबन्धे न शक्यं प्रत्यक्षगतेनाप्यन्यथात्वं कर्तुम्।
न चेह सामान्यविशेषभावः संभवति अवयवावयविनोः
सामान्यविशेषव्यवहाराभावात्। अष्टाकपालचोदनया
हि प्रत्यक्षमेव समस्तः पुरोडाश उपदिश्यते। इडावदान-
चोदनया ऽपि ततस्तुल्यबलत्वम्। ननु इडावदानव्य-
तिरिक्तावयवप्राप्तिः सामान्येन पुरोडाशशब्देन क्रिय-
माणा दुर्बला स्यात्। उच्यते।

यदि ह्यवयवार्थेन पुरोडाशो विधीयते।

ततः सामान्यवृत्तिः स्यान्न तु साक्षाद्विधीयते॥

आकृतिशास्त्राण्याकृतावसंभवन्ति व्यक्तिलक्षणा-
र्थानि भवन्ति। तानि व्यक्तिषु परोक्षत्वाद् दुर्बलानि जा-
यन्ते। न त्ववयविव्यक्तिः कर्म साधयितुं न शक्नोति।
यतस्तच्छब्दस्यावयवलक्षणार्थता कल्प्येत। अथ विनैव
कारणेन लक्षणाश्रयणम् ततो ऽवयवशास्त्रस्याप्यवय-
वान्तरलक्षणार्थत्वाद्दौर्बल्यं स्यात्। तस्माद्यथैव इडावदानं
स्वावयवनिरपेक्षमात्मनैव केवलेन विधीयते तथैवाष्टा-
कपालस्य इडावदानमवयवान्तराणि चानपेक्ष्य प्रत्यक्षवि-
धानात्प्राप्तिस्तत्प्राप्तौ च यदा ऽवयवान्तराण्यनुषज्यन्ते
को वारयति। न तु तानि स्वंमहिम्ना संबध्यन्ते तत्परा
वा चोदना। न चात्यन्तमवयवावयविनोर्व्यतिरेक इति
यदा ऽऽलोच्यते तदा ऽवयवान्तराण्यपि प्रत्यक्षाण्येव भ-
वन्ति। तेनाष्टाकपालचोदनाद्यावदानचोदनावशनैवं

कर्म प्राप्नोति द्व्यवदानं दत्त्वा पुनः शेषप्रदानम्। अथ
वा विकल्पः कदा चित्सकलस्य प्रदानं कदा चिद् द्व्य-
वदानमात्रस्य। अथ वाऽष्टाकपालस्योत्पत्तिवाक्यशिष्ट-
त्वादामिक्षावद्बलीयस्त्वे सति द्व्यवदानं तेन सह बाध-
विकल्पसमुच्चयान्न प्रतिपद्यत इति गुणश्चापूर्वसंयोग इ-
त्येवं कर्मान्तरं कल्पयेत्। यतः कुतश्चिच्च द्रव्यान्तरादु-
पादीयेत अष्टाकपालसंबन्धाभावात्। पूर्वकर्मसंबन्धे
ऽपि च पुनर्द्रव्यान्तरादेवोत्पन्नस्याष्टाकपालेन सह वि-
कल्पसमुच्चयावुपन्यसितव्यौ। अथ वा कृत्स्नपुरोडाश-
ग्रहणे ऽवधारिते द्व्यवदानचोदनायाश्च गुणपरत्वात्कर्मा-
न्तरविध्यशक्तेरष्टाकपालविषयत्वावगमात्संस्कारस्य या-
वत्संस्कार्यमावृत्तेः प्रधानस्य च यथाश्रुतगुणसंपादनाय
ज्योतिष्टोमवदावृत्तेरिष्टत्वात्। उपायो वा तदर्थत्वादि-
त्ययमेव पक्षः प्राप्नोति निरवदानप्रमाणाभावात्।
निरवदानाश्रयणे चात्यन्तदुष्टा परिसंख्या स्यात्। न
ह्यत्र नियम उपपद्यते सर्वपुरोडाशावयवानां नित्यवत्प्रा-
प्तेः। यदि हि कतमोऽवयवः प्रक्षिप्यतामित्येवं निय-
मापेक्षायां सत्यां मध्यपूर्वार्धद्व्यवदानं विधीयेत ततः
स्यान्नियमार्थत्वम्। नित्यप्राप्ते त्ववयविनि द्व्यवदानपुनः-
श्रुतेरवयवान्तरनिवृत्तिपरत्वादस्वार्थग्रहणमित्यादिदोष-
त्रयमपरिहार्यं स्यात्। तच्च हि तत्परिहर्तुं शक्यते यत्र
परिसंख्यायमानप्राप्तिशास्त्रमक्लृप्तमुत्प्रेक्षाभिमुखं वर्तते।
न चात्राष्टाकपालशास्त्रमक्लृप्तम्। न च क्लृप्ते सति दोष-
परिहारः संभवति। तस्मान्न निरवदानम्। यदि च
निरवदानशास्त्रादाग्नेयस्यैवं यागार्थद्व्यवदानविषयमुपसं-
क्रियेत ततः शेषावयवानामदेवतार्थत्वान्न स्वत्वमपैतं

स्यात्। ततश्च भक्षार्थो वा द्रव्ये समत्वादित्यादिषु यहु-त्विग्भिः साम्यादस्वामित्वं यजमानस्य तत्र तत्रोच्यते त-त्सर्वं विरुध्यते। तन्नैतत्स्यात्। देवतोद्देशसंबन्धो ह्यव-दानस्यैव त्यागः पुनस्समस्तस्य हविषः त्यागकृता च स्व-त्वनिवृत्तिर्न देवतासंबन्धकृता। तस्मादविरुद्धं तदभि-धानमिति। तदसत्। कुतः।

निर्वपन्नेव जानाति होतावदिह दास्यते।
तत्राधिकपरित्यागः कल्प्यते केन हेतुना॥

देवतायै हि दातुं द्रव्यं त्यजन्ति न विभवेन। तत्र यद्देवतार्थादन्यदधिकं तद्गृहावस्थितद्रव्यान्तरवदपरि-त्यक्तम्। न चात्र त्यागस्य भेदेन विधानमस्ति। देवता-सबन्धकरणविधिनैव ह्यसावर्थापत्त्याऽऽक्षिप्यते। सा चा-र्थापत्तिर्यावता विना देवतायै दानं न संभवति तावत्यं-वावस्थिता नान्यत्र। न हि शेषद्रव्यपरित्यागाद्विना ऽनुपपत्तिः। सर्वत्र च समाप्तिविधानमिष्यते तेनापि या-वत एव यागसमाप्त्यङ्गत्वं तावत एवाक्षिप्तस्त्यागवि-धिर्नावयवान्तराणाम्। अतो यथा चतुर्मुष्टयतिरिक्ताना-मनसि स्थितानां व्रीहियवानां न निर्वापवेलायामत्या-गादस्वत्वमेवमिहापि नावयवान्तराणां तत्स्यादिति। अथोच्येत निर्वापवेलायामनुपजातमध्यपूर्वार्धादिविभा-गं द्रव्यमनभिप्रेतत्यागमपि बलात्परित्यक्तव्यम्। न हि तदानीं विज्ञायते केभ्यो व्रीहिभ्यो ह्यवदानं निष्पत्स्यते केभ्यो नेत्यगम्यमाने विशेषे यानेव न त्यजेत्तेभ्य एव कदाचिदवदीयेत। तत्र त्यक्तानामदानादत्यक्तानां च दानादयथाश्रुतकरणप्रसङ्गः। तस्मात्सर्वत्याग इति। नैतदेवम्।

न हि सामान्यशास्त्रेण व्यवहारे कृते सति ।
विशेषशास्त्रावसरस्तस्मादादित एव सः ॥

यदा हि सामान्यशास्त्रं प्रवृत्तव्यवहारं भवति तदा न शक्यं केनापि व्यावर्त्तयितुम् । तद्यदि समस्ताष्टाकपालनिर्वृत्त्यर्था व्रीहयो देवतोद्देशेन निरूप्तास्त सर्वे दातव्यत्वेन प्रक्रान्तास्तेषां यएव न दीयेरन् तत्रैव प्रक्रान्तापरिसमापनदोषो भवेत् । ततश्च सर्वप्रदानमेव प्राप्नोति । यदि तु द्यवदानशास्त्रेण विशिष्टमिष्यते तत आदित एवैवमवधारयितव्यम । अष्टाकपालनिर्वृत्त्यर्थेषु चतुर्मुष्टिषु ये द्यवदाननिर्वृत्त्यर्थास्तानग्नये जुष्टं निर्वपामीति । यद्यपि च विशेषो न गम्यते तथा ऽप्येतेषां मध्ये ये ऽत्र द्यवदानं साधयन्ति तावन्तो न ममेति शक्यं संकल्पयितुम । तद्यथा लोके कश्चिद्वहुद्रव्यसमुदाये ऽवस्थिते कंचिदभिधत्ते इतस्त्वं यावत्तृप्ति गृह्णासीति तत्र न तदवयवविशेषो गम्यते ऽथ च न सर्वत्यागो ऽध्यवसीयते तथेहापि द्रष्टव्यम् । यत्तु तावन्मात्रमेव न निरूप्यते तत्र चतुरो मुष्टीन्निर्वपतीति अश्वशफमात्रः पुरोडाशो भवतीत्यादिवचनसामर्थ्यादीदृक्परिमाणाद् गृहीतं द्यवदानं देवतार्थतां प्रतिपद्यत इत्यवगम्यते। यत्तदन्यत्तत्तदनुग्रहार्थं नाधिकत्यागार्थमिति द्रष्टव्यम् । अतो यथैवानसा ऽधिनिर्वपतीत्युक्ते निर्वापपरिच्छेदार्थमुपात्तेष्वपि शकटस्थितेषु व्रीहिषु न स्वत्वमपैति तथैव द्यवदानापादानभूते पुरोडाशे ऽपीति स्वत्वे सति शक्याः परिक्रयादयः तेन कर्त्तुमिति समत्ववचनविरोधः । एतेन द्यवदानप्रकृतित्वादेवाष्टाकपाल आग्नेयः कृतो भवतीत्येषो ऽपि पक्षः प्रत्युक्तः । तत्रापि शेषपरित्या-

गानुपपत्तेः । न च व्रीहिवत्पुरोडाशस्य प्रकृतित्वं युक्तम् । व्रीहयो ह्यवदनीया वाक्यान्तरशिष्टाश्च प्रकरणादुत्पत्तिवाक्यशिष्टप्रकृतिद्रव्यापेक्षपुरोडाशावरुद्धयागानुवादेन विधीयमाना न शक्नुवन्ति प्रकृतित्वप्रतिपत्तिमन्तरेण यागसाधनत्वं प्रतिपत्तुम् । अष्टाकपालस्त्ववदनीय उत्पत्तिवाक्यशिष्टश्च शक्नोति साक्षाद्यागं साधयितुम् । स च पूर्वतरप्राप्ते प्रकृत्यपेक्षिणि ह्यवदाने चोद्यते । तस्मान्न तत्प्रकृतित्वेन यागं साधयति । कस्तर्हि सर्वप्रदानस्य परिहारः उच्यते ।

यागहोमावभेदेन येर्मोहात्परिकल्पितौ ।
तेषामपरिहार्योऽयं भेदे त्वेषोऽभिधीयते ॥

यद्याग्नेयादिचोदनयैव हविःप्रक्षेपोऽभिधीयते ततो ह्यवदानचोदनया परिसंख्यातुमशक्यत्वात्सर्वप्रक्षेपः प्राप्नोति । तदा च तया ऽऽग्नेयचोदनयैव प्रक्षेपश्चोद्येत यदा यागहोमयोरभेदः । तयोस्तु भेदः शब्दान्तराधिकरणन्यायसिद्धः । तदुक्तं श्रवणाज्जुहोतिरासेचनाधिकः स्यादिति सूत्रकारेणोच्यमानं तत्रैव समर्थयिष्यामहे । यथा देवतोद्देशेन स्वत्वत्यागमात्रं यागो देवतोद्दिष्टस्यज्यमानस्वत्वद्रव्यप्रक्षेपो जुहोतिः । तत्र ये दोषा दर्शपूर्णमासज्योतिष्टोमादिष्वहोमत्वादाहवनीयो न भवेदित्यादयस्तानपि तत्रैव परिहरिष्यामः । उभयोश्च भेदे सति आग्नेयोऽष्टाकपाल इत्यनेन तावद्वाक्येन यावता विना ऽष्टाकपालस्याग्नेयत्वं न भवति तावदेव चोद्यते । तस्य च स्वत्वपरित्यागदेवतोद्देशौ केवलावन्तरेणाग्नेयत्वं न जायते न प्रक्षेपमपि तत्र यदि वाक्यान्तरं न स्यात् तत इदृशं कर्म भवेत् । सुपक्वमविकलमष्टाकपा-

समाचरित: श्रुतौ देशे निधाय देवतामुद्दिश्य नायं ममेति संकल्प: कर्त्तव्य: । तत्परिपालनार्थं च पुन: कदाचिदपि न स्वत्वं द्रव्ये बध्नीयात् । यदि हि बध्नीयात्तत: पूर्वसंकल्पं विनाशयेदनृतं च वदेत् । यो हि प्रथममेव जानाति पुनरप्यहमत्र स्वत्वमाधास्यामीति तस्य न ममैतद्देवतायै त्वेतदिति संकल्प एव न भवेत् । तेन देवतोद्देशत्यागोत्तरकालं यदस्य भवति तद्भवत्वित्यवधार्य न कश्चिद्व्यापारो वोढव्यो भवेत् । तथा प्राप्ते तु वाक्यान्तराणि भवन्ति उपस्तृणाति द्विर्हविषो ऽवद्यति अभिघारयति चतुरवत्तं जुहोतीत्येवमादीनि तैस्तावदिदमवधार्यते व्यवदानं हविषो होतव्यमिति । सर्वाणि चैतानि प्रकृतद्रव्यालम्बित्वात्तदुपादाय प्रवर्त्तन्ते नापूर्वद्रव्यग्राहित्वेन । तथा हि । चतुरवत्तं जुहोतीत्यत्र होमस्याप्राप्तत्वान्न तमुद्दिश्य द्रव्यं विधीयते चतुरवत्तं च पूर्ववाक्यकल्पितं प्रयोजनापेक्षमस्ति । तस्मात्तस्यानेन प्रक्षेपमात्रं शक्यं विधातुमिति न चतुरवत्तविशिष्टहोमविधानमवकल्पते । होमस्यापि च त्र्यंशस्य समाप्तिपर्यन्तत्वात् सर्वान्त्यंशे प्रक्षेपे चोद्यमाने त्यागतद्देवतोद्देशयो: किमपूर्वयोरर्थोपत्त्या विधि: कल्प्यतामुत कुतश्चित्प्राप्तयोरेवाश्रयणं क्रियतामिति । तत्राग्नेय्यधिकरणन्यायेन लाघवे सति गौरवस्याप्रमाणकत्वादवगतत्यागोद्देशांशद्वयान्यष्टाकपालादीन्येव गृह्णन्ति । न च तेषामौत्पत्तिकं यागसाधनत्वं विरुध्यते । प्रक्षिप्यमाणानाममिति याग-

* नामपि तद्यागे इति क. पु. पा ।

साधनत्वाविघातकत्वात् । देवतान्तरसंबन्धेन हि यागविपरीतक्रियासंबन्धेन वा विरोधः स्यात् न त्वस्मावस्ति । तेनैषो ऽर्थो भवति अष्टाकपालेन यत्र क्व चित्प्रदेशे स्थितेन यजेत तदीयं च ह्यवदानं यत्र क्व चित्प्रक्षिपेदिति । तत्र वेद्यां हवींष्यासादयति बर्हिषीतिवचनात्तत्र स्थितेन पुरोडाशेनेज्यते । यदाहवनीये जुहोतीति वचनात्तत्र ह्यवदानं हूयते स तु होमः किं पूर्वस्माद्यागादर्थान्तरमितिकर्तव्यता भवति उत तस्यैव यागस्यांशान्तरविवृद्ध्या रूपान्तरं जातमिति चिन्तनीयम् । तत्रैव रूपान्तरोपजननमिति ब्रूमः । कर्मान्तरत्वे हि द्रव्यान्तरं देवतान्तरं च नारिष्टहोमादिवत्प्राप्नुवन्ति । यथोक्तेन न्यायेन स एव यागः प्रचिततरो जुहोतित्वमापद्यते । न चैतावतौत्पत्तिकयजिरूपविनाश आशङ्क्यो जुहोतेर्यजिविशेषत्वात् । सामान्ये हि कश्चिद्विशेषो न भवत्यपि । न तु निःसामान्यः कश्चिद्विशेष उपपद्यते । ततश्च यथा वृक्षमानयेत्युक्ते शिंशपामित्यविरोधात्पश्चादुच्यमानं न विरुध्यते तथा यजेतेत्युक्ते जुहोतित्वाविरोधो ऽवगन्तव्यः । सो ऽयं याग एव द्व्याकारः समस्तेन पुरोडाशेन क्रियते ह्यवदानेन जुहोत्यवस्थानीतःशेषेण तु सामान्यरूप एकस्मिन्नपि च क्षणे द्व्याकारो ऽपि निष्पद्यते । यदैव हि ह्यवदानमाहवनीये निक्षिप्यते तदैव याज्यानुवाक्याभ्यां समस्तविषयदेवतासंकल्पोत्थापनं क्रियते तेन नैवं भवितव्यं यस्मात्पुरस्थं ह्यवदानमाश्रवणप्रत्याश्रवणाभ्यां त्यागायोद्धृतं च तस्मात्तदेव केवलं देवतायै संकल्पितं नेतरदिति विद्वद्भ्यामध्वर्युयजमानाभ्यां वेदार्थमनुसृत्य समस्तपरि-

त्यागदेवतोद्देशौ यथार्हं कर्त्तव्यौ अध्वर्युणा ह्यवदान-प्रक्षेपो ऽतिरिक्तोनुष्ठेय इति । न चैतावता यागस्य वैरू-प्यमशोभनं मन्तव्यम् । वचनसामर्थ्यादीदृशस्यैव शोभ-नत्वप्रतीतेः । यथा कस्य चित्पुरुषस्यैकः पादः पुरस्ता-द्धृत इति न तावता किं चिद्वैलक्षण्यं भवति । तथा ऽत्र ह्यवदानपादे ऽधिकमपि प्रक्षेपांशं गते सत्युत्पत्तिवाक्य-शिष्टं यागसाधनत्वं समस्तेनाष्टाकपालेन प्रतिपन्नमेवे-त्यविरोधः । तस्माद् द्व्याकारमेवैतत्प्रधानं द्रष्टव्यम् । अथ वा यस्तत्र यागस्तस्य प्राधान्यं यस्तु प्रक्षेपः सो ऽङ्ग-मेव । तथा हि ।

फलवाक्ये यजेरेव संबन्धः श्रूयते स्फुटः ।
तत्संनिधौ समाम्नानाज्जुहोतेरङ्गतेष्यते ॥

यद्यपि तस्मिन्नेव द्रव्ये होमो ऽप्याश्रितस्तथा ऽपि प्रोक्षणादिवदस्याङ्गत्वमविरुद्धम् । न हि समानद्रव्याश्र-यत्वेन सर्वस्य प्राधान्यं भवति । संस्काराणामपि प्रधा-नद्रव्यवर्त्तित्वोपपत्तेः* । संस्काराश्च के चित्प्रथममेव प्रधा-नेभ्यः क्रियन्ते के चिदूर्ध्वं के चिद्युगपत् । तत्र के चि-दाहुः । परस्तात्संस्कारो ऽयं होमो निर्वापवेलायामेव देवतोद्देशत्यागात्मकतया यागस्य निर्वृत्तत्वात् । तद-युक्तम् । न ह्यनदनीयावस्थैर्व्रीहिभिः पुरोडाशसाधनको यजिः शक्यः साधयितुम् । यदि च निर्वापवेलायामेव यागनिर्वृत्तिर्भवेत् तथा सति तदुत्तरकालं नाशदो-षापहारेषु द्रव्यान्तरं नोपादीयेत । तत्र निर्दिष्टाद्ध्यन्य-दागमयेदित्यादि विरुध्यते । भाष्यकारो ऽप्युपाकृते प-

* द्रव्यवर्तित्वेन प्रधानत्वापत्तेः क. पु. पा. ।

शावाह परकीयोऽसौ रच्यते कालेन देवतया संभन्त्स्यते। तेन निर्वापवेलायामेतस्यै दास्यामीत्येतावन्मात्रं संकल्पत्याग: केवल: क्रियते न याग:। स तु पूर्वनिर्वृत्तत्यागापेक्षया यथाश्रुतेतिकर्त्तव्यताकदेवतोद्देशरूप: प्रक्षेपवेलायामेव निर्वर्त्तते। तत्र तस्मिन्नेव क्षणे समस्तेन पुरोडाशेन याग: साध्यते। तस्माधनैकदेशस्य ह्यवदानं यागस्याङ्गेन प्रक्षेपेण संस्क्रियते। तदुपलक्षितत्वादेव यागनिर्वृत्ते: प्राक् प्रक्षेपादनिर्वृत्तयागावगमान्नाशादिष्वन्यद्रव्यागमनम्। सत्यपि होमस्य संस्कारकत्वे नाप्रयोजकत्वम्। निर्वृत्तयागभावित्वात्तु स्विष्टकृदादीनां स्फुटमेवाप्रयोजकत्वं भविष्यति। यदि चैष प्रक्षेप: प्रधानं भवेत्ततो दर्शपूर्णमासादिषु जुहोतिव्यवहार एव स्यात्। विकृतिषु च प्रधानानामनतिदेशाज्जुहोतावसत्यप्रक्षिप्तानामेव सौर्यादीनां दानं स्यात्। अङ्गत्वे तु तेषामप्याहवनीये प्रक्षेप: सेत्स्यति। ये तु जुहोतिचोदनोत्पत्तयस्तेषु पूर्वाङ्गभूतोऽपि यजिरात्मा वा भविष्यति। अथ वा तेषामपि सोऽङ्गम्। तत्र हि त्यागदेवतोद्देशावपि तेनैवाक्षिप्येते यजतिचोदनोत्पत्तिषु पुन: सिद्धयोस्त्यागदेवतोद्देशयोर्जुहोति: प्रवर्त्तमान आहवनीये पूपशकला होतव्या इति वत्प्रक्षेपमात्रवचनो विज्ञायते। ततश्च सिद्धमङ्गत्वम्। एवं सति पुरोडाशो यागे श्रूयते न होमोऽपि ह्यवदानस्य विहितो न समस्तपुरोडाशस्येति तस्मात्तस्य समस्तस्य पुरोडाशस्य देवतां प्रत्युत्सृष्टत्वाद्विना ऽपि प्रक्षेपादस्वत्वव्यवहार उपपद्यते। न च परिसंख्यादोषो भविष्यति निरवदानाच्च शेषसिद्धि:।

अथ वा नैव भिद्येते यागहोमौ परस्परम् ।
पूर्वापरौ हि सदृशौ तद्भागौ नरसिंहवत् ॥

## अप्रयोजकत्वादेकस्मात् क्रियेरन् शेषस्य गुणभूतत्वात् ॥ ४८ ॥

यदाहवनीये प्रक्षेपेण अक्षपितो हविःशेषः प्रतिपादितस्तदा शेषकार्याणि स्विष्टकृदादीनि कथं क्रियन्तामिति विचार्यते । तत्रार्थकर्मत्वं मन्यमान एकस्मादित्याह । सत्यप्यर्थकर्मत्वे यदि तदर्थमेवैतानि द्रव्याणि उत्पन्नानि भवेयुस्ततः सर्वेषां सम्भावनाय पञ्चावदानानामिवैकस्मादपि सिध्यति यागे सर्वेषां संबन्धः क्रियेत तत्तु नास्त्यप्रयोजकत्वात् । अतस्तुषोपवापकपालवदेकेनैव सिद्धिः ।

## संस्कृतत्वाच्च ॥ ४९ ॥

यश्च प्रधानानामेवादृष्टः संस्कारस्स एकद्रव्यनिष्पादितैश्शेषकार्यैस्सिध्यतीति न द्रव्यान्तरमपेक्षते । सकृच्छब्दश्च सकृदवदानाभिप्रायः । इतरथा तु सर्वावदानेऽपि तन्त्रेण प्रयोगात्सकृत्त्वोपपत्तेरवक्तव्यतैव स्यात् । अथ वा ततः शेषकार्याणि सर्वेभ्यः क्रियेरन्यदि संस्कारकाणि भवेयुर्न त्वेतानि संस्कारकाणि । कुतः । संस्कारान्तरैरेव संस्कृतत्वात् । अयमप्यविरोधाद्भविष्यतीति चेत् । तत्राप्येष सूत्रार्थः । संस्कारक्रमस्यातिक्रान्तत्वात् । यावद्ध्यकृतप्रयोजनं द्रव्यं भवति तावत्संस्कारमपेक्षते प्रधाननिर्वृत्त्युत्तरकालं तु कृतं संस्कारैरिति संस्काराणामनवसरः ।

## सर्वेभ्यो वा कारणाविशेषात्संस्कारस्य तदर्थत्वात् ॥ ५० ॥

यैस्तु द्रव्यं चिकीर्ष्यते इत्येवं संस्कारकर्माण्येतानि । तत्र ह्युत्पत्तौ येन संयुक्तमिति प्रतिपत्तयस्ताश्च सर्वैः कृतार्थत्वाविशेषादपेक्षिताः । यद्यपि चैताभिर्द्रव्याणि न प्रयोक्ष्यन्ते तथा ऽपि द्रव्यैरेव तासां प्रयुक्तत्वात्सर्वविषयता निर्वृत्ते ऽपि च प्रधाने तदीयानां सतामेषां का प्रतिपत्तिर्भवत्वित्यपेक्षिते शक्यः प्रतिपत्तिनियमो विधातुम् ।

## लिङ्गदर्शनाच्च ॥ ५१ ॥

सकृत्सकृदिति स्विष्टकृदवदानवीप्सा सर्वेभ्यो ऽवदाने संस्कारपक्षे वा ऽवकल्पते नान्यथा । प्रयोजनसूत्राणि चैतानि । यदि नाम शेषकार्यवशेन पूर्वपक्षे ऽप्यसर्वप्रदानं किं भवति तदा विचारस्य प्रयोजनमिति । तत्र यः पूर्वमस्माभिरभिहितो ऽर्थस्तत्रैव सूत्रं योज्यम् । पूर्वपक्षे हवींषि शेषकार्याणामप्रयोजकानीत्येकस्मात्क्रियेरन् । बलात्त्वपहारः प्रधानेभ्यः सकृत्कृते समस्तः कृत इति संस्कृतत्वान्नान्यतो ऽपि कर्त्तव्यः । सिद्धान्ते तु सर्वहविषां प्रयोजकत्वाविशेषात्सर्वेभ्यो लिङ्गदर्शने च पौर्णमास्यधिकरणवत्प्रयोजने ऽवस्थितसिद्धान्तं द्योतयति ।

## एकस्माच्चेद्याथाकाम्यविशेषात् ॥५२॥

याथाकाम्यमित्यस्यैव बुद्धिसामानाधिकरण्येन स्त्रीविवक्षायां षिद्गौरादिभ्यश्चेति ङीषि कृते हलस्तद्धितस्येति ष्यङ्यकारे लुप्ते याथाकामी भवति ।

## मुख्याद्वा पूर्वकालत्वात् ॥ ५३ ॥

शेषनिमित्तत्वं हि विहितावश्यकर्त्तव्यतानिमित्तं च शेषकार्यं प्रथमस्य तावत्पाठक्रमानुसारात्पूर्वमापतति । न च तदा कश्चिद्विरोध इति क्रियते । तस्मिंश्च कृते निवृत्तव्यापारा चोदना न निमित्तीभवतीति विरोधादकारणम् ।

## भक्ताश्रवणाद्दानशब्दः परिक्रये ॥५४॥

पुरोडाशस्य चतुर्द्धाकरणे इदं ब्रह्मण इत्यादिनिर्देशः श्रूयते । कथं च तत्तद्ब्रह्मादिव्यपदेश्य भवति यदि तेभ्यो दीयते तेन दानं विहितम् । तत्तु किमृत्विजां यथेष्टविनियोगार्थं परिक्रयायाम्नायते अथ भक्ष्यमाणशेषप्रतिपत्त्यर्थमिति । परिक्रयार्थमित्याह । न ह्यत्र यजमानपञ्चमा इडां प्राश्नन्तीतिवत् द्रव्यप्राधान्यं भक्षणं वा श्रूयते तस्माद् द्रव्याणां कर्मशेषत्वात्कर्मयुक्तेभ्यश्च दानादन्तरेणापि परिक्रयश्रुतिं दक्षिणादानवत्परिक्रयार्थमिति ।

## तत्संस्तवाच्च ॥ ५५ ॥

एषा वै दर्शपूर्णमासयोर्दक्षिणेति दक्षिणा ह्यृत्विजामुत्साहकारिणी परिक्रयस्य चैतद्रूपम् ।

## भक्षार्थो वा द्रव्ये समत्वात् ॥५६॥

न चैष विभागः परिक्रयार्थः । कुतः ।

परिक्रयो हि सर्वत्र स्वेन द्रव्येण कल्पते ।
देवतार्थे परित्यक्ते स्वामित्वं न च कस्य चित् ॥

समस्तस्य पुरोडाशस्य देवतोद्देशेन त्यक्तत्वादस्वा. मी यजमान इति ब्रह्मादिभिः समः। तत्र यथैव तेषां दातृत्वं न संभवति तथा यजमानस्यापि। तेन हि प- रिक्रीणानः पुनस्तद् द्रव्यं स्वीकुर्यात्। तत्र पौरस्त्यः संकल्पो विनश्येत्। तस्मात्तावन्न परिक्रयः। कथं खलु भक्षार्थमिति। तदुच्यते।

योग्यता लिङ्गमित्युक्तं तच्चेष्टं विनियोजकम्।
भक्षयोग्यः पुरोडाशः स्वरूपेण च दृश्यते॥

ब्रह्मादिभिर्भोगानामुपकुर्वद्भिर्न कथं चिद् दृष्टमित्युक्तं वदेति द्रव्यक्षपणस्यापेक्षितस्य दृष्टत्वात्। भागैस्तु ब्रह्मा- दीनामुपकारकैरित्यनेनापि सुतरां परिक्रय आपद्यते। न चावश्यं भक्षणेनैव तेषामुपक्रियते गृहानयनादिना ऽप्युपकारोपपत्तेः। सर्वत्र च द्रव्यसंस्कारार्थतां भक्षस्य वक्ष्यति। व्रतादिभिर्निवृत्त्यनभिधानात्। पुरुषसंस्कारा हि व्रतैर्निवर्त्तेरन्। तत एवं वक्तव्यम्। सत्यं भागानां प्रतिपत्तिः तथा ऽपि तु प्रकृतकर्तृनियमस्य प्रयोजना- पेक्षावेलायां दृष्टे सत्यदृष्टदौर्बल्याद्दृष्ट एव कर्तॄणां सा- मर्थ्यरूपः संस्कारः कल्प्यते। कर्तृसंस्कारश्च सर्वान्तरङ्गो भक्षणं नाम। गृहमपि च नीत्वा यावद्भक्षणं न क्रि- यते तावत्तदनुपयोगादनुपकारः। तेनावश्यं सुदूरमपि गत्वा भक्षणे पर्यवसितव्यम्। तत्र प्रथमातिक्रमे कार- णाभावाद्योग्यतावशेन च' व्यादेशद्वारप्रक्रान्तभक्षस- मापनस्यावश्यं कर्त्तव्यत्वात् ब्रह्मादीनामेव भक्षणेनोप- कर्त्तव्यमिति गम्यते। शेषस्यापि च क्षपणापेक्षस्य भक्ष- णाकृतमेव क्षपणं योग्यतया ऽवधार्यते।

व्यादेशाद्दानसंस्तुतिः ॥५७॥

दक्षिणेति प्रासङ्गिकोपकारापेक्षया ब्राह्मण इत्यादिनिर्देशसाहृप्याद्वा भविष्यति । तस्माद्दत्तार्थोऽयमुपदेश इति सिद्धम् ।

इति श्रीभट्टकुमारिलस्वामिविरचिते मीमांसातन्त्रवार्त्तिके तृतीयस्याध्यायस्य चतुर्थस्तरणः समाप्तिमगमत् ।



तन्त्रवार्तिके ।

तृतीयाध्यायस्य पञ्चमः पादः ।

---

श्रीगणेशाय नमः ।

## आज्याच्च सर्वसंयोगात् ॥ १ ॥

सर्वेभ्यो वा कारणाविशेषादित्यस्यातिप्रसक्तस्यापवादः* क्रियते । तमेव तावत्पूर्वं पक्षं कारयति । तथा च सर्वेभ्यो हविर्भ्य इत्यनुवाद उपपद्यते । निःशेषहविर्विषयत्वात् ।

## कारणाच्च ॥ २ ॥

पुराकल्पे च यत्कारणं स्विष्टकृदर्थे ऽवदाने संकीर्तितं तदाज्ये ऽप्यविशिष्टं यद्देवेभ्यो हविरसौ वहति तस्य तेन भागः प्रार्थितः । आज्यमपि चोपांशुयाजदेवताभ्यस्तेनावश्यं वोढव्यम् । अतस्य ततो ऽप्यस्य भागेन भवितव्यम् ।

## एकस्मिन् समवत्तशब्दात् ॥ ३ ॥

एकस्मिन्निति कस्मिंश्चित्कर्मणीत्यर्थः । अथ वा युष्मदभिप्रायेण एकस्मिन्हविषि स्विष्टकृत्यवदीयमाने सति समवत्तशब्दो ऽन्यसहितादवदीयमानवचनो नावक-

---

* 'अतिप्रसक्तस्ये'ति ग. पुस्तके नास्ति ।

स्येत मन्यचे तु चाज्यमपि तत्रावदीयतइत्यवकल्पिष्यते । क्व पुनरिदं श्रूयते तदभिधीयते । चादित्यः प्रायणीयः पयसि चरुरित्येको यागश्चोदितः पुनस्तत्रैवोक्तम् । चाज्यस्यैनं चरुमभिपूर्याज्यभागाः पथ्यादयस्ततस्रो देवता यष्टव्याः ते च द्रव्यसामान्यादुपांशुयाजविकाराश्चत्वारोऽपि यागा आदित्यश्चरुराग्नेयविकारः तत्राग्नये स्विष्टकृते समवद्यतीति श्रूयते । तद्यदि चरोरेकस्यातिदेशेन स्विष्टकृत्प्राप्तस्ततो ऽवद्यतीत्येव स्यात् । यदा तु प्रकृतादाज्यादप्युपांशुयाजद्रव्यात् स्विष्टकृत्तदा ऽत्रापि यष्टव्य इत्युभयोश्चर्वाज्ययोरवदाने समवत्तशब्दः समर्थितो भवति । तस्मादपि मन्त्याज्ये शेषकार्याणीति ।

## आज्ये च दर्शनात्स्विष्टकृदर्थवादस्य ॥ ४ ॥

चवदायावदाय ध्रुवां प्रत्यभिघारयति स्विष्टकृते ऽवदाय न प्रत्यभिघारयतीति ध्रुवात एवावदायेति प्रतिशब्दात् दृष्टार्थत्वाच्चावगम्यते । यदपि स्विष्टकृते ऽवदीयते तदपि ध्रुवात एव येन तदर्थं ऽवत्त ध्रुवायाः प्रत्यभिघारणं प्रतिषिध्यते । न हि ततः परामाहुतिमितिहेतुवचनात्पूर्वाणि प्रत्यभिघारणानि स्विष्टकृदर्थानीति दर्शयति । ततश्च तत्सामान्यादितरेषु तथात्वमिति सर्वैः शेषकार्यैर्भवितव्यम् ।

## अशेषत्वात्तु नैवं स्यात्सर्वादानादशेषता ॥ ५ ॥

सति प्रधानद्रव्यशेषे शेषकार्याणि क्रियन्ते न चोपांशु-

याजहविःशेषो विद्यते सर्वादानात् । कथं सर्वादानमिति चेत् । तदुत्तरसूत्रेणाह ।

## साधारण्यान्न ध्रुवायां स्यात् ॥ ६ ॥

ध्रुवायां तावन्नोपांशुयाजस्य शेषो विद्यते । ध्रौवस्यासंयुक्तोत्पत्तेः सर्वाज्यकार्यार्थमादानात्सर्वस्मै वा एतद् यज्ञाय गृह्यत इति वाक्यात् । तैत्तिरीयाणां तु कतिपयोपस्तरणाभिघारणादिकार्यानुक्रमणात् । तन्मध्ये चोपांशुयाजस्यापि संकीर्त्तनात् तावतां साधारणमुपस्तृणन्नभिघारयन्नाज्यस्य यजन्निति वाक्याद्गम्यते । साधारणेषु च परिषद्दनोपहारगोष्ठीभोजनादिष्वियं स्थितिः । यदेकस्य भागे ऽपयातिते तावन्मात्रमेव तस्य । अवशिष्टं तु तत्समानभाजामवधार्यमाणं न पूर्वशेष इत्येवमकृतार्थत्वेन न प्रतिपत्तिमपेक्षते । यदा तु सर्वैः समानभाग्भिर्यथायोगमुद्धृता भागा भवन्ति तदा तस्य साधारण्यानुगुणैव प्रतिपत्त्यपेक्षा भवति । तदिहोपांशुयाजार्थे भागे ऽपनीते न कश्चिदपि तदीयः शेषो विद्यते शिष्टस्य परस्ताद्याज्युपस्तरणाभिघारणादिगृहीतत्वेनाकृतार्थत्वात् । कृतार्थप्रतिपत्तयश्च शेषकार्याणि न स्वयमेवाकृतप्रयोजनमपि द्रव्यं प्रयुञ्जते । तस्मान्न ध्रुवायां शेषो ऽस्ति । यस्तु समस्तकार्यनिर्वृत्युत्तरकालं साधारणः शेषो भविष्यति तस्य समिष्टयजुराख्यं प्रतिपत्त्यन्तरमाम्नातम् । यदा त्विदमप्युपस्तरणादिवदेवार्थकर्मावधार्यते तदा सुतरां शेषाभावः ।

शक्यं तु तैत्तिरीयवाक्यापेक्षयोत्पन्नावन्यसंयोगात् समि-
ष्टयजुषश्च जुहोतिचोदितत्वेनायक्षत्वात्प्रतिपत्तित्वम-
वधारयितुम् । निःशेषत्वेन चासाववस्थितेति शेषका-
र्यान्तराणि बाधते । तस्मात् ध्रुवायां तावन्नास्ति शेषः ।

## अवत्तत्वात्तु* जुह्वां तस्य च हो-
## मसंयोगात् ॥७॥

तत्रैतत्स्यात् यत्केवलोपांशुयाजार्थं जुह्वामवत्तं तस्यैव
ग्रहचमसेष्विव सोमस्य शेषो भविष्यतीति । तदनुपपन्न-
म् । कुतः । तस्य समस्तस्य चतुरवत्तं जुहोतीति हो-
मसंयोगात् । उक्तं ह्येतदुपधानार्थं चरौ नान्यत्र श्रुतमन्-
न्यत्र विनियोक्तव्यमिति । तस्मान्न जुह्वां शेष उपपद्यते ।

## चमसवदिति चेत् ॥८॥

अथ यदुक्तं चमसवत् सत्यपि होमसंयोगे शेषो भ-
विष्यतीति तत्परिहर्तव्यम् ।

## न चोदनाविरोधाद्धविःप्रकल्प-
## नात्त्व ॥९॥

नैतत्सोमेन तुल्यं तत्र हि ग्रहचमसेषु हविःप्रक-
ल्पनमात्रे कृते यथा न सर्वहोमस्तथा सोमे वचनात्कृत्स्नं
न विद्यत इत्यत्राधिकरणे वक्ष्यामः । तेन चोदनाविरोधं
तत्र वक्ष्यमाणं परिहरतां न सर्वहोमो भविष्यति । शे-

---

* अवत्तत्वाच्चेति क. ग. पु. पा. ।

षकार्यान्यार्थदर्शनं च सोमस्याग्ने वीहीत्यनुवषट्करोती-
त्यादि सर्वतःपरिहारमाश्रितं भक्षयतीत्यादिचमसस-
माख्या च न विरोत्स्यते । अन्यथा तद्विरोधः स्यात् ।
अथ वा न तत्रासमस्तहोमे सति का चिच्चोदना विरु-
ध्यत इत्यविरोधादसर्वहोमः । इह तु विरोधः स्यादयमेव
चाविरोधा हेतुरिति सूत्रगमनिका । यथा तु भाष्यका-
रेण पूर्वं चमसमनुदाहृत्य चमसवदितिचेदिति सूत्रमु-
पन्यस्तं तथा परिचोदनासूत्रमेव होमसंयोगानैकान्ति-
कत्वप्रदर्शनार्थं कल्पयित्वा परिहारो वक्तव्यः । तत्र व-
चनान्तरकृतत्वाच्छेषः स्यादत्र वचनान्तररहितत्वे स-
तीति विशिष्टस्य हेतोरव्यभिचारात् । अथ वा ऽवक्त-
त्वात्तु जुह्वामित्येतदेव तुशब्दस्थाने चशब्दं कृत्वा पूर्वप-
क्षवादिप्रत्यवस्थानं व्याचक्षाणैश्चमसो दृष्टान्तो दातव्यः
परं वा ऽनुभाषणसूत्रं वक्तव्यम् । एतदुक्तं भवति । अ-
वक्तत्वात्तु जुह्वां चमसवच्छेषो ऽस्तु । तस्योत्तरं तस्य च
होमसंयोगादिति गतार्थम् ।

## उत्पन्नाधिकारात्सति सर्ववच-
## नम् ॥ १० ॥

यस्तु सर्वेभ्य इति प्राप्यपेक्षो ऽनुवादस्तत्र यादृशं
वयमिह सर्वत्वं पश्यामः तादृशस्यैवानुवाद इति मन्या-
महे । सर्वत्रैव च परमसर्वेण व्यवहाराभावादधिकृता-
पेक्षः सर्वशब्दो गृह्यत इति न विरोधः । तेन येषां शेषस-
द्भावेन प्रतिपत्तिकार्याधिकारो ऽस्ति ये वा विद्यमान-
त्वेन प्रकृतशेषाः तेभ्यः सर्वेभ्य इति गम्यते ।

## जातिविशेषात्परम् ॥११॥

पूर्ववदेव समवगतेः अनुवादत्वाद्यथासंभवमा* ज्ये ऽपीति चरावबदीयमाने सौक्ष्म्यात्तदवयवस्याचि†कौर्षितमप्यवदानं बलाद्भवति । तदेतत्संसृष्टद्रव्यजातिद्वयमपेक्ष्य संशब्दो ऽनुवादः ।

## अन्त्यमरेकार्थम् ॥ १२ ॥

अन्त्यं मन्तु कारणं स्विष्टकृदर्थो ऽर्थवाद इत्युक्तं तदसमत्यन्ते ऽप्युपपद्यत एवारेकार्थत्वात् । स्विष्टकृते ऽवदायेति तावद्यतस्तस्यावदानं भवति यादृशं वा संभवति तादृशमिति गम्यते । पुरोडाशादिभ्यश्च तस्यावदानं भुवातश्चोपस्तरणाभिघारणे । न चतुर्थ्यन्तेन ध्रौवमेवावदानं संबध्यते । सा हि देवतार्थद्रव्यान्तरावदाने ऽप्युपस्तरणाभिघारणोपयोगित्वात्प्रत्यभिघारणमपेक्षत एव तेन प्राक् स्विष्टकृतः परस्तादपि ध्रौवोपयोगो ऽस्तीत्यवत्ते अवत्ते प्रतिपूरयित्वा ततः परं तु न किं चित्कार्यमिति नार्थः प्रतिपूरणेन । न ह्यन्तःप्रतिपूरणं पूर्वस्यावदानस्य संस्कारकमदृष्टार्थत्वप्रसङ्गात् । अरेकस्तूत्तरकार्यार्थः प्रत्यक्षस्तस्मादन्तरेणापि स्विष्टकृदर्थत्वं तदवधिकारेकार्थत्वेनोपपन्नो ऽर्थवादः ।

## साकंप्रस्थाय्ये स्विष्टकृदिडं च* तद्वत् ॥ १३ ॥

---

* 'यथा सम्भवमर्थो ऽपी'ति क. ग. पु. पा. ।

† तदवयवस्याऽनुस्यूतस्याचिकीर्षितमिति क. पु. पा. ।

* चेति क. ग. पुस्तकयोर्नास्ति ।

अमावास्यायां नित्यं स्विष्टकृदिडं साम्नाय्यादवदीयते तद्गुणविकारस्य साकंप्रस्थाय्यः अत इडाप्यवदातव्यमित्येतावता विशेषेणातुल्याशङ्कायामतिदेशः क्रियते। तद्वदेशशेषत्वान्नैवं स्यात्सर्वदानादशेषतेति। एवं ह्यत्र सर्वदानं होमार्थं प्रसर्पतः सह कुम्भीभिरिति अनवत्तस्यैव दोहस्य कुम्भीभ्यां सहेति विदधदशेषहोमं विदधाति अतो न शक्यं किंचिच्छेषयितुम्।

## सौत्रामण्यां च ग्रहेषु ॥१४॥

तद्वदिति वर्त्तते। सौत्रामण्यां सुराग्रहाः पयोग्रहाश्चाश्विनादय आम्नातास्तेषां पृथक्प्रकल्पनमात्रात्मकत्वात् चमसवत्सर्वहोमप्राप्तिर्नास्तीति विशेषाशङ्कायामतिदेशात्तत्रापि यथागृहीतानां होमार्थेनादानेन संबन्धो यथोपात्तानां च होमेन श्रूयते। यथागृहीतान् ग्रहानृत्विज उपाददते उत्तरेऽग्नौ पयोग्रहान् जुह्वति दक्षिणे सुराग्रहानिति।

## तद्वच्च शेषवचनम् ॥१५॥

अनन्यशेषभूतस्य प्रतिषेधोऽनुवाद उच्छिनष्टि न सर्वं जुहोतीति। उच्छिनष्टीति विधिः तदनुवादस्तु निषेधः अशेषहोमप्राप्त्या शेषकार्यनिवृत्तिं दर्शयति। वाचनिकस्य च शेषस्य प्रतिपत्त्यन्तरमर्थकर्म वाऽन्यदस्तीति ततोऽपीति स्विष्टकृदिडं न कर्त्तव्यमिति।

## द्रव्यैकत्वे कर्मभेदात्प्रतिकर्म क्रियेरन् ॥१६॥

इदानीं सत्सु शेषकार्येषु तद्विशेषाश्चिन्त्यन्ते । तत्र सर्वेष्टकाद्यामन्योन्यनिरपेक्षचतुर्थ्यन्तपरिकल्पितैः षड्भिर्गुणैर्भिन्नद्रव्यदेवतासंयोगैर्देवतान्तरावरुद्धयागे देवतान्तरासंभवात् गुणेन भेदकेन षट् कर्माणि । तेषु केषांचिद्भिन्नान्येव हवींषि अन्येषां पुनरेक एव रथचक्रमात्रः पुरोडाश आम्नातः । स यदाङ्गीक्रियते तदा विचारः किं कर्मभेदाच्छेषकार्याणां भेद उत द्रव्यैकत्वात्तन्त्रमिति । ननु चैकादशविचारोऽयं तत्र निर्णेष्यते । एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वमित्यत्रात इह न विचारणीयम् । उच्यते ।

प्रतिपाद्यमिदं द्रव्यं भेदेन सहते क्रियाम् ।

खण्डशस्य प्रधानानामङ्गत्वान्नास्ति तन्त्रता ॥

यद्यप्ययमेकादशानुगुणो विचारस्तथाऽप्यत्र शेषकार्यप्रसङ्गात् शेषशेषिविचारात्मकत्वाच्च क्रियते । तत्र चैकद्रव्यत्वात्तन्त्रत्वं सिध्यति यत्र द्रव्यं तदवस्थितमेव सर्वकर्मणामुपकरोति । भेदकरणे च प्रयोजनान्तरं न दृश्यते न च कर्त्तुं शक्यते । खण्डशस्त्वस्य प्रधानोपयोगित्वं तदुपकारद्वारस्य संस्कारः प्रधानभेदाद्भेदं प्रतिपद्यमानो न द्रव्यैकत्वात्तन्त्रीकर्त्तुं शक्यते । भवति चैकदेशे प्रतिपादितेऽप्येकदेशान्तरप्रतिपादनम् । अवदानदेशानां भिन्नत्वादुत्तरार्द्धदक्षिणदेशभेदोऽप्यस्तीत्यावर्त्तनीयं स्विष्टकृदिडं गम्यते ।

## अविभागात्तु शेषस्य सर्वान् प्रत्यविशिष्टत्वात् ॥ १७ ॥

सक्नत्करणम्। कुतः।

न ह्येषं कर्मसंस्कारो हूयमानस्य वेष्यते।
हुतशेषसमानत्वात्सन्नत्वं तु प्रतीयते॥

कर्मसंस्कारपक्षे हूयमानसंस्कारपक्षे वा तद्भेदाद्भेदो भवेत्। शेषसंस्कारस्त्वयं स च शेषः साधारणस्तस्य च दक्षिणोत्तरार्द्धे गृह्येते। न प्रधानावदानदेशस्तस्य प्रक्कतावचोदितत्वात्तस्य शक्यमग्रहणमाणविशेषत्वं व-क्तम्। यद्यपि ह्यप्रधानोद्देशेनोत्तरार्द्धं गृह्णीयुः तथा ऽपि तथा चोदितार्थसंपत्त्या प्रधानान्तराण्यपि क्कता-र्थानि भवेयुः। तस्मात्तन्त्रम्। यत्तु प्रतिपाद्यं विभव-तीति प्रतिपत्त्यन्तरे चतुर्द्धाकरणे तदुपयुज्यते।

# ऐन्द्रवायवे तु वचनात्प्रतिकर्म भक्षः स्यात् ॥१८॥

सोमे वचनाद्भक्षो न विद्यतइति सामान्येन भक्ष-विचारं कृत्वा विशेषविचारो ऽयं कर्त्तव्य आसीत्। यत्तु प्रथमतरं क्रियते तत्पूर्वाधिकरणापवादत्वेन शीघ्रतरो-पस्थानात्। पूर्ववद्धि द्रव्यैकत्वात्सक्तद्भक्षिते कृतः शास्त्रार्थ इति न्यायात् प्राप्ते वचनाद् द्विर्भक्षणं द्विरैन्द्रवायवस्य भक्षयतीति। भवन्ति चेदृशान्यप्यधिकरणानि येषां न्यायेन पूर्वपक्षं कृत्वा वचनेन सिद्धान्तो भवति। न त्वे-तद्युक्तम्। संदेहाभावात्तत्र वै तत् क्रियते यत्र न्यायेन प्रतिपादितो वचनाद् बाधितः तदभावात्समानन्याये-षूपकरिष्यति। स चेह न्यायः पूर्वाधिकरणेनैव प्रदर्शित इति मन्दफलो विचारः। तस्मान्नैवं वर्णनीयं किं तर्हि

सर्वपृष्ठायामेव प्रतिकर्म स्विष्टकृदिडं कर्त्तव्यं प्रधानभे-दात् । तथा हि । सिद्धवत्प्रधानभेदमैन्द्रवायवसंस्कार-हेतुमाह द्विरैन्द्रवायवस्य भक्षयति द्विर्ह्येतस्य वषट्करो-तीति तस्माद्यावद्वषट्कारं शेषसंस्कार इत्युक्तोत्तरे दत्ते दृष्टान्तमनुभाष्य सूत्रेण परिहारो वक्तव्यः ऐन्द्रवा-यवे तु सकृद्भक्षणे प्राप्ते वचनाद् द्विर्भक्षो न प्रधानभेद-निमित्तो हेत्वधिकरणे हेतोर्निराकृतत्वात् । एवं च सति पूर्वाधिकरणशेषेणैव सता सोमभक्षसामान्यविचारस्मा-रणान्न क्रमकोपो भविष्यतीति ।

## सोमेऽवचनाद्भक्षो न विद्यते॥१६॥

ऐन्द्रवायवे तावद्विशिष्टविधानादपि भक्षो भवेत् अथेतरग्रहगते चमसस्थे च सोमे संदेहः । किं भक्षोऽस्ति नेति तत्रापि सर्वतः परिहारमाश्रित्य भक्षयतीत्यादिषु ऐन्द्रवायवन्याय एव स्यात् । इदं तु सर्वथा तत्रापि वि-चार्यते किं प्राप्ते भक्षे विशेषणमात्रं वचनेन विधीयते उत विशिष्टविधानमेतदिति । कश्चात्र विशेषः स यदि वाचनिकस्ततो यावद्वचनमेव कर्त्तव्योऽथ त्वन्यतः कु-तश्चित्तत एकदेशस्थमपि लिङ्गं स्थालीपुलाकन्यायेन स-मस्तद्योतकं भविष्यति । त्रयश्चेह पक्षाः संभवन्ति कि-मन्यार्थदर्शनानां प्राप्त्यपेक्षत्वादविधानाच्च नैव भक्षः उत प्राप्त्यभावादन्यार्थदर्शनान्येव वचनीकृत्य यावद्वचनं भक्ष उत समाख्यावषट्कारहोमाभिषवनिमित्तोऽपि भक्ष इति । किं प्राप्तम् आज्यसांकंप्रस्थाय्यसौत्रामणीग्रहणवत् समस्तहोमसंयोगाच्छेष एव नास्ति कुतः पुनर्भक्ष इति ।

न चात्र प्रकृतितः प्राप्तिर्न च प्रत्यक्षोपदेशो यो ऽप्युपदेश इव सो ऽप्यन्यपरत्वादसमर्थः । तस्मान्नास्ति भक्ष इति ।

## स्याद्वा ऽन्यार्थदर्शनात् ॥२०॥

## वचनानि त्वपूर्वत्वात्तस्माद्यथोपदेशं स्युः ॥२१॥

यद्यन्यार्थदर्शनानि भवेयुस्ततो ऽन्यत्रापि प्राप्तिः स्याद्वचनानि त्वेतानि तस्माद्यथोपदेशं भक्षो ऽयं नान्यत्रेति ।

## चमसेषु समाख्यानात्संयोगस्य तन्निमित्तत्वात् ॥२२॥

गृह्णीम एतद्यथोपदेशमिति स तु समाख्यादिभेदभिन्न उपदेशो ऽनुसर्त्तव्यः न तु श्रुतविशेषमात्रनिष्ठः । तत्र चमसेषु तावत् यद्यपि ब्राह्मणगतः प्रत्यक्षोपदेशो नोपलभ्यते तथा ऽपि प्रैषगतया समाख्यया ऽनुमीयते होतृचमसत्वादिविशिष्टं हि द्रव्यनयनप्रेषणं न कथंचिदुपपद्यते यदि तेषु होत्रादयः सोमं न चमन्ति । कथम् । चमस इति अदनार्थस्य चमेरौणादिके ऽधिकरणसाधने असच्प्रत्यये कृते प्रैषवेलायां भूतभविष्यद्वर्त्तमानानां च चिरसंबन्धे ऽपेक्ष्यमाणे भूतवर्त्तमानयोरदर्शनाद्भविष्यत्त्वमनुमीयते । न ह्यन्यथा होतुश्चमसः प्रेतिवत्येतस्यानुष्ठानं शक्यते । तस्माच्चमितव्यं होत्रादिभिः । सोमस्येषवन्तश्चमसाः प्रेषिता इति तस्यैवापेक्षितप्र-

तिपत्तिविशेषस्य प्रत्यासत्तेर्भक्ष्यत्वं गम्यते । सशेषश्च-मसो हूयते यस्यं जुहोतीति वचनात् । न चान्यदोदनादिद्रव्यं प्रतीयते यस्य चमनाच्चमसत्वमुपपद्यते । न च तच्चमनस्य कर्माङ्गभावः स्यात् । तत्र प्रकरणं बाध्येत । प्रैषो ऽपि चोत्कृष्येत सोमचमस-समाख्या च बाध्येत यदि चौदनादि भक्षयेत तत उच्छिष्टेन पात्रेण पुनर्होमो न क्रियेत । शुद्धार्थं तत्र लक्षणाद्याश्रयणे यस्य होतृचमसत्वाद्यवधारितं तस्य विनाशात् द्रव्यान्तरं तत्समाख्यं न भवतीति समाख्यातद्वयसाधनकर्मविधानबाधः स्यात् । एतेन चमसान्तरोपादानं प्रत्युक्तम् । तदुत्पादने च श्रुतचमस-संख्यातिक्रमः स्यात् । न च वचनसामर्थ्यादुच्छिष्टेन होतुं शक्यम् । वचनस्यान्तरेणाप्याचारभङ्गं सोमभक्षे सावकाशत्वात् । सोमभक्षे ऽपि सर्वमेतत्तुल्यमिति चेन्नैतदेवं न सोमेनोच्छिष्टा भवन्तीति श्रुतेः । तस्माच्चमसिभिर्भक्षयितव्यः सोम इति । भाष्यमप्यनेनैव क्रमेण नेतव्यं न यथालिखितम् । उपपत्त्यन्तराणामुपपत्त्यन्तरव्यवधानेन क्लिष्टत्वात् । तस्माच्चाब्राह्मणस्य सोमभक्षणं प्रतिषेधति । यदि च प्रयजमानस्येति समाख्यया न सोमभक्षः प्राप्यते ततः फलचमसविधौ स यदि सोमं बिभक्षयिषेदिति न सोममिति च प्रतिषेधनसंकीर्त्तनं नावकल्पेत तस्मादस्ति चमसिनां सोमभक्ष इति ।

## उद्गातृचमसमेकः श्रुतिसंयोगात् ॥ २३ ॥

मर्थेनाम्नायन्ते अथ सवनीयार्थेनैव अथ सवनीयाग्नी-षोमीयार्थेन अथ केवलाग्नीषोमीयार्थेनैवेति । किं प्राप्तम् । तत्र स्थानाच्च पूर्वस्येत्येवमादिसूत्रसंगत्यर्थमसूत्रं तावत्पूर्वपक्षं करोति सर्वार्था इति । यदि त्वयमेव पक्षः सूत्रेण परिगृह्येत तत उत्तरसूत्राण्यसंगतान्येव भवेयुः । यदा पूर्वसूत्रेणैव सर्वार्थत्वं प्रतिज्ञायते तदा किमनेन स्थानाच्च पूर्वस्येति । प्रकरणविभागादेव हि पूर्वस्यापि सिद्धिः । श्वस्त्वेकेषामित्यपि प्रकरणाभावकथनेनाप्रतिज्ञातकेवलसवनीयार्थता व्यावर्त्यमाना कथं संबध्येत । एवं तदनुसारित्वादुत्तरसूत्राणामप्यसंगतिः । अथ वा सौत्रएव पूर्वपक्षे केवलसवनीयार्थत्वमसूत्रितं द्वितीयं पक्षं कृत्वा श्वस्त्वेकेषामित्यादि संबन्धनीयम् । तत्तु भाष्यकारेण नाश्रितं सर्वाद्यः पक्षः सुखमसूत्रः क्रियते सौत्रपक्षान्तराले तु तत्संगत्यर्थमसूत्रपक्षाश्रयणं सूत्रकारस्य शून्यहृदयतामापादयति । तस्मादाद्य एव सूत्रोक्तः पक्षः । तस्योपपत्तिः पशुधर्मा हि ज्योतिष्टोमप्रकरणे केनचिदपि पशुविशेषेणासंयुक्ताः श्रूयन्ते । कथम् ।

> एतद्देशे ह्यनुष्ठानं वाक्याद्देशस्य यद्यपि ।
> तथाऽप्युत्पत्तिदेशेऽस्य प्रक्रिया क्रयसन्निधौ ॥

दीक्षासु हि सोमक्रयसमीपे अग्नीषोमीयः समाम्नायते । तस्य च यद्यपि वचनसामर्थ्यात्पशुधर्मसमीपे अनुष्ठानं भविष्यति तथाऽपि प्रकरणेन नैव व्याप्तं सर्वकरणानामुत्पत्तिदेशानतिरेकात् । सवनीयानामपि सुत्याकालमुत्पत्तिवाक्यमौपवसथ्ये तु गुणार्थैव श्रुतिः । न च तत्रा प्रकरणं भवति । अनुबन्ध्यास्तु दूरस्थैव सोमान्ते क्रियमाणत्वात् तस्मादवान्तरप्रकरण-

वाक्यसंयोगाभ्यामप्रतिबद्धेन ज्योतिष्टोमप्रकरणेनाग्नीषो-
मीयस्य स्थानं विप्रकृष्टार्थं बाधित्वा ज्योतिष्टोमार्थास्ता-
वदेते इत्येतत्कल्प्यते। तस्य च सोमद्रव्यकत्वान्न पशु-
धर्मैः किं चित्प्रयोजनमित्यानर्थक्यात्तदङ्गेष्वित्येवम-
ङ्गेष्ववावतरन्तो ऽऽङ्गत्वाविशेषात्त्रिष्वप्यवतरन्ति। सत्यपि
तदङ्गत्वे योग्यत्वाभावान्न दीक्षणीयादिष्ववतरणम्।
सत्यपि च योग्यत्वे सामान्यसंबन्धाभावान्न तदङ्गपशू-
नाम्। तस्मात्त्रयाणां समानं विधानमिति प्राप्ते ऽभि-
धीयते। स्यादेतदेवं यदि ज्योतिष्टोमद्वारेण प्रकरणावि-
शेषः स्यात्। अस्ति तु विशेषः सवनीयानामौपवसथ्ये
ऽहन्युत्पन्नत्वादग्नेयमजमग्निष्टोम आलभेत ऐन्द्राग्नमुक्थ्ये
द्वितीयमित्यादिना हि पशुधर्मसमीपे सवनीया उत्पा-
दिताः। तस्मात्केवलसवनीयार्था एवेति।

## स्थानाच्च पूर्वस्य ॥ १९ ॥

कथं पुनरिदं श्रुतिलिङ्गाधिकरणविपरीतमभि-
धीयते। न हि तत्रैवमिष्टं प्रकरणाद्विदेवनादयो रा-
जसूयार्थाः स्थानाच्चाभिषेचनीयार्था इति। तथा श्रुत्यै-
न्द्री गार्हपत्यार्था लिङ्गेनेन्द्रार्थेति। युक्तं तत्र प्रकरणा-
ख्येन बलीयसा प्रमाणेन निराकाङ्क्षीकृते जघन्यप्र-
माणानुत्थानात्समुच्चयानाश्रयणम्। न हि तत्र पुनः
कल्पनया विना शेषस्य न किं चित्सिद्ध्यति नापि शे-
षिणामिन्द्राग्न्यादीनामुपायान्तरेणापि स्मृतिसिद्धेः। इ-
ह पुनः सत्यपि सवनीयसंबन्धादमीषां नैराकाङ्क्ष्या-
ऽग्नीषोमीयस्य पशुधर्मैर्विना सिद्ध्यभावात्प्रत्यन्तरमवश्यं
कल्पनीयमुभयोरविप्रतिपत्तेः। न चैतस्य तदा दर्शपू-

र्णमासप्रकृतित्वं भवेत् । यो हि प्रकृतिभूतः पशूनां स
दर्शपूर्णमासविकारो भवति इतरे तु प्राणिद्रव्यकत्वसा-
मान्यात्तद्विकारास्तत्र किं सवनीयार्थात्ततः सारूप्यद्वा-
रप्रभवेनातिदेशेनाग्नीषोमीयो गृह्णात्यथोपदेशगन्धेन
केन चिदित्युपदेशान्तर्गतत्वात्क्रमेण विनियोगो युक्तः
षड्विधोपदेशप्रत्यस्तमये ह्यतिदेशः कल्प्यते । तस्माद्यथै-
वान्यत्रोपदेशातिदेशाभ्यां प्रकृतिविकृत्यर्थत्वं यागगतस्य
व्यापारस्य तथैवेह स्थानप्रकरणाभ्यामुभयार्थत्वमनू-
बन्ध्यायास्तु सर्वोपदेशाभावादतिदेशेनैव प्राप्तिर्भविष्यति ।
तस्मादनुपालम्भः सूत्रस्य ।

## श्वस्त्वेकेषां तत्र प्राक् श्रुति-
## र्गुणार्था ॥ २० ॥

यदुक्तं स्थानादग्नीषोमीयार्थो इत्येतद् गृह्णीमः ।
यत्तु प्रकरणात्सवनीयार्थो इत्येतन्न मृष्यामहे कुतः ।

गुणार्थोपवसथ्ये ऽह्नि सवनीयपुनःश्रुतिः ।
उत्पत्तिः प्रक्रिया चैषामाश्विनग्रहणोत्तरा ॥

आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं
सवनीयं पशुमुपाकरोतीति हि सवनीयानामुत्पत्तिः ।
श्व इति चौपवसथ्ये ऽहनि स्थितः सुत्यां ब्रवीति कः पु-
नर्गुण इति स्ववाक्ये संयोगाभावात्पृच्छति । तद्दर्शयति ।
सर्वान्सवनीयाननुक्रम्य निन्दा श्रूयते । यथा वै मत्स्य
इति । यथा वै किल मत्स्यो जले विचरन्न-
नवधारितगतिः प्रेक्षकजनमवधूनुते किमितो गतः
किमसुत इति एवमेवैते पशवः क्रियन्तामित्ये-

वमप्रज्ञायमानाः कर्तृजनमवधुन्वते तेन पशुकी-र्त्तनं तावदेवमर्थं न विधानार्थमिति गम्यते। सा ऽपि निन्दा परतः प्रश्नशेषत्वेन नीता। तदेभिः पशुभिः सवनीयसमाख्यातैः कथं सवनानि पशुमन्ति कर्त्तव्या-नीति सो ऽपि प्रतिप्रश्नरूपविध्यन्तरशेषत्वं प्रतिपद्यते वपया प्रातःसवने चरन्तीति। तस्मात्तद्गुणार्थेयं पुनः श्रुतिर्न्न च सा प्रकरणबुद्धिं करोतीति। किं पुनस्तच्छ्रु आ-म्नानमिति आश्विनग्रहणानन्तर्य्यगुणार्थत्वात्तदपि नोत्प-त्तिसमर्थमिति मन्यते। भाष्यकारेण केवलस्याग्नेयस्य ग्रहणाम्नानं दर्शितं नेतरेषां तत्र केचिदाहुः। प्रदर्श-नार्थत्वादस्याग्नेयग्रहणमविवक्षितत्वात्सर्वार्थमिति मन्य-मानेनेति। वाक्यान्तराण्येवंरूपाणि द्रष्टव्यानीत्यपरे। स-र्वथा तु केवलाग्नेयप्रदर्शनमेवोपयुज्यते। यद्यपि चैन्द्रा-ग्नादीनामौपवसथ्य एवोत्पत्तिस्तथा ऽपि तेषामनित्यो-त्तरसंस्थार्थत्वान्नैव शक्तिर्न्नित्यवदाम्नातान्पशुधर्म्मान् ग्र-हीतुमित्यग्नीषोमीयस्थानमेव बलीयः स्यात्। यस्तु नि-त्यत्वेन ग्रहणमसमर्थस्तस्य प्रकरणाभाव उक्त एव। त-स्मान्न सवनीयार्थो इति।

## तेनोत्कृष्टस्य कालविधिरिति चेत् ॥२१॥

इदानीं कतरत्सवनीयानामुत्पत्तिवाक्यमित्येत-त्परिज्ञानाधीना ऽधिकरणसिद्धिः। तत्र पूर्वपक्षवादी प्राहेति चेत्सवनीयप्रकरणाभावं मन्यसे तदयुक्तम्। कुतः

सवनीयान्पुरोत्पाद्य वपामुत्कृष्य वाक्यतः।
तत्राप्यनियमे प्राप्ते तद्विशेषो विधीयते॥

वपया प्रातःसवने प्रचरन्तीति अनेनैव वचनेनोत्कृष्टे प्रधाने प्रधानदेशत्वादङ्गानामुपाकरणादिष्वप्युत्कृष्टेषु कालानियमे प्राप्ते सत्याश्विनग्रहणानन्तर्य्यं विधीयते । तेन तदेव गुणार्थं श्रवणमितरथा हि वाक्यं भिद्येत । परिव्याणोपाकरणयोः कालविधानाद्द्रव्यदेवतायुक्तस्य च यागस्य विधिः । ननु चातिदेशप्राप्तमेव परिव्याणं तस्मिन्नेव काले यागे विधीयमाने ऽनूद्येत । सत्यमतिदेशेन प्राप्तं न तु तदिदानीं क्रियते यूपसाधारण्येन तत्कालास्त्वित्ययेऽग्नीषोमीयकालकृतादेवोपकारसिद्धेः । एवं तर्हि साधारण्यादेव प्राप्तं विद्यमानमनूद्येत न शक्यं तदनुवदितुमप्रत्यभिज्ञानात् । तत्सामान्यतः प्राप्तमनूद्यते यत्ताद्रूप्येण प्राप्तं प्रत्यभिज्ञायते । न च पूर्वेद्युः कृतस्याश्विनग्रहणोत्तरकालं वर्त्तमानत्वेनानुवादो भवति । नहि तदा ऽसौ परिव्ययति । न च पूर्वकृतस्य पर्यग्निकृतादिशब्दवदोद्देशेन शब्देनानुवादः पूर्वोत्तरकालकर्मावधिद्वयपरिच्छिन्नत्वात् । एवं तर्ह्यस्माद्वाक्यात्प्राप्तमनूद्यतां स आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययतीति । तदपि नास्ति प्रत्यभिज्ञानाभावादेव । यदेतदप्राकृतं सवनीयपरिव्याणमेतस्य गुणस्य श्रवणाद्रशनायाश्च प्राकृतपरिव्याणनिबन्धनत्वाद्येन केन चिद्वासःप्रभृतिना करणे सति त्रिवृत्त्वानुवादो न प्राप्नोति तत्रानेकार्थविधानाद्वाक्यभेदः । तदा चैवं भाष्यग्रन्थः । इतरथा हि परिव्याणस्य किंचिद्विधीयेत यत्सम्बन्धित्वेनोपात्तं त्रिवृद् द्रव्यं कालो विधीयतोपाकरणस्य चेत्युपाकरणकालो द्रव्यदेवताविशिष्टं च कर्म्म विधीयेतेत्यर्थः। तस्मादस्य गुणार्थत्वादस्ति पूर्वेद्युः सवनीयानां प्रकरणमिति ।

# नैकदेशत्वात् ॥२२॥

यदा हि पूर्वेद्युः साङ्गानां सवनीयानामाम्नानं तदा तत्रैव सर्वानुष्ठाने प्राप्ते वचनाद्वपाप्रचारादिमात्रमुत्कृष्येत नोपाकरणादीनि तदादि वा ऽभिसंबन्धादिति । ये वपाद्यामात्तरकालाः पदार्थास्तत्सन्निपातिनो वा तस्मात्तस्योत्कर्षो भवेन्न प्राग्भाविनामुपाकरणादीनां यानि चाज्ञातकालान्यङ्गानि तेषां प्रधानकालत्वं वक्ष्यते । पशवङ्गानि त्ववधारितपूर्वेद्युःकालत्वान्न प्रधानकालं गच्छति । तस्माद्वपाप्रचारेणानुत्कृष्टस्यानेनैव वाक्येनोत्कर्षः कर्त्तव्यस्तत्र गुणवाक्ये सति अनेकार्थविधानाद्वाक्यं भिद्येत । उत्पत्तिवाक्ये न दोषः तस्मादेतदुत्पत्त्यर्थमिति । न त्विह भाष्यकारेण विधेयानेकार्थत्वं दर्शितम् । एवमेव तु गुणार्थएतस्मिन्वाक्यं भिद्येतत्यभिहितम् । शक्यस्त्विह पूर्वेद्युः प्राप्तोपाकरणोत्कर्षमात्रविधानाद्वाक्यभेदः परिहर्त्तुम् । तत्र केचिदेवं समर्थयन्ते यथा किलाग्नेय्या ऽऽग्नीध्रमिति ज्योतिष्टोमसंबन्धे तद्विशेषे च विधीयमाने ऽनेकार्थत्वमुक्तमेवमिह वपाप्रचारेणानुत्कृष्टस्योपाकरणस्योत्कर्षस्य कर्त्तव्यः तद्विशेषश्चेत्यनेकार्थत्वमिति । न त्विदमाग्नेयीवाक्यसदृशम् । तत्र हि संबन्धविशेषपरे विधौ सामान्यसंबन्धप्राप्तिमन्यतो ऽपेक्षमाणे कासुचिदाग्नेयीषु तत्सद्भावादितरविषयसामान्यसंबन्धं प्रत्यन्यथाऽनुपपत्तिः चोद्यते । अतस्तु वेदेनानभ्युपेतं तद्विधिं कल्पयतो वाक्यभेदो भवति न त्विह तादृक् प्रतिपत्तो ऽस्ति । यतः सामान्येनोत्कर्षप्राप्तिं दृष्ट्वा विशेषपरस्यार्थापत्तिकोपः कल्प्येत । तत्रापि चैत-

दर्थापत्तिवाधिनी प्रतिपक्षभूता सामान्यप्राप्तिर्नाभवि-ष्यन्नाऽनयोर्मात्वप्रमाणं निराकरिष्यत । प्राप्ते ऽपि कर्म्म-ण्येकपदोपात्तानेकार्थविधिः शोणाद्युदाहरणैस्तत्र तत्र प्रतिपादितः । तेन यद्यपि आश्विनं ग्रहं गृह्णीतेत्यनेन द्व-यमपि प्रातःसवनमाश्विनग्रहोत्तरकालत्वं च विधीयेत तथा ऽपि विधायकस्यैकपदानुसारात्तस्य तस्योपदिश्येते-त्येतदापत्तिर्नास्ति किमुतानैकविधाने ऽर्थाद्वेतरसिद्धेः । अत एव भाष्यकारेणानेकविधिदूषणे ऽभिहितं न चानेको ऽर्थः परस्परासंबन्धे सति शक्यो विधातुमिति । जानाति ह्यसौ यथा संबद्धानामर्थानामेकस्मिन्विहिते ऽन्ये विनैवा-यासेन प्राप्नुवन्ति । तेन यत्रैकस्मिन्विहिते ऽर्थादर्थसम्ब-न्धमपरमापद्यते न कश्चिद्विरोधो विधेरायासो वा दृ-श्यते इत्याशीयते । तस्य त्वन्यथा ऽप्युपपद्यमानत्वमेवैको निराकरणोपायः । न चेहास्ति स पक्षो यत्रैष विधिः सुत्याप्रातःसवनसंबन्धावकृत्वा आश्विनग्रहणानन्तर्य्यं विदध्यात्तस्माददोषः । नचैव त्वेष दोषः यस्यानेकद्रव्य-देवताविशिष्टकर्म्मविधानम् । अपि च ज्योतिष्टोमसुत्या-प्रातःसवनविशेषकालसंयोगो ऽपरः कल्पनीयः । सर्वेषु चोत्कर्षापकर्षेषु सामान्यविशेषरूपो ऽनेकविधिदोषो-ऽस्तीति प्राप्तकर्म्मगुणविध्यसंभवात्कर्म्मान्तरविधित्वप्रस-ङ्गः । तद्यथा माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यत इत्यवा-भिषेचनीयस्य माध्यन्दिनसवनमाहेन्द्रस्तोत्रकालविधेर-नेकार्थत्वमेवं तिष्ठन्तं पशुं प्रति प्रयजन्तीत्यादिष्वपि यो-जनीयम् । अपि चैकस्मिन्पदार्थे ऽनुष्ठीयमाने विधी-यमाने चार्थोऽन्तरं द्वेधा ऽऽपद्यते । किं चित्प्रयत्नान्तर-साध्यं किं चित्तदनुनिष्पाद्यम् । यथा भक्षविधौ ग्रहणा-

दयः दृष्टिश्च। तत्र यत्प्रयत्नान्तरसाध्यं न च तस्मिन्न-कृते विहितकरणं शक्यमित्यवधार्य्यते तत्रार्थापत्तिलभ्यं विधिशक्त्यन्तरं कल्प्यते। या च यावती च शास्त्रीया सा ऽवगतिर्भवति। यत्त्वनुनिष्पादि बह्वपि पुरुषस्य शास्त्रस्य च व्यापारन्तरमन्तरेणैव सिध्यति न तेन कश्चिदायासो भवति। न चेहाश्विनग्रहणानन्तर्य्ये विधीयमाने ऽनुष्ठीयमाने वा सुत्याप्रातःसवनादिसंबन्धे भेदेन व्यापरितव्यम्। तेन नात्र कश्चिदुत्कर्षसामान्यं विद्यते। श्रुतमात्राश्विनग्रहणानन्तर्य्यमात्रे विहिते यदि तदन्तर्गतत्वात्सुत्याप्रातःसवनाहर्भागविशेषमुहूर्त्तनाडिकाक्षणलवनिमेषकालत्वद्रव्यसत्त्वादयः प्रसज्यन्ते किं क्रियताम्। अपि च शिंशपामानयेत्यत्रापि वृक्षत्वद्रव्यत्वसत्ताद्याक्षेपाद्वाक्यभेदः स्यात्। अतः पूर्वेद्युः प्राप्तस्योपाकरणस्य कालान्तरमात्रमाश्विनग्रहणानन्तर्य्यं विधीयतइत्यदोषः। अन्ये तु ह्यः परिव्याणोपाकरणयोरुत्कर्षाद्वाक्यभेदं समर्थयन्ते। तदपि तु सुपरिहरं केवलपरिव्याणोत्कर्षादेव तदादि वा ऽभिसंबन्धादित्येवमुपाकरणोत्कर्षसिद्धेः। तचैतत्स्योत्प्रकृतिप्राप्तो धर्म्म उत्कृष्यमाणस्तदाद्युत्कर्षं करोति नापूर्व इति। तदयुक्तं कृतदेशात्तु पूर्वेषामित्यत्राप्राकृतानामपि विदेवनादीनामपकर्षवर्णनेन तथा ऽपूर्वमित्यस्य विशिष्टविषयत्वव्याख्यानात्। अथ वा स आश्विनं ग्रहमित्येतद्वाक्यप्राप्तपरिव्याणान्तरानुवादादवाक्यभेद इति। अथोच्येताविशेषितसाधनकत्वात्तत्र चिरस्थानुवादो न संभवतीति तदयुक्तम्। एवं हि सिद्धान्तवाद्यपि पूर्वपक्षवादिना चोदितः स्वयं परिहारं वक्ष्यति सो ऽस्यापि भविष्य-

तीति । ननु च तस्यापूर्वकर्म्मविधानादनेकार्थविधिरुपपद्यते नास्येति नैष विशेषो यत्र ह्येकक्रियाविशेषणमनेकमुपादीयते तत्र तद्द्वारेण तद्विधिः सुलभ इति विशिष्टविधानन्यायो यत्र पुनः स्वविशेषणाविशिष्टा क्रिया विधीयते वाक्यान्तरप्राप्तस्य क्रियान्तरस्य विशेषणं तत्रावश्यावर्त्तनीयो विधिप्रत्ययो देवतादिविशिष्टो हि यागो विधीयमानः स्वविशेषणमेवाचेप्तुं समर्थो नाविधीयमानपरिव्याणविशेषणम् । तेनापूर्वकर्मविधिष्वप्येतद्विवेक्तव्यम् । कतरत्तद्विशेषणं कतरदन्यविशेषणमिति । तस्मादयमुभयपक्षभात्क्वान्नैकस्य चोदयितव्यः । तत्रावश्यं सिद्धान्तवादिनोभयोः परिव्याणयोः साधारणो रशनेति परिहारो वक्तव्यः । वक्ष्यति हि रशना च लिङ्गदर्शनादिति । यद्यदेतस्य यूपस्य परिव्याणं तस्य तस्यैषा वाक्येन विज्ञायते । तथा प्राप्तानुवादान्न वाक्यभेदः । अथ वा यत्त्रिवृता यूपं परिवीयोपाकरोतीति पूर्ववद्युः प्राप्तमुपाकरणस्य परिव्याणानन्तर्य्यमनूद्याप्रिवनग्रहणानन्तर्य्यं विधीयते । वरं च वाक्यभेदाद्यवहितकल्पनाश्रयणम् । तस्मादेवं वर्ण्यते अवश्यं तावत्सवनीयानामेकेनोत्पत्तिरिकेन च गुणो विधातव्यः । तत्र पूर्वेद्युस्तनस्य तावन्न कश्चिदुत्पत्तिवाक्ये हेतुरस्ति । नन्वितरस्यापि नास्ति यद्यप्येवं तथाऽपि विकल्पसमुच्चयासंभवात्केन चिद्विशेषेणान्यतरस्मिन्नाश्रयितव्ये विशेषोऽभिधीयते । पुरस्तादेतदेव स्थितं यथोपादेयो गुणस्तिरोहितकर्म्मानुवादेन शक्यो विधातुं नानुपादेयः स हि कुण्डपायिनामयने होमस्येव बलात्कर्म्मान्तरत्वमापादयति । तदिह वपाप्रचार उपादेयः सुत्याकालस्थसवनीयानुवादेन शक्यो विधातुं किं पुनः

प्रातःसवनश्रुत्या तद्देशसवनीयप्रत्यभिज्ञाने सति श्वस्तने पुनराम्नाने निर्ज्ञातप्रयोजनत्वादाश्विनग्रहणेन सहाङ्गाङ्गिसंबन्धाभावात्कालार्थे संयोगे तस्यानुपादेयत्वात्कर्मोद्देशेन विध्यनुपपत्तेरवश्यं कालोद्देशेन कर्म विधेयम् । यथाप्याश्विनं प्रत्यङ्गत्वेन विधिस्तथा ऽप्यङ्गिनो ऽनुपादेयत्वादेषैव वचनव्यक्तिरतश्च गुणविध्यनुपपत्तेरवश्यं प्रकरणान्तरन्यायेनोत्पत्तिविधेरन्येनान्तरेणाप्रतिबन्धादुत्पत्तावपधार्यमाणायां कर्मान्तरं स्यात् । तेनास्य तावत्कालापेक्षयोत्पादकत्वं सिद्धम् । अतस्तस्य परिशेषसिद्धं गुणविधित्वं न हि तस्य किं चिद्धेत्कारणम् । अत एव वपाप्रचारेणोत्कर्षो ऽस्ति नास्तीति विचारितम् । सति हि वपाप्रचारेणोत्कर्षे पूर्वस्यैव प्रातःसवने विपरिवृत्तः कालं प्रत्युपादानं प्रत्यभिज्ञानात्कल्प्येत । यथोक्तं सन्निधौ त्वविभागादिति । काले च कर्मणि विधीयमाने प्रत्ययस्य सन्निकृष्टे ऽर्थे व्यापारो भविष्यति वपाप्रचारकालस्य पुनः सवनीयोत्पत्तिक्रियातः क्रियान्तरविशेषणत्वाद्दुष्प्रतिपादो विशिष्टविधिरिति वाक्यभेदः स्यात् । अस्मत्पक्षे पुनर्व्यर्थैकवाक्यत्वं भवति तथोक्तम् । एवं च परिव्राणस्यापि प्रकरणलभ्यो ऽङ्गभाव इहानुवदिष्यते अन्यथा पुनर्विप्रकृष्टतरेण क्रमेण प्राप्तिमपेक्षयानूद्येत तस्मादयमेवोत्पत्तिविधिः । कथं पुनरस्मिन्पक्षे भाष्यकारस्य वाक्यभेदोपन्यासः । उच्यते ।

कर्मणो भेद एवायं वाक्यभेदो ऽभिधीयते ।
संबन्धे त्वेकवाक्यत्वमर्थान्यत्वे ऽपि गम्यते ॥

वाक्यं भिद्येत न तेनैकवाक्यतामियात् यथा कर्तृ-

गुणे तु कर्म्मासमवायाद्वाक्यभेदः स्यादित्यत्रासत्यपि लक्षणतो वाक्यभेदे परस्परासंबन्धाभिप्रायेणोक्तम् । साकाङ्क्षं त्वेकवाक्यमित्यत्र च संबन्धमात्राभिप्रायं तथेहोत्पत्त्यर्थत्वे सति तदेकवाक्यता यदि न गुणार्थं इत्युच्यते ।

## अर्थेनेति चेत् ॥ २३ ॥

## न श्रुतिविप्रतिषेधात् ॥ २४ ॥

## स्थानात्तु पूर्व्वस्य संस्कारस्य तदर्थत्वात् ॥ २५ ॥

सर्वं सवनीयप्रकरणं निराकृत्य पूर्वोक्तेनैव हेतुना सिद्धान्तं निगमयति । यद्वा ऽवान्तरप्रकरणेनाबाध्यमानं स्थानबाधेनैव महाप्रकरणं सर्वार्थत्वप्रतिपादनया ऽवस्थितं तन्निवृत्त्यर्थस्तुशब्दः । यद्यपि प्रकरणं स्थानाद्बलवत्तथा ऽप्युपांशुयाजानुमन्त्रणन्यायेन लिङ्गानुगृहीतक्रम एवात्र बलीयान्विज्ञायते । योग्यतया हि पशुधर्माः पशुयागमपेक्षन्ते न सोमयागं न चानपेक्षिताः प्रकरणेन ग्रहीतुं शक्यन्ते तदङ्गावतरणेन चात्र विप्रकृष्टतरः श्रुत्योर्यो न च षष्ठीप्रतिपाद्यात्संबन्धाद्विना ऽऽनर्थक्यतदङ्गन्याय ऽस्तीत्युक्तम् । ननु चाविहितधर्म्मान्तरः साकाङ्क्ष एवाग्नीषोमीयः प्रदेशान्तरादिहानीयमानः संनिहितान् धर्म्मान् प्रकरणेनैव गृह्णातीति न वक्तव्यं स्थानाच्चेति । नैष दोषो यत्र हि प्राकृतैरङ्गैः पूर्यमाणायां विकृतौ तन्मध्ये ऽप्यपूर्वाणि कानि चिदाम्नायन्ते तत्र विकृतौ प्रक-

रणग्रहणं भवति । अत्र प्रदेशान्तरउत्पन्नो ऽग्नीषोमीयः प्राकृतैस्तावन्निष्प्रतिद्वन्द्वैः क्लृप्तोपकारैश्च निराकाङ्क्षीकृतः तत इहानीतः सन्ननन्यप्रयोजनान् धर्म्मान्साकाङ्क्षान्पश्यन्ननुमितकथंभावः संबध्यते स्थानस्य चैतदेव लक्षणं यदुत धर्माणां साकाङ्क्षत्वेन प्रधानस्योत्पाद्य कथंभावं संबन्धस्तस्मात्सूक्तं स्थानाच्चेति।

## लिङ्गदर्शनाच्च ॥ २६ ॥

सर्वेषां द्वयोर्वा समानविधानत्वे सवनीये पशुपुरोडाशदर्शनं नोपपद्यते। पुरोडाशयागस्य हि देवतासंस्कारार्थत्वं वच्यति स च लिङ्गादग्नीषोमावेव संस्कर्तुं शक्नोति नाग्निं न च समानविधानत्वेनोहः सिद्धान्तवत्संभवति तस्मात्पुरोडाशदर्शनादातिदेशिकाः सवनीयस्य धर्म्मा इति ।

## अचोदना वा गुणार्थेन ॥ २७ ॥

सत्यं देवतासंस्कारार्थः सन्न प्राप्नोति न त्वयं केवलस्तदर्थः किं तर्हि सुषिरो वा एतर्हि पशुरित्युपक्रम्य च्छिद्रापिधानार्थो ऽप्यतस्य विना ऽपि देवतां सवनीयस्य च्छिद्रं पिधातुं पुरोडाशः करिष्यते। तेन समानविधानत्वे ऽप्यदोष इत्युक्ते सूत्रेणोत्तरमाह न च्छिद्रापिधानार्थेनास्य चोदना विधिवन्निगदानां हेतुवन्निगदानां चैवंजातीयानामर्थवादत्वोनोक्तत्वान्न हि च्छिद्रापिधानं क्रतुना ऽपेक्षितं नापि पुरोडाशयागे कृते दृश्यते। तस्मान्नैतत्प्रयोजनमिति यथोक्तमेव लिङ्गदर्शनं सिद्धम्।

## दोहयोः कालभेदादसंयुक्तं शृतं स्यात् ॥ २८ ॥

एवं क्रमस्याविरोधं दर्शयित्वेदानीं विरोधं दर्शयति । शाखाहरणादीनामौपवसथ्ये देशसामान्याद्वान्तरप्रकरणाद्वा दध्यर्थत्वं प्राप्नोति ।

## प्रकरणाविभागाद्वा तत्संयुक्तस्य कालशास्त्रम् ॥ २९ ॥

प्रधानं धर्म्मदेशे क्रियमाणं क्रमं प्रतिपद्यते । पठ्यमानं च अवान्तरप्रकरणं दधियागस्त्वमावास्यायां पठ्यते क्रियते च । तस्मात्तुल्यं पयसा । दधित्वमिच्छार्थास्तु केचित्तस्य धर्म्माः पूर्वेद्युः क्रियन्ते । न च ते शाखाहरणादीनां ग्राहका गुणानां च परार्थत्वादसंबन्ध इति स्थितत्वात् । तस्मादुभयसंयुक्तस्य शाखाहरणादेर्वचनात्पूर्वेद्युः करणं न दध्यर्थत्वादित्यदोषः ।

## तद्वत्सवनान्तरे ग्रहाम्नानम् ॥३०॥

ग्रहधर्म्माणां प्रातःसवनस्य च समानदेशे समाम्नानमनुष्ठानं चेत्यनेनातुल्याशङ्कायां तुल्यत्वमापाद्यते । प्रकरणं तावत्सवनत्रयोपेतस्य ज्योतिष्टोमस्य समानम् । न च प्रातःसवनस्य निष्फलस्यावान्तरप्रकरणं न च प्रकरणविरोधि स्थानं विनियोजकं भवति । तस्मात्सवनान्तरग्रहाणामपि धर्म्माः स्युरिति । एतेनाग्नेयाग्नीषोमीयादिपुरोडाशधर्म्मसाधारण्यमुक्तम् ।

## रशना च लिङ्गदर्शनात् ॥ ३१ ॥

अग्नीषोमीये यूपपरिव्याणमाम्नाय पुनः सवनीये स अग्निन्नं गर्ह्यं गृहीत्वेत्याम्नातं तत्र निर्गुणपुनःश्रवणात्कर्म्मान्तरमुभयोश्च केन चिद् द्रव्येण भवितव्यम् । यच्च परिव्याणद्रव्यं सा रशना लोके वेदे च प्रसिद्धा । तेनोभयत्र तादर्थ्यादेव रशना प्राप्ता । सा च किंमयी किंधर्मा चेत्यपेक्षिते ऽग्नीषोमीयस्य स्थानानुमिते प्रकरणे त्रिवृद्दर्भमयी प्रपिष्टानां कर्तव्येत्याम्नानाद्विशेषः प्रतीयते न सवनीयपरिव्याणस्य । तस्मादितरपशुधर्म्मवदेव रशनेतिकर्त्तव्यता ऽग्नीषोमीयार्थैवेति । तथा प्राप्ते लिङ्गदर्शनात्साधारणीत्याह । न हि सवनीयात्यन्तिवाक्ये त्रिवृत्त्वानुवादो रशनाधर्म्मसाधारण्याद्विनोपपद्यते । का प्राप्तिरिति चेत्तमाह वाक्यसंयोगाद्रशनामात्रस्य स्थानादग्नीषोमीयस्य वाक्यं च तस्माद्बलवत्तरमिति । ननु न तद्वाक्यं हि तदर्थत्वादित्युत्तरं वक्ष्यति तेनाग्नीषोमीयापूर्वयुक्तत्वाद्व्यवस्था स्यादिति । नैतदेवं न ह्येषा साक्षात्पशुसंबन्धिनी किं तर्हि यूपाङ्गं वत्तत्संस्कारादिति वक्ष्यति तेनेदृशमेकवाक्यत्वमेतत् । यूपपरिव्याणसाधारणसाधनस्यैते धर्म्मा इति यथा चाग्नीषोमीयस्यैतद् यूपपरिव्याणमेवं च यूपैकत्वात्सवनीयस्यं यूपपरिव्याणम् । इयमपि चापूर्वसाधनमिह प्रतीयते न तु दर्शपूर्णमासबर्हिरिव पिण्डपितृयज्ञे भविष्यति । तस्माद्बर्हिर्द्धर्म्मवैषम्यात्साधारणा रशनाधर्म्माः ।

## आराच्छिष्टमसंयुक्तमितरैरसन्निधानात् ॥ ३२ ॥

प्रसङ्गाद्वाक्यप्रकरणविरोधाविरोधौ विचार्य्येते। तत्र स्थानं बाधित्वा प्राकरणिकगृहार्था गृहधर्मा इति प्रतीतेरनारभ्याधीतार्थत्वमशक्यं प्रत्येतुं तेनासंयुक्तमित्याह ।

## संयुक्तं वा तदर्थत्वाच्छेषस्य तन्निमित्तत्वात् ॥ ३३ ॥

प्रकरणस्याविशेषकत्वात् ज्योतिष्टोमापूर्वसाधनस्यैवैते इत्येवं सुरागृहादिभ्यो निवर्त्तमाना प्रकरणे व्यवतिष्ठन्ते। येषां त्वप्रकरणाधीतानामपि तदस्ति ते पूर्वेणैव न्यायेन वाक्यसंयोगाद्धर्म्मवन्तो भवितुमर्हन्ति अश्वदाभ्यादीनामपि धर्म्मवत्ता ।

## निर्द्देशाद्वाव्यवतिष्ठेत ॥ ३४ ॥

मैत्रावरुणादिष्यपणादीनां प्राकरणिकसर्वार्थत्वा बाधेन वाक्याद्व्यवस्था। अत्र तु प्राकरणिकव्यवस्थाबाधेन वाक्यात्सर्वार्थत्वमित्यदृष्टान्तः।

## अग्न्यङ्गमप्रकरणे तद्वत् ॥ ३५ ॥

## नैमित्तकमतुल्यत्वादसमानविधानं स्यात् ॥ ३६ ॥

अधिकरणद्वयेन कार्य्यप्रयुक्तत्वाद्धर्म्माणां साधारण्यमुक्तं फलचमसोऽपि चेज्ज्यविकारत्वात्सोमकार्य्ये वर्त्तते। तस्मात्तस्यापि सोमधर्म्मविधिः साधारणो यथा

व्रीहीन्प्रोक्षतीत्येवमादिर्यवानामिति प्राप्ते ऽभिधीयते। यथोक्तं यद्व्रीहिधर्म्मा यवेषु क्रियन्ते द्वयोरपि वैकल्पिकत्वेनानित्ययोस्तुल्यरूपत्वात्। सोमधर्म्माः पुनः नित्यवज्ज्योतिष्टोमापूर्व्वेण गृहीतास्ते नित्यमेव द्वारमाश्रयितुमर्हन्ति। सोमश्च नित्यो न फलचमसः ब्राह्मणपक्षे विधानाभावात्। यदि सर्व्वसोमोपमर्द्देन फलचमसो भवेत्ततो राजन्यवैश्यपक्षयोरभावात्सोमो ऽप्यनित्य इति तुल्यता स्यात्स तु यजमानचमसमात्राभिप्रायकृतो ऽपि ग्रहचमसान्तरेषु संभवान्नित्यः। तेन धर्म्मास्तं न व्यभिचरन्ति तत्प्रयुक्ताः फलचमसस्येदानीं कथं भविष्यन्तीति कार्य्यापत्त्येति ब्रूमः। आह किं कार्य्यापत्तिरुपदेशातिदेशाभ्यामन्या एतयोरेवान्तर्गता वा। अतिरिक्तेति केचिन्मन्यन्ते। न तु तथा सति प्रमाणत्वाध्यवसानमतो ऽतिदेशान्तर्गतिरेव वक्तव्या। कथं पुनः प्रकृतावेवातिदेशः कल्प्यत इति चेत्सत्यं नावकल्पते यत्र कर्म्मधर्मातिदेशो भवति। न ह्येकस्य कर्म्मणः स्वत एव प्रकृतिविकारभाव उपपद्यते। द्रव्यधर्म्मातिदेशस्त्वयं समाने ऽपि च कर्म्मणि द्रव्यभेदः प्रत्यक्षः। यथा च कर्म्म साकाङ्क्षं कर्म्मान्तराद्धर्म्मान्गृह्णाति तथा द्रव्यमपि तस्मात्फलचमसेनेज्यां भावयेत्कथमनन्तरविपरिदृष्टैर्द्रव्यसारूप्यात्सोमवदित्यवगतेरतिदेशसिद्धिः। किं भवति प्रयोजनं यदोभयोरपि पक्षयोः सोमधर्म्माः क्रियन्ते सत्यप्युभयत्र करणे यथैवान्यत्रौपदेशिकातिदेशिकयोः गुणकामप्रवृत्त्यप्रवृत्ती प्रयोजनं भवतः तथेहापि द्रष्टव्यम्। निर्वृत्तिवद्द्रव्यभेदादित्यपि हि शक्यं वक्तुं ये हि सोमस्याभिषवमानादिष्वाश्रिताः फलसाधनत्वेनावगताः ते कथं

फलचमसस्था: साधयिष्यन्ति । क्रतुसाधनत्वेन फलचमस: प्रवर्त्तमानो ऽएव तदङ्गपातिन: क्रत्वर्थेन क्रियन्ते तानेव शक्नोति ग्रहीतुं न फलार्थानत: सिद्धा तन्निवृत्तिरनेनैवोक्ता ऽपि कर्त्तव्य इत्युक्तं भवति । समाने ऽपि हि कर्म्मप्रकरणे द्रव्यसामान्यविध्यभावात्कार्य्योपपत्तिपुर:सरं प्राप्नुवत: सोमपदस्याशक्तेर्विक्रिया विज्ञायते ।

## प्रतिनिधिश्च तद्वत् ॥ ३७ ॥

प्रतिनिधावप्ययमेव न्याय: प्राप्नोति ।

## न तद्वत्प्रयोजनैकत्वात् ॥ ३८ ॥

यदि नीवारा: स्वेनैव महिम्ना कर्म्मसाधनं भवेयुस्तत: कार्य्यापत्त्या धर्म्मा: संबध्येरन् । न तु तेषां साधनत्वे किं चित्प्रमाणमस्ति ये हि तावद्व्रीहिधर्म्मा: कतिपया दृश्यन्ते तदुपादित्सया पुरुष: प्रवर्त्तमानो नान्तरीयकत्वान्नीवारत्वमुपादत्ते न कर्म्माङ्गतया । व्रीहिधर्म्मा: पुनर्व्रीहिशब्देन प्रत्यक्षेणैव चोदिता इति समानविधाना: । न हि नीवारेभ्यो व्रीहिबुद्धिर्व्यावर्त्तत इति वक्ष्यति । समाख्यं तच्चिकीर्षा श्रीति तनाह तद्वदेवासौ प्रवर्त्तते इति ।

## अशास्त्रलक्षणत्वाच्च ॥ ३९ ॥

अशास्त्रचोदितश्च प्रतिनिधिरर्थात्क्रियते तस्मादपि निष्प्रमाणकमस्य कार्य्यापन्नत्वमिति के चित् । न तु प्रतिनिधिरशास्त्रलक्षण: प्रधानसमाप्तिचोदितत्वात् । यदि वा शास्त्रलक्षण: स्यान्नैव क्रियेत न च तदकरणा-

त्कश्चिद्दोषः स्यात् । अत एवं वर्णयितव्यं मूत्रमशास्त्र-लक्षणत्वान्नीवारत्वस्य कार्यापत्तिर्नास्ति ये तु व्रीहिध-र्म्माः प्रधानचोदनया सकलधर्म्मासंभवाच्च व्रीहिचोदनया विकला आश्रितास्तेऽर्थान्तरत्वाभावान्न कार्य्यापन्नाः ।

## नियमार्था गुणश्रुतिः ॥ ४० ॥

यद्यपि शास्त्रलक्षणत्वान्नीवाराणां कार्य्यापत्तिर्ना-स्ति पूतीकानां तर्हि शास्त्रलक्षणत्वादनित्यत्वाच्च फ-लचमसवत्कार्य्यापत्तिप्रसङ्ग इति प्राप्तेऽभिधीयते ।

यागसाधनतां कुर्य्यात्पूतीकानां यदि श्रुतिः ।
ततः स्यात्कार्य्यवर्त्तित्वं न त्वेवं सा प्रवर्त्तते ॥

सोमनाशे हि प्रतिनिध्यपेक्षायां सत्यां पूतीका वि-धीयन्ते न यागसाधनापेक्षायाम् । अतोऽयं प्रतिनिधि-नियम एव भवति यत्सकलसोमधर्म्मासंभवे विकला-न्सोमधर्म्मानुत्पादयेत्तत्पूतीकगतानिति । वक्ष्यति हि नियमार्थः क्वचिद्विधिः । तन्नित्यं तच्चिकीर्षा हीति च । अतश्च नैवात्र पूतीकत्वं कर्म्माङ्गं किं तर्हि सोम-धर्म्मोपलक्षणार्थं तेन श्रुतिलक्षणस्यापि पूर्वेणाविशिष्ट-त्वमिति । तेनेहापि तदेव चिन्तायाः प्रयोजनम् । अतश्च तदाश्रयस्य तद्गुणानपायाद्गुणकामैः प्रवर्त्तितव्यम् । अन्ये त्वाहुः सकलव्यक्त्याश्रयिणो हि गुणकामा वैकल्यादिह न प्रवर्त्तन्ते । नित्यस्य हि कर्म्मणोऽवश्यं प्रक्रमात्प्रक्रा-न्तस्य च सर्वस्यावश्यसमापनीयत्वात्किंचिद्धर्म्मवैकल्ये ऽप्यवैगुण्याभ्यनुज्ञा युज्यते यथा तु काम्यानां प्रतिनि-धिभिः प्रक्रमो नास्ति तथा गुणकामैर्न्न प्रवर्त्तितव्यम् । यदि तु प्रक्रान्ते कस्मिंश्चिद्गुणकामकल्पे द्रव्यनाशे सति

प्रतिनिधीयते ततस्तस्यावश्यसमापनीयत्वाद्धिकारेण प्रतिनिधिना वा तुल्यं समापनमित्यूहानूहावेव प्रयोजनम्

**संस्थास्तु समानविधानाः प्रकरणाविशेषात्[१] ॥४१॥**

अनेकग्रहचमसयागात्मकश्चतुःसंस्थो ज्योतिष्टोमोऽवधारितः सर्वसंस्थासु तु ज्योतिष्टोमरूपमनुस्यूतम् । यथैव देवदत्तस्य स्थानोपवेशनगमनशयनाद्यवस्थाभेदेऽपि देवदत्तत्वं नापैति तथा ज्योतिष्टोमात्मनः संस्थान्तरोपजननापाये तत्त्वं नापैति । संस्थानां च विरोधादन्योन्यं समावेशो नास्ति ज्योतिष्टोमरूपं तु सर्वत्राविरुद्धमनुवर्त्तते । स च ज्योतिष्टोमः फलाय चोदितः ज्योतिष्टोमेन स्वर्गकामो यजेतेति । तथोक्थ्यादिसंस्थानामपि पशुकाम उक्थ्यं गृह्णीयादित्यादि फले विधानम् । तमेवंविधं ज्योतिष्टोमं प्रकृत्य दीक्षणीयादयो धर्म्माः समाम्नातास्ते संदिह्यन्ते किं सर्वसंस्थज्योतिष्टोमोद्देशेनाम्नाता उत केवलाग्निष्टोमसंस्थोद्देशेनेति । न त्वयमुपन्यासो युक्तः न हि धर्म्मसंबन्धवेलायामुद्दिश्यमानस्य ज्योतिष्टोमस्य काचित्संस्था विशेषणत्वेन श्रूयते । यद्यपि कथं चिच्छ्रूयेत तथाऽप्युद्दिश्यमानविशेषणत्वान्न विवक्ष्येत न चोक्थ्यादिग्रहणांशेन ज्योतिष्टोमस्य ग्राहकत्वं फलसाधनभावाद्धि ततोक्थ्यादय एवेतिकर्त्तव्यतावन्तो भवन्ति ज्योतिष्टोमस्तत्वाश्रयत्वेनोपसर्ज्जनभावान्न धर्म्मग्रहणयोग्यो विज्ञायते । ज्योतिष्टोमेन स्वर्गकाम इ्‌ति चैतद्वाक्यगतस्य

---

१ विभागादिति० क० पु० पा० ।

ज्योतिष्टोमस्य धर्म्मसंबन्धः सर्वसंस्थास्वविशिष्ट इत्यग्नि-ष्टोमसंस्थमेवेत्ययुक्तम् अत एवं वक्तव्यम्। किं ज्योति-ष्टोमस्यैवैतद्धर्म्माम्नानमुतोक्थ्यादीनामपि संस्थानामि-ति। तच्च एवं समर्थनीयमेतदेव ग्रन्थेनोक्तमिति। य-द्यपि संस्थाभिर्द्धर्म्मा गृह्यन्ते तथा ऽपि तासां स्वयम-क्रियात्मकत्वात् ज्योतिष्टोम एवाश्रयत्वाद् द्वारम्भवती-ति किं सर्वसंस्थं प्रकृत्येत्याह। किं द्वारभूतं फलवन्तं च प्रकृत्येत फलवन्तमेवेत्यर्थः। यदा च केवलज्योतिष्टो-मार्थत्वं तदा तत्साधारणत्वात्परिशेषाद्वा ऽग्निष्टोमसं-स्थस्यैव जायतइति तत्संस्थस्य व्यपदेशः। उक्थ्यादिषु हि यद्यपि ज्योतिष्टोमस्यापि ग्राहकत्वमस्ति तथा ऽपि तन्न व्यज्यते किमुक्थ्यादिगृहीता धर्मा एतस्य द्वारत्वाद्य-वन्त्युतात्मीयफलसाधनत्वादिति अग्निष्टोमसंस्था चास्य निजमङ्गमतस्तत्संस्थो गृह्णन्नयं गृह्णातीति शक्यते व-क्तुम्। तस्मात्सम्यगुपन्यस्तं धर्म्मसाधारण्यं चोपदेशाति-देशाभ्यां पक्षद्वये ऽप्यभ्युपगम्यतएवेति विधानग्रहणम्। किं प्राप्तं ज्योतिष्टोमेन सह समानं संस्थानां धर्म्मविधा-नम्। कुतः प्रकरणाविशेषात् ज्योतिष्टोमो हि फलव-त्त्वादुपजातकथंभावस्तदनुवृत्तिसन्निधौ समाम्नातान् ध-र्मान् गृह्णाति न ज्योतिष्टोमत्वेन तच्चोक्थ्यादीनामे-तेष्वेव धर्म्मेषु सर्वमविशिष्टमुपदेशासंभवे चातिदेशो भ-वति तस्मादुपदेश एव साधारण इति।

## व्यपदेशश्च तुल्यवत् ॥४२॥

भाष्यशेषस्य प्रतिपत्तिं विदधत्तुल्यवत्संस्थाक्रतु-प्रकरणसंबन्धित्वेन कीर्त्तयति। यद्याग्निष्टोमो जुहोति

यद्युक्थ्यस्तेनैव शेषेण परिधिमनक्ति यद्यतिरात्र: एतदेव होमयजुर्यमग्ने पृत्सु मर्त्त्यमिति जपन् हविर्द्धानं प्रतिपद्येतेति अतो विज्ञायते सर्वो ऽङ्गविधि: साधारण इति । सामान्यतो दृष्टमिवायुक्तमुक्तं यदि हि वाक्यवशेन किं चित्प्रकरणाम्नातं संस्थाभि: संबध्यते तत: किमसंयुक्तसंबन्धेनापि युक्तं भवितुम् । न हि द्वादशाहीनस्येत्यादिषु शेषधर्म्माणामप्यहीनार्थत्वमाशङ्कितम् । यावद्वचनं ज्ञयित्वाद्वचनानामित्येवं व्याचष्टे यदि हि सामान्यविहितमग्निष्टोमसंस्थस्यैव स्याद्विना ऽपि तदुपादानेन तदङ्गत्वमिद्वेन्नोवाग्निष्टोमं संकीर्त्तयेयतस्तु संकीर्त्तयति अतो मन्यामहे नूनमविशेषितमग्निष्टोमस्य न लभ्यते । तच्चैवं न लभ्यते यदि संस्थानामपि साधारणं प्रकरणम् । केवलज्योतिष्टोमप्रकरणपक्षे तु पुन:श्रुतिरनर्थिका स्यात् । तथोक्थ्यादीनामपि यदि प्रकरणमस्ति ततो ऽन्यतरनिर्द्धारणार्थं यदिशब्दोपबद्धं ग्रहणं युक्तमप्रकृतत्वे तु द्वादशाहीनस्येतिवद्विनैव यदिशब्देन संबन्ध: स्यात् । न हि ज्योतिष्टोमप्रकरणे स्थितस्यैवं वादो युज्यते । यदि ज्योतिष्टोमस्तत एतद्यदि द्वादशाहस्ततो ऽमुकमिति । अनेकसन्निहितापेक्षं ह्येतद्वचनं भवत्यतो ऽपि समानं प्रकरणम् । इदमपरं लिङ्गम् । आग्नेयमजमग्निष्टोमआलभेतैन्द्राग्नमुक्थ्ये द्वितीयमैन्द्रं वृष्णिं षोडशिनि तृतीयमिति । समानविधानत्वे पूर्वपूर्वो ह्युत्तरोत्तरप्रत्यक्षश्रुतत्वात् क्रियतइति द्वितीयतृतीयदर्शनमुपपद्यते । विकारपक्षे तु प्रत्यक्षश्रुतैरैन्द्राग्नादिभिराग्नेये बाधिते सर्वत्रैक एव स्यात् । ननु च प्रत्यक्षश्रुतत्वे ऽपि संस्थान्तरे संस्थान्तरासंभवा-

न्निर्निमित्तः पूर्वः पूर्वो न प्राप्नोति । यो ह्यग्निष्टोमस्तोत्रे समाप्यते सोऽग्निष्टोमो न तद्वन्मात्रं यश्चोक्थ्यादिषु समाप्यते नासौ पूर्वत्र समाप्तो भवति । तेन द्वितीयदर्शनाद्यप्रसङ्गः पक्षद्वयेऽपि तुल्यः । सत्यं संस्थानिमित्तत्वे तुल्यः स्तोत्रनिमित्तत्वे तु समुच्चयः । तथा च भाष्यकार आह द्वे हि तत्र निमित्ते अग्निष्टोमस्तोत्रमुक्थ्यस्तोत्रं चेति मिद्धवदेतद्ब्रवीति । कथं पुनः संस्थास्तोत्रसाधारणाग्निष्टोमादिसमभिहारे तुल्ये स्तोत्रनिमित्तत्वमेवाङ्गीक्रियते न संस्थानिमित्तत्वम् । तासां हि फलवत्त्वेन प्रयोजनवत्त्वादक्लेशेनैव निमित्तत्वमापद्यते । तत्र केचिदाहुः । सत्यपि शब्दसाधारण्ये शास्त्रस्य महाविषयत्वानुग्रहार्थं स्तोत्रनिमित्तत्वाश्रयणमित्यथवा स्तोत्रविशेषितायाः एव संस्थाया एवंशब्दकत्वात्पूर्वतरप्रतीतविशेषणनिमित्तत्वसंभवे जघन्यविशेष्यनिमित्तत्वकल्पना न युक्ता । यद्वा ऽऽक्रत्यधिकरणन्यायेनैव स्तोत्रेषु मुख्यः शब्दः संस्थायां लाक्षणिकः । मुख्यसंभवे च लक्षणा आश्रयितव्या । शक्नोति च स्तोत्रमपि सप्तमीनिर्देशान्निमित्तत्वं प्रतिपत्तुम् । निष्फलानामपि च भेदनादीनां वचनसामर्थ्यान्निमित्तत्वमिष्टम् । अथ वा संदिग्धेषु वाक्यशेषादित्येवं स्तोत्राश्रयणम् । सत्यपि वा संस्थानां मुख्यत्वे व्यवधारणकल्पनया वाक्यशेषेण स्तोत्रपरिग्रहः । एवं हि श्रूयते । आग्नेयमजमग्निष्टोम आलभेत आग्नेयो ह्यग्निष्टोम इति । कतरस्मिन्नग्निष्टोमे य आग्नेयः स्तोत्रस्य च स्तुतिभागग्निदेवता विद्यते न संस्थायाः । सा हि व्यापारपरित्यागात्मकत्वादभावभूता न चाभावस्य देवतया कार्य्यमस्ति ।

यागाभ्यासे ऽपि हि या देवता सा तस्यैवाग्नेयत्वं करोति न संस्थायाः । न च स एव संस्था । तदुत्तरकालौदासीन्यवचनत्वात्संपूर्वस्य तिष्ठतेः । न चान्यगतया देवतया ऽन्यस्य व्यपदेशो भवति । तथोक्थ्यषोडशिनोरपि दर्शयितव्यम् । अपि चैन्द्राग्नानि उक्थ्यानीति स्फुटमेव स्तोत्रग्रहणम् । न हि संस्थोक्थ्यानीत्यनेन शब्देनोच्यते । तस्मात्सति स्तोत्रनिमित्तत्वे युक्तः समुच्चय इति । ननु विकारपक्षे ऽप्यदृष्टार्थत्वात्पशुयागानामन्योन्यकार्य्यापत्त्यसंभवादुपपद्यत एव समुच्चयस्तथा हि ।

नानुमानिकमात्रं यत्तत्प्रत्यक्षेण बाध्यते ।
विरोधे सति बाधो हि विरोधस्यैकगोचरः ॥

यदि हि प्रत्यक्षश्रुतत्वमेव केवलं विरोधनिरपेक्षं बाधकारणं स्यात्ततो न किं चिन्न बाध्यते क्रत्वन्तरगतं दृष्टार्थमदृष्टार्थं वा तुल्यकल्पमतुल्यकल्पं वा । न चैतदिष्टमत उभयोः पक्षयोः समुच्चयदर्शनमुपपन्नम् । तथा च वक्ष्यति प्रभृतिलिङ्गासंयोगादिति । तथा प्राजापत्येषु वास्नानादित्यादावेवंजातीयकानां तत्र तत्राविरोधात्समुच्चयं वक्ष्यति । तत्रैवं समाधिमाहुः । अस्त्येवात्र प्रकृतिलिङ्गसंयोगः सवनीयसमाख्यानिमित्तः । सर्वे ह्येते सवनीयशब्देनोक्तास्तस्मात्समाख्यानात्तुल्यकार्य्यत्वे सत्यस्ति विरोध इति प्राप्नोति बाधः । यद्येवं ततः समानविधानत्वे ऽपि सामान्यविशेषलक्षणबाधप्रसङ्गः पूर्वे पूर्वो हि पशुर्महाविषयत्वात्सामान्यविहितो भवत्युत्तर उत्तरो ऽल्पावकाशत्वाद्विशेषविहितो बाध्यते च सामान्य सावकाशं वा विशेषेण निरवकाशेन वा । के चित्त्वाहुः सर्वान्त्यस्य केवलस्य निरवकाशत्वादत्यन्तविशे-

षस्थत्वाद्बाधकत्वं भवेन्न मध्यमयोः। सत्यपि वस्तुल्यविषयत्वे प्रमाणागतिस्तुल्या। यथैवाग्नेयः संस्थाचतुष्टयविषयत्वात्साधारणो भवत्येवमैन्द्राग्नो ऽपि संस्थात्रयसाधारणो यावता च यत्नेनासौ प्राप्नोति तावता च पूर्वो ऽपि। मैष्यास्तु संस्थानिमित्तत्वे ऽप्यदोषो न हि तदधिका ज्योतिष्टोमे संस्था ऽस्ति तस्मादबाध इति। उच्यते। यद्यपि न बाधस्तथा ऽपि विकल्पस्तावत्प्राप्नोति न हि तुल्यार्थानां क्व चित्समुच्चयो दृष्टः सेयमुभयतःपाशा रज्जुरित्यादि तावत्किं चिदपि कार्य्यान्यत्वं समुच्चयसिद्ध्यर्थमभ्युपगम्यते ततो विकारपक्षे ऽपि समुच्चयो ऽथ तत्र बाधं समर्थयितुं कार्य्यैकत्वं कल्प्यते ततः सामानविध्योरपि व्रीहियवादिवदसमुच्चय इति। न चैतत्पूर्वपक्षवचनमात्रं सिद्धान्ते ऽपि दर्शनमेवागत्या वचनीकृत्य समुच्चयं वक्ष्यति। वचनात्तु समुच्चय इति। तदवश्यं वक्तव्यो विशेषः स उच्यते।

समानविधिपक्षे हि सर्वे सर्वाङ्गभाविनः।
तन्निमित्तवशप्राप्तान्न समाख्या निवर्त्तयेत्॥

सर्वे हि पशवः सर्वत्र प्राप्नुवन्तो यत्पूर्वसंस्थासु परे न भवन्ति तन्निमित्ताभावात्प्रत्यक्षेण तु निमित्तेन पूर्वः पूर्वः परत्र वाक्यात्प्राप्नोति। तत्र किं समाख्ययैककार्य्यत्वं कल्पयित्वा बाधविकल्पयोरन्यतर आश्रीयतामुत वाक्यप्राप्तसमुच्चयानुरोधेन कार्य्यान्यत्वं कल्प्यतामिति वाक्यबलीयस्त्वात्समुच्चयेन भवितव्यम्। यथा प्रयाजानुयाजादीनां सत्यपि समाख्यैकत्वे वाक्यसामर्थ्यात्कार्य्यान्यत्वं समुच्चयश्च। अतिदेशे पुनः समाख्यया कार्य्यैकत्वम् अतिदेशेन कार्य्यान्यत्वं तेनापि समु-

न्वय: । तस्माच्चोपदेशान्तर्गता समाख्यैव बलीयसीति तत्कृतं कार्य्यैकत्वमाश्रित्य विरोधाद्बाध: परिगृह्येत । विकारे च प्रकृतिलिङ्गसंयोगापेक्षा विद्यतइति कार्य्यापत्तिर्विज्ञायते । न तु समानविधिपक्षे प्रकृतिलिङ्गसंयोग: कश्चिद्येन कार्य्यापत्तिरवधार्य्येत । के चित्त्वाहु: । समानविधित्वे परस्परानपेक्षैर्द्रव्यदेवतासंयोगै: कर्म्मभेदो ऽवसीयते विकारे पुनरतिदेशप्राप्तयागानुवादेन गुणमात्रं विधीयते ततश्चैक एव याग: स्यात् न द्वितीयादय इति । स त्वयं गुणविधिरैन्द्राग्ने संभवेन्नैन्द्रसरस्वत्योरनेकद्रव्यदेवताविधानेन वाक्यभेदप्रसङ्गादेकान्तेन कर्म्मान्तरता । तेनैवं समर्थनीयं कर्म्मान्तरमेवदं विधीयमानं किमपूर्वान्तरसाधनत्वं प्रतिपद्यतामुत प्राकृतसवनीयापूर्वमेव साधयत्विति पूर्वक्लृप्तापूर्वविनियोगमात्रे संभवति नापूर्वान्तरं कल्पयित्वा तत्साधनत्वाध्यवसानं युक्तम् । तथा ऽतिदेशप्राप्तसवनीयापूर्वमपि साधनापेक्षावेलायां प्रत्यक्षश्रुतसवनीयपरित्यागेन न सवनीयान्तरं गृह्णाति सर्वापेक्षासु प्रकृतासंभवेनाप्रकृतग्रहणाद्यागगतो ऽपि व्यापार: प्राकृतेनैवापूर्वेण क्लृप्तसंबन्धो न शक्नोत्यपूर्वान्तरसंबन्धं प्रतिपत्तुम् । कथमक्लृप्तसामर्थ्यं सवनीयान्तरं प्राकृतमपूर्वं साधयतीति चेत् यथेतरस्मिन्पक्षे ऽपूर्वान्तरं यागगतं व्यापारमित्यदोष: । कस्तर्ह्यनयोर्विशेष: । उच्यते । यदा यागगतव्यापारेणापूर्वेणापेक्ष्यन्ते न तदा वैकृतसवनीयापूर्वं क्लृप्तं यत्तस्मिन्नंश निपतत्यदा पुनरपूर्वेण कर्म्मापेक्ष्यते तदा सवनीयत्वप्रकृतिलिङ्गसंयुक्तं कर्म्मान्तरं विद्यमानमवबुध्य प्राकृतं निराकरोति । प्रकृतौ

चापूर्वकल्पनावमराद्विधीयमानसवनीयचतुष्टयानुनिष्पा-
द्यपूर्वचतुष्टयं कल्प्यते। न हि तत्र ज्ञायते कतरत्पू-
र्वतरं क्लृप्तं यस्य साधनान्तरसंबन्धः स्यात्। कर्मालो-
चनवेलायां हि कर्मरूपाण्येव दृश्यन्ते अपूर्वकल्पना
ऽपि युगपद्भवतीति न ज्ञायते विशेषः। विकारपक्षे तु ज्ञा-
यते प्राकृतस्य पूर्वतरं क्लृप्तिरित्यवश्याबद्धेयेऽन्यतरस्मि-
न्कर्मणि विप्रकृष्टं प्राकृतं हातव्यं भवतीति बाधप्रस-
ङ्गः। ननु च विकारपक्षे ऽग्निष्टोमसंस्थाया एव वि-
कारभूताः पराः संस्था भवन्ति न परस्परेणेति केवल-
स्याग्नेयस्य प्राप्तस्य परैर्बाधात्सर्वत्र द्वितीयस्य दर्शनं
न स्यादित्येतावन्मात्रं वक्तव्यं किमुच्यते तृतीयस्य दर्शनं
न प्राप्नोतीति। नैष दोषो यदि त्वयमैन्द्राग्नादीनां
परत्र प्राप्तानां बाधाददर्शनं ब्रूयात्ततो निष्प्रमाणकं व-
देदयं त्वदर्शनमात्रं वदति। तच्चाग्नेयस्य बाधान्म-
ध्यमयोश्चाप्राप्तेरुपपन्नमेव तेनैव चाग्नेयो बाध्यतेत्याह
न पूर्वः पूर्वः परेणेति। तस्मात्समानविधानाः।

## विकारास्तु कामसंयोगे नित्य-स्य समत्वात् ॥४३॥

उक्थ्यादयः समाप्तिविशेषाः फलसाधनत्वेन चो-
द्यमानाः समाप्तिमन्तमाश्रयमपेक्षमाणाः प्रकृतं ज्यो-
तिष्टोमं समाश्रयन्तस्तस्य निजामग्निष्टोमसंस्थां वि-
कृत्य निविशन्त इति विकारशब्देनोच्यन्ते। ननु चो-
क्थ्यादीनां समाप्तित्वे सिद्धे समाप्तिमदपेक्षा भव-
ति। न चैषां प्राक् ज्योतिष्टोमसंबन्धात्समाप्तित्व-

सिद्धिरारम्भमध्यापित्वात्समाप्तिशब्दप्रवृत्तेः । अथ प्रथमं तत्संबन्धस्ततः प्रथमं क्रत्वर्थत्वे ऽवधारिते फलसंबन्धाभावात्स नित्यस्य समत्वादित्येवमविकारत्वप्रसङ्गः । किञ्च ।

ग्रहणादौ च विस्पष्टे चोद्यमाने फलं प्रति ।
संस्थानां फलसंबन्धः कथमध्यवसीयते ॥

तत्र केचिदाहुः । ग्रहणादीनामपि फलसंबन्धे ऽधिकरणं गच्छत्येव किं ज्योतिष्टोमार्थो धर्मविधिरुत ग्रहणाद्यर्थो ऽपीति । संस्थाशब्दः कथमिति चेत्तेषां ग्रहणादीनामन्ते विधानात्समाप्तिसंबन्धो ऽस्तीति तच्छब्दलाभः । पशुकाम उक्थ्यं गृह्णीयात्षोडशिना वीर्यकामः स्तुवीतेति पूर्वसमाप्त्युत्तरकालं चोद्यमानानां समाप्त्यन्तरव्यपदेशभाक्त्वं भवति । अन्ये त्वाहुर्ग्रहणाद्या ऽप्यत्र फलवत्समाप्त्यङ्गत्वेन प्राप्ता एव साध्यसाधनसंबन्धविधिपरे वाक्ये निर्वपत्यालभतिवदनूद्यन्त इति कुतः ।

संक्रान्तविधिसामर्थ्ये प्रत्यये धातुरुच्यते ।
तस्मान्नाम्नः फलं ह्येतद्भवेदिन्द्रियकामवत् ॥

ननु चोक्थ्यं गृह्णीयादिति सामानाधिकरण्यप्रयोगानामपि ग्रहणादीनामेव स्यात् । नैतदेवम् । उक्थ्यस्तोत्रसंबन्धाद्धि समाप्तिरेवोक्थ्यशब्देनोच्यते तत्संबन्धाद्ग्रहणा उपचर्यते । न च मुख्यसंभवे गौणाः परिगृह्यन्ते नित्यं तु यज्ञसामानाधिकरण्येनोक्थ्यादीनां प्रयोगो दृश्यते । उक्थ्येन यजेतोक्थ्यो यज्ञ इति । तथा षोडशिना यजते षोडशी यज्ञः । न वै षोडशी नाम यज्ञो ऽस्तीति स चान्यस्तावद्व्यतिरिक्तसमाप्तिवचनत्वे ऽवकल्पते न ग्रहस्तोत्रवचनत्वे । षोडशीति च पुंलिङ्गः समाप्तिवचन ए-

वोपपद्यते। नपुंसकलिङ्गस्य स्तोत्रवचनत्वात्। यस्तु पुंल्लिङ्गप्रयोगः स्तोत्रे क्वचिद्दृश्यते, यथैकविंशः षोडशीति, स गौण इति प्रतिपत्तव्यम्। इह वाक्यशेषे पुंल्लिङ्गः षोडशी प्रतीयते इति संस्थावचनः। अतिरात्रेण प्रजाकामम् इति विस्पष्टमेव संस्थावचनत्वं न हि तत्र क्रियान्तरमुपात्तं यजिरपि च गुणत्वोपसर्जनत्वेन श्रुतः क्लेशेन प्रधानीकर्त्तव्यः। तस्माद्राविमतीत्य यां समाप्तिः सा फलेन संबध्यते। यदि च ग्रहणस्तोत्रयोः फलसंबन्धः स्यात्ततस्तयोः क्रियात्वादाश्रयापेक्षा नास्तीति स्वतन्त्रयोरेव प्रयोगः प्राप्नोति तत्र च प्रकरणाम्नानप्रयोजनमुक्थ्यादिशब्दप्रयोगश्च न ज्ञायेत। तस्मादपि समाप्तयः फलवत्यः। कथं तु प्राक् क्रतुसंबन्धात्समाप्तित्वमिति। के चित्तावदाहुः। सप्त सोमसंस्था अग्निष्टोमो ऽत्यग्निष्टोम उक्थ्यः षोडश्यतिरात्रो वाजपेयो ऽप्तोर्याम इति स्मरणात्सोमसमाप्तसमाप्तिवचनत्वे सिद्धे कर्मान्तराश्रयणाद्धृत्य सोमयागमात्रे ऽपेक्षिते प्रकरणात् ज्योतिष्टोमस्याश्रयत्वसिद्धिरिति। अन्ये तु मन्यन्ते ज्योतिष्टोमस्य क्वचिदभ्यासविशेषे समाप्त्यन्तरं विज्ञायते यद्दृत्पद्यमानमेवोक्थ्यादिव्यपदेशं लभते फलसंबन्धं च तत्र श्रुतिबलीयस्त्वात्प्रकरणलभ्यं क्रत्वर्थत्वं बाध्यते। यस्त्वाश्रयाश्रयिसंबन्धः सो ऽनुगुणत्वादाश्रीयते।

अपरं दर्शनम् उक्थ्यादिशब्दवाच्यं किमपि प्रथममेव फलेन संबध्यते किं पुनस्तदित्यपेक्षायां वचनान्तरेण ज्योतिष्टोमस्य समाप्त्यन्तरं विज्ञायते। यद्वा ऽभ्यासविशेष एवायं वचनान्तरात् ज्योतिष्टोमस्यान्ते निविशमानः फ-

लाय चोद्यते तेन वा तस्मिन्वा क्रतुः संतिष्ठत इति सं-
स्थाशब्देनाभिधीयते । केचित्पुनर्मन्यन्ते । संस्था नामा-
न्त्ययागाख्यामानन्तरं या क्रियोपरतिः सा ऽभिधीयते
न चाक्रियात्मकत्वात्तस्याः फलसाधनत्वं युक्तमतस्तदुप-
लक्षितो ऽभ्यासश्चोद्यत इति । अन्ये त्वाहुः । वचनस्याति-
भाराभावादभावो ऽपि चोद्यमानः फलसाधनत्वेन नैव
विरुध्यत इति । यथा ऽकुर्वन्विहितं कर्मेत्यत्राकरणा-
ख्यासतः प्रत्यवायहेतुत्वम् । अथ वा ऽस्त्येवाचोदा-
सीन्यप्रतिपत्तिरूपः संकल्प इत्यविरोधः । इह च यथा
गुणात्फलं भवति यथा च काम्यो गुणो नित्यमर्थं विक-
रोति तदिन्द्रियकामाधिकरणगोदोहनाधिकरणाभ्या-
मुपसंहर्त्तव्यम् । तद्दर्शयति । गुणादेवंजातीयके फला-
निष्पत्तिः । एवं हि श्रूयते । पशुकाम उक्थ्यं गृह्णीयान्न
ज्योतिष्टोमकाम उक्थ्यग्रहणकामो वेत्यनेन क्रत्वर्थत्वं
निराकरोति । क्रत्वर्थत्वे हि सत्यन्तरेणापि कामपदोपब-
न्धं तदुपकारकमेवैतत्कर्त्तव्यमिति विज्ञायते । यदि चो-
क्थ्यग्रहणस्वरूपमात्रं चिकीर्ष्येत ततो ऽर्थादुक्थ्यग्रहणा-
कामस्यैव विधिर्भवेद्यस्यैवं प्रार्थनमुक्थ्यग्रहणस्वरूपमात्रं
कथं निर्वर्त्ततामिति तत्तु द्वयमपि पशुकामोपादाना-
दनवक्लृप्तम् । अतः काम्यत्वादस्ति गोदोहनन्यायेन
विकारत्वं तत्र कथमिति इतिकर्त्तव्यताकाङ्क्षायां ज्यो-
तिष्टोमगृहीतेतिकर्त्तव्यता ऽतिदिश्यते । कः पुनरिह प्र-
कारो येनेतिकर्तव्यता गृह्यते यदि तावत्सन्निधानं ततः
समानविधानमेवाभ्युपगतं भवति न ह्यतिदेशस्य सन्नि-
धिः कारणं सादृश्यप्रभवत्वेन वक्ष्यमाणत्वात् । अथ का-
र्य्योपत्त्या तत्रापि कारणान्तरत्वं निराकृतम् । न च

दीक्षणीयादयः संस्थाधर्म्माः यतः कार्य्यापन्ने संस्थान्तरे भवेयुः न ज्योतिष्टोमस्योक्थ्यादयः कार्य्ये वर्त्तन्ते यतस्तद्धर्म्मान्प्रतिपद्यन्ते । एतेनातिदेशपक्षः प्रत्युक्तः । यो हि मन्यते ऽतिदेशेन धर्म्मा भविष्यन्तीति तस्यातिदेशकारणं साद्दश्यं नास्तीति यद्यप्यग्निष्टोमस्य संस्थया सामान्यमस्ति ज्योतिष्टोमस्य तु न किं चिदुक्थ्यादिसाद्दश्यमित्यप्रकृतित्वम् । अत एव च भाष्यकारो ऽपि सन्निधानादित्येतावन्मात्रमुक्त्वा तूष्णीम्भूतस्तेन वक्तव्यमेतदुच्यते ।

अतिदेशो ऽयमित्येतत्पुरस्तादेव साधितम् ।
न च साद्दश्यमेवैकमतिदेशस्य कारणम् ॥

यथा दधीन्द्रियकामस्येत्यत्र व्याख्यातं विना ऽपि साद्दश्येणान्यथा तत्फलाप्राप्तेरतिदेशो भवति । साद्दश्यं हि प्रकृत्युपस्थापनद्वारेणोपयुज्यते नाद्दष्टोपकारनिर्वृत्त्या । तदिहान्तरेणापि साद्दश्यमाश्रयत्वप्रतिपत्तिः सन्निधानादस्त्येव । भाष्यकारो ऽप्येतदेव सन्निधानमाह न दीक्षणीयादिसामीप्यम् । आश्रयत्वेन हि गृहीतो ज्योतिष्टोमः शक्नोति दीक्षणीयाद्यपूर्वजनितं स्वगतं व्यापारं बोधयितुमिति सिद्धो ऽतिदेशः । आह कथं पुनर्य्येयमितिकर्त्तव्यता सा नित्यस्य न पुनरस्यैव काम्यस्य साधारणी वेति ।

तत्र साधारणीत्येष न्याय्यः पक्षो ऽस्य संमतः ।
काम्यस्यैवेति साक्षाद्धि पूर्वोक्तावचमथादितम् ॥
यदि युक्त्या विनैवेयं नित्यस्येत्यभिधीयते ।
काम्यस्यैवेति किं नैतद्युक्ततरमुच्यते ॥
अथ त्वयुक्तायुक्तत्वान्नैवमभ्युपगम्यते ।

हन्त साधारणीत्येतत्सद्युक्तिकमिहोच्यताम् ॥

यदि विनैव प्रमाणेन केवलानित्यार्थत्वं त्वमिच्छसि हन्त मदिच्छया ऽपि केवलकाम्यार्थत्वमेवास्तु । अथ पुनरिदमप्रमाणकमिति नाश्रीयते ततः प्रमाणवत्साधारण्यमिष्यतामिति । तत्रातिशयोक्तिमसहमानो भाष्यकारः साधारणपक्षे चोपकरिष्यतीति निष्प्रमाणकमपि केवलकाम्यपक्षमेव तावन्न्यायेन निराकरोति । यत्र यत्र गुणे कामस्तत्र तत्र क्रियायां साध्यमानायां नान्यथेति । यदि नाम गुणाः स्वातन्त्र्येणेतिकर्त्तव्यतां गृहीतुं शक्नुयात् तत एवं स्यात् । स च कथं शक्नुयाद्यदि करणैरेवेतिकर्त्तव्यता संबध्यते यदि च गुणानां स्वत एव भावनाविशेषणत्वं भवेत् । न तावत्करणैरितिकर्त्तव्यता संबध्यत इत्युक्तम् । सप्तमनवमाद्ययोश्च वक्ष्यति भावयेत्कथमित्यपेक्षा भवति न करणेन कथमिति । यस्यां तु भावनायां धात्वर्थाः करणं भवन्ति तस्यां ते वस्त्वन्तरनिरपेक्षाः पश्चात्तनमहर्गणेकाहायनीन्यायलभ्यामितिकर्त्तव्यतासंबन्धं लभन्ते । यस्यां पुनर्गुणानां करणत्वं तस्यां धात्वर्थविशेषादिना करणत्वानुपपत्तेः साध्यभूतो धात्वर्थो ऽपरो ऽपेक्षितव्यो नहि व्यापारसामान्यस्य गुणैरुत्पत्तिः शक्या न च क्रियाविशेषमसाधयन् गुणः सामान्यसाधनत्वं भजते तेन यस्यां भावनायामवस्थितो गुण इतिकर्त्तव्यतां गृह्णाति तस्यां प्रथमतरसंनिविष्टो धात्वर्थो दृश्यते । ततश्च तेन तावत्सह प्रथमतरमहर्गणैकाहायनीवन्नियमः । यदि हीतिकर्त्तव्यताग्रहणयोग्यः स न भवेत्ततो न गृह्णीयात्स तु फलवत्त्वादितिकर्त्तव्यताद्वारभूतभावनाविशेष-

प्राप्त्याच्च न कथं चिन्न गृह्णाति तत्र चतुष्टयमप्यत्र प्र-
थमतरं ग्रहणं प्रयुङ्क्ते भावना तावन्न धात्वर्थविशेषाद्वि-
नेतिकर्त्तव्यतां शक्नोति ग्रहीतुं गुणो ऽपि च न धात्व-
र्थमनुपनीय स्वतन्त्रः शक्नोति तन्निरपेक्षभावनारहित-
त्वान्निर्विशेषस्य च करोत्यर्थमात्रस्याननुष्ठेयत्वादव्यापा-
रत्वाच्च ग्रहीतुमित्याश्रयति। तथेतिकर्त्तव्यता गुणाभि-
मुखं गच्छन्ती न धात्वर्थमुल्लङ्घ्य शक्नोति गन्तुमिति त-
न्मुखे तावत्पतति। धात्वर्थो ऽपि स्वयमितिकर्त्तव्यताका-
ङ्क्षः सन् गुणार्थमपि प्रस्थितामेतां ग्रहणसमर्थः सन्क्षि-
मिति परित्यजेत्। अतो ऽत्र फलाय चोदितानामुप-
कथ्यादीनां ज्योतिष्टोमाश्रयत्वेनावगतानामितिकर्त्तव्य-
तामाकाङ्क्षतां प्रकरणेन दीक्षणीयादय उपनीयमाना
मार्गान्तराभावादवश्यं तावत् ज्योतिष्टोममुखे पतन्ति।
न ह्युक्थ्यादयः समाप्तिरूपाः तत्परिहारेण ग्रहीतुं स-
मर्थाः स्वमुखपतितांश्च न कथं चित् ज्योतिष्टोमस्तानु-
पेक्षते तद्दर्शयति नासौ साध्यस्याभवन्ती साधनेन सं-
बध्यते। स हीतिकर्त्तव्यताविशेष एवं चोद्यते यथा ऽनेन
फलस्य साधनमुक्थ्यादिसाधकं तथा कुर्यादिति यथा
सौ साधको भवति तथा कुर्यादित्यर्थः। ततश्च करोति-
संस्पर्शाद्भावनयैव संबन्धः। एवं च सति नास्ति स प्र-
कारो येन धात्वर्थं परिहृत्यानयेतिकर्त्तव्यतयोक्थ्यादयः
साधकाः क्रियेरन्। क्रियायामसाध्यमानायामननुगृ-
ह्यमाणायामित्यर्थः। ये तु तेनासाध्यमानायामित्यु-
क्थ्यादिनेति संबन्धयन्ति तेषां पूर्वप्रस्तुतेतिकर्त्तव्यता-
विशेषपरित्यागादसंबद्धत्वं तत्र तत्र क्रियायां साध्यमा-
नायामित्यनेन च पुनरुक्तत्वं स्यात्तेन साधकस्यापि गुण-

स्येतिकर्त्तव्यतामिच्छता साध्यस्यासौ धात्वर्थस्येत्येत-
दभ्युपगन्तव्यम्। एवं सामान्यलक्षणमुक्त्वा संप्रति प्र-
स्तुते विशेषे योजयति साध्यश्च ज्योतिष्टोम इति। त-
स्मान्न तावत्केवलकाम्यार्थत्वम्। अथ कस्मान्न साधार-
णत्वमिति बलवत्त्वेन द्वितीयपक्षोपन्यासः। सिद्धान्तवा-
द्याह। नित्यवदाम्नानादिति। सर्वत्र ह्येकद्रव्ये सति
तन्त्रसंबन्धो घटते न च धर्म्मान्प्रति ज्योतिष्टोमस्य सं-
स्थानां च ऐकद्रव्यमस्ति। धर्म्मा हि कामनिमित्तसं-
योगाभावान्नित्यवदाम्नायन्ते यदैव ज्योतिष्टोमस्तदैव
दीक्षणीयादयः प्रयोक्तव्या इति सत्यपि च ज्योतिष्टोमे
विना पशुकामादिनोक्थ्यादयो न संभवन्ति संस्थान्तर-
प्रयोगे चावश्यमेव संस्थान्तरं न संभवति। न त्वेतासु
ज्योतिष्टोमः कदाचिन्नास्ति। सर्वत्र समस्तात्मना प्र-
त्येकं जातिवत्समवेतत्वात्। अत एते यथाम्नाता ज्यो-
तिष्टोमेन सह संबध्यन्ते नानित्याभिः संस्थाभिः। ननु
सत्यप्यासामनित्यत्वे ज्योतिष्टोमस्यैकस्य नित्यत्वान्नित्य-
वद्धर्म्माम्नानं नित्यार्थत्वेन विरोत्स्यते नित्याम्नानं तावत्तं
प्रति कृतार्थं भविष्यति। यदि तु तस्मिन्सत्येवानित्यो ऽप्य-
परः संबन्धः कल्प्यते किं नो बाध्यते। यो ह्यनित्यार्थमेव
नित्यवदाम्नायते स विरुध्यते नैवंजातीयक इति। नैतदे-
वमेवं सति तन्त्रं तावत्परित्यक्तमप्रयोजकलक्षणापन्नत्वा-
द्यदा हि नित्यवदाम्नानं नित्यार्थत्वेन तावद्विना न भव-
ति क्लृप्ते च तादर्थ्ये निराकाङ्क्षीभूते पाठे प्रसङ्गादितर-
संबन्ध इति न समानविधम्। इतरथा ह्येवं धर्म्मवि-
धिः स्यान्नित्यमेतान् ज्योतिष्टोमे धर्म्मान्कुर्य्यात्कदाचिच्च
यदा पशुकामादयो भवन्तीति तच्च विप्रतिषिद्धमेकस्य

विधानस्य । ननु द्वावेतौ प्रकरणाम्नानानुमितौ विधौ तयो रेको नित्यवद्विधास्यति अपरस्त्वनित्यवदिति । सत्यं प्रयोगवचनयोर्भेदादविप्रतिषेधः प्रयोजकवचनानि तु नित्यानित्यप्रयोगवचनानुविधानाद्विप्रतिषिध्यन्ते । तेनैषां नित्यत्वाविघातमिच्छता ऽवश्यं ग्राहकमपि तद्रूपमेवाभ्युपगन्तव्यम् । अतस्त्वव्यभिचारात् ज्योतिष्टोमार्थत्वमेव युक्तमिति । नन्वग्निष्टोमसंस्थापि काम्येति यदा सर्वसंस्थानामनित्यत्वं न च तद्व्यतिरिक्तं नित्यं किं चित् ज्योतिष्टोमरूपमस्ति तदा*ज्योतिष्टमेन नित्यवद्ग्रहणात्तद्द्वारभूतेन तुल्यकल्पमेव सर्वासां धर्म्मोपनयनमिति क्व नित्यः प्रयोग इत्यनवधारणात्केवलानित्यार्थत्वं वलाद्वैकल्पिकन्यायेन भविष्यतीत्यत आह स नित्यस्य समत्वादिति । समौ हि क्रत्वर्थपुरुषार्थौ विधौ तौ हि द्वावालोच्यैकस्य तूभयत्वे संयोगपृथक्त्वमित्येवमग्निष्टोमान्तस्य नित्यस्यैव कामसंयोग इति इतरस्य तु केवलकामसंयोगादनित्यत्वमिति विशेषः । तेन यद्यपि प्रयोगेणेयमनित्या तथा ऽपि ज्योतिष्टोमस्य नित्यत्वादेतस्याश्च तं प्रति प्राप्तिरूपेण नित्यत्वात्तद्गृहीतधर्म्मपरभागलाभाच्चाग्निष्टोमस्येत्येवं धर्म्माणां व्यपदेशो ऽथ वोक्थ्यादिष्वपि प्राप्तिद्वये सति ज्योतिष्टोमांशेन या प्राप्तिः सोपदेशेन योक्थ्यांशेन सा ऽतिदेशात्मिकेति विवेकः ।

## वचनाच्च समुच्चयः ॥ ४५ ॥

विशिष्टविधानस्य नातिभारः ।

---

* तदास्या ऽपीति ख० पु० पा० ।

## प्रतिषेधाच्च पूर्वलिङ्गानाम् ॥४६॥

क्रतुकरणेषु चोत्तरविधौ यत्पूर्वभावमनुवदति स विकारपक्षे ऽवकल्पते । चोदकप्राप्तस्य चोत्तरेण पूर्वस्य बाधितत्वात् । सामानविध्ये हि प्रत्यक्षनिमित्तसन्निधानात्प्राप्ते निमित्ते नैमित्तिकमवश्यं कर्त्तव्यमिति समुच्चयः स्यात्तत्र प्रतिषेधः पृथग्विधेरुपगम्यमानो वाक्यं भिन्द्यात् । न ह्यत्र द्वितीयतृतीयादिवद्विशिष्टविधिरवकल्पते । विधिप्रतिषेधयोर्विप्रतिषेधात् पर्युदासासंभवाच्च । सर्वस्येह सवनीयपशुविषयः पूर्वपक्षवाद्युक्तो न्यायः सिद्धान्तत्वेनानुसंधातव्यः संस्थानिमित्तत्वे हि सामानविध्ये ऽपि निमित्ताभावादभावदर्शनमुपपद्यतैव । सिद्धान्ते ऽपि चादृष्टार्थत्वात्समुच्चयप्रसङ्गे सति क्रतुकरणसमाख्या प्रकृतिलिङ्गमिति योज्यम् । केचित्पुनराहुः । प्रचरणीहोमशेषप्रतिपत्तिवद्धोमस्य परिध्यञ्जनेन प्रतिपादिते सामानविध्ये ऽयमभावः सिध्यतीति तत्र तु वाक्येन स्वतन्त्रे विधीयमाने कथमप्रस्तुतं प्रतिपत्तित्वमवगम्यतइति वक्तव्यम् । सत्यपि च होमेन प्रतिपादने यावता परिध्यञ्जनशब्दार्थो निर्वर्त्तते किंचिच्च स्रुर्व्याच्यते तावत्पुनः सम्भवत्येव तस्माद्यथोक्तेन न्यायेन दर्शनमेवेदमभावसंकीर्त्तनम् ।

## गुणविशेषादेकस्य व्यपदेशः॥४७॥

यत्त्वप्रकृतस्य यदिशब्दोपबन्धो द्वादशाहादिवन्नावकल्पतइति । नोक्थ्यादीनामन्यैरप्रकृतैस्तुल्यता । यद्यपि ह्येषां नित्यानित्यसंयोगविरोधात्प्र-

करणमग्राह्कमितिकर्त्तव्यतायास्तथाऽपि सन्निहितत्वाद्यादिशब्दव्यपदेशं लभन्ते। प्रस्तुतगुणिद्वारेण वा प्रस्तुतानामपि गुणानां प्रस्तुतव्यवहारः संभवति। प्रकरणप्राप्तं त्वग्निष्टोमग्रहणं नित्यानुवादः। अथ वा स्तोत्रनिमित्तत्वप्रतिपादनपरत्वादर्थवदेवेत्यदोषः। किं भवति प्रयोजनम्। फलचमसवदेवेति केचित्। इदं तु वक्तव्यं सत्यमेतत्प्रयोजनं न तु सर्वधर्म्मेषु यावन्तो हि सद्योमानादिषु गुणकामास्ते सत्यप्यतिदेशे स एवौपदेशिक आश्रयो ऽस्तीति न विकृत्यन्तरवद्विहन्यन्ते। विकृत्यन्तरेषु हि ज्योतिष्टोमस्याश्रयस्याभावाद् गुणकामा यथाश्रुता न भवन्तीति न सिध्यन्ति। संस्थासु तु यद्यप्यङ्गफलं नातिदिश्यते तथाऽपि स्वयमर्थित्वात्पुरुषस्य चिकीर्षमाणस्य गुणोपादित्सायां यथाश्रुताश्रयसंभवेनानुपपत्तिर्गुणकामानाम्। अतो यस्मात्सुक्थ्यादिसंस्थानिमित्तमुक्थ्यग्रहणस्तोत्रशस्त्राद्यप्राकृतं तत्र यदितरगृहस्तोत्रशस्त्रधर्म्मातिदेशेन किं चिद् गुणकामगतं प्राप्नोति तन्न भवतीति प्रयोजनं तथेदमपरं यदि समानविधानं ततो व्यक्तासु तु सोमस्येत्यनेन न्यायेन ये ज्योतिष्टोमविकारा विज्ञायन्ते तेषु सर्वाः संस्था विकल्पेन सिद्धान्ते त्वग्निष्टोमसंस्थैवैका प्रवर्त्तते यत्र चोक्थ्यादिविशेषचोदना तत्रैव केवलं तद्धर्म्मप्राप्तिरिति प्रयोजनं सिद्धम्।

इति श्रीभट्टकुमारिलविरचितायां तन्त्रटीकायां तृतीयाध्यायस्य षष्ठः पादः।



तन्त्रवार्त्तिके ।

तृतीयाध्यायस्य सप्तमः पादः ।

---

श्रीगणेशाय नमः ।

## प्रकरणविशेषादसंयुक्तं प्रधानस्य ॥१॥

समानासमानविधानाधिकारेणैवैतदपि प्रस्तूयते वाक्यप्रकरणविरोधाविरोधद्वारेण । दर्शपूर्णमासप्रकरणस्था वेदिः तद्धर्माश्च खननादयस्तथा बर्हिस्तद्धर्माश्च लवनादयः किमर्था इति । यद्यपि वेद्यां हवींषि बर्हिषि हवींषि बर्हिर्लुनाति वेदिं खनतीति चाविशेषितेन वाक्येनाङ्गप्रधानार्थत्वबुद्धिर्भवति तथाऽपि स्वातन्त्र्ये सति लौकिकेष्वपि गृहाच्छादनार्थेषु बर्हिःषु धर्मप्रसक्तावानर्थक्यादवश्यमपूर्वसाधनताकारितः सम्बन्धोऽभ्युपगन्तव्यः सा चापूर्वसाधनता न वाक्यसामर्थ्येन प्रतीयत इति प्रकरणाल्लभ्यते । ततश्च प्रधानमात्रस्य तत्प्रकरणमित्यनेन विशेषेण प्रधानस्यैव धर्मा गम्यन्ते सत्यपि च प्रकरणस्याविशेषकत्वे ग्राहकत्वेनैव विशेषरूपेणाविनियोजकत्वाद्विशेषस्थापनहेतुत्वमित्युक्तम् । असंयुक्तमिति च सत्यपि वाक्येन हविर्बर्हिःसंयोगे प्रकरणाविरोध्यर्थोऽसंयोगाभिप्रायम् । शक्यौ हि हविर्बर्हिःशब्दौ प्रकरणेन समावेशयितुं नाशीनवदसंबद्धाविति मन्यते ।

## सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात् ॥ २ ॥

सर्वेषां वाक्यसंयोगाविशेषादित्युक्तमेव। यत्तु प्रकरणं विशेषेण विनियोजकमिति, तत्राह—अतत्प्रयुक्तत्वात्। न प्रकरणमिह विशेषकं भवतीत्यर्थः। कथं पुनः स्थितं प्रकरणस्य विनियोजकत्वं निवर्तेत कथं वा तादर्थ्यलक्षणव्यतिरिक्तं च बहुदोषमुपकारलक्षणं शेषत्वं प्रतिज्ञायते। उच्यते नैव प्रकरणस्यैवंजातीयकेषु विनियोजकत्वं स्थितमसंयुक्तं प्रकरणादिति ह्युक्तम्। यत्तु विरोधो नास्तीति कथं नास्ति यदा हविर्बर्हिषां प्राधान्यात्प्रत्येकं धर्मसंबन्धे सत्यङ्गार्थत्वमपि ज्ञायमानं प्रकरणानुरोधेन व्यावर्त्यते। परस्तु येन कारणेन वाक्यस्यातिप्रसरे बाधिते निर्विरोधं प्रकरणमवगतवानिदानीं तदुपन्यस्यति लौकिकेऽपि प्राप्नोति ततश्चानर्थक्यमिति। तस्योत्तरमेतदेव वक्तव्यम्। स्वरसप्रवृत्तं वाक्यं यावत्येव विस्पष्टमानर्थक्यं तावन्मात्रादेव निवर्तताम् न चाङ्गबर्हिषां लौकिकवदानर्थक्यम् अतस्तत्र भविष्यति न चातिप्रसज्यत इति। अनेनैव चाभिप्रायेण उपकारलक्षणं हि तदिति तादर्थ्यमेव फलेन व्यपदिष्टं यदर्थं हि कल्प्यमानं प्रयोजनवद्भिज्ञातुमाकाङ्क्षितोपकारनिष्पत्त्या शक्यते तदर्थं कल्पनीयम्। यत्तु भाष्यकारेणातिप्रसङ्गनिवृत्त्यर्थं प्रकरणादित्युक्तं तदितरपरिचोदनानवतारप्रसङ्गादतित्वरितोक्तमित्युपेक्षणीयं तावत्।

## आरादपीति चेत् ॥३॥

यदि ह्यानर्थक्याल्लौकिकाद्बर्हिषो धर्म्मनिवृत्तिस्ततो यत्र तदानर्थक्यं नास्ति कर्म्मान्तरार्थे बर्हिषि तत्र प्रवृत्तिः प्राप्नोति । यदि तु कश्चित्तन्निवृत्त्यर्थो हेतुः सोऽङ्गेष्वप्यविशिष्टः । तत्र सौर्य्यादिष्वितरथा ऽप्यतिदेशेन सन्त्येव धर्म्मा इत्युपदेशातिदेशप्राप्तिरहितत्वात्पिण्डपितृयज्ञ उदाहरणम् । अपूर्वो ह्ययमनङ्गं चेति स्थास्यति । तेनात्यन्तानिष्टप्रसङ्ग इति ।

## न तद्वाक्यं हि तदर्थत्वात् ॥४॥

भवेदेतद्यदीदं वाक्यं स्वतन्त्रं स्याद्बर्हिर्वेदितद्धर्म्माणां तु यद्वाक्यं तद्दर्शपूर्णमासाभ्यां सहैकं तेन वाक्येन सहैकवाक्यतां गतमित्यर्थस्तेन यत्तदेकवाक्यान्तर्गतं बर्हिस्तस्यैवैतद्धर्म्मप्राप्तिर्न्न भिन्नवाक्यगतस्य । न च पिण्डपितृयज्ञबर्हिर्दर्शपूर्णमासवाक्यान्तर्गतमतो न संभत्स्यत इति । ननु यदि दर्शपूर्णमासाभ्यां सहैकवाक्यत्वमिष्यते ततस्तत्प्रकरणं मुक्त्वा नाम्येन लभ्यत तच्च प्रकरणं प्रधानमात्रस्यैवेत्यङ्गानामसंबन्धः प्राप्नोति । नैष दोषः । सर्वथा लवनखननादयः तावन्न साक्षादङ्गेन प्रधानेन वा संबन्धं शक्नुवन्ति यत्र वेदिबर्हिषी तत्र गमिष्यन्ति वेदिबर्हिषोरपि हविरासादनेन संबन्धः । तच्च दर्शपूर्णमासप्रयोगवचनगृहीतमासादनं संबध्यते एवमङ्गहविरासादनमपि तत्रान्तर्गतं साङ्गस्य प्रधानस्यैकप्रयोगत्वात् । ननु च यथा प्रयाजादय एकप्रयोगवचनगृहीतत्वे ऽपि गुणानां च परार्थत्वादित्येवं

परस्पराङ्गत्वं न प्रतिपद्यन्ते तथाङ्गहविःसंबन्धं ब-
र्हिर्न प्रतिपद्यते। नैतदेवम्। यथैव हि प्रधानहविरा-
सादनमङ्गतया संबध्यते तथाङ्गहविरासादनमपि
अङ्गाङ्गतया संभन्त्स्यते। यदि च यद्दर्शपूर्णमासार्थं
हविस्तद्बर्हिष्यासादयतीत्येवं कल्प्यते ततस्तन्मात्रस्यैव
स्यान्न त्वेवमस्यानर्थक्यभयात्तु स्वरूपेऽतिक्रम्यमाणे किमि-
वमतिक्रमोऽस्तु स दर्शपूर्णमासार्थमुत यद्दर्शपूर्णमासोप-
कारीति। यदि तादर्थ्यं गृह्येत वाक्यस्यातिदूरं संकोचः
क्रियेत। तदुपकारित्वग्रहणे तु बहुतरविषयत्वं भवति।
यथा च तद्भवति तदनुग्रहीतव्यम्। अङ्गाङ्गमपि वि-
ना ऽपि तादर्थ्येन तदुपकारीति विज्ञायते। तावन्मा-
त्रमेव च तद्द्वारयुक्तं न तादर्थ्यम् अनुपकारिणि हि
स्थितं नोपकरोति नातदर्थं तथा च परार्थं त्वयमामा-
न्यमिति वक्ष्यति। विना ऽपि तादर्थ्येनाभ्युदितेष्ट्यां
दधिपयसोस्तदुपकारमात्रदर्शनात्प्रणीताधर्मप्राप्तिर्भव-
तीति। तस्मादेवं प्रकरणादेकवाक्यत्वं कल्प्यते यस्मिन्न-
क्रियमाणे दर्शपूर्णमासापूर्वं न सिध्यति तत्र तत्र क-
र्त्तव्या इति अङ्गहविर्भिरपि च विगुणैः प्रधानापूर्वं न
निष्पद्यते। तस्मात्प्रधानापूर्वप्रयुक्तानामिवाऽङ्गेष्वपि क्रि-
या युक्तेति।

## लिङ्गदर्शनाच्च ॥ ५ ॥

यदि चैवंजातीयकमङ्गप्रधानार्थं ततः प्रयाज-
शेषेण हवींष्यभिघारयतीत्येतदङ्गप्रधानार्थम्। तत्र च
क्रमवाक्येष्वयं क्रमो न्यायप्राप्तः सिद्धवदुच्यमानो हेतु-
वन्निगदो ऽर्थत्वादुपपद्यते स वै ध्रुवामेवाऽग्रे ऽभिघार-

यति । कुतस्ततो हि प्रथमावाज्यभागौ यच्च्यन्भवतीति । यद्याजरभागहविरप्यभिघारणीयं तत एवं वक्तव्यम् । अन्यथा हि ध्रुवायामुपांशुयाजार्थेन केवलमभिघारणं स्यात् । तत्र न चाग्रे ऽभिघारणं स्यान्न च ततो हि प्रथमावाज्यभागाविति हेतुः समर्थ्येत । तस्मात्सर्वार्थत्वमिति ।

## फलसंयोगात्तु स्वामियुक्तं प्रधानस्य ॥ ६ ॥

याजमानास्तु तत्प्रधानत्वात्कर्मवदित्यनेनाधिकरणेन येषां याजमानत्वं सिद्धं ते किं यजमानस्य कर्तृत्वांशेनाङ्गप्रधानार्था उत भोक्तृत्वांशेन केवलप्रधानार्था इति । किं प्राप्तं पूर्वेणाधिकरणेन सर्वार्थत्वं सर्वार्थे हि यजमाने ऽवस्थिताः शक्नुवन्ति सर्वेषामुपकर्तुं न च व्यावृत्तिकारणमस्तीति प्राप्ते ऽभिधीयते ।

येनैव हेतुनैतेषां स्वामिगामित्वनिश्चयः ।
तेनैव तु प्रधानार्थप्रतिपत्तिरपि स्फुटा ॥

यदि ह्येते कर्तृत्वांशपातिनो भवेयुस्ततः सर्वार्थत्वं प्रतिपद्येरन् भोक्तृत्वांशस्थास्त्वेते । स हि तद्विना नोपपद्यते कर्तृत्वं तु तदभावे ऽपि यथा भवति तथा सर्वलोकप्रत्यक्षम् ऋत्विजामपि च तत्संभवान्नैव तेभ्यो निवृत्तिः स्यात् । अभीष्टे चार्थे योग्यता ऽऽधानमाकाङ्क्षति । यत्र च योग्यत्वमनुपजातं न तु यजमानस्य कर्तृत्वस्वरूपमभीष्टं न च प्रागेभ्यो न निष्पन्नम् । योग्यतां चादधानाः क्रियाः संस्कारा इत्युच्यन्ते । तस्माद्भोक्तृत्वांशं

भजन्ते । यस्य च कर्म्मणः फलं यजमानेन भुज्यते त-
द्देशस्थास्तस्यैवोपकर्त्तुं शक्नुवन्ति नान्यस्य । प्रधानस्य
फलं पुरुषैर्भुज्यते नाङ्गानां क्रत्वर्थत्वात्तस्मात्प्रधान-
स्यैवंजातीयकाः । आह यदि क्रतोर्निर्वर्त्तका न पतन्ति
तत् फलस्यैवाङ्गं प्राप्नुवन्ति । नैष दोषः । एष एव
हि प्रधानस्योपकारो यदस्य फलग्रहणाय योग्यः कर्त्ता
क्रियते । ततश्च यथैवान्यान्यदृष्टार्थान्यङ्गानि फलयो-
ग्यतामपि कुर्वन्ति नाङ्गत्वात्प्रच्यवन्ते तथैवैते ऽपि द्रष्ट-
व्याः । प्रयोजनमग्निषोमीयादिविकारेषु गमनं वपना-
दीनामगमनं सिद्धान्ते ।

## चिकीर्षया च संयोगात् ॥ ७ ॥

पूर्व्वेणैव न्यायेन सौमिकी वेदिः केवलप्रधानार्था
विज्ञायते । इयति शक्यामहे ऽस्यां कर्तुमिति यच्चिकी-
र्षितं तदुद्देशेनैवमभिधीयते । फलवच्चिकीर्षितं नाङ्गानि ।
अचिकीर्षितत्वे सति चिकीर्षितसिद्ध्यर्थत्वेन करणादेव-
मपर्य्यवसिते चिन्तान्तरं तावत्प्रस्तौति ।

## तथा ऽभिधानेन ॥ ८ ॥

संयोगादिति वर्त्तते पौर्णमास्यमावास्याशब्दयोः
प्रधानमात्रवचनत्वादानर्थक्यात्तदङ्गेष्विरयेवमवतरतोः
प्रधानहविःष्वेव केवलेषु प्रवृत्तिस्तस्माच्चतुर्होत्रा मन्त्रेण
पञ्चहोत्रा च प्रधानहविर्मात्रमभिमृष्टव्यम् ।

## तद्युक्ते तु फलश्रुतिस्तस्मात्सर्व-चिकीर्षा स्यात् ॥ ९ ॥

वेदे देशविशेषात्मकत्वाद्देशकालयोश्च साङ्गप्रधानप्रयोगविषयत्वावधारणात्तदर्थत्वम् । यो ऽपि चिकीर्षासंयोगः सो ऽपि फलप्राप्तेः प्रयोगाधीनत्वात्तद्विषय एव ज्ञायते । तस्मात्साङ्गप्रधानार्थमित्यवधारणादङ्गार्थो ऽपि स्यादेवं च सत्यग्नीषोमीयादिविकारेषु निरूढपश्वादिषु कर्त्तव्या ।

## गुणाभिधानात्सर्वार्थमभिधानम् ॥ १० ॥

द्वितीयया यस्माद्गुणभूतमभिमर्शनं विज्ञायते तस्मात्सर्वार्थमित्यसंबद्धम् । स्थित एव गुणत्वे तद्विशेषचिन्तेयं प्रस्तुता । सुतरां च प्रातिपदिकार्थानुसारिणा द्वितीयार्थेन प्रधानहविर्मात्रगुणत्वं प्राप्नोति । तस्मादनुपपत्तिरेव । यच्च पौर्णमास्यर्थममावास्यार्थमिति चोक्तं तदपि पूर्वपक्षमेव साधयति । तेनैवं वक्तव्यम् । पौर्णमासीमभिमृशेदित्यत्र कालकर्मतत्समुदायानामनभिमष्टव्यत्वात्पौर्णमासीमिति गौणेन भवितव्यम् । तत्र प्रकृतिप्रत्ययार्थयोर्यद्यपि प्रत्ययार्थस्य प्राधान्यात्प्रातिपदिकं गौणमित्यापद्येत तथा ऽप्यत्र तावता ऽप्यभिमष्टव्यविशेषानवगमात्सर्वस्रुवादिविषयसंशयोपप्लवे सति विशेषो ऽन्यत एव लब्धव्य इति साकाङ्क्षत्वादसंदिग्धार्थपरिग्रहार्थं प्रथमप्रतीतत्वेन च प्रातिपदिकार्थं मुख्यमाश्रित्य विभक्तिः सप्तम्यर्थे ऽवकल्पते पौर्णमास्यामिति तदेव चाकाङ्क्षितम् । आसन्नहविरधिकारविधिना ऽभिमष्टव्यविशेषस्यावधारितत्वादतः कालद्वारेण

प्रयोगद्वारेण वा व्यवस्थार्थमेवेदं श्रवणमिति हविर्म्मार्शाभिमर्शनम्। अथापि पौर्णमास्यादिशब्देन हविर्लक्ष्यते तथाऽपि तदुपकारमात्रलक्षणात्सर्वार्थत्वसिद्धिः।

## दीक्षादक्षिणं तु वचनात्प्रधानस्य ॥ ११ ॥

फलसंयोगात्तु स्वामियुक्तं प्रधानस्येत्यनेनैव गतार्थत्वाद्दीक्षाणामनुदाहरणत्वम्। अन्ये तु समर्थयन्ते सर्वेषु सोमक्रयादिषु दीक्षितशब्देन विनियोगो दृश्यते। दीक्षाश्च दीक्षितत्वसिद्ध्यर्थाः। तच्च दीक्षितत्त्वमुपादीयमानत्वात्तत्र तत्र गुणत्वेन विवक्षितम्। अतोऽङ्गप्रधानार्थत्वप्रसक्तिः। दक्षिणानामृत्विगानमनार्थत्वादानमनस्य च माहात्म्योपादित्सया प्रयोगार्थता तस्माच्चिकीर्षान्यायेन साङ्गप्रधानप्रयोगविषयत्वमिति सर्वार्थत्वप्रसक्तिः। अपि च प्रत्यक्षमेवैतद्दृश्यते दक्षिणोपात्ता ऋत्विजोऽङ्गान्यपि कुर्वन्ति। इतरथा हि प्रधानमात्रमेव तत्परिक्रीताः कुर्य्युर्न्न च तावन्मात्रार्थं यजमानस्यैतैः परिक्रीतैः प्रयोजनम्। अतो यद्यत्परिक्रीताः करिष्यन्तीत्यवधार्य्यते तस्मै दक्षिणा। एवं च कर्तृतन्त्रत्वाभिधानमेकादशे योक्ष्यते। तस्मात्सर्वार्थत्वमिति प्राप्ते ऽभिधीयते। दीक्षाः सोमस्य दक्षिणाः सोमस्येति वचनात्प्रधानार्थता। यस्तु दीक्षितविनियोगो ऽङ्गेषु स पुरोडाशकपालादिवदप्रयोजकलक्षणापत्तेः प्रधानप्रयुक्तस्यैवेति ज्ञायते। दक्षिणाश्च प्रधानार्थाः सत्यः प्रसङ्गादङ्गानामुपकुर्वन्तीति वक्ष्यामः।

## निवृत्तिदर्शनाच्च ॥ १२ ॥

निरूढपशौ च षड्ढोतृहोमेन दीक्षाऽनुग्रहं वदन्नप्राप्तिं दर्शयति । सर्वार्थत्वे च स्यादेव दीक्षेति नान्येनानुगृह्येत । ननु चानङ्गत्वेऽप्यनुग्रहवचनमनाकाङ्क्षितत्वादनर्थमेव । नैष दोषः । प्रकृतौ परप्रयुक्तोपजीवनात्तत्कृत उपकार आसीदिति अप्रयोजकत्वात्तदभावे सति वैगुण्यमित्राशङ्क्यते तत्रानुग्रहवचनमुपपत्स्यते ।

## तथा यूपस्य वेदिः ॥ १३ ॥

अर्द्धमन्तर्वेदि मिनोत्यर्द्धं बहिर्वेदीति किमन्तर्वेद्येकदेशो यूपाङ्गत्वेन विधीयते अथ बहिर्वेदिदेशमिश्रसंधिदेशमात्रं लक्षयतीति । ननु च पुरस्तात्सर्वार्थत्वमवस्याप्येदानीमयुक्तो विचारः स्थितएतस्मिन्नधिकरणे तद्द्रष्टव्यम । यदि हि वाक्यसंयोगाद्यूपार्थता भवेत्कुतस्तदा कैमर्थ्यविचारावसरः । स्थिते पुनर्देशलक्षणार्थत्वे तदर्थत्वातदर्थत्वे युज्येते । किं प्राप्तं प्रकरणं बाधित्वा यूपस्य वाक्यसंयोगाद्भवितुमर्हति लक्षणा ह्येतरथा स्यान्न चान्तर्वेदिशब्दस्य श्रौता ऽर्थो न समवैति यतो लक्षणां प्रतिपद्यते । तस्मादियति शक्यामहद्दृत्यपि सामान्यशास्त्रं यूपविषयमेवापसंहृत्य वेदेर्यूपार्थत्वं प्रतिपत्तव्यम् । अथ वा पूर्वेणाधिकरणेन स्थिते साङ्गज्योतिष्टोमार्थत्वे किं यूपार्थत्वमप्यस्ति नास्तीति विचार्यते । ननु सर्वार्थत्वादेव सिद्धं यूपार्थत्वम् इति न विचारणीयम् । न तेन सिद्धं यूपस्य पश्वङ्गत्वात् । ज्योतिष्टोमस्य हि साङ्गस्य वेदिर्न पशोः । ननु च प-

शुरपि स्वाङ्गभूतामङ्गेभ्यो दास्यति दद्याद्यदि तस्य स्वमहिम्ना वेदिर्भवेत् प्रधानद्वारेण त्ववतरन्ती तत्स्वरूपमात्र एवावतिष्ठते । प्राप्ते च वेदिकार्ये अतिदेशेन प्राप्नुवन्तो दार्शपौर्णमासिकी वेदिं निराकृत्य पश्वादिषु सौमिकी निविशते सा प्राकृतेष्वेव वेदिकार्येषु विनियोक्तव्या । न चेदं यूपमाने प्राकृतं यतो वेदिं लभेत । तस्मादप्राप्तेर्यूपस्य लौकिक्येव देशबुद्ध्यान्तर्बहिर्वा माने प्राप्ते ऽनेन वचनेनाङ्गस्यान्तर्वेदिर्नियम्यते इति प्राप्ते ऽभिधीयते ।

## देशमात्रं वा शिष्येणैकवाक्यत्वात् ॥१२॥

उभाभ्यामप्यन्तर्वेदिबहिर्वेदिशब्दाभ्यां मध्यदेशो लक्ष्यते नाङ्गाङ्गिभावो विधीयते ।

कुतः कृतार्थसंयोगे देशकालोपलक्षणम् ।
सर्वेष्विष्टं कृतार्थौ च वेदियूपाविहान्यतः ॥

अङ्गाङ्गिभावे हि यूपो वा वेद्यङ्गं भवेत् वेदिर्वा यूपाङ्गं न चैकमप्युपपद्यते निराकाङ्क्षत्वाददृष्टकल्पनात् वाक्यभेदप्रसङ्गाच्च । न तावत्पशुबन्धव्यापृतस्य यूपस्य वेदिं प्रत्यपेक्षा ऽस्ति । नापि कर्तृहविस्तदुपकरणधारणव्यापृताया वेदेः सहस्रभागांशसम्बन्धिनि यूपे ऽपेक्षा न चान्यतरस्य दृष्टोपकारित्वमवकल्पते । किं चार्धं बहिर्वेदीत्यशिष्यं विध्यनुवादत्वासंभवात्स्वपक्षे । मत्पक्षे तु द्वाभ्यां विना देशविशेषोपलक्षणासंभवादवश्यं शासितव्यमेततु । कथं समस्तस्य यू-

मध्यान्तर्बहिर्वा माने प्राप्ते ऽर्द्धमन्तर्वेदीति नियम्यते द्वितीयस्याऽर्द्धस्य पुनरप्यनियमप्रसक्तौ अर्द्धं बहिर्वेदीत्यपि विधातव्यम् । ततश्चानेकार्थत्वाद्वाक्यभेदो मिनोत्याख्यातानुषङ्गक्लेशश्च प्रसज्यते । पाक्षिकस्य च नित्यवदनुवादो ऽनर्थकः कल्पयितव्यः । ननु चार्द्धस्यान्तर्वेदिसंबन्धे विहिते विध्यभावादर्द्धान्तरं बहिर्वेदि भविष्यति । भवेदेवं यदि नित्यमन्तर्वेदि बहिर्वेद्येव वा यूपमानं प्रसक्तं स्यात्समस्तान्तर्वेदिप्रसङ्गे हि सर्वस्यार्द्धपुनर्वचनसामर्थ्यात्परिसंख्यायेतरस्य बहिर्मानं गम्येत समस्तस्य वा बहिरेव प्रसङ्गे ऽर्द्धस्याविहितमिति तदवस्थमर्द्धान्तरमध्यवसीयेत । न त्वेतदुभयमप्यस्ति । अतश्चेद्दृशमवधारणमर्धमन्तर्वेद्येव न त्वर्द्धमेवान्तर्वेदीति तथा सति चार्द्धान्तरमनियतत्वात्कदाचिदन्तरपि प्राप्नोतीति न बहिर्भावः सिद्ध्यतीति । ननु च यदि समस्तमन्तर्वेदि मिनोति ततो ऽर्द्धमन्तर्वेदीति एवं विधिनैव कुर्यात् । कथं न करोति यदर्द्धं तत्तावन्नियमतो ऽन्तर्मिनोत्येतावच्च विहितं नेतरत्प्रतिषिद्धं तस्मादुभाभ्यां विशिष्ट एको देशो ऽभिधीयत इत्येवमवाक्यभेदः ।

## सामिधेनीस्तदन्वाहुरिति हविर्द्धानयोर्वचनात्सामिधेनीनाम् १३॥

उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुरिति श्रूयते । पूर्ववदेव संदेहविचारनिर्णयाः । कथं न गतार्थमिति चेत् । विस्पष्टार्थद्वयानुपादानात् । न त्वत्रैवं

दृश्यते इदं परस्याशिष्यमिति मम तु शिष्यमिति। कथं तर्हि सिद्धान्तसिद्धिः उच्यते।

## देशमात्रं वा प्रत्यक्षं ह्यर्थकर्म्म सोमस्य॥ १६॥

सोमधारणेन तावत्प्रत्यक्षं नैरपेक्ष्यं हविर्द्धानस्य सामिधेनीनां पुनः प्रकृतावेवाग्निसमिन्धनार्थत्वात् कॢप्तं प्रयोजनमिति नास्त्यङ्गाङ्गित्वापेक्षा। हविर्द्धानविशेषसंबन्धपरे वाक्ये सामान्यसम्बन्धशक्तिमपि कल्पयतः आग्नेय्यधिकरणोक्तो वाक्यभेदो योज्यः। विशेषेण सामान्याक्षेपाद्वाक्यभेदं परिहरतः सिद्धसामान्यसंबन्धेन सिद्धान्तपक्षेणार्थापत्तिक्षयो दर्शयितव्यः। अस्ति हि प्राकृतदेशोपलक्षणत्वेन हविर्द्धानयोरन्यतरस्य प्राप्तिः। तत्र विशेषमात्रं सुखेन विधीयते तस्मादपि देशलक्षणा।

## समाख्यानं च तद्वत्॥ १७॥

हविर्द्धानमिति अनन्यप्रयोजनस्य तादर्थ्यव्यपदेशो ऽवकल्पते। अन्यथा हि सामिधेनीधानमित्यपि स्यात्।

## शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्तस्मात्स्वयं प्रयोगे स्यात्॥१८॥

अतः परं समाख्यायाः सर्वैः सह विरोधाविरोधचिन्ता वर्त्तिष्यते। होता हौत्रमित्यादयः कथं विनियोजिका इति। तत्र प्रथमं तावदुपोद्घातः क्रियते यदि

होत्रादयो नानाभूता विद्यन्ते ततः क्व ते विनियुज्य-न्तामिति विचारो भवति यदि तु सर्व्वमेव कर्म्म यज-मानेन कर्त्तव्यं न कर्त्रन्तराणामवकाशो ऽस्ति ततस्त-त्समाख्योत्थापितो विरोधाविरोधविचारो नैव प्रस्ता-तव्य इति । तत्र दर्शपूर्णमासादीनि फलदक्षिणावन्ति कर्म्माण्युदाहरणम् । तेषु विचारः किं यजमानेनैव सर्वं प्रयोक्तव्यमुत प्रधानमात्रे ऽयजमाननियमः । किं वा प्रधानेष्वेव यजमानो ऽन्यत्रान्य एव । किं प्राप्तं सर्वं यजमानेनैव कर्त्तव्यमिति । कुतः । प्रयोगवचनस्यं ह्या-त्मनेपदं साङ्गायां भावनायां फलार्थिनं कर्त्तृत्वेन प्र-युङ्क्ते । स यत्रैव कर्त्ता न स्यात्तत्कृतमेवोपकारं न प्रा-प्नुयात्तस्मात्स्वयं कुर्य्यादिति । फलस्य चोत्पद्यमानस्यो-त्पादयितृत्वेन प्रयोक्ता यजमान एवोच्यते । होत्रा-दिसमाख्या च तस्यैव तत्तत्कुर्व्वाणस्यैकस्य कर्म्मभेदा-दित्यनेन न्यायेन भविष्यतीति मन्यते ।

## उत्सर्गे तु प्रधानत्वाच्छेषकारी प्रधानस्य तस्मादन्यः स्वयं वा स्यात् ॥ १६ ॥

प्रधानमात्रवाचिनो धातोः परेण प्रत्ययेन तन्मा-त्रस्यैव फलार्थिकर्तृकत्वं नियम्यते शेषाणां तु निर्वृ-त्तिमात्रं प्रतीयते न कर्तृविशेषः । तस्मात्तत्रानियमः । ननु च प्रधानसमानकर्तृकत्वादेवाङ्गानामपि स एव कर्त्ता सेत्स्यति । न तत्र प्रयोजकत्वेनापि कर्तृत्वानुग्र-हात् । द्रव्योत्सर्गे ह्यन्येन क्रियमाणे न किंचिद्यजमानेन

क्तं स्यादिति तं करोति। तत्र कृते परिक्रयादिना कारयन्न कर्तृत्वाच्च्यवते। केचित्तु सुतरामात्मनेपदेन प्रयोजकत्वमेवाभिधीयत इति समर्थयन्ते। कर्त्रभिप्रायक्रियाफलविवक्षितस्य ह्यात्मनेपदस्य णिजर्थ एव प्रेषणादिरूपेण संविधानात्मको वाच्यस्तथा च यजन्ति याजका इति प्रयोज्यव्यापारे परस्मैपदम्। यजते यजमान इति प्रयोजकव्यापारे आत्मनेपदं दृश्यते। न त्वेतद्युक्तम्। एवं हि सति प्रधानमपि यथा कथं चिदन्यैरेव कारयितव्यं भवेद्यदेव हि स्वयंकर्तृकं जातं तस्यैव फलं न प्राप्नुयात्। न च, यदृत्विजः कुर्वन्ति तस्य क्रत्वर्थत्वाद्यजमानगामि फलं युज्यते। कामं तु प्रधानकारिणो यजमानस्य यथा कथं चिदनुग्रहेण प्रयोजकत्वादृत्विग्व्यापारवचनं परस्मैपदं णिजर्थे वर्तेत नात्मनेपदं तस्मात्पूर्वेणैव व्याख्यानेन प्रधानादन्यस्य स्वयमन्यो वा कर्ता स्यादिति। तत्रापि तु प्रत्ययप्रतिपादिता भावना प्रत्यासन्नतया फलार्थिकर्तृत्वेन गम्यमाना कथं करणांशमात्र एवोपसंक्रियत इति वक्तव्यं तेनैवं व्याख्येयं नात्मनेपदेन फलार्थिकर्तृत्वं चोद्यते किं तर्हि भावनाविप्रकर्तृत्वस्य स्वतः फलसंबन्धित्वम्। अतश्च फलेन कर्तुरन्यत्र न गन्तव्यम्। न तु फलार्थिनोऽन्येन व्यापारकरणं विरुध्यते। तावता च सिद्धोऽङ्गेष्वनियम इति।

# अन्यो वा स्यात्परिक्रयाम्नाना-द्विप्रतिषेधात्प्रत्यगात्मनि॥२०॥

अन्वाहार्य्यद्वादशशतादिदानं कर्म्मसंयुक्तेभ्यो ऽभिधानात्परिक्रयार्थं वा कर्म्मसंयोगादिति दशमे वक्ष्यति । स्वभावतस्तु परिक्रयः परत्र क्रियते नात्मनि विरोधात् । तत्र यदि कदा चित्स्वयमेवाङ्गानि यजमानः कुर्य्यात्ततः परिक्रयासंभवात्परिक्रयो न क्रियेत तत्रास्य नित्यवदाम्नानं विरुध्येत तस्मात्तन्नित्यतां कर्त्तुमवश्यं परिक्रयार्हाणि कर्त्रन्तराणि उपादातव्यान्यतश्च क्व चित्स्वयंकरणात्क्वचित्संविधानाद्यजमानस्य कर्तृत्वम् । आत्मनेपदस्यापि परिक्रयवतीं भावनामाश्रितस्येदृशेनैव कर्तृत्वेन फलोपयोगः समानकर्तृक इत्यर्थो न विरोत्स्यते ।

## तत्रार्थात्कर्तृपरिमाणं स्यादनियमो ऽविशेषात् ॥ २१ ॥

एकस्य द्वयोर्वोपादाने परिक्रयः शक्यः कर्त्तुमित्यनियमः । अथ वा फलसमानकर्तृकत्वे सामानाधिकरण्यात्मनेपदाभ्यां समस्तस्य प्रयोगस्य प्राप्ते यन्मात्रमेवाबाधित्वा परिक्रयविधिरशक्यस्तदेव बाधितव्यं चैकेन कर्त्रा यत्किंचित्कुर्वतोपपन्न इति नानेकं बाधितव्यमिति ।

## अपि वा श्रुतिभेदात्प्रतिनामधेयं स्युः ॥ २२ ॥

भिन्नसमाख्यानियतकर्तृकपदार्थयुक्तभावनाविधिना तावतामुपादानमिति विज्ञेयं भवति । संज्ञा चोत्पत्तिसंयोगादिति चैष न्यायो यथा, कर्म्मभेदं बोधयितुं

समर्थस्तथा कर्तृभेदमपीति यावत्समाख्यं कर्त्तार उपादातव्याः।

## एकस्य कर्म्मभेदादिति चेत् ॥२३॥

व्याप्रियमाणानामेताः समाख्या उपलभ्यन्ते। न च लोकादवगता इति यूपादिवत्कार्य्यतस्तावत्परिच्छिद्यन्ते। ततश्च पाचकादिवत्तत्तद्धौत्रादिकर्म्म कुर्वन् होत्रादिशब्दैरभिधास्यतइत्यभेदः।

## नोत्पत्तौ हि ॥ २४ ॥

यदि हि कर्म्मविनियोगवेलायामेतदुत्तरकालं चैताः समाख्याः श्रूयेरन्नेवं सति न भिन्द्युरपि। वरणं त्वत्यन्ताप्रवृत्तानां प्रवर्त्तनार्थमभ्यर्थनम्। तत्रैताः श्रूयन्ते ब्रह्माणं वृणीतइत्यादि । न च तदानीं निमित्तान्तरं दृश्यते यत्कृतः समाख्याभेदो भवेत् वरणान्यपि चैतान्येकस्यैवं पुनः श्रुतिरित्येवं गुणस्यापूर्व्वसंयोग इत्येवं वा यावच्छ्रुति भिद्यन्ते। तद्भेदाच्चोपादेयानामृत्विजामपि तत्परिमाण एव भेदः। समाख्यानामपि च प्रागनुपलब्धेरुत्तरकालं च सिद्धवद्व्यवहारादवरणनिमित्ततैव गम्यते। निमित्तभेदाच्च नैमित्तिकभेदसिद्धिः। दृष्टार्थत्वाच्च नैकस्यैव कर्त्तुः पुनः पुनर्वरणं कर्त्तुं शक्यते सकृदुपात्तस्य पुनरुपादानानुपपत्तेः। उत्पत्तिवाक्यशिष्टवरणव्यबाधविकल्पासंभवाच्च न वाक्यं तेनैव वरणेन क्रियमाणान्तरसंबद्धम्। अतोऽपि वरणानि भिद्यन्ते। सर्वाणि च तान्यैन्द्रवायवादिग्रहणवदपर्य्यायविधायिना प्रयोगवचनेन गृह्यन्ते तद्ग्रहणवशेन च सर्वर्त्विजां ग्रहणम्।

यतो यावद्वरणाम्नत्विजां भेदसिद्धिः । यत्तु भाष्यकारेणो-क्तं तस्मादेषां वरणे संकीर्त्तनम् न विधिरित्यादि त-द्वविहितवरणानियमप्राप्त्यभावादयुक्तं न चैतावती वा-क्यराशिः कल्पितैकवाक्यत्वस्य सुखतरोपायप्रचयलब्ध-संख्यामात्रप्रत्यायनं फलं भवितुमर्हति । तेन वरणवि-धिनैव निष्पादितो प्रथमशिष्टैव संख्या सेत्स्यतीत्येतदेव समर्थयितव्यम् । न किंचित्तया विरहितया ।

## चमसाध्वर्यवश्च तैर्व्यपदेशात् ॥२५॥

अध्वर्य्यव इति समाख्यानात्तेषां चमससंबन्धा-दध्वर्यु पुरुषा एव चमसाध्वर्य्यव इति प्राप्ते ऽभिधीयते । पृथक्त्वानियतत्वाद्व्यपदेशानां सर्वैश्चतैस्तुल्यवत्पृथक्त्वे न व्यपदेशादुत्पत्तौ च वरणान्तराम्नानात्पूर्ववदेव भेदः । यद्यपि च यजमानेन व्रियन्ते तथा ऽपि तदाज्ञाकरत्वेन व्रियमाणत्वाद्भवत्येव तदीयत्वव्यपदेशः ।

## उत्पत्तौ तु बहुश्रुतेः ॥ २६ ॥

## दशत्वं लिङ्गदर्शनात् ॥ २७ ॥

बहुत्वानियमे प्रथमं वा नियम्येतेति चिरवे प्राप्ते दशपेये ज्योतिष्टोमविकारे दशत्वानुवादात्प्रकृतौ च दश व्रियन्तइति विज्ञायते । स्वामिदशत्वाच्चमसदश-त्वाच्च दशत्वप्राप्तिः ।

## शमिता च शब्दभेदात् ॥२८॥

## प्रकरणाद्वोत्पत्त्यसंयोगात् ॥२९॥

उत्पत्तिगता समाख्या भेदिका भवति । न चेयं तद्गता । तेनैकस्य कर्म्मभेदादित्यवमेव भवति । नन्व-ध्वर्य्वादिषु व्याप्रियमाणेषु शमिता पशुं कण्ठे गृह्णातीति श्रवणाद्भेदः स्यान्नैष दोषः । य एव कश्चिदव्यापृतः स एव ग्रहीष्यति । न च तदा सर्वोध्वर्य्युपुरुषाणां सर्व-र्त्विजां वा व्यापारो विद्यते । तदेतद्वच्यतीतरमन्यस्तेषां यतो विशेषः स्यादिति । प्राप्त्यभावाच्च यद्यब्राह्मणः स्या-दिति लिङ्गमसाधकमतो बलाद्यजमानविषयं क-ल्प्यते । याजमानप्रकरणाम्नानाच्च शामितस्य न कथं चिदब्राह्मणविषयत्वं विज्ञायते हिंसात्वाद्ब्राह्मणो ने-च्छेदिति चेत्तुल्यमेतदब्राह्मणस्यापि । स हि मन्दप्रती-कारः सुतरां प्रत्यवैति । तेन यथैव शूद्रादिः कथं चि-दनिच्छन्कार्य्यते तथैव यो दानादिवशीकृतः करिष्यति सो ऽनुष्ठास्यतीत्यविरोधः । एतेनैव हेतुना ऽऽर्त्विज्यं निन्द्यते ।

## उपगाश्च लिङ्गदर्शनात् ॥३०॥

## विक्रयी त्वन्यः कर्म्मणो ऽचो-दितत्वात् ॥३१॥

## कर्म्मकार्य्यात्सर्वेषामृत्विक्त्वम-विशेषात् ॥ ३२ ॥

ऋत्विक्शब्दो हि निपात्यमान एव उपपदधातुप्रत्य-यसमन्विते ऽर्थे वर्त्तते ऋतौ यजन्तीति ऋत्विजः । एत-

स्याच्चेत्कारणादृत्विजो भवन्ति हन्त सर्वेषां तदविशि-
ष्टमिति तदनुसारमृत्विक्त्वमपि सर्वेषामेव प्राप्तम् अत-
श्चत्वारः पञ्च षट् सप्तदशेत्याद्या अवयवा अप्येतस्य म-
हान्त इत्येवं स्तोतुमवयुत्यवादः ।

## न वा परिसंख्यानात् ॥३३॥

परिसंख्यानादिति भाष्यकारेण परिसंख्यैव व्या-
ख्याता सप्तदशस्वन्येषु च प्राप्तवत्सु सप्तदशपुनःश्रवणं
न तावन्मात्रपरिग्रहार्थं यो ऽर्थादितराभावप्रत्ययस्तमा-
श्रयितुं न सप्तदशस्वरूपं प्रत्यापयितुं । सर्वत्र हि द्वयोः
सबन्धे कृते तत्स्वरूपं संसर्गश्च प्रतीयते ऽन्यनिवृत्तिश्च ।
क्व चिच्च किं चित्प्रयोजनवशेन विवक्ष्यते । स्वरूपसंस-
र्गासंभवे च बलादेव विधिरितरनिवृत्तिप्रयोजनो भवति
अतश्च विदोषत्वमदोषः । स्वार्थस्य प्राप्तत्वेनैव हेयत्वा-
त्प्रतीतस्य च परार्थस्यापरिग्रहे विध्यानर्थक्यात् । परस्तु
कर्मकरणमेव हेतुं परिगृह्य सति निमित्ते ऽन्येष्वपि
शब्दप्रवृत्त्यवश्यंभावित्वं मत्वा ऽऽह । ननु प्रतिषिध्यमा-
नेष्वपीति । कार्य्यप्रतिषेधेनैव तावत्प्रक्रमते सर्वत्र हि
स्वरूपप्रतिषेधासंभवात्कार्य्यं प्रतिषिध्यते । तद्यथा न
ममैष पुत्रः पुत्रकार्य्यं न प्रवर्त्तते इत्यर्थः । एवं यो ऽय-
मर्थात्सप्तदशभ्यो ऽधिकानां प्रतिषेधः प्रतीयते स का-
र्य्यविषयो न स्वरूपविषय इति द्रष्टव्यम् । वरणं तु
शब्दप्रवृत्तिनिमित्तत्वादनुदाहरणमिति चेत् नास्मिन्पक्षे
कर्मयोगादेव शब्दप्रयोगसिद्धेरितरस्तु स्वरूपाप्रतिषेधा-
त्तन्निमित्तं कार्य्यमपि दुष्प्रतिषेधमिति कथमतो यज-
तां तेषामृत्विक्त्वं न स्यादित्याह । सिद्धान्तवादी तु तस्य-

नोत्तरं विवक्षमाणा एवं तर्हि द्विविधो ऽयमित्यादि प्र-
क्रमते। यद्येष यौगिकः स्यात्ततो न कुतश्चिन्निवर्त्तेत
संस्कारशब्दस्त्वयं वरणभरणे हि संस्कारौ ते येषां न
स्तो न ते सत्यपि क्रियायोगे तच्छब्दवाच्या भविष्यन्ति
ते च वरणभरणे सप्तदशानामेव यजमानेन क्रियेते
तन्निमित्तत्त्वाश्रयणे च सप्तदशर्त्विज इत्यनुवादो ऽव-
कल्पिष्यते अन्यथा त्ववयवानुवादो मृषात्वरूपः क-
ल्प्येत तस्मान्नातिप्रसङ्गः। ननु च ये ऋत्विजस्तेषां
वरणभरणे येषां च ते ते ऋत्विज इतीतरेतरा-
श्रयं प्राप्नोति नैष दोषः। प्रथमं तावदाम्नस्येनैषा
वचनव्यक्तिरन्विष्यते। ये ऋत्विजस्तेषां वरणभर-
णे इति यदा तु वृत्तादिवत्ते लोकव्यवहारेष्वप्र-
सिद्धास्तदार्थोदयमर्थो भवति वरणेन र्ऋत्विजः क-
रोतीति। यथैवास्य सूत्रस्य शाटकं वयेत्युक्ते वानेन
शाटकः क्रियतइति हि भाविनि संज्ञाविज्ञानादविरोधो
विज्ञायते तथैवात्र प्रत्येतव्यम्। एतेनाध्वर्युं वृणी-
तइति तद्विशेषवचनानि व्याख्यातानि। एवं च व्रि-
यमाणानामृत्विजां द्वितीयानिर्देशो ऽवकल्पिष्यते।
वरणं चाधानवत्कर्मौपयिकांस्तानुत्पादयदृष्टार्थं भवि-
ष्यति। वेदपौर्वापर्यपर्यालोचनात्तु ते वरणेन क्रि-
यन्तइत्यवसानान्नाप्रसिद्धिः। न त्विदं निपातनाख्या-
नद्वारेण क्रतुयजननिमित्तत्वं गम्यमानं सत्परित्यक्तुं
युज्यते। न च वरणभरणयोः सिद्धर्त्विक्संबन्धित्वेन ता-
नुद्दिश्य श्रूयमाणयोर्विपरीता वचनव्यक्तिर्युक्ता। य-
च्चाप्रसिद्धाः संस्कर्त्तुं न शक्यन्तइति वरणे ऽप्येवं तु-
ल्यम्। न हि कश्चिदप्रसिद्धं वस्तु कुरुष्वेत्युक्तो ऽध्य-

वक्ष्यति । नापि तेन व्यापृतेनापि तन्निमित्ता निष्पत्ति-रध्यवसीयते । यदि तु वेदवाक्यपौर्वापर्य्येण ज्ञायते ऋ-त्वृत्त्यते ततः सिद्धानामेव संस्कारः सुखतरमध्यवसी-यते । जानाति ह्येवं वरणं कुर्वन्यथा वेदस्य प्रसिद्धा एव के चिदृत्विजो मम तु ते वरणद्वारेण प्रसिद्ध्यन्ति प्राक्तस्मादन्येनानवधारितत्वादथ वा तस्यापि सामा-न्यतो ऽस्त्येव प्रसिद्धिः । सर्वो हि भावः केन चिदा-त्मना सिद्धमव्यवहारं साधयति सर्वात्मिकायाः सिद्धेः क्व चिदप्यभावात् । अतो ये ऋतौ यजन्ति ये वा ऽध्व-र्य्यवादिं कुर्वन्ति त ऋत्विजः के च ते ये तत्समर्थाः सा-मर्थ्यरहितानामनधिकारात्के च समर्था ये विद्वांसः त-त्रापि स्मृतिप्रमाण्याद्ब्राह्मणास्तदविशेषप्रसङ्गे पुन-र्विशेषो भवति वरणोपात्ता यइति ततो ऽपि पु-नर्दक्षिणाभिर्म्रियमाणा इति सेयम् एतैर्विशेषैः शब्दार्थसंबन्धव्युत्पत्तिर्भवति । विज्ञानं च तद्विष-यमन्यथा ऽन्यथा च प्रसज्यमानं विशेषविषयमुपसं-ह्रियमाणमक्रियमाणमेव सिद्धमृत्विक्त्वम् । अपि च व-रणभरणाभ्यामृत्विजो वोत्पाद्येरन् ऋत्विक्त्वम् वा तत्र ऋत्विजस्तावन्मातापितृभ्यामेवोत्पादिता इति न पुनरु-त्पत्तिमर्पेक्षन्ते । तथा योग्यतालक्षणमृत्विक्त्वमध्ययन-श्रवणाभ्यां सिद्धमिति न पुनः साधनीयम् । वक्ष्यति च याजमानास्त्वित्यत्र न योग्यतैषां यजमानेन कर्त्तव्येति । सर्वत्र च यदनुत्पन्नं तदुत्पाद्यते किं चैषां प्राग्वरणाद-नुत्पन्नं कर्म्म प्रस्थानममम् । ननु ऋत्विक्त्वमप्यनुत्पन्नम् । सत्यं तत्तु पश्चादप्युत्पद्यमानं न पश्यामः । अथ यदु-त्पद्यते तदेव ऋत्विक्त्वं तथा सत्यानुमननमेव तन्नान्यत्

किं चिन्न चेदमदृष्टमृत्विक्त्वं यस्य हि कार्यमदृष्टं भवति तत्स्वरूपमप्यदृष्टं भवेत्। ऋत्विक्कार्य्यं तु कर्म्मनिर्वृत्ति-दृष्टैव सा कथमदृष्टमाध्या भविष्यति यावता च सा भवति तत्सर्वं विद्वत्त्वब्राह्मणत्वादि दृश्यते एव। यत्त्व-दृष्टं किं चित्तत्प्रकरणवशात्कर्म्मप्रयोगवचनेन गृह्यमाणं तदर्थमेव नाध्वर्य्वादित्वे व्याप्रियते। न च तद्वरणभर-णाभ्यां जायतइति तयोरनिमित्तत्वं भवति। आहवनी-यादीनां त्वप्रकरणोत्पत्तीनामदृष्टोपकाराणामनुत्पन्नाव-स्थानां संस्कारविधानादुपपन्नमुत्पाद्यत्वम्। न हि तत्र होमादिभिस्त्यज्यमानमिति द्रव्याधारो ऽपेक्षितस्तेनाव-श्यं तत्संबन्धाददृष्टमेवाभ्युपगन्तव्यम्। न च तदग्निमा-त्रात्सिद्ध्यतीति तन्निर्वृत्त्यर्थमदृष्टमेवाहवनीयादित्वमपे-क्षितम्। अतो नैष दृष्टान्तः। यदि चादृष्टमृत्विक्त्वं व-रणभरणाभ्यां जन्येत ततः सत्त्रे ऽपि यजमानेषु तदाधा-तव्यं तद्विशेषाश्चाध्वर्य्वादयो दीक्षावाक्ये ऽनूद्यन्तइति वरणभरणे कर्तव्ये स्याताम्। तत्र वरणमृत्विजामा-नमनार्हत्वात्सत्त्रे न स्यात्स्वकर्म्मत्वात्। परिक्रयश्च ता-दर्थ्यादिति च विरुध्यते। तस्मात्कर्म्मयोग्यतया ऽवधा-रितानामेव वरणभरणाभ्यामुपादाननियमः कर्म्मार्थः क्रियते। ऋत्विक्शब्दश्चावैगुण्यात्तद्विषय एवोपसंक्रिय-माणः सत्तो ऽप्यन्यान्याश्रयान्नालम्बते। सत्त्रे तु स्वयंक-र्तृकत्वाद्वरणभरणयोरनपेक्षितयोरग्रहणाद्विनैव ताभ्या-मवैगुण्यमिति योग्यतामात्रेणैवाध्वर्य्युत्वादिसिद्धिः। त-द्यथा पौर्णमास्यां विना ऽपि शाखापरिवासनेन यदेवा-ङ्गारापोहनक्षमं द्रव्यं स एवोपवेष इत्यदोषः। तस्मा-द्यथा यूपस्य स्वरुं करोतीत्यत्रादाने कर्म्मशब्द इति व-

च्यति तथा ऽत्र भाष्यकारस्य द्रष्टव्यम् ।

## पक्षेणेति चेत् ॥ ३४ ॥

## न सर्वेषामधिकारः ॥ ३५ ॥

वैश्वानरद्वादशकपालाधिकारे ह्यष्टत्वादय उच्चार्यमाणाः स्वरूपेणानुपयुज्यमानाः शक्नुवन्त्यवयवत्वं समर्थयितुम् । स्तुत्या चोपयुज्यन्ते । न त्विह परसंख्योपात्ता यदधिकारात्सप्तदशत्वमवयवः प्रतीयेत स्तुत्यर्थं च स्यात्तस्मादृत्विक्त्वोपसंहारार्थमेवैतदिति सप्तदशर्त्विजः ।

## नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् ॥ ३६ ॥

प्रकृतानां ये के चित्सप्तदशेति प्राप्ते ऽभिधीयते । सामानाधिकरण्यप्रयोगान्नियमः तच्च दक्षिणादानक्रमत्वाश्रयगतं ब्रह्मादीनां दृश्यते न चमसाध्वर्यूणाम् । यद्यपि च सिद्धर्त्विक्त्वमनूद्यमानं न शक्यमुपसंहर्त्तुमिति बुद्धिर्भवति तथा ऽपि सप्तदशश्रुत्यपेक्षितविशेषावस्थानं तदन्वेव वेदेन सिद्धवदाश्रितमतो ऽस्माकमेवं परिच्छेदो भवति नूनमेत एवर्त्विज इति ।

## उक्त्वा च यजमानत्वं तेषां दीक्षाविधानात् ॥ ३७ ॥

ये ऋत्विजस्ते यजमाना इति यजमानर्त्विक्शब्दौ समानविषयौ नियम्य यजमानसंस्कारं दीक्षां ब्रह्मादिषु क्रमार्थमनुवदन्नेतेषु तौ द्वावपीति दर्शयति ।

तस्माद्ब्रह्मत्वादिकरणयोग्येष्वेवर्त्तौ यजत्म् ऋत्विक्त्वं न सर्वेषु। तद्विषयमेव चर्तुयजनं शब्दस्य प्रवृत्तिनिमित्तम। यथा सास्नादिमद्गमनं गोशब्दस्य। यथा धाय्याशब्दः सामिधेनीषु निपात्यमानस्तास्वेवेत्यवधारणान्नान्यासु धीयमानास्वपि धाय्याशब्दवाच्यत्वं भवतीत्यवधार्यते। तथैवर्त्ताविव यजत्म् भवति न तु भवत्येवेत्यवधारयितव्यम्।

## स्वामिसप्तदशाः कर्म्मसामान्यात्॥ ३८॥

दीक्षादक्षिणावाक्ययोः षोडशानां संकीर्त्तनात्तावन्तोऽवधारिताः। सप्तदशः कस्तेषामिति न ज्ञायते। सदस्ययजमानचमसाध्वर्य्यवश्चावशिष्यन्ते। तत्र चमसाध्वर्य्यूणां तुल्यकल्पत्वादन्यतरावधारणप्रमाणं नाप्नोति सदस्ययजमानयोरन्यतरः संदिह्यते तत्र कर्म्मकरत्वसामान्यात्सदस्यग्रहणप्रसक्तावभिधीयते। स्वामिसप्तदशाः स्युरिति। कथं पुनः पूर्ववत्तु यजनकर्म्मनिमित्तत्वमनभ्युपगम्याधुना तत्सामान्यात्स्वामिनः ऋत्विक्कर्मोऽभिधीयते। सदस्यं वृणीतइति चोत्पत्तिसंयोगादध्वर्य्वादिवद्भेदः। न च ब्रह्मण्यवयवप्रसिद्धिः संभवति समुदायप्रसिद्ध्या बाधितत्वात्। न च ब्रह्मणः पुनर्वरणं विधातुमनुवदितुं वा शक्यमध्वर्य्वादिष्वप्येवमेव प्रसङ्गात्। सर्वेषु चोपहवादिषु ब्रह्ममन्त्रव्यतिरेकेणास्य मन्त्रः पठ्यते। तत्र चाग्न्याध्यो विकल्प आश्रीयेत। न च चमससंबन्धेऽपि ब्रह्मणः संकीर्त्तनं सद-

स्यशब्देनोपयुज्यते । सामर्थ्याच्चिम्नेन चोपद्रष्टा सदस्येनावश्यं भवितव्यम् । सो ऽपि च प्रत्यवेक्षणाद्दृतौ यजतीति शक्यो वक्तुम् सर्वे याज्ञिकाश्च भेदेन तं हृयते । तस्मादयुक्ता सदस्यनिराक्रियेति । उच्यते ।

क्रत्वङ्गत्वेन नैवेह सदस्यस्य निराक्रिया ।
चमसाध्वर्युवत्त्वेष नर्त्विगित्यभिधीयते ॥

सदस्यो हि भेदेन वरीतव्य एव न च प्रश्ना सदस्यशब्देनोच्यते । क्रतुयजने सति वरणेनर्त्विक्त्वनियमाद्दक्षिणाभागसंबन्धद्वादशाह्दीक्षावाक्ययोश्चासंकीर्त्तनादृत्विगिति नोच्यते । यथा सत्यपि वरणे क्रतुयजनसंबन्धे च कारणद्वयासंभवाच्चमसाध्वर्य्यव ऋत्विजो नोक्ताः । स्वामिनस्तु यद्यपि च वरणं नास्ति तथा ऽप्यन्यत्सर्वमस्तीति युक्तमृत्विक्त्वम । यत्तु सदस्यो ऽपि प्रत्यवेक्षणाद्यजतीति । वचनसामर्थ्यादेवासौ व्रियते न तु कश्चित्पदार्थस्तदधीनः येनास्य व्यपदेशः स्यान्न च प्रत्यवेक्षणं नाम कश्चित्पदार्थो येनास्य कर्तृविशेषः केनचित्प्रमाणेन नियम्येत । तस्मात्सत्येव सदस्ये सप्तदश स्वामिसप्तदशा इति । यत्तु भाष्यकारेण किंचित्सदस्यनिराकरणपरमुक्तं तदृत्विक्त्वनिराकरणपरस्यातिरभसवचनमित्युपेक्षणीयम् ।

## ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात् ॥ ३८ ॥

एवं कर्तृभेदं प्रतिपाद्येदानीं समाख्याविनियोगस्य पूर्वपक्षं रचयति स्म तत्र ते सर्वार्था इति । न ज्ञायते किं क्र-

स्वर्थं पुरुषार्थाभिप्रायमुत क्रत्वर्थसर्वार्थाभिप्रायम् तत्राऽपि किं वाक्यसंयुक्तसर्वार्था उताऽसंयुक्तसर्वार्थाः । यदि तावत् पुरुषार्था अपीत्यभिप्रायः स वरणभरणयोः प्रकरणाम्नानेन क्रत्वर्थत्वादयुक्तः । उक्तं हि । प्रकरणविशेषाद्वा तद्युक्तस्य तत्संस्कारो द्रव्यवदित्यादिषु । तथैकादशे वक्ष्यति निर्देशाद्वा वैदिकानां स्यादिति । तस्मादेवं तावन्न सर्वार्थत्वम् । नापि संयुक्तेषु तान्पुरो ऽध्वर्युर्विभजतीत्यादिकश्रुतानामन्येषामवतरणमस्तीति । यानि त्वसंयुक्तानि कार्य्याणि तानि यत्र तत्र वेदे पठितानि येन केन चित्कर्त्रा यथासामर्थ्यं कर्त्तव्यानीति सर्वार्थाः । प्रयुक्तत्वादिति सर्वाणि हि कार्य्याणि शक्नुवन्ति तान्प्रयोक्तुम् । तथा ते ऽपि कार्य्याणि सर्वं पुरुषकार्य्यमिति यद्यत्कर्म्माणि पुरुषैः प्रावचनविशेषात्स्वसामर्थ्येन शक्यते तत्तदित्येवं युज्यते न पुरुषार्थाभिप्रायेण । ये पुनराहवनीयादयस्तेषां सर्वार्थत्वमप्रस्तुतमेव न च प्रसङ्गादुच्यते । स्वकालत्वस्य हेतोरप्यसमर्थत्वात् । न च तस्योत्तरपक्षे कश्चित्पक्षस्य हेतोर्वा परामर्शो ऽस्ति । यदि च लौकिककार्य्यापेक्षया सर्वार्थत्वमभिधीयते ततो विहारो लौकिकानामर्थं साधयेत्प्रभुत्वादित्युक्त्वा निर्देशाद्वा वैदिकानां स्यादित्यत्र निर्णीतत्वादविचार्य्यम् । यदपि वेदविहिताग्निकार्य्यसर्वार्थत्वं प्रकृतिविकृत्योः तदप्यग्निमुपनिधाय स्रुवते इत्युदाहृत्य विशये लौकिके स्यात्सर्वार्थत्वान्न वैदिकमर्थनिर्देशात् । तथोत्पत्तिरितरेषां धिष्ण्याग्नीनां स्यादिति निर्णीतत्वादविचार्यम् । सिद्धान्तवचनमेवैतन्निराकरणोक्त्यभावात् । तस्मादेवं वर्ण्यते । नैवेदमग्नीनां स-

वार्थत्वं पूर्वपक्षीकृतं किं तर्ह्यधिकरणान्तरसूत्रोक्तन्यायप्रतिपादितानुमितपूर्वपक्षः सिद्धान्त एवायं सूत्रवाक्यभेदेनोच्यते न चैतदग्निकार्यापेक्षया सर्वार्थत्वं किं तर्हि प्रकृतिविकृत्यपेक्षया । तत्रानारभ्यवादन्यायेनाधानवदेव पूर्वोत्तरपक्षौ रचयितव्यौ किमाहवनीयादयः प्रकृत्यर्था ग्राह्या स्विदुभयार्था इति । तत्र तत्प्रकृत्यर्थं यथा ऽनारभ्यवादाः प्रकृतौ वा द्विरुक्तत्वादित्येवं प्राप्ते ऽभिधीयते अग्नयः सर्वार्थाः प्रकृतिविकृत्यर्था भवेयुः । कुतः । स्वकालत्वात्स्वतन्त्रोत्पत्तित्वादित्यर्थः । तदेतद्दर्शितं सर्वार्थं वा ऽऽधानस्य स्वकालत्वादित्यत्र । न त्वेतत्सूत्रविषयं सर्वार्थत्वमवकल्पते ।

द्वारं येषु पराधीनं तेषु तत्प्राप्त्यपेक्षया ।
प्राप्नुवन्तीदृशा भावा न स्वतन्त्राः कथं चन ॥
शास्त्रेण चोदिता ये हि दर्विहोमाः स्वरूपतः ।
तेष्वेवाहवनीयः स्यान्न यागेष्वप्यचोदनात् ॥

यत् जुह्वति तदाहवनीये इति श्रूयते न यद्यजतीति तेनावश्यमाहवनीयचोदनया तावत्प्रतीक्षितव्यं यावच्चतुरवत्तं जुहोति यद्ग्रहम् जुहोति यच्चमसान् जुहोतीति चातिदेशेन संबन्धाद्वारं प्राप्तम् ।

ततश्चाहवनीयेन सहैवास्यातिदेशतः ।
प्रकृतौ वा द्विरुक्तत्वादित्ययं निश्चयो भवेत् ॥

तथा च तासामेभिः प्रकृतितः प्रयाजवदिति सिद्धवत्प्रकृत्यर्थत्वं दर्शितम् । तथा वैकृतचरुपुरोडाशानां प्रत्यक्षहविःश्रपणविधानाद्गार्हपत्यप्राप्तिद्वारं नास्तीत्यवश्यं गार्हपत्यमेव श्रपणं प्रकृतितः प्राप्नुवदप-

चिन्तव्यम् अग्निषु पर्य्यवसितम् । अतश्चोत्तरं सूत्रमारभ्यते ।

## तत्संयोगात्कर्म्मणो व्यवस्था स्यात्संयोगस्यार्थवत्त्वात् ॥४०॥

समाख्यासंयोगाद्व्यवस्था भवेन्न हि हौत्रमकुर्वतो होतृसमाख्या ऽर्थवती भवति । नापि तेनाक्रियमाणस्य हौत्रव्यपदेशो ऽवकल्पते । तस्मादन्यथा ऽनुपपत्त्या कल्पितया श्रुत्या विनियोगः । तत्र केचिदाहुः । अन्योन्यनिरपेक्षयोरेव रूढिरूपेण कर्तृकर्म्मसमाख्ययोः प्रसिद्धयोरन्तरसारूप्येणोपतिष्ठमानयोर्विनियोजकत्वमिति । कुतः ।

संयोगः पूर्वसिद्धो हि निमित्तत्वं प्रपद्यते ।
न चेह प्राक्समाख्यानात्किं चित्संयोगकारणम् ॥

होतृशब्दस्तावन्न हौत्रनिमित्त इति राजशब्दवदेव प्रत्ययलोपप्रातिपदिकप्रत्यापत्त्योरस्मरणादवगतमेतत् । न च राजशब्दादिव राज्यशब्दं होतृशब्दाद्धौत्रशब्दः शक्यः कल्पयितुं न हि यथा तत्र मन्वादिभिः क्षत्रियस्य रक्षणं विहितं तद्राजकर्म्मत्वेन ज्ञायमानं प्रत्ययार्थत्वं प्रतिपद्यते तथेह केन चित्साभिधेन्यनुवचनादेर्हौत्रकर्म्मत्वं प्रसिद्धं यन्निमित्ता समाख्या स्यान्न चैवं सति समाख्या विनियोक्त्रीत्यवसीयते । कथं तर्ह्यसत्यामवयवव्युत्पत्तौ विनियोगः । उक्तमेतच्छब्दसारूप्यमात्रादिति । न त्वेतद्युक्तम् । यदि होतुः कर्म्म हौत्रमिति एवं न व्युत्पाद्यते ततोऽन्तरेणैव कर्तृकर्म्मसंबन्धं रूढ्या सारूप्यसमाख्ययोरुपपन्नत्वान्नार्थापत्तिः श्रुतिं कल्पयेन्न हि व-

णां सामान्यमात्रेण शालामालयोः कश्चित्संबन्धः । तथा च वक्ष्यति । न हि कण्वरथन्तरे रथंतरसबन्धः कश्चिदस्तीति । यदपि च कृते राज्ञः कर्म्मसंबन्धे राज्यशब्दः प्रवर्त्तत इति । तदयुक्तं संबन्धस्यादिमत्त्वप्रसङ्गात् । तस्माद्यथैव तत्र नित्ययोरेव शब्दार्थयोर्नित्य एव संबन्धे शास्त्रतः प्रतीयमाने साधुत्वप्रतिपत्तिवेलायां राजशब्दमन्वाख्याय राज्यशब्दो ऽन्वाख्यायमानो यौगिकस्तन्निमित्तश्चोच्यमानो ऽपि नित्यनिमित्तत्वान्नादिमत्त्वं प्रतिपद्यते तथैवात्र क्षौत्रमिति हृद्विदर्शनाद्धोतृशब्दात्तस्येदं कर्म्मेत्येवमन्वाख्यानमिति गम्यते । केन तु तत्तस्य कर्म्मावगतमिति समाख्यादर्शनात्तदेव तादृशं वचनमनुमास्यामहे । नन्वितरेतराश्रयं प्राप्नोति समाख्यातस्तद्वचनं तेन क्लृप्ते संयोगे समाख्यासिद्धिरिति नैष दोषः । समाख्या तावत्प्रतीतिरूपेण प्रत्यक्षा । सा तु केन निमित्तेन प्रवृत्तेति पूर्वप्रवृत्ततयैव निमित्तमपेक्षते। न च तदस्ति तस्मान्नूनमीदृशी श्रुतिरस्ति । यथा होत्रा कर्त्तव्यमेतदिति सर्वेष्वेव लिङ्गादिष्वेवमेतद्भवतीति व्याख्यातमतो नेतरेतराश्रयत्वमिति । ननु चेदमाख्या चैवं तदर्थत्वादित्यनेनैवाधिकरणेन सिद्धम् । सत्यं सिद्धं न तु तत्र विरोधाविरोधौ विचारितौ । इह तु योग्यत्वप्रकरणविशेषात्सर्वार्थत्वप्रसक्त्या विरोधमाशङ्क्य परिहरति उत्तरविवक्षया वा ऽनुवदतीत्यपुनरुक्तम् ।

## तस्योपदेशसमाख्यानेन निर्देशः ॥४१॥

विशेषसमाख्या ऽपि विशेषश्रुतिवदेव शीघ्रतरप्रवृत्तिबोधिका भवति ।

## तद्वच्च लिङ्गदर्शनम् ॥ ४२ ॥

सामान्यसमाख्याविनियोगस्यैवैतल्लिङ्गम् । विशेषसमाख्यायां तु किंचिदन्यद्द्रष्टव्यम् ।

## प्रैषानुवचनं मैत्रावरुणस्योपदेशात् ॥ ४३ ॥

उपदेशात्सिद्धे समाख्याबाधे समस्तैकदेशविषयत्वेन विचारः । ज्योतिष्टोमप्रकरण एवैतच्छ्रूयते । तस्मान्मैत्रावरुणः प्रेष्यति चानु चाहेति प्रदर्शनार्थं त्वग्नीषोमीयइत्युक्तम् । तत्र सर्वप्रैषाणामाध्वर्यवत्वं सर्वानुवचनानां च हौत्रसमाख्यानम् । तत्किमनेन उपदेशेन समस्तविषयः समाख्ययोर्बाध उत क्वचिदेवेति । किं प्राप्तं प्रैषानुवचनोद्देशेन मैत्रावरुणोपादानादुद्दिश्यमानयोश्च शब्दप्रतिपादितसाहित्यविवक्षाऽनुपपत्तेः श्रूयमाणश्च चशब्दः समुच्चयान्वाचयमात्रं प्रतिपादयति नेतरेतरयोगसमाहारौ नित्यं समासगम्यत्वात् । न चेहान्वाचयलक्षणमुभयोस्तुल्यत्वादुपपद्यतइति समुच्चयः स्यात् । स च पृथगपि सर्वेष्वनुष्ठीयमानेषु संभवत्येवेति सामान्यवचनात्सर्वप्रत्ययः ।

## पुरोनुवाक्याऽधिकारो वा प्रैषसन्निधानात् ॥ ४४ ॥

न सर्वप्रैषानुवचनेष्वसौ भवेत् । क्व तर्हि पुरोऽनुवाक्यासु । प्रैषान्तान्यनुवचनानि पुरोनुवाक्यास्तास्च प्रकृत्यैतद्वचनं प्रवृत्तम् । तस्मान्मैत्रावरुण इति ।

ताश्च तादृश्यो होत्रएव पठिता इति तस्यैव केव-
लस्य प्राप्नुवन्ति । यस्तु तामामन्त्रे यजेतिशब्दः स
इष्टिप्रकृतिकेषु तावदङ्गेष्वतिदेशेनाध्वर्य्योः प्राप्नोति सो-
मयागेष्वपि प्रैषेषु च पराधिकारादित्येवं निवर्त्तमान-
स्तेषां यतो विशेषः स्यादित्येवं मैत्रावरुणस्यैवाथ वा
प्रेषकस्योभयत्र कर्तृत्वाद्वक्ष्यमाणेन न्यायेन प्रेष्यत्वं मै-
त्रावरुणस्य कल्पयित्वा होतुरेव प्राप्नोति । तथा ऽध्व-
र्य्योः प्रेष्येति प्रेषान्तराम्नानाद्यजेत्येष निवर्त्तमानः प्र-
तिप्रस्थातुः प्राप्नोति शेषाणि तु प्रैषानुवचनानि निर्ज्ञात-
कर्तृविशेषत्वान्निराकाङ्क्षाण्येवेति न तेषु मैत्रावरुणवि-
धिः संभवति । पुरोऽनुवाक्यानां पुनरुभयांशपातित्वादे-
कपदार्थत्वेन च नानाकर्तृत्वानुपपत्तेर्होतुरध्वर्य्योश्च प्र-
च्यवमानानां साकाङ्क्षत्वसन्निधानाच्च युक्तो मैत्रावरुणवि-
धिरेवं चशब्दो ऽपि सह प्रयोगादपि प्रकृष्टार्थः समर्थितो
भवति प्रैषसन्निधानात् । न च प्रेष्येत्यादयो ऽपि प्रैषा-
स्तस्यैवात्मविषयाः संभवन्ति ।

## प्रातरनुवाके च होतृदर्शनात् ॥४५॥

## चमसांश्चमसाध्वर्य्यवः समा-ख्यानात् ॥ ४६ ॥

उन्नयनासादनहोमादि यावत्किंचिदध्वर्य्योश्चमसेषु प्रा-
प्नोति तत्सर्वं विशेषसमाख्यानांश्चमसाध्वर्य्युभिः कर्त्तव्यम् ।

## अध्वर्य्युर्वा तन्न्यायत्वात् ॥४७॥

सा नाम विशेषसमाख्या सामान्यसमाख्यां बा-

घते या तन्निरपेक्षा प्रवर्त्तते चमसाध्वर्य्युसमाख्या तु चमसेष्वध्वर्य्युवद्वृत्तिं प्रतिपादयति। तद्यदि तावदध्वर्य्युर्न्नैव जुहुयान्न तर्हि तान् जुह्वतस्ते चमसाध्वर्य्यवो भवन्ति। काममजुह्वत एव तद्भावं लभेरन्नान्यथा। यदि तु स जुहोति ततः कदाचित्तस्य व्यापृतत्वेनाशक्तौ सत्यां ते जुह्वतस्तद्भवेयुस्तस्माज्जुहोत्यध्वर्य्युः।

## चमसे चान्यदर्शनात्॥ ४८॥

वषट्कारिणं प्रति प्रयोजनान्तराभावाद्भक्षार्थं नयने चमसाध्वर्य्युं नेतारं ब्रुवन्नङ्गतस्य भक्षणासंभवाद्य एव जुहोति स एव प्रयच्छति भक्षणार्थं तं च ग्रहीतृत्वेन चमसाध्वर्य्यूणां व्यापृतत्वात्तेभ्यो ऽन्यमध्वर्य्युं दर्शयति।

## अशक्तौ ते प्रतीयेरन्॥ ४९॥

## वेदोपदेशात्पूर्ववद्वेदान्यत्वे यथोपदेशं स्युः॥ ५०॥

गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग इत्यत्र व्याख्यातं यथाङ्गानि प्रधानवेदव्यपदेशं लभन्त इति। तस्माच्छ्येने सर्वे पदार्थास्तोदकप्राप्ता उद्गातृभिः कर्त्तव्या इति।

## तद्ग्रहणाद्वा स्वधर्म्मः स्यादधिकारसामर्थ्यात्सहार्थः शेषे॥५१॥

उक्तं वक्ष्यते चैतद्यथा जघन्यकालत्वाद्प्रयोगव-

चनश्चोदकाद्दुर्बल इति प्रयोगवचनाश्रया च प्रधानसमाख्या सा सत्यपि प्रत्यक्षत्वे दुर्बला । यावच्चातिदेशेनाङ्गानि प्राप्यन्ते तावत्कस्य कर्तारं नियच्छति यदा तु प्राप्तानि भवन्ति तदैषां कॢप्तकर्तृसंबन्धान्न कदा चिदपेक्षेति किं समाख्या करिष्यति । न चात्र प्राप्तबाधो भवति श्रुतिकल्पनेन समाख्याया विप्रकृष्टत्वात् । उक्तं ह्येतद्यथा कॢप्तमूलानां प्रमाणानां प्राप्तबाधो भवति, न कल्प्यमूलानामिति । तस्मात्प्राकृतग्रहणेन तदधिकारसामर्थ्याज् ज्योतिष्टोमवदेव नानाकर्तृकः स्याद्यद्यपि च प्रकृतावपि समाख्ययैव नानाकर्तारस्तथा ऽपि कॢप्तसंबन्धत्वादिह श्रुतितुल्यता । यत्त्वप्राकृतं किं चिदाम्नायते तस्य प्रधानसमाख्यातः कर्ता भविष्यतीति दर्शयन्नाह अव्यक्तः शेषइति । अकॢप्तावस्थत्वादव्यक्तो ऽयं कर्तृसंबन्धः कॢप्तादन्यत्र भवितुमर्हति । न त्वस्य विषयः सम्यग्दृश्यते । कण्टकविनोदनादीनि यद्या प्रधानसमाख्याते वेदे पठ्यन्ते वेदान्तरे वा यदि तावत्तत्रैव ततः समाख्ययैव तेषां कर्तृसंबन्धो न प्रधानद्वारेणाथ तु वेदान्तरे पठ्यन्ते ततः प्रत्यक्षत्वे सत्यपि तयैव विशेषसमाख्यया बलीयस्या भवितव्यम् । यथाचापि गुणमुख्यव्यतिक्रमन्याय आश्रीयते ततः स्तोत्रशस्त्रादीनां ज्योतिष्टोमस्याध्वर्यवसमाख्यानादध्वर्युकर्तृकत्वप्रसङ्गः । न चात्र मन्द्रं प्रातःसवनइत्यादिवत्समाधानमस्ति तस्मान्न प्रधानेनाङ्गेषु स्वसमाख्या बाध्यते । सा त्वौत्पत्तिकेन कर्तृसंबन्धेन विनियुक्तार्था सती प्रधानेन गृह्यते न चाङ्गानां प्रधानद्वारेणाध्वर्यवादिसमाख्या युज्यते । न हि प्रधानान्याध्वर्यवादिसमाख्याभियुज्यन्ते

गुणभूतेषु कर्तृव्यापारात्। या च प्रधानेषु न व्यापृता सा तद्द्वारेणाङ्गेष्ववतरीष्यतीति कुत एतत्। ऋग्वेदादिसमाख्या प्रधानेष्वङ्गेषु चाविरुद्धा। तेन क्रियते इति च तत्र व्यपदेशः। स च प्रधानप्रयोगवचनेन विधेयत्वादङ्गेषु युज्यते पाठकृता चाध्वर्य्यवादिसमाख्या सा यथापाठमेव भवितुमर्हति। न चात्र गुणमुख्यव्यतिक्रमन्यायेनानभ्युपगतेन किं चिद्दुष्यति। कण्टकविनोदनादयश्च प्रधानवदसमानोत्पत्तय एव द्रष्टव्याः। तदात्मना च शक्यमव्यक्तः शेषइति वक्तुं नावश्यं प्रधानादेवावतरन्ती समाख्या ऽनुगृह्यते साक्षादनुग्रहे ऽप्यननुग्रहे ऽपि वा ऽन्याङ्गेषु कृतार्थत्वनाविरोधात्तेन प्राकृताङ्गव्यतिरिक्तेषु समाख्या विनियोक्त्रीति सिद्धम्।

तृतीयाध्यायस्य सप्तमः पादः।



तृतीयाध्यायस्य अष्टमः पादः ।

---

श्रीगणेशाय नमः ।

## स्वामिकर्म्म परिक्रयःकर्म्मणस्त-दर्थत्वात् ॥ १ ॥

समाख्यापवादत्वेनैतदपि विचार्य्यते । किं परिक्रय आध्वर्य्यवादिष्वाम्नानात्तसमाख्यातैः पुरुषैः कर्त्तव्य उत स्वामिनेति । सिद्धे त्वेतस्मिन्नन्यो वा स्यात्परिक्रयाम्नानादित्येतद्द्रष्टव्यम् । तथा स्वामिना लौकिक उपाय आस्थेयो यथा ऽश्वखादयः स्वद्रव्येणेतराम्परिक्रीणाते समाख्यानुग्रहार्थमिति प्राप्ते ऽभिधीयते ।

लौकिकाश्रयणं तत्र यत्र नान्यो ऽस्ति वैदिकः ।
वैदिके दक्षिणादाने सति किं लौकिकाश्रयः ॥

परिक्रयेण हि सर्वत्र स्वयं कर्तृत्वं यजमानस्योपपादितं यदि परिक्रयमपि न कुर्य्यान्न क्वचित्कर्तृत्वं प्रतिपद्यते । लौकिकेनोपायेन प्रतिपत्स्यतइति चेत् । न वचनादृते स्वयंकर्तृत्वबाधासंभवात् । तस्मात्स्वामिकर्म्म ।

## वचनादितरेषां स्यात् ॥ २ ॥

उपदध्यादिति परस्मैपदाद्याजमानत्वे ऽवधा-

रिति वरद्वारमृत्विक्कर्म्म सन्दिग्धं यदि तावच्छास्त्रीयेण परिक्रयेण लभ्यते ततोऽस्त्येव यजमानस्य कर्त्तृत्वमथ न लभ्यते ततो लौकिक उपाय इति।

## संस्कारास्तु पुरुषसामर्थ्ये यथावेदं कर्म्मवद्व्यवतिष्ठेरन् ॥३॥

कर्त्तृत्वमेवैतैर्विना विगुणमिति यथासमाख्यं संस्काराः।

## याजमानास्तु तत्प्रधानत्वात्कर्म्मवत् ॥ ४ ॥

पुरुषप्रधानत्वादेषां याजमानता गुणभूते हि कर्त्तर्य्यपेक्षिते समाख्या नियामिका भवति प्रधानत्वं च यजमानस्यासंदिग्धमवधारितम्। न चैते कर्त्तृत्वसंजननार्थास्तैर्विनाऽपि सिद्धे कर्त्तृत्वे फलमात्रानुत्पादात् ऋत्विक्फलं च दक्षिणालाभात्मकं विनाऽपि तैरुपलभ्यते न तु याजमानम्। तस्माद्यथैव प्रधानानि पुरुषार्थत्वाद्यजमानकर्त्तृकाणि भवन्ति एवमेते यथाप्राप्तरूपाणामेव तेषां यजमानगामित्वमिति न दन्तधावनमध्वर्य्युणा गृहीत्वा यजमानस्य दन्ताः क्षालयितव्याः। केशश्मश्रुवपनेऽपि नित्यं नापितकर्त्तृत्वमिति नाध्वर्य्योः क्षुरग्रहणापत्तिः।

## व्यपदेशाच्च ॥ ५ ॥

अध्वर्य्युव्यापारे चाभ्यनक्तीति परस्मैपदेन निर्देशादभ्यङ्क्त इत्यात्मनेपदयुक्तो विधिर्य्यजमानस्येति गम्यते।

## गुणत्वेन तस्य निर्देशः ॥ ६ ॥

यच्चितरकर्म्मवत्समाख्यया नियम्यतइति । तत्र समाख्या नियामिका भवति यत्र क्रतुरपेक्षा क्व चासौ यदर्थः परिक्रयः स च अर्त्तुः क्व विद्गुणत्वमापादयितुं क्रियते न संस्काराय । तद्दर्शयति कल्पनीयो हि वपनादिभिः सह विनैवापेक्षया संबन्ध इतरैः पुनः क्लृप्तोपेक्षणादिति ।

## चोदनां प्रति भावाच्च ॥ ७ ॥

प्रधानापूर्व्वाश्रयत्वाच्च यजमानस्य संस्काराः सन्निकृष्टाः सुखमपूर्व्वेण ग्रहीष्यन्ते । तत्सिद्ध्यर्थत्वाद्वा तत्रैव कर्त्तव्या इति ।

## अतुल्यत्वादसमानविधानाः स्युः॥८॥

अनेन च न्यायेन यजमानस्य समाख्यया चर्त्विजां भवन्तु विरोधाभावान्न च संस्कारत्वात्प्रतिप्रधानमावर्त्तमाना दास्यन्तीति चोदिते वदति नैतद्युक्तं सर्व्वं हि यजमानेन स्वयं कर्त्तव्यं परिक्रयेण वा कारयितव्यम । तद्यदि संस्कारानध्वर्य्वादयः कुर्युस्ते परिक्रयस्यायोग्यत्वेनासाध्यत्वान्न कारिता नापि कृता इत्यकर्म्माङ्गमेव स्युस्तस्मान्नर्त्विग्यजमानानामेते समानविधाना इति ।

## तपश्च फलसिद्धित्वाल्लोकवत्॥९॥

तपसो दुःखकरत्वात्कर्त्ता गुणभूतः समाख्यया नियम्यतइत्याशङ्कां निवर्त्तयति । यस्मादिदमपि संस्कारवत्फलप्रतिग्रहणायोग्यत्वं करोति यजमानस्य च यो-

ग्यत्वमप्रतिबद्धं कर्त्तव्यं नर्त्विजस्तस्माद्याजमानम् । यो-ग्यता च सर्वत्रैव द्विप्रकारा दोषापनयेन गुणान्तरोप-जननेन वा भवति तत्र संस्कारा गुणान्तरमुपजनयन्ति । तपश्च दोषनिर्घातं करोति । यो हि ज्योतिष्टोमादि करोति तस्यैकान्तेनास्मिन्नन्यस्मिन्वा जन्मनि विहिता-करणप्रतिषिद्धसेवानिमित्ता दोषाः सन्ति ते चानपनी-ताः क्रतुविपरीतस्वफलोपभोगदानादत्यन्ताविगुणस्यापि क्रतोः फलं प्रतिबध्नन्ति । सो ऽयं क्रतुरप्रतिबन्धहेतुं कं चिदपेक्षते । तत्र प्रकरणश्रुतस्यैव तपसो ऽवश्यं क्रतुं प्रति कथं चिदुपकारकत्वं कल्पयितव्यम् । तत्रापेक्षा-सन्निधियोग्यत्वैर्दोषक्षपणकल्पनमेव ज्यायः । शक्यं हि दुःखदानादधर्मस्य कार्यविरोधिनस्तपसा ऽपनयनम् । यथैव प्रायश्चित्तचरणाद्दुःखेनाल्पेनापि सता महते दुः-खान्तराय प्रवृत्तः सन्नधर्म्मो विनाश्यतइति वचनाद्गम्यते तथैवात्र द्रष्टव्यम् । यानि त्वकर्म्माङ्गभूतान्येव तपांसि श्रूयन्ते फलसंबद्धानि वा तेषां फलसाधनस्यापरस्याभा-वात्प्रतिबन्धनिराकरणापेक्षा नास्तीति स्वर्गादेव क-ल्पते यानि तु प्रायश्चित्ततपांसि तेषां दोषापहारमा-त्रमेव फलमिति न सर्वत्रैकरूपत्वमध्यवसातव्यम् ।

## वाक्यशेषश्च तद्वत् ॥ १० ॥

मेधार्हत्ववाक्यशेषस्तामुमेवार्थं द्योतयति ।

## वचनादितरेषां स्यात् ॥ ११ ॥

वरदानवर्देतद्द्रष्टव्यमृत्विज उपवसन्तीति ।

## गुणत्वाच्च वेदेन व्यवस्था स्यात् ॥१२॥

गुणत्वे तस्य निर्देश इत्यनेन गतार्थमित्यन्यथा व्याचष्टे ये संस्कारा: सन्तो वचनादृत्विजां जातास्ते किं समाख्यया नियम्यन्ते नेति । लोहितोष्णीषादयो हि सौ-त्रावादिषु पठ्यमाना: सत्यपि संस्कारत्वे वचनादृत्विजां क्रियमाणा: समाख्याविषयतां प्रतिपद्यन्त इति प्राप्ते ब्रूम: ।

संस्कारत्वादतिक्रान्ते समाख्यागोचरे सति ।
वचनेनर्त्विजां येन तेनैवान्येष्वपि स्थिता: ॥

ऋत्विगुद्देशेन ह्येते विधीयमाना: प्रतिप्रधानावृत्ति-न्यायात्सर्वेषां भवन्तो न शक्या: समाख्यया बाधितुम् । तस्मादिह न व्यवस्था स्यादिति ।

## तथा कामो ऽर्थसंयोगात् ॥ १३ ॥

प्रधानकामस्य यजेतेत्यात्मनेपदात्सामानाधिक-रण्यात्प्राधानगतात्वात्मनेपदात्प्रधानकर्तृविषयत्वे ऽन्यत: सिद्धे ये गुणकामा: सदोमानविशेषादिषु श्रुतास्तेषु मि-नुयादित्यनेन समानकर्तृत्वादविरुद्धया समाख्यया ऽध्वर्युविषयत्वे प्राप्ते प्रधानगतेनात्मनेपदेन समस्तप्रयो-गविषय: फलसंबन्धो यजमानविषयो ऽवगम्यत इति यदि कामयेत यजमान इति प्रकरणादवधार्य तदङ्गा-गित्वं गम्यते । तथा चाध्वर्य्युव्यापारे परस्मैपदमुपप-त्स्यते ऽन्यथा भूमिञ्प्रक्षेपण इत्यस्य कर्त्रभिप्रायक्रिया-फलविवक्षायां ञित्त्वादात्मनेपदं स्यात् । अनया च श्रु-त्या सामानाधिकरण्यं वाक्यगम्यं बाधितमित्यदोषस्तद्व-शेन वा यजमानप्रार्थनानुसारो यो ऽध्वर्यो: काम एष मे

यजमानो वृष्टिं प्राप्नुयादिति तदपेक्षया सामानाधिकरण्यमविरुद्धं तथाशब्देन च पूर्वाधिकरणादेतावदतिदिश्यते समाख्यया न नियम्यतइति।

## व्यपदेशादितरेषां स्यात् ॥ १४ ॥

अन्यत्र वचनादितरेषां स्यादिह तादृशस्य वचनस्याभावाद्व्यपदेशादित्युच्यते। वाशब्दोपादनाद्यजमानव्यतिरेकेण चात्मग्रहणाच्चतुर्थ्या च विस्पष्टतादर्थ्यप्रतीतेरात्मने वा यजमानाय वेति कर्तृद्वयस्य फलसंबन्ध इति शक्यं विज्ञातुम्।

## मन्त्राश्चाकर्म्मकरणास्तद्वत् ॥ १५ ॥

अकर्म्मसंयुक्ता आशीर्म्मन्त्राः समाख्यया नियम्यन्ते न हि तेभ्यः फलनिष्पत्तिर्म्मन्त्राणामविधायकत्वादन्यस्य च फलकल्पनाहेतोरसंभवात्। यत्त्वाशासनं तद्यजमानवदध्वर्य्योरत्युत्साहकरत्वेनाविशिष्टमिति प्राप्ते याजमाना इत्युच्यते। ते हि फलान्तराभावात्प्रधानफलप्राप्तिमाशासते। यजमानेन च तदाशासनीयं नर्त्विजा तदीयस्य दक्षिणालाभस्यान्यथाऽपि सिद्धत्वाद्यजमानाच्च लभ्यमानत्वेनाग्नेरप्रार्थनीयत्वात्। अथ यजमानार्थमेवासौ प्रार्थयेत तत्र आयुर्म्मे देहीत्यात्मविषयं सहिरुध्येत। तस्माद्यजमानेनैव प्रधानफलप्राप्तिरूपेणात्मोत्साहनार्थं प्रयोक्तव्या इति।

## विप्रयोगे च दर्शनात् ॥ १६ ॥

आशीर्म्मन्त्रं च प्रवसद्यजमानाग्निहोत्रेष्वप्युप-

स्थानार्थं प्रोषितस्य दर्शयति न चर्त्विजः प्रोषितस्य कर्त्तृत्वं संभवति कर्म्मसंयोगाभावाद्यजमानस्य तु द्रव्यत्यागेनोपपद्यते । तस्मात्तत्सामान्यादितरेषु तथात्वम् ।

## द्व्याम्नातेषूभौ द्व्याम्नानस्यार्थवत्त्वात् ॥ १७ ॥

आज्यग्रहणादिमन्त्रेषु सामान्येनाध्वर्य्यवे पुनर्विशेषेण याजमाने काण्डे पठ्यमानेषु किमुभौ प्रयोक्तारौ विकल्पेन समुच्चयेन वा अथान्यतर इति । तत्राध्वर्य्यवत्वे विकल्पे वा प्राप्ते द्वावित्याह । ननु च विशेषसमाख्यानात्केवलयाजमानत्वमेव स्यात् । तत्र वयं विशेषसमाख्यां बलीयसीमिच्छामो यत्र सकृदाम्नानं ये तु सामान्ये विशेषे च भेदेनाम्नायन्ते तेषु यदि विशेषसमाख्याऽङ्गीक्रियते ततः सामान्यपाठस्यानर्थक्यमेव स्यादेकविषयत्वे च सामान्यं विशेषो बाधते सत्यपि त्वत्र मन्त्राभेदे पाठभेदाद्विषयान्यत्वं पाठस्य हि भेदेन प्रयोजनं कल्पयितव्यम् । न च तदुभयप्रयोज्यत्वादन्यत्संभवति तस्मादुभावपीति । ननु द्वयोः पाठयोरेकः स्वरूपप्रज्ञापनार्थ इतरो विनियोगार्थः स्यात्तत्रापि मन्त्राणां कर्म्मप्रकाशनार्थत्वादङ्गप्रधानानां च समानकर्तृकत्वाद्यत्रैवाज्यग्रहणादि कार्य्यमाम्नातं तत्रैव समाख्यातेनैव कर्त्रा विनियोगो युक्तस्तत्रैव च मन्त्रस्य प्रयोज्यत्वेनावगतस्य कर्तृविशेषाकाङ्क्षा भवति नेतरत्र । रूपमात्रप्रज्ञापनस्यान्तरेणाऽपि कर्म्मकालप्रयोगमध्ययनमात्रेणैव सिद्धत्वादाज्यग्रहणादि,चासंदिग्धमाध्वर्य्यवम् ।

तस्मान्न यजमानेन प्रयोक्तव्या इति । उच्यते । याजमाने ऽपि रूपमात्रादेवान्तरेणापि कार्य्यं प्रयोज्यत्वेनावधारणादस्यैव कर्त्तपिचेति यजमानकर्तृत्वसिद्धिः । किं पुनस्तेषां प्रयुज्यमानानां प्रयोज्यत्वम् । उच्यते । यथैवाध्वर्य्युणा पदार्थाः कर्त्तव्यास्तथैव यजमानेनाप्रमादार्थे प्रत्यवेक्षितव्यास्तद्यत्र मन्त्रा नाम्नायन्ते तत्रोपायान्तरेण प्रत्यवेक्ष्यते इह तु मन्त्रैरित्यर्थवत्ता ।

## ज्ञाते च वाचनं न ह्यविद्वान्विहितो ऽस्ति ॥ १८ ॥

यत्र यजमानं वाचयतीति श्रूयते तत्राविद्वानपि खण्डशः शक्यो वाचयितुमित्यनियमः अथ वा विद्वान्स्वयमेव ब्रूयात् । तत्र प्रयोजकव्यापारवैयर्थ्यं भवेत्तस्मादविद्वानेव वाचयितव्य इति प्राप्ते ऽभिधीयते न ह्यविद्वान्विहितो ऽस्तीति । यदि कामश्रुतिपरिगृहीतं वेदाध्ययनं भवेत्ततः प्रयोगकाले ऽप्यध्याप्येत तत्त्वाधानवदनारभ्य विधीयते तस्मात्स्वाध्यायो ऽध्येतव्य इति । तथा सति चार्थापत्त्यभावात्तिमद्भसेवेदं सर्वकर्म्माण्यग्निवद् गृह्णन्ति न शिक्षणं प्रयुञ्जते न च शिक्षितो वेदो भवति तस्मात्प्राक्कर्म्मणो ये मन्त्राः पठितास्तज्ज्ञत्वं प्रतिपद्यन्त इति नाविदुषो ऽधिकारो ऽत्र । शक्यते च तत्रापि प्रैषवत्प्रयोजकव्यापारस्यार्थवत्ता सत्यामपि शक्तावप्रयुक्ता न ब्रूयादिति । तच्च प्रयोजकत्वं द्वेधा भवति यदि वा खण्डशः समर्प्यते ऽथ वा ब्रूहीत्यभिधीयते इति । यथेष्टं कर्म्म क्रियतां मनविदितेनेति वैशेषिकादयः स्व-

शास्त्रेणाप्यनधिगतेनानधिकारं वदन्तीति स्पष्टसिद्धप्रमाणार्थं पृच्छति । तत्र विद्वत्तायाः शक्त्युत्पादनद्वारेण प्रत्यक्षेणैवोपकारित्वाद्यावता विदितनेत्याह । यद्यपि स्वाध्यायग्रहणेन सकलो वेदः परिगृहीतस्तथा ऽपि दर्शपूर्णमासौ कुर्वाणस्य ज्योतिष्टोमिकमन्त्रब्राह्मणं न क्वचिदुपयुज्यतइति असदपि नाधिकारं व्यावर्त्तयति इष्टिवेदेनैव योग्यतायाः सिद्धत्वात्तेन तद्याजिनस्तावानेव स्वाध्यायः । यस्त्वसौ सकलः पठ्यते तन्नित्यकाम्यनैमित्तिकानां कर्म्मणां यथोपपन्नकालत्वान्न ज्ञायते कतरत्कदा करिष्यतइति तत्र कदा चिद्यन्न पठितं तत्फलप्रार्थनानिमित्तं वा ऽस्योपजायते तत्र तदविद्वत्त्वादशक्नुवन्विहन्यते तदानीं वा ऽधीयानस्य व्रतनियमवदध्ययनासंभवात्कर्म्मभिश्च विशिष्टक्रियोपात्तवेदनिराकाङ्क्षैस्तादृशस्याग्रहणाद्वैगुण्यप्रसङ्गः । कामश्रुत्यपरिग्रहाच्च सर्वैरनारभ्यवादविध्यधीतो वेदो ऽपेक्षित इत्यवश्यं ब्रह्मचर्य्यकालएव समस्तो वेदो ऽध्येतव्यो यदि तु कश्चिदशक्तो नाधीते सकलमग्निहोत्रदर्शपूर्णमासमात्रं कथं चिदधिगच्छति न तस्य तत्रानधिकारः । एवं च सति बाह्यज्ञानं दूरविप्रकृष्टमेव । यत्त्वात्मज्ञानं तेन विना प्रवृत्तिरेव नास्त्यतः सर्वकर्म्मार्थमङ्गीकर्त्तव्यम् ।

## याजमाने समाख्यानात्कर्म्माणि याजमानं स्युः ॥ १९ ॥

उखाधिश्रयणावहन्त्यादीनां द्वादशानां कर्मद्वन्द्वानां याजमानआध्वर्य्यवे च पठितानां ह्याम्नातमन्त्र-

दुभाभ्यां मन्त्रोत्क्रमशक्यत्वाद्याजमानसमाख्यानाद्यजमान-कर्तृकत्वमिति।

## अध्वर्युर्वा तदर्थो हि न्यायपूर्वं समाख्यानम् ॥ २० ॥

अनुत्पन्नानां हन्तृत्वापादनाशक्तेर्विधायकशब्दाभावाच्च नैषां याजमानएवोत्पत्तिः किं तर्ह्याध्वर्यवे। तत्र च कर्त्राकाङ्क्षा तदर्थस्य परिक्रय कृत्यवगते कर्त्तरि न हन्त्राम्नानवेलायामपेक्षा ऽस्तीति यजमानकर्तृत्वानुपपत्तिः तत्र स्वरूपस्यासति यजमानसंबन्धे हन्तृता याजमानी क्रियेत। न च सा कर्त्रन्तरेण क्रियमाणानां संभवति समासन्नकरणं हि हन्तृता न चान्यकर्तृकां क्रियामन्यः समासन्नां कर्त्तुं समर्थः न च समासन्नकरणानुरोधेन क्रियास्वरूपमपि याजमानं संभवति। अतो ऽङ्गगुणविरोधन्यायात्तदर्थाध्वर्यवमेव यजमानस्तु स्मारयिष्यति हन्तृतामिति समाख्याऽर्थवत्ता।

## विप्रतिषेधे करणः समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात् ॥ २१ ॥

परिवीरसि युवा सुवासा इत्येतयोः करणक्रियमाणानुवादिनोरध्वर्युणा होत्रा च युगपत्प्रकृतौ प्रयुक्तयोः कुण्डपायिनामयने हौत्राध्वर्यवयोरेककर्तृकत्वादशक्तेरवश्यावक्तव्ये ऽन्यतरस्मिन्कतरः परित्यक्तामिति संदेहस्तत्रानियमः प्राप्नोति। यहा होतुः स्थित-

स्वरूपस्याध्वर्य्यवविधानादजहत्स्वधर्म्मतया हौत्रएव यक्ता इति प्राप्ते ऽभिधीयते । एतस्मिन्विप्रतिषेधे कारणः प्रयो-क्तव्यः कुतः समवायविशेषात्तत्र केचिदाहुः । प्रधान-प्रत्यासत्तिः समवायविशेष इति । बहिरङ्गो ह्यारादुप-कारकरूपत्वात्क्रियमाणानुवादो कारणस्त्वन्तरङ्ग इति । तदकारणं यदि हि प्रधानद्वारेणाङ्गेषु कर्त्ता ऽवतरेत्ततः सन्निकर्षविप्रकर्षावुपपद्येयातां स तु समाख्यया चोद-केन च प्रधानेष्वङ्गेषु चाविशेषेण लक्ष्यते न कश्चिदङ्गगु-णविरोधन्यायः उभयोरङ्गत्वाविशेषान्न च सन्निपातित्वेन क्रियान्तरगतमारादुपकारित्वं दुर्वलीक्रियते । न चा-यमतीवारादुपकारकः क्रियमाणपरित्यागस्मरणविच्छे-देन दृष्टसंस्कारजननात्तस्मादानुमानिकाद्धौत्रसंबन्धात्प्र-त्यक्षत्वेनैवाध्वर्य्यवस्य समवायस्य विशेषो भवति । क-थम् । एषा ह्यत्र वचनव्यक्तिर्य्येदुत होत्रादयः श्रुति-वृत्ता अध्वर्य्वादिशब्दलक्षितेषु कर्म्मसु विधीयन्ते । तत्र हौत्रसंबन्धो होतुरानुमानिक आध्वर्य्यवसंबन्धस्तु प्रत्यक्षः । यत्त्वजहत्स्वधर्म्म एव होता ऽऽध्वर्य्यवेण संबध्य-त इति । संबध्येत यदि तत्प्रयोगमात्रकृतमेवास्य हो-तृत्वं भवेद्यदि वा हौत्रं प्रत्यध्वर्य्युर्विधीयेत होतारं वोद्दि-श्याध्वर्य्युकर्म्मविधिर्भवेन्न तु तत्सर्वमस्ति । होता तावद्यो-ग्यतामात्रेणावधारितः सत्यपि च कर्म्मनिमित्तत्वे ऽन्यानि सहस्राणि तदुपलक्षणं करिष्यन्ति । न च हौत्रं प्रत्य-ध्वर्य्युर्विधिरिह होत्रध्वर्य्युशब्दयोरत्यन्तविभिन्नपुरुषव-चनयोर्म्मुख्यसामानाधिकरण्याभावादन्यतरस्याविश्यक-ल्पनायं लक्षणाद्दत्तरत्र विरोधनिमित्तत्वाल्लक्षणाकल्प-नायाः प्रथमोच्चारिते होतृशब्दे किंचिदपि कल्पनावी-

त्वं न पश्चाभ्यस्तेन मुख्यं वा ऽपूर्वचोदनादिति तं स्वार्थवृत्तमेव गृहीत्वा ऽध्वर्य्युशब्दः कर्म्मलक्षणार्थो ऽध्यवसीयते। तत्रापि तदुद्दिश्य होता विधीयते तद्धि क्रत्वर्थेन प्रयोजनवन्न तथा कर्त्ता प्रधानं चैवंजातीयकेषूद्दिश्यते। ततश्च गुणभूता होतोपादीयमाना यः प्रधानाविरोधी धर्म्मस्तन्मात्रयुक्त एव संबध्यते। यदि तु होतुराध्वर्य्यवं विधीयेत ततस्तस्य कर्म्माविरुद्धं तत्प्रवर्त्तत इति न किं चिदपि हौत्रं हापयेत्प्राकृतकर्तृसंस्कारत्वप्रसङ्गाच्चाध्वर्यवस्य नैवं संबन्ध इति पश्चान्तरमवलम्बितम्। तस्मादाध्वर्य्यवसंबन्ध एव प्रत्यक्षः प्रधानं चेति सिद्धम्। यत्र चोदयन्ति नैवात्रान्यतरस्यापि मन्त्रस्य होतृसंबन्धो बाधितव्यः। कुतः।

एककालप्रयोगे हि विरोधी मन्त्रयोर्भवेत्।
करणः प्राक् क्रियातस्तु परतश्चेतरः स्थितः॥

करणस्य हि मन्त्रान्तेन कर्म्मादिसन्निपात इत्यनेन न्यायेन प्राक्परिव्याणात्प्रयोगः क्रियमाणानुवादिनस्तु तस्मिन्क्रियमाणे तेन द्वावपि प्रयोक्तुं समर्थो होतेति। नैतदस्ति क्रियमाणता नाम संकल्पादेः कारकप्रचलनात्प्रभृत्यासमाप्तेरतश्च पूर्वपदार्थसमाप्त्यैव पर्य्युपस्थापितं चेत्परिव्याणं वर्त्तते स एव दीर्घः समस्तः क्रियमाणानुवादिनः कालः। एवमपि करणस्य तादृशादेव प्राक्प्रयोगादविरोध इति यदुच्येत तन्न। न हि परिवीरमीत्ययं संकल्पं रशनादानं सन्निहितं वा यूपमवयवक्रियामात्रप्रवृत्तं वा परिव्याणं शक्नोति प्रकाशयितुम्। तस्मात्प्रधानक्रियारम्भएव यूपसमीपस्थेन प्रयोक्तव्यः। नन्वेवमपि दीर्घकाले कर्म्मण्येकदेशे करणमेकदेशे च

क्रियमाणानुवादिमं प्रयुञ्जानो न विरोत्स्यते । कथं न विरुध्यते । यदा यूपाय परिवीयमाणायामनुब्रूहीत्यनेन पाठक्रमात्कारणः प्रैषसामर्थ्याच्चेतरो युगपदेव प्राप्यते न च क्रियैकदेशे क्रियमाणानुवादिनः प्रयोग इत्यस्ति प्रमाणं स हि रशनादानानन्तरं प्रयुक्तेन प्रैषेण प्रयोजितः दीर्घत्वादापरिव्याणसमाप्तेः कालमवरुणद्धि । तदन्तराले चाध्वर्य्युव आपन्नो न कथं चिदविरोधिनावतिष्ठते । ननु च युगपत्कालता बाध्यतामेककर्तृत्वं वेति वरं पदार्थप्राप्तेर्ज्जघन्यत्वात्काल एव बाधितुं नान्तरङ्गः कर्तृसंबन्ध इति । भवेदेतदेवं यदि प्राक्तनकालं बाधमानौ मन्त्रौ स्वकार्य्यान्न प्रच्यवेयाताम् तयोस्तु य एव कालान्तरे प्रयुक्तः स एव स्वसामर्थ्यप्रतिपाद्यादर्थात्प्रच्यवते । सो ऽयं लिङ्गविरोध आपद्येत । ननु च यो होता सो ऽध्वर्य्युरित्यनया श्रुत्या लिङ्गं बाध्येत । बाध्येत यदि श्रुतिः स्याद्वाक्यं त्विदं तदपि लक्षणया । न ह्यत्र कस्य चिच्छब्दस्य श्रवणादिदं गम्यते होत्राध्वर्यवे समानकर्तृके इति । किं तर्हि होत्रध्वर्य्युशब्दसामानाधिकरण्यात् सर्वत्र चैष संबन्धो वाक्यलक्षण इत्युक्तम् । तथापि चाध्वर्य्युशब्दस्य कर्मलक्षणार्थत्वाद्विप्रकृष्टता । ननु लिङ्गमप्येतच्चोदकापेक्षित्वाद्विप्रकृष्टतरं भवेद्वाक्यं ह्यर्थविप्रकर्षाल्लिङ्गेन बाध्येत स चेह विपरीतो ऽर्थविप्रकर्षः । न हि चोदकेनाप्राप्तयोर्मन्त्रयोरेककालप्रयोज्यत्वं गम्यते तस्मादेककर्तृत्वमेव बलीय इति । उच्यते सत्यमिह चोदकाङ्गीकरणं तत्तु मन्त्रस्वरूपे न लिङ्गे द्वयोरपि च तदविशिष्टं प्राप्ते तु मन्त्रद्वये लिङ्गमौपदेशिकेनाविशिष्टम् । स्यादेतदेवं यदि चोदकः

